कन्येव तन्वा३ शाशदानाँ एषि देवि देवमियक्षमाणम्।
संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती ॥१०॥

कन्येव तन्वा[1]। कन्येव[2]। आत्मशरीरेण। जगदाच्छादयन्ती[3]। गच्छसि। देवि[4]! देवान्[5]। यष्टुमिच्छन्तम्[6]। हसन्ती[7]। युवतिर्यथा[8]। पुरस्तादात्मीयं[9] वक्षः[10] प्रकाशयत्येवं त्वमात्मीयानि। वक्षांसि[11]। आविष्करोषि[12]। व्युच्छन्ती[13] देशेष्वनेकेषु प्रादुर्भावाद् बहुवचनं वक्षांसीति[14]।

सुसंकाशा मातृमृष्टेव योषाविस्तन्वं कृणुषे दृशे कम्।
भद्रा त्वमुषो वितरं व्युच्छ न तत्ते अन्या उषसो नशन्त ॥११॥

सुसंकाशा। शोभनसंदर्शना[15]। मात्रोद्वर्तितशरीरा[16]। कन्येव[17] त्वम्। तन्वम्[18]। आविष्कृणुषे[19]।

---

१. कन्येव तन्वा omitted by P.

२. सा यथा जनान्तिके विवसना सञ्चरति तथा हे उषस्त्वं कन्या कमनीया अप्रगल्भा सती Sy. कन्या कमनीया भवति। क्वेयं नेतव्येति वा [कमनेनानीयत इति वा] कनतेर्वा स्यात्कान्तिकर्मणः N.4.15.

३. शाशायमाना स्पष्टतां प्राप्नुवती Sy. शाशदानः शाशायमानः N.6.16.

४. पश्चात्प्रगल्भा सती . . . देवनशीले! Sy.

५. द्योतनस्वभावं सूर्यरूपं प्रियम् Sy.

६. युष्टु० D.M. अभिमतं दातुमिच्छन्तम् Sy.

७. हवन्ती P. सम् ईषद्धसन्ती। हास्यं कुर्वती Sy.

८. यौवनोपेता सती Sy.

९. ० स्तात् अत्मी० D. पत्युः सूर्यस्य पुरतः Sy.

१०. पक्षं M.

११. वक्षसोपलक्षितानवयवान् Sy.

१२. प्रकटीकरोषि Sy.

१३. अत्यन्तं भासमाना Sy.

१४. यद्वा युवतिरिति लुप्तोपमा। यथा लोके प्रगल्भा योषित्पुरस्तात्प्रियतमस्य पुरतः संस्मयमाना दन्तप्रदर्शनायेषद्धसनं कुर्वती वक्षांसि वक्षसोपलक्षितानि गोप्यानि बाहुमूलस्तनादीन्याविष्करोति तथा त्वमपीत्यर्थः। यद्वा पुरस्तात् पूर्वस्यां दिशि संस्मयमाना स्मितोपमप्रकाशं कुर्वती युवतिः सर्वेषु भावेषु मिश्रणशीला वक्षांसि। वक्ष इति रूपनाम। दन्तस्थानीयानि नीलपीतादीनि रूपाण्याविष्करोषि Sy.

१५. अत्यर्थं प्रकाशमाना Sy.

१६. मातृभिर्जननीभिः शुद्धीकृता...मात्रादिना स्वलङ्कृताऽत्यन्तं शोभना सती Sy.

१७. योषेव। . . . . यथा लोके . . . स्वकीयं लावण्योपेतं सर्वशरीरं दर्शनायाविष्करोति, तद्वत्त्वमपीत्यर्थः Sy.

१८. स्वकीयां तनुम् Sy.

१९. प्रकटयसि। . . . अत्र कमिति पादपूरणः। अत्र विशेषस्याभावात्। . . . यद्वा कमिति सुखवचनः। सुखं यथा भवति तथाऽऽविष्कृणुष इत्यर्थः Sy. मिताक्षरेष्वनर्थकाः। कमीमिद्विति N.1.9.

दर्शनाय यथा त्वां सर्वे पश्येरन्[1]। कल्याणी[2]। त्वम्। प्रकर्षेण। व्युच्छ[3]। तदिदम्। तव रूपम्[4]। अन्या[5] गताः। उषसः।[6] न।[7] व्याप्नुवन् न त्वत्सदृशरूपा गता इति।[7]

अश्वावतीर्गोमतीर्विश्ववारा यतमाना रश्मिभिः सूर्यस्य।
परा च यन्ति पुनरा च यन्ति भद्रा नाम वहमाना उषासः ॥१२॥

अश्वावतीः[8]। अश्ववत्यः[9]। गोमत्यः[10]। सर्वैर्वरणीयाः[11]। सूर्यस्य[12]। रश्मिभिः[12]। संयतमानाः[12] उषसः काश्चन[13]। परायन्ति। अपरा आयन्ति[14]। भद्राणि बहूनि[15]। नामानि निगमपठितानि[16]। दधानाः[17]। उषसः[18]।

ऋतस्य रश्मिमनुयच्छमाना भद्रंभद्रं क्रतुमस्मासु धेहि।
उषो नो अद्य सुहवा व्युच्छास्मासु रायो मघवत्सु च स्युः ॥१३॥

ऋतस्य रश्मिम्। आदित्यस्य[19]। रश्मिम्। अनुबध्नन्ती[20]। कल्याणं कल्याणम्। प्रज्ञानम्[21]।

---

१. पश्येयुः is suggested for पश्येरन्।

२. भद्रा कल्याणशीला Sy.

३. आवरकमन्धकारं विप्रकृष्टं यथा भवति तथा विवासय। अत्र यद्यपि विशेषो न श्रुतस्तथापि प्रकाशनिवर्त्यत्वात्परिहरणीयत्वाच्च व्युदसनीयं तम एवेति गम्यते Sy.

४. तद् व्युदसनम् Sy.

५. ० न्युग० P.D. अतीता आगामिन्यश्च Sy.

६. नव M. न व्याप्नुवन्ति तथा व्युच्छेति भावः। नशिर्व्याप्तिकर्मा। 'इन्वति नशति' (Ngh. 2. 18.) इति व्याप्तिकर्मसु पाठात् Sy.

७. VM. ignores कम् and उषः।

८. Omitted by P.

९. बहुभिरश्वैस्तद्वत्यः Sy.

१०. बहुभिर्गोभिस्तद्वत्यः Sy.

११. विश्वे वारा वरणीयाः काला यासां तास्तथोक्ताः। सार्वकालीना इत्यर्थः। यद्वा विश्वे वरितारो यासु ता विश्ववाराः। विश्वैर्वरणीया इत्यर्थः Sy.

१२. सूर्यरश्मिभिः सार्कं तमोनिवारणाय प्रयत्नं कुर्वाणाः। यद्यपि सूर्यरश्मय एव जगत्प्रकाशनाय प्रभवन्ति तथापि सूर्योदयात्पूर्वं तमोनिवारणस्यापेक्षितत्वात्तासामपि प्रयत्नमविरुद्धम्। रश्मिदेवता अपि प्रकाशिका इत्यर्थः Sy.

१३. कानश्च P.

१४. पुनरायन्ति च। परस्परापेक्षयोभयत्र चशब्दः। या एवातीतेषु दिनेषु गतास्ता एव पुनः पुनर्दिनान्तरेष्वप्यायन्ति। जगन्निर्वाहाय प्रतिदिनं गतागतं कुर्वन्तीत्यर्थः Sy.

१५. भद्रं कल्याणं स्तुत्यं वा Sy.

१६. पठितानीमानि P.D. इमानि M. नमनं सर्वजनानुकूल्यम् Sy.

१७. धारयमाणाः Sy.

१८. VM. ignores च। पुनः। च।

१९. सत्यभूतस्यादित्यस्य Sy.

२०. ० बुध्यन्ती P. आनुकूल्येन प्रवर्तमाना Sy. अनुबध्नती is suggested for अनुबध्नन्ती

२१. Omitted by P.D. ततकल्याणं स्तुत्यं वा लौकिकं वैदिकं कर्म, तद्विषयां प्रज्ञां वा Sy. क्रतुरधिकाः कर्म वा प्रज्ञा वा N.2.28.

अस्मासु। धेहि[1]। उषः! अद्य। अस्माकम्[2]। स्वाह्वाना सती[3]। व्युच्छ[4]। हविष्मत्सु[5]। अस्मासु[6]। धनानि[7]। च[8]। सन्तु[9]।

I.124.

**उषा उच्छन्ती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिरश्रेत् ।**
**देवो नो अत्र सविता न्वर्थं प्रासावीद्द्विपत्प्र चतुष्पदित्यै ॥१॥**

उषा[10] उच्छन्ती। उषाः। व्युच्छन्ती[11]। होमार्थं[12] दीप्यमाने[13]। अग्नौ[14] भवति। उद्यंश्च[15]। सूर्यः[16]। विस्तीर्णम्[17]। ज्योतिः[18]। श्रयति[19]। देवश्च। सविता[20]। अत्र[21]। क्षिप्रम्। अस्मान्[22]। कार्यं[23] प्रति। प्रसौति[24]। द्विपत्[25]। चतुष्पच्च[26]। गमनाय[27]। प्रसौति[28]।

---

१. वेहि P.
स्थापय Sy.
२. अस्मदर्थम् Sy.
३. सुष्ठु, आहूता सती Sy.
४. तमो विवासय। प्रकाशं कुर्वित्यर्थः Sy.
५. हविर्लक्षणधनयुक्तेषु Sy. मघमिति धननामधेयम् । मंहतेर्दानकर्मणः N.1.7.
६. यजमानेषु Sy.
७. बहुविधानि धनानि सम्भवन्त्विति पूर्वोक्तेन क्रतुना सह Sy.
८. समुच्चयार्थश्चशब्दः Sy.
९. Ms. D. puts the figure ॥१२३॥ here to indicate the end of one hundred and twentythird hymn. No such number is given by P. and M.
१०. उषो D.
११. तमो विवासयन्ती Sy.
१२. ० र्थं मर्त्यं P.
१३. समिध्यमानेषु सत्सु Sy.
१४. अग्नित्वसामान्येनैकवचनम्। अग्निषु ...कर्मार्थं कर्तृप्रयोगः। उषःकाले ह्याहवनीयादयः प्रज्वाल्यन्ते Sy.
१५. ० इवा P. उपमाप्रधाननिर्देशः। उदितः सूर्य इव Sy.
१६. सूर्यो यथा प्रकाशयति तथेत्यर्थः Sy.
१७. उरु बहुलम् Sy.
१८. प्रकाशम् Sy.
१९. सेवते, प्रकाशते, प्रकाशयति वा सर्वम् Sy.
२०. सर्वस्य प्रेरकः सूर्यः Sy.
२१. तत्र D. त्वदुदयानन्तरमस्मिन्कर्मणि वा Sy.
२२. अस्मदर्थम् Sy.
२३. अर्थशब्दोऽत्र विशेषणवाची नपुंसकलिङ्गः। ... अरणीयम् Sy.
२४. प्रसूति P. अनुजानातु। ददात्वित्यर्थः Sy.
२५. पादद्वयोपेतं मनुष्यादिरूपं धनम् Sy.
२६. पादचतुष्टयोपेतं गवादिरूपं धनम् Sy.
२७. द्विपदां चतुष्पदां च गमनाय। यद्वा नः इत्यै इति सम्बन्धः। अस्मद्गमनागमनादिव्यापारायेत्यर्थः Sy.
२८. प्रसुति P.

अमिनती दैव्यानि व्रतानि प्रमिनती मनुष्या युगानि ।
ईयुषीणामुपमा शश्वतीनामायतीनां प्रथमोषा व्यद्यौत् ॥२॥

अमिनती। अहिंसन्ती[1]। व्रतान्[2]। प्रहिंसन्ती[3]। मनुष्याणाम्। आयुषो व्यवच्छेदकानि[4], अहोरात्राणि[5]। गतानामुषसाम्[6]। अन्तिमा[7]। आयतीनाम्[8]। मुख्या[9]। प्रादुरभवत्[10][11]।

एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्तात् ।
ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥३॥

एषा दिवः[12]। एषा। दिवः। दुहिता[13]। प्रतिदृश्यते[14]। पूर्वस्यां दिशि। ज्योतिः[15]। आच्छादयन्ती[16]। समनस्का[17]। आदित्यस्य। पन्थानम्[18]। साधु[19]। अनुगच्छति[20]। प्रागेव।

---

१. भानुप्रदानेनानुकूलं कुर्वती Sy.

२. देवसम्बन्धीन्यग्निहोत्रादीनि कर्माणि। व्रतमिति कर्मनाम, 'व्रतं कर्वरम्' (Ngh. 2. 1.) इति तन्नामसु पाठात् Sy. ३. प्रकर्षेण हिंसन्ती, आयुः क्षपयन्तीत्यर्थः Sy.

४. ०षो वि व्य० P.D. परस्परसंयोगं ...हिंसन्ती, वियोगं कुर्वतीत्यर्थः। उषःकाले सर्वे यथायथं स्वस्वव्यापाराय गच्छन्तीति प्रसिद्धम् Sy.

५. युगोपलक्षितान्निमेषादिकालावयवान्... यद्वा युगानि युग्मानि Sy.

६. ०त्राणि...साम् M. गच्छन्तीनामतीतानां, शश्वतीनां नित्यानाम् Sy.

७. उपमा, ताभिः सदृशीत्यर्थः Sy.

८. आयतिना M. आगामिनीनामुषसाम् Sy.

९. प्रथमभाविनी सती Sy.

१०. ० दुर्भवत् P.D. विशेषेण प्रकाशते Sy.

११. यद्वा। ईयुषीणां गमनशीलानां पश्वादीनां शश्वतीनां सन्ततिप्रवाहरूपेण नित्यानामुपमा। तद्वन्नित्येत्यर्थः। तथाऽऽयतीनां रात्र्यवसानसमय उत्पद्यमानानां प्रज्ञावागादीनां प्रथमा प्रथमभाविनी। उषस्यागतायां वाचो बुद्धयश्च स्फुरन्तीति प्रसिद्धम्। तादृशी देवी व्यद्यौत् प्राणिनामनुग्रहाय द्योतते Sy. VM. ignores दैव्यानि। शश्वतीनाम्। उषाः

१२. द्योतमानात्मकस्य द्युलोकस्य Sy.

१३. दुहितृस्थानीया। तत उत्पद्यमानत्वाद् दुहितेत्युपचर्यते Sy.

१४. प्रत्येकं ...दृश्यते। सर्वेषामपि प्राणिनामाभिमुख्येन प्रकाशत इत्यर्थः Sy.

१५. तेजोरूपं वस्त्रम् Sy.

१६. आगच्छा० P. आच्छादयन्ती तेजसा प्रकाशयन्ती Sy.

१७. सम्यगानयित्री, चेष्टयित्री। अन्तर्भावितण्यर्थोऽयम्। यद्वा सह युगपदेव मन्यतेऽवबुध्यते प्राणिभिरिति समना। व्युत्पत्त्यनवधारणादनवग्रहः। सा तादृशी Sy. १८. मेरोः प्रान्तप्रदेशम् Sy.

१९. सम्यक् Sy.

२०. ० ती P. अनुक्रमेण ... गच्छति। सूर्यो यत्र यत्र गच्छति तत्र तत्र पुरस्तादुषा अपि गच्छतीत्यर्थः।...यथा लोके प्रियतमेऽनुरागयुक्ता काचिद् भर्तारं सर्वास्ववस्थासु न विमुञ्चति तथेयमपीत्यर्थः Sy.

अवगच्छन्तीव[1]। दिशश्च[2]। न। हिनस्ति रात्रिरिवेति[3]।

**उपो॑ अदर्शि शु॒न्ध्युवो॒ न वक्षो॑ नो॒धाइ॑वा॒विर॑कृत प्रि॒याणि॑ ।**
**अ॒द्म॒सन्न स॑स॒तो बो॒धय॑न्ती शश्वत्त॒मागा॒त्पुन॑रे॒युषी॑णाम् ॥४॥**

उषो अदर्शि। उषा[4] उपदृश्यते[5]। शोधयितुरादित्यस्य[6]। वक्षः[7]। इव[8]। सेयमुषि-[9]

---

१. प्रगेवापगच्छन्ती च P.
० न्ती च D.M.
प्रियभूतस्य सूर्यस्य मार्गो मयापि गन्तव्य इति चेतयन्तीव Sy.

२. ०शश्च P. प्रागादिकाः ... । किन्तूषा यत्र गच्छति सा प्राचीत्येवं प्रागादिव्यवहारं करोतीत्यर्थः Sy.

३. ० रेवेति M.

४. उपो, इति निपातद्वयसमुदायात्मक एको निपातः Sy.
उकारः पदपूरणः। उपोपसर्गश्रुतेश्च योग्यक्रियापदाध्याहारः। उपगता, उदिता सतीत्यर्थः SKN.

५. सर्वैः समीप एव ... दृश्यते Sy.
अदर्शि, वर्तमाने कर्मणि लुङ् दृश्यत उषाः SKN.
उपश्लिष्टा दृश्यत इयमुषाः Dur.

६. शुन्ध्युरादित्यः। सर्वेषां शोधकत्वात् ... यद्वा शुन्ध्युरिति जलचरः श्वेतवर्णः पक्षिविशेषः Sy.
उदकेचरो वा पक्षी हंसादिः शुक्लवर्णस्तस्य। ... शुन्ध्युरादित्यो भवति। शोधनात्। स हि तमसा व्याप्तं कृत्स्नं रश्मिभिः शोधयति। तमोऽस्मादपनयतीत्यर्थः। अथवाऽशुद्धमशुचितः शुचीकरोति SKN.
आदित्यो हि यदप्यशुचिर्भवति तदपि रश्मिभिः स्पृष्ट्वा शुचीकरोति। ... तमांसि वा शोधयतीति शुन्ध्युस्तस्य। शकुनिरपि य एष मद्गुर्नामाऽयमपि शुन्ध्युरुच्यते, शोधनादेव। यो हि उदकचरो भवति नित्यशुद्ध एवेति शुन्ध्युः। आपोऽपि शुन्ध्यव उच्यन्ते, ता अपि हि शोधयन्ति Dur.

७. पक्षः D.M. वक्षःस्थानीयो रश्मिसमूहः। स यथा प्रकाशमानो दृश्यते तथेत्यर्थः। यद्वा शुन्ध्युः ... पक्षिविशेषः। स यथा स्वकीयं वक्षः प्रकाशयन् दृश्यते तद्वदित्यर्थः Sy. वक्ष उरः, भास्वरा शुक्लवर्णा वेत्यर्थः SKN.
यथा, तस्य स्वभासः स्वं प्रकाशजालं वक्षोभूतमेतस्मिन्मण्डलेऽध्यूढम्। एवमियमुषा एतस्मिन्मण्डल उपश्लिष्टा दृश्यते सन्निकर्षात्। प्रासङ्गिकमुच्यते, शब्दसामान्यात्। इदमपीतरत्। ... पुरुषवक्षः पशुवक्षो वाङ्गम्। एतस्मादेव वहतेर्धातोरिदम्। अध्यूढमधिप्रवेशितमेव काये शरीरे भवति Dur.

८. अत्र नकार उपमार्थीय उपरिष्टात्प्रयुज्यमानत्वात्। यत्र तु प्रतिषेधो विवक्षितस्तत्र पुरस्तान्नकारः प्रयुज्यते Sy.
पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति ... उपरिष्टादुपाचारस्तस्य येनोपमिमीते N.1.4.

९. नवनं स्तोत्रं धारयतीति नोधाः। एतन्नामा महर्षिः Sy.
ऋषिः सः SKN.
इयमेवोषा नोधा ... ऋषिर्भवति। स हि नवनं स्तोत्रं देवताः प्रति दधाति Dur.

नोधा [1]इव [2]स्तुत्या कामान्। [3]आविष्कृणुते। [4]रूपाणि। [5]सुदस्त्री। [6]इवात्रे सीदन्ती सिद्धेऽन्ने। [7]स्वामिनः [8]स्वपतः। [9]बोधयन्ती। [10]नित्या। [11]आगता। [12]पुनः पुनः। [13]आगच्छन्तीनामुपसां

---

१. यिव P.
२. देवतास्तुतिव्याजेन नानाविधैर्मन्त्रैः Sy. 'सपर्यामि प्रयसा RV.1.58.7. RV. 3.54.3 नुष्ठितं (नू ष्ठिरं) मंस्तो वि रुतो (?) वीरवंन्तम्' RV.1.64.15. इत्यादिना स्वेनार्थेण SKN. स्वमुखोद्गीर्णया स्तुत्या Dur.
३. आविष्कृतवान्। तथैवापि ... आविरकरोत् Sy. आविष्कृतवांस्तद्वत् SKN. एवमियमुषाः स्वात्मन एवोद्गीर्णेन प्रकाशेन... आविष्कुरुते प्रकाशीकुरुते Dur.
४. प्रियाणि स्वमनीषितानि ... स्वकीयानि सर्वलोकप्रियाणि तेजांसि Sy. आत्मनः प्रियाणि धनादीनि SKN. प्रियाण्यात्मनः ... स्वानि कामाख्यानि ... स्वात्मन एवोद्गीर्णेन प्रकाशेन रूपाणि जनानाम् Dur.
५. तदत्री M. अद्यत इत्यद्म, अन्नं तस्य पाकाय गृहे सीदतीत्यद्मसत्पाचिका योषित्...यद्वाऽद्मेति गृहनाम 'वरूथमद्म' (Ngh. 3.4) इति तन्नामसु पाठात्, तत्र सीदतीत्यद्मसज्जननी Sy. अदनादद्मं तस्मिन्मक्षिलूत्वेन सीदति सनोति वा तस्सा, अद्मसत्। सा च सामर्थ्याल्लूतकारी मक्षिका वात्राभिप्रेता SKN. इयमेवोषाः...गृहाधिकारे नियुक्ताऽन्नसाधिका स्त्री। ... अद्म अन्नं तत्प्रतिकर्तव्यतया सीदति, तद्वा सनोति सम्भजत इत्यद्मसत् Dur.
६. ० स्त्रीवासे P.D. ७. ० न D.
८. ० नस्वपतः M. सा यथा स्वपतः पुत्रादीन् Sy. जनान् SKN. स्वपतो जनान्दोहकार्यान् Dur.
९. भोजनाय बोधयति तद्वत् ... सा यथा ... उषःकाले प्रबोधयति तथा भुवनाख्ये गृहे सीदन्ती तत्रत्यान्प्राणिनः प्रबोधयन्तीयमुषाः Sy. सा यथा प्रातरुत्थाय क्षीरादिसंग्रहार्थं ... प्रबोधयति SKN. सा यथा प्रातरेव क्षीराद्युपादानार्थं ... बोधयत्यन्नं साधयिष्यन्ती, एवमुषा अपि जनान्बोधयन्ती। तत्काले हि त इतिकर्तव्यतार्थं जनाः प्रतिबुध्यन्ते, तैनैतयैव बोधिता भवन्ति Dur.
१०. पुनः पुनः Sy. शश्वच्छब्दो नित्यवचनः SKN. शाश्वतिकतमा नित्यतमा Dur.
११. आगच्छति Sy. आयान्ति ताः SKN. यदा ... आगच्छति तदैव जनान् बोधयति Dur.
१२. पुनः (पूत पूर्वस्यां दिशि ज्योतिराच्छादयन्ती) पुनः P. पुनरायान्ति ताः पुनरेयुष्यो यथोषसः। उषसो हि गत्वा प्रत्यहमुदेष्यत आदित्यात्पुनरायान्ति। गवादयो हि गव्यूतिप्रभृति गत्वा गत्वा पुनरायान्ति SKN. या एताः काश्चिद् गत्वा पुनरागच्छन्ति ताः पुनरेयुष्यो गावोऽन्या वा Dur.
१३. आगमनशीलानां स्त्रीणां मध्ये। ... प्रातर्नियतमागच्छन्तीनां वारयोषितां मध्ये स्वयमेका सती नियतमागच्छतीत्यभिप्रायः Sy. निर्धारणे चेयं षष्ठी। अतिशयेन नित्या पुनरेयुषीणां मध्ये आगात्कृत्स्नं जगदभ्येति व्याप्नोतीत्यर्थः SKN. पुनरागामिनीनामित्यर्थः। ... तासां पुनरेयुषीणामिति निर्धारयति। एवंव ... शाश्वतिकतमा Dur.

मध्ये[1]।

**पूर्वे अर्धे रजसो अप्त्यस्य गवां जनित्र्यकृत प्र केतुम् ।**
**व्यु प्रथते वितरं वरीय ओभा पृणन्ती पित्रोरुपस्था ॥५॥**

पूर्वे अर्धे। अद्भ्यो जातस्य[2]। पूर्वस्मिन्[3]। भागे। अन्तरिक्षस्योषाः[4]। तेजसाम्[5]। जनयित्री[6]। आदित्यस्य तेजः[7]। प्रकृणोति[8]। उरुत्वं[9] च। अतिशयेन[10] तत्र। विप्रथयति[11]। द्यावापृथिव्योः[12]। उभौ[13]। उपस्थौ[14]। आपूरयन्ती[15] तेजसा[16]।

---

१. एतस्मिन्मन्त्रे सामर्थ्यादपत्यसाधिका स्त्री उच्यते। सा हि तत्काले जनान्दोहकादीन्बोधयति। उषा अपि च तत्काल एवागच्छतीत्येवमुपमानमुपपद्यत इत्युपपत्तिः। अन्ये तु मक्षिकामप्रसवं मन्यन्ते। सापि ह्यप्रे सीदति सनोति वाप्नं, तत्काले च प्रतिबुध्यमानाऽन्यान्बोधयतीति Dur. उषादर्शि शुन्ध्युवः। शुन्ध्युरादित्यो भवति। शोधनात्। तस्यैव वक्षो भासाध्यूळहम्। इदमपीतरद्वक्ष एतस्मादेव। अध्यूळ्हं काये। शकुनिरपि शुन्ध्युरुच्यते। शोधनादेव। उदकचरो भवति। आपोऽपि शुन्ध्युव उच्यन्ते शोधनादेव। नोधा ऋषिर्भवति। नवनं दधाति। स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुते। अप्नस्वत्। अप्नवद्भवति। अप्नसादिनीति वा। अप्नसानिनीति वा। ससतो बोधयन्ती। शश्वत्तमागात्पुनरेयुषीणाम्। [स्वपतो बोधयन्ती] शाश्वतिकतमागात्पुनरेयुषीणाम् N.4.16; SKN. II. 236. VM. ignores उ।

२. व्यापनशीलस्य विस्तृतस्य ... यद्वा, अप्स्वस्य कर्मसु स्थितस्य जन्तोः Sy.

३. उषःकाले Sy.

४. रञ्जकस्यान्तरिक्षलोकस्य। रजःशब्दोऽन्तरिक्षलोकवाची, 'लोका रजांस्युच्यन्ते' (N.4.19.) इति यास्केनोक्तत्वात्।... यद्वा रजसो रञ्जकस्याह्नः। रजःशब्दोऽहर्वाची 'असुगहनी रजसी उच्येते' (N.4.19.) Sy.

५. ० सा सं D. दिशां रश्मीनां वा...गवां वाचाम् Sy.

६. उत्पन्ना सती ...। उत्पादयित्री। उषःकाले सर्वेषां प्राणिनां वाचः स्फुरन्तीति प्रसिद्धम् Sy.

७. प्रज्ञानम्...केतुं गमनागमनादिरूपं कर्म। केतुरिति कर्मनाम। 'केतः केतुः' इति तन्नामसु पाठात् Sy.

८. ०णोति D.M. प्रकरोति is suggested for प्रकृणोति।
प्रकर्षेण करोति Sy.

९. उरुत्वं is doubtful. It should be उरुतरं as read by Sy.
उरुतरम्। अतिविस्तीर्णं यथा भवति तथा ...। उशब्दोऽवधारणार्थः पादपूरणो वा। 'मिताक्षरेष्वनर्थकाः कमीमिद्विति'(N.I.9.)इति यास्केनोक्तत्वात् Sy.

१०. ० शयो M. विशिष्टतरम् Sy.

११. ० ती P. विशेषेणैव प्रख्याता भवति प्रकाशत इत्यर्थः Sy.

१२. पालयित्र्योर्द्यावापृथिव्योः Sy.

१३. उभे द्यावापृथिव्यौ ...। यद्वा, उभा उभयोः पित्रोरिति सम्बन्धः Sy.

१४. उपस्थे उत्सङ्गेऽन्तरालप्रदेशे स्थित्वा Sy.

१५. स्वतेजसा पूरयन्ती Sy.

१६. VM. ignores उ

एवेदेषा पुरुतमा दृशे कं नाजामिं न परि वृणक्ति जामिम् ।
अरेपसा तन्वा३ शाशदाना नार्भादीषते न महो विभाती ॥६॥

एवेदेषा । एवम्[1] । एव[2] । एषा[3] । पुरुतमा[4] । दर्शनाय[5] भवति । नच । वर्जयति[6] । बन्धुम्[7] । अबन्धुं[8] वा । उज्ज्वलया[9] । तन्वा[10] सर्वम् । अपबाधमाना[11] सेयम् । कुमारात्[12] । न[13] । पलायते[14] । नच । वृद्धात्[15] । व्युच्छन्ती[16] सर्वं जरयतीति[17] ।

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥७॥

अभ्रातेव । यथा । अभ्रातृका कन्यका[18] । पुंसः[19] पितॄन् । एति[20] । अभिमुखी[21] सन्तानकर्मणे पिण्ड-[22]

---

१. इदानीं भासमानप्रकारेणैव Sy.
२. इच्छब्द एवकारार्थः Sy.
३. उषाः Sy.
४. विपुलतमा, अत्यन्तविस्तृता सती Sy.
५. दृशे कं सुखेन सर्वेषां दर्शनाय । सुखं यथा भवति तथा सर्वान्दर्शयितुं वा Sy.
६. परितः सर्वतो न वर्जयति . . . न परिवर्जयति । मनुष्यादिकं देवादिकञ्च तदुपलक्षितं लोकद्वयं वा कार्त्स्न्येन प्रकाशयतीत्यर्थः Sy.
७. जामिं सजातीयं देवजातिम् Sy.
८. बन्धुं P.D. अजामिं विजातीयं मनुष्यादिजातिम् Sy.
९. अपापया निर्मलया Sy.
१०. शरीरेण Sy.
११. शाशाद्यमाना । . . . स्पष्टतां गच्छन्तीत्यर्थः Sy. शाशदानः शाशाद्यमानः N.6.16.
१२. अल्पात्पुत्तिकादेः सकाशात् Sy.
१३. M. adds च after न
१४. न गच्छति । तमपि प्रकाशयति Sy.
१५. वृद्धा M. महतो मेघादेः सकाशात् Sy.
१६. व्य ० P.D. विभाती विशेषेण प्रकाशयन्ती सा Sy.
१७. पूर्वं लोकद्वयं प्रकाशत इत्युक्तम् । इदानीमस्मिँल्लोके परमाण्वादिपर्वतपर्यन्तं कृत्स्नं प्रकाशयतीत्यर्थः Sy. VM. ignores कम् । न । परि
१८. कन्याका D. भ्रातृरहितेव . . . । यथा लोके भ्रातृरहिता योषित् Sy. यथा, अभ्रातृका स्त्री SKN. यथा, अभ्रातृका कन्या Dur.
१९. पुंसः पित्रादीन् प्रति . . . स्वोचितवासोऽलङ्कारादिलाभाय पितॄनेति । सति भ्रातरि स एवोचितप्रदानादिना सम्यक् तोषयति । तदभावात्पितरमेव प्राप्नोति Sy. येभ्य उत्पन्ना तानेव पुंसः पितॄन् SKN. दत्तापि सती पित्रा, ऊढा भर्त्रा पुनः . . . पुंसः पितॄनेव पितृवंशमेव Dur.
२०. गच्छति Sy., SKN.
२१. आभि० D.M. स्वकीयस्थानात्प्रतिनिवृत्तमुखी सती Sy. प्रत्यग्गामिनी SKN. अभिमुखी Dur.
२२. यद्वा सति स्वभ्रातरि स एव पितुः पिण्डदानादिकं सन्तानकृत्यं करोति । तस्याभावात्स्वयमेव तत्कर्तुं पित्रादीन्गच्छति Sy. सन्तानकर्मणे पिण्डदानाय च SKN.

दानाय न[1] पतीनेवमूषा[2] अभिमुख्यागच्छति[3]। गर्तारोहिणीव[4][5]। धनलाभायाक्षिकान्[6][7]। गर्तो द्यूतास्थारस्तमपतिकपुत्रा[8] या[9] स्त्री भर्तुर्धनहरणाया[10]रोहति[11] तां[12] तत्राक्षेण[13] कितवा घ्नन्ति न सा[14] ततोऽन्य-

---

१. वतो० M. न पतिवंशमित्यर्थः। सा हि पितृवंशं पुत्रैः पौत्रैश्च वर्धयति न भर्तृवंशमिति।...अभ्रातृका कन्या यस्मिन्नेव वंश उत्पन्ना भवति तमेव प्रकाशयति वर्धयति, न भर्तृवंशमित्येवमुपमया नासावुद्वोढव्येत्येतदुपदर्शितं भवति। पुत्रार्थत्वाद्विवाहस्य। तस्मादवर्धयितृत्वाद्भर्तृवंशस्य वर्धयितृत्वाच्च पितृवंशस्याभ्रातृका पितृदायाद्यमर्हतीत्युपपद्यते। ... अत्र प्रथमयोपमया अभ्रातेव पुंस इत्यनया अभ्रातृकाया अनिर्वाहो लिङ्ग्यते Dur.

२. ०यो P. अभि० P.D. तद्वदियमुषा अपि स्वोचितप्रकाशादिलाभाय स्वप्रकाशदानाय वा पितृभूतं सूर्यमाभिमुख्येन गच्छति Sy. एवमुषा यत उत्पन्ना तमेवादित्यं गच्छति। तत्रैव प्रलीयत इत्यर्थः SKN. एवमुषा अपरकाले रात्र्यां नभ आरोहति। यथाऽभ्रातृका पितृनेव प्रत्येति न पतिमेवमुषा आदित्यमेव प्रत्येति Dur.

३. ०ती P.

४. गर्त इति गृहनाम। 'कृदरो गर्तः' (Ngh. 3. 4.) इति तन्नामसु पाठात्। अत्रौचित्येन राजपुरुषैर्न्यायनिर्णेतृभिश्चाधिष्ठितं स्थानमुच्यते Sy.
सर्वलोकप्रकाशमास्फारम् SKN.
'गर्तः सभास्थाणुः' इति, अक्षनिर्वपणपीठम्।...गृणातेः,...श्मशानसञ्चयोऽपि गर्त उच्यते, गुरतेरुद्यमनार्थस्य। (धा० ६।११६) स हि लोकविनाशायाभ्युद्यत इव भवति। यानि हि तत्र पिशाचादीनि सत्त्वान्याश्रितानि भवन्ति तानि जनमरणमाशासते। म्रियमाणेषु जनेषु तानि प्रमुदितानि भवन्ति।...रथोऽपि गर्त उच्यते, 'गृणातेः' स्तुत्यर्थस्य। तद्धि 'स्तुततमं यानम्' अश्वादिभ्यो यानेभ्यः सुखतरं हि तेन गम्यते Dur.

५. तदारोहतीति गर्तारुक् Sy.
यथा दक्षिणापथे क्वापि प्रदेशे...अपस्मारा रोहिणी स्त्री SKN.
काचित्...दाक्षिणात्या स्त्री Dur.

६. धनानां स्वकीयरिक्थानां, सनये लाभाय Sy. सनये लाभाय, धनानां भर्तुः स्वभूतानाम् SKN.
लब्धये धनानाम् Dur.

७. ०क्षितान् M.

८. ०मपतीक० P. ०मतिक० M.
०काऽपु० is suggested for ०कपु०
यथा लोके काचिद् गतभर्तृका योषित् Sy.
अपुत्रा, अपतिका वा SKN.
अपुत्रा Dur.

९. चा० P.

१०. ०नंह० D.

११. ०यरो० P. गर्तमागच्छति Sy.
गच्छति तद्वत् SKN.
सा यथा...समारोहति।...उपविशतीत्यर्थः Dur.

१२. तान् P.

१३. तक्षेण M. तां तु सभ्या विचार्य यदीयं रिक्थं लभते चेदर्थः सन्ताड्य तदीयं धनं वितरन्ति।...देशविशेषाचारमपेक्ष्यैवं दृष्टान्तितम् Sy.
तत्र गता सती...रिक्थं लभते। कितवा दापयन्ति रिक्थमिति दाक्षिणात्येषु देशरीतिः।...देशसमाचारव्यवस्थयापि क्वचिन्मन्त्रार्थो निर्वक्तव्य इत्येतदनेन प्रदर्शितं भवति Dur.

१४. M. reads सनातनी for न सा ततो।

मात्रवते नच तामन्यः परिगृह्णाति धनमुपगच्छति दाक्षिणात्येषु[1]। जायेव। पत्ये। कामयमाना। सुवासा ऋतुकालेषु[3]। उषाः[4]। हसनेव स्त्री दन्तान्[5]। आत्मीयं रूपम्[6]। विवृणुत इति[7]।

**स्वसा स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः प्रतिचक्ष्येव ।**
**व्युच्छन्ती रश्मिभिः सूर्यस्याञ्ज्यङ्क्ते समनगाइव व्राः ॥८॥**

स्वसा स्वस्रे। रात्रिः[9]। ज्येष्ठायै[10]। स्वस्र उषसे। स्थानम्[11]। अरिचत्[12]। तामुपसं

---

१. तथेयमपि धनानां प्रीणनसाधनानां प्रकाशानां सनये लाभाय गर्तमाकाशं सूर्यनिवासस्थानमारोहति Sy.

२. विशेषेण पतिं भोगाय काङ्क्षन्ती तेन सह सङ्क्रीडते Sy. द्वितीयार्थे चतुर्थी। पतिमुशती कामयमाना... निर्विशङ्का परया प्रीत्या युक्ता गच्छति तद्वत् SKN. यथा जाया...भर्त्रे...आत्मानं दर्शयति Dur.

३. यथा च लोके सुवासा दुकूलादिशोभनवसना स्वलङ्कृता, पूर्वं रजोदर्शनसमये मलिनवस्त्रा सती स्नानानन्तरं शोभनवस्त्राभरणादिना शोभमाना Sy. सुवासाः SKN. सुवासा भूत्वा, ऋतुकालेषु Dur.

४. तथेयमुषा अतिनैशेनान्धकारेणावृतत्वान्मलिनवसनापि प्रभाते स्वतेजसावृतत्वात्सुवसना सती पतिस्थानीयेन सूर्येण सार्कं सङ्कीडमाना Sy. एवमुषा आत्मानं दर्शयति जनानाम् Dur.

५. हस्रेव हसनेव...दन्तस्थानीयानि Sy. हस्रेव यथा हसनशीला स्वदन्तान् SKN. यथा हसनस्वभावा स्त्री दन्तानात्मनो दर्शयति Dur. ६. रूपाणि नीलपीतादीनि। यद्वा निरूप्यमाणानि पदार्थजातानि Sy. अप्सो रूपं कृत्स्नस्य जगतः SKN. एवमुषा अप्यात्मनोऽन्तर्भूतानि सर्वद्रव्याणां रूपाणि Dur.

७. नितरां रिणीते गमयति प्रकाशयतीत्यर्थः। यथा लोके काचिद्रमणीया योषित् स्मितव्याजेन दन्तान्विवृणुते तथेयमपि सर्वाणि रूपाणि प्रकाशयतीत्यर्थः Sy. निरिणीते। रिणातिर्गतिकर्मा। निः प्रकर्षे। अन्तर्णीतण्यर्थश्चायम्। प्रकर्षेण गमयति, प्रकाशयति ज्ञापयतीत्यर्थः। एवमुषा निरिणीते SKN. शार्वरेण तमसा दिग्धानि सर्वद्रव्याणि स्वेन प्रकाशोदकेन धौतानीव करोति Dur.

८. अभ्रातृकेव पुंसः पितृनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय न पतिम्। गर्तारोहिणीव धनलाभाय दाक्षिणाजी। गर्तः सभास्थाणुः। गृणातेः। सत्यसङ्गरो भवति। तं तत्र याऽपुत्रा यापतिका साऽरोहति। तां तत्राक्षेणाघ्नन्ति। सा रिक्थं लभते। श्मशानसञ्चयोऽपि गर्त उच्यते। गुरतेः। अपगूर्णो भवति। ...रथोऽपि गर्त उच्यते। गृणातेः स्तुतिकर्मणः। स्तुततमं यानम्। ...जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान्विवृणुते रूपाणीति। चतस्र उपमाः। N. 3.5; SKN. II. 130.

९. ०त्रि M. स्वयमेव सरतीति या स्वसा रात्रिः Sy. १०. ज्यं० D. एकस्मादेवान्तरिक्षादुत्पन्नत्वात्परस्परं स्वसृभावः। तथाप्यह्नः प्राथम्यात्तेजस्वित्वाच्च ज्यायस्त्वम्...उक्तरीत्या ज्येष्ठायै Sy.

११. Omitted by P. D.

१२. उत्पत्तिस्थानमपररात्ररूपम् Sy.

१३. प्रावात्। प्रेरयतीत्यर्थः Sy.

दृष्ट्वेव[1] रात्रिः। अपगच्छति[2]। तस्याः सकाशादपि वा[3] यथा श्वसुरं दृष्ट्वा स्नुषापगच्छत्येवमिति सेयम्। सूर्यतेजोभिः[4] सह। प्रादुर्भवन्ती[5]। अञ्जनसाधनं[6] तेज आत्मनि। अङ्क्ते[7]। यथा युद्धे गच्छन्तः[8]। वृता[9] आभरणैः।

**आसां पूर्वासामहंसु स्वसॄणामपरा पूर्वामभ्येति पश्चात्।**
**ताः प्रत्नवन्नव्यसीर्नूनमस्मे रेवदुच्छन्तु सुदिना उषासः ॥९॥**

आसां पूर्वासाम्। आसाम्[10]। उषसाम्। पूर्वकालानाम्[11]। उत्तरोषाः[12]। पूर्वां गतां[13] गताम्। पश्चात्[14]। अभ्येत्यनुक्रमेण[15] गतेष्वहःस्वगमन्[16][17]। ताः[18]। पुराणा[19] इव। इदानीं नवतराः[20]। अस्माकम्। धनयुक्तम्[21]। व्युच्छन्तु[22]। शोभनदिवसाः[23]। एकस्माज्जननात् सहागमनाद्वा स्वसार उषस इति[24]।

---

१. ज्ञापयित्वेव ... स्वापस्यामागतायां तस्यै स्वस्थानं दत्त्वा स्वयं तत्सन्निधौ स्थातुमनुचितमिति विज्ञायेव Sy.

२. स्वयमपसृत्यैव गच्छति ... अपगच्छतीति भावः Sy.

३. वा यथा omitted by P. D.

४. सूर्यस्य रश्मिभिः Sy.

५. तमो विवासयन्ती Sy.

६. व्यञ्जकं तेजः। यद्वा, अञ्जि व्यक्तं जगत् Sy. ७. अनक्ति प्रकाशयति Sy.

८. P. reads गच्छन्तो युद्धे for युद्धे गच्छन्तः।

सम्यगननहेतव आपः समनाः। ता गच्छन्तीति समनगा विद्युतः ... यद्वा सम्यगननाय गच्छन्तीति समनगाः सूर्यरश्मयः Sy.

९. प्रताभ० P. वताभ० D.

वृता आभ० M.

वा व्राताः, विद्युत्सङ्घा इव। ...त इव वा व्राताः सङ्घीभूताः। ते यथाञ्जते जगत्प्रकाशयन्ति तथेत्यर्थः। व्रात इत्यत्र तकारलोपश्छान्दसः Sy.

१०. स्वसॄणां परस्परं स्वसृभावमापन्नानां स्वयं सरन्तीनां वा ... उषसां मध्ये Sy.

११. पुरातनीनाम् Sy.

१२. ०रा उ० P.D.M. अपरा, अन्याऽद्यतन्युषाः Sy.

१३. पूर्वामतीतदिवससम्बन्धिनीमुषसम् Sy.

१४. पश्चाद् अनुसृत्य Sy.

१५. ०त्यानु० P. अभिमुखं गच्छति। अव्यवधानेन गच्छतीत्यर्थः। सर्वेष्वहःस्वेवमेवाभ्येति Sy.

१६. प्रतिदिनम् Sy. १७. गते ... गमः M.

१८. उषसः। ...नूनं निश्चयम् Sy.

१९. पुरातन्य इव Sy.

२०. नवीयस्यो नवतरा आगामिन्यः Sy.

२१. बहुधनविशिष्टं यथा भवति तथा Sy.

२२. प्रकाशयन्तु। पूर्वतन्यो यथोच्छुस्तथाऽऽगामिन्योऽप्युच्छन्त्वित्यर्थः Sy.

२३. शोभनकर्मानुष्ठानसाधनदिवसाः शोभनदिनमुखा वा सत्यः Sy.

२४. VM. ignores नूनम्

प्र बो॑धयोषः पृण॒तो म॑घो॒न्यबु॑ध्यमानाः प॒णयः॑ ससन्तु ।
रे॒वदु॑च्छ म॒घव॑द्भ्यो मघोनि रे॒वत्स्तो॒त्रे सू॑नृते जा॒रय॑न्ती ॥१०॥

प्र बोधयोषः। प्रयच्छत[1]। उदारान्[2]। धनवति[3]! अबुध्यमानाः[4]। कदर्याः[5]। स्वपन्तु[6]। धनयुक्तम्[7]। व्युच्छ[8]। धनवद्भ्यः[9]। मघोनि[10]! रेवत्[11]। स्तोत्रे[12] मह्यम्। सूनृते[13]! स्तोत्रं कारयन्ती[14] जरयति कर्मेति ?[15]।

अवे॒यमश्वै॑द्युव॒तिः पु॒रस्ता॑द्यु॒ङ्क्ते गवा॑मरु॒णाना॒मनी॑कम् ।
वि नू॒नमु॑च्छा॒दस॑ति॒ प्र के॒तुर्गृ॒हंगृ॑ह॒मुप॑ तिष्ठाते अ॒ग्निः ॥११॥

अवेयमश्वैत्। इयम्[16]। उषः। द्योतते[17]। युवतिः[18]। पूर्वस्यां दिशि। युङ्क्ते[19] च। अश्वानाम्[20]। अरुणवर्णानाम्[21]। समूहं[22] रथे। सैवेयं[23] व्युष्टाभवत्[24]। सम्प्रति[25] प्रभवति च।

---

१. प्रयच्छ is suggested for प्रयच्छत प्रज्ञापय । प्रतिबुद्धान्कुरु Sy.
२. ०रां M. हविष्प्रदानस्मान्यजमानान् Sy.
३. मघवति! अस्मभ्यं दातव्यैर्बहुभिर्धनैस्तद्वति! Sy.
४. यागादीनकुर्वाणा अदानशीला अस्मच्छत्रवः Sy.
५. पणयो व्यवहारसहिष्णवो वणिजः 'पणिर्वणिग्भवति' (N.2.17.) इति यास्कः। पणय इव लुब्धकाः Sy.
६. ०बुध्य...स्वव (प) न्तु M. स्वपन्तु दीर्घनिद्रा भवन्तु। म्रियन्तामित्यर्थः Sy.
७. धनवत्, समृद्धिमत् Sy.
८. विभाहि Sy.
९. हविर्लक्षणान्नवद्भ्यो यजमानेभ्यः Sy.
१०. घोनि M. अस्मद्दत्तहविर्भिस्तद्वति! Sy.
११. रेवतत् D. धनवत् समृद्धयर्थमुच्छेति शेषः Sy.
१२. स्तुतिकर्त्रे यजमानाय Sy.
१३. स्तनुते M. सुष्ठु मनुष्याणां नेत्रि देवि! Sy.
१४. सर्वप्राणिनः क्षपयन्ती Sy.
१५. VM. ignores उषः।
१६. उषाः Sy.
१७. अत्यर्थमागच्छति वर्धते वा। अत्रावशब्दो विनिग्रहार्थीयः 'न्यवेति विनिग्रहार्थीयौ' (N.1.3.) इति यास्केनोक्तत्वात् Sy.
१८. यौवनोपेतयोषित्स्थानीया। यद्वा सर्वेषु भावेषु मिश्रयन्ती Sy.
१९. योजयति Sy.
२०. गवां प्रसिद्धानामेतन्नामकानामश्वानां वा।...यथा लोके वाहनसङ्घाहं दृष्ट्वा प्रयाणमनुमीयते तथात्राप्यरुणरश्मीनामश्वानां दर्शनादुषा आगच्छतीत्यध्यवसीयते। यद्वा। अरुणानां रश्मीनां समूहं युङ्क्ते Sy. अरुण्यो गाव उषसाम् Ngh. 1.15.
२१. अरुणरश्मीनाम् Sy.
२२. अरुण...स० M.
२३. सेवयं D.M. सेयम् P. तथा नूनं निश्चयमेषा Sy.
२४. तमो विवर्जयिष्यति। यत इयं गा युनक्ति, अत एव कारणाद्यथा लोके-ऽश्वसङ्घाहं दृष्ट्वोदयोऽनुमीयते तथा-ऽत्रापीत्यर्थः Sy.
२५. असत्प्राये नीरूपेऽन्तरिक्षे तिरोधायकत्वादशोभने तमसि वा Sy.

प्रज्ञानम्[१]। अथाऽनुगृहम्[२]। अग्निः[३] स्वाहाप्रतिग्रहार्थम्[४]। सङ्गच्छते[५]।

उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ ।
अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥१२॥

उत्ते[६] वयश्चित्। तव। व्युष्टौ। पक्षिणः[७]। अपि[८]। वसतेः[९]। उदपप्तन्[१०]। मनुष्याः। च। ये[११]। अन्नस्य भाजकाः[१२]। गृहे[१३]। वसते[१४]। याचितृभ्यः[१५] प्रयच्छते[१६]। मनुष्याय। त्वमुष[१७]? देवि[१८]! बहु। धनम्[१९]। वहसि[२०]।

अस्तोढ्वं स्तोम्या ब्रह्मणा मेऽवीवृधध्वमुशतीरुषासः ।
युष्माकं देवीरवसा सनेम सहस्रिणं च शतिनं च वाजम् ॥१३॥

अस्तोढ्वम्[२१]। हे स्तोमार्हा[२२] उषसः। यूयम्। मम[२३]। अनेन स्तोत्रेण[२४]। स्तुता भवत[२५]। वर्धय-[२६]

---

१. केतुस्थानीया ज्ञापयित्री। प्रकर्षेण विविधं भासत इति शेषः। उपसर्गवशाद्योग्यक्रियाध्याहारः। यद्वा, प्रसति तमोरूपेऽन्धकारे प्रकेतुः प्रकर्षेण ज्ञापयित्री सती नूनं व्युच्छादिति पूर्वत्रान्वयः Sy.

२. सर्वयजमानगृहमग्निहोत्राद्यर्थम् Sy.

३. आहवनीयादिरूपः Sy.

४. स्वभागप्र० M.

५. उपतिष्ठते। दीप्यत इत्यर्थः Sy. VM. seems to ignore नूनम्।

६. ०त्त P.

७. गमनवन्तः पक्षिणोऽपि Sy.

८. चिदित्येषोऽपिशब्दार्थः। ... पूर्ववाक्ये 'गृहं गृहमुपतिष्ठातेऽग्निः' इत्युक्तत्वात्तदपेक्षयाऽपिशब्दः Sy.

९. पवतेः P. निवासस्थानान्नीडादेः Sy.

१०. ऊर्ध्वं... पतन्ति Sy.

११. यस्य for ये। अन्नस्य P.

१२. ०कारा P.D. अन्नवन्तोऽन्नार्थिनः कृषिवाणिज्यादिकर्तारः स्वस्वव्यापारार्थमुत्तुन्मुखा अपप्तन् गच्छन्ति Sy.

१३. देवयजनाख्ये। ... अमेति गृहनाम। 'अमा दमे' (Ngh. 3.4.) इति तन्नामसु पठितत्वात् Sy.

१४. सते तिष्ठते यजमानाय तदर्थम्। ... यद्वा अमा सह हूयमानेनाग्निना सह निवसते यजमानाय। अमा वसेतामित्यादौ सहार्थे प्रयोगात् Sy.

१५. यापयितृभ्यः P.D.

१६. हविर्दत्तवते यजमानाय Sy.

१७. उषोदेवते! Sy. उषः! is suggested for उष।

१८. देवनशीले! Sy. १९. शोभनं धनम् Sy.

२०. प्रापयसि Sy.

२१. ०ढ्वम् P.D. एवं सूक्तद्वयोक्तरीत्या बहुधा स्तुत्वा तां च स्तुतिमनया निवेदयित्वा स्वाभीष्टं प्रार्थयते Sy.

२२. स्तोमः स्तोत्रम्। तदर्हन्तीति स्तोम्याः स्तुत्यर्हा उषसः Sy.

२३. मत्स्वभूतेन Sy.

२४. ब्रह्मणा सूक्तद्वयगतमन्त्ररूपेण स्तोत्रेण Sy.

२५. Omitted by P. अभ० D.M.

२६. प्रवर्धयत Sy.

तास्मान्। कामयमानाः। उषसः! युष्माकम्। देव्यः! पालनेन। सम्भजेमहि। सहस्रसङ्ख्याकम्। शतसङ्ख्याकम्। च। अन्नम्।

I.125.

प्राता रत्नं प्रातरित्वा दधाति तं चिकित्वान्प्रतिगृह्या नि धत्ते।
तेन प्रजां वर्धयमान आयू रायस्पोषेण सचते सुवीरः ॥१॥

प्राता रत्नम्। स्वनयस्य दानस्तुतिः। प्रातः। धनम्। प्रातरागन्ता स्वनयः। प्रयच्छति। तम्। प्राज्ञः कक्षीवान्। प्रतिगृह्य। निधत्ते, लिङ्गभेदश्छान्दसः। तेन धनेन। प्रजाम्। आयुश्च। वर्धयमानः। धनस्य। पोषेण। संसृष्टो भवति। शोभनवीरः कक्षीवा-

---

१. स्तोतुनस्मानस्मत्समृद्धिं वा कामयमानाः Sy.
२. युष्मत्सम्बन्धिना Sy.
३. देवनशीलाः Sy.
४. रक्षणेन Sy.
५. भ० P. लभेमहि Sy.
६. अभीष्टं धनम् Sy.
७. शार्क M. अपरिमितं धनम् Sy.
८. धनम् Sy.
९. युष्मत्कृतेन शतसहस्रपरिमितधनाविरूपरक्षणेन वयमप्यर्थिभ्यः शतसहस्रपरिमितस्य धनस्य सनितारो भवेमेत्यर्थः Sy.
VM. ignores च
M.D. puts the figure ॥१२४॥ here to indicate the end of one hundred and twentyfourth hymn. No such number is given in P. and M.
१०. भावयव्यस्य पुत्रः स्वनयो नाम राजा Sy.
११. प्रभातकाले Sy.
१२. रमणीयं निष्कादिकम् Sy.
१३. प्रातरेवात्मनः सकाशमागतः सन् Sy.
१४. अस्मत्सन्निधौ स्थापयति, ददाति Sy.
१५. स्थापितं सर्वम् Sy.
१६. चेतनावान्। अबुध्दमित्यवगतवान् Sy.
१७. स्वीकृत्य Sy.
१८. बिध० P. पितुः समीपे स्थापयति Sy.
१९. ०वं छान्दसं D.
२०. दत्तेन निष्कादिना Sy.
२१. पुत्रभृत्यादिरूपाम् Sy.
२२. जीवितञ्च Sy.
२३. वर्धमा० P.D. पोषयन् Sy.
२४. धनानां पुनः पुनर्वर्धनेन Sy.
२५. असौ राजा सङ्गच्छतामिति तव दातुराशिषं प्रार्थयते Sy.
२६. वीरः M. शोभनैर्वीरैः पुत्रभृत्यादिभिरुपेतः सन् Sy.
२७. कक्ष्या नाम अश्वबन्धनी रज्जुः। तद्वान् कक्षीवान् Sy. कक्षीवान् कक्ष्यावान् N. 6. 10. कक्ष्याः प्रकाशयन्ति कर्माणि N. 3. 9. कक्ष्या रज्जुरश्वस्य। कक्षं सेवते। कक्षो गाहतेः। क्स इति नामकरणः। ख्यातेर्वानर्थकोऽभ्यासः। किमस्मिन् ख्यानमिति। कषतेर्वा। तत्सामान्यान्मनुष्यकक्षः। बाहुमूलसामान्यादश्वस्य N. 2. 2.

निति।

---

१. अत्रेतिहासमाचक्षते। दैर्घतमसः कक्षीवान्नाम ऋषिर्ब्रह्मचर्यं चरिष्यन्वेदाभ्यासाय गुरुकुले चिरकालमुषित्वा वेदान्सम्यगधीत्य व्रतानि च चरित्वा तेनानुज्ञातः पुनः स्वगृहं प्रति प्रयास्यन् मध्ये मार्गे (मध्येमार्गं) रात्रौ विश्रान्तः। प्रभाते भावयव्यस्य पुत्रः स्वनयो नाम राजाऽनुचरैः सङ्क्रीडमानोऽकस्मात्कक्षीवतोऽन्तिकमाससाद। स च रभसा प्रतिबुद्धः सहसोत्तस्थौ। तं च राजा पाणिं गृहीत्वा स्वकीय आसन उपवेश्यास्य सौन्दर्यमवगत्य स्वकन्याप्रदानमनाः पप्रच्छ। भगवन्! कस्य पुत्रः किंनामा त्वमिति। स च पृष्टो मातरं पितरं च स्ववृत्तान्तञ्चाचचक्षे। स च राजा सम्भाव्य इत्यवगत्य मुदितमनाः स्वगृहं प्राप्यास्मै मधुपर्कमारचय्य वस्त्रमाल्यादिभिः पूजयित्वा सरथा दश कन्याः शतनिष्कानश्वशतं, पुङ्गवानां शतं, गवां षष्ट्युत्तरसहस्रं, पुनरेकादश रथांश्च प्रादात्। स च सर्वमनुक्रमेण प्रतिगृह्य दीर्घतमसोऽन्तिकमागत्य तस्मै प्रादर्शयत्। ननु कक्ष्या नामाश्वबन्धनी रज्जुः। तद्वान्कक्षीवान्। अश्वबन्धनञ्च राज्ञ एवोचितम्। अतोऽस्य राजन्यत्वात्प्रतिग्रहो नोपपद्यते। 'याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः' (मनु० १०, ७६) इत्युक्तत्वात्। तस्माद् ब्राह्मणस्यैवाधिकारो न तु क्षत्रियस्येति। नैष दोषः। यद्यप्यसौ कलिङ्गाख्यस्य राज्ञः पुत्रस्तथापि तेन कलिङ्गेन स्वयं वृद्धत्वादपत्योत्पादनाय सामर्थ्यमलभमानेन तदुत्पादनाय याचितो दीर्घतमा ऋषिः उशिग्नामिकाम् अपत्योत्पादनाय प्रेषितया राजमहिष्याऽतिजरठेन महर्षिणा सह रन्तुं लज्जमानया स्ववस्त्राभरणैरलङ्कृत्य स्वप्रतिनिधित्वेन प्रेषितामुशिग्नामिकां योषितं दासीमित्यवगत्य मन्त्रपूतेन जलेनाभिषिच्यर्षिपुत्रीं कृत्वा तया सह रेमे। तदुत्पन्नः कक्षीवाञ्चामर्षिः...अतोऽस्य क्षत्रियसम्बन्धात्कक्षीवानिति नामोपपन्नम्। दीर्घतमसः परमर्षेरुत्पन्नत्वेन ब्राह्मणत्वात्प्रतिग्रहोऽप्युपपन्न एव। इदमादि सूक्तद्वयं स्वनयस्य राज्ञो दानप्रशंसाख्यानप्रतिपादकम्। नन्वनुक्रमण्यां 'स्वनयस्य दानस्तुतिः' इति 'दानतुष्टो भावयव्यं तुष्टाव' इति चोभयत्र स्तोतव्यं भिन्नमेवानुगम्यत इत्युच्यते। उत्तरसूक्तस्य प्रथमायामृचि 'अर्थिक्षियतो भाव्यस्य' (RV. I. 126. 1[b].) इति दातुर्भावयव्यस्य श्रूयमाणत्वात्तत्प्राथम्यमुपजीव्य पृथगुपात्तम्। वस्तुतस्तु पितुर्नाम्ना पुत्रस्य व्यवहर्तव्यत्वात् तथा 'आ रुद्रासः' (RV. V. 57. 1[a].) इत्यादौ बहुशः प्रयोगदर्शनात् 'स्वनयेन दत्ताः' (RV. I. 126. 3[a].) इति तत्रैव सूक्ते स्वनयस्यापि श्रूयमाणत्वाच्चोभयत्रापि दातृप्रतिगृहीत्रोरेकत्वेनैकमेव दानप्रशंसारूपमाख्यानमिति प्रसिद्धम्। स च कक्षीवानानीतं सर्वं पितुर्निवेदयन्परोक्षेणैव दानप्रकारं प्रशंसति Sy.

सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति ।
यस्त्वायन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति ॥२॥

सुगुरसत्। सुगुः[1]। भवतु[2]। सुहिरण्यः[3]। स्वश्वः[4]। महच्च[5]। अस्मै[6]। वयः[7]। इन्द्रः[8]। प्रयच्छतु[9]। यः[10]। त्वा[11]। आयन्तम्[12]। वसुना धनेन[13]। प्रातर्गामिन्[14]! अतिथे! कक्षीवन्[15]! मुक्षीजा[16] जालपाशिका[17] यथा[17] जालपाशिकया[18] कश्चित्। पक्षिणं निरुन्ध्यादेवं त्वाम्[19]। निरुणद्धि[20] स्वनय

---

१. गुरुः M. शोभनैर्बहुभिर्गोभिस्तद्वान् Sy. शोभना दृष्टादृष्टप्रयोजनसामर्थ्याद् गावो यस्य स सुगुः SKN.

२. भवति SKN.

३. ०ण्य P.D.M. सुष्ठु हितरमणीयैर्धनैस्तद्वान्भवतु Sy.

४. शोभनैरश्वैस्तद्वान् सन् Sy.

५. प्रभूतम् Sy. बृहच्च Dur.

६. राज्ञे प्रदात्रे Sy.

७. अन्नम् Sy; Dur. अन्ननामैतत्। अन्नम् SKN.

८. परमेश्वरो धर्मदेवता Sy. इन्द्रः SKN.

९. दधातु, ददातु। यतोऽयं राजाऽस्मै गोहिरण्याश्वात्मानि बहुसङ्ख्याकानि दत्तवान् अतस्तेषामभिवृद्धिप्रार्थना उचितैव Sy. ददाति च...सर्वाः सम्पदः SKN. ददाति Dur.

१०. यो राजा Sy.

११. यदि पथिकं मधुच्छया गन्तारं... त्वाम् Sy. त्वाम् SKN.

१२. गुरुकुलादागतम् Sy. सायं प्रातश्चाग्निहोत्रम्... आगच्छन्तम् SKN. आयन्तमध्वानम् Dur.

१३. अन्नसाधनेन गवादिधनेन Sy. हविर्लक्षणेन धनेन SKN. अन्नेन Dur.

१४. प्रातरागामिन्नतिथे पुत्र! Sy. प्रातरेवाग्निहोत्रार्थमागामिन्नित्यर्थः। ... अतिथेरतिथिस्थानीयस्य। दृष्टं चेदमग्नेरतिथित्वं मन्त्रान्तरे 'जुष्टो दमूना अतिथिर्दुरोणे' इति SKN. स हि प्रातः प्रातरन्यानि गृहाण्यभ्येति तेनैवमामन्त्र्यते। ...यथा ह्यतिथिरध्वगो भवति स पतन् क्षुधितोऽन्नसंयोगेन कस्यचिद् गृहिणो गृहेऽवतिष्ठत एवमेतत्स्यात् Dur.

१५. ०वान् P.

१६. मुक्षी० P. मुच्यमाना सती बन्धनं जनयतीति मुक्षीजा मृगपक्ष्यादिबन्धनी रज्जुः Sy. जालपाशिका। ...मुच्यते हि सा बध्यमानेषु पक्षिषु। आमुच्यन्ते वा पक्षिणः। पादे तन्यते वासौ प्रसार्यते पक्षिबन्धनपाशजालरूपा चेति मुक्षीजा SKN.

१७. जालपाशिका यथा omitted by D.

१८. तथा पाशको यथा यदि गन्तारं मृगपक्ष्यादिकम् Sy. यदि पक्षिणम् SKN.

१९. तथा मयाननुज्ञातमपि त्वां गमनं प्रतिबध्य गवादीष्टदानादिना यो राजा तोषयति स एवं भवत्विति Sy.

२०. निरुध्यै P. गमनस्य उत्कृष्टं बध्नाति। गतिं निरुणद्धीत्यर्थः Sy. यथा मुक्षीजया जालपाशिकया कश्चित्कुमारः पक्षिणं सिनुयात्। ...उदित्येष समित्येतस्य स्थाने...बन्धनं संरोधः। स चापि योऽभ्यर्चनापूर्वः स इहाभिप्रेतः। अनया रज्ज्वा हि बन्धः। सम्यग् बध्नाति। अत्यन्तं संरुणद्धीत्यर्थः SKN. प्राणांस्त्वयि सन्नियच्छतीत्यर्थः Dur.

इति कक्षीवानाशिषमाशास्ते[१][२] स्वनयाय[३]।[४]

आयमद्य सुकृतं प्रातरिच्छन्निष्टेः पुत्रं वसुमता रथेन।
अंशोः सुतं पायय मत्सरस्य क्षयद्वीरं वर्धय सूनृताभिः ॥३॥

आयमद्य[५]। गतवानस्मि[६]। अद्य[७]। सुकृतम्[८]। प्रातरेव[९]। धनमिच्छन्[१०]। इष्टेः[११]। पुत्रं[१२] स्वनयम्। वसुमता[१३]। रथेन[१४] सहितम्। अंशोः[१५] सोमलतायाः। सुतम्[१६]। मां पायय[१७]। मादयित्र्याः[१८]। क्षपितवीरं[१९] माम्। वर्धय[२०]। धनप्रदात्रीभिर्वाग्भिरिति[२१] वदन्निति शेषः।

उप क्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः।
पृणन्तं च पपुरिं च श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः ॥४॥

उप क्षरन्ति[२२]। उपेत्य क्षरन्ति[२३]। सिन्धवः[२४]। सुखस्य भावयित्र्यः[२५]। ईजानम्[२६]। च। यक्ष्य-

---

१. The passage beginning with प्रयच्छतु and ending with आशिषम् is omitted by M.
२. प्रशास्ते M. ३. ०यायं M.
४. पविर्गन्तुर्भवति। यत्पचते...। सुगुर्भवति। सुहिरण्यः। स्वश्वः। महच्चास्मै वय इन्द्रो दधाति यस्त्वा यन्तमन्नेन। प्रातरागामिन्नतिथे। मुक्षीजयेव पविमुत्सिनाति कुमारः। मुक्षीजा मोचनाच्च। शयनाच्च। ततनाच्च N. 5. 18, 19; SKN. II. 362.
५. अयः० P. ६. प्राप्तोऽस्मि Sy.
७. धतवास्मद्य M. अस्मिन्दिन इदानीम् Sy.
८. शोभनस्य कर्तारम् Sy.
९. पूर्वेद्युः प्रभातकाले, अयं धनं दत्तवान्... अत्र यद्यपि केवलं प्रातरित्येव श्रुतं न पूर्वेद्युरिति तथाप्यद्य आयमित्युक्तत्वादर्थात्पूर्वेद्युः प्रातरिति गम्यते Sy.
१०. त्वामिच्छन् प्राप्तुमिच्छन्। कदा द्रक्ष्यामीति कामयमानोऽहम् Sy.
११. इष्टस्येष्टसाधनस्य यागस्य वा Sy.
१२. पुत्र P. पुरु त्रातारम्...कर्तारमित्यर्थः Sy. पुत्रः पुरु त्रायते N.2.11.
१३. समृद्धधनवता Sy. १४. साधनेन। यद्वा तेन सहित इति सहार्थे तृतीया। किञ्च मदानीतेन समृद्धेन धनेन Sy.
१५. अंशुमतो वल्लीरूपस्य Sy. १६. अभिषुतं रसम् Sy. १७. आत्मानं पायय। इष्टसाधनं सोमयागं कुर्वित्यर्थः Sy.
१८. मदयि० M. ०त्र्याह P. मादनसाधनस्य सोमस्य Sy. मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः N.2.5.
१९. क्षपितं P. क्षयद्वीरं क्षियन्तो निवसन्तो वीराः पुत्रभृत्यादयो यस्य तं तादृशं त्वदिष्टसाधनबहुधनप्रदातारम् Sy.
२०. समृद्धं कुरु। पुत्रभृत्यादिवीरैर्यथा प्रवृद्धो भवति तथा कामयेत्यर्थः Sy.
२१. वाभि० D. प्रियसत्यात्मिकाभिर्वाग्भिः Sy. २२. Cf. BB. on TS. 1.8.22.4. ०न्ती P. सोमयागं फलप्रदर्शनेन स्तौति Sy. २३. स्रवन्ति। प्रीणयन्तीत्यर्थः Sy. २४. स्यन्दनशीलाः प्रस्नुतपयोधाराः Sy. सिन्धुः स्यन्दनात् N.9.26. २५. सुखभावयित्र्यः। मय इति सुखनाम। 'मयः स्यूमकम्' (Ngh. 3.6.) इति तन्नामसु पाठात् Sy.
२६. सोमयागमनुतिष्ठन्तम् Sy. इष्टवन्तं देवान्। यजेर्लिटः कानज्वेति कानच् BB.

माणम्[1]। च। पयस्विन्यः[2]। याचितृभ्यो धनानि प्रयच्छन्तम्[3]। दत्तवन्तम्[4]। च। तस्यान्नमिच्छ[5][6]-मानाः। उदकधाराः[7]। सर्वतः[8]। उपक्षरन्ति[9][10]।

**नाकस्य पृष्ठे अधि तिष्ठति श्रितो यः पृणाति स ह देवेषु गच्छति।**
**तस्मा आपो घृतमर्षन्ति सिन्धवस्तस्मा इयं दक्षिणा पिन्वते सदा ॥५॥**

नाकस्य पृष्ठे[11]। स्वर्गस्य[12]। उपरि[13]। तिष्ठति[14]। श्रितः। यः। प्रगच्छति[15]।

---

१. पक्ष्य इति प्रणति कुर्वन्तञ्च। न केवलमीजानमपि तु पक्ष्य इत्यध्यवसितवन्तमपि Sy. अचिराद्यक्ष्यमाणं यष्टुं कृताध्यवसायमिति BB.

२. प्रीणयित्र्यो गावः।...नच पूर्वस्यामुषि सोमं पिबेत्युक्तत्वात्सर्वेषां सोमयागानामग्निष्टोमात्मकज्योतिष्टोमस्य प्रकृतस्य ज्योतिष्टोमेन स्वर्गकामो यजेतेति स्वर्ग एव फलत्वेन श्रुतो न गवादिकमिति वाच्यम्। स्वर्गवद् गवादिकामनयापि सोमयागस्य कर्तुं शक्यत्वात्। न केवलं सोमयागमनुतिष्ठतामेव महत्फलम्, अपितु सुकृतसाधनानि कर्मान्तराण्यधितिष्ठतामपि महत्फलमस्त्येवेति दर्शयति Sy. देवान्प्रीणयत्यः (प्रीणयन्त्यः) BB.

३. यापितृ० P.D.

४. पितॄन्प्रीणयन्तम् Sy. श्राद्धेन पितॄन्प्रीणयन्तम्। पृ प्रीतौ, शतृ च BB.

५. प्रीणनशीलमिष्टवातारं, प्राणिनः सर्वदा प्रीणयन्तम् Sy. पितॄणां प्रीणनशीलं च न पृणन्तमेव। आदृगमहन इति किन्प्रत्ययः। न केवलमीजानं यक्ष्यमाणमेव, अपितु पृणन्तं च पपुरिं चेति। प्रासङ्गिकी वृत्तप्रशंसा, इष्टापूर्तकारिणां प्रशंसनात्। तद्वते कर्मण्यस्य विनियोगो द्रष्टव्यः BB.

६. इच्छन्तः is suggested for इच्छमानाः
अन्नमिच्छन्त्योऽन्नसमृद्धिहेतवः Sy.

अथोऽन्नं तदिच्छन्त्यः। अन्नयुक्ता इत्यर्थः। 'क्याच्छन्दसि' इत्युप्रत्ययः BB.

७. घृतस्य धाराः। यद्वा घृतकुल्याः Sy. काः पुनस्ता इत्याह...अविच्छिन्नाः प्रवाहा यथोक्तस्वभावाः BB.

८. सर्वाभ्यो दिग्भ्यः BB. ९. प्राप्नुवन्ति प्रीणयन्तीत्यर्थः Sy. यथोक्तलक्षणान्पुरुषानुपक्षरन्ति। अपि चोपयन्ति... सर्वाभ्यो दिग्भ्य उपागच्छन्ति BB.

१०. VM. ignores च

११. The verse is cited by Skandasvāmin in his commentary on (N.1.5.) 'अह इति च ह इति च विनिग्रहार्थीयौ।' I. 58. सोमयागप्रसङ्गेन सामान्यतो दानमेतदादिभिस्त्रिभिः प्रशंसति। यद्वा सोमस्यैव स्तुतत्वाद्दक्षिणाशब्दस्य याग एव प्रसिद्धत्वाच्च आ सूक्तपरिसमाप्तेः सोमयाग एव प्रस्तूयते Sy.

१२. कमिति सुखनाम। तद्विरुद्धमकं, न विद्यतेऽकं दुःखं तत्साधनं पापं वेति नाको द्युलोकः ...तस्य Sy. नाको द्यौस्तस्य SKN.

१३. उन्नत उपरिदेशे Sy. स्वर्गाख्ये SKN.

१४. अधि अधिकमाकल्पान्तं तिष्ठति। यद्वा, अधितिष्ठति, अधिष्ठाय प्रमुखो भूत्वा तिष्ठति Sy. अधिशब्दस्तु पादपूरण ऐश्वर्ये वा SKN. १५. हविरादिदानेन देवादीन्प्रीणाति Sy. देवान् (देवेभ्यः) ददाति SKN.

सः।[1] खलु।[2] देवेषु।[3] गच्छति।[4] तस्मै प्रदाने।[5] स्यन्दनशीलाः।[6] आपः।[7] स्वसारम्।[8] प्रेरयन्ति।[9] तस्मै। इयं[10] दीयमाना। दक्षिणा।[11] सदा[12] कामान्। दोग्धि[13] ।[14]

दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः ।
दक्षिणावन्तो अमृतं भजन्ते दक्षिणावन्तः प्र तिरन्त आयुः ॥६॥

दक्षिणावताम्। प्रदानवताम्।[15] एवास्मिँल्लोके।[16] इमानि।[17] चित्राणि[18] गृहशय्यासनानि दृश्यन्ते। दक्षिणावतामेव।[19] अमुष्मिंश्च लोके।[20] सूर्याः[21] प्रकाशं कुर्वन्ति बहुवचने न तात्पर्यम्.... .......भजन्ते।[22] दक्षिणावन्त एव। अमृतत्वम्।[23] भजन्ते।[24] दक्षिणावन्त एव। आयुः।[25] वर्धयन्ति।[26]

---

१. सः। खलु। देवेषु। गच्छति omitted by P.

२. ह इति प्रसिद्धौ Sy. एव ... अत्राप्यर्थान्तरस्यासम्भवात्पादपूरणस्य चाग्राह्यत्वात् हशब्दो विनिग्रहार्थीय एवशब्देन समानार्थ इत्युपपन्नम् SKN.

३. देवानां मध्ये SKN.

४. वर्तते, स्वयमेव देवो भवतीत्यर्थः Sy. देवो भवतीत्यर्थः SKN.

५. प्रीणयित्रे पुरुषाय Sy. तदर्थम् SKN.

६. स्यन्दनस्वभावाः SKN.

७. आप P. वृष्टिलक्षणाः SKN.

८. घृतं तेजोवत्सारम् Sy. घृतमुदकनामैतत्। तदुदकमात्मैकदेशभूतम् SKN.

९. गच्छन्ति। रसवत्यो भवन्तीत्यर्थः Sy. वर्षन्ति। ... पतन्तीत्यर्थः SKN.

१०. भूमिरपि Sy. इदम् SKN.

११. सस्यादिफलसम्पादनदक्षा सती Sy. दानम् SKN.

१२. सर्वकालम् Sy. नित्यमेव SKN.

१३. सेचयति। तोषयतीत्यर्थः। धातुर्जीवनसाधकान्योदकानि रुचिराणि समृद्धानि भवन्तीत्यर्थः Sy. पिपि सेचने। सिञ्चति प्रभूतान्कामान्वर्षति ददातीत्यर्थः SKN.

१४. VM. ignores अपि. SKN.I.58.

१५. बहुविधगोहिरण्यादिरूपदक्षिणाप्रदातृणाम् Sy. १६. इच्छब्द एवकारार्थः। तेषामेवार्थे Sy.

१७. भूमौ दृश्यमानानि Sy.

१८. चायनीयानि स्रक्चन्दनमणिमुक्तादिरूपाणि द्रव्याणि समृद्धानि भवन्तीति शेषः Sy.

१९. The passage beginning with प्रदानवताम् and ending with दक्षिणावताम् is omitted by P.

२०. द्युलोके Sy.

२१. सूर्यसम्बन्धिनो लोकास्तदनुगृहीता भोगा वा समृद्धा भवन्ति Sy.

२२. P. and D. do not give any indication that something is missing. भजन्ते also is omitted by P.D.

२३. जरामरणरहितं स्थानम्। ... यद्वा दानेनापहतपाप्मान आत्मानं विदित्वाऽमृतमविनाशं मोक्षम् Sy.

२४. सेवन्ते ... भजन्ते प्राप्नुवन्ति Sy.

२५. आयुः। वर्धं missing in M. प्रतिदीर्घमेवमायुष्यम् Sy.

२६. लभन्ते। प्रपूर्वस्तिरतिर्वर्धनार्थः। इत्, इति सर्वत्र सम्बध्यते Sy.

मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः ।
अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभि सं यन्तु शोकाः ॥७॥

मा पृणन्तः[1]। दरिद्रेभ्यः प्रयच्छन्तः[2]। दुर्गतिम्[3]। पापं च। मा गमन्[4]। मा च। ते[5] जीर्णा भूवन्[6]। प्राज्ञाः[7]। सुकर्माणः[8]। अन्यः[9]। कः[10]। चित्। एषाम्[11]। परिधिः[12]। अस्तु, यो[13] दुरितानि परिदधाति निरुणद्धि पुरुषान्[14] स परिधिः। अप्रयच्छन्तमेव[15]। दुरितादयः[16]। आभिमुख्येन। सङ्गच्छन्तामिति[17] कक्षीवतः प्रतिजिघृक्षोः[18] स्वनयमभिगच्छतो वचनानीति[19]।

I.126.

अमन्दान्त्स्तोमान्प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य ।
यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥१॥

अमन्दान्त्स्तोमान्। सूक्तेनानेन दत्तानि धनान्यवयवशो निर्दिशति[20]—अनल्पाः[21]।

---

१. वृणन्तः P.
२. देवादीन्हविरादिना प्रीणयन्तः Sy.
३. दुष्टं यथा भवति तथा प्राप्तं दुःखम् Sy.
४. ०गम P.
मा प्राप्नुवन् Sy.
५. न केवलं दातार एव Sy.
६. जरया न जीर्णा भवेयुः Sy.
७. अपि तु सूरयो देवानां स्तोतारो विद्वांसः Sy.
८. शोभनकृच्छ्रचान्द्रायणादिनियमवन्तोऽपि मा जारिषुः Sy.
९. तेभ्योऽन्यो यः कोऽपि पुरुषः Sy.
१०. कि M.
११. तेषां दातॄणां स्तोतॄणां वा Sy.
१२. पापस्य परितो धारकः ... यद्वाऽन्यो यः कश्चन पापदेवस्तेषां परिधिस्थानीयो व्यवधायकोऽस्तु। यथाग्नेः परिधिः स्वयं रक्षःप्रभृतिभिर्बाध्यमानः स्वान्तर्हितमग्निं रक्षति तद्वत्। अथवाऽन्यो धर्मविशेषस्तेषां परिधिः परिधानमस्तु कवचस्थानीयोऽस्तु Sy.
१३. परिधिः। अस्तु यो missing in M.
१४. वृषान् P.
१५. अप्रीणयन्तमदातारम् Sy.
१६. दूरिदया P. चित्तपीडास्तत्साधनाः पाप्मानः Sy.
१७. सम्यक् प्राप्नुवन्तु। वयं सुखिनो भवेमेत्यर्थः Sy. १८. ०क्षो D.
१९. Ms. D. puts the figure ॥१२५॥ here to indicate the end of one hundred and twentyfifth hymn. No such number is given in P. and M.
२०. निशाति P. निदि० D.
२१. अल्पाः D. अनल्पान् Sy. अमन्दानिति स्तोमविशेषणम्। तत्कथमुपपद्यते ? विषयविषयिणोरभेदात्। मन्दो बालिशो मूर्खः। तद्विपरीतोऽमन्दोऽबालिशोऽमूर्खः। तद्विषयाः पण्डिता वेदनीयास्तद्योग्यानेतान्। अल्पो वा मन्दः। अनल्पान्वा SKN.

स्तुतीः। अहं प्रज्ञया। प्रभरामि। सिन्धुदेशे। वर्तमानस्य। भाव्यपुत्रस्य स्वनयस्य। यः। मे। सहस्रम्। निरमिमीत। धनानां प्रसवान्। शत्रुभिरस्तीर्णः। राजा। प्रशंसाम्। इच्छन्।

शतं राज्ञो नाधमानस्य निष्काञ्छतमश्वान्प्रयतान्त्सद्य आदम् ।
शतं कक्षीवाँ असुरस्य गोनां दिवि श्रवोऽजरमा ततान ॥२॥

शतं राज्ञः। शतम्। राज्ञः। ईशानस्य। सौवर्णान् निष्कान्। शतञ्च। अश्वान्।

---

१. स्तोत्राणि तन्निष्ठबहुविधदानादीनां कीर्तनानि Sy. स्तोमान् SKN.

२. Omitted by P. D. प्रज्ञायाः M. मनीषया, प्रियातिशयबुद्ध्या Sy. तृतीयायाः सहयोगलक्षणाया अत्र लुक्। मनीषया स्तुत्यर्थप्रज्ञया वा। यावत्प्रज्ञमित्यर्थः SKN. स्तुत्या प्रज्ञया वा Dur.

३. प्रकर्षेण सम्पादयामि Sy. प्रापयामि SKN. उच्चारये Dur.

४. सिन्धुदेशे। यद्वा लक्षणया सिन्धुतीरे समुद्रतीरे Sy. सिन्धुर्नदी तत्सम्बन्धो वा देशः। अधिरुपरिभावे। सिन्धोर्नद्यास्तत्सम्बन्धस्य वा देशस्योपरि SKN.

५. अधिनिवसतः Sy. निवसतः SKN.

६. भावयव्यस्य। तत्पुत्रस्य स्वनयस्येत्यर्थः Sy. भावयव्यस्य। भावयव्यशब्दस्यायं छान्दसोऽक्षरद्वयलोपः। पर्यायान्तरं वा भावयव्यस्य राज्ञः SKN.

७. यो राजा Sy.

८. मदर्थम् Sy. मम प्रभूतस्वदानेन SKN.

९. तत्सङ्ख्याकान् Sy.

१०. सम्पूर्णधनप्रदानेन निर्मितवान् Sy. निर्मितवान् SKN. निर्मितवान्। बहूनां यज्ञानां यागोपकरणं दत्तवान् Dur.

११. सूयन्ते सोमा एष्विति सवाः सोमयागास्तान् Sy. स्तुत्यानित्यर्थः SKN. यज्ञान् Dur.

१२. बाळ्हतु० M. केनाप्यहिंसितः Sy. तुर्वतिर्हिंसाकर्मा। अत्यन्तशूरत्वादहिंसितपूर्वः केनचित्। त्वरतेर्वा, अत्वरमाणः SKN.

१३. श्रवः। सर्वैः श्रूयमाणां कीर्तिम् Sy. श्रूयत इति श्रवः कीर्तिः प्रशंसा SKN.

१४. आत्मन इच्छमानः कामयमानः Sy. तामात्मन इच्छन् SKN.

१५. यतोऽयमात्विज्याद्युपाधिना विना कीर्त्यर्थमेव बहुधनं प्रायावतस्तं स्तौमीत्यर्थः Sy.
अमन्दान्त्स्तोमानबालिशाननल्पान्वा। ... प्रभरे मनीषया मनस ईषया स्तुत्या प्रज्ञया वा। सिन्ध्वावधि निवसतो भावयव्यस्य राज्ञः। यो मे सहस्रं निरमिमीत सवानतूर्तो राजा तूर्ण इति वा। अत्वरमाण इति वा। प्रशंसामिच्छमानः N.9.10; SKN. III. 151. VM. ignores अधि।

१६. शतसङ्ख्याकानि। शतं सहस्रमित्यपरिमितवचनः। अपरिमितान् Sy.

१७. स्वतेजसा दीप्यमानस्य स्वनयस्य Sy.

१८. ईशान० P.D. नाधमानस्य स्वीकर्तव्यमित्युर्व्यर्थयाचमानस्य Sy.

१९. सौपर्णा० P.

२०. आभरणविशेषान्। इयत्ताविशेषविशिष्टानि वा सुवर्णानि Sy.

२१. अध्वगमनसमर्थान्हयान् Sy.

शुद्धवर्णान्[१]। सद्य एव[२]। अहमादम्[३], अदिः प्रतिग्रहकर्मा। कक्षीवान्। प्राशस्य[४]। गवाम्[५]। शतं चादत् स्वनयस्त[६]। दिवि[७]। कीर्तिम्। जरया[८] वर्जिताम्। विस्तारितवान्देवेषु[९]।

**उप॑ मा श्या॒वाः स्व॒नये॑न द॒त्ता व॒धूम॑न्तो॒ दश॒ रथा॑सो अस्थुः।**
**ष॒ष्टिः स॒हस्र॒मनु॒ गव्य॒माग॒ात्सन॑त्क॒क्षीवाँ॑ अभिपि॒त्वे अह्ना॑म् ॥३॥**

उप मा श्यावाः। भूयो भूयः सञ्चरणाच्छ्यावर्णाः[१०]। स्वनयेन। दत्ताः[११]। वधूभिरधिष्ठिताः[१२]। दश[१३]। रथाः। माम्। उपस्थिताः। तथा[१४] गोषु[१५] भवम्[१६]। षष्ट्यधिकं[१७] सहस्रं च। मामन्वगात्[१८]। तदेतत्[१९] कक्षीवान्[२०]। अभजत्[२१]। अह्नाम्[२२]। अभिप्राप्तौ[२३] प्रातः[२४]।

**च॒त्वा॒रिं॒शद्द॑शरथस्य॒ शोणाः॑ स॒हस्र॒स्याग्रे॒ श्रेणिं॑ नयन्ति।**
**म॒द॒च्युतः॑ कृश॒नाव॑तो॒ अत्या॑न्क॒क्षीव॑न्त॒ उद॑मृक्षन्त प॒ज्राः ॥४॥**

चत्वारिंशत्। दश रथाः[२५] यस्मिन् सङ्घे[२६] स[२७] दशरथः[२८] प्रत्येकं चतस्रः[२९] शोणवर्णा[३०] अश्वा

---

१. शुद्धान्। लक्षणोपेतान् Sy.
२. प्रार्थनानन्तरमेव Sy.
३. एवमाद० P. D. आत्तवानस्मि। स्वीकृतवानस्मीत्यर्थः... आत्तवान् Sy.
४. धनानां निरसितुर्दानशीलस्य Sy.
५. पुङ्गवानां बलीवर्दानामित्यर्थः। उत्तरमन्त्रे स्त्रीगवीनामित्यभिधानात् Sy.
६. एवम्प्रदाता राजा Sy.
७. द्युलोके Sy.
८. जरा P. शाश्वतीम् Sy.
९. गवादिप्रतिगृहीताहं स्वर्गे कीर्तिमकरवमित्यर्थः Sy. १०. श्यामव० M. ०र्णा P. तद्वर्णाश्वैर्युक्तत्वाच्छ्यावाः Sy.
११. स्वनयेना नां प्रसवान् शत्रुभिर्दत्ताः P.
१२. अधितिष्ठिताः D. आच्छाभिर्वधूभिस्तद्वन्तः Sy. १३. एतत्सङ्ख्याकाः Sy.
१४. ०थ P. १५. गेषु P. गव्यशब्दो गोसमूहवाची... गवां समूहः Sy.
१६. Omitted by P.D.
१७. ०ष्ठ्य० M.
१८. मा स (म) न्व० M. अनु... आगतः Sy. १९. तत्सर्वम् Sy.
२०. आत्मानं परोक्षेण ब्रवीति। तत्सर्वं प्रतिगृह्यायं कक्षीवान्... स्वीकृतं रथवध्वादिकं स्वपित्रे समर्पयति स्वयं वा स्वीकरोति Sy.
२१. अभजदह्नामभिः M. दिवसानां मध्ये Sy.
२२. अभिपित्वे सन्निहितेऽह्नि...। अभिपित्वशब्द आसन्नकालवाची प्रपित्वशब्द इतिवत्। स च 'प्रपित्वेऽभीक इत्यासन्नस्य' (N.3.20.) इति यास्केनोक्तत्वादासन्नवचनः। उपसर्गभेदेऽप्यर्थाभेदः Sy.
२३. प्राप्तः M.
२४. VM. ignores प्रा।
२५. दशरथस्य M. २६. संघे P.D.
२७. Omitted by P. M.
२८. ०र्थ D. दशसङ्ख्याकरथवतः Sy.
२९. चत्वारिंशत्, एकैकस्य रथस्य चतुष्टये सति दशरथानां मिलित्वा चत्वारिंशदश्वा भवन्ति... एकैकं रथं चत्वारश्चत्वारः पङ्क्त्याकारेण वहन्तीत्यर्थः Sy.
३०. शोणवर्णोपेता अश्वाः Sy.

भवन्ति तांश्च[1]। अग्रे[2]। गवां सहस्रस्य[3]। श्रेणिम्[4]। नयन्ति[5]। मदस्य च्यावयितृन्[6]। हिरण्मयालङ्कारान्[7]। अश्वान्[8]। पञ्चकुलजातः[9]। कक्षीवान्[10]। प्रतिगृहीतान् पृष्ठे सम्ममर्श[11]।

**पूर्वामनु प्रयतिमा ददे वस्त्रीन्युक्ताँ अष्टावरिधायसो गाः ।**
**सुबन्धवो ये विश्याइव व्रा अनस्वन्तः श्रव ऐषन्त पज्राः ॥५॥**

पूर्वामनु[12]। शतं राज्ञ इत्यादिकम्। प्रदानं[13] स्वनयात्[14]। युष्मदर्थम्। अनुक्रमेण[15]। प्रतिगृहीतवानहमस्मीति[16] ज्ञातीन्[17]प्रत्याह। त्रीन्। युक्तान्[18] रथान्। अष्टौ च। गाः। अभिगन्तॄणां[19] मनुष्याणां धारकाः[20]।

---

१. तेऽपि Sy.
२. पुरस्तात् Sy.
३. सहस्रसङ्ख्याकानुचरोपेतस्य कक्षीवतो गोयूथसहस्रस्य वा Sy.
४. सहस्रश्रेणीयं P.D. पङ्क्तिमाश्रित्य ... श्रेणीभावम् Sy.
५. रथानभिमतदेशं प्रापयन्ति। यद्वा अश्वनियुक्तान् रथान् ... नयन्ति प्रापयन्ति Sy.
६. मदस्राविणः। उद्वृत्तान् शत्रूणां मदस्य च्यावयितृन्वा Sy.
७. सुवर्णमयनानाभरणयुक्तान्। कृशनमिति हिरण्यनाम 'कृशनं लोहम्' (Ngh.1.2.) इति तन्नामसु पाठात् Sy.
८. सततगमनशीलानश्वान् Sy.
९. वज्र० M. वज्रकुलजातं P.D. धात्राज्ञप्यन्तः सन्तः Sy.
१०. कक्ष्या अश्वसम्बन्धिनी रज्जुः। 'कक्ष्या रज्जुरश्वस्य' (N. 2.2.) इति यास्केनोक्तत्वात्। ताभिस्तद्वन्तः। यद्वा, अङ्गिरसः पुत्राः सर्वेऽपि कक्षीवन्तः। अथवा कक्षीवदनुचराः सर्वेऽपि छत्रिन्यायेन कक्षीवन्तः Sy.
११. उदमृक्षन्त, अध्वश्रमजनितस्वेदापनयनायोत्कृष्टं मार्जयन्ति Sy.
१२. आनीतं धनं बन्धुभ्यो निवेदयन्नाह Sy.
१३. पूर्वां प्रयतिं पूर्वप्रदानम् Sy.
१४. स्वदयात् M.
१५. अनु तमनुसृत्य वक्ष्यमाणानि रथादीनि ... यद्वा पूर्वां प्रयतिं प्रदेयं रथादिकम्, अनु दानक्रमेणैव Sy.
१६. प्रतिगृहीतवानस्मि...स्वीकृतवानस्मि Sy.
१७. हे सुबन्धवः Sy.
१८. त्रीनष्टौ च युक्तान् चतुर्भिश्चतुर्भिरश्वैर्वा युक्तान् रथानिति शेषः। अत्र सङ्ख्यापृथङ्निर्देशो न विवक्षितः Sy.
१९. अरिभिरीश्वरैः Sy.
२०. ०णान्धकाराः P.
धारणीया बहुमूल्या असङ्ख्याता गावश्चाददे। अत्र वक्ष्यमाणानि पूर्वप्रतिगृहीतादधिकानीति युक्तम्। पूर्वमेव हि पित्रे निवेदितानां पुनर्बन्धुभ्यो निवेदनासम्भवात् 'वधूमन्तो दश रथासो अस्थुः' (ऋ० सं. १.१२६.३) इति दशानां रथानामुक्तत्वादत्र च त्रीनष्टावित्येकादशानां वक्ष्यमाणत्वाद्वधूविशिष्टानामन्येभ्यो दातुमनुचितत्वान्न्यान्यानीति युक्तम्। उक्तानामेवानुवदनपक्षे दशवधूयुक्ता रथा एको धनपूर्ण इति विवेकः। उक्तानामेव रथादीनां पुनरभिधानं प्रकृष्टत्वज्ञापनार्थम्। सर्वे ब्राह्मणा आगता वसिष्ठश्चागत इति—वत् Sy.

शोभनज्ञातयः[1]। ये। मनुष्येषु भवा इव। व्राताः[2]। पर्यटन्तो न संयुक्ताः[3]। अन्नम्[4]। ऐच्छन्त्[5]। पञ्चकुलजाताः[6]।

**आगधिता परिगधिता या कशीकेव जङ्गहे।**
**ददाति मह्यं यादुरी याशूनां भोज्या शता ॥६॥**

आगधिता[7]।

प्रादात् सुतां[8] रोमशां[9] नाम नाम्ना[10]
बृहस्पतिर्भावयव्याय[11] राज्ञे[12] ॥
ततस्तमर्थं हरिवान्विदित्वा
प्रियं सखायं स्वनयं दिदृक्षुः।
अभ्याजगामाशु शचीसहायः[13]
प्रीत्वार्चयत्तं[13] विधिनैव राजा[14] ॥
अभ्याजगामाङ्गिरसी च तत्र
हृष्टा तयोः सा चरणौ ववन्दे।
इन्द्रः सखित्वादथ तामुवाच
रोमाणि ते सन्ति न सन्ति राज्ञि[15] ॥
सा बालभावादथ तं[16] जगाद[15]
उपोप[17] मे दाक्र! परामृशेति[18][19]।

---

१. सुबन्धवः शोभना विद्यायोनिसम्बन्धिनो येषां ते तथोक्ताः। यद्वा शोभनबान्धवोपेताः परस्परमनुरागयुक्ता इत्यर्थः Sy.

२. विशः प्रजास्तत्र भवा विश्याः। वियन्त इति वा व्राताः। तकारलोपश्छान्दसः। विशां व्राता यथा परस्परमनुरागवन्तस्तथैतेऽपीत्यर्थः Sy.

३. न साधु० P.D. शकटवन्तो हविर्धानशकटोपलक्षितसोमयागवन्तः सन्तः Sy.

४. सर्वत्र श्रूयमाणां कीर्तिम् Sy.

५. इच्छन्ति, इच्छन्तु वा। तदर्थमादद इति शेषः Sy.

६. वज्र० P.D.M. अग्रवन्तोऽङ्गिरसः सन्तानप्रभवा ये सन्ति ते सर्वे सुबन्धवः Sy.  ७. अ० P.

८. प्र० P.  ९. ०शं P.

१०. Omitted by P.

११. ०र्भ० P.

१२. BD. III. 156[c.d.]

१३. सह ... विधि० M.

१४. BD. IV. I.  १५. BD. IV. 2.

१६. तत् D.

१७. ०दोपो० D. ०वोपप० P.

१८. जगादो ... पो मृशेति M.

१९. BD. IV. 3[a.b.]

आगधिता[1]। आभिमुख्येन शरीरेण मिश्रिता[2]। या। अङ्गैश्च परितो मिश्रिता[3]। कशीकेव[4]। अत्यन्तं पुमांसं[5] हस्ताभ्यां परिगृह्णाति[6], नकुलस्त्री कशीका[7]। यादुरी[8] स्त्री यदिरभिक्रमणकर्मा साभिक्रमणवती स्त्री[9]। मह्यम्। यशसाऽऽहर्तॄणां[10] पुत्राणाम्। भोगसाधनानि। शतानि। ददातीति यदा[11]

---

१. सम्भोगाय प्रार्थितो भावयव्यः स्वभार्यां रोमशामप्रौढेति बुद्धया परिहसन्नाह Sy. स स्वया भार्यया रोमशया सम्भुक्ष्व मामित्युक्तस्तामनयर्चया प्रत्याह। तेनेयमृक् चरूप? जायापत्यो वै ऋचौ संवादौ SKN.

२. आगधिता आ समन्ताद् गृहीता स्वीकृता ...यद्वा आगधिता आ समन्तान्मिश्रयन्ती। आन्तरं प्रजननेन बाह्यं भुजाविभिरित्यर्थः...पूर्वस्मिन्पक्षे पुरुषस्य प्राधान्यमुत्तरस्मिंस्तु योषित इति भेदः Sy. आगृहीता आमिश्रिता अवयवैर्गाढं परिष्वक्ता सतीत्यर्थः SKN. मैथुनसम्बन्धाच्छब्दसाम्याच्च 'गध्यतिर्मिश्रीभावकर्मा' (N. 5. 15.) इत्युपपद्यते Dur. गध्यं गृह्णातेः N. 5.15.

३. तथा परिगधिता परितो गृहीता। आदरातिशयाय पुनर्वचनम् Sy. सर्वतोऽन्तर्बहिश्च मिश्रिता, आलिङ्गनचुम्बनपुरस्सरं प्रक्षिप्तप्रजनना सानुरागं सम्भोगाय परिगृहीता च सतीत्यर्थः SKN. परिमिश्रीकृता। बाहुभ्यां मया परिष्वक्तेत्यर्थः Dur.

४. ०शि० P.D. अत्यागे दृष्टान्तः। कशीकेव। कशीका नाम सूतवत्सा नकुली। सा यथा पत्या सह चिरकालं क्रीडति न कदाचिदपि विमुञ्चति तथैषापि Sy. 'दिवे कशान्' [YV.24.26] इति हि श्रूयते। स हि नकुलप्रकारः। अश्वमेधे मन्त्रेषु प्रयोगदर्शनात्। कशाशब्दः पूतिकेशवचनम्। तस्मात् 'जातेरस्त्रीविषयात्'० [P. 4.1.63.] इतीकारः स्त्रीप्रत्ययः। पूतिकेशी कशीकेव। सा यथा पूतिकेशी सम्भोगकाले गृह्णीयात्तद्वत् SKN. सा हि नकुलजातिः ... सा यथा मदकाले प्रतिकशमतितरां परिष्वजति। स हि तस्याः परिष्वजनस्वभावः Dur.

५. Omitted by P.D.

६. ०ह्णति M. या जङ्गहेऽत्यर्थं गृह्णाति कदाचिदपि न मुञ्चति Sy.
तदत्र गमिः सामर्थ्याद् ग्रहणार्थः। गृह्णाति पूतिकेशीव परिष्वज्येत्यर्थः SKN. एवं या मां ... परिगृह्णाति बाहुभ्यां, परिगृह्य च ददाति Dur.

७. ०शि० P.D.

८. क या० D.M. तया० P.
यादुरित्युदकनाम। रेतोलक्षणमुदकं प्रभूतं ददातीति यादुरी। बहुरेतोयुक्तेत्यर्थः। Sy. यादुरित्युदकनाम। रो मत्वर्थे। रेतोलक्षणकेनोदकेन तद्वती। भूम्नि च मत्वर्थीयः। प्रभूतं रेतः धरन्ती। आविर्भूतस्नेहरसेत्यर्थः। ईकारश्छान्दसः SKN. आदरवती, अथवा यादसा रेतःसेकेन तद्वती। 'यादः' (Ngh. 1. 12.) इत्युदकनामसु पठितम् Dur.

९. Omitted by P.D.

१०. मह्यं...र्तॄणां M. याशूनां सम्भोगानाम्। यश इति प्रजनननाम। तत्सम्बन्धीनि कर्माणि याशूनि भोगाः। तेषां ... शतान्यसङ्ख्यातानि मह्यं ददाति Sy. याशुशब्दः सम्भोगे। सम्भोगानां शतानि च। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः SKN. मैथुनाख्यानां शतानि। बहुश इत्यर्थः Dur.

११. यदा seems to be unnecessary.

यदृचो[1]? भावयव्यरोमशयोर्दम्पत्योरेव संवादस्तदानीं प्राप्तयौवना या पुमांसमालिङ्गते सा[2] पुत्रजननयोग्या[3]।

**उपोप मे परा मृश मा मे दभ्राणि मन्यथाः ।**
**सर्वाहमस्मि रोमशा गन्धारीणामिवाविका ॥७॥**

उपोप मे[4]। त्वं[5] ममाङ्गानि[6]। उपपरामृश[7]। मा। मे[8]। अल्पानि[9] रोमाणि। मंस्थाः[10]। सर्वाङ्गा[11]। अहम्। अस्मि। रोमशा[12]। गन्धारयो[13] नाम जनपदास्तत्र[14] भवत्यूर्णा। यथा[15]। गन्धारीणां[16]

---

१. यदृचो P. D.
यदृचोः is suggested for यदृचो
२. स M. किञ्च भोज्या भोगयोग्यैवा Sy. सा भोज्या सा भोगार्हा सम्भोगयोग्या। त्वमत्यन्तबालत्वान्न तावदेवंरूपेत्यर्थः SKN. यैवंप्रकारा सा मम भोज्या, पत्नीत्यभिप्रायः Dur.
३. ०जननयोक्तथाविधेति P. D. यो... क्तः तथापि... M.
N. 5.15.; SKN. II. 349.
४. रोमशा नाम बृहस्पतेः पुत्री ब्रह्मवादिनी परिहसन्तं स्वपतिं प्रत्याह Sy.
भावयव्यमेव सा भर्तारं तेनानुपेयमाना ब्रवीति Dur.
५. तं P. D. M.
६. ०मांगनि P. भो पते! मे माम्। द्वितीयार्थे चतुर्थी Sy. राजन्!... मम Dur.
७. उपोप। द्वितीय उपशब्दः पादपूरणः। उपेत्य परामृश सम्यक् स्पृश। भोगयोग्यामवगच्छेत्यर्थः। यद्वा मे मम गोपनीयमङ्गमुपोप परामृश, अत्यन्तमान्तरं स्पृश Sy. उपगम्योपश्लिष्य च...परामृश, यः प्रवेशः पुरुषेण स्त्रियाः परामर्ष्टव्यः Dur.
८. परामर्शाभावशङ्कां निवारयति। मे मदङ्गानि रोमाणि Sy.
९. अल्पानि Sy. उत्तरत्र रोमश्रवणात् रोमाणि SKN.
अल्पकानि लोमानि Dur.
दभ्रमर्भकमित्यल्पस्य। दभ्रं दभ्नोतेः। सुदम्भं भवति N. 3. 20.
१०. मा मन्यथाः...मा बुध्यस्व Sy. मंस्था इत्यर्थः SKN. मा मन्यथाः। जानेऽहमेतद्यथाऽलोमिकाया उपगमः प्रतिषिद्धः Dur.
११. दस० P. यतोहमीदृशी, अतः सर्वा सम्पूर्णावयवास्मि Sy.
१२. अदभ्रत्वमेव विशदयति...बहुरोमयुक्ता Sy.
सर्वेष्वेवावयवेषु समोत्पन्नानि रोमाणि येषु स्त्रीणामुत्पद्यन्ते Dur.
उपस्थकक्षादिषु स्थानेषु रोमवती जातेत्यर्थः। अतः सम्भोगयोग्यां सतीं किं मामुपेक्षस इत्यर्थः SKN.
१३. ०वस्त० D. गन्धारा देशाः Sy.
१४. The passage beginning with गन्धारयो and ending with यथा is omitted by P.
१५. गा० P. तेषां सम्बन्धिनी Sy. गन्धारदेशजातानाम् Dur.

सम्बन्धिनी। अविकेति[1][2]।

I.127.

अ॒ग्निं होता॑रं मन्ये॒ दास्व॑न्तं॒ वसुं॑ सू॒नुं सह॑सो जा॒तवे॑दसं॒ विप्रं॒ न जा॒तवे॑दसम्।
य ऊ॒र्ध्वया॑ स्वध्व॒रो दे॒वो दे॒वाच्या॑ कृ॒पा।
घृ॒तस्य॒ विभ्रा॑ष्टि॒मनु॑ वष्टि शो॒चिषा॒जुह्वा॑नस्य स॒र्पिषः॑ ॥१॥

अग्निं होतारम्। परुच्छेपो[3] दैवोदासिः[4]।

तत्र शौनकः—

जागतौ प्रथमौ पादौ पादः षष्ठस्तथैव च।

अष्टकास्त्वितरे पादाः पारुच्छेपे तु प्रायशः[5]॥ इति

अग्निम्[6]।

---

१. अपिके० P. अविजातिरिव। तद्देशस्था अवयो मेषा यथा रोमशास्तथाहमस्मि। यद्वा गन्धारीणां गर्भधारिणीनां स्त्रीणामविकाऽत्यर्थं तर्पयन्ती योनिरिव। तासामाप्रसवं रोमादिविकर्तनस्य शास्त्रे निषिद्धत्वाद् योनौ रोमशा भवत्यतः सोपमीयते Sy. अविकानां मध्ये या सुष्ठु रोमशा भवेत्तथाहमस्मि Dur.

२. यतोऽहमीदृशी, अतो मामप्रौढां माऽवबुध्यस्वेत्यर्थः Sy. निःशङ्को मामुपगच्छेत्यभिप्रायः Dur. गन्धार इत्युत्तरापथे क्वचिद्देशाभिधानम्। अतो गन्धारीणां सम्बन्धिनीति तत्र जाताऽविका, उरणिका, सा ह्यतिशयसूक्ष्मदीर्घघनमृदुरोमा, सेव। अथवा पुंसः सकाशात् स्त्रियाभिगम्यमानत्वाद् गमिति गर्भ उच्यते, गं धारयतीति गर्भिणी स्त्री। अविका इत्यवतेः प्रीत्यर्थस्य, प्रीतिकरत्वादुपस्थ उच्यते। यथा गर्भिणीनामुपस्थो रोमशस्तद्वदित्यर्थः। स हि तासां समाचारो यद् गर्भिण्यः स्त्रियो रोमाणि नोत्खिदन्तीति SKN.; N. 3.20.; SKN. II. 189.

Ms. D. puts the figure ॥१२६॥ here to indicate the end of one hundred and twentysixth hymn. No such number is given by P. and M.

३. पुरु० P. ४. ०दासी: P. ५. Not found in BD. and RPR.

६. 'पुरीषवत्याः पूर्वामतिच्छन्दसं प्राच्यौ पुरीषसहिते भद्रा रातिर्वृत्रतूर्येऽवस्थिराग्निं ३ होतारमिति, (का० १७।१२।१६) अग्नेः पुरीषमसीति पुरीषशब्दवता मन्त्रेणोपहिता पञ्चम्यसपत्ना पुरीषवती तस्याः पूर्वामतिच्छन्दसामिष्टकामुपदधाति। भद्रा रात्रिर्वृत्रतूर्येऽवस्थिरेति ककुभां चतुश्चतुरक्षरसहितयाग्निं ३ होतारमित्यृचा। पुरीषवत्यतिच्छन्द इष्टके प्राग्लक्षणे पुरीषयुते च भवतः। अनयोरन्तः पुरीषावापः कार्य इति सूत्रार्थः। अतिच्छन्दा अवसानत्रिकोपेताः। छन्दांसि गायत्र्यादीनि सप्तातिक्रान्तातिच्छन्दाः। चतुष्षष्टयक्षरत्वादष्टिः। ककुभामक्षरैः सहातिधृतिः। यो देवो दानादिगुणयुक्तोऽग्निः Mah. सर्वासां देवसेनानामग्रण्यं यज्ञेष्वग्रं नीयमानं वा Sy. अतिच्छन्दा अष्टिरत्यष्टिर्वा। तमहमग्निम् U.

होतारम्[1]। स्तौमि[2]। दानवन्तम्[3]। वासयितारम्[4]। सहसः[5]। पुत्रम्[6]। जातप्रज्ञम्[7]। ब्राह्मणम्[8]।
इव। यः। ऊर्ध्वया[9]। देवानञ्चन्त्या[10]। ज्वालया[11]। सुयज्ञो[12] भवति। देवः[13] सः। घृतस्य[14]।

---

१. देवानामाह्वातारम् Mah. अस्मद्यागं प्रति देवानामाह्वातारम्। यद्वा होमनिष्पादकं होतारम् Sy.
जुहोतेर्होतेत्यौर्णवाभः N.7.15. अग्निमद्य होतारमवृणीत TB. 2.6.15.1.

२. मन्ये जानामि Mah. अग्निं होतारं मन्ये। एवं प्रतिविशेषणं मन्य इति सम्बन्धः। यद्वा यागनिष्पत्तेरेवापेक्षितत्वादेतदेव विधेयविशेषणम्। इतराणि वक्ष्यमाणविशेषणानि स्तुतिपराणि Sy. जानामि U. मन्यतिरर्चतिकर्मा, अर्चामि। स्तौमीत्यर्थः SKN.

३. दातृ दाने, दातारम् Mah. अतिशयेन दानवन्तम् Sy. दानवन्तम् U. प्रशस्यं धनवन्तं वा SKN. दातृतमम् Dur.

४. ०सविता० M. वासयितारम् Mah., U. सर्वेषां निवासहेतुम् Sy. वसुमिव SKN. वासयितारं सर्वस्य जगतः Dur. ५. सहस्पुत्रम् M. बलस्य Mah., Sy., U., Dur.

६. पुत्रं बलेन मथ्यमानत्वात् Mah. पुत्रम्। अग्निर्मन्थनकाले बलेन मथ्यमान उत्पद्यत इति पुत्रत्वमुपचर्यते Sy. पुत्रम् U., SKN., Dur.

७. उत्पन्नप्रज्ञम् . . . जातसर्वशास्त्रज्ञानम् Mah. जातानां वेदितारं, जातप्रज्ञं जातबलं वा Sy. जातप्रज्ञानम् U., Dur. जातधनम् SKN. जातवेदाः कस्मात्। जातानि वेद। जातानि वैनं विदुः। जाते जाते विद्यत इति वा। जातवित्तो वा। जातधनः। जातविद्यो वा जातप्रज्ञानः N .7.19.

८. न इवार्थे। विप्रं ब्राह्मणमिव स्थितम् Mah. जातविद्यं मेधाविनं ब्राह्मणमिव। तं यथा बहु मन्यन्ते तथा त्वामपि मन्ये। स्तौमीत्यर्थः Sy. विप्रमिव जातप्रज्ञानम् U. विप्रं न मेधाविनमिव। कम् ? सामर्थ्यात् कञ्चिद् ब्राह्मणं जातवेदसं जातविद्यम् SKN. यथा हि कश्चित् कञ्चन मनुष्यं समानपृष्ठोदरपाणिपादं विप्राप्तज्ञानं यथावज्जानीयादेवमहमग्निं यथावज्जाने Dur.

९. उन्नतया Mah. उन्नतया, उत्कृष्टया Sy. ऊर्ध्वया ज्वालया U. अनावृत्तया वैश्वानर्या धिया। अभिप्रस्थयेत्यर्थः SKN.

१०. देवान्प्रत्यञ्चति गच्छति देवाची तया देवान्प्रति गतया Mah. देवान् पूजयन्त्या देवान्प्रत्यक्तया वा Sy. देवान्प्रत्यञ्चत्या देवान्प्रति गतया U. उत्कृष्टत्वाद्देवान्प्रत्यञ्चितया सुगत्या SKN. कल्पितया...देवान्प्रत्यञ्चितया गत्या Dur.

११. कृपा कृप्यत इति कृप् तया कृप्तया समर्थया Mah. कृपया सामर्थ्यलक्षणया Sy. कृपा कल्पितया U. वा स्तुत्या, तृतीयाश्रुतेः स्तूयमान इति शेषः SKN. सामर्थ्याख्यया Dur. देवान्प्रत्यक्तया कृपा (कृप् कृपतेर्वा कल्पतेर्वा) N. 6.8.

१२. शोभनयज्ञवान् यज्ञं सम्यग् निर्वहन् Sy. साधुयज्ञः U. दैव्यहोतृत्वे वर्तमानत्वादनुष्ठेयतया शोभनोऽध्वरो यस्य सुयज्ञः SKN. शोभनयज्ञः Dur.

१३. यो देवो दानादिगुणयुक्तः Mah. उक्तगुणविशिष्टो यो देवः Sy. यो देवो दानादिगुणयुक्तः U. दानादिगुणः SKN.

१४. विलापनेन दीप्तस्याज्यस्य Sy. घृतस्य Mah., U. आहुत्यर्थस्य SKN.

विभ्रश्यमानज्वालया[1]। अनुकामयते[2]। हूयमानस्य[3]। सरणशीलस्य[4]। अनुपात्तानि पदानि पूरणानि। यास्कस्त्वाह—'अभ्यासे भूयांसमर्थं मन्यन्ते। यथाऽहो दर्शनीयाऽहो दर्शनीयेति[5]। तत्परुच्छेपस्य[6] शीलमिति[7]।[8]

**यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां विप्र मन्मभिर्विप्रेभिः शुक्र मन्मभिः।**
**परिज्मानमिव द्यां होतारं चर्षणीनाम्।**
**शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः ॥२॥**

यजिष्ठं त्वा। यष्टृतमम्[9]। त्वाम्[10]। यजमानाः[11]। हुवेम[12]। प्रशस्यम्[13]। अङ्गिरसाम्[14]। प्राज्ञ[15]!

---

१. ०भ्रत्यमा० D. विभ्रश्यमानम्। is suggested for विभ्रश्यमान० शोचिषा ज्वालया...विभ्राष्टि विभ्रंशपातम्...शोचिःशब्दस्य स्त्रीत्वमार्षम् Mah. विभ्राष्टि विशेषेण भ्राजमानम् ...तवाज्यं शोचिषा ज्वालया Sy. विभ्रंशपातम्...दीप्त्या U. विभ्रंशम्... ज्वालालक्षणेन जिह्वासमूहेन लेलिह्यमानमित्यर्थः SKN. विभ्रंसनम् Dur.

२. अनुवष्टि अन्विच्छति Mah. अनु स्वयमपि ... वष्टि कामयते, स्वीकरोतीत्यर्थः Sy. अनुकामयते U. 'वश कान्तौ' विपिक्लेषेण कामयते SKN. आहुतिप्रक्षेपम्...अनुकामयते Dur.

३. भू (हू) य० M. समन्ताद्धूयमानस्य Mah. आ समन्ताद्धूयमानस्य Sy. आहूयमानस्य U. यथाविधि अन्वाहूयमानस्य SKN. उपरि हूयमानस्य Dur.

४. Omitted by P. सर्पिषः सर्पतीति सर्पिस्तस्याग्न्यङ्गेषु प्रसरणशीलस्य Mah. सरणशीलस्य Sy. घृतस्य U. आज्यविशेषणमेतत्। सर्पणस्वभावस्य विलीनस्याभिव्ययणेन संस्कृतस्येत्यर्थः SKN. सर्पणशीलस्य Dur.

५. तमहमग्निं होतारं मन्य इति सम्बन्धः U. यमग्निमहमेवं जाने अयमेवं गुणयुक्तः स इदं नामास्माकं करोत्वित्यभिप्रायः Dur.

६. इर्गीनियोहो० P.

७. N.10.42.

८. VM. explains जातवेदसम् once only. This stanza occurs in YV. 15.47.; N.6.8; SKN. II.420.

A fragment देवो देवाच्या कृपा is quoted by Yāska in N.6.8. Both Skanda and Durga quote and explain the stanza in full, *loc. cit.*

९. अतिशयेन यष्टृतमम् Sy.

१०. त्वा M.

११. वयं यष्टारः Sy.

१२. आह्वयामः। यतो वयं यजमाना यतश्च त्वं यजिष्ठोऽतो हुवेमेत्यभिप्रायः Sy.

१३. ज्येष्ठम् Sy.

१४. ०सोः M. अङ्गिरोगोत्रोत्पन्नानां मध्ये ...। यद्वा, अङ्गाराणां मध्ये ज्येष्ठं ज्वालायुक्तत्वात्...'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (AB. 3.34.) इति श्रुतेः Sy.
अङ्गारेष्वङ्गिराः। अङ्गाराः (अङ्कनाः) अञ्चनाः N. 3. 17.

१५. मेधाविन् Sy.

...भि[1]:। मेधाविभि[2]:। दीप्त[3]! परितो[4] गन्तारमिव। आदित्यम्[5]। होतारम्[6]। यजमानानाम्[7]। ज्वालाकेशम्[8]। वर्षितारम्। यम्[9]। इमाः। सर्वविशः[10] स्तोत्रैः प्रगच्छन्ति तं मदीयास्त्व। प्रगच्छन्तु[11]। कामानामाकर्षणार्थमिति[12]।

**स हि पुरू चिदोजसा विरुक्मता दीद्यानो भवति द्रुहंतरः परशुर्न द्रुहंतरः ।**
**वीळु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरम् ।**
**निष्षहमाणो यमते नायते धन्वासहा नायते ॥३॥**

स हि पुरु[13] चित्। सः। हि[14]। बहु[15]। अपि[16]। विरोचनवता[16]। बलेन[17]। दीप्यमानः। भवति[18]। कुठारः[19]। इव। दृढम्[20]। अपि। यस्य। सङ्गतौ[21]। श्रूयते[22]। जलानीव[23] दह्यमानम्। यत्। स्थिरं[24]

---

१. प्राज्ञनेः P. प्राज्ञं भिः D. प्राज्ञभिः M. The reading seems to be प्रज्ञाभिः, which will explain मन्मभिः।
मननसाधनैः ... मन्मभिर्मन्त्रैः Sy.

२. विशेषेण प्रीणयितृभिः ... यद्वा विप्रेभिर्मेधाविभिर्ऋत्विग्भिर्मन्मभिर्मन्त्रैश्च सहिता वयमिति सम्बन्धः Sy.

३. ०प्ति D. ०भिर्वि० P.
दीप्तज्वालाग्ने ! Sy.

४. स्वदाह्वानानन्तरं परिक्मानं परितो गच्छन्तम् Sy.

५. त्व० P. द्यामिव सूर्यमिव Sy.

६. देवानामाह्वातारम् Sy.

७. मनुष्यनामैतत् । मनुष्याणां यजमानानामर्थे। यद्वा चर्षणीनां पूर्वं मनुष्याणामेव सतां पश्चाद्यागादिसाधनेन देवत्वमापन्नानां देवानामाह्वातारम् Sy.

८. केशवदवस्थिताग्रज्वालोपेतम् Sy.

९. Omitted by P.D. एवंरूपं यं त्वाम् Sy.

१०. विशस्त्वामेव निविशमाना इमा विशो यजमानरूपाः प्रजाः Sy.

११. प्रा० P. प्रावन्तु प्रकर्षेण प्रीणयन्तु Sy.

१२. जूतये स्वर्गाद्यभिमतफलप्राप्तये. . .तादृशं त्वां हुवेमेति सम्बन्धः Sy. V.M. explains मन्मभिः। विशः once only

१३. पुरु P.D.

१४. एव। पूर्वं स्तुत एवाग्निः Sy.

१५. ब्रत्यधिकमेव Sy. १६. ०वनता P.D. वनवात M. विशेषेण रोचनवता Sy.

१७. ओजसा ज्वालारूपेण बलेन Sy.

१८. द्रुहन्तरो द्रोग्धॄणां तरिता निवारयिता भवति। अस्मासु द्रोहं कुर्वतां शत्रूणां हिंसको भवतीत्यर्थः Sy.

१९. तत्र दृष्टान्तः। द्रुहन्तरो द्रोग्धॄणां छेदनाय प्रयुक्तः...परशुरिव। स यथा-ऽमोघं हिनस्ति तथायमपि Sy.

२०. पाषाणादिकम्... वीळ्विति दृढनाम। 'वीळु स्थीलम्' (Ngh. 2.9.) इति तन्नामसु पाठात् Sy. २१. संयोगे Sy.

२२. गच्छेत्। क्षीयेत Sy. २३. ०नीव D. तत्र दृष्टान्तः। वनेव उदकमिव। उदकं यथाग्निसंयोगे शुष्यति तथेत्यर्थः Sy.

२४. यत्त्व पर्वतादि स्थिरमचलितं तदपि श्रुवत् ... अत्यन्तदृढं स्थिरमपि हिनस्ति, अस्मद्द्रोग्धारं शत्रुं हिनस्तीति किमु वक्तव्यमित्यभिप्रायः Sy.

भवति। सोऽयम[1]भिभवन्[2] दोग्धॄन्[3]। नियच्छति[4]। नच। तेभ्यो गच्छति[5]। धनुषाऽभिभवञ्[6] शत्रून्। न। पलायते[7][8]।

दृळ्हा चिदस्मा अनु दुर्यथा विदे तेजिष्ठाभिररणिभिर्दाष्ट्यवसेऽग्नये दाष्ट्यवसे ।
प्र यः पुरूणि गाहते तक्षद्वनेव शोचिषा ।
स्थिरा चिदन्ना नि रिणात्योजसा नि स्थिराणि चिदोजसा ॥४॥

दृढा चिदस्मै। सारवन्ति। अप्यन्नानि[9]। अस्मै[10]। अनु[11]। दुः। यथा[12]। अतिथये[13] विदुषे[14]। दीप्ततरैः[15] सह। अस्मा[16] अग्नये। हविः प्रयच्छति[17]। रक्षणाय[18]। यः[19]। पुरूण्यपि[20] बलानि। प्रगाहते[21]। तनूकरोति[22] च। वृक्षानिव[23]। तेजसा[24]। स स्थिराणि[25]। अपि। आत्मनोऽन्नानि[26] काष्ठादीनि। विनाशयति[27]।

---

१. अयमग्निः Sy.
२. निःशेषेणाभिभवन् Sy.
३. दो P. शत्रून् Sy.
४. नियति P. उपरमते शत्रुषु मध्ये क्रीडति तानेव नाशयति Sy.
५. तथा कुर्वन्नायते न गच्छति, शत्रोः सकाशान्न पलायते Sy.
६. तत्र दृष्टान्तः . . . धनुषा शत्रूनभिभवतीति धन्वसहा धानुष्कः। . . . स यथा शत्रोरभिमुखं विध्यति न पलायते तद्वदित्यर्थः। यद्वा दृढधनुर्वहनक्षमो धन्वसहः। अस्मिन्पक्षे पचाद्यच्। . . . दृढधन्वा सन् Sy. ७. नायते न चलति Sy.
८. VM. ignores द्रुहंतरः। द्रुहंतरः।
९. अपि omitted by P. D. दृळ्हान्येव सारवन्ति हवींषि Sy.
१०. अग्नये Sy. ११. अनुक्रमेण प्रतिमन्त्रं . . . ददति . . . यजमाना ददति Sy.
१२. अनुर्यथा॰ P.D.M.
१३. ॰वितये M.
१४. दाने दृष्टान्तः। यथा . . . विदुषे परमार्थदर्शिने उत्कृष्टानि धनानि वितरन्ति दानशीलाः। यद्वाऽयमग्निर्यथा विदे विन्दते स्वातिरिक्तं हविर्देवेभ्यो दातुं लभते स्वीकरोति तथा दुरिति Sy.
१५. तेजिष्ठाभिररणिभिरत्यन्ततेजोयुक्तैर्मार्गैर्यज्ञादिरूपैर्वाष्टि पूजितः सन्स्वर्गादिकं . . . यद्वा तेजिष्ठाभिरतिशयेन तेजोवद्भिररणिभिर्गमनैः Sy.
१६. दीप्तस्संहास्मान् P. दीप्तस्सहास्मान् D. १७. ददाति Sy.
१८. अवसे तद्रक्षणाय . . . . इतरदेवानुद्दिश्य यजमानेन दत्तं हविरवसे तेषां स्वीकाराय दाष्टि। अयमग्निर्ददाति नयति। किञ्चाग्नय इतरदेवताप्रदानसमयेऽपि यजमानोऽग्नयेऽग्निप्रीतये दाष्टि प्रथमं ददाति। किमर्थम्। अवसे रक्षणार्थम्। यद्ययमतृप्तः स्यादितरेभ्यो दत्तमपि स्वयं स्वीकुर्यात् तस्मादग्नये प्रयाजादिरूपेण ददातीत्यर्थः Sy. १९. योऽग्निः Sy.
२०. बहूनि सामर्थ्याद्यजमानधनादीनि Sy.
२१. प्रविशति Sy.
२२. प्रविश्य च दाह्यादिरूपया ज्वालया . . . तनूकरोति नाशयतीत्यर्थः Sy.
२३. तत्र दृष्टान्तः. . .वृक्षादिसमूहानि वनानि यथा प्रविश्य तक्षति दहति तद्वेत्यर्थः Sy.
२४. ओजसा तेजोरूपया ज्वालया Sy.
२५. स्थिराणि कठिनानि Sy.
२६. अन्नानि व्रीह्यादीनि Sy.
२७. नितरां रिणाति गच्छति पचतीत्यर्थः Sy.

बलेन[1]। प्रकारान्तरेणाह—नि। स्थिराणीति[2][3]।

**तमस्य पृक्षमुपरासु धीमहि नक्तं यः सुदर्शतरो दिवातरादप्रायुषे दिवातरात्।**
**आदस्यायुर्ग्रभणवद्वीळु शर्म न सूनवे।**
**भक्तमभक्तमवो व्यन्तो अजरा अग्नयो व्यन्तो अजराः ॥५॥**

तमस्य पृक्षम्[4]। तत्। अन्नम्[5]। अस्य[6]। प्रावसु[7]। निधीमहि[8]। रात्रौ। यः[9]। सुदर्शतरो[10] भवति। अह्नोऽपि[11]। अप्रगच्छतो विरम्याभिधानात्समन्वयश्चतुर्थ्याः। अनन्तरम्[12]। अस्य[13]। अन्नम्[14]। स्तोतृभ्यो[15] ग्रहणवद्भवति[16]। दृढम्[17]। इव। गृहं पितृस्वभूतम्[18]। सूनवे[19] यथा पित्र्यं गृहं पुत्रो भजत एवमन्नमग्नेः स्तोतारः। भजनीयं[20] पुरोडाशादिकम्। अभजनीयं[21] काष्ठादिकञ्च। अन्नम्[22]। खादन्तः[23]।

---

१. स्वकीयेन तेजसा Sy.
२. स्थिराण्यपरिहरणीयानि पापान्यमित्राणि वा नि रिणाति निःशेषेण गच्छति नाशयतीत्यर्थः Sy.
३. VM. ignores अरणिभिः and explains दाष्टि। श्रवसे। चित्। once only.
४. वृ० P.D.
५. हविर्लक्षणमन्नम् Sy.
६. अस्मै Sy.
७. उपरमन्तेऽस्मिन्हवींषीत्युपरा वेदिसमीपभूमयस्तासु Sy.
८. धारयामः ... अतोऽस्मै धीमहि Sy.
९. कः P. ... अग्निः Sy.
१०. अत्यर्थं सर्वैर्दर्शनीयो भवति। यतोऽयं रात्रौ सर्वेषु भावेषु तमसावृतत्वाददृश्यमानेष्वपि स्वयमत्यर्थं प्रकाशते Sy.
११. प्रगतमायुर्यस्यासौ प्रायुः, न प्रायुरप्रायुस्तस्मै। "असौ योऽस्तमेति स सर्वेषां भूतानां प्राणानादायास्तमेति" (TA. 1. 14.) इति श्रुतेः। रात्रौ सर्वे भावा निद्रया व्यावृतत्वात्प्रायुष इव भवन्ति। अयमग्निस्तु सर्वप्राणिप्राणापहर्तुः सूर्यस्य रात्रौ स्वस्मिन्नेव प्रवेशात्प्रकृष्टायुर्भवति, अतोऽपि धीमहि Sy.
१२. आत् अत एव कारणाद्यतोऽयं सुदर्शतरो यतश्चायमप्रायुरतः कारणात् Sy.
१३. अस्मै Sy.
१४. आयुर्हविर्लक्षणमन्नम् Sy.
१५. विरम्य ... स्तो० M.
१६. ग्रहणयुक्तमभूत् Sy.
१७. दृढं सुखसाधनम् Sy.
१८. दृढमिव ... भूतं M. पित्रोः ... शर्म ...गृहं यथा ग्रहणवद्भवति तद्वदित्यर्थः। शर्मेति गृहनाम, 'शर्म वर्म' (Ngh. 3. 4.) इति तन्नामसु पाठात् Sy.
१९. सूनवे पुत्राय Sy.
२०. इदानीमाहवनीयादिरूपेणाग्नेर्बहुत्वमपेक्ष्याह ... भक्तं सेवमानम् Sy.
२१. अभक्तमसेवमानञ्च, व्यन्त एते प्राणिनोऽनुग्राह्या इति बुध्यमाना अवः रक्षन्ति Sy.
२२. यद्यपि विशेषेण प्राणिनो दाहपाकादिद्वारा रक्षन्ति तथाप्यस्ति यजमानेष्वतिशय इत्याह ...तः प्रत्तं हविः Sy.
२३. च... खादयन्त्यः M. खादयन्त्य: P.D. अदन्तः Sy.

अजरा भवन्ति[1]। अग्नयः[1]।

स हि शर्धो न मारुतं तुविष्वणिरप्नस्वतीषूर्वरास्विष्टनिरार्तनास्विष्टनिः।
आदद्धव्यान्याददिर्यज्ञस्य केतुरर्हणा।
अध स्मास्य हर्षतो हृषीवतो विश्वे जुषन्त पन्थां नरः शुभे न पन्थाम् ॥६॥

स हि शर्धो न। सः[3]। हि। मारुतम्[4]। इव। शर्धः[5]। बहुशब्दः[6]। कर्मवतीषु[7]। यज्ञभूमिषु[8]। अन्वेषणीयः[9]। आर्तिष्वपि[10]। भक्षयति[11]। हवींषि[12]। आदानशीलः[13]। यज्ञस्य। ध्वजभूतः[14]। पूजनीयः। अथ। अस्य। हृष्यतः[15]। हर्षवन्तः[16]। सर्व एव मनुष्याः। गमनमार्गम्[17]। सेवन्ते[18]। यथा। श्लाघार्थम्[19]। युवानः[20]। पन्थानमलङ्कृताः[21] सेवन्ते[22] प्रकाशम्[23]।

---

१. स्वयं हविषाऽजराः सन्तो यजमानानप्यजरान्कुर्वन्तीत्यर्थः Sy.

२. VM. does not explain विवातरात्। ध्यन्तः। अजराः। a second time

३. स एव स्तुत्यतया प्रसिद्ध एवाग्निः Sy.

४. मरुत्सम्बन्धि Sy.

५. शब्दे अर्था M. ध्वनने दृष्टान्तः... बलमिव। मरुतां समूहो यथा ध्वनयति तथेत्यर्थः Sy.

६. तुवि इति बहुनाम। 'उरु तुवि' (Ngh. 3. 1.) इति तन्नामसु पाठात्। बहुस्वनिः प्रभूतध्वनियुक्तो वर्तते। अत्यन्तज्वलितेऽग्नौ वायुसम्पर्काद् भुग्भुगिति ध्वनिरुत्पद्यते ज्वलतीत्यर्थः Sy.

७. खननप्रोक्षणादिकर्मोपेतासु। अप्न इति कर्मनाम। 'अप्नः दंसः' (Ngh. 2. 1.) इति तन्नामसु पाठात् Sy.

८. यज्ञभू० M. उत्तरवेदियुक्तासु श्रेष्ठासु वेदिभूमिषु Sy.

९. यष्टव्यः Sy.

१०. आर्तान्करोत्यार्तयति। आर्तयन्तीत्यार्तनाः पृतनास्तासु ... । तासां जयाय ... एष्टव्यो यष्टव्यो वा Sy.

११. एवं स्तनयन्नग्निः ... आवत् अत्ति भक्षयति ... यद्वा। आङ्पूर्वाद् ददातेः Sy.

१२. हव्यान्याज्यपुरोडाशादीनि Sy.

१३. ०दान० P. आददिः सर्वत्र हविरादानशीलः Sy.

१४. केतुः प्रज्ञापकः केतुस्थानीयो वा Sy.

१५. हविर्भक्षणादत्यन्तहर्षयुक्तस्य। यद्वाऽभिमतफलदानेन यजमानान्हर्षयतः Sy.

१६. Missing in M. आज्यस्वीकारेण हर्षयुक्तस्याग्नेः Sy.

१७. पन्थानं मार्गम् Sy.

१८. अप्रीणयन्। असेवन्त वा Sy.

१९. शुभाय शोभनाय सुखप्राप्तये Sy.

२०. नरो मनुष्याः Sy.

२१. पन्थानं सर्वैर्गन्तव्यमैहिकामुष्मिकफलस्याग्नेरेव मार्गम् Sy.

२२. सर्वेऽनुगच्छन्ति। अग्निमेव प्रीणयित्वा साधयन्ति ... यथा लोके ... पन्थानं सर्वैर्गन्तव्यं निर्भयं प्रौढमार्गमिव Sy.

२३. VM. ignores स्म and explains इष्टनिः once only.

द्विता यदीं कीस्तासो अभिद्यवो नमस्यन्त
उपवोचन्त भृगवो मथ्नन्तो दाशा भृगवः ।
अग्निरीशे वसूनां शुचिर्यो धर्णिरेषाम् ।
प्रियाँ अपिधीँर्वनिषीष्ट मेधिर आ वनिषीष्ट मेधिरः ॥७॥

द्विता यदीम्। द्विधा[1]। यदा[2]। एनमग्निम्[3]। मेधाविनः[4]। अभिगतदीप्तयः[5]। पूजयन्तः[6]। उपेत्यास्तुवन्[7]। भृगवः[8]। अरण्योर्हविर्वहनार्थम्[9, 10]। मथ्नन्तस्तदानीं[11] भृगूणाम्[12]। अग्निः। धनानाम्[13]। ईश्वर[14] आसीत्। यः। एषाम्[15]। धारक[16] आसीत्। शुचिः[17] स इदानीम्। प्रियात्मनि[18] ?। अपिधी-[19]यमानान् पुरोडाशादीन्। आभिमुख्येन। भजताम्[20]। यज्ञियः[21, 22]।

विश्वासां त्वा विशां पतिं हवामहे सर्वासां समानं दम्पतिं भुजे सत्यगिर्वाहसं भुजे ।
अतिथिं मानुषाणां पितुर्न यस्यासया ।
अमी च विश्वे अमृतास आ वयो हव्या देवेष्वा वयः ॥८॥

विश्वासां त्वा[23]। सर्वेषाम्[24]। मनुष्याणाम्[25]। पतिम्[26]। त्वा। हवामहे[27]। सर्वेषामेव विशाम्[28]।

---

१. द्वित्वमापन्नं द्विप्रकारं श्रौतस्मार्तभेदेन द्वित्वमापन्नम्। यद्वोपलक्षणमेतत्। आहवनीयादिरूपेण नानाविधम्। यद्वा द्विता द्विविधायैहिकामुष्मिकफलायोभयाय Sy.
२. यम् Sy. ३. यदेनमग्निः P. मग्निः M. इममग्निम् Sy. ४. कीर्तनं कुर्वन्तः स्तोतारः Sy. ५. ०विभिर्गतः P. अभितो द्योतमानाः Sy.
६. नमस्कारोपलक्षितमुपस्थानं कुर्वन्तः Sy.
७. उपेत्य ब्रुवन्ति Sy. ८. ०स्तुवन्... वो M. भृगुगोत्रोत्पन्ना महर्षयः Sy.
९. ०ण्यो P. अरण्याम् Sy. १०. ०वना० P. दानेन निमित्तभूतेन हविर्दानार्थम् Sy. ११. अग्निमन्थनं कुर्वन्तः Sy.
१२. भृगवो भ्रष्टारो हविषां पापानां वा Sy.
१३. वसूनां हविर्लक्षणानाम् Sy.
१४. ईष्टे समर्थो भवति ... । यद्वैषां धूयमानानां मणिमुक्तादीनां वसूनामीशः ईष्टे समर्थो भवति प्रदातुमिति शेषः Sy. १५. दीयमानानाम् Sy.
१६. धारणकुशलः Sy. १७. दीप्तः Sy.
१८. प्रियान् स्वप्रीतिहेतूनाज्यादीन् Sy. प्रियात्मनः is suggested for प्रियात्मनि
१९. अपिधी० M. पर्याप्तिपर्यन्तं दत्तान् Sy.
२०. सम्भक्तवान्। सम्भजतां वा Sy.
२१. य...M. मेधो यज्ञस्तद्वान् स्वयं यष्टव्यत्वेन प्रधानभूतः सन्। ...मेधावानसौ ...अन्यदेवताकेष्वपि यज्ञेषु स्वयमाज्यभागप्रयाजादिरूपं हविः सम्भजते Sy.
२२. VM. explains भृगवः। वनिषीष्ट। मेधिरः once only.
२३. त्वां P. २४. सर्वासाम् Sy.
२५. विशां प्रजानां यजमानानाम् Sy.
२६. पतिम्, अभिमतफलप्रदानेन पालकम् Sy.
२७. आह्वयामः Sy. २८. न केवलं यजमानानां किन्तु सर्वासां प्रजानाम् Sy. सर्वासामेव is suggested for सर्वेषामेव as it qualifies विशाम् fem.

साधारणम्[1]। गृहपतिम्[2]। आत्मनो भोजनाय[3]। सत्याः[4] स्तोतृगिरो[5] यस्य[6] वोढव्याः[7]। मनुष्याणाम्। अतिथिम्[8]। पितुः[9]। इव[10]। सर्वेषां रक्षकस्य यस्य। आस्येन[11]। सर्व एव। मनुष्या भुञ्जते[12]। देवाः[13] च। हव्यानि[14] हि। देवेषु। अन्नमाभोज्यम्[15]। अन्नानि चाग्नौ हूयन्ते यथा[16] पितुर्धनं पुत्रा आददते[17]। एवं यस्यास्येनाददते देवाः। मनुष्याणामन्नमिति[18]।

**त्वमग्ने सहसा सहन्तमः शुष्मिन्तमो जायसे देवतातये रयिर्न देवतातये ।**
**शुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतुः ।**
**अध स्मा ते परि चरन्त्यजर श्रुष्टीवानो नाजर ॥९॥**

त्वमग्ने सहसा। त्वम्। अग्ने! बलेन। अभिभवितृतमः[19]। शोषयितृतमः[20]। अरण्योर्जायसे[21]। यज्ञार्थम्[22]। धनम्[23]। इव[24]। तव। हि[25]। सोमजनितो मदः[26]। शोषयितृतमः[27]। प्रज्ञा। च[28]।

---

१. समानमेकरूपं, दहनपचनाद्युपकारस्य सर्वेषां समत्वात् Sy.
२. गार्हपत्यादिरूपेण गृहस्य पालकम्। दम इति गृहनाम। 'दमे कृत्तिः' (Ngh.3.4.)इति तन्नामसु पाठात् Sy.
३. भुजे भोगाय हवामह आह्वयामः Sy.
४. यथार्थभूतानामविसंवादिफलानाम् Sy.
५. स्तुतिरूपाणां गिरां वोढारम्। यद्वा गिरो मन्त्ररूपा वहन्तीति गिर्वाहस ऋत्विजः। सत्या अविसंवादिफला गिर्वाहसो यस्य तं तादृशं हवामह इति शेषः Sy.
६. Omitted by D.
७. वोढया P. वाढ्य D.
८. थि० P. अतिथिमतिथिवत्पूज्यं दर्शादितिथिमपेक्ष्यागन्तारं वा Sy.
९. तत्र दृष्टान्तः। ... पितुरन्तिके पुत्रादयो यथाऽऽश्रयं सेवन्ते तद्वत् Sy.
१०. विश्वासां त्वा ... रिव M.
११. आसया समीपे। आसेत्यन्तिकनाम, 'आसा अम्बरम्' (Ngh. 2. 16.) इति तन्नामसु पाठात् Sy. १२. भञ्जते M.
१३. हविर्भोक्तृत्वेन प्रसिद्धाः सर्वे देवा अपि, आ आगच्छन्ति। उपसर्गवशाद् योग्यक्रियाध्याहारः Sy.
१४. वयो हविर्लक्षणान्नमुद्दिश्य, अग्निमुखादेवेतरेभ्यो दीयमानत्वात्। ... किञ्च वयो नेतार ऋत्विजोऽपि। देवेष्वितरेष्विज्यमानेषु मध्ये हव्या हवींषि, आवहत्यग्नये Sy. १५. ०ज्यमा० M.
१६. तथा P.D.M. १७. ०न द० P.
१८. VM. explains भुजे once only.
१९. अतिशयेन शत्रूणामभिभविता Sy.
२०. अतिशयेन तेजस्वी Sy.
२१. यद्वोक्तगुणविशिष्टः स जायसे। अरण्योरुत्पद्यसे Sy.
२२. देवानां विस्तारयुक्ताय यागाय तदर्थम्। यज्ञनामैतत् Sy. २३. यज्ञार्थत्वे दृष्टान्तः ... धनं यथा यज्ञार्थमुत्पाद्यते। तथा चोक्तं 'यज्ञार्थं द्रव्यमुत्पन्नम्' इति Sy.
२४. ०र्थंनमिव M.
२५. हिशब्दः प्रसिद्धौ Sy.
२६. आज्यस्वीकारजनितो हर्षः। ... आज्येनाग्नेर्मदो भवतीति प्रसिद्धम् Sy.
२७. अतिशयेन बलवान् Sy.
२८. कर्मविशेषोऽपि Sy.

अतिशयेन दीप्तिमती[1]। तस्मात्[2]। त्वाम्। परिचरन्ति[3]। जरावजित[4]! क्षिप्रं व्याप्नुवन्तो[5] दासाः। इव[6]।

**प्र वो॑ म॒हे सह॑सा॒ सह॑स्वत उ॒षर्बु॑धे पशु॒षे नाग्नये॒ स्तोमो॑ बभूत्व॒ग्नये॑ ।**
**प्रति॒ यदीं॑ ह॒विष्मा॒न्विश्वा॑सु॒ क्षासु॒ जोगु॑वे ।**
**अग्रे॑ रे॒भो न ज॑रत ऋषू॒णां जू॒र्णिर्होत॑ ऋषू॒णाम् ॥१०॥**

प्र वो महे। प्रभवतु[7]। युष्माकम्[8]। स्तोमः[9]। महते[10]। बलेन[11]। तन्वते[11]। अग्निहोत्रार्थमुषसि[12] प्रबुध्यमानाय। पशूनां[13] दात्र उदाराय। इव[14]। अग्नये[15]। यदा। एनम्[16]। आसादितहविष्कः[17] सन्। दार्विकीषु[18] पाशुकीषु[19] सौमिकीषु[20] च[21]। वेदिषु[22]। प्रतिगच्छति[23] तदानीम्। पश्यतां[24] मनुष्याणाम्[25]। अग्रत[26] एनम्[27]। बन्दी[28]। इव[29]। स्तौति। स्तुतिकुशलः। होता[30][31]।

---

१. यशोयुक्तोऽन्नयुक्तो वा खलु Sy. द्युम्नं द्योततेः। यशो वान्नं वा N. 5.5.

२. अथ अतः कारणात् Sy.

३. परिचरन्ति यजमानाः Sy.

४. ०जिता० D. हे जरारहिताग्ने।... अजर भक्तानामजरयितः।... यद्वा। अजर अस्तोतः। जरा स्तुतिः। असौ न कस्यापि स्तोता भवति किन्तु सर्वैः स्वयं स्तूयते Sy.

५. ते यथा वार्ताविशेषप्रदानेन राजानं सेवन्ते तद्वत् Sy.

६. VM. ignores स्म and explains देवतालये। अजर once only.

७. ०त M. प्रीणयितुं समर्थं भवतु Sy.

८. हे उद्गात्राध्वर्यवः स्तोतारो वो युष्माकं सम्बन्धि Sy.

९. स्तोत्रम् Sy.

१०. पूज्याय Sy.

११. सहसा पराभिभवसामर्थ्येन तद्वते Sy. तद्वते is suggested for तन्वते

१२. उषःकाले Sy.

१३. पशुफलप्रदाय।...यद्वा पशुषे पशुप्रदात्रे प्रभवे यथा स्तुतिः क्रियते तद्वत् Sy.

१४. नकारोऽप्यपिशब्दार्थः Sy.

१५. उदारायोग्रवेय P.

१६. यदेन० D. अग्निं प्रति लक्षीकृत्य Sy.

१७. घृतादिहविर्युक्तो यजमानः Sy.

१८. दाश्वि० P. दाशी० D.

१९. वाकीषु P. पाकीषु D. वाशुकीषु वा M.

२०. सौम० P.D.

२१. Omitted by P. D.

२२. सर्वासु निवासभूतासु वेदिभूमिषु ... क्षेति भूनाम। 'क्षा क्षामा' (Ngh. 1.1.) इति तन्नामसु पाठात् Sy.

२३. प्रत्यर्थं गच्छति Sy.

२४. अग० M. आगन्तृणाम्। देवानां मध्ये श्रेष्ठमग्निम् ... यद्वा ऋषूणामित्येतद्धोतृविशेषणम्। ऋषूणां ज्ञानवतां मध्ये श्रेष्ठोऽयं होतेत्यर्थः Sy.

२५. देवानां मध्ये Sy.

२६. इतरदेवेभ्यः पूर्वम् Sy.

२७. श्रेष्ठमग्निम् Sy.

२८. ब० D. ऋषूणां महतां धनवतामग्रे ...बन्दीव Sy.

२९. बन्दी(न्दि)वत् M.

३०. Missing in M.

३१. VM. explains अग्नये। ऋषूणाम् once only.

**स नो नेदिष्ठं ददृशान आ भराग्ने देवेभिः**
**सचनाः सुचेतुना महो रायः सुचेतुना ।**
**महि शविष्ठ नस्कृधि संचक्षे भुजे अस्यै ।**
**महि स्तोतृभ्यो मघवन्त्सुवीर्यं मथीरुग्रो न शवसा ॥११॥**

स नो नेदिष्ठम्। सः[1]। अस्मभ्यम्। अन्तिकतमम्[2]। दृश्यमानः[3]। आभर[4]। अग्ने! देवैः सहाय। त्वं[5] सर्वमनुष्यसाधारणाग्नो[6] भवसि। शोभनप्रज्ञानेन[7] तेजसाऽऽभरेति। महतः[8]। धनस्य नेदिष्ठम्। सुचेतुना तेजसाऽऽहृत्य[9]। महत्[10] तद्[11] धनम्। बलवत्तम! अस्मभ्यम्। कुरु[12]। समाश्रितानां सन्दर्शनाय[13] च। अस्यै[14]। त्वं धनवन्[15]! स्तोतृभ्यः[16]। महत्। शोभनवीर्यम्[17]। पृथक्[18] कर्ता भवस्यात्मी-[19]याद् धनात्। यथा। उग्रो[20] नाम वहननवृत्तिः[21]। वर्धस्य[22] शिरो बलेन[23] पृथक् करोति[24][25]।

१. स त्वम् Sy.
२. ०कम D. अत्यन्तसमीपे Sy.
३. वेद्यां ददृशानो दीप्तत्वेन दृश्यमानः Sy.
४. अस्माकमाहर Sy. ५. ०स्त्वा P. इतरैर्देवैः समानाग्नः। अग्निमुखेनैवेतरेषां हविःस्वीकारात् समानाग्नत्वम् Sy.
६. ०ष्यासाधारणा नो P. ०णा नो D. ०ण नो नो M. ७. शोभनेन चेतनेन चेतसा वा। पुनस्तदेव विशेष्यते। सुचेतुना शोभनचेतोवता मया।... त्वयाप्तो मय्यनुग्रहयुक्तेनेत्यर्थः Sy.
८. ०ता P.D. महः पूजनीयानि Sy.
९. सुचे...हृत्य M. १०. महदन्नं महतीं कीर्तिं वा Sy. ११. तत्तद् M.
१२. कुरु सम्पादय। शविष्ठेति सम्बोधितत्वात्तदेव प्रार्थ्यत इति गम्यते Sy.
१३. सम्यग्दर्शनीयत्वाय।...यद्वा सञ्चक्षे भुज इति सामानाधिकरण्यम्। सम्यग्दर्शनीयाय भोगायेत्यर्थः Sy.
१४. अस्मै P.D.M. अस्याः पृथिव्याः सम्बन्धिने भुजे भोगाय Sy.
१५. धनवन्! Sy.
१६. त्वद्धनवंस्तो० D. ०वंस्तो० P. न केवलं यजमानेभ्योऽस्मभ्यमेवापि तु स्तोतृभ्यः स्तोत्रकर्तृभ्योऽपि Sy.
१७. सुवीर्यं शोभनपुत्रभृत्याद्युपेतं धनं, शोभनसामर्थ्यं वा Sy.
१८. शवसा बलेन युक्तः सन् मथीरस्मद्विरोधिनो नाशय।...यद्वा मथीर्मथनवांस्त्वमस्मदर्थं शवसा बलेन युक्तो भवेति शेषः Sy. १९. भव, अस्या० is suggested for भवस्या०
२०. त्मीया धनाद्यथो P. यथा कश्चित्क्रूरः Sy. २१. अ is elided: वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
२२. ०त्तिर्वद्धस्य P. वध्यस्य is suggested for वर्धस्य।
२३. शिरः। बलेन is missing in M. शवसा बलेन Sy.
२४. मथीर्भवति तद्वत् Sy.
२५. VM. ignores भुजे।
२६. Ms. D. puts the figure ॥१२७॥ here to indicate the end of one hundred and twentyseventh hymn. No such number is given in P. and M.

I.128.

अयं जायत मनुषो धरीमणि होता यजिष्ठ उशिजामनु व्रतमग्निः स्वमनु व्रतम् ।
विश्वश्रुष्टिः सखीयते रयिरिव श्रवस्यते ।
अदब्धो होता नि षददिळस्पदे परिवीत इळस्पदे ॥१॥

अयं जायत। अयम्[1]। अजायत[2]। मनुष्यस्य[3]। धारके यज्ञे[4]। होता[5]। यष्टृतमः[6]। ऋत्विक्कर्म[7]। लक्षीकृत्य। मथनाख्यं स्वम्[8]। कर्म यागनिर्वृत्तिरूपं च। लक्षीकृत्य। विश्वसुखः[9]। सखित्वमिच्छते[10]। धनमिव[11]। अन्नमिच्छते[12]। अहिंसितः[13]। होता[14]। निषीदति। इडायाः[15] पद उत्तरवेद्यामुत्तरनाभौ। परिवेष्टित[16] ऋत्विग्भिः।[17]

तं यज्ञसाधमपि वातयामस्यृतस्य पथा नमसा हविष्मता देवताता हविष्मता ।
स न ऊर्जामुपाभृत्यया कृपा न जूर्यति ।
यं मातरिश्वा मनवे परावतो देवं भाः परावतः ॥२॥

तं यज्ञसाधम्। तम्[18]। यज्ञस्य[19] साधयितारम्। अपि[20]। सेवामहे[21]। यज्ञस्य।

---

१. अग्निः Sy.
२. अरणिमन्थनेनोत्पन्नः Sy.
३. अध्वर्योः सकाशात् Sy.
४. सारभूते स्थाने वेदिरूपे । 'वेदिमाहुः परमन्तं पृथिव्याः' (TS.7.4.18.2.)इति श्रुतेः । 'एतावती वै पृथिवी यावती वेदिः' (TS. 2.6.4.1.) इति च Sy.
५. देवानामाह्वाता Sy.
६. ०त्र M. अतिशयेन यष्टृतमः Sy.
७. कर्म omitted by M. उशिजां फलस्य कामयितॄणां यजमानानां व्रतं सोमयागादिरूपं कर्म, अनु लक्षीकृत्य Sy.
८. न केवलं परार्थमेवापि त्वयमर्थः । स्वं व्रतं ... स्वकीयं हविःस्वीकारादिरूपं कर्म Sy. ९. विश्वविषयकर्मवान् Sy.
१०. सुखितमि० M. ०च्छत P. सखित्वमात्मन इच्छते Sy.
११. धनस्थानीयो भवति । धनं यथा सख्यमन्नसमृद्धिं च साधयति तद्वदयमग्निरपि तस्मै द्वयं साधयतीत्यर्थः Sy. १२. अतिप्रसिद्धान्नमात्मन इच्छते यजमानाय Sy.
१३. अदब्धः केनाप्यहिंसितः Sy.
१४. होमनिष्पादकः Sy.
१५. इडाया भूम्याः पदे । ... पुनस्तदेव विशेष्यते । ... इडादेवताया मनोः पुत्र्या गोरूपाया इडोपह्वानमन्त्रप्रतिपादितायाः पदे पादन्यासप्रदेशे । 'इडा वै मानवी यज्ञानूकाशिन्यासीत्' (TB. 1.1.4.4.) इति । 'इडायाः पदे घृतवति स्वाहा' (TS. 1.2.5.1.) इति च श्रुतेः Sy.
१६. ऋत्विग्भिः परिधिभिर्वा परितो वेष्टितः Sy. १७. VM. ignores अग्निः and one इळस्पदे ।
१८. अग्निं वेद्यां स्थापितम् Sy.
१९. यज्ञ P. यज्ञस्य साधकम् Sy.
२०. अपिः सम्भावनार्थः Sy.
२१. आ परितोषं सेवामहे । 'वात गतिसुखसेवनयोः' Sy.

मार्गेण[1] तीर्थेन। हविर्युक्तेन[2] च। नमस्कारेण[3]। यज्ञे[4]। सः। अस्माकम्[5]। हविषाम्[6]। उपाहरणे[7]। अनया। दीप्त्या[8]। न। जीर्णो[9] भवत्या यज्ञसमाप्तेः[10] प्रवर्तमानदीप्तिर्भवति[11]। यम्। देवम्[12]। मातरिश्वा[13]। मनवे[14] राज्ञे पुरा। दूरात्[15]। उद्धृतवान्[16][17]।

**एवेन सुद्यः पर्येति पार्थिवं मुहुर्गी रेतो वृषभः कनिक्रदुद्दधुद्रेतुः कनिक्रदत्।**
**शुतं चक्षाणो अक्षभिर्देवो वनेषु तुर्वणिः।**
**सदो दधान उपरेषु सानुष्वग्निः परेषु सानुषु ॥३॥**

एवेन सद्यः। गमनशीलेन[18] तेजसा। च[19] ?। तृणगुल्मादिकम्[20]। परिगच्छति[21]। मुहुरुद्गिरति[22]। उदकम्[23]। वर्षिता[24]। शब्दं कुर्वन्[25]। धारयन्[26]। उदकम्[27]। बहूनपि वृक्षान्। तेजोभिः[28]। पश्यन्[29]।

---

१. यागस्य मार्गेण यागानुष्ठानेन।...यज्ञेन देवस्य महती प्रीतिर्भवति। यद्वा ऋतस्य यज्ञस्य पथा। मार्गस्तीर्थमित्युच्यते:।...तेन मार्गेण गत्वा Sy.
२. आज्यादिप्रदेयद्रव्यवता Sy.
३. नमस्कारोपलक्षितस्तोत्रेणोपस्थानेन वा। तदुभयेनेत्यर्थः Sy.
४. हविष्मता हविष्मति, आज्यपुरोडाशादिबहुहविर्युक्ते...देवानां विस्तारयुक्ते यज्ञे Sy.
५. सोमास्मा० P.D.
अस्मत्सम्बन्धिनाम् Sy.
६. हविर्लक्षणानामन्नानाम् Sy.
७. ०पाकर० M. तत्स्वीकारविषये Sy.
८. सामर्थ्यलक्षणया कल्पनया हविःस्वीकरणरूपया Sy.
९. न नश्यति। अजरो वर्तत इत्यर्थः Sy.
१०. यज्ञसमाप्तिपर्यन्तम् Sy.
११. च० P.
१२. देवा P. D. M.
द्योतनशीलम् Sy.
१३. अन्तरिक्षसञ्चारी वायुः Sy.
१४. नमवे P. D. M.
मनोरर्थाय Sy.
१५. परावतः, अतिदूरं गतवत आदित्यात् Sy.
१६. उत् omitted by M. भाः, आनासीत्। औचित्येन भूमौ स्थापितवानित्यर्थः। तद्वत् परावतो दूराद्देवमग्निमस्मद्देवयजनं प्रति स्थापयत्वित्यर्थः Sy.
१७. VM. explains हविष्मता and परावतः once only.
१८. एवेन गमनसाधनेन गमनेन वा Sy.
१९. वा P. सद्योऽस्मदाह्वानानन्तरम् Sy.
२०. ०गुल्लादि० P. ०गुल्मा० D. पृथिवीसम्बन्धि स्थानं वेदिलक्षणमेव Sy.
२१. परि परितः। यद्वा। अनर्थक आभिमुख्यार्थो वा परि। एति गच्छति Sy.
२२. मुहुर्गीः सर्वदा गीयमानः Sy.
२३. रेतःशब्देन तत्कार्यं हवीरूपमन्नमुच्यते। तद्वान् Sy.
२४. ०तार P. कामानां वर्षिता Sy.
२५. शब्दयन् पर्येति Sy.
२६. दधानः Sy.
२७. आज्यादिस्वीकारेणात्यधिकं सामर्थ्यम् Sy.
२८. अक्षस्थानीयाभिर्ज्वालाभिः Sy.
२९. सर्वतः प्रकाशमानः। यद्वा ज्यास्तोत्कर्षेण यजमानेन कृतं शतगुणितं प्रख्यापयन् Sy.

वृक्षेषु[1]। देवः। क्षिप्रं[2] सम्भक्ता। स्थानम्। दधानः[3]। शिलासु[4]। समुच्छ्रितासु। अग्निः। पर्वतस्योपरिभवासु[5][6]।

स सुक्रतुः पुरोहितो दमेदमेऽग्निर्यज्ञस्याध्वरस्य चेतति क्रत्वा यज्ञस्य चेतति।
क्रत्वा वेधा इषूयते विश्वा जातानि पस्पशे।
यतो घृतश्रीरतिथिरजायत वह्निर्वेधा अजायत ॥४॥

स सुक्रतुः। सः। सुप्रज्ञः[8]। पुरोहितः[9]। यज्ञे यज्ञे[10]। अग्निः[11]। यज्ञम्[12]। अहिंसितम्[12]। जानाति[13]। प्रज्ञया[14]। कर्मणा[15]। प्राज्ञः[16]। अन्नमिच्छते[17]। विश्वान्येव। जातानि[18]। बध्नाति[19]। यस्माद् यजमानात्[20]। घृतस्य श्रयिता[21]। अतिथिः[22]। अजायत[23]। हविषां वोढा[24]। कर्मणां कर्ता[25] तस्मै यजमानायेति[26]।

---

१. सम्भजनेषु स्तोत्रेषु निमित्तभूतेषु Sy.

२. क्षि P. शीघ्रगन्ता शत्रूणां हिंसको वा Sy. तुर्वणिस्तूर्णवनिः N.6.14.

३. धारयमाणोऽग्निः सद्यः पर्येतीति पूर्वत्रान्वयः Sy.

४. उपरमन्त एष्वन्नय इत्युपरा धिष्ण्या यजमानगृहा वा Sy.

५. सानुषु समुच्छ्रितेषु कर्मसु हविःषु वा निमित्तभूतेषु Sy. सानु समुच्छ्रितं भवति N.2.24.

६. ०रिभासु P. ०रिभावसु M. उत्कृष्टेषु Sy.

७. VM. explains कनिक्रदत्। सानुषु once only.

८. प्र० M. शोभनकर्मा Sy.

९. हितः M. पुरो धार्यमाणः। यद्वा पुरोहितवद्यागनिर्वाहकः सन् Sy.

१०. तत्तद्यजमानगृहे सर्वेषु देवयजनेषु वा Sy.

११. निः M.

१२. अध्वरस्य नाशरहितस्य फलप्रदस्य यज्ञस्य तदर्थम् Sy. १३. प्रबुध्यत इत्यर्थः Sy.

१४. अयं यजमानोऽपि ... शोभनेन कर्मणा यज्ञस्य ... कर्तव्यतामवजानाति Sy.

१५. किञ्चायमग्निरपि ... प्रकृष्टेन कर्मणा Sy.

१६. वेधाः, विविधानां फलानां कर्ता सन् Sy.

१७. ०न्नेन्न० D. प्राज्ञमि० M. इष्यत इतीषुरन्नमागमनं वा, तदिच्छते यजमानार्थम् Sy.

१८. सम्पादितानि हविरादीनि Sy.

१९. अत्यर्थं स्पृशति स्वीकरोति Sy.

२०. यतः कारणात् Sy.

२१. श्रिता P.D. घृतं ... सेवमानः Sy.

२२. अतिथिवत्पूज्यश्च Sy.

२३. उत्पन्नः । यतः कारणाद् घृतमत्यर्थं सेवमानः प्रवृद्धोऽभवत्तः पस्पश इत्यर्थः। ... अजायत समर्थोऽभवत् Sy.

२४. एवमग्नौ प्रवृद्धे सति यजमानोऽपि वह्निर्हविषां वोढा Sy.

२५. विविधस्य फलस्य कर्ता उत्पादयिता Sy.

२६. VM. explains यज्ञस्य। चेतति। अजायत once only.

क्रत्वा यदस्य तविषीषु पृञ्चतेऽग्नेरवेण मरुतां न भोज्येषिराय न भोज्या।
स हि ष्मा दानमिन्वति वसूनां च मज्मना।
स नंस्त्रासते दुरितादभिह्रुतः शंसादघादभिह्रुतः ॥५॥

क्त्वा यदस्य। कर्मणा[१]। यत्[२]। अस्य। प्रवृद्धासु[३] ज्वालासु। हवींषि[४] सम्पर्चयति[५]। अग्नेः। परिरक्षणाम्[६]। इव। भोज्यानि[७]। यथा वा। गच्छते[८] पुरुषाय[९]। अन्नान्या[१०]हरति[११]। सोऽग्निः[१२]। तस्मै[१३] देयं धनम्। वर्धयति[१४]। वासयितॄणां[१५] च वीराणाम्। बलेन तं[१६] संयोजयति। सोऽग्निः। अस्मान्। दारिद्र्यात्[१७]। अभिहन्तुः[१८]। परिरक्षतात्[१९]। तथा[२०] निन्दितुः[२१]। आहन्तुः[२२] सकाशाच्च[२३] पुरुषादिति[२४][२५]।

---

१. प्रकृष्टेन कर्मणा हविष्प्रदानादिरूपेण Sy.
२. यस्मात्कारणात् सर्वे यजमानाः Sy.
३. प्रवृत्तासु P.D. तविषीषु प्रबलासु ज्वालासु...तविषीति बलनाम। 'तविषी शुष्मम्' (Ngh. 2.9.) इति तन्नामसु पाठात् Sy.
४. हविंषि D.
५. मिश्रयन्ति Sy.
६. रवेण तृप्तिनिमित्तेन Sy.
७. भक्ष्याणि पुरोडाशादीनि...मरुतां न भोक्ता वायूनां सम्बन्धीनि व्रीह्याद्यन्नानीव। वायुषु मेघं निर्भिद्य वृष्टिं जनयत्सु सत्सु सस्यादिद्वारा व्रीह्यादिभोज्यानि यथा पृच्यन्ते तथेत्यर्थः Sy.
८. दाने दृष्टान्तः...एषणयुक्ताय...इषिरशब्दो यास्केनैवं निरुक्तः। 'ईषणेन वैषणेन वा' (N.4.7.) इति Sy.
९. याचमानायार्थिने Sy.
१०. भोग्यानि भक्ष्यादीनि Sy.
११. यथा दीयन्ते तद्वत् Sy.
१२. स खलु यजमानः Sy.
१३. हविष्प्रदानम् Sy.
१४. तस्मै व्याप्नोति। यद्वा स्वयमभिमतं दानमिन्वति। इन्वतिर्व्याप्तिकर्मा। 'इन्वति ननक्ष' (Ngh. 2.18.) इति तत्कर्मसु पाठात् Sy.
१५. निवासयोग्यानां धनानामग्निना लब्धानां बलेनैव। यद्वा सोऽग्निर्वसूनां हविर्निवासयोग्यानां ज्वालारूपाणां धनानां मज्मना बलेन दानमिन्वतीति शेषः Sy.
१६. ता P.
१७. दुरितात्पापात् Sy.
१८. ०न्तु M. आभिमुख्येन पापैर्ह्रियमाणान् Sy.
१९. त्रासते त्रायते Sy.
२०. तथाहि M.
२१. ०तिः P. अतिप्रभूतत्वेन शंसनीयात्। यद्वा हिंसकात् Sy.
२२. आहन्तुं(न्तुः) M. अभितो ह्रियमाणादघाद् दुःखात्तत्कारणात्पापाद्वा... त्रायते Sy.
२३. सका(शा)च्च M.
२४. ०षानिति D.M.
२५. VM. ignores मरुताम्। हि। स्म and explains अभिह्रुतः। once only.

**विश्वो विहाया अरतिर्वसुर्दधे हस्ते दक्षिणे**
**तरणिर्न शिश्रथच्छ्रवस्यया न शिश्रथत् ।**
**विश्वस्मा इदिषुध्यते देवत्रा हव्यमोहिषे ।**
**विश्वस्मा इत्सुकृते वारमृण्वत्यग्निर्द्वारा व्यृण्वति ॥६॥**

विश्वो विहायाः। विश्वः[1]। महान्[2]। अभिगन्ता[3]। अग्नेर्धनम्[4]। धारयति। हस्ते[5]। दक्षिणे। धनं[6] श्रथ्नाति[7]। ग्रामान्तरं प्रति गन्ता[8]। इव। यथा वा। अश्लेच्छया[9]। धनं[10] वस्त्रादौ बध्नाति। विश्वस्मै[11]। एव। देवान्[12]यष्टुमिच्छते[13]। देवेषु। हव्यम्[14]। वहसि। विश्वस्मै। एव। यजमानाय[15]। वरणीयं[16] धनम्। प्रक्षिपति[17]। अग्निः। धनद्वाराणि[18] च[19]। विवृणोति[20]।

**स मानुषे वृजने शंतमो हितोऽग्निर्यज्ञेषु जेन्यो**
**न विश्पतिः प्रियो यज्ञेषु विश्पतिः ।**
**स हव्या मानुषाणामिळा कृतानि पत्यते ।**
**स नस्त्रासते वरुणस्य धूर्तेर्महो देवस्य धूर्तेः ॥७॥**

स मानुषे। सः। मनुष्यकृते[21]। उपद्रवे[22]। सुखतमः[23]। हित[24]स्तत्परि[25]हाराय निहितो भवति।

---

१. सर्वैर्गन्तव्यः । यद्वा विश्वात्मकः Sy.
२. विहाया इति महन्नाम । 'विहाया यह्वः' (Ngh. 3.3.)इति तन्नामसु पाठात् Sy.
३. अरतिरीश्वरोऽरममाणो वाऽप्रीतिः Sy.
४. ऽग्नेः । धनम् । missing in M. यजमानाय दातव्यं धनम् Sy. ५. अभिमतं प्रदातुमुत्साहयुक्ते हस्ते वामेतरे Sy.
६. धृतं हस्ते यजमानार्थम् Sy.
७. श्रथयति ददाति . . . न शिश्रथत्, यजमानं न श्रथयति न मुञ्चति Sy.
८. ०न्ते P. तरणिरिव तारकः सूर्य इव। स यथा स्वोपासकायाभिमतं हस्ते धृत्वा वितरति तद्वत् । यद्वा तरणिः सर्वस्य तारकः Sy. ९. हवीरूपान्नेच्छयैव न शिश्रथत्, न विमुञ्चति। अयमनुग्रहेणैव पालयते, हविःस्वीकारस्तु व्यपदेशमात्रेणेति भावः Sy.
१०. धन P. धनं M. ११. ०स्मात् P. सर्वस्मै Sy. १२. देवन् P.
१३. इषुध्यते हविरात्मन इच्छत इन्द्रादये Sy.
१४. तत्तद्देवतामुद्दिश्य प्रत्तं पुरोडाशादिकम् Sy. १५. सुकृते शोभनयज्ञकर्त्रे यजमानाय Sy. १६. सर्वैर्वरणीयं, क्षुधादिनिवारकं वाऽन्नादिकम् Sy.
१७. गच्छति । करोतीत्यर्थः Sy.
१८. द्वारा स्वर्गाद्यभिमतद्वाराणि Sy.
१९. The passage beginning with वरणीयं and ending with च is missing in M.
२०. विवृणोति । प्रतिबन्धकपापापनयनद्वाराऽभिमतानि साधयतीत्यर्थः । ऋण्वतिर्गतिकर्मा । यद्वा रिविर्गत्यर्थः Sy.
२१. मनुष्यस्य यजमानस्य सम्बन्धिनि Sy.
२२. वर्जनीये पापे निमित्तभूते सति Sy.
२३. अत्यन्तं सुखतमः । अरिष्टस्य निवारकत्वात् Sy. २४. अत एव हितः स्वर्गाद्यभिमतसाधकत्वात् Sy.
२५. ०तत्परि० P. ०हितस्तत्प० M.

अग्निः। यज्ञेषु[1]। जयशीलो राजा। इव। विशां पतिः[2]। प्रियतमः। सोऽग्निः। हवींषि[3]। भूम्यां वेद्याम्। आसादितानि[4]। मानुषाणां यागार्थम्[5]। अभिपतति[6]। तान्[7] ? पालयति[8]। महतः। वरुणस्य। हिंसायाः[9] स खुपद्रवैर्मनुष्यान्हिनस्ति।[10][11][12]

**अ॒ग्निं होता॑रमीळते॒ वसु॑धितिं प्रि॒यं चेति॑ष्ठमर॒तिं न्ये॑रिरे हव्य॒वाहं॒ न्ये॑रिरे।**
**वि॒श्वायुं॑ वि॒श्ववे॑दसं॒ होता॑रं यज॒तं क॒विम्।**
**दे॒वासो॑ र॒ण्वमव॑से वसू॒यवो॑ गी॒र्भी र॒ण्वं व॑सू॒यवः॑ ॥८॥**

अग्नि होतारम्। अग्निम्। होतारम्[13]। ईळते[14]। धनानां दातारम्[15]। प्रियम्[16]। ज्ञातृतमम्[17]। गमनशीलम्[18]। हविषां वोढारम्। अभिमुखं प्राप्नुवन्ति[19]। सर्वान्नम्[20]। सर्वधनम्[21]। होतारम्[22]। यजनीयम्। कविम्[23]। देवाः[24]। रमणीयम्[25]। रक्षणाय शत्रुभ्यः। धनमिच्छन्तः[26]।

---

१. यज्ञेषु निमित्तेषु Sy.

२. स यथा परसेनाद्युपद्रवपरिहारेण सम्यक्परिपालनेन च प्रजानां प्रियो भवति Sy.

३. ऋत्विग्रूपाणां प्रजानामतिशयेन पालकः Sy.

४. हविषि P. हवींषि Sy.

५. इळायां वेद्यां कृतानि सम्पादितानि Sy.

६. मनुष्याणां यजमानानां सम्बन्धीनि Sy.

७. पतति। आगच्छति Sy.

८. त्त् D. यात् M. सोऽस्मान् is suggested for तान्

९. त्रायते Sy. १०. वारकस्य Sy.

११. धूर्तेर्हिंसकस्य भयात्...यद्वा धूर्तेरिति पञ्चमी। वरुणस्य पापदेवस्य धूर्तेर्हिंसकात्। किञ्च...महतो देवस्य धूर्तेर्हिंसातस्त्रासते पालयते। अग्रघ्टारमग्निर्हिनस्तीति प्रसिद्धम्। यद्वा। एकमेव वाक्यम्। धूर्तेर्हिंसकस्य महो महतो वरुणस्य देवस्य वरुणाख्यायाः पापदेवताया धूर्तेर्हिंसातो नोऽस्मान्त्सोऽग्निस्त्रासते त्रायते Sy.

१२. VM. explains यज्ञेषु। विश्पतिः। धूर्तेः। once only, and ignores सः। नः। देवस्य।

१३. आह्वातारं होमनिष्पादकं वा Sy.

१४. ऋत्विजः स्तुवन्ति Sy.

१५. धनस्य धारयितारं दातारं वा Sy.

१६. अत एव प्रियं सर्वेषां प्रियतमम् Sy.

१७. अतिशयेन यजमानानां चेतयितारम्। यद्वा प्रकृष्टचेतनवन्तम् Sy.

१८. ईश्वरं तादृशं देवम् Sy.

१९. नितरां प्राप्ताः। प्राप्तिरेव विशेष्यते... निश्शेषेण प्राप्ताः। इतरदेवेभ्यो हव्यं वोढुं यथा प्रभवति तथा नितरां प्राप्ताः Sy.

२०. कीदृशम् ? विश्वायुं सर्वत्र प्राणिजीवनम् Sy.

२१. विश्ववेदसं सर्वप्रज्ञम् Sy.

२२. देवानामाह्वातारम् Sy.

२३. कवि M. सर्वज्ञम् Sy.

२४. Missing in M. देवनशीला ऋत्विजः Sy.

२५. अतिप्रवृद्धया शब्दयन्तम् Sy.

२६. वसुकामाः सन्तः Sy.

स्तुतिभिः[१][२]।

I.129.

यं त्वं रथमिन्द्र मेधसातयेऽपाका सन्तमिषिर प्रणयसि प्रानवद्य नयसि ।
सद्यश्चित्तमभिष्टये करो वशश्च वाजिनम् ।
सास्माकमनवद्य तूतुजान वेधसामिमां वाचं न वेधसाम् ॥१॥

यं त्वं रथम्[३]। यम्[४]। त्वम्। रथम्। इन्द्र! यज्ञभजनाय[५]। अनल्पम्[६]। सन्तम्[७]। गमन-[८]शील! प्रणयसि[९]। अनवद्य[१०]! सद्यः[११]। एव। तम्। अन्वेषणाय[१२]। कुरु[१३]। कामय[१४]। च। हविष्मन्तम्[१५]। सः। अस्माकम्। अनवद्य[१६]! क्षिप्रकारिन्[१७]! परिचरताम्[१८]। स्तुतिम्[१९]। च। इमां शृणु[२०]।

---

१. स्तुतिभिः...रणयन्तं रमणीयं वा... वसु हवीरूपमन्नमन्नये प्रदातुमात्मन इच्छन्तो न्येरिरे। प्रीतो यथा धनं प्रयच्छति तथा हविरादिना प्राप्ता इत्यर्थः Sy.

२. VM. explains नि। एरिरे। रण्वम्। वसूयवः। once only. Ms. D. puts the figure ॥१२८॥ here to indicate the end of one hundred and twentyeighth hymn. No such number is given in P. and M.

३. यस्त्वं D.

४. यः D. यं यजमानं प्रति Sy.

५. यज्ञेभ० P. यज्ञस्य दानाय लाभाय वा Sy.

६. ०ल्प P. अपाकम्। अनल्पप्रज्ञयाधिकारवन्तम् Sy. पाकः पक्तव्यो भवति N.3.12.

७. सन्त P. D. पण्डितं सन्तम् Sy.

८. यज्ञगमनशील! Sy.

९. प्रापयसि। द्विकर्मकोऽयम्।..यं यजमानम् धनविद्यादिना...प्रकृष्टं नयसि Sy.

१०. अनिन्दित! Sy.

११. तदानीमेव तदनुग्रहकाल एव Sy.

१२. तद्वेष० M.
आभिमुख्येन यागायाभिमतप्राप्तये वा। अभिपूर्वाद् इषेः क्तिन् Sy.

१३. समर्थं करोषि Sy.

१४. कामयसे Sy.

१५. एवं कृत्वा च...हविर्लक्षणमन्नं तद्वन्तं वा...। यजमानेनाहूतः सन् शीघ्रमेवागत्य हविः स्वीकृत्य यागं साधु निर्वर्त्य तं चाभिमतफलेन संयोज्य पुनर्हविः स्वीकरोषीत्यर्थः Sy.

१६. अनिन्दित! सर्वैः स्तूयमान! Sy.

१७. अस्माननुग्रहीतुं त्वरमाण! Sy.

१८. विविधफलकर्तॄणां मध्ये श्रेष्ठतया वेधसां मेधाविनामस्माकं सम्बन्धि हविः स्वीकुर्वित्यर्थः Sy.

१९. अस्मदीयां स्तुतिरूपां वाचमिव। स्तुतिं यथा स्वीकरोषि तथा हविरपीत्यर्थः Sy.

२०. VM. explains प्र। नयसि। वेधसाम् once only.

स श्रुधि यः स्मा पृतनासु कासु चिद्दक्षाय्य इन्द्र
भरहूतये नृभिरसि प्रतूर्तये नृभिः ।
यः शूरैः स्वः सनिता यो विप्रैर्वाजं तरुता ।
तमीशानास इरधन्त वाजिनं पृक्षमत्यं न वाजिनम् ॥२॥

स श्रुधि। सः[1]। शृणु[2]। यस्त्वम्। पृतनासु[3]। दुस्तरासु[4]। मनुष्यैः[5]। आत्मनो धारणार्थमाह्वातुम्[6]। हविर्भिर्वर्धनीयः[7]। भवसि। शत्रूणां प्रतरणाय[8]। यस्त्वम्। शूरैर्मरुद्भिः[9] सह। सर्वम्[10]। सम्भक्ता[11]। यो वा। मेधाविभिरश्वैः[12]। सङ्ग्रामम्[13]। तरति[14]। तम्। बलिनम्[15]। हविष[16] ईश्वराः। अन्नम्[17]। याचन्ते[18]। अश्वम्। इव। बलिनम्[19][20]।

१. वक्ष्यमाणगुणविशिष्टः Sy.
२. अस्मदाह्वानं स्तोत्रं वा शृणु Sy.
३. सङ्ग्रामेषु Sy.
४. प्रौढेष्वपि Sy.
५. मनुष्यैरेव सद्भिः पश्चाद्देवत्वमापन्नैर्मरुद्भिः। पुनरुक्त एव विशेष्यन्ते। नृभिः सङ्ग्रामनयनशीलैः ... इन्द्रस्य मरुतां साहाय्यम् 'इन्द्रो मरुद्भिः' (TS.6.5.5.1.) 'मरुतो हैनं नाजहुः' (AB. 3.20.) इत्यादिषु प्रसिद्धम्। तैः सहितः सन् Sy.
६. भरणविशिष्टाह्वानयुक्ताय Sy.
७. ०य्यो P. प्रवर्धनशीलोऽसि ... वक्षाय्योऽसि समर्थोऽसि Sy.
८. प्रकृष्टहिंसनाय। यद्वा भरहूतये 'शूरो भव प्रहर' इत्येवमादिभरणयुक्ताह्वानाय, प्रतूर्तये च शूराणां प्रकृष्टवधाय च ...। यद्वा नृभिर्नेतृभिर्यजमानैः प्रार्थितः सन् प्रतूर्तये शत्रूणां पापानां वा प्रकृष्टहिंसनाय Sy.
९. शौर्योपेतैर्मरुद्भिरन्यैर्भटैर्वा सहितः Sy.
१०. स्वयमेव Sy.
११. सङ्ग्रामजयस्यान्यस्य वा मनीषितस्य सनिता सम्भक्तासि। सत्यपि तेषां साहित्येऽन्यनैरपेक्ष्येणैव तरुतासीत्यर्थः Sy.
१२. ऋत्विग्भिः स्तुतः सन् Sy.
१३. तेभ्योऽन्नस्य Sy.
१४. तरुता ... दातासि। विप्रैर्मरुद्भिः सहित इति सम्बन्धः Sy.
१५. गमनवन्तम् Sy.
१६. सम्यगभ्यर्थयितुं समर्था ऋत्विजः Sy.
१७. ० रान्नम् P.D. हविर्लक्षणान्नवन्तमिन्द्रम् Sy.
१८. ० चते P.D.
संराधन्ति। सेवन्ते Sy.
१९. ० नः P.D. वेजनवन्तं गमनवन्तं पुष्टं ... घासाद्यन्नवन्तम् ... अश्वमिव। तं यथा समर्थाः स्वादुघासप्रदानादिना पोषयन्ति तद्वत्। अत्य इत्यश्वनाम। 'अत्यो हयः' (Ngh. 1.14.) इति तन्नामसु पठितत्वात् Sy.
२०. VM. ignores स्म। चित्। इन्द्र and explains नृभिः once only.

दस्मो हि ष्मा वृषणं पिन्वसि त्वचं कंचिद्यावीररुं शूर मर्त्यं परिवृणक्षि मर्त्यम्।
इन्द्रोत तुभ्यं तद्दिवे तद्रुद्राय स्वयशसे ।
मित्राय वोचं वरुणाय सप्रथः सुमृळीकाय सप्रथः ॥३॥

दस्मो हि ष्मा[1]। दर्शनीयः[2]। हि[3] त्वम्। वर्षितारम्[4]। मेघम्[5]। पिन्वसि[6]। कम्। चन। अदातारमयजमानम्[7]। मर्त्यम्[8]। आत्मना पृथक्करोषि[9]। तम्। वर्जयसि[10] न तत्र गच्छसि। तदिदं स्तुतिवचः[11]। तुभ्यमहम्[12]। इन्द्र! दीप्ताय[13]। वदामि[14]। तदेव त्वदीयम्। अन्येभ्योऽपि[15] देवेभ्य इति। सर्वतः पृथुतमम्[16]। सुष्ठु सुखयित्रे[17] तुभ्यम्[18]।

---

१. स्म D.
२. शत्रूणामुपक्षपणकर्ता Sy.
३. खलु Sy.
४. स्वतो वर्षणशीलम् Sy.
५. त्वचं संवरणवन्तं, पुटबन्धनवदुदकवेष्टनवन्तम्...जलधारिणं मेघम् Sy.
६. पिबसि P. M. निर्भिद्य सेचयसि Sy.
७. दातारं य० P. ० रं य० M. ग्ररणशीलं गमनस्वभावं कञ्चिन्मेघम् Sy.
८. मर्त्यवत्।...मर्त्यं मरणशीलं शीर्यमाणस्वभावम् Sy.
९. मिश्रयसि...प्रवर्षणेन गच्छन्तं बलान्निगृह्य वर्षयसीत्यर्थः। यथा शूरः कश्चिद् बलवन्तं गच्छन्तं वैरिणं निगृह्य स्वीकरोति तद्वदित्यर्थः Sy.
१०. सर्वतो वर्जयसि। औदासीन्यं करोषीत्यर्थः Sy.
११. ० चनं P. तादृशं कर्म वर्षणरूपम् Sy.
१२. स्तुत्यम् M. अहम् is omitted by P. and M.
१३. स्वकीययशोयुक्ताय। तथा दिवे...त्वदाश्रयभूतायै द्युलोकदेवताया अपि तत्तादृशं कर्म Sy.
१४. ब्रवीमि Sy.
१५. ० भ्यो तदेव दे० P. उतशब्दोऽपिशब्दार्थः। वर्षणकर्मणो द्युदेवताया आनुकूल्यात्तस्या अपि वचनं युक्तम्। तथा रुद्राय जगतां दुःखद्रावयित्रे रोदनशीलाय वाग्नये तद् वोचम्। 'रुद्रो वै क्रूरो यदयमग्निः' (TS. 6.2.3.2.) इति श्रुते रुद्रत्वम्। "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्" (TS. 1.5.1.1.) इति श्रुते रोदनस्वभावत्वं प्रसिद्धम्। तस्य चाहुतिद्वारा वृष्टयनुकूलत्वात्तस्यापि कथनं युक्तम्। स्वयशस इत्यस्य रुद्रायेत्यनेन वा सम्बन्धः सन्निहितत्वाद्योग्यत्वाच्च। स्वकीययशोयुक्तायाग्नय इत्यर्थः। तथा मित्राय अहरभिमानिदेवतायै तद् वोचम्। वरुणाय रात्र्यभिमानिदेवतायै तद्वोचम्। 'अहोरात्रे वै मित्रावरुणौ' (TB. 25.10.10.) 'अहोरात्राभ्यां खलु वै पर्जन्यो वर्षति' (TS. 2.1.7.3.) इति। तथा 'मैत्रं वाऽहर्वारुणी रात्रिः' (TS.2.1.7.3.) इत्यादिश्रुतिभ्यो मित्रावरुणयोरहोरात्राभिमानिदेवत्वम्। अत एव श्रुतेर्वृष्टिप्रदातृत्वात्ताभ्यामपि प्रवचनं युक्तम् Sy.
१६. उक्तेभ्यो देवेभ्यः...सर्वतः पृथु, अतिविस्तीर्णं यथा भवति तथा तद्वर्षणकर्म ब्रवीमि Sy.
१७. शोभनसुखयित्रे प्रजानाम्। एतत्सर्वत्र सम्बध्यते Sy.
१८. VM. ignores स्म। शूर। उत। स्वयशसे। and explains सप्रथः। once only.

अस्माकं व इन्द्रमुश्मसीष्टये सखायं विश्वायुं प्रासहं युजं वाजेषु प्रासहं युजम् ।
अस्माकं ब्रह्मोतयेऽवा पृत्सुषु कासु चित् ।
नहि त्वा शत्रुः स्तरते स्तृणोषि यं विश्वं शत्रुं स्तृणोषि यम् ॥४॥

अस्माकम्। अस्माकम्।[1] युष्माकं च।[2] इन्द्रम्। अभिमतसिद्ध्यर्थम्।[3] कामयामहे।[4] सखायम्।[5] सर्वात्रिम्।[6] अभिभवितारम्।[7] नियोज्यम्।[8] युद्धेषु।[9] अस्माकम्। स्तोत्रम्।[10] रक्षणाय। अभिगच्छ।[11] पृतनासु।[12] दुस्तरासु। नहि। त्वाम्। शत्रुः। युद्धे हिनस्ति।[13] यं त्वम्। व्याप्तम्।[14] स्तृणोषि।[15][16]

नि षू नमातिमतिं कयस्य चित्तेजिष्ठाभिररणिभिर्नोतिभिरुग्राभिरुग्रोतिभिः ।
नेषि णो यथा पुरानेनाः शूर मन्यसे ।
विश्वानि पूरोरप पर्षि वह्निरासा वह्निर्नो अच्छ ॥५॥

नि षू नमातिमतिम्।[17] सुष्ठु। नि नमय।[18] अतिमानम्।[19] कस्य।[20] चिदपि शत्रोः। तेजिष्ठैः।[21]

---

१. Omitted by D. हे ऋत्विजः... अस्मदर्थम् Sy.

२. युष्मदर्थम् Sy.

३. इष्टये यागाय अभिमतैषणाय वा।... यद्वाऽस्माकं सखायमिति सम्बन्धः Sy.

४. अभिमतं कामयामहे। 'वश कान्तौ' Sy.

५. सखिवदत्यन्तहितकारिणं समानख्यानं वा Sy.

६. विश्वेषां यागानां यन्तारम् Sy.

७. सखा...भि० M. प्रकर्षेण शत्रूणां मर्षयितारम् Sy.

८. सर्वदा युक्तं, सहायभूतमित्यर्थः Sy.

९. हवीरूपान्नेषु लब्धसु यज्ञेषु वा निमित्तभूतेषु, प्रासहं यज्ञविघातिनः सहमानं, युजमभिमतफलैर्युक्तं मरुद्भिर्वा Sy.

१०. ब्रह्म परिवृढं कर्म Sy.

११. रक्ष Sy.

१२. सङ्ग्रामेषु। 'पृत्सु समत्सु'(Ngh. 2. 17.) इति सङ्ग्रामनामसु पाठात्सङ्ग्रामत्वम् Sy.

१३. न हिनस्ति न विरोधमाचरति Sy.

१४. विश्वम् Sy.

१५. तृ० P.D. स्तृणोषि वारयसि। स कश्चिदपि शत्रुर्न हिनस्ति। तव महत्त्वेन सर्वे भीता विधेया भवन्ति। शत्रुभावं न कोऽप्याचरति। अजातशत्रुत्वादित्यर्थः Sy.

१६. VM. explains प्रासहम्। युजम्। स्तृणोषि। यम् once only and ignores चित्। शत्रुम्।

१७. तिष्ठनमातिर्मति P.

१८. नितरां सुष्ठु नामय। अस्मत्प्रणतं कुरु। अन्तर्भावितण्यर्थोऽयम् Sy.

१९. अतिक्रान्तमननं विरुद्धमनस्कं शत्रुम् Sy.

२०. त्वद्भक्तस्य यजमानस्य Sy.

२१. निनम या(य)ति... शास्त्रोक्ति० M. अतिशयेन तेजस्विभिः Sy.

आयुधैः। इव। मत्वदीयै रक्षणैः। उद्गूर्णैः। उद्गूर्ण! नय च। अस्मान्। यथा। पुरम्। अनुपद्रवस्त्वम्। शूर! मनुष्यस्योपद्रवाणि तरितुम्। मन्यसे। विश्वानि च तानि। अपपर्षि। बोढा सन्। भवदीयेन निरसनेन। अस्मान्। प्रति गच्छ शत्रुमतः।

**प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति।**
**स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम्।**
**अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ॥६॥**

प्र तद्वोचेयम्। इयमेकैन्दवी, तदहं वचः। अनुगुणाय। इन्दवे। प्रब्रवीमि।

---

१. युद्धादिरूपैर्मार्गैरिव।... अतिमतिं वृत्रादि यथा नामितवांस्तथाऽस्मद्विरोधिनमपीत्यर्थः। यद्वोत्तरत्रान्वयः। तेजिष्ठाभिररणिभिर्न तेजोयुक्तैर्गमनसाधनैर्यज्ञादिमार्गैर्यथाऽस्मान्योजितवानसि तथोग्राभिः प्रकाशिकाभिरूतिभी रक्षणैर्यागफलभूतैर्नोऽस्मान् Sy. २. रक्षणैः प्रीतिभिर्वा युक्तः सन् Sy. ३. उद्गूर्णबल ! Sy.
४. नय(या) M. नयसि। अभिमतस्वर्गादिफलं प्रापयसीत्यर्थः Sy.
५. तत्र दृष्टान्तः। पुरा पूर्वस्मिन्कालेऽस्मत्पित्रादीन्यथोतिभिर्नीतवानसि तथा नेषीत्यर्थः Sy. ६. सर्वैरपापत्वेन Sy.
७. विक्रान्त ! Sy.
८. यजमानस्य। पूरुरिति मनुष्यनाम। 'पूरवः जगतः' (Ngh. 2.3.) इति तन्नामसु पाठात् Sy.
९. एनांसि Sy. As उपद्रवः is mas., the reading should be उपद्रवान्।
१०. अवबुध्यसे स्वर्गाद्यभिमतसाधकत्वादिति भावः। यद्वा। अनेनात्त्वमस्मानप्यनेनसो मन्यसे Sy. ११. सर्वाणि Sy.
१२. ० वर्षि P.M. अपकृत्य पालयसि Sy.
१३. बोघढा P. बोर्ढा D. वृष्ट्यादिप्रदानेन जगतां निर्वाहकः सन् Sy.
१४. धन् P. १५. भवदी ... येन M. आत्मा अन्तिके देवयजनदेशे Sy.
१६. ० च्छत P. आभिमुख्येनागत्य वह्निरभिमतानां वोढा सन्नप अनभिमतमपकृत्य पर्षि अभिमतफलं पूरयसि Sy.
१७. VM. explains ऊतिभिः। वह्निः। once only.
१८. ० मेकैकेन्दवे M.
१९. वोचः P. तद्वक्ष्यमाणं कर्म स्तोत्रं वा Sy. प्रवोचेयमिति सम्बन्धः। यच्छ्रुतेस्तदध्याहारः। यदिष्टं स्तुतिरूपं तत् SKN. यदभिष्टं तस्येन्वोक्ततत् Dur.
२०. भव्याय भवनशीलाय प्रतिदिनं कलाभिवृद्धया वर्धनशीलाय Sy. एकैकस्याः कलाया वृद्धया हान्या वा युक्तेन तेन रूपेण भवितव्यम् SKN. किंलक्षणो य इन्दुः? भव्यो भवनार्हः, आत्मवान् अभिप्रेतानां पात्रभूत इत्यर्थः। तस्मै। भव्यो भावनार्ह इव। यो हविषा भावनमर्हति न च भाव्यतेऽहविर्भाक्त्वात् Dur.
२१. अमृतेन सर्वस्य क्लेदयित्रे तदर्थम् Sy. चन्द्रमसे SKN. अस्मा इन्दवे प्रीत्यर्थम् Dur.
२२. प्रकर्षेण वक्तुं शक्तो भूयासम्। स्तुतेरतिमहत्त्वादिति भावः Sy. प्रब्रवीमि SKN. अहं प्रब्रवीमि Dur.

ह्वातव्यः[1]। आपत्तु मित्रमिव। यः। अप्रवान्[2]। स्तोत्रम्[3]। प्रतिगच्छति[4] 'अप्रवान्वा'[5] इति यास्कः।
रक्षसां[6] हन्ता। स्वयमेव[7]। अस्मत्तः[8]। निन्दितुः[9]। मतिम्[10]। आयुधैः[11]। अपनयतु[12]। सः। पापः[13]।

---

१. होतव्य आह्वातव्यो वा हव्य इन्द्र इव। प्रायेण 'इन्द्र आगच्छ' इत्यादिनेन्द्र एवाहूयते। स इव Sy. हवनमर्हतीति हव्य इन्दुः। नशब्द उपमार्थः। हव्य इव यः। अहविर्भक्त्वादेवमुच्यते SKN. हवनार्ह इव। यो यज्ञेन च पुनराहूयतेऽहविर्भाक्त्वादेव Dur.

२. य इन्दुः... एषणवान् Sy. छान्दसत्वादिषः। इड? स्तुतिं प्रतीच्छन्वा। अन्नं वा, इट् अकारागमश्छान्दसस्तद्वान्। स्तोतृभ्यो देयेनान्नेन स्तुतीच्छया तद्वानित्यर्थः SKN. नित्यमप्रवान् कामवान्वा। कामिनां स्तोतॄणां नित्यमभिमतफलसम्प्रदानोन्मुखः Dur.

३. ०थांस्तो० M. मननीयं स्तोत्रं कर्म बोद्धिइय... तेषामेव कर्म हननादिरूपम् Sy. मन्यतेरर्चतिकर्मण एतद्रूपम्। मननं स्तवनमस्मदीयम् SKN. तत्सम्प्रदानोन्मुखतया च नित्यमस्माकं... मननानि ...प्रज्ञानानि Dur.

४. रेजति गच्छति। रेजतिर्गत्यर्थः। 'रेजति दध्यति' (Ngh.2.14.) इति तन्नामसु पाठात्। ... मन्म तेषामेव कर्म हननादिरूपं रेजति गच्छति चालयति। नाशयतीत्यर्थः Sy. कम्पते चलति। गच्छतीत्यर्थः। ... मन्म मननं रक्षसां चेतस्तद्रेजति। अन्तर्णीतण्यर्थोऽत्र रेजतिः। रेजयति कम्पयति SKN. रेजयत्याकम्पयति। आकम्पितहृदयानुपकारितया नित्यमस्मान्करोति। कथं नामैतं नित्यं स्तुयामेति Dur.

५. इषवानन्नवान्कामवान्वा N.10.42.

६. Missing in M. यज्ञविघातकानां रक्षसां हन्ता Sy. यश्च... रक्षसां हन्ता ...कथं पुनश्चन्द्रमा रक्षसां हन्ता चेतो वा कम्पयति? उच्यते। रक्षांसि हि तमश्चराणि। चन्द्रमाश्च तमोऽपनयनेन तेषां सञ्चारं निरुन्धन्हन्ता। चेतश्च बलेनोद्यन्कम्पयति। अत उच्यते रक्षोहा मन्मेति रेजतीति SKN.
रक्षांसि बलेन स्वन्तुतरामस्माकं मन्म रेजति Dur.

७. किञ्च स्वयमात्मनैव SKN. स्वयमाआदरवान्भूत्वा Dur.

८. षष्ठ्यर्थे पञ्चमी। अस्माकमिति SKN. अस्मान्प्रति Dur.

९. ०तुं P. अस्मन्निन्दितुर्वैरिणः Sy. निन्देः क्विप्। आकारोऽभिशब्दार्थः। अभिनिन्दोऽभिनिन्दितुनाभिमुख्येन निन्दितुन् SKN.
अभिनिन्दितारम् Dur.

१०. दुर्मतिं दुर्बुद्धिम् Sy. पापबुद्धिम् SKN. पापमतिम् Dur.

११. वधैर्हननोपायैः Sy. प्रहारैः SKN. वज्रप्रहारैरतिदुःसहैः Dur.

१२. एवन० M. आक्षिपेत्। अपनयेत् Sy. जयेत् SKN. जयेत् क्षिपेद्वा Dur.

१३. अघानां पापानां हिंसादीनां शंसिता स्तेनः ...अघशंसः स्तेनः। 'अघशंसो वृकः' (Ngh. 3.24.) इति तन्नामसु पाठात् Sy. अघं पापं तद्योऽस्माकं जनेभ्यः शंसति कथयति स्फीतं करोति सोऽघशंसः SKN. तेन बातिबलवतेन्दुना हन्यमानोऽस्मदघशंसोऽस्माकं यः पापानां शंसिता कथयिता, स्वल्पानामपि स्फीतिकर्ता ... जनपदे Dur.

अवतरम्। अवस्रवेदत्यन्तमधो गच्छतु। यथा। क्षोदनीयं मशकादीति।

**वनेम तद्धोत्रया चितन्त्या वनेम रयिं रयिवः सुवीर्यं रण्वं सन्तं सुवीर्यम्।**
**दुर्मन्मानं सुमन्तुभिरेमिषा पृचीमहि।**
**आ सत्याभिरिन्द्रं द्युम्नहूतिभिर्यजत्रं द्युम्नहूतिभिः ॥७॥**

वनेम तत्। वनेम। तद् वयम्। स्तुत्याऽभिलषितम्। चेतयन्त्या। किमित्याह—वनेम। धनम्। धनवन्! शोभनवीर्यम्। रमणीयम्। भवत्। शोभनज्ञानैरपि। दुर्ज्ञानिम्। एनमिन्द्रम्।

---

१. अत्यन्तनिकृष्टम् Sy. यावच्च प्रथमं स्रुतोऽधो गतस्ततोऽवतरं ततोप्यवतरमिति Dur.

२. ०स्रवद० D. अव स्वस्थानादवाङ्मुखो भूत्वा स्रवेद् गच्छतु। अधः पतत्वित्यर्थः Sy. किञ्च त्वत्प्रसादाच्चाव स्रवेदधो गच्छेत् क्षीयेतेत्यर्थः।...स चापसृतोऽपि...अवतरां स्रवेत्। पुनरपि सुतरामवस्रवेत् SKN. तावत्स्रवेत्...यावदामूलतो नष्टमित्येतदाशास्महे।...अधोगतिः स्यात् Dur.

३. ०दिति P. ०नीय मश (मुद) कादीति M. अवस्रवणमेव प्रार्थ्यते...क्षेप्तुं शक्यमुदकादिकमिव। उदकं यथा तिष्ठति स्रवस्रवयति तथाऽसावपीत्यर्थः Sy. किमिव?...द्रव्यमुदकादि तद्वदवस्रवेत् SKN. क्षुद्रमिव द्रव्यं किञ्चित् Dur.

४. इन्दुरिन्धेः। उनत्तेर्वा। तस्यैषा भवति... प्रब्रवीमि तद् भव्यायेन्दवे। हवनार्ह इव। य इषवानन्नवान् कामवान् वा। मननानि च नो रेजयति। रक्षोहा च। बलेन रेजयति। स्वयं सोऽस्मदभिनिन्दितारम्। वधैरजेत दुर्मतिम्। अवस्रवेदघशंसः। ततश्चावतरं क्षुद्रमिवावस्रवेत्। अभ्यासे भूयांसमर्थं मन्यन्ते। यथा—अहो दर्शनीय। अहो दर्शनीयेति N. 10. 41-42.; SKN. IV. 46. VM. ignores दुर् and explains मन्म। रेजति। अव। स्रवेत्। once only.

५. सम्भजेम। यद्वा शब्दयेम। स्तुतिं करवामेत्यर्थः Sy.

६. तादृशं स्तुत्यं तव रूपम्। यद्वा तत्ते Sy.

७. वं M. वयं यजमानाः Sy.

८. होमसाधनभूतया स्तुतिरूपया वाचा। ... होत्रेति वाङ्नाम। 'होत्रा गीः' (Ngh. 1.11.) इति तन्नामसु पाठात् Sy.

९. तव गुणान् ज्ञापयन्त्या। 'चिती संज्ञाने' Sy.

१०. सम्भजेम यद्वा शब्दयेम स्तुतिं करवामेत्यर्थः Sy.

११. धन M.

१२. धनं M. विशिष्टधनवन्निन्द्र! Sy.

१३. शोभनसामर्थ्योपेतम्। ... पुनस्तदेव विशेष्यते। ... शोभनपुत्रभृत्याद्युपेतम्। धनेन तेषां सम्पादयितुं शक्यत्वात् Sy.

१४. रमणीयं गन्तव्यं वार्थिभिः Sy.

१५. सर्वदा वर्तमानं यज्ञादिद्वारा बहुशो दीयमानमपि प्रवर्धमानम् Sy.

१६. शोभनैर्मननैस्तत्साधनैः स्तोत्रैर्वा Sy.

१७. ज्ञानं P. दुःखेन मन्तुं शक्यं त्वाम्। तव महिम्नोऽतिमहत्त्वात् Sy.

१८. एनं omitted by M.

अन्नेन। सम्पृचाम। इन्द्रम्। सत्याभिः। अन्नार्थाभिः स्तुतिभिः। यजनीयम्। अन्नहेतुभिः। आपृचीमहि।

**प्रप्रा वो अस्मे स्वयंशोभिरूती परिवर्ग इन्द्रो दुर्मतीनां दरीमन्दुर्मतीनाम् ।**
**स्वयं सा रिषयध्यै या न उपेषे अत्रैः ।**
**हतेमसन्न वक्षति क्षिप्ता जूर्णिर्न वक्षति ॥८॥**

प्र प्रा वः। अस्माकम्। अयमिन्द्रः। युष्माकम्। दुर्मतीनाम्। स्वभूतयशोभिः। परिरक्षणैः। छेदने।

---

१. अनेन M. हवीरूपेणान्नेन। .. यद्वा। इषा अन्नेन निमित्तेन। पूर्वं धनस्य प्रार्थितत्वादिदानीमन्नं प्रार्थ्यते Sy.

२. संप्रपृचाम P.D. सर्वतः सम्पृक्ता भूयास्म ... 'पृची सम्पर्के' Sy.

३. अविसंवादिनीभिर्यथाभिलाषमुपजायमानफलाभिः Sy.

४. 'हरिव आगच्छ मेधातिथेर्मेष' इत्याह्वानैरित्यर्थः Sy.

५. यजनीयम् । अन्नहेतुभिः omitted by D. यागनिष्पादकम् Sy.

६. द्युम्नहूतिभिः, 'हरिव आगच्छ मेधातिथेर्मेष' इत्याह्वानैरित्यर्थः। पुनस्ता एव विशेष्यन्ते ... हविर्लक्षणान्ननिमित्तैराह्वानैः। आ पृचीमहीति शेषः Sy. द्युम्नं द्योततेः। यशो वान्नं वा N.5.5.

७. आपृची° P.

८. VM. explains सुवीर्यम् once only and ignores आ

९. प्रप्राम्वः P.

१०. अस्मदर्थं चायम् Sy. अस्माकम् SKN.

११. युष्मदर्थम् Sy. ऋत्विजामयं प्रतिनिर्देशः। अत्र पौत्रादीनां वो युष्माकमृत्विजां पुत्रपौत्रादीनां वा मदीयानाम् SKN.

१२. दुर्मननयुक्तानां विरोधिनाम् ... पुनः स एव विशेष्यते। ... दुष्टबहुमानवतां हननबुद्धीनाम् Sy. पापबुद्धीनां चास्मच्छत्रूणां नेत्यर्थः। ... दुस्स्तुतीनां च SKN. पापमतीनामस्मच्छत्रूणां हन्ता भविष्यति Dur.

१३. स्वकीययशोयुक्तैः Sy. निमित्ते चैषा तृतीया। प्रयोजनस्य च निमित्तत्वेन विवक्षा। स्वयशोभिर्निमित्तभूतैरात्मनः SKN. हे स्तोतारः! प्रब्रूतास्मै ... आत्मीयैर्यशोभिः संयुक्ताः स्तुतीः Dur.

१४. ऊतिभी रक्षणैः Sy. अवतेः कर्तर्यूतिः प्रकर्षेणाविता रक्षितेत्यर्थः SKN. यस्मादेव इन्द्रः स्तुतः ... अविता रक्षिता Dur.

१५. परितो वर्जने निमित्तभूते सति Sy. क्व पुना रक्षिता? उच्यते। परिवर्गे परिवर्ज्यन्ते प्राणैर्यत्र योद्धारः स परिवर्गः सङ्ग्रामस्तस्मिन् SKN. परिवर्गे सङ्ग्रामे, यत्र हि प्राणाः परिवृज्यन्ते वियुज्यन्ते तत्रायमस्माकं रक्षिता भविष्यति Dur.

प्र[1] प्र[2] भवति। दरणे[3] च। स्वयमेव[4]। सा। विनाशाय[5] भवतु। सेना[6]। या। अस्मान्[7]। उपगच्छति[8]। अदनशीलैः[9] राक्षसैः। सा[10] हता[11]। भवतु। नच। वहतु[12]। त्वया क्षिप्तेति[13,14]।

---

१. Omitted by P.

२. भव M. प्र प्र प्रकृष्टो भवति। समर्थो भवतीत्यर्थः। द्विर्भावः पादपूरणः। यद्वा हे ऋत्विजो वो युष्मदर्थम् ... अस्माकं सम्बन्धिभिः स्वयशोभिः स्वयमेवान्यनैरपेक्ष्येण स्तोतुं समर्थैः स्तोत्रैस्तुष्टः सन् ... ऊती रक्षणे प्र प्र प्रकृष्टो भवति। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। कुत्रेति तदुच्यते। दुर्मतीनां दुष्टानां परिवर्गे परितो वर्जनवति सङ्ग्रामे यागे वा Sy. 'प्रसमुपोदः' (P.8.1.6) इति पदपूरणे द्विर्वचनम्। उपसर्गत्वाच्चास्योतीत्यनेन क्रियाशब्देन सम्बन्धः SKN. पुनः पुनस्स्तुत Dur.

३. दरीमणि, अतिशयेन दारयितरि Sy. तमेवंगुणविशिष्टमिन्द्रं दारयितृतमं दुर्मतीनाम् Dur.

४. स्वयमेव स्वयमेव P. केन पुनः प्रकारेण रक्षिता? उच्यते। स्वयमात्मनैव SKN. कथं पुनरत्वावस्माकं रक्षिता भविष्यतीत्युच्यते। स्वयम् Dur.

५. ०या P. हिंसितुम् Sy. तृतीयार्थचंस्येनासदित्यनेन सम्बन्धो रिवयष्या असद्रेषणाय हिंसनाय भवति। इन्द्रप्रसादात्स्वयमेव वास्तो विनश्यतीत्यर्थः SKN. ... रेषणाय भविष्यति। किञ्चिदप्यकृत्वाऽस्माकमिन्द्रप्रभावात्स्वयमेव विनङ्क्ष्यतीत्यभिप्रायः Dur.

६. एवमिन्द्रे सम्यक् पालयति सति ... या जूर्णिर्जवनवती सेना Sy. शक्तिका सेना वा SKN. जवसम्पन्नापि सती शक्तिः। अत्र क्षेपणसम्बन्धाज्जूर्णिः शक्तिरित्युपपद्यते Dur. 'जूर्णिर्जवतेर्वा द्रवतेर्वा दूनोतेर्वा' N. 6.4.

७. अस्मान्प्रति Sy., SKN., Dur.

८. उपगन्तुमस्मान्प्राप्तुम्। 'ईङ् गतौ' Sy. उपेत्येष प्र इत्येतस्य स्थाने प्रेष्यते Skn. उपागच्छति Dur.

९. उद० M. भक्षकैरस्मद्विरोधिभिः Sy. अदनशीलैरस्मच्छत्रुभिः SKN. अदनै रक्षोभिः Dur.

१०. स P. सा सेना Sy.

११. हिंसितैवासीत् Sy. हता च विनष्टा सती ईमिति पदपूरणः SKN. ईमित्यनर्थकः। हता सतीन्द्रेण Dur.

१२. अस्मान्न वहेत्। न प्राप्नोति। तथास्मद्धिंसकान् शत्रूनपि पुनर्न वक्षति न वहति। ... इन्द्रसामर्थ्येन तत्रैव नष्टाभूदित्यर्थः Sy. लडर्थेऽत्र लेट्। न वहति न प्राप्नोति। ... लृडर्थे लेट्। न वक्ष्यति न प्राप्स्यति। आगामिन्यपि काल इत्यर्थः SKN. न वक्षति। ... क्षिप्तापि च तैः पुनरादरेणापि रक्षोभिः ... न वक्षति ... न प्राप्स्यतीत्यर्थः Dur.

१३. प्रेरिता Sy. प्रेरितापि सती SKN. प्रहिता Dur.

१४. VM. ignores ईम्। and explains दुर्मतीनाम्। न। वक्षति। once only. N. 6. 4; SKN. II. 403.

त्वं न इन्द्र राया परीणसा याहि पथाँ अनेहसा पुरो याह्यरक्षसा ।
सचस्व नः पराक आ सचस्वास्तमीक आ ।
पाहि नो दूरादारादभिष्टिभिः सदा पाह्यभिष्टिभिः ॥९॥

त्वं न इन्द्र राया।[1] त्वम्। अस्माकम्।[2] इन्द्र! महता।[3] धनेन।[4] पुरः। याहि।[5] अनुपद्रवेण।[6] मार्गेण।[7] रक्षोवर्जितेन।[8] सेवस्व।[9] अस्मान्। दूरे।[10] अन्तिके[11] च। रक्ष।[12] अस्मान्।[13] दूरात्।[14] अन्तिकाच्च।[15] अभ्येषणैः।[16] सदैव।[17][18]

त्वं न इन्द्र राया तरूषसोग्रं चित्त्वा महिमा सक्षदवसे महे मित्रं नावसे ।
ओजिष्ठ त्रातरविता रथं कं चिदमर्त्य ।
अन्यमस्मद्रिरिषेः कं चिदद्रिवो रिरिक्षन्तं चिदद्रिवः ॥१०॥

त्वं न इन्द्र राया।[19] त्वम्। अस्माकम्।[20] इन्द्र![21] धनेन।[22] तरणकुशलेन[23] रक्ष।[24] उग्रम्।[25]

---

१. तत्र P.
२. अस्मत्सम्बन्धिना Sy.
३. परीणसा परितो नद्धेन Sy.
४. अस्मभ्यं दातव्येन बहुविधधनेन युक्तः सन् Sy.
५. आगच्छ।... यद्वा नोऽस्मानुद्दिश्य याहि Sy.
६. अपापेन। यज्ञगमनमार्गस्य स्तुतिचोदितत्वादनेहस्त्वम् Sy.
७. मार्गेण
८. ० ते P. रक्षावर्जिते D.
९. आ सचस्व समवेतो भव Sy.
१०. अत्यन्तदूरदेशात्स्वर्गलक्षणात्।...पराक इति दूरनाम। 'पराके पराचैः' (Ngh. 3.26) इति तन्नामसु पाठात् Sy.
११. अत्यन्तान्तिके देवयजनदेशे सचस्व अस्मत्प्रत्तं हविः सेवस्व, सङ्गच्छस्व वा Sy.
१२. पाहि रक्ष।... पालय Sy.
१३. मस्मान् P.
१४. दूरदेशात्स्वर्गादेः सकाशात्।...यद्वा दूरादयागकाले स्वर्ग एवोषित्वा Sy.
१५. आरात्सन्निहितादिह लोकात्।...यागकाले सन्निहिते देवयजनदेशे Sy.
१६. ० षे ० P.
अभिमुखैर्यागैस्तन्निर्वाहैः। यद्वा। अभ्यागमनैः Sy.
१७. सर्वकालं यागकालेऽयागकाले दूरेऽन्तिके च ... अभित एषणैः ... सम्यक् परिपालय Sy.
१८. VM. explains याहि। सचस्व। पाहि। अभिष्टिभिः। once only, and ignores आ। आ
१९. रायाः P.
२०. अस्मान् Sy.
२१. Omitted by P.
२२. धने P. धनेनोद्धर्ता भवेति शेषः Sy.
२३. अस्मानापद्भ्य उत्तरीतुं शक्तेन Sy.
२४. रक्षा D. P.
२५. उद्गूर्णबलम् Sy.

चित्[1]। त्वाम्[2]। महिमा[3]। सेवते[4]। महते। रक्षणाय[5]। सखा[6]। इव। बलिष्ठ[7]! पालक[8]! रक्षक[9]! कम्। चन। अमर्त्य[10]! रथमातिष्ठ[11]। अस्मत्तः[12]। अन्यम्। कम्। चित्[13]। हिंस्याः[14]। हिंसितुमिच्छन्तम्[15]। अद्रिवन्[16]![17]

**पाहि न इन्द्र सुष्टुत स्रिधोऽवयाता सदमिद्दुर्मतीनां देवः सन्दुर्मतीनाम् ।**
**हन्ता पापस्य रक्षसस्त्राता विप्रस्य मावतः ।**
**अधा हि त्वा जनिता जीजनद्वसो रक्षोहणं त्वा जीजनद्वसो ॥११॥**

पाहि न इन्द्र। पाहि[18]। अस्मान्[19]। इन्द्र! सुष्ठु स्तुत[20]! शोषयितुः[21]। अभिगन्ता[22]। सदा[23]। एव। दुर्मतीनाम्[24]। देवनशीलः[25]। हन्ता[26]। कुत्सितस्य[27]। रक्षसः। त्राता च[28]। मेधाविनः[29]।

---

१. सन्तम् Sy. २. उपाञ्चित्वा P. जित्वा D. ३. महत्त्वम्। अस्मत्स्तोत्रजनितः कश्चिदतिशयः Sy.
४. सम्भजते। उत्कर्षयतीत्यर्थः Sy.
५. स्वत्प्रीतये।... अवसे रक्षणाय प्रकाशारोग्यादिरूपाय Sy.
६. सखे P.D.M. सर्वजनमित्रं सूर्यमिव। तं यथा महत्त्वेन संयोजयन्ति तथेत्यर्थः। यद्वा मित्रं न प्रियहितरूपं सखायमिव। तं यथा महत्वं प्रीतये सम्भजन्ते तद्वत् Sy.
७. ओजस्वितम! अतिशयेन बलवन्! Sy.
८. रक्षितः! अस्मान्पालयितर्वा Sy.
९. अवितः! अस्मान्धनेन तर्पयितः Sy.
१०. अमत्य P. अमत्त M. अमरणधर्मन्निन्द्र!
११. रथति० D. रथं ति० P. रथं वेगवन्तमारुह्यास्मद्देवयजनं शीघ्रमागच्छेति शेषः Sy.
१२. अल्पं महान्तं वा। शत्रुमिति शेषः Sy.
१३. चिदित्ययकुत्सिते। 'कुल्माषांश्चिदाहरेत्यवकुत्सिते' (N. 1.4.) इति यास्केनोक्तत्वात्। यद्वा समुच्चयार्थः। कञ्चिदित्यनेन सह समुच्चीयते Sy.
१४. हिं...स्या M. हिंस्या P. हिंस्यात् D. बाधस्व। 'रिष हिंसायाम्' Sy.
१५. अत्यन्तं कुत्सितं हिंसन्तमपि शत्रुम् Sy.
१६. शत्रूणामतिशयेन भक्षक!... अद्रेरादर्तर्भक्षक वा शत्रूणाम् Sy. अद्रिवन्। अद्रिरादृणात्येनेन। अपि वात्तेः स्यात् N. 4.4.
१७. V.M. explains अवसे। चित्। अद्रिवः once only.
१८. रक्ष Sy.
१९. M. Adds न after अस्मान्
२०. शोभनस्तुत! Sy.
२१. शोचयि० P.D. दुःखोत्पादकात्पापाद्वा Sy. २२. अवयाता, अधो यापयिता प्रापयितासि। अतः पाहि Sy.
२३. सर्वदा Sy. २४. दुर्मनस्कानां रक्षःप्रभृतीनाम्।...दुष्टमननवतां यागविघातकानाम् Sy. २५. अस्मत्स्तुत्या हृष्टः सन् Sy. २६. घातकोऽसि Sy.
२७. रक्षणनिमित्तभूतस्य...तादृशस्य पापस्य फलप्रतिबन्धरूपस्य। ...यद्वा पापस्य पापिनो रक्षसो राक्षसादेः Sy. रक्षो रक्षितव्यमस्मात् N. 4.18.
२८. रक्षितासि Sy.
२९. मेधाविनो यजमानस्य Sy.

मत्सादृशस्य। एतस्मात्कारणात्। प्रवास्ते त्वाम्। तव पिता। जनयति स्म। रक्षसां हन्तारम्।

I.130.

एन्द्र याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्तं राजेव सत्पतिः।
हवामहे त्वा वयं प्रयस्वन्तः सुते सचा।
पुत्रासो न पितरं वाजसातये मंहिष्ठं वाजसातये ॥१॥

एन्द्र याह्युप नः। इन्द्र! उपागच्छ। अस्मान्। दूरात्। न। अयं सोमः। अभिगच्छति हविराहवनीयम्। गृहानिव। राजा। तदेवाह—अस्तमिति। हवामहे। त्वा। वयम्। अन्नवन्तः।

---

१. अथ, अतो हेतोः। 'तमिन्द्रो देवतान्वसृज्यत' (TS. 7. 1. 1. 4.) इत्यादिप्रसिद्ध ? (हि) द्योतनार्थो हिशब्दः Sy.

२. वसो सर्वेषां निवासभूत! Sy.

३. ० स्तत्वास्तव M.

४. सर्वस्य जनयिताऽविकर्ता परमेश्वरः Sy.

५. अजनयत्। उत्पादितवान् Sy.

६. तथा हे वसो वासयितः ... त्वां ... रक्षोहननायोत्पादितवान्। ... यज्ञादिविघातिनां रक्षःप्रभृतीनां विघाताय हीन्द्रस्यावतारः Sy.

७. VM. ignores सन्। हि। वसो and explains दुर्मतीनाम्। त्वा। जीजनत् once only.
Ms. D. puts the figure ॥१२६॥ here to indicate the end of one hundred and twentyninth hymn. No such number is given in P. and M.

८. प्रत्यागच्छ Sy.

९. अस्मत्समीपम् Sy.

१०. परावतो दूरदेशात्स्वर्गलक्षणात् Sy.

११. न इव। यद्यपि पुरस्तादुपाचारान्निषेधार्थीयो नकारः सर्वत्र तथाप्यत्रोपरिष्टादुपचारादित्येनोपमार्थीयो गृह्यते। यद्वा परावतो न दूरदेशादिव, यद्यपि यज्ञे सर्वदा सन्निहितस्तथापि स्वर्गाख्याद्दूरदेशादिवास्मिन्यज्ञे Sy.

१२. पुरोवर्त्यग्निरभिषुतः सोमो वा प्रस्तुतत्वान्निर्दिश्यते। . . . अयमिति विभक्तिव्यत्ययः। अमुं देवयजनदेशम् Sy.

१३. अच्छ, अभिप्राप्तुमायाहीति शेषः Sy.

१४. ० विदाह० D.

१५. विदथानि वेदनानि, अनुष्ठेयज्ञानानि Sy.

१६. तत्र दृष्टान्तः। सत्पतिः सतां सर्वदा वर्तमानानामृत्विजां पालको यजमान इव। ... यद्वा सतां विद्यमानानां फलानां पालकोऽग्निः, स यथा विदथानि यज्ञगृहाण्यागच्छति तद्वत्त्वमपि यज्ञगृहाण्यागच्छ। यद्वा। सतां नक्षत्राणां पती राजा चन्द्रमाः। स यथा ... आगच्छति तद्वत् Sy.

१७. स्वधामस्थानम् Sy.

१८. आह्वयामः Sy.

१९. त्वाम् Sy.

२०. यजमानाः Sy.

२१. ०महे . . . मन्नवन्त M. हविर्लक्षणान्नवन्तः Sy.

सुते[1]। सह विप्रैः[2]। पुत्राः। इव। पितरम्[3]। अन्नभजनाय[4]। दातृतमम्[5]।[6]

**पिबा सोममिन्द्र सुवानमद्रिभिः कोशेन सिक्तमवतं न वंसगस्तातृषाणो न वंसगः।**
**मदाय हर्यताय ते तुविष्टमाय धायसे।**
**आ त्वा यच्छन्तु हरितो न सूर्यमहा विश्वेव सूर्यम् ॥२॥**

पिबा सोममिन्द्र[7]। पिब[8]। सोमम्। इन्द्र[9]! अभिपूयमाणम्[10]। ग्रावभिः[11]। भस्त्रया[12]। सिक्तजलम्[13]। आहावम्[14]। इव। तृषितः[15]। ऋषभः[16]। मदार्थम्[17]। तुभ्यम्[18]। वृद्धतमाय[19]। पानाय[20]। आयच्छन्त्वश्वाः[21]। त्वाम्[22]। हरितः[23]। इव। सूर्यम्[24]। अहानि[25]। सर्वाणीव[26]। सूर्यम्[27]।[28]

---

१. अभिषुते सोमे निमित्तभूते सति Sy.
२. ऋत्विग्भिः सहिताः Sy. सचा सहेत्यर्थः N.5.5.
३. आह्वाने दृष्टान्तः।...बालकं जनकमिव। तं यथा ... आह्वयन्ति तथा वयमपि त्वां तदर्थमाह्वयामः Sy.
४. अन्नं भ० P.M. अन्नस्य सम्भजनाय... सङ्ग्रामप्राप्तये तज्जयाय हविःस्वीकाराय वा Sy.
५. मंहिष्ठं मंहनीयं त्वाम्...आह्वयामः Sy.
६. VM. ignores राजेव and explains सत्पतिः। वाजसातये once only.
७. इन्द्र is omitted by P. D.
८. पिबा P.D. वंसगो वननीयगमनस्त्वं... पिब Sy. ९. पिब। सोमम्। इन्द्र! omitted by M.
१०. सुवानं सूयमानम्। कर्मणि कर्तृप्रत्ययः Sy.
११. अभिषवसाधनैर्ग्रावभिः Sy.
१२. ० भिस्त्रया P. ० भि ?...सूया M. कोशस्थानीयेन दशापवित्रेण Sy.
१३. शोषितम्। यद्वा अवतमित्यनेन सह सम्बन्धः। कोशेनेति लक्षणेन (?) सिक्तं, स्वोचितजलेन पूरितम् Sy.
१४. आहावलक्षणमवतमिव। तं यथा ... पिबति तद्वत् Sy.
१५. तृषा शीघ्रगामी...यथाऽत्यन्तं तृषितो वंसगो वननीयगमनः शीघ्रगामी पुरुष आहावादिकमागत्य पिबति तद्वत् Sy.
१६. वृषभः Sy.
१७. मदाय तृप्तये। हर्यताय विक्रान्तिहेतवे कान्त्यर्थं वा। 'हर्य गतिकान्त्योः' Sy.
१८. तव Sy.
१९. महत्त्वाय प्रवृद्धत्वाय Sy.
२०. यदर्थं मद उपजायते तदर्थाय।...यद्वा ते तव तुविष्टमाय धायसे धतिप्रभूताय पानाय Sy. २१. आ is omitted by D. आभिमुख्येन गमयन्तु। अश्वा इति शेषः Sy. २२. ० न्त्वस्मा: P.
२३. The passage beginning with वृद्धतमाय and ending with त्वाम् is missing in M.
२४. तत्र दृष्टान्तः। . . . हरिद्वर्णविशिष्टा एतन्नामका अश्वाः सूर्यमिव। तं यथाऽतित्वरयाऽभिमतदेशमभिप्रेरिता वहन्ति तद्वत् Sy.
२५. M. adds च after अहानि
२६. ० नीव M. २७. तं यथा त एव प्रतिदिनं वहन्ति तथाऽस्मद्यागदिवसेषु प्रतिदिनमावहन्तु Sy.
२८. VM. ignores हर्यताय and explains न। वंसगः once only.

अविन्दद्दिवो निहितं गुहा निधिं वेर्न गर्भं परिवीतमश्मन्यनन्ते अन्तरश्मनि ।
व्रजं वज्री गवामिव सिषासन्नङ्गिरस्तमः ।
अपावृणोदिष इन्द्रः परीवृता द्वार इषः परीवृताः ॥३॥

अविन्दद् विदः। असुरैर्गुहायाम्[1]। निहितम्[2]। दिवः[3]। निधिं[4] सोमम्। इन्द्रोऽविन्दत्[5]। पक्षिणः[6]। इव। गर्भम्[7]। जरायुणा परिवेष्टितम्[8]। पर्वते[9]। महति[10]। अन्तः। गोव्रजम्[11]। आयुधवान्[12]। सम्भक्तुम्[13]। बृहस्पतिरिव। अपावृणोत्[14]। अन्नानि[15] सोमलक्षणानि[16]। इन्द्रः। पर्वते[17] परिवृतानि[18]। द्वाराणि। अन्नान्यपावृणोदिति द्विकर्मकः[19]।

दादृहाणो वज्रमिन्द्रो गभस्त्योः क्षद्मेव तिग्ममसनाय
सं श्यदहिहत्याय सं श्यत् ।
संविव्यान ओजसा शवोभिरिन्द्र मज्मना ।
तष्टेव वृक्षं वनिनो नि वृश्चसि परश्वेव नि वृश्चसि ॥४॥

दादृहाणः। दृंहयन् धारयन्[20]। इन्द्रः। वज्रम्।

---

१. अतिगोप्ये प्रदेशे पर्वतादौ Sy.
२. स्थापितम् Sy.
३. द्युलोकादानीतं सोमम् Sy. ४. अत एव निधिं निधिस्थानीयमनाद्यमित्यर्थः Sy.
५. अलभत, लब्धवान्। द्युलोकाद् गायत्र्या पक्षिरूपयाऽऽहृतं भूमावानीतं स्वीकृतवानित्यर्थः। द्युलोकादानयनं तैत्तिरीये। 'तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्' (TB. 3.2.1.1.) इत्यादिषु प्रसिद्धम् Sy.
६. आनयने दृष्टान्तः।...यथा कपोतादिस्त्री पक्षिणी स्वशिशुं व्याधादिभयात्कस्मिंश्चिद्दुर्गमे स्थापयित्वा तत्स्थानमजानती परिभ्रम्य विन्दते तद्वदित्यर्थः Sy.
७. शिशुम् Sy.
८. लताकण्टकादिना परितो वेष्टितम् Sy. जरायुणा is suggested for जरायुषा
९. पाषाणे।... अनन्तेऽश्मनि, अपरिमितपाषाणे पर्वतादौ Sy. १०. अतिमहति विस्तृते Sy. ११. गवां व्रजमिव Sy.
१२. ० वा D. तत्स्वपीतरेषु देवेषु कोऽस्यातिशय इति तत्राह। अयमिन्द्रः...वज्रवान्। ...पणिनाऽसुरेणापहृतं भूमौ खनित्वा पाषाणेन पिहितद्वारं गवां व्रजं यथा तमसुरं जित्वा द्वारमुद्घाट्य लब्धवांस्तद्वत् Sy.
१३. ०क्तु D. ० व्रज...वान्...संभक्त M. सोमं सिषासन् सम्भक्तुमिच्छन् Sy.
१४. अपावृतान्यकरोत्। उद्घाटितवानित्यर्थः Sy. १५. अन्नहेतुभूतस्योदकस्य... इष्यमाणानि व्रीह्याद्यन्नानि Sy.
१६. ०णान् M. १७. पूर्वत P. भूमौ Sy.
१८. परितो मेघेनावृताः...परितो व्याप्तान्यकरोत्। वज्रेण मेघं भित्त्वा जलवर्षणेन सस्यादिसमृद्धिं कृत्वा व्रीह्यादिकं भूमौ व्याप्तमकरोदित्यर्थः। अतोऽयमेवं कृतवानतः सोमस्वीकारो युक्तः Sy.
१९. VM. explains अश्मनि। परीवृताः once only. २०. दृढं गृह्णन् Sy.

बाह्वोः[1]। परशुमिव[2] शकलीभावसाधनम्। तीक्ष्णम्[3]। निरसनाय[4]। तीक्ष्णीकरोति। अहिं[5] हन्तुम्[6]। परियमाणः[7] ?। बलेन[8]। मज्मकेन[9] ?। परसेनाभिः[10]। त्वमिन्द्र! तष्टेव[11]। वृक्षम्[12]। परशुना। भजवतः[13] ? शत्रून्[14]। निवृश्चसि[15][16]।

**त्वं वृथा नद्य इन्द्र सर्तवेऽच्छा समुद्रमसृजो रथाँइव वाजयतो रथाँइव ।**
**इत ऊतीरयुञ्जत समानमर्थमक्षितम् ।**
**धेनूरिव मनवे विश्वदोहसो जनाय विश्वदोहसः ॥५॥**

त्वं वृथा। त्वम्। अनायासेन[17]। नदीः। इन्द्र[18]! सरणाय[19]। उदधिम्। प्रत्यञ्जसा[20]। विसृजसि[21]। रथानिव[22] सारथयः। अन्नमिच्छमानाः[23] शत्रुभ्यः[24]। अस्मादिन्द्रान्मरुतः[25][26]। साधारणम्[27]।

---

१. गभस्तीति बाहुनाम, 'गभस्ती ... बाहू' (Ngh. 2.4.) इति तन्नामसु पाठात् Sy. २. तत्र दृष्टान्तः। क्षयेव उदकमिव। उदकं यथा शत्रूणां निरसनायाभिमन्त्रणादिसंस्कारेण तीक्ष्णीक्रियते तद्वत्। क्षयेत्युदकनाम, 'क्षप नभः' (Ngh. 1.12.) इति तन्नामसु पाठात् Sy. ३. अत्यन्ततीक्ष्णं वज्रम् Sy.

४. तीक्ष्ण ... रसनाय M. शत्रोरुपरि क्षेपणाय Sy.

५. अर्सि M. पुनरपि तदेव विशेष्यते ... अहेर्वृत्रस्य मेघस्य वा Sy.

६. हन्तु P. हननाय। ... पूर्वमेव तीक्ष्णं सत्पुनरपि वधाय तीक्ष्णयति Sy.

७. सम्यग्युक्तः सन् Sy. परीयमाणः is suggested for परियमाणः

८. पराभिभवनसामर्थ्येन Sy.

९. मजकेन P.D. शारीरेण च बलेन Sy.

१०. ० पित्त्वम् P. सेनालक्षणैर्बलैः Sy.

११. तक्षेव M. यथा कश्चित्तष्टा वृक्षाणां तक्षणस्य साधु कर्ता Sy.

१२. वनसम्बन्धिनो वृक्षान् निवृश्चति, स्वोपयोगाय नितरां छिनत्ति तक्षणेन तनूकरोति तथा त्वमपि ... शत्रुं निवृश्चसि Sy.

१३. भजतवः P. अस्मासु वधमाचरन्तम् Sy.

१४. अस्मद्द्वेषिणम् Sy.

१५. नियृच्छसि D. यथा परशुना कश्चिच्छिनत्ति वृक्षं तथा त्वमप्युक्तैस्त्रिविधैर्बलैर्नितराम् ... वृश्चसि Sy.

१६. VM. explains सम्। इयत्। नि। वृश्चसि once only.

१७. वृथा मना० M. अप्रयत्नेनैव Sy.

१८. P. reads नरिन्द्र for नदीः and इन्द्र।

१९. सर्तवे प्राप्तुम् Sy. २०. प्रत्यञ्जरा (सृजः) M. अच्छ... आभिमुख्येन Sy.

२१. मेघं निर्भिद्योत्पादितवानसि Sy.

२२. तत्र दृष्टान्तः। ...यथा त्वं रथानस्मयागं प्रति ... आभिमुख्येन प्राप्तुमसृजः सृष्टवानसि तद्वत् Sy.

२३. सङ्ग्राममन्नं वेच्छन्तो राजानयो रथानिव। ते यथा सङ्ग्रामं प्रत्योघष्याधिकं वाऽतिसर्तुं रथान् सृजन्ति तद्वत् Sy.

२४. ० नान् P. D.

२५. इतोऽस्मत्सन्निधिदेशात्। द्वितीयार्थे तसिल् अस्मान्प्रति Sy.

२६. ० दिन्द्रा P. दिन्द्र D.

२७. समानप्रयोजनवत्। ... अर्थशब्द उदकविशेषणः सन्नपुंसकलिङ्गः Sy.

वृष्टिलक्षणम्। उदकम्[1]। गमनशीलम्[2]। प्राप्ताः[3]। धेनवः[4]। सर्वस्य दोग्धारः[5]। जाताय[6][7]।

इमां ते वाचं वसूयन्त आयवो रथं न धीरः
स्वपा अतक्षिषुः सुम्नाय त्वामतक्षिषुः।
शुम्भन्तो जेन्यं यथा वाजेषु विप्र वाजिनम्।
अत्यमिव शवसे सातये धना विश्वा धनानि सातये ॥६॥

इमां ते वाचम्। इमाम्[8]। ते[9]। वाचम्[10]। धनकामाः[11]। मनुष्याः[12]। रथम्[13]। इव। प्राज्ञः[14]। शोभनकर्मा[15]। संस्कृतवन्तः[16]। सुखाय[17]। त्वां च। शोभयन्तः[18]। जयशीलम्[19]। यथा। सङ्ग्रामेषु। प्राज्ञ[20]! अश्वं[21] संस्कुर्वन्ति[22]। अतनशीलम्[23]। बलकराय[24]। विश्वान्येव[25]।

---

१. अक्षितमित्युदकनाम। 'अक्षितं बर्हिः' (Ngh. 1.12.) इति तन्नामसु पाठात् Sy.
२. उत्यो गमनवत्यो रक्षणवत्यो वा नद्यः Sy.
३. योजितवत्यः। त्वत्प्रसादादिति भावः Sy.
४. तत्र दृष्टान्तः। मनवे मनोरर्थाय. . .धेनवो यथा Sy. ५. सर्वार्थदोग्ध्र्योऽभवन् Sy. दोग्ध्र्यः is suggested for दोग्धारः
६. ०ग्धा यो जताय P. यथा वा जनाय यस्मै कस्मैचित्समर्थाय तदर्थं विश्वदोहसो भवन्ति सर्वक्षीरप्रदा भवन्ति। यद्वा जनाय सर्वजनार्थं सस्यादीनभिलक्ष्य नद्यो विश्वदोहसः सम्पूर्णदोग्ध्र्यो भवन्ति। सर्वत्र प्रवहन्ति। अत्र नद्यः प्रीणनाद्दोहस इत्युपचर्यते Sy. ७. ईदृग्जगदुपकारिवृष्टिप्रद इतीन्द्रस्यैव स्तुतिः Sy. VM. ignores इव। मनवे and explains रथानिव। विश्वदोहसः once only.
८. इमां क्रियमाणाम् Sy. ९. मे M. त्व दर्थम् Sy. १०. स्तुतिरूपां वाचम् Sy.
११. धकमाः M. धनमात्मन इच्छन्तः Sy.
१२. वातप्यहवीक्त्पाप्रवन्त ऋत्विजः। आयव इति मनुष्यनाम। 'आयवोऽनवः' (Ngh. 2.3.) इति तन्नामसु पाठात् Sy. The order of the Ngh. is however not followed by Sy. in these quotations.
१३. रथमिव। तं यथा प्रयत्नेन साधु करोति तद्वत् Sy. १४. प्राज्ञाः P. धीरो धीमान् Sy. १५. शोभनकर्मवान्कुशली Sy.
१६. संस्तुतवन्तः P. अतक्षिषुः सम्पादितवन्तः . . . अनुकूलमुत्पादयन्ति Sy.
१७. सुम्नमिति सुखनाम। 'सुम्नं सुम्यम्' (Ngh. 3.6.) इति तन्नामसु पाठात् Sy. The order of the Ngh. is however not followed by Sy. in these quotations.
१८. गुणैर्दीपयन्तः Sy. १९. जयशीलं शूरम् Sy.
२०. मेधाविन्निन्द्र! Sy. २१. प्राज्ञाश्च P.
२२. कुर्वन्ति P. D. ०न्तु M. त्वाम्. . . स्तुत्या प्रीणयन्ति। तत्र दृष्टान्तः। . . . यथा . . . भटाः स्तुवन्ति तद्वत् Sy.
२३. यद्वा . . . वाजिनं वेगवन्तम् . . . यथोत्साहयन्ति तद्वत् Sy. २४. ०कर M. बलाय। धना धनानां सातये लाभाय च स्तुम इति शेषः Sy. २५. न केवलं धनमात्रम्। किन्तु . . . कृत्स्नानि Sy.

धनानि[1]। त्वरतु[2]? । सम्भक्तुम्[3]।

भिनत्पुरो नवतिमिन्द्र पूरवे दिवोदासाय महि दाशुषे नृतो वज्रेण दाशुषे नृतो।
अतिथिग्वाय शम्बरं गिरेरुग्रो अवाभरत्।
महो धनानि दयमान ओजसा विश्वा धनान्योजसा ॥७॥

भिनत् पुरः। भिन्नवानसि। नवतिम्[4]। पुरीः[5]। पुरवे[6]। दिवोदासाय[7]। महद्धविः। प्रयच्छते। नेतः[8]! वज्रेण[9]। अतिथीन्[10] प्रति गच्छते दिवोदासाय। शम्बरम्[11]। उग्र[12] इन्द्रः। शिलो-च्चयमाद्गिरात्[13]। अधो[14] हृतवान्[15]। महान्[16] शम्बरस्य। सर्वाण्येव[17]। प्रयच्छन्[18]। बलेन[19]।

इन्द्रः समत्सु यजमानमार्यं प्रावद्विश्वेषु शतमूतिराजिषु स्वर्मीळ्हेष्वाजिषु।
मनवे शासदव्रतान्त्वचं कृष्णामरन्धयत्।
दक्षन्न विश्वं ततृषाणमोषति न्यर्शसानमोषति ॥८॥

इन्द्रः समत्सु। इन्द्रः। सङ्ग्रामेषु[20]। यजमानम्[21]। त्रैवर्णिकम्[22]। प्ररक्षति। सर्वेषु। अनेक-

---

१. प्रीणनसाधनानि गवादिधनानि। षष्ठयर्थे द्वितीया। तेषां लाभाय Sy. २. सम० D. तत्र दृष्टान्तः। धना धने सङ्ग्रामे शवसे वैरिजयसाधनबलाय सातये तेषामेव धनानां प्राप्तये च...सततगामि-नमश्वमिव। तं यथा स्तुवन्ति तद्वत् Sy.
३. VM. ignores इव। धना and explains अलिप्सुः। सातये once only.
४. एतत्सङ्ख्याकानि Sy. ५. शत्रूणां पुराणि Sy. ६. अभिमतपूरकाय Sy.
७. मनुष्यनामैतत् । महि महते दिवोदा-सायैतन्नामकाय राज्ञे Sy.
८. नतेः D. नृतो रणे नर्तनशील!...तथा हे नृतो गात्रविक्षेपणकुशल! हस्तपादावि-प्रक्षेपेण शत्रूणां हिंसक! Sy.
९. क्षेपणसमर्थेनायुधेन।...दिवोदासायाप्यस्मै वा भिनत्। तमपि शत्रुं भिन्नवानसि Sy.
१०. इदानीं परोक्षेणाह। पूजार्थमतिथि गच्छते दिवोदासाय तदर्थम् Sy.
११. पूर्वं पुरभेदनसमये विद्धमप्यम्रियमाणं गिरिमारूढं शम्बरमेतन्नामानमसुरम् Sy.
१२. उद्गूर्णबलः Sy.
१३. गिरेर्दुर्गमात्पर्वतादेः सकाशात् Sy.
१४. ओजसा स्वकीयेन बलेन Sy.
१५. अवाङ्मुखमवकृष्य प्राणं हृतवान् Sy.
१६. महन् P. किं कुर्वन्।...महान्ति धनानि तदीयगवाश्वादीनि Sy. १७. ०ण्ये D. न केवलमल्पं धनं, किन्तु...धनानि सर्वाण्यपि तेषां मणिमुक्तादीनि Sy.
१८. दयमानो दिवोदासाय राज्ञे साधयन् Sy.
१९. VM. ignores इन्द्र। धनानि and explains दाशुषे । नृतो । ओजसा once only.
२०. रणेषु प्रहारनिमित्तेषु । समत्स्विति सङ्ग्रामनाम। 'समत्सु...समरणे' (Ngh.2.17)इति तन्नामसु पाठात्Sy.
२१. यष्टारम् Sy. २२. त्रैव ० D. आर्यमरणीयं सर्वैर्गन्तव्यम् Sy.

रक्षणः[1]। युद्धेषु[2]। सर्वकामानां सेक्तृषु[3]। आजिषु[4] सोऽव्यम्। अयजमानान्[5]। मनवे[6] राज्ञे। शासत्[7]।
मेधम्[8]। वशमनयत्[9]। सर्वं[10] जनम्। न। दहति[11]। हिनस्ति[12]। परस्वेषु तृष्यन्तम्[13]। बाधमानम्[14]।[15]

सूर॑श्च॒क्रं प्र वृ॑हज्जा॒त ओज॑सा प्रपि॒त्वे वाच॑मरु॒णो मु॑षायतीशा॒न आ मु॑षायति ।
उ॒शना॒ यत्प॑रा॒वतोऽज॑गन्नू॒तये॑ कवे ।
सु॒म्नानि॒ विश्वा॒ मनु॑षेव तु॒र्वणि॒रहा॒ विश्वे॑व तु॒र्वणिः॑ ॥९॥

सूरश्चक्रम्[16]। सूर्यात्[17]। रथस्य चक्रम्[18]। ओजसा[19]। जनित[20] इन्द्रः। असुरवधाय प्र वृहत्[21]।

---

१. स्वभक्तेष्वपरिमितरक्षणः ।... लिङ्ग-व्यत्ययः Sy.

२. आजिषु सर्वेषु स्पर्धानिमित्तेषु सङ्ग्रामेषु यजमानं प्रावत् Sy.

३. स्वर्गदेशेषु सुखस्य सेचयत्सु वा Sy.

४. महासङ्ग्रामेषु प्रावत् स्वर्गप्रदानेन रक्षति । रण आभिमुख्येन हतानां वीराणां स्वर्गः पराशरेण स्मर्यते—

द्वाविमौ पुरुषौ लोके
सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च
रणे योऽभिमुखो हतः ॥

(पराशरस्मृतौ ३. २५.) इति Sy.

५. अत्रेतिहासमाचक्षते। अंशुमती नाम नदी। तस्यास्तीरे कृष्णनामाऽसुरो वर्णतश्च कृष्णो दशसहस्रैरनुचरैरुपेतस्तद्देशवर्तिनः पीडयन्नास्ते । तत्रेन्द्रो बृहस्पतिना प्रेरितः सम्मरुद्भिः सहितः कृष्णां तदीयत्वचमुत्कृत्य सानुचरमवधीत् । अयमर्थः 'अव द्रप्सो अंशुमतीमतिष्ठत्' (RV. VIII. 96.13) इत्यादिनोपरिष्टाद् वक्ष्यते। तदत्रोच्यते। ...अव्रतान् व्रतमिति कर्मनाम। तद्रहितान्यागविद्वेषिणः Sy.

६. मनुष्याय। विभक्तिव्यत्ययः। मनुष्याणामर्थाय Sy.

७. शंसत् D. शासत् P. शिक्षितवान्। हिंसितवान् Sy.

८. कृष्णां त्वचं कृष्णनाम्नोऽसुरस्य कृष्णवर्णां त्वचम् Sy.

९. उत्कृत्य ...हिंसितवान् Sy.

१०. ० नयत्सोऽव्यं सर्वं M.

११. देहति M.P. M. Adds न after दहति। भस्मीकरोति Sy.

१२. ह० P. दहति। यत्किञ्चिदवशिष्टमिति नेत्याह ... हतावशिष्टं सर्वमपि नि ओषति निःशेषेण दहति Sy.

१३. तृष्य० P.D. हिंसकं तदनुचरसङ्घम् Sy.

१४. अशंसानं हिंसार्थिनम् Sy.

१५. VM. explains ओषति once only and ignores नि ।

१६. अत्रापीतिहासमाचक्षते । केचनासुराः पूर्वमिन्द्रयज्ञेण वधो मा भूदिति ब्रह्मणो वरं लब्ध्वा, इन्द्रमगणयित्वोद्धृता आसन्। तान्हन्तुमिन्द्रः सूर्यरथस्य चक्रमादायावधीदिति। तदिदमुच्यते ... सूर्यस्य। षष्ठ्यर्थे प्रथमा Sy.

१७. सूर्य P.

१८. चक्रमादाय Sy.

१९. शारीरेण बलेन Sy.

२०. समृद्धः सन् Sy.

२१. प्रा M. प्रक्षिप्तवान् Sy.

अथासुरेषु प्राप्तावेव[1]। असुरैरपहृतां[2] तां वाचम्[3]। आरोचमानः[4]। मुषायति स्म[5]। ईश्वरः[6]। यदा[7]। काव्य उशनाः[8]। दूरात्[9] त्वां प्रति। कवे[10]! तत्परिरक्षणार्थम्। जगाम[11] तदानीम्। साधनानि[12]। विश्वानि[13]। यथा। क्षिप्रकारी मनुष्यः[14]। अतितरति[15]। यथा[16] वा। अहानि[17]। सर्वाण्यादित्य एवं दुरितानि सर्वाण्यतितरन्ति[18] स्म[19]।

**स नो॒ नव्ये॑भिर्वृषकर्मन्नु॒क्थैः पुरां॑ दर्तः पा॒युभिः॑ पाहि श॒ग्मैः।**
**दि॒वो॒दा॒सेभि॑रिन्द्र॒ स्तवा॑नो वावृधी॒था अहो॑भिरिव॒ द्यौः ॥१०॥**

स नो नव्येभिः। सः[20]। अस्मान्[21]। नवतरैः। वर्षणशीलकर्मन्[22]! उक्थैः[23]। पालनैः[24]।

---

१. प्रपित्वे तेषां समीपे तत्समीपमागत्य। ...प्रपित्व इत्यासन्ननाम Sy.
२. ०हृततां D.
३. वागुपलक्षितं प्राणम् Sy.
४. अरुणवर्णोऽत्यन्ततेजोयुक्तः सन्। यद्वा गमनशीलः सन् Sy.
५. ०वि D. मुमोष मुष्णाति वा। ... यद्वा वाचं तेषां प्रहारध्वनिं मुषायति। तेषु हतेषु ध्वनिः स्वयमेव विश्रान्तो भवति। अवधीदित्यर्थः Sy.
६. ० रेण P. अथवा। इन्द्र एव सूर्यात्मनः सन्नादित्यात्मना स्तूयते। सूरः सूर्यो जात उदितः सन्नोजसा स्वकीयेन तेजसा युक्तश्चक्रं प्र वृहत् तमोनिवारणार्थमसुरजयाय वा चक्रोपलक्षितं रथं प्रकर्षेणोद्यतं करोति। ततः पूर्वमरुणस्तद्रथयन्ता प्रपित्वे मन्देहाद्यसुराणां प्रपित्वे समीपे वाचं तेषां 'जहि भिन्धि' इत्यादिध्वनिं मुषायति मुष्णाति। ... तदनन्तरं सूर्य ईशानः सर्वाणि तमांस्यसुरान्वा निराकर्तुं समर्थः सन्ना मुषायति समन्तान्मुष्णाति Sy.
७. यः P.
८. अथ प्रत्यक्षकृतः। ... उशनस एतन्नाम्नो महर्षेः Sy.
९. दूरात्स्वर्गस्थानात् Sy.
१०. हे कवे क्रान्तदर्शिन्! Sy.
११. गतवानसि। प्राप्तवानसि ... यद्वोशना उशनसा युक्तः सन् ... आगच्छ Sy.
१२. सुखसाधनानि धनान्यादाय Sy.
१३. साधनानि। विश्वानि missing in M.
१४. अस्माकं...तूर्णवनिः क्षिप्रं सम्भक्ता भवेति शेषः Sy. तुर्वणिस्तूर्णवनिः N. 6. 14.
१५. तत्र दृष्टान्तः। ... मनुष्येणेव। यथा स्वोतेन परिवृढाय देशान्तरादभिमतं धनमानीयते तद्वत्। यद्वा मनुरेव मनुष्याणामिवेतरेषामृत्विजां, विश्वा द्युम्नानि सर्वाणि धनान्यादाय Sy.
१६. ०तिरति P.D. तुर्वणिर्भवसि तद्वदस्माकमपि Sy.
१७. न केवलमेकस्मिन्नेव यागदिने किन्तु ... विश्वान्यप्यहानि, सर्वेष्वप्यहस्सु तुर्वणिर्भव। यद्वा तुर्वणिस्त्वम् ... विश्वान्यहानि, अतिदीर्घमायुष्यं यथा ददासि तथा द्युम्नान्यपि, उभयमपि देहीत्यर्थः Sy.
१८. ० तिर० P. D.
१९. VM. ignores वा and explains मुषायति। तुर्वणिः once only.
२०. स तादृशो महानुभावस्त्वम् Sy.
२१. अस्मत्सम्बन्धिभिः Sy.
२२. अभिमतवर्षणव्यापारवन्! पुरां दर्तः, असुरपुराणां दारयितः! Sy.
२३. इदानीं प्रतिपादितप्रकारैस्स्तोत्रैस्तुष्टः सन् Sy.
२४. नवतीरर्वर्षणशील क... पा० M. पालनप्रकारैः Sy.

पाहि। शक्तैः। दिवोदासपुत्रैरस्माभिः। इन्द्र! त्वम्। स्तूयमानः। वर्धस्व। अहोभिरिव। देवनशील आदित्यः।

## I.131.

इन्द्रा॑य॒ हि द्यौरसु॑रो॒ अन॑म्न॒तेन्द्रा॑य म॒ही पृ॑थि॒वी वरी॑मभिर्द्यु॒म्नसा॑ता॒ वरी॑मभिः।
इन्द्रं॒ विश्वे॑ स॒जोष॑सो दे॒वासो॑ दधिरे पु॒रः।
इन्द्रा॑य॒ विश्वा॒ सव॑नानि॒ मानु॑षा रा॒तानि॑ सन्तु॒ मानु॑षा ॥१॥

इन्द्राय हि। इन्द्राय। हि। द्यौः। बलवान्। अभवत्प्रह्वः। इन्द्राय। महती। पृथिवी। उरुत्वैः। दत्ताम्न ?। इन्द्रम्। विश्वे। देवाः। सङ्गताः। पुरस्कुर्वन्ति। इन्द्राय। सर्वाणि। मनुष्यैः कृतानि। दत्तानि। सन्तु। सवनानि।

१. पालय Sy.
२. शक्तैः सुखैश्चैहिकामुष्मिकरूपैः Sy.
३. दिवोदासगोत्रोत्पन्नैः Sy.
४. परुच्छेपैः। यद्वा पूजार्थं बहुवचनम् Sy.
५. वद्धस्व P.
६. आदित्योऽहोभिः प्रसिद्धैर्यथा प्रवृद्धो भवति तथाऽस्मत्स्तुत्याऽत्यन्तं प्रवृद्धो भवेत्यर्थः Sy.
७. द्योतनशीलः Sy.
८. VM. ignores पुराम्। वर्तः
९. एव ।... हिशब्दः प्रसिद्धयर्थो वा Sy.
१०. द्योतनशीलो द्युलोकस्तन्निवासी देवसङ्घो वा
११. स चासुरो निरसनशीलः। शत्रूणां पुण्यकृतामेव तन्निवासात् Sy.
१२. स्वयमेव प्रह्वो भवति Sy.
१३. भूमिः। तत्रत्यः सर्वो जनो वा ...। उभयत्राप्यत्रापिशब्देनाश्रयी लक्ष्यते। ग्राम आगत इतिवत् Sy.
१४. केन साधनेनेति तदुच्यते ... वरणीयैः स्तोत्रैर्हविर्भिर्वा Sy.
१५. उरुत्ताम्न M. अन्नस्य यशसो वा लाभे निमित्ते सति। वरीमभिर्वरणीयैर्हविर्भिर्युक्ता यजमानाः प्रह्वा भवन्ति Sy. दत्ताम्ना is suggested for दत्ताम्न
१६. विश्व P.D.
१७. समानप्रीतियुक्ता ऐकमत्यभाजः Sy.
१८. पूर्वमसुरजयार्थं पुरो दधिरे पुरतः स्थापितवन्तः। इन्द्रमुखेनैवासुराञ्जितवन्त इत्यर्थः Sy.
१९. मनुष्याणां सम्बन्धीनि ... मनुष्याणामृत्विजां सम्बन्धीनि Sy.
२०. दातव्यानि पुरोडाशादीनि Sy.
२१. भवन्तु ... इन्द्रायैव सन्तु। इन्द्रं प्रीणयितुं समर्थानि भवन्त्वित्यर्थः Sy.
२२. वसनानि P.
अभिषवयुक्तानि प्रातरादिसवनानि Sy.
२३. VM. explains वरीमभिः and मानुषा once only.

**विश्वेषु हि त्वा सवनेषु तुञ्जते समानमेकं वृषमण्यवः**
**पृथक् स्वः सनिष्यवः पृथक् ।**
**तं त्वा नावं न पर्षणिं शूषस्य धुरि धीमहि ।**
**इन्द्रं न यज्ञैश्चितयन्त आयवः स्तोमेभिरिन्द्रमायवः ॥२॥**

विश्वेषु हि त्वा। त्रिष्वपि[1]। हि। त्वा[2]। सवनेषु[3]। प्रेरयन्ति[4]। साधारणम्[5]। एकम्। निर्गच्छत्स्तोत्राः?[6]। पृथक्[7]। पृथक्। सर्वम्[8]। सम्भक्तुमिच्छन्तः[9]। तम्[10]। त्वा[11]। नावम्। इव। तारयित्रीं[12] नदीतरणाय। सुखस्य[13]। धुरि[14]। निदध्मः[15]। इन्द्रम्। एव। यज्ञैः[16]। मनुष्याः[17]। बोधयन्ति[18]। स्तोत्रैश्च[19]।

---

१. विश्वेषु सर्वेषु Sy.

२. त्वाम् Sy.

३. तद्वत्सु, एकाहाहीनसत्ररूपेषु सर्वेषु सोमयागेषु Sy.

४. यजमानाः ... त्वरयन्ति। हविरादीनि ददते Sy.

५. कीदृशं त्वाम्? समानं सर्वेषामेकरूपम् Sy.

६. कीदृशा यजमानाः? ... अभिमतवर्षणाय त्वामेव मन्यमानाः Sy.

७. विविच्य स्वस्वयागे Sy.

८. स्वः स्वर्गं सुखविशेषं वा Sy.

९. सम्भक्तुकामाः ... पृथगेव त्वरयन्ति। तुञ्जतिर्दानार्थः। 'शिक्षति तुञ्जते' (Ngh. 3. 20.) इति तन्नामसु पाठात् Sy.

१०. तादृशम् Sy.

११. तत्वा M. सुत्वा P.
० च्छन्तसूत्वा D.
त्वाम् Sy.

१२. ० त्री M. तत्र दृष्टान्तः। ... पारस्य सम्भक्त्रीं पूरयित्रीं वा फलस्य नावमिव। तां यथा भारवहने स्थापयन्ति Sy.

१३. बलस्य तेनाढ्यस्य। ... यद्वा शूषस्यास्मदीयशरीरबलस्य धुरि धीमहि। शूषमिति बलनाम। 'शूषं सहः' (Ngh. 2. 9.) इति तन्नामसु पाठात् Sy.

१४. वहने Sy.

१५. निदध्मः P. तज्जयाय धीमहि स्थापयामः Sy.

१६. साधनैः Sy.

१७. म(नु)ष्याः M.
कीदृशा वयम्? आयवो मनुष्या यजमानाः Sy.

१८. चितयन्तः परमेश्वरमिव त्वां चेतयन्तः। परमेश्वरबुद्ध्या भावयन्त इत्यर्थः। यद्वा नशब्द एवकारार्थः। इन्द्रमेव त्वां जानन्तः Sy.

१९. स्तोत्रैः ... इन्द्रमेवायवो गच्छन्तो वयं धीमहि Sy.
VM. explains इन्द्रम्। आयवः once only.

वि त्वा ततस्रे मिथुना अवस्यवो व्रजस्य साता
गव्यस्य निःसृजः सक्षन्त इन्द्र निःसृजः ।
यद्गव्यन्ता द्वा जना स्वर्यन्ता समूहसि ।
आविष्करिक्रद्वृषणं सचाभुवं वज्रमिन्द्र सचाभुवम् ॥३॥

वि त्वा ततस्रे। रक्षणेच्छवः[1]। उभयविधाः[2]। त्वाम्[3]। उपभक्षयन्ति[4]। गव्यस्य[5]। व्रजस्य[6]। सातये[7]। हविषां स्तुतीनां च[8] निस्रष्टारस्त्वाम्[9]। इन्द्र ! भजमानाः[10]। यत्त्वम्[11]। गा इच्छन्तौ[12]। स्वर्गं गच्छन्तौ च[13]। द्वौ[14]। इमौ। संवहयस्यभिलषितं प्रापयसि[15]। आविष्कुर्वन्[16]। कामानां[17]

---

१. इन्द्रायात्मने वा तृप्तिमिच्छन्तः Sy.

२. पत्नीसहिता यजमानाः। नच सर्वत्राग्निहोत्रादिनित्यवाक्येषु, कारीरीचित्रादिकाम्यवाक्येषु, यस्योदयं यस्य गृहानित्यादिनैमित्तिकवाक्येषु पुरुषस्यैवार्थित्वादेः सद्भावात्तस्यैवाधिकारः स्त्रियास्तु सत्यप्यर्थित्वेऽध्ययनाभावेन विद्वत्ताया अभावादत एव सामर्थ्याभावाच्च नास्त्यधिकार इति वाच्यम्। यद्यपि स्त्रिया नास्ति पृथगधिकारस्तथापि पूर्वमीमांसायां षष्ठेऽधिकाराध्याये तृतीयचतुर्थाभ्यामधिकरणाभ्यामस्त्येव स्त्रिया अधिकारः। स च पत्या सहेति प्रपञ्चितत्वात् जायापती अग्निमादधीयातामित्याधानविधानात्, स्मृतिषु च 'नास्ति स्त्रीणां पृथग्यज्ञो न व्रतम्' (Manu. 5. 155.) इति पृथगधिकारस्यैव निवारितत्वादस्त्येव स्त्रियाः पत्या सहाधिकारः। अध्ययनाभावेऽपि 'वेदं पत्न्यै प्रदाय वाचयेत्' (ASS. 1.11.) इति सूत्रकारवचनात्। 'पत्न्यन्वास्ते' इत्यादिविधिषु 'सुप्रजसस्त्वा वयम्' (TS. 1.1.10.1.) इत्यादिमन्त्रविधानाद्यत्र वचनमस्ति तत्रास्त्येव मन्त्रेऽधिकारः। 'किं हि वचनेन कुर्यान्नास्ति वचनस्यातिभारः' इति न्यायात्। तस्मान्मिथुना यज्ञं ततस्र इत्येतदुक्तम् Sy.

३. त्वामुद्दिश्य Sy.

४. यज्ञं वितन्वते। यद्वा यज्ञे पयोव्रतादिनाऽस्मानमुपक्षयन्ति। तसु उपक्षये Sy.

५. किमर्थम्।...गवां सम्बन्धिनः Sy.

६. यूथस्य Sy.

७. लाभे निमित्तभूते सति Sy.

८. ० चा P.D.

९. स्रष्टारस्त्वाम् P. स्रष्टारं त्वां D. निस्रष्टारं त्वां M. निश्शेषेण हविस्त्यजन्तः ...पुनस्त एव विशेष्यन्ते ... फलप्रतिबन्धकं पापं निर्गमयन्तः Sy.

१०. सक्षतिर्गत्यर्थः। त्वां सम्भजमानाः Sy.

११. य P. D. M. कस्तत्र विशेष इति तदुच्यते यद् यस्मात्कारणात् Sy.

१२. ० न्तं P.D.M.

१३. ० न्तं P.D.M. स्वर्गं यन्तौ, गन्तुमुद्युक्तौ Sy.

१४. द्वौ जायापतिरूपौ जनौ Sy.

१५. समूहसि संयुक्तयोरेवाभिमतं स्वर्गादिकं प्रापयसि। यद्वा सम्यगनुष्ठितवन्ताविदूहसि निश्चिनोषि। अतः पत्नीसहिता अनुतिष्ठन्तीत्यर्थः Sy. संवहस्य० is suggested for संवहयस्य०

१६. आविष् M. आविष्कुर्वन् प्रकटयन्वर्तस इति शेषः Sy.

१७. कामान् P.D.

वर्षितारम्[1] । त्वयाऽविनाभूतम्[2] । वज्रम्[3] ।

**विदुष्टे अस्य वीर्यस्य पूरवः पुरो यदिन्द्र**
**शारदीरवातिरः सासहानो अवातिरः ।**
**शासस्तमिन्द्र मर्त्यमयज्युं शवसस्पते ।**
**महीममुष्णाःपृथिवीमिमा अपो मन्दसान इमा अपः ॥४॥**

विदुष्टे[4] अस्य । जानन्ति[5] । तव[6] । वीर्यम्[7] । इदम् । जनाः[8] । पुरः[9] । यत्[10] । इन्द्र ! हिसकासुरसम्बन्धिनीः[11] । अवाभिनः[12] । अभिभवन्[13] । शासितवानसि[14] । तम् । मारकं[15] शरनामासुरम्[16] । अयजमानम्[17] । बलस्य । पते[18] ! शासित्वा च तमसुरम् । महत्[19] । अन्तरिक्षम्[20] । इमाः[21] वृष्टिलक्षणाः । अपः[22] । अमुष्णास्तत आहृतवानसि[23] । सोमेन मन्दमानः[24][25] ।

---

१. वर्षकं कामानाम् Sy.
२. सहैवोत्पन्नं त्वयाऽविनाभूतं तथा सचाभुवं शत्रुवधादिव्यापारसामर्थ्येन सहैवोत्पन्नम् Sy.
३. VM. explains निःसृजः । इन्द्र । सचाभुवम् once only.
४. विदुवे D.
५. विदुः Sy.
६. तव सम्बन्धिनः Sy.
७. अस्य वीर्यस्य । कर्मणि षष्ठी । वक्ष्यमाणमेतद्वीर्यं विदुः Sy.
८. ये पूरवो मनुष्या यजमानास्तव महत्त्वं जानानास्त्वामेव यजन्ति ते विदुः । यद्वा, अस्य वीर्यस्य माहात्म्यमिति शेषः Sy.
९. शत्रूणां पुरीः Sy.
१०. यस्मात्कारणात् Sy.
११. संवत्सरसम्बन्धिनीः संवत्सरपर्यन्तं प्राकारपरिखाविभिर्दृढीकृताः Sy.
१२. अवाभिनतः P.D. अवातिरोऽनाशयः । अवपूर्वस्तिरतिर्नाशनार्थः Sy.
१३. वन् P. भवन् D. तत्रत्यानभिभवन् । धनाद्यपहारेण पीडयन् Sy.
१४. निगृहीतवानसि Sy.
१५. मातरं D. मर्त्यं मरणधर्माणम् Sy.
१६. शरनाo P.D.
१७. अयष्टारं यज्ञविघातिनं राक्षसादिम् Sy.
१८. पालकेन्द्र ! Sy.
१९. महतीम् Sy.
२०. पृथिवीम् Sy.
२१. इवा M.
२२. आपः P. समुद्रनद्यात्मकान्युदकानि Sy.
२३. बलादपहृतवानसि । असुरैरन्यैर्वा यज्ञविद्वेषिभिराक्रान्तां भूमिं तत्सम्बन्धिनीरपश्च तेषां पुराणि भित्त्वाऽपहृतवानसीत्यर्थः Sy.
२४. मन्दसानः P. किं दुःखेन, नेत्याह ... हृष्यन्नेवेमा अप इमान्यप्कार्याणि व्रीह्यादीन्यमुष्णाः, लब्धवानसि Sy.
२५. VM. explains अवातिरः । इन्द्र । इमाः । अपः once only.

आदित्ते अस्य वीर्यस्य चर्किरन्मदेषु वृषन्नुशिजो यदाविथ सखीयतो यदाविथ।
चकर्थ कारमेभ्यः पृतनासु प्रवन्तवे ।
ते अन्यामन्यां नद्यं सनिष्णत श्रवस्यन्तः सनिष्णत ॥५॥

आदित्ते अस्य। अनन्तरम्[1]। एव। तव[2]। वीर्यम्[3]। इदम्। तेजनेषु[4]। विकिरन्ति[5] सोमेन। वर्षितः[6]। यत्[7] त्वम्। कामयमानान्[8]। रक्षसि[9]। सख्यमिच्छतस्तथा[10]। एभ्यः[11]। प्रकर्षेण भजनाय[12]। पृतनासु[13]। कर्म[14]। चकर्थ[15]। ते[16]। अन्यामन्याम्[17]। नदीम्[18]। अन्नमिच्छन्तः[19]। सम्भजन्ते[20]।

उतो नो अस्या उषसो जुषेत ह्य१र्कस्य
बोधि हविषो हवीमभिः स्वर्षाता हवीमभिः ।
यदिन्द्र हन्तवे मृधो वृषा वज्रिञ्चिकेतसि ।
आ मे अस्य वेधसो नवीयसो मन्म श्रुधि नवीयसः ॥६॥

उतो नः। अपिच[21]। अस्मान्[22]। अस्याः। उषसः[23] सकाशात्। यदीन्द्रः सेवेत[24]। ततः

१. अत एव हेतोः Sy.
२. तव सम्बन्धिने Sy.
३. वीर्याय, तवभिवृद्धये Sy.
४. सोमजनितमदेषु सत्सु Sy.
५. पुनः पुनः सोमं विकिरन्ति ।...सर्वेषु सवनेषु वितरन्ति यजमानाः Sy.
६. वर्षयितः M.
कामानां वर्षितः Sy.
७. व P.D. यतः कारणात् Sy.
८. त्वां कामयमानान्यजमानान् Sy.
९. ० माना अन्न० M.
१०. तव सखित्वमात्मन इच्छतोऽस्मान् यद्यस्मादाविथ तर्पयसि, अभिमतेन प्रीणयसि, अतश्चर्किरन् Sy.
११. यजमानेभ्यः Sy.
१२. ० ना M. प्रकर्षेण वनितुं सम्भक्तुम् । युद्धाय हि वीराः सम्भजन्ते Sy.
१३. सङ्ग्रामेषु Sy.
१४. कारं शब्दं सिंहनादलक्षणम् Sy.
१५. ० त्थ M. करोषि Sy.
१६. तव सङ्ग्रामवासिनः Sy.
१७. त्वय्यन्यामन्यामन्यांश्चान्यांश्चान्यमन्यं प्रति Sy.
१८. नदिं सन्तोषं समृद्धिम् Sy.
१९. अन्नमिच्छमाना इच्छन्तः P. D. M.
जयाल्लब्धमन्नं काङ्क्षन्तः Sy.
२०. VM. explains यत् । आविथ । सनिष्णत once only.
२१. अपि नाम Sy.
२२. अस्माकं सम्बन्धिनीम् Sy.
२३. अस्योष० M. कर्मणि षष्ठी। एतामुषसं सुत्याहःसम्बन्धिनमुषःकालम् Sy.
२४. सेवते D. उषस्येवास्माकमयमिन्द्रो यज्ञं गच्छेदित्यर्थः । हिः पूरणार्थः Sy

स्तोत्रम्। बुध्यते[1]। हविषः[2]। होमैः[3] सह। यज्ञे सर्वैः सम्भक्तो[4]। यदि[5]। त्वमिन्द्र ! वज्रिन्[6] ! कामानां वर्षितः[7] ! शत्रून्[8]। हन्तुम्। बुध्यसे[9]। तदर्थं मम। नवतरस्य[10]। अस्य। होतुः। स्तोत्रम्[11]। आभिमुख्येन[12]। शृणु[13]।

**त्वं तमिन्द्र वावृधानो अस्मयुरमित्रयन्तं तुविजात मर्त्यं वज्रेण शूर मर्त्यम् ।**
**जहि यो नो अघायति शृणुष्व सुश्रवस्तमः ।**
**रिष्टं न यामन्नप भूतु दुर्मतिर्विश्वाप भूतु दुर्मतिः ॥७॥**

त्वं तमिन्द्र वावृधानः। त्वम्। तम्। इन्द्र! वर्धमानः[14]। अस्मत्कामः[15]। अमित्रत्वमिच्छन्तम्[16]। वृद्धजनन! बहुजनन[17]! मनुष्यम्[18]। वज्रेण। जहि। शूर[19]! यः। अस्माकम्। पापमिच्छति[20]। शृणुष्वास्माकमभिलषितम्[21]। अतिशयेन शोभनश्रवणस्त्वम्[22]। तवागमने[23]। रिष्टं काष्ठम्[24]।

---

१. अपि नाम जानीहि Sy.
२. गत्वा चार्कस्य हविषः । पूर्ववत्कर्मणि षष्ठी । अर्चनसाधनं हविः Sy.
३. हवनप्रकारविशेषैर्दत्तं हविः Sy.
४. यज्ञ सर्वस्संभक्त P.D. स्वर्गस्यान्यस्य सुखविशेषस्य वा सम्भजनस्थाने यज्ञे हवीर्मभिराह्वानैराहूतो भवेति शेषः । अस्माभिराहूतः सन्नुषस्येवागत्य हविः स्वीकरोषीत्यर्थः Sy.
५. यस्मात्कारणात् Sy.
६. वज्रयुक्तेन्द्र !
७. वर्षिता सत्कामानाम् Sy.
८. हिंसकान् शत्रून् Sy.
९. अवबुध्यसे Sy.
१०. ० र्थमनव M. कीदृशस्य मे ? वेधसो मेधाविनो नवीयसो नवतरस्य, दीक्षितसंस्कारैः संस्कृतत्वान्नवीयस्त्वम् । पुनर्विशेष्यते ।... अतिशयेन नवनवस्तोऽसाधारणस्तुतिमतः । अत्र यजमानविशेषणैस्तत्कर्तृकं स्तोत्रमेव विशिष्टं भवति Sy.
११. मन्म मननीयं स्तोत्रम् Sy.
१२. सर्वतः शृणु Sy.
१३. VM. ignores हि and explains हवीमभिः। नवीयसः once only.
१४. अत्यर्थं वर्धमानः Sy.
१५. अस्मांस्त्वद्भक्तान्कामयमानः Sy.
१६. ०त्रमि० M. अस्मासु शत्रुत्वमाचरन्तम् Sy.
१७. अस्मत्तुल्या बहुभावमापन्न ! Sy.
१८. मरणस्वभावम् Sy.
१९. भर M. विक्रान्त ! Sy.
२०. अघं पापं दुःखं वेच्छति तं जहि Sy.
२१. ० ष्व चास्मा० M. श्रावयास्मद्वाक्यम् Sy.
२२. ०वण (त्वं तवागमनीयानि बानानि सर्वाणि सह सन्तु तत्तु प्रायः तत्तवास्तं होतस्तव भवति) स्त्वं M.
२३. ०नै P.M. यामन्यध्वनि Sy.
२४. तत्र दृष्टान्तः।... अध्वनः श्रमेण हिंसितं परिश्रान्तं यथा दुर्मतिश्चौरादिविषया बाधते तद्वदस्मान्बाधमाना दुर्मतिरपगच्छतु । यद्वा यामनि मार्गे यज्ञाविकल्पे रिष्टमसुरकृतहिंसाविकल्पं विघ्नं परिहरसि तद्वत् Sy.

इव। अस्माकं दारिद्र्यसङ्कावाद्वर्तमाना[1] सर्वा[2]। दुर्मतिः[3]। क्रमेण नश्यतु[4][5]।

I. 132.

त्वयां वयं मंघवन्पूर्व्ये धन इन्द्रंत्वोताः सासह्याम पृतन्यतो वंनुयामं वनुष्यतः।
नेदिंष्ठे अस्मिन्नहन्यधिं वोचा नु सुंन्वते।
अस्मिन्यज्ञे वि चंयेमा भरें कृतं वाजयन्तो भरें कृतम् ॥१॥

त्वया वयम्। त्वया[6]। वयम्। मघवन्[7]! प्रत्ने। धने[8] तन्निमित्तम्। इन्द्र! त्वया[9] रक्षिताः। अभिभवेम[10]। शत्रून्[11]। हन्याम[12] च[13]। घ्नतः[14]। अन्तिकतमे[15]। अस्मिन्[16]। अहनि[17]। क्षिप्रम्[18]। सुन्वते[19] मह्यम्। अधिब्रूहि[20]। वयमिमं[21] यज्ञं कृत्वा। सङ्ग्रामे[22]। अन्नमिच्छन्तः[23]। इन्द्रस्य करणम्[24]। विचयेम[25], अन्वेषणं विचयः[26]।

---

१. सम्भा० D.

२. सर्वाद D.

३. त्वत्प्रसादाद् दुर्मतिरस्मज्जिघांसाविषया दुष्टा बुद्धिः।...न केवलं हिंसारूपा, अपि तु...सर्वापि क्रोधपरिवादादिरूपाऽप्य भूतु Sy.

४. अपगता भवतु Sy.

५. VM. explains मर्त्यम्। अप। भूतु। दुर्मतिः once only.

६. त्वया साधनेन युक्ताः Sy.

७. मघं सौख्यं तद्वन्निन्द्र! Sy.

८. अस्मिन्यज्ञे Sy.

९. अतिप्रबलेनेन्द्रेण त्वया रक्षिताः सन्तः Sy.

१०. The passage beginning with तन्निमित्तम् and ending with अभिभवेम is missing in M.

११. पृतनामात्मन इच्छतः प्रबलसेनायुक्तान् शत्रून् Sy.

१२. हन्यमान P. वनुयाम। तेषामागमनात्पूर्वमेव वयं सम्भजेम Sy.

१३. Omitted by M.

१४. अस्मत्प्रहारायागच्छतः शत्रून् Sy. वनुष्यतिर्हन्तिकर्मा। अनवगतसंस्कारो भवति N. 5. 2.

१५. अत्यन्तसन्निहिते Sy.

१६. अभिषवयुक्तेऽद्यतने Sy.

१७. अह M.

१८. नु क्षिप्रम् Sy.

१९. सुन्वते यजमानाय तदर्थम्।...तं हविष्प्रदं यजमानं यज्ञं वा Sy.

२०. अधिकं ब्रूहि Sy.

२१. यजमानाः Sy.

२२. देवानां सङ्ग्रामेऽसुरजये देवानां सम्यग्भरणे वा Sy. भर इति सङ्ग्रामनाम। भरतेर्वा। हरतेर्वा N. 4. 24.

२३. हविर्लक्षणमन्नमुपाचरन्तः Sy.

२४. जयस्य कर्तारं त्वामुद्दिश्य त्वज्जयार्थम् Sy. २५. स्तोत्रादिकं हविरादिकं वा विचिनुयाम Sy.

२६. VM. explains भरे। कृतम् once only.

A fragment वनुयाम वनुष्यतः is quoted in N. 5.2. Both Skanda and Durga quote and explain RV. VIII. 40.7.

स्वर्जेषे भरं आप्रस्य वक्मन्युषर्बुधः स्वस्मिन्नञ्जसि क्राणस्य स्वस्मिन्नञ्जसि ।
अहन्निन्द्रो यथा विदे शीर्ष्णाशीर्ष्णोपवाच्यः ।
अस्मत्रा ते सध्र्यक्सन्तु रातयो भद्रा भद्रस्य रातयः ॥२॥

स्वर्जेषे भरे[1]। सर्वजयोपाये[2]। सङ्ग्रामे। हविर्भिरापूरयितुः[3]। वचने[4]। उषसि[5] प्रबुध्यमानस्य[6]। स्वभूते। ऋजुतमे[7]। कर्म कुर्वाणस्य[8]। यथा[9] तेनोक्तम्। इन्द्रः। अवगच्छति[10]। तेनैव प्रकारेण तस्य शत्रून् हन्ति[11]। नमस्कारभूतैः[12] शिरोभिः। स्तोतव्यः[13]। अस्मासु[14]। भजनीयस्य[15]। ते[16]। भजनीयानि[17]। दानानि[18] सर्वाणि। सह[19]। सन्तु[20][21]।

तत्तु प्रयः प्रत्नथा ते शुशुक्वनं यस्मिन्यज्ञे वारमकृण्वत क्षयमृतस्य वारसि क्षयम् ।
वि तद्वोचेरध द्वितान्तः पश्यन्ति रश्मिभिः ।
स घा विदे अन्विन्द्रो गवेषणो बन्धुक्षिद्भ्यो गवेषणः ॥३॥

तत्तु प्रयः[22]। तत्[23]। तव[24]। अन्नम्[25]। कुसूलादिस्थमिवान्नम्[26]। होतस्तव

१. Omitted by P.D.

२. सर्वजनयो० P.D. ०पायः श्च M. स्वर्गगमनसाधने। ... युद्ध आभिमुख्येन हतस्य स्वर्गः 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ' (Parāśara. 3.25.) इत्यादिस्मृतिषु प्रसिद्धः Sy.

३. आपनशीलस्य शत्रुवधायेतस्ततो व्याप्तस्य। ... कस्य सङ्ग्राम इति तदुच्यते। आप्रस्यापनशीलस्य, आ समन्तादिन्द्रस्य प्रीणयितुर्वा Sy. ४. वक्मनि मार्गभूते Sy. ५. उषःकाले Sy.

६. ०ध्यस्व P.D.M. अनुष्ठानाय प्रबुध्यमानस्य Sy. ७. अभिव्यक्तिमति कपटादिरहिते। पुनः स एव विशेष्यते। स्वस्मिन्नञ्जसि स्वकीयेऽञ्जसि मुख्ये महति सङ्ग्रामे। यद्वा। स्वस्मिन्नञ्जसि शत्रौ स्वयमेवाप्रच्छन्नत्वेनागते सति Sy.

८. क P.D. कुरु M. यागं कुर्वाणस्य Sy.

९. तत्र दृष्टान्तः। यथा विदे सर्वज्ञाय शिरसा प्रणतिः क्रियते स्तूयते च तथैनमित्यर्थः। यद्वा यथा ... येन प्रकारेण Sy.

१०. हन्तव्यं शत्रुं जानासि तं तं प्रहंसि। ... अथवा ... यं यं विन्दसे लभसे शत्रुं तं तं मारयसि। अतः कारणात्स्तुत्य इत्यर्थः Sy.

११. अस्य यजमानस्य शत्रून् ... हिनस्ति Sy.

१२. मनस्तारभूतैः P. ०कारसाधनभूतैः M.

१३. अतः कारणादयमिन्द्रः शीर्ष्णाशीर्ष्णोपवाच्यः। सर्वेषां शिरसा प्रणम्यः स्तुत्यः Sy. १४. ०सुर M.

१५. भद्रस्य स्तुत्यस्य Sy. १६. तव सम्बन्धीनि Sy. १७. अतिस्थिराणि Sy.

१८. रातयोऽस्मासु दत्तानि दानानि Sy.

१९. साहैकोद्योगेन Sy. २०. भवन्तु Sy.

२१. VM. explains स्वस्मिन्। अञ्जसि। रातयः once only.

२२. पयः M. प्रियः D.

२३. तत् तु खलु प्रसिद्धम् Sy. २४. तव स्वभूतम् Sy. २५. हविर्लक्षणमन्नम्। शुशुक्वनम्, आज्यादिसंयोगेन भृशं दीप्तम्। शुचेर्दीप्तिकर्मण एतद्रूपम् Sy.

२६. कुस्सूलादिस्थमेवा० M.

भवति[1]। यन्निमित्तमृत्विजः[2]। यज्ञे। वरणीयं वेद्याख्यम्। आसादस्थानम्[3]। अकुर्वंस्त्वं[4] च[5]। यज्ञस्य[6]। क्षयम्[7]। सम्भक्ता[8]। भवसि। आसन्ने हविषि। तत्। देवेभ्योऽनुवाक्यया याज्यया च द्विविधम्। विवोचेः[9]। तच्च[10]अन्तःस्थितं[11] हविः। देवा अग्निषु प्रविश्य तत्तेजोभिः[12]। पश्यन्ति[13]। सः[14]। हि। इन्द्रः। अनुज्ञायते[15]। पशूनामेषणशीलः[16]। बन्धुभ्यः[17] प्रजाभ्यः[18]।

**नू इ॒त्था ते॑ पू॒र्वथा॑ च प्र॒वाच्यं॒ यदङ्गि॑रो॒भ्योऽवृ॑णोरप॑ व्र॒जमि॑न्द्र शि॒क्षन्नप॑ व्र॒जम्।**
**ऐभ्यः॑ समा॒न्या दि॒शास्मभ्यं॑ जेषि॒ योत्सि॑ च।**
**सु॒न्वद्भ्यो॑ रन्धया॒ कं॑ चिदव्र॒तं हृ॑णा॒यन्तं॑ चिदव्र॒तम् ॥४॥**

नू इत्था ते। क्षिप्रम्। इत्थमिव[19]। पूर्वस्मिन्नपि[20] काले। ते[21]। प्रवाच्यं[22] तत्कर्म[23]। यत्[24]।

---

१. अन्तस्था पूर्वमितः पूर्वं यथा यागकाले हविस्ते तव स्वं भवति तथाऽद्यतनमपि। सर्वदा त्वामेव यजन्त इति भावः Sy.

२. ०त्त ऋ० M. यस्मिन्हविषि दातव्ये सति Sy.

३. स्थानं वेदिलक्षणम् Sy.

४. कुर्वन्त्यृत्विजः Sy.

५. ०स्थान ... य० M.

६. कस्तत्र विशेष इति चेदुच्यते, ऋतस्य सत्यफलस्य यज्ञस्य। ...यद्वा। ऋतमित्युदकनाम तस्य। ... अथवा। ऋतस्यादित्यस्य Sy.

७. क्षयं निवासस्थानम्। ... (यद्वा) क्षयं स्थानम्। ... (अथवा)... क्षयं स्थानं द्युलोकाख्यम् Sy.

८. सम्भक्तोऽसि ... प्राप्तोऽसि। वृष्टिप्रदोऽसीत्यर्थः। ... वा:, असि यजमानं गमयितासि Sy.

९. ०वस्त० M. ०वाचेस्त० P. विब्रूहि Sy.

१०. तावुक्तं वक्ष्यमाणं कर्म Sy.

११. अथ, अतः कारणात् ... द्विस्थोपेतयोर्द्यावापृथिव्योर्मध्येऽन्तरिक्षे Sy.

१२. रश्मिभिरादित्यकिरणैः Sy.

१३. मेघं निर्भिद्य रश्मिद्वारा प्रवर्षणरूपं कर्म सर्वे जनाः प्रत्यक्षतः पश्यन्ति। अस्मद्दत्तं हविरादित्यं प्रापयित्वा तद्रश्मिद्वारा वृष्टिं जनयसीत्येतत्सर्वैर्दृश्यत इत्यर्थः Sy.

१४. इदानीं परोक्षतया स्तौति। स खलु Sy.

१५. उक्तक्रमेणैव कर्ता सन् विदे विन्दते। उदकप्राप्तिप्रकारं जानाति Sy.

१६. ०ल P.D. उदकस्यान्वेषणशीलः। ... गवेषणो गवां प्रसिद्धानामेषणकर्ता। ... यद्वा 'गवेष मार्गणे' ... यजमानफलस्य मृगयितेत्यर्थः Sy.

१७. P. adds किञ्चिदप्यजमानं before प्रजाभ्यः।

हविष्प्रदानादिना बन्धुभावं प्राप्तवद्भ्यो यजमानेभ्यः Sy.

१८. V.M. ignores तु। शुशुक्वनम् and explains गवेषणः once only.

१९. इत्तामिव P.D.M. उक्तप्रकारं वक्ष्यमाणरूपं वा Sy.

२०. पूर्वमिव। पूर्वं यथा Sy.

२१. तव सम्बन्धि Sy.

२२. सर्वैः स्तोतव्यम् Sy.

२३. तद्वदिदानींतनमपि स्तुत्यम् Sy.

२४. य P.

त्वमिन्द्र ! अङ्गिरसाम[1]र्थाय। गोव्रजम्[2]। अपावृणोः[3]। प्रयच्छं[4]स्तेभ्यः[5] पशून्[6]। एभ्यः[7]। समानम्[8]। प्रार्थितोऽतिसृष्टः शत्रुभ्यः। अस्मदर्थम्। अभिलषितं धनं[9]माजय[10]। युध्यस्व। च। सुन्वद्भ्यो[11] यजमानेभ्यः। कम्। चिदपि। अयजमानम्[12]। कृध्यन्तम्[13]। वशं[14] नय[15]।

**सं यज्जनान् क्रतुंभिः शूरं ईक्षयद्धने हिते तंरुषन्त श्रवस्यवः प्र यंक्षन्त श्रवस्यवः।**
**तस्मा आयुः प्रजावदिद्बाधे अर्चन्त्योजंसा।**
**इन्द्रं ओक्यं दिधिषन्त धीतयो देवाँ अच्छा न धीतयः ॥५॥**

सं यज्जनान्। यदा[16]। मनुष्यान्[17]। इन्द्रः। प्रज्ञाभिः[18]। संयोजयति[19]। तदानीं तेऽन्नमिच्छमानाः[20]। शत्रुषु निहितम्[21]। धनमुद्दिश्य[22]। शत्रून् घ्नन्ति[23]। प्रकर्षेण[24] च यजन्ते। इन्द्राय[25]। अन्नम्[26]।

---

१. एतद्गोत्रोत्पन्नेभ्यो महर्षिभ्यस्तेषामर्थाय Sy. २. व्रजमन्तरिक्षे गच्छन्तं मेघम्। ...व्रज इति मेघनाम, 'व्रजः... वराहः' (Ngh. 1.10.) इति तन्नामसु पाठात् Sy. ३. अपवृतवानसि। मेघमुत्पाट्य वृष्टिमुत्पादितवानसि Sy.

४. वितरन्। रक्षितवानसि Sy.

५. ०च्छेभ्यः D. अप अपघ्नद्भ्योऽपहृत्य तेभ्य एवाङ्गिरोभ्यः Sy.

६. व्रजं गवां समूहम्।...यद्वा पणिभिरपहृतं बिले स्थितं गवां व्रजमपहर्तुमपावृणोः, अपवृतद्वारमकरोः Sy.

७. ०भ्रेभ्यः P. भ्यः... सुनेभ्यः M. एभ्य उक्तेभ्य ऋषिभ्यः Sy.

८. समान्या दिशा समानया रीत्या तेभ्यो यथा ददासि तद्वत् Sy.

९. धनं सङ्ग्रामं वा Sy.

१०. धनमाजयन्धनमाज P.D. जय Sy.

११. सुन्वभ्यः M. स्वदर्षमभिषवं कुर्वद्भ्यो-ऽस्मभ्यम् Sy.

१२. सर्वमप्ययज्वानं यागविरोधिनम् Sy.

१३. न केवलमयज्वानं किन्तु, हृणायन्तं चिद्-व्रतम्, चिदित्यवकुत्सिते। अस्मासु रोषं कुर्वन्तं तमेवायष्टारं स्वयं रोषयन्तं वा। यद्वा... रोषं कुर्वन्तमपि, अव्रतमकर्माणं पुनर्हननासमर्थं कुर्वन् Sy.

१४. रन्धय बाधय। मदधीनं कुर्वित्यर्थः Sy.

१५. VM. explains अप। व्रजम्। चित्। अव्रतम् once only.

१६. य इन्द्रः शूरो विक्रान्तः सन् Sy.

१७. सर्वान्प्राणिनः Sy.

१८. Omitted by P.D.

१९. सम्यगीक्षयति तत्तद्विषयान्। अन्तर्यामिरूपेण सर्वेषां बुद्धिषु स्थित्वा तैर्विषयानुल्लेखयतीत्यर्थः। यद्वा क्रतुभिः कर्मभिः सुकृतदुष्कृतरूपैर्निमित्तभूतैस्तत्तत्फलैर्योजयति Sy.

२०. ०नः P.D.M. एवं प्रेरयति सति... अन्नमिच्छन्तो यजमानाः Sy.

२१. अभिमते सति। यद्वा हिते धनेऽभिप्रेते सति Sy. २२. धने गवादिरूपे Sy.

२३. हिंसन्ति शत्रून्। तरुष्यतिर्वधकर्मा।... तरतेर्वा...तरन्तीत्यर्थः Sy.

२४. अतः कारणाच्छ्रवस्यवोऽन्नं हविर्लक्षणमिन्द्रायात्मने वेच्छन्तः सन्तः... प्रकर्षेण यजन्ते Sy.

२५. तस्मा इत्, तस्मै प्रसिद्धायेन्द्रायैव Sy.

२६. हविर्लक्षणमन्नम् Sy.

पुत्रादिभिः सहैव यजमानाः शत्रूणाम्। आत्मबलेन। बाधित्रे। प्रयच्छन्ति। तस्मिन्निन्द्रे। निवासम्। धारयन्ति। कर्माणि प्रत्येकम्। अन्येषु देवेषु ? यानि कर्माणि भवन्ति।

युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तंतमिद्धतं वज्रेण तंतमिद्धतम्।
दूरे चत्ताय च्छंत्सद्गहनं यदिनक्षत्।
अस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः ॥६॥

युवं तमिन्द्रा०। युवाम्। तम्। इन्द्रापर्वतौ ! पुरा युध्यमानौ। यः। नः। सङ्ग्रामं कर्तुमिच्छति।

---

१. ०हं P. प्रजावत् पुत्रादिसहितं भवति। तैः सहितैर्वीयत इत्यर्थः Sy.

२. ०ना P.

३. स्वकीयेन बलेन युक्ताः Sy.

४. शत्रूणां बाधने निमित्तभूते सति, बाधितुं वा। बाध इति बलनाम। 'बाध... तविषी' (Ngh. 2.9.) इति तन्नामसु पाठात् Sy.

५. अर्चन्ति पूजयन्ति। यद्वा तस्मा इद् यजमानायैव बाधे बले निमित्तभूते सति, ...प्रजावत्पुत्राद्युपेतम्, आयुरन्नं लब्धुम् ओजसा बलेन युक्ताः, अर्चन्तीन्द्रं पूजयन्ति। ऋत्विज इति शेषः Sy.

६. धीतयः कर्मवन्तो यजमानाः... इन्द्रसमीपे। गङ्गायां घोष इति वत्सामीप्यं लक्ष्यते। इन्द्रलोक इत्यर्थः Sy.

७. ओको निवासस्थानम्। स्वार्थे यत् Sy.

८. धारयन्ति। 'धिष शब्दे'। अत्र धारणार्थः Sy.

९. धीतयः स्वर्गसाधनकर्मवन्तः सन्तः Sy.

१०. ०त्वेम० P. देवानाभिमुख्येन प्राप्तुमिछन्तः विधिषन्तेत्यन्वयः Sy.

११. VM. ignores इत् and explains अवस्यवः once only.

१२. The complete word is इन्द्रापर्वता
प्राद्योऽर्धर्चं इन्द्रपर्वतदेवत्यः Mah.
प्रथमोऽर्धर्च ऐन्द्रापर्वतः U.

१३. युवं P. D.
युवं तं यत्नमनुतिष्ठतम् U.

१४. तं शत्रुम्। आदरे वीप्सा तं तम्। इदेवार्थे। तं तमेव शत्रुम् ... तत्तत्समानमेव सर्वमपि शत्रुम् Mah.
तंतमित् सर्वमपि शत्रुम् Sy.
तंतमित्, ...इच्छब्दोऽनर्थकः U.

१५. इन्द्रपर्वतौ Mah. इन्द्रः प्रसिद्धः, पर्वतः पर्ववान्मेघः, तदभिमानी देवस्तौ Sy.

१६. युमानौ M. हे पुरोयुधा पुरोयुधौ पुरोऽग्रे युध्येते तौ पुरोयुधौ ... शत्रूणां पुरतो युद्धस्य कर्तारौ Mah. सङ्ग्रामे पुरतो योद्धारौ Sy. येन यत्नेन पुरोयुधा पुरोऽग्रे युद् युध्यति पुरोयुत्तेन पुरोयुधा बलेन U.

१७. तदो वीप्साश्रवणाद्यदोऽपि वीप्सा। यो यः शत्रुः Mah. यः शत्रुः Sy. तदो वीप्साश्रवणाद्यदोऽपि वीप्सा क्रियते, यो यः शत्रुः U.

१८. ...यो नः M.
नोऽस्मान् Mah., U.
नोऽस्माकम् Sy.

१९. ०मिच्छत्तव P. ०मिच्छ D. M.
पृतनां सेनां कुर्यात्। योधयेदित्यर्थः Mah. अस्मान्हन्तुं पृतनामात्मन इच्छति Sy. सङ्ग्रामयेद्योधयेत् U.

वज्रेण[1]। अपहतम्[2]। ताभ्यां दूरे[3]। निवसन्तम्[4]। कामयताम्[5]।? गहनं विपिनमरण्यम्[6]। यदत्तो[7]। प्राप्तवानिन्द्रमेव[8]। अस्माकं[9] शत्रूणाम्। दरणकुशलस्तव[10] वज्रः[11]। शत्रून्[12]। परितः[13]। दारयतु[14][15]।

---

१. तत्रापि विशेष्यते। ... वज्राख्येनायुधेन Mah. केन साधनेनेति तदुच्यते। तं तमित्सर्वमपि शत्रुं हन्तुं वज्रेण साधनेन प्राप्नुतम् Sy. वज्रेणेत्यायुधनियमः शत्रूणामुन्मूलनाय U.

२. ०हुतं M. विनाशयतम् Mah. नाशयतम् Sy. विनाशयतं शत्रुम् U.

३. ईदृक् सामर्थ्यमस्तीति दर्शयति ... अत्यन्तदूरदेशे Sy.

४. चत्ताय। चततिर्गतिकर्मा। वनेऽतिदूरगताय शत्रवे Mah. गताय। चातयतेर्वा नाशकर्मणः। नष्टायादर्शनमापन्नायेत्यर्थः Sy. दूरे गताय नष्टाय शत्रवे U.

५. क्षयतां P.D. छन्दतिः कामनार्थः। शत्रुं प्राप्तुं कामयते Mah. तादृशं शत्रुम् ... छन्दयति कामयते हन्तुम्। छन्दतेः कान्तिकर्मण इदं रूपम् Sy. कामयताम्। हे इन्द्र त्वदीयो वज्रः शत्रवे विनाशं कामयताम्। कथं परवशो वर्ततामिति चेत्, कथं वज्रस्य शत्रुविनाशकामनेति चेत्। 'आत्मैवैषां रथो भवत्यात्माश्व आत्मायुधम्' (N. 7. 5.) इत्यदोषः U.

६. इदानीमिन्द्रः प्रत्यक्षो वज्रस्य कर्तृत्वं चोच्यते। हे शूर इन्द्र त्वदीयो वज्रो ...गहनमत्यन्तगम्भीरं वनं जलं वा प्रति Mah. गहनं दुरवगाहं स्थानमतिकठिनं हृदयं शत्रुसमीपं वा Sy. इत उत्तरमिन्द्रः प्रत्यक्षो वज्रस्य तु कर्तृत्वं विवक्षितं परोक्षस्य सतः ... गहनं वनमुच्यते उदकं वा U.

७. यद्वा Mah. यत्तो वज्रः। लिङ्गव्यत्ययः Sy.

८. तदा तमपि दूरगतम् ... प्राप्नुयात्। इनक्षतिर्व्याप्तिकर्मा। वने दूरगतमपीच्छन्गृह्णात्येवेत्यर्थः Mah. व्याप्नोति। 'नक्ष गतौ' ... इनक्षतिर्वा प्रकृत्यन्तरम् Sy. रूपसादृश्यादुदकं वनं वा यद् व्याप्नोति पलाय्य गच्छति तथापि विनाशयति शत्रुंग्रहरूपेण तस्यापि विनाशं कामयतां त्वदीयो वज्रः U.

९. ०मेवाहास्मा० P. अस्मदीयान् Mah. इदानीमिन्द्र एव स्तूयते। हे शूर शौर्योपेत इन्द्र! अस्माकं विरोधिनः Sy.

१०. दारयतीति दर्मा... विदारणशीलो वज्रः Mah. दर्मा शत्रूणां दारकः...तव पूर्वोक्तो वज्रः Sy. कथम्भूतो वज्रः। दर्मा विदारणशीलः U. ११. ०लस्त M.

१२. सर्वाञ्छत्रून् Mah. शत्रून् विश्वतो विश्वान्। सार्वविभक्तिकस्तसिल्। ...विश्वतः सर्वाञ्शत्रून् Sy. अस्माकं ये शत्रवस्तान् U.

१३. सर्वतः स्थितान् Mah. परि परितो विश्वतो विश्वंरूपार्थः... सर्वरूपार्थवा Sy. विश्वतः सर्वतः U.

१४. परितो विदारयतु Mah. दारयति। यद्वा। दर्मा शत्रूणां दारक इन्द्रो दर्षिष्ट कार्त्स्न्येन दारयति शत्रून् Sy. परिविदारयतु U.

१५. VM. ignores सतम्। इत् and शूर and explains हतम्। विश्वतः once only.

This stanza occurs in YV. 8.53 where the following words are added to the text of the RV. भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः।

Ms.D. puts the figure ॥१३२॥ here to indicate the end of one hundred and thirty-second hymn. No such number is given in p. and M.

## I.133.

**उ॒भे पु॑नामि॒ रोद॑सी ऋ॒तेन॒ द्रुहो॑ दहामि॒ सं म॒हीर॑नि॒न्द्राः ।**
**अ॒भि॒व्लग्य॒ यत्र॑ ह॒ता अ॒मित्रा॑ वैलस्था॒नं परि॑ तृ॒ळ्हा अशे॑रन् ॥१॥**

उभे पुनामि[1]। समूहन्या[2] खलमिव यज्ञेन[3]। द्यावापृथिवी[4]। इन्द्रमयजमानाः[5]। द्रोग्ध्रीः[6]। प्रजाः। सन्दहामि[7]। अभिप्लुत्य[8]। यस्मिन्[9] सन्दहने। हताः[10]। अमित्राः[11]। वैरनिलयं[12] युद्धस्थानम्। परितः[13]। छिन्नाः[14]। शेरते[15] वृद्धाः[16][17]।

**अ॒भि॒व्लग्या॑ चिदद्रिवः शी॒र्षा या॑तु॒मती॑नाम् ।**
**छि॒न्धि व॑टू॒रिणा॑ प॒दा म॒हाव॑टूरिणा प॒दा ॥२॥**

अभिल्लग्या[18] चित्[19]। अभिप्लुत्य[20]। इव[21]। वज्रिन्[22]। शिरांसि[23]। हिंसायुक्तानां[24] राक्षसीनां

---

१. लोकद्वयं हिंसकानो तवायष्टुणां वा-ऽयगमनेन पावयामि Sy.
२. ०न्या M.
३. स्वयुद्देश्येन यज्ञेन बलेन (वा) Sy.
४. ०पृथिवीन्तिरयीन्द्र० P. ०पृथि न्तिर-यीन्द्र० D. ०पृथिवीं तीरयीन्द्र० M.
५. भूलोके ... इन्द्रविरहितानामाश्रयभूता महोर्व्यः Sy.
६. द्रो० M. अत एव द्रुहो द्रोहिणामाधार-भूतत्वात्स्वयमपि द्रोग्ध्रीः Sy.
७. सम्भूयैकहेलया दहामि Sy.
८. अभितो गत्वा Sy.
९. यत्र यासु भूमिषु Sy.
१०. सर्वतः प्राप्ताः, अस्माभिर्घातिता वा Sy.
११. शत्रवः Sy.
१२. रैनि० M. वैलस्थानम्। बिलशब्दो गर्तसमानार्थः। स च गर्तः श्मशान-वचनः। अतोऽयमपि श्मशानवाची। अथवा बिलसम्बन्धिस्थानं नागलोकः। तत्र वाऽशेरन्। यद्वा 'बिल भेदे' इति धातुः। ... तत्र शवाः क्षिप्यन्त इति वैलस्थानं श्मशानम्। तत्र त्वया हता भूमि श्मशानवत्कृत्वा सर्वत्र शेरते। तान्दहामीत्यर्थः Sy.
१३. परि M.
१४. ते सर्वे परितृळ्हा हिंसिताः। तृहू हिंसार्थः Sy.
१५. हिंसिताः सन्तोऽशेरन् शयनं प्राप्ताः। शेतेर्व्यत्ययेन परस्मैपदम् Sy.
१६. Missing in M.
१७. VM. ignores उभे। पुनामि
१८. ०प्ल० P.D.
१९. Missing in M.
२०. अभितः प्राप्य Sy.
२१. एव Sy.
२२. वज्रान् P. वैरिणां भञ्जक! यद्वा-ऽद्रेर्मेघस्यावर्तः! Sy.
२३. ०सी M.
२४. हिंसो युक्ता० M. हिंसावतीनां सेना-नाम्। यद्वा यातनसाधनान्यायुधानि यातूनि तद्वतीनाम्। अथवा यातवो रक्षांसि तद्वतीनां सेनानाम्। कर्मणि षष्ठी। शत्रूणां सेनाः Sy.

प्रजानाम्[1]। छिन्धि[2]। पादेन[3]। आवेष्टनवता[4]। पादस्याधोभागो वद्रूरो[5] महता[6] तेन युक्तेन[7]।

**अवासां मघवञ्जहि शर्धो यातुमतीनाम् ।**
**वैलस्थानके अर्मके महावैलस्थे अर्मके ॥३॥**

अवासां मघवन्[7]। अवजहि[8]। यातुमतीनाम्[9]। बलम्। वैलस्थानके, स्वार्थे[10] कः। हिंसके[11]। महति[12, 13]।

**यासां तिस्रः पञ्चाशतोऽभिप्लङ्गैरपावपः ।**
**तत्सु ते मनायति तकत्सु ते मनायति ॥४॥**

यासां तिस्रः। यासां[14] यातुमतीनाम्। अध्यर्द्धं[15] शतम्। अभिप्लवनैः[16]। दिवः, अधो नीतवान[17]-सि। तत्कर्म[18]। त्वाम्[19]। सुष्ठु[20]। पूजयति[21]। तदल्पमप्युपकारातिशयात्[22]।

---

१. The passage beginning with शिरांसि and ending with प्रजानाम् is omitted by P.

२. चूर्णय। यद्वा तासां सम्बन्धीनि रथादीनि छिन्धि Sy.

३. केन साधनेनेति तदुच्यते। ... स्वदीयपादेन Sy.

४. वेष्टनशीलेन सर्वव्याप्तेन ... अतिविस्तृतेनेत्यर्थः। यद्वा वद्रूरिणा पदा वेष्टनशीलेन हस्तिनः सम्बन्धिना पादेन, ऐरावतपादेनेत्यर्थः Sy.

५. वधूरो P.D.M.

६. न केवलेन येन केन पादेनेत्याह। महावद्रूरिणा पदा महावेष्टनवता स्वीयेन, ऐरावतसम्बन्धिना वा पादेन छिन्धि चूर्णय Sy.

७. VM. explains पदा once only. हे इन्द्र ... धनवन्! Sy.

८. चूर्णय Sy.

९. यातनासाधनान्यायुधानि यातूनि तद्वतीनाम्। यातुधानवतां वा सेनानाम् Sy.

१०. Missing in M. कुत्सिते पूर्वोक्तलक्षणे श्मशाने क्षपयेति शेषः। यद्वा ... बिलसम्बन्धिनि कुत्सिते स्थानेऽन्धकारावृतेऽधोलोके स्थापयेति शेषः Sy.

११. अर्मके कुत्सिते शवैररणीये ... कुत्सिते गतासुभिररणीये Sy.

१२. सर्वैर्गन्तव्ये महाश्मशाने नागलोके वा Sy.

१३. VM. ignores अवासाम् and मघवन् and explains अर्मके once only.

१४. पूर्वमन्त्रोक्तलक्षणानां सेनानाम् Sy.

१५. ०द्ध P. तिस्रः पञ्चाशतस्त्रिगुणितपञ्चाशत्सङ्ख्यां सार्धशतम् Sy.

१६. अभिगमनैः। प्लङ्गतिर्गतिकर्मेत्युक्तम् Sy.

१७. अभिगम्य ... नाशितवानसि Sy.

१८. तत्तादृशं सेनावधाविरूपं कर्म Sy.

१९. त्वा P.

२०. सुमनायति सुष्ठु सम्भावयतीत्यर्थः Sy.

२१. किञ्च हे इन्द्र! ते तवाध्यर्धशतशत्रुसेनाजयरूपं महदपि तकद् इति सुमनायति। अत्यल्पमिदमिति सुष्ठु मन्यते Sy.

२२. VM. explains सु। ते। मनायति once only.

**पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण । सर्वं रक्षो नि बर्हय ॥५॥**

पिशङ्गभृष्टिम्। भ्रीनिमान्[1] राक्षसान्। एतेषामनुचरं[2] सर्वं च। रक्षः[3]। निनाशय[4]। पिशङ्गदीप्तिस्त्वक्कहरो मांसाश्चन[5] इति निर्वचनम्।

**अवर्मह इन्द्र दादृहि श्रुधी नः शुशोच हि द्यौः क्षा न भीषाँ अद्रिवो घृणान्न भीषाँ अद्रिवः । शुष्मिन्तमो हि शुष्मिभिर्वधैरुग्रेभिरीयसे । अपूरुषघ्नो अप्रतीत शूर सत्वभिस्त्रिसप्तैः शूर सत्वभिः ॥६॥**

अवर्मह[6] इन्द्र। रक्ष। महतो[7]ऽस्मान्। दारय[8] त्वं शत्रून्। शृणु च। अस्मान्[9]। शुशोच। हि[10]। द्यौरसुरैः[11]। पृथिवी[12]। च[13]। भयेन[14]। वज्रिन्[15]! दीप्तादसुरात्[16]।

---

१. भ्रीणि मां M. पिशङ्गभृष्टिमीषद्रक्तवर्णम्। अम्भृणमतिभयङ्करं शब्दायमानम्।...यद्वा महान्तमतिप्रवृद्धमित्यर्थः। अम्भृण इति महन्नाम। 'अम्भृणो माहिनः' (Ngh. 3. 3.) इति तत्र पाठात्। उक्तविधं पिशाचि पिशाचविशेषं, जरामित्येके Sy. २. ०मनुचरं M.

३. न केवलं तमेकं किन्तु सर्वं रक्षो रक्षणनिमित्तभूतं राक्षसादिकम् Sy.

४. सम्मृण सम्यग्हिंसय ... निबर्हय निषूदय। 'बर्ह हिंसायाम्'। चौरादिकः। नाशय। वधकर्मैतत् 'नितोशयति निबर्हयति' (Ngh. 2.19.) इति तत्रोक्तत्वात् Sy. The reading of the Ngh. is नितोशते and there is no variant.

५. मंसा० P.VM. ignores इन्द्र

६. अवस्तादवाङ्मुखम् Sy.

७. हे इन्द्र! महो महतो मेघस्य। कर्मणि षष्ठी। महान्तं जलधारिणं मेघं महान्तं वृत्रं वा Sy. ८. विदारय Sy.

९. नोऽस्मद्वाक्यम् Sy. १०. यस्मात्कारणात् Sy. ११. द्युलोको देवानामाश्रयभूतः शुशोच शोचति। वृष्ट्यभावेन हविराद्यभावादिति भावः Sy.

१२. तत्र दृष्टान्तः। ... क्षेति भूनाम। क्षायन्ति निवसन्त्यस्यामिति क्षाः,... सर्वनिवासाश्रयभूमिरिव। सा यथा ... शोचति तद्वत्। लोकद्वयमपि वृष्ट्यभावेन शोचतीत्यर्थः। असुरपक्षे लोकद्वयमावृत्य प्रवर्धमानं धर्तुमसहमाने द्यावापृथिव्यौ शोचत इत्यर्थः। तस्माच्छ्रुधीति पूर्वत्रान्वयः Sy.

१३. Omitted by P.D.

१४. भीषा वृष्ट्यभावात्तस्यादिशोषभीत्या Sy.

१५. अद्रिर्मेघः। तद्वन्निन्द्र!...शत्रूणां भक्षक! यद्वा, अद्रिर्वज्रस्तेन तद्वन् हे इन्द्र! Sy.

१६. भीतौ दृष्टान्तः।...अग्नेर्मूर्त्यन्तरात्त्वष्टुर्भीत्येव। त्वष्टुर्भीत्या पूर्वं यथा द्यावापृथिव्यौ शोचतस्तद्वत्। अत्रेतिहासमाहुः। पूर्वं जगति महान्धकारेणावृते सति देवा विचिन्त्याग्निं प्रार्थितवन्तः। स च त्वष्टृरूपेण द्यावापृथिवीभ्यां सकाशात्तमो व्युदस्यन्नुदपद्यत। तं दृष्ट्वा द्यावापृथिव्यौ बिभ्यतुरिति। ...यद्वा घृणः केवलोऽग्निः, तस्माद्यथा बिभीतस्तद्वत्...तादृशभीति वृष्टिप्रदानेन परिहरेत्यर्थः Sy.

शोषयितृतमः[1]। हि[2] त्वम्। शोषयितृभिः[3]। प्रहारैः। उग्रैः[4]। गच्छसि[5]। पुरुषार्थवाधमानः[6] शत्रुभिर्[7]-प्रतिगत[8]! शूर[9]! मरुद्भिः[10]। एकविंशत्सङ्ख्याकैः[11] 'त्रिषप्तासो[12] मरुतः स्वादुसंमुदः'[13] इति[14] मन्त्रः[15]।

**वनोति हि सुन्वन्क्षयं परीणसः सुन्वानो हि ष्मा यजत्यव द्विषो देवानामव द्विषः। सुन्वान इत्सिषासति सहस्रा वाज्यवृतः। सुन्वानायेन्द्रो ददात्याभुवं रयिं ददात्याभुवम् ॥७॥**

वनोति हि सुन्वन्। भजते[16]। हि[17]। यजमानः[18]। महतोऽप्ययजमानस्य[19]। गृहम्[20]। सुन्वानः[21]। अधः करोति[22]। हि[23]। शत्रून्[24]। देवानयजमानान्[25]। सुन्वानः। एव च। बहूनि धनानि[26]। सम्भक्तुमिच्छति। बलवान्[27]। शत्रुभिरपरिवृतः[28]। सुन्वानायैव। इन्द्रः[29]। धनम्[30]।

---

१. प्रतिशयेन बलवान् Sy.
२. खलु Sy.
३. बलैः।...यद्वा शुष्मिभिर्वधैरिति सम्बन्धः Sy.
४. अतः कारणात्...वधैस्तदुपायैः सहितस्त्वम् Sy.
५. उद्गूर्णैरतिक्रूरैः Sy.
६. शत्रून्मेधान्वा गच्छसि Sy.
७. पौरुष्योपेतानां यजनसमर्थानामहननस्त्वम् Sy.
८. अवसत्रे रक्षःप्रभृतिभिरप्रतिगत! युद्धे शत्रुभिरनाक्रान्त! यद्वा सत्वभिः प्राणिभिरसंस्कृतमनस्कैरनभिगत! Sy.
९. विक्रान्त! Sy.
१०. अनुचरैरुपेतः सचीयस इत्यन्वयः Sy.
११. त्रिभिः सप्तभिर्वा सत्वभिः Sy.
१२. त्रिसप्ता० P. D. M. and also TB. 2.5.2.3. AV. reads त्रिषप्ता
१३. ०समु० P.
१४. AV. 13.1.3.
१५. VM. ignores इन्द्र। न and explains भीया। अद्रिवः। शूर। सत्वभिः once only
१६. त्वत्प्रसादात्सम्भजते ... साधयितुं सम्भक्तुं वेच्छति Sy.
१७. हिः प्रसिद्धचर्थः Sy.
१८. त्वामुद्दिश्याभिषवं कुर्वन्यजमानः Sy.
१९. परीणसः परितो नद्धान्सम्बद्धान् Sy.
२०. सर्वैर्वस्तव्यं गन्तव्यं वा गृहम् Sy.
२१. सोमयागं कुर्वाणः ... अभिषवोपलक्षितं यागं कुर्वाणः Sy.
२२. अवयजति नाशयति Sy.
२३. एव Sy.
२४. द्विषो द्वेष्टॄन् Sy.
२५. न केवलं यागद्वेषिणो देवानां द्विषोऽप्यवयजति Sy.
२६. सहस्राण्यपरिमितानि गवादिधनानि Sy.
२७. त्वत्प्रसादात् ... वाजवानन्नवान् Sy.
२८. परैरनाक्रान्तः सन् Sy.
२९. केनेदं लभ्यत इति तत्राह ... इन्द्रमुद्दिश्य सोमयागं कुर्वाणाय यजमानाय वा Sy.
३०. प्रतिसमृद्धं रयिं गवादिरूपं धनम् Sy.

ददाति।[1] परितो[2] भवतु।[3]

## I.134.

**आ त्वा जुवो रारहाणा अभि प्रयो वायो वहन्त्विह पूर्वपीतये सोमस्य पूर्वपीतये। ऊर्ध्वा ते अनु सूनृता मनस्तिष्ठतु जानती। नियुत्वता रथेना याहि दावने वायो मखस्य दावने ॥१॥**

आ त्वा जुवः। वायो! त्वाम्। गमनशीलाः। वेगवत्यो[4] नियुतः।[5] अन्नम्।[6] प्रति। इह।[7] आवहन्तु।[8] सोमस्य। यज्ञमुखे पानाय।[9] पुरुषस्य कामुकं मनः।[10] जानती।[11] तव।[12] वाक्।[13] ऊर्ध्वा।[14] अनुतिष्ठतु[15] शतं गृहाण सहस्रं गृहाणेति[16] निर्गच्छतु, त्वं वा। नियुत्वता।[17] रथेन। धनस्य। दानाय।[18] आयाहि।[19][20]

---

१. प्रयच्छति। तस्मात्सुन्वानः सिषास-तीत्यर्थः Sy.

२. ०तोऽभ० M. आभुवं समन्ताद् भवन-शीलं तथाऽऽभुवं पुनर्भवनशीलम् Sy.

३. VM. explains अत्र। द्विषः। ददाति। आभुवम् once only and ignores स्म।
Ms. D. puts the figure ॥१३३॥ here to indicate the end of one hundred and thirtythird hymn. No such number is given in P. and M.

४. शीघ्रगामिनो बलवन्तो वा Sy.

५. सामर्थ्यान्नियुत्सञ्ज्ञका अश्वाः Sy. नियुतो वायोः Ngh. 1.15.

६. चरुपुरोडाशादिहविर्लक्षणमन्नम् Sy.

७. अस्मिन्यज्ञे Sy.

८. प्रापयन्तु Sy.

९. पूर्वपानाय। पुनः। किमर्थम्। ... इतरदेवेभ्यः पुरा पानाय Sy.

१०. ०कर्मनः P.

११. जानाति P. तव गुणान्विशेषेणाव-गच्छन्ती Sy.

१२. तव सम्बन्धि Sy.

१३. जाना ... वाक् M. सूनृता प्रियसत्या-त्मिका स्तुतिरूपाऽस्मदीया वाक्। ... सूनृतेति वाङ्नाम। 'सूनृता ब्रह्म' इति (Ngh. 2.7.) तन्नामसूक्तत्वात् Sy.

१४. उन्नता Sy.

१५. तिष्ठत M. आश्रित्य सर्वदा वर्तताम्। हृष्यत्वित्यर्थः Sy.

१६. ०णो M.

१७. नियुद्भिर्युक्तेन रथेन Sy.

१८. सोमपानार्थं स्तुत्यर्थञ्च हे वायो! मखस्य यज्ञस्य दावने दातव्याय हविषे तत्स्वीकाराय। पुनः किमर्थम्। ... अस्मभ्यमभिमतदानाय Sy.

१९. याहि D. आगच्छ Sy.
The passage beginning with शतं and ending with आयाहि is omitted by M.

२०. VM. explains पूर्वपीतये। वायो। दावने once only.

मन्दंन्तु त्वा मुन्दिनो वायविन्दंवोऽस्मत्क्राणासः सुकृता अभिद्यवो गोभिः क्राणा अभिद्यवः ।
यद्ध क्राणा इरध्यै दक्षं सचंन्त ऊतयः ।
सध्रीचीना नियुतो दावने धिय उपं ब्रुवत ईं धियः ॥२॥

मन्दन्तु त्वा। मन्दन्तु[1]। त्वां[2]। मदयितारः[3]। वायो! सोमाः[4]। अस्माकमभिलषितानि[5]। पशुभिः[6]। कुर्वाणाः[7]। सुसंस्कृताः[8]। अभिगतदीप्तयः[9]। यदि[10]। खलु[11]। परिचरणार्थम्[12]। यजमानेषु कुर्वाणाः[13]। नियुतः[14]। वायुम्[15]। सेवन्ते[16]। ततः सहाञ्चन्तीति[17]। नियुतः। कामानां[18] धातारः[19]। तेषां

---

१. मादयन्तु। व्यत्ययेन परस्मैपदम् Sy.

२. त्वाम् Sy.

३. कीदृशाः सोमाः। मन्दिनो मादयितारः Sy.

४. क्लेदयितारः सोमाः Sy.

५. ०मास्मा० P.
अस्माकं सम्बन्धिनः Sy.

६. गोभिर्वाग्भिर्मन्त्ररूपाभिः। क्राणाः क्रियमाणा हूयमानाः। यद्वा गोभिर्गन्तृभिराहवनीयम्प्रत्यानेतृभिः क्राणा हूयमानाः Sy. गौरिति वाङ्नाम। वाग्भिः ... क्राणाः कुर्वाणाः। किम्? ता एव स्तुतिलक्षणा वाचः सोमप्रदानं वा SKN. वाग्भिः स्तुतिलक्षणाभिः ... प्राभिमुख्येन कुर्वाणाः। ... तस्मात् 'क्राणाः' इत्येष शब्दः 'कुर्वाणाः' इत्येवमुपपद्यते Dur.

७. कुर्वाणाः स्वकार्यं हर्षादिकम् Sy.

८. The passage beginning with शतं (I.134.1.) and ending with सुसंस्कृताः is omitted by M. अभिषववशापवित्रशोधनग्रहणादिभिः सुष्ठु कृताः Sy.

९. M. begins गृहाणेति (I.134.1.) अभिगतदीप्तयः and writes above it with red ink मन्दन्तु त्वा। अभितो द्योतयन्तः ... अभिद्यवोऽभिगन्तारः Sy.

१०. यस्मात्कारणात् Sy.

११. हशब्दः प्रसिद्धौ। दक्षम्, अस्मद्यागदेशम्प्रति गन्तुमुत्साहवन्तं समर्धयितारम् Sy.

१२. इरध्यै प्रापयितुं परिचरितुं वा। ...इरध्यतिः परिचरणकर्मा। 'इरध्यति विधेम' (Ngh.3.5.) इति तन्नामसूक्तत्वात् Sy.

१३. कीदृशास्ताः। ... स्वव्यापारं रथवाहनादिकं कुर्वाणाः Sy. क्राणाः कुर्वाणाः, N. 4.19.

१४. M. adds गन्त्यो before नियुतः। एतत्सञ्ज्ञकास्तदीयाश्वाः Sy.

१५. ईं त्वाम् Sy.

१६. धियः कर्माण्युद्दिश्य सचन्ते त्वां सङ्गच्छन्ते यागदेशं वा Sy.

१७. सहाञ्चन् M. ऊतयो रक्षणवत्यः प्रीतियुक्ता वा Sy. ...सध्रीचीनास्त्वया सहाञ्चन्त्यो गच्छन्त्यः।

१८. कामान् P.D.

१९. धार० P.
धियः कर्मवन्तो बुद्धिमन्तो वा ऋत्विजो यजमाना वा Sy.

दानाय[१]। स्तुवन्ति[२]। एनाः[३] ।[४]

**वायुर्युङ्क्ते रोहिता वायुररुणा वायू रथे अजिरा धुरि वोळ्हवे वहिष्ठा**
**धुरि वोळ्हवे। प्र बोधया पुरंधिं जार आ ससतीमिव।**
**प्र चक्षय रोदसी वासयोषसः श्रवसे वासयोषसः ॥३॥**

वायुर्युङ्क्ते। वायुः। युङ्क्ते[५]। रोहितवर्णौ[६] कदाचित्। अरुणे[७]। वायुः[८]। रथे[९]। गमनशीलौ[१०]। धुरि[११]। वहनाय[१२]। वोढारौ[१३]। प्रबोधय[१४]। बहुप्रज्ञम्[१५]। जारः[१६]। स्वपतीमसतीं[१७] यथा[१८] बोधयति[१९]। प्रदर्शय चास्मै प्रबोधेन[२०]। द्यावापृथिवी। विवासय[२१] च। उषसः। अस्मा[२२] अन्नाय[२३] वायोः[२४,२५]।

---

१. वावने दानाय हविःस्वीकारनिमित्तम् Sy.
२. उपेत्य ब्रुवन्ति स्वाभिमतं विज्ञापयन्ति वा Sy.   ३. एनाम् M.
४. VM. explains क्राणाः। अभिज्ञवः। धियः। once only. A fragment गोभिः क्राणाः is explained in N. 4. 19; SKN. II.254. The stanza of the RV., quoted in N. 4. 19., is however a different one.
५. वायुः। युङ्क्ते is omitted by P.D. क्वचिद्योजयति Sy.
६. रोहितवर्णावश्वौ Sy.
७. तथा क्वचित् ... अरुणवर्णौ धुरि युङ्क्ते Sy.   ८. वायु P.D. पुनः पुनर्वायुग्रहणमश्वयोजनवचनं चातिशीघ्रमागच्छतीति ज्ञापनार्थम् Sy.
९. रथस्याग्रभागे यद्वा भारवहने Sy.
१०. गमनशीले is suggested for गमनशीलौ।
अजिरौ गमनशीलौ वर्णविशेषयुक्तौ कदाचिद्युङ्क्ते। यद्वैतदुभयत्र सम्बध्यते Sy.
११. धारणप्रदेशे Sy.
१२. किमर्थं युङ्क्त इति तत्राह।...धुरं वोढुं भारवहनाय Sy.
१३. वोढृणौ is suggested for वोढारौ। अतिशयेन वोढारावश्वौ।...धुरि वोळ्हवे महद्भारं वोढुं, महति भारे वोढव्ये सति Sy.
१४. रथेन शीघ्रमागत्य प्रज्ञापय हविःस्वीकारायेति भावः Sy.
१५. इदानीं प्रत्यक्षेणाह। हे वायो पुरन्धिं बहुप्रज्ञं सामर्थ्याद्यजमानमिति गम्यते Sy. पुरन्धिर्बहुधीः N.6.13.
१६. तत्र दृष्टान्तः। जारः पारदारिकः Sy.
१७. प्रज्ञार स्व० P. उपपत्यागमनध्यानेनेषत्स्वपतीम् Sy.
१८. पुरन्ध्रिमिव प्रकृष्टशरीरधारिणीं योषितमिव Sy.
१९. तां यथा स्वसङ्केतेन स प्रबोधयति तद्वत्त्वमपि कर्मव्यग्रेणेषत्स्वपन्तं यजमानं प्रबोधय Sy.
२०. ०धने P. प्रचक्षय प्रकर्षेण प्रख्यापय। प्रकाशयेत्यर्थः Sy.
२१. वासय...यथावत्स्थापय। प्रभातं कुर्वित्यर्थः Sy.
२२. तत्प्रकाशार्थम्...उषःकालानपि Sy.
२३. श्रव इत्यन्ननाम। तव हवीरूपान्नस्वीकारायोषसो वासय Sy.
२४. वयोः P.
२५. VM. explains धुरि। वोळ्हवे। वासय। उषसः once only.

**तुभ्यमुषासः शुचयः परावति भद्रा वस्त्रा तन्वते दंसु रश्मिषु चित्रा**
**नव्येषु रश्मिषु । तुभ्यं धेनुः सबर्दुघा विश्वा वसूनि दोहते ।**
**अजनयो मरुतो वक्षणाभ्यो दिव आ वक्षणाभ्यः ॥४॥**

तुभ्यमुषासः । तुभ्यम् । उषसः[1] । निर्मलाः[2] । पूर्वस्यां दिशि[3] । भजनीयानि[4] । तेजांसि[5] । तन्वते[6] । कल्याणानि[7] । दर्शनीयेषु[8] । नवतरेषु[9] । रश्मिषु । तुभ्यम्[10] । धेनुः[11] । अमृतस्य[12] दोग्ध्री । विश्वानि[13] । धनानि[14] । दोग्ध्री[15] घृतं पयो दधि स त्वम् । दिवः[16] । नदीभ्यः[17] । सकाशात् । इमान् मरुतः[18] । अजनयः[19][20] ।

**तुभ्यं शुक्रासः शुचयस्तुरण्यवो मदेषूग्रा इषणन्त भुर्वण्यपामिषन्त भुर्वणि ।**
**त्वां त्सारी दसमानो भगमीट्टे तक्ववीये ।**
**त्वं विश्वस्माद्भुवनात्पासि धर्मणासुर्यात्पासि धर्मणा ॥५॥**

तुभ्यं शुक्रासः[21] । तुभ्यम् । सोमाः[22] । शुचयः[23] । त्वरमाणाः[24] । मदेषु[25] च सत्सु[26] । उग्रा[27] मरुतः ।

---

१. उषासः P.
२. शुचयः शुद्धा दीप्ता वा Sy.
३. पश्यां P. D. M. परावति, अत्यन्तदूरदेशेऽन्तरिक्षे Sy.
४. भन्दनीयानि कल्याणानि Sy.
५. आच्छादनयोग्यानि वस्त्राणि Sy.
६. विस्तारयन्ति । यद्वा । उषसो दंसु यागगृहेषु देवयजनेषु रश्मिषु होमाय प्रदीप्ताग्निज्वालावत्स्वागताय तुभ्यं भद्रा वस्त्रा तन्वते । अग्निज्वाला एव वस्त्राणि विस्तारयन्तीत्यर्थः । उषःकालेऽग्नीनां प्रज्वाल्यमानत्वात्ता एव वस्त्राणीत्युपचर्यते Sy.
७. चित्राणि नानावर्णयुक्तानि, आश्चर्यभूतानि तन्वते । उषःकाले रश्मीनां नानावर्णत्वादिति भावः । अग्निद्वारेति पक्षे ज्वालानां कालीकरालीत्यादिरूपेण नानावर्णत्वाच्चित्रत्वम् Sy.
८. दंसेषु कर्मवत्सु । यद्वा । गृहनामैतत् । ...गृहवदाच्छादकेषु Sy.
९. ननु केवलं साधारणानि वस्त्राणि नेत्याह नव्येषु नूतनेषु स्तूयमानेषु Sy.
१०. स्ववर्चं त्वद्यागार्थमेव Sy.
११. घृतादिना प्रीणयित्री गौः । जातावेकवचनम् Sy.
१२. तुभ्यं ...मृतस्य M. सबर्दुघा । सबरित्यमृतनाम । तस्य दोग्ध्री Sy.
१३. Missing in M.
१४. धनानि, आज्यादिरूपाणि Sy.
१५. स्वयमेव तुभ्यं प्रीणयतीत्यर्थः Sy. दोग्धि is suggested for दोग्ध्री
१६. निवः P. दीप्तादन्तरिक्षात् Sy.
१७. नदीत्यः M. प्रवहणशीलाभ्योऽद्भ्यो वृष्टिलक्षणाभ्यः । ... नदीनामैतत् । 'रुजाना वक्षणाः' (Ngh. 1.13.) इति तन्नामसु पाठात् Sy.
१८. एतन्नामकान् मेघं विदीर्य वृष्ट्युत्पादकांस्त्वदंशभूतान्देवान् Sy.
१९. प्रजनयः P. D. M. जनयस्युत्पादयसि Sy. २०. VM. explains रश्मिषु । वक्षणाभ्यः once only.
२१. ०क्रा० P. दीप्ताः Sy. २२. सोमस्य पातारोऽत्यन्तं शुद्धा भवन्ति । किमु वक्तव्यं तेषां शुद्धत्वे Sy. २३. शुचः P. शुद्धाः Sy. २४. त्वमरणाः P. त्वरणयुक्ताः Sy. २५. तव मदेषु निमित्तभूतेषु Sy. २६. निस० M.
२७. त्वां प्राप्तुमुग्रा उद्गूर्णतेजसः Sy.

अपां वृष्टिलक्षणानाम्। भरणे[1]। व्याप्रियन्ते[2]। त्वाम्। चोरभयाद् गच्छन्[3]। चोरहिंस्यमानः[4][5]। भजनीयम्। स्तेनैः परिगन्तव्ये[6] देशे। स्तौति। त्वञ्च। असुरपक्षीयात्[7]। सर्वस्मात्। भूतजातात्[8]। कर्मणा[9]। तं रक्षसि[10]।[11]

**त्वं नो॑ वायवेषा॒मपू॑र्व्य॒ः सोमा॑नां प्रथ॒मः पी॒तिम॑र्हसि सु॒तानां॑ पी॒तिम॑र्हसि ।**
**उ॒तो वि॒हुत्म॑तीनां वि॒शां व॑व॒र्जुषी॑णाम् ।**
**विश्वा॒ इत्ते॑ धे॒नवो॑ दुह्र आ॒शिरं॑ घृ॒तं दुह्र॑त आ॒शिर॑म् ॥६॥**

त्वं नो वायो[12]। यज्ञियानाम्[13]ग्रिमः। त्वम्। वायो[14]! एषाम्। सुतानाम्[15]। अस्मदीयानाम्। सोमानाम्। प्रथममेव[16]। पानम्। अर्हसि[17]। किञ्च। विविधहोमयुक्तानाम्[18]। यास्त्व विशः कदर्यतया[19] वर्जयन्ति[20] होमं तासामुभयीनाम्[21]। अपि। धेनवः। तुभ्यं भूतेरीश्वराय। पयः[22]।

---

१. भरेण D. भरणवति यागे Sy.
२. आहवनीयं प्रति गच्छन्तीच्छन्ति वा। व्यत्ययेनात्मनेपदम्। ... किञ्चापां भुर्वणि मेघे, इषन्त उदकमिच्छन्त्युत्पादयितुम्। अग्नौ हूयमानस्याहुतेरादित्यद्वारा वृष्ट्युत्पादकत्वात्। यद्वा यजमानास्त्वामुद्दिश्याऽनुह्वाना अपां वर्षणम् ... इच्छन्ति Sy.
३. ०क्षणा...गच्छन् M. त्सरणवानत्यन्तभीतः Sy.
४. यज्ञविघातकैः पयोव्रताविनियमैर्वा Sy.
५. उपक्षीणः ... यजमानः Sy.
६. तस्कराणां यज्ञविघातिनामन्यत्र गमनाय Sy.
७. सुर० P.D. ०यान् M. असुरसम्बन्धिनो भयाद्विशेषेण पासि Sy.
८. लोकाद् भूतजाताद्वा लोकत्रयसम्बन्धिनो भयात् Sy.
९. धर्मणा अस्मदीयहविषां धारणेन ... अस्मद्धारणेन पोषणेन वा युक्तः सन् Sy.
१०. क्षरसि M. पासि पालयसि। ... यत एवं करोषि, अतः स्तौमीत्यर्थः Sy.
११. VM. ignores इषन्त and explains भुर्वणि। पासि। धर्मणा once only.
१२. वयो P.
१३. न विद्यते पूर्वं यस्मात्तत्पानमपूर्वम्। तदर्हतीत्यपूर्व्यः।
१४. Missing in M.
१५. अभिषवकृतानां सोमानाम् Sy.
१६. तादृशोऽत एव प्रथम इतरदेवेभ्यः पूर्वभूतः सन् Sy.
१७. प्राप्नोषि। ...यत्र यत्राभिषवोऽस्ति तत्र सर्वत्र नियमेन पिबसीत्यर्थः। पूर्वं प्राथम्याभिप्रायेणोक्तानीन्तु सर्वत्र सोमवति यागेऽस्य पानमस्तीति ज्ञापयितुं पृथगभिधानम् Sy.
१८. न केवलं सोमपानमात्रम्। उतो, अपितु ...विशेषेण होमवतीनामाह्वानवतीनां वा Sy.
१९. ०र्यया P.D.
२०. अनभिमतपापं वर्जयन्तीनाम् Sy.
२१. ऋत्विग्यजमानरूपाणां प्रजानां सम्बन्धि हविः स्वीकरोषीति शेषः। यद्वा तेषां यष्टॄणाम् Sy.
२२. आश्रयणद्रव्यं क्षीरम् Sy.

घृतश्च[1]। दुहते[2] कदर्यास्ति[3] त्वां भजन्ते धनेप्सया[4]।

I.135.

स्तीर्णं बर्हिरुप नो याहि वीतये सहस्रेण नियुता नियुत्वते
शतिनीभिर्नियुत्वते । तुभ्यं हि पूर्वपीतये देवा देवाय येमिरे ।
प्र ते सुतासो मधुमन्तो अस्थिरन्मदाय क्रत्वे अस्थिरन् ॥१॥

स्तीर्णं बर्हिः। स्तीर्णम्[5]। बर्हिः[6]। उपगच्छ[7]। अस्मान्[8]। पानाय[9]। सहस्रसङ्ख्याभिः[10]। शतसङ्ख्याभिश्च[11]। नियुद्भिः[12]। तद्वते[13] तुभ्यं स्तीर्णम्। अनामन्त्रितेऽपि सर्वनिघातो दृष्टः। तुभ्यम्। हि[14]। देवाय[15]। देवाः। पूर्वपानार्थम्[16]। नियमितवन्तः[17], 'मदन्ना एव यो ग्रहा[18] गृह्यन्ते[19]' इति त्वया प्रपानार्थम्[20]। मधुररसाः[21]। सोमा[22] हविर्धानात्। तव। मदम्[23]। प्रज्ञां[24] च कर्तुम्। प्रतिष्ठन्ते[25]।[26]

---

१. ... उपस्तरणाभिधारणाद्याश्रयणयोग्यं करणं (धारण) द्रव्यम् Sy.

२. दुहन्ति स्वयमेव Sy.

३. ०ते ... क० M.

४. VM. ignores दुहते। विश्वा and explains पीतिम्। अर्हसि। आशिरम् once only.

Ms. D. puts the figure ॥१३४॥ here to indicate the end of one hundred and thirtyfourth hymn. No such number is given in P. and M.

५. आस्तृतम् Sy.

६. बर्हिरभिलक्ष्य Sy.

७. उपयाहि, आगच्छ Sy.

८. अस्मद्यज्ञार्थम् Sy.

९. वीतये हविषां भक्षणाय Sy.

१०. केन साधनेनेति तदुच्यते।... सहस्रसङ्ख्याकेन Sy.

११. शतसङ्ख्योपेताभिः Sy.

१२. जातावेकवचनम्। नियुत इति वायोरश्वानां नामधेयम्। 'नियुतो वायोः' (Ngh. 1.15.) इति निरुक्तत्वात्। ... आगच्छेति शेषः। यद्वा। सहस्रेण नियुता शतनीभिश्च नियुद्भिः Sy.

१३. ... देवाय हविर्दीयत इति शेषः। यद्वा। तुभ्यमित्यनेन सम्बन्धः। उक्तसङ्ख्याकाभिर्नियुद्भिस्तद्वते देवाय तुभ्यम् Sy.

१४. मन्त्रान्तरप्रसिद्धिद्योतनार्थो हिशब्दः Sy.

१५. द्योतमानाय Sy.

१६. इतरदेवेभ्यः पूर्वं पानाय Sy.

१७. ० यत० D. यमितवन्तः। यद्वा स्तोतार ऋत्विजो देवाय तुभ्यं येमिरे। आहवनीयं प्रति सोमं नियमितवन्तः Sy.

१८. प्रवा P.

१९. ० ह्या० D.

२०. प्रा० M.

२१. ० धुरसाः P. माधुर्योपेताः Sy.

२२. एते ... अभिषुताः ... सोमाः Sy.

२३. मदाय तव मोदाय Sy.

२४. कर्मणे तत्सिद्ध्यर्थम् Sy.

२५. ० ष्ठते P.D.M. ऋत्विग्भिर्धृतास्तिष्ठन्ति। अतस्त्वं पिबेति शेषः Sy.

२६. VM. explains नियुत्वते। अस्थिरन् once only.

**तुभ्या॒यं सोम॒: परि॑पूतो॒ अद्रि॑भिः स्पा॒र्हा वसा॑न॒: परि॒ कोश॑मर्षति शु॒क्रा वसा॑नो अर्षति । तवा॒यं भा॒ग आ॒युषु॒ सोमो॑ दे॒वेषु॑ हूयते । वह॑ वायो नि॒युतो॑ या॒ह्यस्म॒युर्जु॑षा॒णो या॑ह्यस्म॒युः ॥२॥**

तुभ्यायं सोमः। तुभ्य[1]। प्रथम्। सोमः। अभिषुतो[2] ग्रावभिर्[3]ऋजीषाद् विविक्तः[4]। स्पृहणीयानि। कल्याणान्युदकानि[5]। वसानः[6]। अंशु विसृज्य। रसात्मकोऽभिषूयमाणो निर्गच्छत्त्यं-शूनपहाय[7] निर्गच्छति[8]। तव। प्रथम्। भागः[9]। मनुष्येषु[10] स्थितः। सोमः[11]। देवानां मध्ये[12]। हूयते[13]। तथा सति, आगच्छ[14]। वायो[15]। नियुतश्च[16]। गमनार्थमभिगच्छ[17]। अस्मत्कामः[18]। प्रीयमाणः[19]।[20]

**आ नो॑ नि॒युद्भि॑: श॒तिनी॑भिरध्व॒रं स॑ह॒स्रिणी॑भि॒रुप॑ याहि वी॒तये॒ वायो॑ ह॒व्यानि॑ वी॒तये॑ । तवा॒यं भा॒ग ऋ॒त्विय॒: सर॑श्मि॒: सूर्ये॒ सचा॑ । अ॒ध्व॒र्युभि॒र्भर॑माणा अयंसत॒ वायो॑ शु॒क्रा अ॑यंसत ॥३॥**

आ नो नियुद्भिः। वायो[21]! अस्मद्यज्ञम्[22]। शतसहस्रसङ्ख्याभिः[23]। अश्वाभिः[24]। हवींषि[25]।

---

१. तुभ्यम् । त्वदर्थम् Sy.

२. ० मो पुतः P. हूयमानः । कोशं कोशस्थानीयं ग्रहमर्षति गच्छति प्राप्नोति Sy.

३. अभिषवसाधनैः Sy.

४. विविविक्त P. विविक्त M. कीदृशः सोमः। . . . अपगतर्जीषत्वेन शोधितः। यद्वा । अद्रिभिरभिषुतो दशापवित्रशोधनेन ग्रहणेन वा शोधितः Sy.

५. M. adds च after उदकानि । तेजांसि Sy.

६. ० नांशु D. पिधानः । किञ्च शुक्रा निर्मलानि दीप्तानि वा तेजांसि वसानः Sy.

७. ० नपहानाय P. निर्गत्यांशून ० M.

८. ' । नि० D. त्वां प्राप्नोति Sy.

९. भोगः P. भजनीयः सोमः Sy.

१०. मनुष्येषु पष्टव्यत्वेन स्थितः Sy.

११. सोमे P.

१२. देवेषु मध्ये Sy.

१३. सात्त्वपीतरेषु देवेषु यतः सोमस्तव भागोऽतः प्रथमं तुभ्यं हूयत इत्यर्थः Sy.

१४. ० च्छति P.

१५. P. and D. add नियुतः before वायो । किञ्च हे वायो एवं तं सोमम्, अस्मयुरस्माभिस्तद्वान् Sy.

१६. नियुत्सञ्ज्ञकानश्वान्वाहनाय प्रापय Sy.

१७. ततः परं याहि दिवं प्रति गच्छ Sy.

१८. तथा कुर्वन् . . . अस्माभिर्युक्तः सन्नस्माननुगृह्णन्नस्मान्कामयमानो वा Sy.

१९. जुषाणः प्रीयमाणो याहि गच्छ Sy.

२०. VM. ignores परि । वह and explains कोशम् । वसानः । अस्मयुः once only.

२१. Omitted by P.D.

२२. नोऽस्माकमध्वरं यज्ञम् Mah., U. अस्मत्सम्बन्धिनं यज्ञम् Sy.

२३. कीदृशीभिः । शतिनीभिः सहस्रिणीभिः शतं सहस्रं च सङ्ख्या यासां ताभिः, वयं बहुवाहनतर्पणे शक्ता इति भावः Mah. शतिनीभिः . . . सहस्रिणीभिश्च ताभिः Sy. शतानि विद्यन्ते यासु ताः शतिन्यस्ताभिः शतिनीभिः सहस्रिणीभिश्च । एतदुक्तं भवति । बहूनामपि वाहनानां वयं तर्पयितुं (तर्पणे) क्षमाः U.

२४. त्वदीयैरश्वैः Sy. अश्वैः U.

२५. सोमादिहवींषि Sy.

खादितुम्[1]। उपागच्छ[2]। तव। अयम्[3]। भागः। प्राप्तकालः[4]। सूर्यरश्मिभिः[5] सहितः। उदिते सूर्ये। तेन सहितस्तस्मिन्नुदिते गृह्यमाणस्तस्मिन्काले[6]। तवाध्वर्युभिरिमे[7] सोमास्त्वदर्थं[8] हविर्धानात्। प्रभ्रियमाणाः[9]। होमार्थं[10] गृहीताः[11]।

**आ वां रथो नियुत्वान्वक्षुदवसेऽभि प्रयांसि सुधितानि वीतये वायो हव्यानि वीतये। पिबतं मध्वो अन्धसः पूर्वपेयं हि वां हितम्। वायवा चन्द्रेण राधसा गतमिन्द्रश्च राधसा गतम् ॥४॥**

आ वां रथः। इन्द्रवायू[12]। युवाम्[13]। नियुत्वान्[14]। आवहतु[15]। रथः[16]। सोमलक्षणानि[17]। सुनिहितानि[18]। हवींषि[19]। खादितुम्[20]। अभिभवन्ती[21] च। मधुसदृशम्[22]। सोमम्[23]। पिबतम्। युवयोः[24]।

---

१. वीतये त्वदभिमतकामाय तत्पूर्तये ... भक्षणाय Sy.

२. उपपा० P. उपयाहि Mah. अध्वरं हव्यानि चोपलक्ष्य तेषामेव भक्षणाय शतसहस्रैरश्वैरतिशीघ्रमागच्छेत्यर्थः Sy. आ उपयाहि U.

३. भजनीयः सोमः Sy.

४. ऋत्वियः प्राप्तकालः प्रदानावसरं प्राप्तः। ऋतुशब्देन प्रदानकालो लक्ष्यते Sy.

५. सूर्ये उदिते सति तस्य रश्मिभिः सचा सह सरश्मिर्भवति, समानदीप्तिर्भवति। यद्वा तैः सहितो भवति। यतः सूर्ये उदिते सति रश्मिर्भवत्यतः प्राप्तकाल इत्यर्थः Sy.

६. ० णं त० D.

७. अस्मिन्सवने तृतीये Mah. अस्मिन्सवने तृतीयसवने U.

८. चमसाध्वर्युभिः। तेषां दशत्वाद् बहुवचनम् Sy.

९. तैर्भरमाणा भ्रियमाणाः Sy.

१०. अयंसत नियता अभवन्। किञ्च हे वायो ते सोमाः शुक्रा अयंसत, अत्यन्तदीप्ता उद्यताः। अतस्तेषां भक्षणायाऽऽयाहीत्यर्थः Sy.

११. VM. explains वीतये। अयंसत once only and ignores शुक्राः। The stanza in the YV. 27.28. is identical with the RV. VII.92.5. The YV. has the following words only in common with the RV. I. 135.3. आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि।

१२. केवलं वायुं स्तुत्वा व्यासक्तत्वयेन्द्रवायू स्तौति Sy.

१३. युवयोः सम्बन्धी Sy.

१४. नियुद्भिरश्वैस्तद्वान्। ... यद्यपि नियुतो वायोरेव रथस्योचितास्तथापि व्यासक्तदेवतात्वात्तद्वागमनादिन्द्रार्थमपि वहन्ति Sy. १५. देवयजनं प्रति युष्मानावहतु। ... किमर्थम्। अवसे गमनाय रक्षणाय वा Sy.

१६. आवहत्वं P.D. ० त्वान् ... अवहत्वथ M. १७. अन्नानि सोमलक्षणानि Sy.

१८. सुहि० D. सुष्ठु गृहीतानि Sy.

१९. इतरेषां सवनीयपुरोडाशादीनाम् Sy.

२०. वीतये तेषां भक्षणाय ... खादनाय Sy.

२१. ० वन्त M. २२. मधुररसस्य ... कर्मणि षष्ठी। मधुरम् Sy.

२३. अन्धसोऽन्नस्य सोमरूपस्य ... सोमम् Sy. २४. युवं यो M.

हि।[1] पूर्वपानम्।[2] देवैर्निहितं[3] तथा सति। वायो[4] त्वम्। इन्द्रः। च। हर्यकेण।[5] अस्मभ्यं प्रदित्सितेन धनेन[6] सह। आगच्छतम्।[7]

**आ वां धियौ ववृत्युरध्वराँ उपेममिन्दुं मर्मृजन्त वाजिनमाशुमत्यं न वाजिनम्। तेषां पिबतमस्मयू आ नो गन्तमिहोत्या। इन्द्रवायू सुतानामद्रिभिर्युवं मदाय वाजदा युवम् ॥५॥**

आ वां धियः। वाम्।[8] अस्मत्परिचरणकर्माणि।[9] यज्ञान्।[10] प्रत्यावर्तयेयुः।[11] त्वदर्थमिमम्।[12][13] इन्दुम्।[14] अध्वर्यवो दशापवित्रेण परिमृष्टवन्तः।[15] शीघ्रम्।[16] व्यापिनम्।[17] अश्वानाम्।[18] इव। बलवन्तमारोहणाय।[19] तानिमान्।[20] ग्रावभिः। सुतान्सोमान्।[21] अस्मत्कामौ।[22] युवाम्। मदाय।[23] पिबतम्।[24] आगच्छ-[25]

---

१. यतः Sy.
२. इतरदेवेभ्यः पूर्वपानम् Sy.
३. हितम्...अभिमतम्। अतः प्रथमं पिबतमित्यर्थः। यद्यपीन्द्रादपि वायोः पूर्वपानं 'त्वं हि पूर्वपा असि' (RV. 4.46.1.) 'देव दधिषे पूर्वपेयम्' (RV. 7.92.1.) इत्यादिषु सर्वत्र प्रसिद्धं तथापीन्द्रस्येतरदेवेभ्यः पूर्वं वायुना सह पानं चेन्द्रतुरीयार्थवादब्राह्मणे 'देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन्' (AB. 2.25.) इत्यत्र प्रतिपादितम् Sy.
४. आगमनसमये हे वायो! Sy.
५. चन्द्रेण, अस्मदाह्लादकेन हिरण्येन Sy.
६. राधसा गवादिरूपेण धनेन...रत्नेन धनेन Sy.
७. VM. ignores अवसे and explains वीतये। राधसा। आ। गतम् once only.
८. हे इन्द्रवायू...युवाम् Sy.
९. कर्माणि स्तोत्रादिलक्षणानि Sy.
१०. यज्ञात् P.D. उप, अस्मदीयान्यज्ञानभिलक्ष्य Sy.
११. अतिशयेन वर्तयन्ति प्रवर्तयन्ति Sy.
१२. युष्मदर्थम् Sy.
१३. पुरतो वर्तमानम् Sy.
१४. सोमम् Sy.
१५. ० मन्तः P.D. सम्मार्जयन्ति Sy.
१६. मार्जने दृष्टान्तः...। अतिशीघ्रगामिनम् Sy.
१७. ० अव्या ० D. सततं गन्तारम् Sy.
१८. ० वा P. वाजिनं ग्रहणाय द्रोणकलशाद् ग्रहान्प्रति गमनवन्तमामिक्षावन्तं वा...वेजनवन्तमश्वमिव। तं यथा स्वेदाद्यपनयनेन सम्मार्जयन्ति तद्वत् Sy. अश्वम् is suggested for अश्वानाम्
१९. शीघ्रव्यापिन...बल ० M.
२०. तेषामध्वर्यूणां सम्बन्धिनः Sy.
२१. शोधितान्सोमान्...ग्रावभिः सुतानामभिषुतानाम्। पूर्ववत्कर्मणि षष्ठी। तान् पिबतमिति शेषः Sy.
२२. अस्मद्यज्ञमिच्छन्तौ Sy.
२३. मादयि P. D. मादय M. तृप्तये मोदाय वा Sy. २४. पिबन्तं P. D. पानं कुरुतम् Sy.
२५. तदर्थं नोऽस्माकं यज्ञं प्रति, इह इदानीम्, ...आगच्छतम् Sy.

तञ्च[1]। रक्षणार्थम्[2]। इन्द्रवायू। अन्नस्य दातारौ[3]—तेषामिन्दुमित्येकवचनबहुवचनयोः पाद-भेदात्समन्वयः[5]।

**इ॒मे वां॒ सोमा॑ अ॒प्स्वा सु॒ता इ॒हाध्व॒र्युभि॒र्भर॑माणा अयंसत॒ वायो॑ शु॒क्रा अ॑यंसत ।**
**ए॒ते वा॑म॒भ्य॑सृक्षत ति॒रः प॒वित्र॑मा॒शवः॑ ।**
**यु॒वा॒यवोऽति॒ रोमा॑ण्य॒व्यया॒ सोमा॑सो॒ अत्य॒व्यया॑ ॥६॥**

इमे वां सोमाः। इमे। युवयोः[6]। वसतीवरीषु[7]। सुताः। यज्ञे[8]। अध्वर्युभिः। हविर्धानात्[9] प्रह्रियमाणाः[10]। दीप्ताः[11]। गृहीताः[12]। एते चाभिषवानन्तरम्। युवयोरर्थम्[13]। तिरः[14]। पवित्रम्[15]। विसृष्टा आसन्। यथा मध्ये पवित्रं भवत्येवमाशु व्यापिनः[16]। अतिसृष्टाश्चामी सोमाः[17]। युष्मत्कामाः[18]। अविमयानि[19] दशापवित्रस्यानि रोमाणि[20]। अतीत्य गच्छन्ति[21]।[22]

---

१. चा P.D.M.

२. रक्षमाणार्थम् P. क्षणार्थम् M. अस्म-ल्लक्षणेन सह Sy.

३. वाजस्यान्नस्य दातारावतः पिबतमित्य-न्वयः Sy.

४. ० न्दुरित्ये P.D.M.

५. VM. ignores नः। इह। and explains युवम् once only.

६. तव चेन्द्रस्य च स्वभूताः Sy.

७. ० वरिषु D. अस्मदीयेषु कर्मसु Sy.

८. अस्मिन्नभिषवस्थाने Sy.

९. ०भिर्विधा० M.

१०. तैर्भ्रियमाणा गृहीता होतुं वा ह्रिय-माणाः। कर्मणि कर्तृप्रत्यय Sy.

११. किञ्च त एव सोमाः . . . शुभ्रा दीप्ताः Sy.

१२. आ अयंसत, आगच्छन्त युवयोर्नियता भवन्ति Sy.

१३. यो रथं M. वां युवां प्रीणयितुमिति शेषः Sy.

१४. तिर्यग्भूतं सोमान्तर्धायकं वा Sy.

१५. ऊर्णामयं पवित्रम् Sy.

१६. व्यापकाः सोमाः Sy.

१७. अभिलक्ष्यासृज्यन्त सृष्टा भवन्ति Sy.

१८. ० ष्मान् का० P. युवां कामयमानाः Sy.

१९. अपि (अव्याव्य) मयानि M. अव्यया-न्यविज्ञ्ञानि . . . यद्वा . . . अविम-यानि। मकारो लुप्यते। तादृशानि रोमाणि Sy.

२०. पवित्रसम्बन्धीन्यविरोमाणि Sy.

२१. अतिक्रम्य पात्राद् गच्छन्तीति शेषः। पुनस्त एव विशेष्यन्ते। अति अतिशयेन, अव्यया व्ययरहिताः सोमासः सोमा असृक्षतेति शेषः Sy.

२२. VM. ignores सोमाः। आ। वायो and explains अयंसत। अव्यया once only.

अति वायो ससतो याहि शश्वतो यत्र ग्रावा वदति तत्र गच्छतं गृहमिन्द्रश्च गच्छतम्। वि सूनृता ददृशे रीयते घृतमा पूर्णया नियुता याथो अध्वरमिन्द्रश्च याथो अध्वरम् ॥७॥

अति वायो। अकर्मपरान्[1] स्वपतः।[2] सर्वान्। वायो! त्वम्। अतीत्य।[3] आगच्छ। यत्र। अभिषवग्रावा। शब्दं[4] करोति तत्र। इन्द्रवायू। गच्छतम्।[5] अस्मिन् गृहे।[6] स्तुतिवाक्।[7] विविधं[8] दृश्यते। घृतं[9] च होमार्थम्। गच्छति।[10] तथा सति इन्द्रवायू। यज्ञमिमम्। पूर्णया।[11] नियुता।[12] याथः।[13][14]

अत्राह तद्वहेथे मध्व आहुतिं यमश्वत्थमुपतिष्ठन्त जायवोऽस्मे ते सन्तु जायवः। साकं गावः सुवते पच्यते यवो न ते वाय उप दस्यन्ति धेनवो नाप दस्यन्ति धेनवः ॥८॥

अत्राह[15] तत्। यद्।[16] हविर्भिर्देवान्व्याप्नुवन्तम्।[17] अभ्युदयजन्मानि शत्रुजायवः। उपतिष्ठन्तेऽधःस्थितानि[18] भवन्ति। तस्मिन्।[19] एव। युवां तदिदम्।[20] सोमस्य।[21] आहुतिम्।[22] आत्मानं प्रापयेथे।[23]

---

१. आलस्याद्विना निद्रां कुर्वतः Sy.
२. बहून्यजमानान्। शश्वदिति बहुनाम। 'शश्वद् विश्वम्' (Ngh. 3.1.) इति तन्नामसु पाठात् Sy.
३. ०त्य ग० P. अतिक्रम्योपेक्ष्यास्मद्यज्ञं याहि गच्छ। इन्द्रश्च तथा करोतु Sy.
४. वदति।... अभिषवार्थः पाषाणध्वनिः श्रूयते Sy. ५. आगच्छतम् Sy.
६. यज्ञगृहं गच्छतम् Sy.
७. पुनः स्थानमेव विशेष्यते। सूनृता प्रियतथ्यात्मिका स्तुतिरूपा वाक् Sy.
८. यत्र...विशेषेण दृश्यते श्रूयत इत्यर्थः Sy.
९. घृतं च omitted by M. तत्र गच्छतं यत्र च घृतमत्यन्तदीप्तमाज्यं होमार्थं गृहीतम् Sy. १०. आहवनीयं प्रति नीयते Sy. ११. गमनप्रकार एव विशेष्यते। पूर्णया सम्पूर्णया पुष्टाङ्गया Sy.
१२. जातावेकवचनम्। नियुज्जात्या Sy.
१३. याथ M. आभिमुख्येन प्रयाथः। किञ्च हे वायो त्वमिन्द्रश्च युवामध्वरमस्मदीयं यागमायाथः सहैवागच्छतम्। तथाऽस्माभिरपि सहैव गच्छतमित्यर्थः Sy.
१४. VM. explains गच्छतम्। याथः। अध्वरम् once only.
१५. हे इन्द्रवायू अत्र अह अस्मिन्नेव यज्ञे। अहेति विनिग्रहार्थीयः Sy.
१६. यम् is suggested for यत्
१७. भविर्भिर्दे० P.
१८. ०जयावां (जायवः) अति० M. जयावापेति० D. यं सोममश्वत्थं पर्वतादिव्याप्तिप्रदेशे स्थितं जायवो जेतारो यजमाना उपतिष्ठन्त उपेत्य तिष्ठन्ति क्रयार्थम् Sy.
१९. अस्मिन् is suggested for तस्मिन्
२०. तामिमाम् is suggested for तदिदम्। २१. सोमस्या इति मात्मा० D. मधुरस्य मधुसदृशस्य वा तत् तस्य Sy. २२. प्रवेपद्रव्यम् Sy.
२३. वहेथे धारयतम् Sy.

यथाभ्युदयजन्मानि[1]। अस्मासु[2]। सन्तु[3]। वायो तव प्रसादात्। मदीया गावश्च[4]। सह[5]। प्रसूयन्ते[6]। यवश्च[7]। पक्वो भवति[8]। न। त्वदीयाः[9]। धेनवः[10]। नोपदस्यन्ति[11]। नापि[12]। अपदस्यन्तीत्यल्पो भेदः[13]। 'वायुर्वै पयसः[14] प्रदाता[15]' इति ब्राह्मणम्।

**इ॒मे ये ते॒ सु वा॑यो बा॒ह्वो॑जसो॒ऽन्तर्न॒दी ते॑ प॒तय॑न्त्यु॒क्षणो॒ महि॒ व्राध॑न्त उ॒क्षणः॑ ।**
**धन्व॑ञ्चि॒द्ये अ॑ना॒शवो॑ जी॒राश्चि॒दगि॑रौकसः ।**
**सूर्य॑स्येव र॒श्मयो॑ दुर्नि॒यन्त॑वो॒ हस्त॑योर्दुर्नि॒यन्त॑वः ॥९॥**

इमे ये ते। वायो[16]! ये[17]। इमे[18]। त्वदीयाः[19] प्रत्यक्षपोताः[20]। बाहुबलाः[21]। नद्याम्[22]। अन्तः[23]। सुष्ठु[24]। पतन्त्युदकसमीपे हि शीघ्रं[25] पतन्ति वाताः[26]। सेक्तार[27] उदकबिन्दुभिः। महत्[28]। वर्धमाना[29] महान्तो

१. ०न्मानि P. जायवो जेतारः कर्मनिर्वहितारस्त ऋत्विजः Sy.
२. अस्माकं सम्बन्धिनः Sy.
३. समर्था भवन्तु। यज्ञं निर्वहन्त्वित्यर्थः। यद्वा। ते प्रसिद्धाः प्रयोगकुशला जायवो जेतार ऋत्विजोऽस्मे सन्तु नान्यस्य Sy.
४. अत्र वहेथे, इत्युक्तम्। कोऽत्रविशेष इति तत्राह। हे इन्द्रवायू अस्मिन्यज्ञे गावो धेनवः Sy.
५. सहैव Sy.
६. युष्मदर्थमेव क्षीरमुत्पादयन्ति। दोग्ध्र्यो भवन्तीत्यर्थः। यद्वा गावः साकं सहैव सुवतेऽपत्यमुत्पादयन्ति त्वद्दोहनार्थम् Sy.
७. यवः। जातावेकवचनम्। उपलक्षणमेतद् यवादिभिः Sy.
८. ०न्तो वदवको P. पुरोडाशादिकं पच्यत इत्यर्थः Sy.
९. मत्तो गाव एवं सुवतेऽतस्ते त्वदर्थाः Sy.
१०. Omitted by P. धेनवो युष्मत्प्रीणयित्र्यो गावः Sy.
११. पद० P. न seems to be unnecessary. नोपक्षीणा भवन्ति रोगादिना कृशा न भवन्ति Sy.
१२. M. adds शुष्यन्ति before नापि
१३. न केवलमनुपक्षीणाः किन्तु . . . क्षीराद्युपहारैरुपक्षीणा नष्टा न भवन्ति Sy.
१४. सः P.
१५. ०वापयतीति P. ०वापयितेति D. VM. ignores ते।
१६. शोभनफलप्रद वायुदेव ! Sy.
१७. अश्वाः सन्ति Sy.
१८. पुरतो दृश्यमानाः Sy.
१९. तव स्वभूताः Sy.
२०. ०पा० M.
२१. बहु० P. ०बाहु . . . बलानस्याम् M. बाहुषु प्रकृष्टबलवन्तः। उपलक्षणमेतत्। सर्वाङ्गबला इत्यर्थः Sy.
२२. नद्यम् P. नदने द्यावापृथिव्यौ Sy.
२३. तयोरन्तराले Sy.
२४. तं त्वां पतयन्ति पातयन्ति गमयन्ति। यद्वा। ते तव सम्बन्धिनोऽश्वाः पतयन्ति पतन्ति यज्ञदेशं गच्छन्ति Sy.
२५. शीं P.
२६. पाताः M.
२७. युवान इत्यर्थः Sy.
२८. महदतिप्रभूतम् Sy.
२९. वर्धमानास्तथा . . . उक्षाणस्तत्सदृशा इत्यर्थः Sy.

भवन्तः । पुनस्त इति पूरणार्थम् । ये । च । अन्तरिक्षेऽपि निरालम्बे । न नश्यन्ति न पतन्ति । क्षिप्राः । अगिरौकसो ये पदार्थान्निगिरन्ति तैः सेव्यमाना गिरौकसोऽतादृशा न ह्यपवरकादेन प्रविष्टा वातास्तत्र तिष्ठन्ति न इमे । सूर्यरश्मय इव । हस्ताभ्याम् । नियन्तुमशक्ता भवन्ति ।

## I. 136.

**प्र सु ज्येष्ठं निचिराभ्यां बृहन्नमो हव्यं मतिं भरता मृळयद्भ्यां स्वादिष्ठं मृळयद्भ्याम् । ता सम्राजा घृतासुती यज्ञेयज्ञ उपस्तुता । अथैनोः क्षत्रं न कुतश्चनाधृषे देवत्वं नू चिदाधृषे ॥१॥**

प्र सु ज्येष्ठम् । सुष्ठु प्रभरत । प्रशस्यम् । नितरां प्रलाभ्याम् । महान्तम् । नमस्कारम् ।

---

१. पुनन्त M.

२. ० र्थः M.

३. धन्वनि, उदकनिर्गमनापादानभूतेऽन्तरिक्षेऽपि Sy.

४. अनाशवो नाशरहिता अव्याप्ता वा । आकाशे विलम्बमकुर्वाणा इत्यर्थः Sy.

५. अतएव जीराश्चित् । चिच्छब्दः पूजायाम् । अत्यन्तं क्षिप्रगतयः । यद्वा । अनाशव इत्यनेन सह समुच्चयार्थश्चिच्छब्दः । आकाशमार्गेऽक्षीणाः शीघ्रगतयश्चेत्यर्थः Sy.

६. गिरा ओकः स्थानं येषां नास्ति ते तादृशाः । भर्त्सनादिना स्थितिमलभमाना इत्यर्थः Sy.

७. वार्थं P.

८. तव्य० P.

९. नह्योववर ० P. नव्यपवरकादौ M.

१०. ०ता त ० D.

११. सूर्यस्य रश्मय इव दुर्नियन्तवो दुःखेन नियन्तव्याः । ते यथा क्षणेन वश दिशो व्याप्नुवन्ति बहवश्च तद्वदेतेऽपीत्यर्थः Sy.

१२. पूर्वं गिराऽनिर्ग्राह्यत्वमुक्तमिदानीं हस्तेनाप्यनिर्ग्राह्यत्वमाह ... उभाभ्यामपि हस्ताभ्याम् Sy.

१३. दुःखेन नियन्तव्या देवयजनगमनाय शीघ्रगामिन इत्यर्थः Sy. ०मशक्या is suggested for ०मशक्ता ।

१४. भवन्तु M.

१५. VM. explains उक्षणः । दुर्नियन्तवः once only and ignores चित् Ms. D. puts the figure ॥१३५॥ here to indicate the end of one hundred and thirtyfifth hymn. No such number is given in P. and M.

१६. भ० P. सम्पादयत Sy.

१७. कीदृशाभ्यां ताभ्याम् । . . . नितरां चिरकालाभ्याम् । नित्याभ्यामित्यर्थः । प्रवाहरूपेणेति भावः Sy.

१८. महदतिप्रवृद्धम् Sy.

१९. नमस्कारोपलक्षितं स्तोत्रम् । तदुपलक्षितं हविर्लक्षणमन्नं वा । ... नम इत्यन्ननाम । 'नम आयुः' (Ngh. 2.7.) इति तन्नामसु पाठात् Sy.

हव्यम्[1]। स्तोत्रं[2] चान्नप्रदानेन[3] मनुष्यान्। स्वादुतमम्[4]। सुखयद्भ्यां[5] मित्रावरुणाभ्याम्। तौ[6] हि। सर्वेषामीश्वरौ[7]। घृतदानौ[8] वर्षणात्। सर्वेष्वेव[9] यज्ञेषु। उपस्तुतौ[10] भवतः। ततः[11]। एनयोः। बलम्। न। कुतः[12]। चिदपि, बलयुक्तात्। आधर्षणाय[13] भवति। न[14] देवत्वम्। एव[15]। क्षिप्रम्। अन्येषामा-धर्षणाय[16] भवति[17]।

**अद॑र्शि गा॒तुरु॒रवे॒ वरी॑यसी पन्था॑ ऋ॒तस्य॒ सम॑यंस्त र॒श्मिभि॒श्चक्षु॒र्भग॑स्य**
**र॒श्मिभि॑ः। द्यु॒क्षं मि॒त्रस्य॒ साद॑नमर्य॒म्णो वरु॑णस्य च।**
**अथा॑ दधाते बृ॒हदु॒क्थ्यं१॒॑ वयं॑ उप॒स्तुत्यं॑ बृ॒हद्वयः॑ ॥२॥**

अदर्शि गातुः। विस्तीर्णायादित्याय[18][19] गन्तुम्। विस्तीर्णा[20]। गातुः[21]। प्रथममदर्शि[22]। पन्थाः[23]।

---

१. ०व्य P. पूर्वत्र पुरोडाशाख्यदनीयमत्र-मिदानीं तु सोमाज्यादिरूपं निपेयं हवि-रिति विवेकः Sy.

२. मतिं तत्प्रदानविषयां बुद्धिं भरत। यद्वा मतिं पूज्यं हव्यं हविर्भरत Sy.

३. चान्नप्रादा० P.

४. ०प्रदा . . . मनुष्यान् M.
स्वादुतरम् Sy.

५. ०भ्यः P. स्तुत्या हविःस्वीकारेण स्वयं मृडित्वा यजमानमपि सुखयद्भ्याम्। . . . हविः सुखयद्भ्यां भक्षयद्भ्यामित्यर्थः Sy.

६. मित्रावरुणौ Sy.

७. सम्यग्राजमानौ Sy.

८. ०तदोहौ M. घृतमासूयत आदीयते याभ्यां तौ तादृशौ। यद्वा घृतमुदकं वृष्टि-लक्षणं प्रसूयते सर्वत्रानुज्ञायते याभ्यां तौ। एतयोरहोरात्राभिमानिदेवत्वादहो-रात्रद्वारा वृष्ट्युत्पादकत्वात्। 'अहो-रात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति' (TS. 2.1.7.3) इति श्रुतेर्वृष्ट्यनुज्ञाप्रदत्वं प्रसिद्धम् Sy.

९. सर्वेष्वपि यज्ञेषु Sy.

१०. सर्वैर्ऋत्विग्भिः स्तूयमानौ Sy.

११. अपि च Sy.

१२. कस्मादपि च शत्रो राक्षसादेः सकाशा-त्कस्मादप्युपायाद्वा Sy.

१३. आधर्षितुं शक्यं न भवति Sy.

१४. Omitted by P.D.M.

१५. ०मे P. अपि। . . . यद्वा पूर्वमिवेदानीमपि Sy. नू चिदिति निपातः पुराणनवयोः N.4.17.

१६. The passage beginning with भवति and ending with आधर्षणाय is missing in M. आधर्षणायोग्यः . . . न केनाप्याधर्षणीयो भवति। एतयोर्बलं नावृष्यं किमु तद्देवत्व-मिति भावः Sy.

१७. VM. explains मृळद्भ्याम् once only.

१८. यागाय गमनादिव्यापाराय Sy.

१९. ० त्या P.

२०. अवि० P. D.
उरुतरा Sy.

२१. गान्तुः D. गन्तुः P.
गमनशीला Sy.

२२. अ(द)र्शि M.
सर्वैर्दृष्टाऽभूत् Sy.

२३. मार्ग आकाशलक्षणः Sy.

आदित्यस्य[1]। रश्मिभिः[2]। भगस्य[3] देवस्य। तेजः[4]। जग्राह[5] भगतेजसा प्रकाशत इत्यर्थः। मित्रस्य[6]। आवासस्थानम्[7]। दीप्तं[8] भवति। अर्यम्णस्तदनन्तरम्[9]। वरुणस्येति[10] क्रमः। इत्थमह्नि[11] प्रादुर्भूति। मित्रावरुणौ धारयेते[12]। महत्[13]। उक्थार्हम्[14]। हविर्लक्षणमन्नम्। उपेत्य स्तोतव्यम्[15]।[16]

**ज्योति॑ष्मती॒मदि॑तिं धार॒यत्क्षि॑तिं॒ स्व॑र्वती॒मा स॑चेते दि॒वेदि॑वे जागृ॒वांसा॑ दि॒वेदि॑वे । ज्योति॑ष्मत्क्ष॒त्रमा॑शाते आ॒दि॒त्या दानु॑न॒स्पती॑ । मि॒त्रस्तयो॒र्वरु॑णो यात॒यज्ज॑नोऽर्य॒मा यात॒यज्ज॑नः ॥३॥**

ज्योतिष्मतीम्। अग्निसहिताम्[17]। वेदिलक्षणां भूमिम्[18]। धृतर्त्विङ्मनुष्याम्[19]। सर्वैर्हविर्भिर्[20]युक्ताम्[21]। जागरणशीलौ[22] मित्रावरुणौ[23]। अन्वहम्[24]। आभिमुख्येन। सेवेते[25]। ताविमावदितेः

---

१. गमनशीलस्यादित्यस्य Sy.

२. प्रकाशैः सङ्गतोऽभूत् Sy.

३. सर्वैर्भजनीयस्यैतन्नामकस्य देवस्य Sy.

४. चक्षुः सर्वप्राणिनां लोचनम् Sy.

५. समयंस्त सङ्गतमभूत् । सर्वे स्वस्वद्रव्यदर्शनाय समर्था अभवन्नित्यर्थः Sy.

६. तदेव स्पष्टीक्रियते । मित्रस्य प्रकाशकारित्वात्सर्वजनमित्रस्य Sy.

७. वा० P. सदनं गृहमन्तरिक्षम् Sy.

८. दीप्तानां निवासस्थानं रश्मिभिः समयंस्त सङ्गतमभूत् Sy.

९. आर्य० P. तथाऽर्यम्ण एतन्नामकस्य देवस्य. . .ध्रुवं सदनं रश्मिभिः समयंस्त Sy.

१०. किञ्च वरुणस्य तमोनिवारकस्यैतन्नामकस्य देवस्य सदनं तथाऽभूत् । यद्यपि सूर्यस्यैकत्वेप्युपाधिभेदेन भेदात्पृथक् स्तुतिस्तथा यद्यपि त्रिभिरपि प्रकाश्यमन्यन्तरिक्षमेकं तथापि प्रकाशकानां भेदात्त्रिधा स्तूयते । उदयानन्तरं कर्मानुष्ठानाय प्रकाशोऽभवदित्यर्थः Sy.

११. अग्नि P.

१२. ०रयतः P. दधाते धारयतः Sy.

१३. अत, अतः कारणादुदितत्वादेव . . . बृहत्प्रभूतम् Sy. १४. स्तुत्यम् Sy.

१५. इत्यर्थौ . . . M. The passage beginning with मित्रस्य and ending स्तोतव्यम् is missing in M. स्तोमाविना महत्स्तोत्रं वयो हविर्लक्षणमन्नं च दधाते Sy.

१६. VM. ignores च and explains रश्मिभिः । बृहत् । वयः once only.

१७. अयं यजमानः . . . आहवनीयाग्नेस्तेजोयुक्ताम् Sy. १८. ०मीं D.M. अदितिम्, अदीनां सम्पूर्णलक्षणां क्षितिमग्नेर्निवासयोग्यां भूमिमुत्तरवेदिलक्षणाम् Sy.

१९. ० तत्वङ्म० P.D. धारयति स्वयं कृतवानित्यर्थः । 'एतावती वै पृथिवी यावती वेदिः' (TS. 2.6.4.1) इति श्रुतेः Sy.

२०. यज्ञनिष्पत्तिद्वारा स्वर्गवतीम् Sy.

२१. ० क्तात् P. २२. प्रबोधं कुर्वाणौ । यज्ञं गन्तुमनलसावित्यर्थः Sy.

२३. ज्योतिष्मतीमदितिम् . . . भवत्यर्यम्णस्तदनन्तरं वरुणस्येति क्रमः इत्थमग्नि प्रादुर्भूति मित्रावरुणौ M.

२४. ०णान्व० P. न केवलमेतस्मिन्नेवाहनि किन्तु दिवे दिवे सर्वेष्वप्यहस्सु . . . दिवे दिवे प्रतिदिनम् Sy. २५. ईदृशीं तामा सचेते मित्रावरुणौ सङ्गतौ भवतः Sy.

पुत्रौ। दानस्य[1] स्वामिनौ। युद्धेषु दीप्तियुक्तम्[2]। बलम्। आप्नुतः[3]। तयोः[4]। मित्रः। हतशत्रुजो[5] भवति। वरुणश्चैवम्। अर्यमा[6] च तत्सहितः।[7]

**अ॒यं मि॒त्राय॒ वरु॑णाय॒ शंत॑मः॒ सोमो॑ भूत्ववपाने॒ष्वाभ॑गो दे॒वो दे॒वेष्वाभ॑गः।**
**तं दे॒वासो॑ जुषेरत॒ विश्वे॑ अ॒द्य स॒जोष॑सः।**
**तथा॑ राजाना करथो॒ यदीम॑ह॒ ऋता॑वाना॒ यदीम॑हे ॥४॥**

अयं मित्राय। अयम्[8]। मित्रावरुणाभ्याम्[9]। सुखतमः[10]। सोमः। भवतु। देवानां मध्ये[11]। अवपानेषु[12]। आभजनीयः[13]। देवः[14]। तमिमम्[15]। अद्य[16]। सङ्गताः[17]। सर्वे। देवाः। सेवन्ताम्[18]। तथा। राजानौ[19]। कुरुथः[20]। सत्यवन्तौ[21]। यत्[22]। वयं याचामहे[23] इति[24][25]।

---

१. दास्य P. दानवस्य M. आज्यादिप्रदानस्य स्वामिनावभिमतदानस्य पालयितारौ वा Sy. २. वेदिमागत्य...आज्यादिस्वीकारेणातिशयेन तेजोयुक्तम् Sy.

३. ०प्नुवतः P. अश्नुवाते प्राप्नुतः Sy.

४. मित्रावरुणयोः Sy.

५. यातयज्जनो यातयन्ति लोकं यदीया जनाः प्रेष्याः स तादृशः। यद्वा यात्यमाना नरके निपात्यमाना जनाः प्राणिनोऽपद्वारो येन स तादृशः Sy.
०जनो is suggested for ०जो

६. मित्रश्च वरुणश्च तावुभौ देवौ। अर्यमाख्यस्तु देवस्तयोः ... यातयज्जनः। तयोरेव सम्बन्धादुभयोर्मध्ये स्थितो यातयज्जनः स्वस्वव्यापारनियोजितसर्वजनः। मित्रावरुणावहोरात्रदेवौ। अर्यमा तु तयोरेव सामर्थ्यात्सर्वप्राणिनः प्रेरयतीत्यर्थः... कर्मसाक्षित्वात्स्वस्वकर्मानुरोधेन प्राणिनः सुकृते पातयतीत्यर्थः। तादृशोऽर्यमा मित्रावरुणयोरधीनो वर्तत इति शेषः Sy.

७. VM. explains दिवे दिवे once only.

८. Omitted by M. P. अस्माभिर्हूयमानः Sy.

९. वरुणाभ्याम् P. M. मित्राय वरुणाय च Sy. १०. पीयमानः सन्सुखतमः Sy.

११. मित्रावरुणानुचरेष्वितरदेवेषु Sy.

१२. अवाङ्मुखचमसपानेषु विषयेषु Sy.

१३. ०य P. आ सर्वतो भगो भजनीयस्ताभ्याम्।...आभग आभजनीयः। यद्वा देवेषु स्तोतृषु यजमानेषु मध्ये देवो दीप्यमानस्तथाऽऽभगस्तैरेव, आ सर्वतो भजनीयः Sy. १४. दीप्यमानः Sy.

१५. सोमम् Sy. १६. अस्मिन्नहनि Sy.

१७. संगवता P. सजोषसः समानप्रीतियुक्ताः Sy. १८. सेवन्ते Sy.

१९. राजमानौ मित्रावरुणौ युवाम् Sy.

२०. कुरुतम्। सेवेथे इत्यर्थः Sy.

२१. ऋतवन्तौ सत्यवन्तौ यज्ञवन्तौ वा मित्रावरुणौ Sy. २२. यस्मात्कारणात् Sy.

२३. वयो चामहे P. ईमहे यत्प्राप्नुमस्तद्वान्याचामहे ... अभिमतफलं तयोः पानं वा याचामहे Sy.

२४. The passage beginning with इमम् and ending with इति is omitted by M.

२५. VM. explains आभगः। यत्। ईमहे once only.

यो मि॒त्राय॒ वरु॑णाया॒विध॒ज्जनो॑ऽन॒र्वाणं॑ तं परि॑ पातो॒ अंह॑सो दा॒श्वांसं॒ मर्त॒मंह॑सः । तम॑र्य॒माभि र॑क्षत्यृजू॒यन्त॒मनु॑ व्र॒तम् ।
उ॒क्थैर्य ए॑नोः परि॒भूष॑ति व्र॒तं स्तोमै॑रा॒भूष॑ति व्र॒तम् ॥५॥

यो मित्राय। यः[1]। मित्राय[2]। वरुणाय च[3]। परिचरति। जनः। हवींषि दत्तवन्तम्[4]। मर्त्यम्[5]। अप्रत्यूतमस्खलित[6]मिमौ देवावावहतः[7]। पापात्[8]। रक्षतः[9]। तम्[10]। अर्यमा[11] च देवः। अभि-रक्षति[12]। ऋजुमिच्छन्तम्[13]। तस्य कर्म। लक्षीकृत्य। शस्त्रैः। यः[14]। एनयोः[15]। स्तोत्रैश्च[16]। कर्म। परितो[17] भवति। आभिमुख्येन[18] च भवति।[19]

नमो॑ दि॒वे बृ॑ह॒ते रोद॑सीभ्यां मि॒त्राय॑ वोचं॒ वरु॑णाय मी॒ळ्हुषे॑ सुमृ॒ळीकाय॑ मी॒ळ्हुषे॑ । इन्द्र॑म॒ग्निमुप॑ स्तुहि द्यु॒क्षम॑र्य॒मणं॒ भग॑म् ।
ज्योग्जीव॑न्तः प्र॒जया॑ सचेमहि॒ सोम॑स्यो॒ती स॑चेमहि ॥६॥

नमो दिवे। यथालिङ्गदेवतामन्त्रः। नमः[20]। महते[21]। दीप्तायान्तरिक्षाय[22]। द्यावापृथिवीभ्या[23]

---

१. जनो यजमानः Sy.
२. यः। मित्राय omitted by D.
३. कर्मणः सम्प्रदानत्वाच्चतुर्थी। मित्रं वरुणं च Sy.
४. The passage beginning with यो मित्राय and ending with दत्तवन्तम् is omitted by M.
५. मरणधर्माणम् Sy.
६. त्यूतमस्त्वलित० D. ०त्यूतमंमस्त्व-लित०M. अनर्वाणमद्वेषिणम्। 'भ्रातृव्यो वाऽर्वा' (TS. 6.3.8.4.) इति श्रुतेः। अनल्पं वाऽनन्यसेविनम् Sy.
७. ०हतु M.
८. कस्मादिति तदुच्यते। ... न्यूनातिरेक-जनितात्पापात् Sy.
९. परितो रक्षताम् Sy.
१०. तं जनं युष्मत्परिचारकम् Sy.
११. न केवलं भवन्तावेवापितु ... सर्वेषां नियन्ता देवः Sy.
१२. ०तु D.M. अभितो रक्षति Sy.
१३. ०न्तः M. देवेष्वार्जवमाचरन्तं यजमानम् Sy.
१४. कोऽस्य जनस्य विशेष इति तत्राह। यो यजमानः Sy.
१५. मित्रावरुणयोः Sy.
१६. स्तोत्रैर्गानयुक्तमन्त्रसाध्यैः Sy.
१७. परिगृह्णाति Sy.
१८. ० ख्यो M.
सर्वतोऽलङ्करोति। . . . तमभिरक्षती-त्यन्वयः Sy.
१९. VM. explains तम्। अंहसः। व्रतम् once only and ignores तम्। परि
२०. नमस्कारोपलक्षितं स्तोत्रम् Sy.
२१. स्तुत्याय Sy.
२२. द्योतमानाय सूर्याय Sy.
२३. तदभिमानिदेवाभ्याम् Sy.

च । अहं ब्रवीमि[1] । मित्रावरुणाभ्यां[2] च । सेक्तृभ्याम्[3] । सुखयितृभ्याम्[4] । अयं[5] स्तोतः[6] ! इन्द्रम्[7] । वह्निं[8] च । उपस्तुहि[9] । दीप्तम् । अर्यमणम्[10] । भगं च । चिरम् । जीवन्तः[11] । प्रजया[12] । संसृष्टा[13] भवाम । सोमस्य[14] । रक्षणेन[15] [16] ।

**ऊ॒ती दे॒वानां॑ व॒यमिन्द्र॑वन्तो मंसी॒महि॒ स्वय॑शसो म॒रुद्भिः॑ ।**
**अ॒ग्निर्मि॒त्रो वरु॑णः॒ शर्म॑ यंस॒न्तद॑श्याम म॒घवा॑नो व॒यं च॑ ॥७॥**

ऊती देवानाम् । रक्षणेन[17] । देवानाम्[18] । वयम् । इन्द्रयुक्ताः[19] । स्वभूतानाम्[20] . . . ? । मरुद्भिः[21] सहितमिन्द्रम् । शर्मास्मभ्यम्[22] [23] । अग्न्यादयश्च[24] । सुखम् । प्रयच्छन्तु[25] । वयम् । च । अग्न्यादिभिर्दत्तम्[26] । धनवन्तः[27] । प्राप्नुयाम[28] [29] ।

द्वितीयस्याष्टकस्याद्यमध्यायं व्याकरोदिति ।
वण्णयस्य[30] कुले जातो माधवः सुन्दरीसुतः ॥[30]

---

१. स्तोमीत्यर्थः Sy.
२. मित्राय सर्वजनहितायाहरभिमानिदेवाय . . . तथा वरुणायावरकाय राज्यभिमानिदेवाय Sy.
३. अभिमतफलस्य सेक्त्रे रुद्राय Sy.
४. कीदृशाय तस्मै . . . शोभनसुखयित्रे । पुनः स एव विशेष्यते । मीळ्हुषे सुमृळीकायेति द्वे प्रत्येकविशेषणभूते Sy.
५. इदानीं यजमान ऋत्विजं स्वात्मानं वा प्रति ब्रवीति Sy.
६. स्तोतारम् M. हे होतः, हे आत्मन्वा Sy.
७. इमम् P.　　८. वह्नि M.
९. उपेत्य बुद्ध्या प्राप्य स्तुहि स्तुतिं कुरु Sy.
१०. अर्यमाणं D. अर्यमाणां P.
११. ० न्तं D.　　१२. पुत्रभृत्यादिना Sy.
१३. सङ्गता भूयास्म Sy.　　१४. इन्दोः Sy.
१५. ऊत्या सचेमहि तमपि स्तुत्वा तत्कारितेन रक्षणेन सहिता भूयास्मेत्यर्थः Sy.
१६. VM. explains मीळ्हुषे । सचेमहि once only.
१७. ऊत्या तर्पणेन हविरादिना मंसीमहि मन्येमहि Sy.
१८. रक्षणेन । देवानाम् omitted by M. देवान् । कर्मणि षष्ठी Sy.
१९. प्रीतेनेन्द्रेण तद्वन्तः Sy.
२०. ०ना M. कीदृशा वयम् । स्वयशसः स्वायत्तकीर्तयः Sy.
२१. स्तुत्या हृष्टैर्मरुद्भिरनुगृहीताः । यद्वा । देवानामूत्या रक्षणेन रक्षिता मंसीमहि ज्ञातारो भवेम सामर्थ्यात्तेषामेव महत्त्वस्य Sy.　　२२. सुखम् Sy.
२३. शर्मास्म० M. अस्माकम् Sy.
२४. अग्निमित्रवरुणा देवाः Sy.
२५. प्रायच्छंस्ते तं वरम् Sy.
२६. चादिभि० M. तैः Sy.
२७. दत्तान्नवन्तः सन्तः Sy.
२८. तत्सुखम् . . . व्याप्नुयाम Sy.
२९. VM. ignores मंसीमहि
Ms. D. puts the figure ॥१३६॥ here to indicate the end of one hundred and thirtysixth hymn. No such number is given in P. and M.
३०. वणय० D.

# [अथ द्वितीयाष्टके द्वितीयोऽध्यायः]

"सुषुमा यातमद्रिभिः"[1] व्याचिख्यासति माधवः ।
प्रदर्शयँल्लिटो वृत्तिं परोक्षे तत्र लिट् स्मृतः ॥१॥

भूतेऽनद्यतने चैव "ये अग्नेः[2] परि जज्ञिरे"[3]
"इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्"[4] ॥२॥

"उवासोषा[5] उच्छाच्च नु"[6] "ततक्षुर्मनसा हरी"[7] ।
दृश्यतेऽद्यतने चापि भूते तत्र निदर्शनम् ॥३॥

रश्मिरस्या ततानेति[8] दिवादृष्टमपश्यतः ।
रश्मिं च रात्रौ विततमेष[9] चाद्यतनो मतः ॥४॥

अपरोक्षेऽपि[10] लिड् दृष्टो[11] "जुहुरे वि चितयन्तः"[12] ।
"आ[13] दृळ्हां पुरं[14] विविशुः"[15] "सहसानं ववन्दिम"[16] ॥५॥

कर्माणि यौवने चक्रे यानि वह्निर्मृषिः[17] पुरा ।
तानि[18] जीर्णः कथयति स्फुटान्[19] चात्रापरोक्षता ॥६॥

---

१. RV. I. 137.
२. अग्निः P. अग्नि D.
३. ० ज्ञिरे M. RV. X. 62.6.[a]
४. RV. I. 22.17.[ab]
५. Omitted by P.
६. RV. I. 48.3.[a] The passage beginning with त्रेधा and ending with नु is missing in M.
७. RV. I. 20.2.[b]
८. A fragment of RV. I. 35.7.[d]
९. रश्मिं रात्रौ विततमेष P. D. M. रश्मिश्च रात्रावपि तमेव R.
१०. ० क्षे च M. R.
११. धृष्टो M.
१२. RV. V. 19.2.[a]
१३. आ D. M.
१४. पुरा P.
१५. RV. V. 19.2.[c]
१६. ० मः M. RV. V. 25.9.[b]
१७. ०वि ऋ० M. यान्निर्ववृतिः ऋ० P.
१८. तनानि P. M.
१९. ०यात्राप० M. स्फुटा is suggested for स्फुटाम्

यद्वा परोक्षमात्मानं प्रथमेनात्र[1] निर्दिशन्[2] ।
पुरुषेण परोक्षां[3] च क्रियामप्यपदिष्टवान् ॥७॥
“यत्रा नश्चक्रा जरसं[4]” इत्यतेऽत्र भविष्यति ।
यद्वा लिट्[5] न्याय एवायं[6] देवैः[7] क्लृप्तं[8] ह्यनूद्यते ॥८॥
सृजन्तो[9] हि जगद् देवा मनुष्यस्य शतायुषः ।
जरामकल्पयंस्तस्मादर्थो भूतोऽत्र विद्यते ॥९॥
यदा न शक्नुयाद्येषु[10] लिटं स्थापयितुं तदा ।
वाक्यार्थानुगुणांस्तांस्तान् पण्डितोऽर्थान्प्रदर्शयेत् ॥ इति ॥१०॥

I.137.

**सुषुमा यातमद्रिभिर्गोश्रीता मत्सरा इमे सोमासो मत्सरा इमे ।**
**आ राजाना दिविस्पृशास्मत्रा गन्तमुप नः ।**
**इमे वां मित्रावरुणा गवाशिरः सोमाः शुक्रा गवाशिरः ॥१॥**

सुषुमा[11] । परुच्छेपः । सुतवन्तः सोमम्[12] । ग्रावभिः[13] । आगच्छतम्[14] । पयसा[15] श्रिताः । इमे[16] । सोमाः[17] । मदकराः[18] । राजानौ । द्युलोकस्य स्रष्टारौ[19] । असुरेभ्यस्त्रातारौ[20] । उपागच्छतम्[21] । अस्मान्[22] ।

---

१. ०मे चात्र P. D. M.
२. ०विशेत् P.　　३. ०क्षं M.
४. RV. I. 89.9.[b]
५. पि P.　　६. एवावं P.
७. ०वैरप्तं M.
८. वेवैराप्तन्स्वनूद्यते R.
९. संसृ० P.
१०. ०क्नुया...र्था M. ० क्नुयान्न्यायात् R.
११. सुषुमायातम् M.
१२. आगमनाय किमस्तीति चेत्तत्राह...सोमं सुतवन्तो वयम् Sy.
१३. अभिषवसाधनैर्ग्रावभिः Sy.
१४. अस्मद्यज्ञं प्रत्यागच्छतम् Sy.
१५. विकारे प्रकृतिशब्दः । पयोभिर्मिश्रिताः । 'तस्मान्मैत्रावरुणं पयसा श्रीणाति' (TS. 6.4.8.1.) इति हि ब्राह्मणम् Sy.
१६. इमे पुरतो गृहीता वर्तन्ते । अत आयातम् Sy.
१७. मत्सरास्तृप्तिहेतवः । ... पुनस्त एव विशेष्यन्ते ... मत्सरा मदहेतवो मादने मात्सर्यवन्तो वेतरयज्ञगतसोमेभ्यः सोमाः Sy. मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः N. 2. 5.
१८. कीदृशौ युवाम् । ... राजनशीलौ Sy.
१९. स्पृ० P. D. द्युलोकवासिनौ Sy.
२०. अस्मासु मध्येऽस्मत्पालकौ वा युवाम् Sy.
२१. ०च्छम् M.
२२. अस्मत्सम्बन्धिनं यज्ञम् Sy.

इमे हि। सोमाः। युवयोरर्थाय। पयोमिश्रणाः। ज्वलन्तीति।

**इम आ यातमिन्दवः सोमासो दध्याशिरः सुतासो दध्याशिरः ।**
**उत वामुषसो बुधि साकं सूर्यस्य रश्मिभिः ।**
**सुतो मित्राय वरुणाय पीतये चारुर्ऋताय पीतये ॥२॥**

इम आ। आदित्यग्रहो दधिमिश्रणाः। इमे वां मित्रावरुणौ! दीप्ताः। सुताः। सोमाः। दधिमिश्रणास्तथा सति। आगच्छतम्। अपिच। वाम्। उषसः। बोधकाले। सूर्यरश्मिषु प्रादुर्भूतेषु। सुतः सोमोऽस्माभिः। मित्राय। वरुणाय। सत्यभूताय। पानाय। शोभनः।

---

१. हे मित्रावरुणा एतन्नामानौ देवौ वां युवयोरर्थाय Sy.

२. ०यात् D. M. पूर्ववद्विकारे प्रकृतिशब्दः। गोभिः क्षीरैराशिरो मिश्रिताः सञ्जाताः। किञ्च गवाशिरो गोभिरवकैर्मिश्रिताः सञ्जाताः। यद्वा गोभिः स्तुतिलक्षणैर्मन्त्रैर्मिश्रिताः Sy.

३. ०तीति D. M. अत एव शुक्रा दीप्ताः सञ्जाताः। 'आशिरमवनयति सशुक्रत्वाय' (TS. 6. 1. 6. 5.) इति श्रुतेः Sy.

४. VM. ignores मित्रावरुणा and explains मत्सराः। इमे। गवाशिरः once only.

५. ० म इ P.D.M. पुरतो ग्रहेण गृहीता वर्तन्ते। अत आयातम् Sy.

६. युष्मदर्थम् Sy.

७. इन्दवः क्लेदनसमर्थाः Sy.

८. मन्त्रेण ग्रावभिरभिषुताः सम्पन्ना अत आयातमिति शेषः Sy.

९. दध्ना श्रयणवन्तः सन्तः ... श्रीयमाणाशिरः सोमाः। आदित्यग्रहे दध्यवनयसद्भावात्तदपेक्षया दध्याशिर इत्युक्तम् Sy.

१०. युवयोः प्रीतये पालनाय Sy.

११. उषसः सम्बन्धिनि बोधे सति ... प्रकाशे सञ्जाते सति Sy.

१२. M. adds च after सूर्यरश्मिषु। न केवलमुषस एव बोधे, अपि तु सूर्यस्य रश्मिभिः साकं सूर्यकिरणैः सह प्रकाशे हविष्प्रदानाय सञ्जाते सति Sy.

१३. सतः M.
अभिषुतः Sy.

१४. मित्रा M. इदानीं वियुज्योच्यते। मित्राय सर्वहितार्थतन्नामकायाहरभिमानिदेवाय Sy.

१५. तथा वरुणायावरकाय राज्यभिमानिदेवाय च तदर्थं सोमः सुत इति शेषः Sy.

१६. ऋताय यज्ञाय तन्निर्वाहकाय तदर्थम् Sy.

१७. यज्ञसिद्ध्यर्थं हि देवानां सोमपानम्। यद्वा। कर्तरि क्तिन्। पीतये पात्र ऋत्विगादय ऋताय यज्ञाय तन्निर्वाहकाय Sy.

१८. चारुश्चरणीयो भक्षणीयः सोमः सुतोऽभिषुतः Sy.

१९. VM. explains पीतये once only.

तां वां धेनुं न वासरीमंशुं दुहन्त्यद्रिभिः सोमं दुहन्त्यद्रिभिः ।
अस्मत्रा गन्तमुप नोऽर्वाञ्चा सोमपीतये ।
अयं वां मित्रावरुणा नृभिः सुतः सोम आ पीतये सुतः ॥२॥

तां वां धेनुम्[1]। ताम्[2]। धेनुम्[3]। इव। वासयित्रीम्[4]। वाम्[5]। सोमलताम्[6]। ग्रावभिः[7]। दुहन्ति[8]। सोमरसम्[9]। अस्मत्रा[10]। गन्तम्। उप नः=अस्मान्[11], उपागच्छतम्[12]। अभिमुखौ[12]। सोमपानाय। अयम्। मित्रावरुणौ! युवाभ्याम्[13]। आभिमुख्येन[14]। पानाय। सोमः। सुतः[15]। ऋत्विग्भिः[16][17]।

## I.138.

प्रप्र पूष्णस्तुविजातस्य शस्यते महित्वमस्य तवसो न तन्दते स्तोत्रमस्य न तन्दते । अर्चामि सुम्नयन्नहमन्त्यूतिं मयोभुवम् ।
विश्वस्य यो मन आयुयुवे मखो देव आयुयुवे मखः ॥१॥

प्रप्र पूष्णः। अन्वहमुदयाद्[18] बहुजननस्य[19]। पूष्णः[20]। अस्माभिः प्रशंसा क्रियते[21]। महत्त्वम्।

---

१. ता P.

२. तां प्रसिद्धामग्निहोत्राद्यर्थाम् Sy.

३. प्रीणयित्रीं गामिव Sy.

४. सर्वाङ्गाच्छादितपयस्कां बहुक्षीरामित्यर्थः। यद्वा पय आदिनाऽऽच्छादयित्रीम् Sy.

५. युवयोः सम्बन्धिनम् Sy.

६. वल्लीरूपं सोमम् Sy.

७. केन साधनेनेति तदाह ... अभिषवसाधनैर्ग्रावभिः, किन्त्वाद्रिभिस्तैरेव साधनैः Sy.

८. सम्पादयन्त्यध्वर्यवः। ... सोमं युष्मदर्थमेव दुहन्ति। वल्लीरूपं सोमं युष्मदर्थमेवोदकेनाप्लाव्य रसं दुहन्ति Sy.

९. ०रम् P.

१०. अस्मत्त्रातारौ युवाम् Sy.

११. अस्मदीयं यज्ञम् Sy.

१२. उपागन्ताभि० P.

१३. युष्मदर्थम् Sy.

१४. आपीतये सम्पूर्णपानाय Sy.

१५. सोमस्नुतः M. अभिषुतः ... अत आगच्छतमित्यर्थः Sy.

१६. नेतृभिर्यज्ञनिर्वाहकैर्ऋत्विग्भिः Sy.

१७. VM. explains दुहन्ति। अद्रिभिः। सुतः once only.
Ms. D. puts the figure ॥१३७॥ here to indicate the end of one hundred and thirtyseventh hymn. No such number is given in P. and M.

१८. ०यान् P.

१९. बहुयजमानार्थमुत्पन्नस्य Sy.

२०. पोषकस्यैतन्नामकस्य देवस्य Sy.

२१. प्रस्तूयते सर्वैः। वीप्सा पादपूरणे Sy.

अस्य। वृद्धस्य[1]। न। क्षीणं[2] भवति। स्तोत्रस्य[3]। सुखमिच्छन्। अहम्[4]। अन्तिके यस्य रक्षा भवति तम्[5]। सुखस्य[6] भावयितारम्। स्तौमि। विश्वस्य मनुष्यस्य[7]। यः[8]। मनः। आत्मनोऽभिमुखमन्येभ्यो[9] देवेभ्यः पृथक्[10] करोति। महनीयः[11]। देवः[12]।[13]

**प्र हि त्वा पूषन्नजिरं न यामनि स्तोमेभिः कृण्व ऋणवो यथा मृध उष्ट्रो न पीपरो मृधः। हुवे यत्त्वा मयोभुवं देवं सख्याय मर्त्यः। अस्माकमाङ्गूषान्द्युम्निनस्कृधि वाजेषु द्युम्निनस्कृधि ॥२॥**

प्र हि त्वा पूषन्। पूषन्! त्वम्। मृधः[14] शत्रूनारया[15] तुदसि एवमहम्। त्वां[16]। स्तोत्रैः। अस्म[17]त्कार्येऽधिकृतं[18] करोमि। यथा। गमनशीलमश्वम्[19]। गमने[20] योजयन्त्येवं तथा सति। यथा। उष्ट्रः[21]। शीघ्रं[22] गच्छत्येवम्। शत्रून्[23]। पारयाधिगच्छेति[24]। यस्मात्[25]। त्वाम्। हुवे[26]। सुखस्य भावयितारम्।

---

१. बलस्य Sy.

२. न हिनस्ति कश्चिदपि Sy.

३. अस्य पूष्णः स्तोत्रं न तन्दते न हिनस्ति न विरमति। सर्वोऽपि जन एनं स्तौतीत्यर्थः। जगत्पोषकत्वादिति भावः Sy.

४. अतः कारणात् ... अहमपि यजमानः Sy.

५. आसन्नरक्षणम्। ... स्तुत्यनन्तरमेव वरप्रदमित्यर्थः Sy.

६. सुखस्योत्पादकं भावयितारं वा Sy.

७. सर्वस्य स्तोतुर्ऋत्विजः Sy.

८. पूषा Sy. ९. ०ख...भ्यो D.

१०. आयुयुवे समन्तान्मिश्रयति शीघ्रवरप्रदानादिति भावः। ... मखं यज्ञमायुयुवे सम्पूर्तिपर्यन्तं मिश्रयति। यद्वा विश्वस्य मनोमिश्रणे यजमाने किमायातमिति चेदुच्यते, मखो यज्ञनिर्वाहकोऽयं पूषा देवो यजमानस्य मन आयुयुवे समन्तान्मिश्रयति। सामर्थ्याद् यजमानस्य मन इति लभ्यते Sy.

११. मखो यज्ञवान्। मत्वर्थो लुप्यते Sy.

१२. The passage beginning with यः। मनः and ending with देवः is omitted by P. P. reads आत्मनोऽभिमुखः only. दीप्यमानः Sy.

१३. VM. explains प्र। अस्य। न। तन्दते। आयुयुवे। मखः once only.

१४. मृधः सङ्ग्रामानुद्दिश्य, ऋणवो गच्छेत्तथा प्रकुर्वे। यद्वा। यथा ऋणवोऽस्मद्यज्ञं प्रति गच्छेः। ऋणु गतौ ... तथा त्वां कृण्वे Sy. १५. प्र हि त्वा...शत्रून् M.

१६. त्वां M. अजिरं यज्ञदेशं प्रति गमनवन्तं ... त्वाम् Sy.

१७. यामनि गमने निमित्तभूते सति ... स्तोमैः Sy. १८. प्रकृष्टं करोमि Sy.

१९. तत्र दृष्टान्तः। ... शीघ्रगामिनमश्वमिव। स यथा प्रस्तूयते तद्वत् Sy.

२०. शीघ्रगमने Sy.

२१. तत्र दृष्टान्तः। ... उष्ट्रो यथा भारं वोढा Sy. २२. पारयति तद्वत् Sy.

२३. मृधो हिंसकान्योद्धॄन् सङ्ग्रामे Sy.

२४. पारं नयसि Sy.

२५. अतः कारणात् Sy.

२६. The passage beginning with गच्छत्येवं and ending with हुवे is missing in M. आह्वयामि Sy.

देवं[1] सन्तम्। मर्त्यः[2] सन्। सख्यसिद्ध्यर्थम्[3]। ततोऽस्माकम्[4]। स्तोमान्[5]। सङ्ग्रामेषु। अत्रयुक्तान्[6]। कुरु[7]।[8]

**यस्यं ते पूषन्त्सुख्ये विपन्यवुः क्रत्वां चित्सन्तोऽवंसा बुभुज्रिर इति क्रत्वां बुभुज्रिरे। तामनुं त्वा नवींयसीं नियुतं राय ईमहे। अहेळमान उरुशंस सरीं भव वाजेंवाजे सरीं भव ॥३॥**

यस्य ते पूषन्। यस्य[9]। ते। पूषन्[10]! सख्ये[11]। स्तोतारः[12]। कर्मणा[13]। च[14]। भवन्तः[15]। त्वदीयेन[16] रक्षणेना[17]भिमतान्[18]भोगान्[19]। आत्मीयेन कर्मणा स्तुत्या च। भुञ्जते[20]। तादृशीम्। त्वदीयाम्। नवतरां स्तुतिम्[21]। लक्षीकृत्य[22] त्वां वयम्। धनस्य[23]। नियुतसङ्ख्याम्[24]। याचामहे। तथासति[25] बहुस्तुते[26]! अक्रुध्यन्[27]। अस्माकं। सङ्ग्रामे सङ्ग्रामे[28]। सर्ता[29]। भव रक्षणाय[30]।

---

१. देवनशीलं पूषणम् Sy.
२. The passage beginning with प्र हि त्वा and ending with मर्त्यः is omitted by P. सन्तं ... स्सन् P. मरणधर्मा मनुष्योऽहम् Sy.
३. समानख्यानाय प्रियकरणाय Sy.
४. एवमाहूतः सन् Sy.
५. स्तोन् P. आघोषान्स्तोमान्। 'आङ्गूषः स्तोम आघोषः' (N. 5. 11.) इति यास्कः Sy.
६. द्योतनवतः कुरु। यद्वा। स्तोमान्यशोवतोऽन्नवतो वा कृधि। अस्मत्स्तुत्या प्रीतस्त्वमेवं कुर्वित्यर्थः। किञ्च...द्युम्निनोऽन्नवतः Sy.
७. कृधि, अस्मद्वैरिणो जित्वा तेषामन्नं मयि कुर्वित्यर्थः Sy.
८. VM. ignores हि। न and explains द्युम्निनः। कृधि once only.
९. रक्षकत्वेन प्रसिद्धस्य Sy.
१०. यस्य। ते। पूषन्। omitted by M.
११. सखित्वे हितकरणे सति Sy.
१२. विपन्यवो विशेषेण स्तोत्रशीलाः। यद्वा। मेधाविनामैतत्। मेधाविनो यजमानाः Sy.
१३. क्रतुना प्रकृष्टेन कर्मणा Sy.
१४. एव Sy.
१५. भवन्तं प्रीणयितारः सन्तः Sy.
१६. ०न्तं त्व० D. भवन्तस्त्वदीयेन missing in M. त्वत्कृतेन Sy.
१७. रक्षणेन रक्षिताः सन्तः Sy.
१८. ०नाभिमनात् D. ०नाभिमंहनात् P.
१९. M. adds इत्यम् after भोगान्।
२०. भुञ्जते भोगान्। इति एवमेव सर्वदा क्रत्वा कर्मणा...भुञ्जते सर्वं पालयन्त इति वा Sy.
२१. स्तुत्यां वा रक्षाम् Sy.
२२. अनु-अनुसृत्य रक्षाया अनन्तरम् Sy.
२३. धनानि Sy.
२४. ०सख्यां P. एतत्सङ्ख्याकान् Sy.
२५. Omitted by P. and D.
२६. उरुशंस बहुधा स्तुत्य! Sy.
२७. अस्मासु सुमनाः सन् Sy.
२८. Omitted by P. M. सर्वेष्वपि सङ्ग्रामेषु Sy.
२९. सत्ता M. सरी भव, अस्माभिर्गन्तव्यो भव...गमनशीलो भव, पुरतो गन्ता भवेत्यर्थः Sy.
३०. VM. explains सरी। भव once only and ignores इति।

**अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व**
**श्रवस्यतामजाश्व । ओ षु त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः ।**
**नहि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे ॥४॥**

अस्या ऊ[1] षु णः[2]। पूषन्! अस्याः[3] स्तुतेः[4]। भजनाय[5]। सुष्ठु। अस्मान्[6]। समीपे[7]। भव। अक्रुध्यन्[8]। दानवान्[9]। यस्याश्वा अजाः[10]। धनमिच्छतामस्माकं[11] स्तुतेरिति[12]। शत्रूणामुपक्षपयितः[13]! त्वां वयम्।

---

१. ऊ इति पादपूरणः Sy. ऊम् पदपूरणौ SKN. 'उ' इति 'सु' इति 'न' इति पदानि Dur.

२. ण M. ऊष्मणः D.

३. अस्यै। चतुर्थ्यर्थे षष्ठी Sy. अस्यै Dur.

४. ०ते P.

५. सातये लाभाय Sy. षष्ठ्यर्थे एषा चतुर्थी, सातेः 'षणु दाने' दानस्य SKN. लब्धये Dur.

६. नोऽस्माकम् Sy. नोऽस्माकं लिप्सिकाया इत्यर्थः SKN. अस्माकम् Dur.

७. उपभुवः समीपस्थो भव Sy. समीपे भव। तेन चात्र तदाभिमुख्यं लक्ष्यते यदेतल्लिप्सितमस्माकं दानम्। एतस्याः (सातेः) अभिमुखो भव चिकीर्षेस्तदित्यर्थः SKN. कथं नाम वयमर्थमभिप्रेतं लभेमहीत्येतमर्थमुद्दिश्य हे पूषन् ... उप समीपे भव। त्वयि सन्निकृष्टे त्वदनुग्रहादेतमर्थं लभेमहीत्यभिप्रायः Dur.

८. अनादरमकुर्वन् Sy. क्रुध्यतिकर्मायं याचमानायाः क्रोधहेतुत्वेन लोके दृष्टत्वादेवमुच्यतेऽहेळमान इति SKN. सर्वो ह्यभ्यर्थ्यमानः क्रुध्यतीत्यभिप्रायः Dur.

९. दाता च सन् Sy. छान्दसत्वाद्वर्तमाने लङि क्वसावेतद्रूपम्। नेर्दातिरित्यर्थः SKN. दानाभिप्रायसंयुक्तेन चेतसोपभव Dur.

१०. हे अजाश्व पूषन्। 'अजाश्वेति पूषणमाह' (N. 4. 25) इति यास्कः... हे अजाश्व, अजा एवाश्वस्थानीया यस्य तादृशस्त्वम्। पूषनामैवम्।... 'अजाः पूष्णः' (Ngh. 1. 15.) इति यास्कः Sy. अजजातीया अजाकारा वाऽश्वा यस्यासावजाश्वस्तस्य सम्बोधनं हे अजाश्व!...हे अजाश्व! पूर्वेण पौनरुक्त्यप्रसङ्गात् 'अज गतिक्षेपणयोः' इत्येवं व्युत्पाद्यते। अजाश्च गमनस्वभावकाश्चाश्वा वा यस्येत्यर्थः SKN.
अजाश्व, अजनाश्व गमनाश्व छागाश्व वा। ... भवाजनाश्व। छागाश्वेत्यर्थः Dur.

११. धनमिच्छतामस्माकम् Sy. श्रवो धनं तदिच्छतां धनकामानामस्माकम् SKN. अस्माकं धनमिच्छताम् Dur.

१२. ०च्छतास्मा० P.
०च्छता अ० M.

१३. शत्रूणामुपक्षपयितः पूषन् Sy. उपक्षपयितस्तमसां तस्कराणां वा SKN. हे दस्म दर्शनीय अथवा दान्त Dur.

साधुभिः। स्तोमैः। सुष्ठु। आवर्तयामः। नहि। त्वामहम्। पूषन्! अतिमन्येऽतिमननमुपेक्षा। आघृणिः = आगतदीप्तिः। नं ते सख्यमित्यत्रापि हीत्यनुषङ्गादनिघातः। त्वया। सख्यम्। स्तोत्रैरनुपालयामि।

१. केन साधनेनेति तदुच्यते साधुभिः ...त्वां प्रीणयितुं समर्थैः Sy. शोभनैर्मधुरस्वरसौष्ठवादियुक्तैः SKN. शोभनैरित्यर्थः Dur.

२. स्तोत्रैः Sy. स्तोमैस्तोत्रस्तुतिभिः SKN. स्तोत्रैः Dur.

३. ओ इति निपातद्वयसमुदायात्मक एको निपातः। ... ओ षु ववृतीमहि सर्वत एव सुतरां वर्तयेमहि ... यज्ञान्तरगमनान्निवर्तयाम इत्यर्थः Sy. आ ऊ ओ इति पदपूरणाः सुष्ठु आवर्तयामो वयम् SKN. 'आ' 'उ' 'सु' इति पदानि। ... आभिमुख्येनात्मनो वर्तयामहे Dur.

४. नैव Sy. नहीत्ययमेको निपातो नशब्दस्यार्थे न त्वाम् SKN.

५. अवमतिम् ... करोमि Sy. अतीत्ययमवेत्यस्य स्थाने। अवमन्ये कदाचिदप्यहम् SKN. त्वामतीत्य साधुतरां काञ्चिदप्यन्यामहं देवतां मन्ये। ... त्वद्भक्त एवाहमस्मीत्यभिप्रायः Dur.

६. ०ण्त P. आघृणे सर्वतो वृष्टेः क्षारयितः। यद्वा ... हविषामाहर्तः स्वीकर्तः Sy. हे अतिघृणे 'घृ क्षरणदीप्त्योः' इत्यस्य घृणिर्दीप्तिरागतदीप्तिक SKN. आगतदीप्ते Dur.

७. Omitted by P. D. नैव Sy. नच SKN.

८. ०ङ्गादिघातः M.

९. तव Sy., SKN., Dur.

१०. सखित्वं हितकर्तृत्वम् Sy. ...स्तुत्यस्तोतृलक्षणम् SKN. सखिभावम् Dur.

११. पावि (मि) M. नहि, अपह्नुवे, नैवापनयामि न त्यजामि। सर्वतः प्रख्यापयामीत्यर्थः Sy. अपलपामि, अपनयामीत्यर्थः। यथैव पुरा, एवमिदानीमपि स्तौम्येवेत्यर्थः SKN. कदाचिदप्यपह्नुवे। कृतघ्नोऽहमित्यभिप्रायः Dur.

१२. VM. ignores उ and explains अजाश्व once only. A fragment अहेळमानो ररिवाँ अजाश्व is quoted by Skanda in N. 1. 1. p. i.6. with the remark: अश्वशब्दोऽजेषु पठ्यते। The first two *pādas* are quoted by Yāska in N. 4. 25 and are explained in the following manner: अस्मै नः सातय उपभव। अहेळमानोऽक्रुध्यन्। ररिवान्—रातिरभ्यस्तः। अजाश्वेति पूषणमाह। अजाश्वा अजा अजनाः। The stanza is quoted and explained in full by both Skanda. II. 276. and Durga. Ms. D. puts the figure ॥१३८॥ here to indicate the end of one hundred and thirtyeighth hymn. No such number is given in P. and M.

I.139.

**अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु तच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे । यद्ध क्राणा विवस्वति नाभा संदायि नव्यसी । अध प्र सू न उप यन्तु धीतयो देवाँ अच्छा न धीतयः ॥१॥**

अस्तु श्रौषट्। वैश्वदेवी स्तुतिः[1]। श्रवणम्[2]। अस्तु[3]। कर्मणाहं[4] यज्ञार्थम्। अग्निम्[5]। पुरा[6]। दधाम्याहवनीयम्[7]। आवृणीमहे[8] च[9]। दिव्यम्[10]। तत्[11]। शर्धो[12] मारुतम्[13]। क्षिप्रम्। इन्द्रवायू[14] च। यदा[15]। मया क्रियमाणा[16]। नवतरेयं स्तुतिः[17]। यजमाने[18]। स्तुतीनां धर्तरि[19]। सम्बद्धा[20] भवति। अथ[21]। अस्मान्[22]। सुष्ठु। लौकिकानि दासादिकृतानि परिचरणादीनि[23]। प्रकर्षेण। उपगच्छन्तु[24]। यथा[25]। देवान्[26]। प्रति[27]। ऋत्विजां कर्माण्युप[28]गच्छन्ति[29]।[30]

**यद्ध त्यन्मित्रावरुणावृतादध्याददाथे अनृतं स्वेन मन्युना दक्षस्य स्वेन मन्युना । युवोरित्थाधि सद्मस्वपश्याम हिरण्ययम् । धीभिश्चन मनसा स्वेभिरक्षभिः सोमस्य स्वेभिरक्षभिः ॥२॥**

यद्ध त्यत्। 'ऋतमहरनृतं रात्रिः। न वा, इदं दिवा न नक्तमासीत्। अव्याववृत्तं ते

---

१. ०ति P.D.M.
२. अस्मात्स्तुतिः क्रियते तस्मात् ... अस्याः स्तुतेः श्रवणम्। Sy.
३. भवतु। श्रोता भवतु वा मरुतां गणोऽग्निर्वा। इन्द्रवायुपक्षे प्रत्येकापेक्षयैकवचनम् Sy. ४. प्रणयनादिकर्मणा Sy.
५. आहवनीयाख्यम् Sy. ६. पुरत उत्तरवेद्याम् Sy. पुरः is suggested for पुरा ७. धारितवानस्मि Sy.
८. आभिमुख्येन सम्भजामहे Sy.
९. Omitted by M.
१०. दिवि भवम् Sy. ११. तादृशम् Sy.
१२. बलवन्तं वाऽग्निम् Sy.
१३. मां तं M. यद्वा तच्छर्धस्तादृशं मरुतां स्वरूपं बलम् Sy. १४. इन्द्रवायू वृणीमहे Sy. १५. यस्मात्कारणात् Sy.
१६. कुर्वाणा स्वार्थप्रकाशनम् Sy.
१७. स्तुतिरूपा वाक् Sy. १८. विवस्वति दीप्तिमति Sy. १९. नाभौ भूम्या नाभिस्थाने देवयजने वेदिरूपे। यद्वा। नाभौ सर्वफलस्य सम्बन्धके यज्ञे। 'यज्ञमाहुर्भुवनस्य नाभिम्' (TS.7.4.18.2.) इति श्रुतेः Sy. २०. संबन्धो D. सम्बध्यते।...अस्माभिः प्रयुज्यत इत्यर्थः Sy.
२१. अनन्तरम् Sy. २२. अस्मदीयानि Sy.
२३. कर्माणि स्तुत्यादिरूपाणि Sy.
२४. ०न्त M. युष्मानुपगच्छन्तु Sy.
२५. Omitted by P. D.
२६. अग्न्यादिदेवान् Sy.
२७. आभिमुख्येन प्राप्तुमिव Sy.
२८. कर्मणि P. अस्मदीयानि कर्माणि Sy.
२९. उपयन्तु तेषां समीपं प्राप्नुवन्तु Sy.
३०. VM. ignores ह and explains वृणीमहे once only.

देवा[1] मित्रावरुणावब्रुवन्' इत्याद्यध्वर्युब्राह्मणम्। 'मन्युर्मन्यतेर्दीप्तिकर्मणः'*। मित्रावरुणौ ! यत्[2]। एतद्[3] युवाम्। सत्यभूतादह्नः[4]। अनृतभूतान्धकार ?[5]। आदित्यस्य। स्वभूतेन[6]। तेजसा[7]। आददौ[8][9]। अथ व्युष्टायां रजन्यां यज्ञगृहेषु[10]। अधि[11]। युवयोः[12]। हिरण्मयम्[13]। इत्थम्[14]। अपश्याम[15]। कर्मभिः[16] श्रद्धानेन[17]। च[18]। मनसा सोमयागपरैः। सोमस्य[19]। स्वभूतैः[20]। इन्द्रियैरनापश्याम[21][22][23]।

**युवां स्तोमेभिर्देवयन्तौ अश्विनाश्रावयन्तइव श्लोकमायवौ युवां**
**हव्याभ्यायवः। युवोर्विश्वा अधि श्रियः पृक्षश्च विश्ववेदसा।**
**प्रुषायन्ते वां पवयो हिरण्यये रथे दस्रा हिरण्यये ॥३॥**

युवां स्तोमेभिः। यथा। श्लोकम्[24]। आश्रावयन्तः[25] स्तोतारो मनुष्या[26] राजानमभ्याह्वयन्ति[27], एवमश्विनौ[28]! युवाम्। आयवः[29]। स्तोमैः[30]। हवींषि[31]। अभ्याह्वयन्ते[32]। देवौ भवन्ता-

---

१. देवयो D. देवयोः P. * N. 10.29.
२. यस्मात्कारणात् Sy. ३. त्यत् तदुवकम् Sy. ४. वहः M. आदित्यात् Sy.
५. अनृतभूतान्धकारं is suggested. कीदृशमुदकम्। अनृतं नश्वरं शोषणस्वभावम् Sy. ६. बलस्य समर्थस्य Sy.
७. केन साधनेन। ... स्वकीयेन। ... आत्मभूतेन Sy.
८. तेजसा। ...मन्युर्विशेष्यते ... मननीयेन सामर्थ्येन Sy.
९. आददाथे सर्वतो ददथः। ...अहोरात्राभिमानिदेवौ मित्रावरुणौ खलु वृष्टिं मोचयतः। 'अहोरात्रे वा' (TS. 2.1.7.3.) इत्यादिश्रुतिः पूर्वमेवोदाहृता Sy. आददथुः is suggested for आददौ
१०. यज्ञसदनेषु Sy. ११. अधिकम् Sy.
१२. The passage beginning with मित्रावरुणावब्रुवन् and ending with युवयोः is omitted by P. and D. युवयोः सम्बन्धि Sy.
१३. हिरण्मयेम् P.D. हिरण्मयं रूपम् Sy.
१४. वक्ष्यमाणप्रकारेण Sy.
१५. अपश्याम P. पश्येम Sy.
१६. कर्मणि M. केन साधनेनेति तदुच्यते। ...त्वदुद्देश्यैः कर्मभिर्यज्ञादिरूपैः Sy.
१७. Omitted by P. and D.
१८. त्वदासक्तेन चेतसा च Sy. १९. सोमम् Sy. २०. आत्मीयैः ...अस्मदीयैः Sy.
२१. अनन्यैश्चक्षुरादीन्द्रियैः। ..नानात्वापेक्षया बहुवचनम् Sy.
२२. ०श्या P. ०श्यामः M.
२३. VM. ignores ह। अधि and explains स्वेन। मन्युना। स्वेभिः। अक्षभिः once only.
२४. श्लोकाकम् P. युष्मदीयस्तुतिरूपां वाचम्। ...श्लोक इति वाङ्नाम। 'श्लोको धारा' (Ngh. 1.11.) इति तन्नामसूक्तत्वात् Sy.
२५. सर्वतः श्रवणविषयां कुर्वन्त इव Sy.
२६. ०ष्य P.D.M. २७. स्तुवन्ति Sy.
२८. अश्विनौ देवौ Sy.
२९. मनुष्यनामैतत्। यजमानाः Sy.
३०. स्तोत्रैः Sy. ३१. हविषाऽऽज्यादिना Sy. ३२. आभिमुख्येन मन्तारः। प्रीणयितुमिति शेषः। हवींष्याभिमुख्येन प्रापयन्तो वा Sy.

विच्छन्तो[1]ऽश्ववा[2] यजमानाः। क्षित युवयोः[3]। अधि[4]। सर्वधनी। विश्वाः[5]। श्रियः[6]। सर्वमन्नम्[7]। च स्तोतॄणां वर्तन्ते[8]। तथा हिरण्मये[9]। रथे स्थितौ भवन्तौ। वाम्। दस्रौ[10]। चक्रं पवयः[11]। गमयन्ति— मधुभाजनानि पवय[12] इत्यपरं तानि मधु[13] क्षरन्ति[14]।

**अचे॑ति दस्रा॒ व्यु१॒॑ नाक॑मृण्वथो यु॒ञ्जते॑ वां रथ॒युजो॒ दिवि॑ष्टिष्वध्व॒स्मानो॒ दिवि॑ष्टिषु। अधि॑ वा॒ं स्थाम॑ व॒न्धुरे॒ रथे॑ दस्रा हि॒रण्यये॑। प॒थेव॒ यन्ता॑वनु॒शास॑ता॒ रजो॒ऽञ्ज॑सा॒ शास॑ता॒ रजः॑ ॥४॥**

अचेति[15] दस्रा। शायते[16]। दर्शनीयौ[17]। युवाम्[18]। द्युलोकम्[19]। स्वरथेन व्यृण्वथः[20] पृथक्कुरुथो[21] मध्ये- नागमनात्। अस्माकं दिवोऽन्वेषणेषु[22] सत्सु[23] भवन्तौ सर्वस्य योक्तारौ[24]। ध्वंसनरहिताः[25]। अश्वाः। युञ्जतेऽस्मत्समीपमानेतुमिति[26]। दर्शनीयौ[27]! हिरण्मये। रथे। बन्धुरस्थाने[28]। अधि[29] तत्र। युवयो-

---

१. देवयन्तो युवामात्मन इच्छन्तः Sy.
२. ०न्तौश्ववा P.
३. युवयोः सम्बन्धिनीः Sy.
४. अधिकम्। भवन्त इति शेषः Sy.
५. विश्वा P.D.M. सर्वाः Sy.
६. सेवनीयाः...लक्ष्मीर्धनकनकादिरूपाः Sy.
७. अन्नमपि युष्मत्प्रसादादपि, अधिकं लभन्ते Sy. ८. वर्तन्ते M.
९. हिरण्मये मधुपूर्णे Sy.
१०. शत्रूणामुपक्षपयितारौ Sy.
११. चक्र...णा D. चक्र्या P. तन्नेमयः Sy. 'पवी रथनेमिर्भवति यद्विपुनाति भूमिम्' N.5.5.
१२. पवयः P. Missing in M.
१३. स्रवन्ति।...मधुपूर्णपात्रोपेतत्वाच्छीघ्र- गमनेन चक्रेषु मधूनि स्रवन्तीति भावः।...किञ्च तादृशे हिरण्यये हिरण्यरमणे रथे मधुरं हविर्वहतमिति शेषः Sy.
१४. VM. explains युवाम्। हिरण्यये once only.
१५. वक्ष्यमाणं युष्मच्चेष्टितम् Sy.
१६. ज्ञायते सर्वैः Sy.
१७. दस्रावश्विनौ Sy. १८. वां D.
१९. किं तदिति तदुच्यते। नाकं स्वर्गम् Sy.
२०. व्यृण्वथः P. ०थ D. विशेषेण गच्छथः... यज्ञसम्पूर्त्यनन्तरमिति यावत्। उशब्दो- ऽवधारणे। यद्वा नाकम्। अकं दुःखं तद्रहितं यज्ञम्... विशेषेण गच्छथ एव Sy. २१. कुरुतः M.
२२. स्वर्गस्यैषणेषु द्योतनात्मकस्य यज्ञस्यैषणेषु गमनेषु वा निमित्तभूतेषु... दिविष्टिषु दिवो गमनेषु निरालम्बाकाशगमनेषु Sy.
२३. ०मनात् अस्मान्दि पोषणेषु सत्सु P.
२४. तदर्थम्... युष्मत्सम्बन्धिनो रथस्य योजयितारः सारथयः Sy.
२५. रथस्य तदाश्रितस्य च ध्वंसमकुर्वाणाः Sy.
२६. अश्वान्योजयन्ति रथे। युक्ते रथे वा युष्मान् Sy. २७. Missing in D. and P. अश्विनौ Sy.
२८. बन्धुरत्रययुक्ते। युगबन्धनाधारः काष्ठ- विशेषो बन्धुरम्। तादृशत्रययुक्तत्वं 'रथो यो वां त्रिवन्धुरः' (RV.VIII.22.5a.) इत्यादिषु प्रसिद्धम् Sy.
२९. हिरण्यरथबन्धुरस्थानेधि P. D. हिरण्मयौ रथबन्धुरस्थानेऽपि M. तादृशस्य रथस्योपरि Sy.

रथ।स्थानम्[1]।यथा।पथा[2]।यन्तौ[3] सूर्याचन्द्रमसौ। दिग्विभागज्ञापनेन[4] मार्गम्। शास्तः[5]। एवमेतौ च सर्वेषां[6] मार्गानुशासनम्। अञ्जसा[7]। कुरुतः[8], यद्वा यथा मार्गेण गच्छन् क्षेत्रविदक्षेत्रविदो मार्गमनुशास्ति[9] तद्वत्, इमावित्येतयोर्द्वित्वकृतं[10][11] द्विवचनम्।

**शचीभिर्नः शचीवसू दिवा नक्तं दशस्यतम् ।**
**मा वां रातिरुप दसत्कदा चनास्मद्रातिः कदा चन ॥५॥**

शचीभिर्नः। कर्मधनौ[12]! अस्मभ्यम्[13]। कर्मभिः[14]। दिवा[15]। नक्तं[16] च। धनानि[17] प्रयच्छतम्[18]। मा[19]। युवयोः। दानम्। कदा[20]। चिदपि[21]। अस्मत्तः[22]। उप। दसद्[23] भवतु[24]।

**वृषन्निन्द्र वृषपाणास इन्दव इमे सुता अद्रिषुतास उद्भिदस्तुभ्यं सुतास उद्भिदः । ते त्वा मन्दन्तु दावने महे चित्राय राधसे ।**
**गीर्भिर्गिर्वाहः स्तवमान आ गहि सुमृळीको न आ गहि ॥६॥**

वृषन्निन्द्र। वृषन्[25]! इन्द्र[26]! वर्षित्रा पेयाः[27]। दीप्ताः। इमे[28]। सोमा[29] वृत्रवधादिषु त्वां

---

१. अस्थापयाम Sy.
२. सुपथेन मार्गेण Sy.
३. निरालम्ब आकाशे, रजो रञ्जनात्मकं स्वर्गं प्रति यन्तौ गच्छन्तौ Sy.
४. दिग्विभा० M. ५. शासतौ M.
६. ०र्गमनु० P. D.
७. मुख्यत्वेन Sy.
८. रज उदकं वृष्टिलक्षणं शासता शास्तौ बलाद्विधेयीकुर्वन्तौ Sy.
९. यद्वदि० M. अननुकूलाञ्छत्रूननुशासतौ विधेयीकुर्वन्तौ Sy.
१०. ०कृतन्द्व P. ०यो: द्वित्वन्दि... D.
११. VM. ignores उ and explains रजः। विविक्तिसु once only.
१२. शचीति कर्मनाम। अस्मदनुष्ठित-ज्योतिष्टोमादिकर्मधनौ युवाम् Sy.
१३. अस्मदीयैः Sy.
१४. कर्मभिर्यागादिभिर्निमित्तभूतैः Sy.
१५. अहनि Sy. १६. रात्रौ च Sy.
१७. Omitted by P. and D. अभिमतम् Sy.
१८. दद्याथाम् Sy. १९. मां P. D.
२०. सर्वदा यागकालेऽयागकालेऽपि Sy.
२१. न केवलं युष्मदीयमपि त्वस्माकमपि रातिर्दानं हविरादिप्रदानं सर्वविषयदानं वाऽर्थिभ्यः कदाचन सर्वावस्थायामपि Sy.
२२. मत् P. उपक्षीणं मा भूत् Sy.
२३. उपदस्तम्भतु M. सर्वदा वर्तताम्। अहमपि सर्वदा युष्मानुद्दिश्य यथा युवामपि मदभिमतं सर्वदा दत्तमित्यर्थः Sy.
२४. VM. explains रातिः। कदा। चन once only.
२५. वर्षितः कामानाम् Sy.
२६. वृषन्। इन्द्र! omitted by P. and D.
२७. ०त्रापाय P. अभिमतवर्षकेण त्वया पातव्याः Sy. २८. पुरतो दृश्यमानाः Sy. २९. इन्दवः सोमाः Sy.

प्रेरयन्तु। तुभ्यम्[1]। अद्रिभिः[2] सुताः[3]। इमे[4]। त्वाम्[5]। मादयन्तु[6]। महतः[7]। चित्रस्य[8]। धनस्य[9]। दानार्थम्[10]। गीर्भि[11]रुह्यमानः[12]। अस्मान्। सुष्ठु[13] सुखयिता[14] भवन्। आगच्छ[15][16]।

**ओ षू णो अग्ने शृणुहि त्वमीळितो देवेभ्यो ब्रवसि यज्ञियेभ्यो राजभ्यो यज्ञियेभ्यः। यद्ध त्यामङ्गिरोभ्यो धेनुं देवा अदत्तन। वि तां दुह्रे अर्यमा कर्तरी सचाँ एष तां वेद मे सचा ॥७॥**

ओ[16] षू[17] णः। अग्ने! अस्माकं[18] स्तोत्रम्[19]। स्तुतः[20]। त्वम्। सुष्ठु। आशृणुहि[21] श्रुत्वा चास्मान्। यज्ञार्हेभ्य[22] आदित्येभ्यः। राजभ्यः[23]। देवेभ्यः[24]। ब्रूहि। यदा[25]। हे देवा[26] यूयम्। अङ्गिरोभ्यः प्रार्थिता-स्तेभ्यः[27]। सर्वकामदुघां[28] धेनुम्। प्रदत्त[29]। ताम्[30]। अस्मिन् प्रयोजककर्तरि[31] सति। अर्यमा[32][33]। अग्निना[34] सह।

---

१. त्वदर्थम् Sy.
२. वृद्धैः पाषाणैरभिषवसाधनैः Sy.
३. अभिषुताः Sy.
४. उद्भिद उद्भेदका वर्षस्य। त एव पुनर्विशेष्यन्ते। उद्भिदो बलस्योद्भेदका उद्भिन्ना वा पर्वतादौ तादृशाः सोमाः Sy.
५. त्वा D. ६. तर्पयन्तु Sy.
७. महते Sy. ८. चायमानाय विचित्राय नानाविधाय वा Sy.
९. धनाय Sy.
१०. दानवति यागे। अभिमतदानाय वा Sy.
११. गिरां स्तुतीनामस्मदीयानां वोढः ... गीर्भिरस्मत्स्तुतिभिः Sy.
१२. स्तवमानः सन्, आ गहि-आगच्छ Sy.
१३. ०ख P. मृडयिता सन् Sy.
१४. Missing in D. and P.
१५. गच्छ P. D.
१६. VM. ignores. उद्भिदः। सुतासः। गीर्भिः। स्तवमानः and explains आ। गहि once only. १७. षु P.
१८. अस्मदीयम् Sy. १९. Omitted by P. आवाहनं स्तुतिं वा Sy.
२०. सुत० D. सुतस्त्वां P. स्तोतास्मन् सुतस्त्वं M. अस्माभिः स्तुतः सन् Sy.
२१. ओ इति निपातद्वयसमुदायात्मक एको निपातः। आभिमुख्येनैव सुष्ठु शृणु Sy.
२२. यज्ञार्हेभ्यो हविर्भाग्भ्यः स्तुतिभाग्भ्यश्चेत्यर्थः। ... तेभ्यो यज्ञियेभ्यो यज्ञार्हेभ्यो यजमानेभ्यः सम्बन्धि कर्म Sy.
२३. Omitted by M. कीदृशेभ्यः। ... राजमानेभ्यः Sy.
२४. देवनशीलेभ्यः Sy.
२५. इदानीं देवाः प्रत्यक्षेणोच्यन्ते। अत्रेतिहासमाहुः—अङ्गिरसो नाम महर्षयः पूर्वं यज्ञार्थं देवान्स्तुत्या प्रीणयित्वा गा अयाचन्त। ते प्रीताः कामदुघां प्राडुः। लब्धां च तां धेनुं क्षीरं दोग्धुमशक्नुवाना अर्यमणं देवं प्रार्थयन्। स च प्रार्थितोऽग्निहोत्राद्यर्थं क्षीरं दुदोहेति। तदिदमत्रोच्यते। यद् याम् Sy.
२६. Omitted by M.
२७. अङ्गिरोभ्यस्तदर्थम् Sy.
२८. त्यां तां प्रसिद्धां धेनुं क्षीरादिना प्रीणयित्रीं गाम् Sy.
२९. दत्तवन्तः Sy. ३०. धेनुम् Sy.
३१. ०जकर्त० D. कर्तरि सर्वस्योत्पादके त्वय्यग्नौ Sy.
३२. सर्वस्य नियमिता देवः Sy.
३३. अमाग्निना P. D. अमाग्निनौ M.
३४. इतरदेवेभ्यः साकम् Sy.

कामान्विविधान्[1]। दुग्धवान्[2]। ताम्[3]। यो मदीयोऽग्निः। स[4] एव[5]। तां धेनुम्[6]। अर्यम्णा सह[7] दोग्धुम्[8]। ज्ञातवान्[9]नान्यः कश्चित्[10]।

**मो षु वो॑ अ॒स्मद॒भि तानि॒ पौंस्या॒ सना॑ भूवन्द्यु॒म्नानि॒ मोत जा॑रिषुर॒स्मत्पु॒रोत जा॑रिषुः । यद्व॑श्चि॒त्रं यु॒गेयु॑गे॒ नव्यं॒ घोषा॒दम॑र्त्य॒म् ।**
**अ॒स्मासु॒ तन्म॑रुतो॒ यच्च॑ दु॒ष्टरं॑ दिधृ॒ता यच्च॑ दु॒ष्टर॑म् ॥८॥**

मो षु वः। सेयं[11] मारुती। ऐन्द्राग्न्युत्तरा[12]। मरुतः! मा[13]। युष्माकम्[14]। बलानि[15]। अस्मान्[16]। अभिभवन्तु[17]। सुः[18] पूरणः। किन्तु भवतां सनातनानि। अस्माकम[19]न्नानि[20] सन्तु। अपि च। मा। अस्माकं[21] शरीराणि[22] भवद्भिरधिष्ठितानि। जीर्णानि[23] भवन्तु। यच्च। वः[24]। पूज्यम्[25]। अहन्यहनि[26]। घोषादुच्चैर्मुक्तकण्ठकम्[27]। स्तोतव्यम्[28]। अमर्त्यम्[29]। यत्। च। दुष्टरं[30] शर्मभयम्। अमस्मासु[31]। धारयन्तः[32][33]।

---

१. ०माद् D. M. २. ०धां M.
३. विविधं दुग्धवान् Sy. ४. एष एवा-र्यमा Sy. ५. देव P. ६. धेनु P. अर्यम्णा omitted by P. and D.
७. मत्समवायेन Sy. ८. दोग्धु P.
९. जानात्यर्यमा। अहमपि जानामीत्यर्थः Sy. १०. ईदृशी धेनुस्त्वदर्थमेव दुह्यत इत्यग्नेः स्तुतिः Sy.
VM. ignores ह and explains यज्ञियेभ्यः once only.
११. सर्य P. १२. न्द्रयु० P. ०न्द्राग्न्यु० M.
१३. मो इति निपातद्वयसमुदाय उशब्दोऽवधारणे ... मैव Sy.
१४. युष्मत्सम्बन्धीनि तानि प्रसिद्धानि Sy.
१५. पौंस्यानि बलानि Sy. १६. M. adds अस्माकं बलानि before अस्मान्।
१७. अभिभवन्। यद्वाऽस्मत्तोऽपगतानि मा भूवन् Sy. १८. सः M. सुष्ठु Sy.
१९. भवता सेनातरान्य० M. सनातनानि नित्यानि Sy. २०. द्युम्नानि प्रकाशयुक्तानि। यद्वा सना सम्भजनीयानि द्युम्नानि धनवन्ति यशोवन्ति वा। मत्वर्थीयो लुप्यते।...यद्वा। द्युम्नानीत्येतदुत्तरत्र सम्बध्यते। द्युम्नानि धनानि यशांसि वा ... मा जारिषुः क्षीणानि मा भूवन् Sy. २१. अस्मदीयानि Sy.
२२. पुराणि, लक्षणया तत्रस्थाः प्राणिनः Sy.
२३. मा जारिषुः, जीर्णा नष्टा मा भूवन् Sy.
२४. युष्मत्सम्बन्धि Sy. २५. चायनीयं नानाविधम् Sy. २६. अहन्अहनि M. युगशब्दोपलक्षिते तत्तत्काले Sy.
२७. ०च्चै मु० D. ०ण्ठM. घोषाः। व्यत्ययेन पञ्चमी। शब्दोपेता गवादयो घोषोपलक्षिता ग्रामनगरादयो वा ये सन्ति तत्सर्वम् Sy. २८. नूतनं स्तोतव्यं वा Sy.
२९. ०तव्यमर्वं P. ०तव्यं म० M. ०तव्यम... D. अमरणधर्मकं, मर्त्येषु दुर्लभं वा Sy.
३०. दुष्करं D. दुःखेन तरणीयं सम्पादनीयं धनम् Sy. ३१. अस्मास्वेव भवत्विति शेषः। नान्यस्य Sy.
३२. ध्यतः M. धारयत तदस्मासु। किं च दुस्तरं शत्रुभिरहिंसितं तत्सर्वमपि विशेषेणास्मासु स्थापयत Sy.
३३. VM. ignores उ। तानि। पुरा। तत् and explains उत। जारिषुः। यत्। च। दुष्टरम् once only.

दुध्यङ् ह मे जुनुषं पूर्वो अङ्गिराः प्रियमेधः कण्वो अत्रिर्मनुर्विदुस्ते मे पूर्वे मनुर्विदुः । तेषां देवेष्वायतिरुस्माकं तेषु नाभयः ।
तेषां पुदेन मह्या नंमे गिरेन्द्राग्नी आ नंमे गिरा ॥९॥

दध्यङ्[1] ह मे[2]। दिवोदासान्[3] मम। जन्म। पुरातन[4] आथर्वणः[5]। दध्यङ्। वेद, एवम्। अङ्गि-रः[6]प्रभृतयश्च। ते[7] पञ्च। पूर्वे[8]। जानन्ति। तेषां दध्यङ्प्रभृतीनाम्। आगमनमुत्पत्तिः[9]। देवेषु[10] भवति[11]। अस्माकम्। तेषु[12]। नाभयो ज्ञातेयानि[13]। तैर्मयि[14]। निहितेन पदेनाहम्[15]। महत्[16]। इन्द्राग्नी। स्तोत्रेण[17]। नमयाम्यभिमुखं[18] करोमि—तेभ्यः स्तोत्रकुशलेभ्य उत्पन्नोऽहमिन्द्राग्नी स्तौमि[19]।

---

१. वड् P.
२. P. adds जनुषं after मे।
३. युवोदासं P. दिवोदासपुत्रस्य परुच्छेपस्य Sy.
४. ०तनं P.
पूरकः सर्वस्य पुरातनो वा Sy.
५. अथर्वगोत्रोत्पन्न एतन्नामको महर्षिः Sy.
६. अङ्गिरा अङ्गारस्तद्वत्तेजस्वीत्यर्थः। यद्वा। अङ्गारा एवाङ्गिरसोऽभवन्। 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (AB. 3.34.) इति श्रुतेः ... एतन्नामा महर्षिश्च। प्रियमेधो मेधाप्रियः। ... स च कण्वो मेधावी स च। अत्रिर्दुःखत्रयरहितः। ... मनुर्मननवानेतन्नामा महर्षिः। ... मनुर्मनवो ज्ञानवन्तो यतस्ते पूर्वे मनवश्चातो विदुरिति भावः Sy. अङ्गिरा अङ्गारा अङ्कना अञ्चनाः ... प्रियमेधः प्रिया अस्य मेधाः ... अत्रिर्न त्रयः N. 3. 17.
७. एते सर्वे महात्मानो महर्षयः। ... ते पूर्वोक्ताः Sy.
८. आथर्व ... पूर्वे M.
पूर्वकालीना मे अस्मत्पित्रादीन् जानन्त इत्यर्थः Sy.
९. तेषां ज्ञाने उपपत्तिमाह। ... आयतिर्दीर्घकालसम्बन्धोऽस्ति। अतो विदुरित्यर्थः Sy.
१०. इतरेषु देवनशीलेषु महर्षिषु मध्ये Sy.
११. भवन्ति P. १२. तेष्वेव वर्तन्ते Sy.
१३. जीवेन सह बन्धवन्तः प्राणाः फलेन सम्बद्धा यागा वा। ... असौ विशिष्टजन्माऽतो यज्ञयोग्य इति तैर्वंशत्वेन तदधीनत्वम् Sy.
१४. तेषां दध्यङ्ङादीनाम् Sy.
१५. आस्पदेन महत्त्वेन निमित्तेन Sy.
१६. महदत्यधिकम् Sy.
१७. अहमंहविन्द्रामाद्यन्तेजस्तोः P. महविन्द्रा ... न्तेजस्तो० D. गिरा स्तुतिरूपया वाचा ... नमे नमति सर्वो जनः। किञ्च तेषामनुग्रहाद्यज्ञयोग्यः सन्निन्द्राग्नी गिरा स्तुतिरूपया वाचा युक्तः सन् Sy.
१८. The passage beginning with महत् and ending with नमयाम्यभिमुखं is omitted by M.
आनमे, आभिमुख्येन नमामि स्तौमि नमामि चेत्यर्थः।... स्वयमेव नतोऽस्मि Sy.
१९. VM. ignores ह and explains मे। मनुः। विदुः। आ। नमे। गिरा once only.

**होता यक्षद्वनिनो वन्त वार्यं बृहस्पतिर्यजति वेन उक्षभिः**
**पुरुवारेभिरुक्षभिः। जगृभ्मा दूरआदिशं श्लोकमद्रेरध त्मना।**
**अधारयदररिन्दानि सुक्रतुः पुरू सद्मानि सुक्रतुः॥१०॥**

होता यक्षत्। बृहस्पतिर्देवता। होता[1]। यजतु[2] बृहस्पतिम्। सम्भजनशीलाः[3] स्तोतारश्च[4]। बृहस्पतेर्वरणीयं धनम्[5]। भजन्ताम्[6]। बृहस्पतिः[7]। आत्मानं[8] तर्पयति[9]। कामयमानः। बहुभिर्देवै-[10] र्वरणीयैः। उक्षपशुभिः[11]। यस्य निरवद्यत्वाद्[12] दूर आदेशनं[13] भवति। तादृशं श्लोकम्[14]। आदरणं[15] कुर्वतो बृहस्पतेः। गृहीतवन्तो[16] वयम्[17] ईज्यमाने[18] बृहस्पतौ। आत्मनैव सोऽयम्[19]। उदकानि[20]। बहूनि[21]। सदनसाधनानि[22]। धारयति[23]। सुकर्मा[24]।[25]

---

१. दैव्योऽग्निर्मानुषो वा देवानामाह्वाता Sy.
२. याज्यां पठतु Sy.
३. ०लं P. D. ०लां M. वननवन्तो हविः कामयमाना वा देवाः Sy.
४. ०रम् M. ५. सोमम् Sy.
६. सम्भजन्ताम् Sy.
७. बृहस्पति .. बृहस्पति० M. तदर्थं बृहस्पतिर्बृहतो मन्त्रस्य हविषो वा पालकोऽध्वर्युर्दैव्यो बृहस्पतिर्वा Sy.
८. स्वयमेव Sy. ९. यागं करोति Sy.
१०. बहुभिर्वरणीयैः Sy.
११. सेचकैः सोमैः ... सेचनसमर्थैस्तदर्कै-स्तन्निमित्तभूतैर्हूयमानैराहुतिभिरादित्य-द्वारा वृष्ट्युत्पत्तेः Sy. १२. ०त्वा P.
१३. दूरआदिशं दूरदेश आदिग् आदेशो यस्य तादृशम् Sy.
१४. अद्रेः। जातावेकवचनम्। अभिषवसाधन-स्य ग्राव्णः श्लोकं वाचं ध्वनिम् Sy.
१५. श्लोकमादरणं P.
१६. गृह्णीमः श्रोत्राभ्याम्। पूजार्थं बहु-वचनम् Sy. १७. यजमानाः Sy.
१८. ०नो P. ०मिज्यमाने is suggested for ० मीज्यमाने
१९. इदानीं परोक्षकृतः। ... अयं यज-मानः, अध अथ यागसम्पूर्त्यनन्तरम् Sy.
२०. अररिन्दानि, उदकनामैतत्। 'अररि-न्दानि ध्वस्मन्वत्' (Ngh.1.12.) इति तन्नामसु पाठात्। वृष्टिलक्षणान्युद-कानि ... ररिर्दाता। नास्त्यन्यो ररि-रस्य पिपासोपशमनस्य तादृशं पिपा-सोपशमनं ददातीत्यररिन्दानि। यद्वा। अररिरितश्चेतश्चगमनम् ... तद्दती-त्यररिन्दान्युदकानि। चेष्टाप्रदानी-त्यर्थः। 'आपोमयः प्राणः (Cha. U.6.5.4.) इति श्रुतेः। यद्वा ररि-र्दानम्। न विद्यते तादृशं दानमित-रभूतेषु तदररि। तद्ददतीत्यररिन्दानि। अन्यैरदेयं लोकोपकारिभोगं ददती-त्यर्थः। तादृशान्युदकानि यागेनो-त्पादितवानित्यर्थः Sy.
२१. पुरूणि बहूनि Sy.
२२. सदनानि सुखनिवासयोग्यानि गृहाण्य-धारयत्। यद्वा बृहस्पतिः सुक्रतुस्त्वाय-मध्वर्युररिन्दान्युक्तलक्षणान्यभिषवसा-धनान्युदकान्यधारयत्। ... तथा ... सद्मानि सदनानि हविरासादनस्थाना-न्यधारयत् Sy. २३. धारितवान् Sy.
२४. शोभनकर्माऽयम् . . . शोभनप्रज्ञः Sy.
२५. VM. ignores अध and explains उक्षभिः। सुक्रतुः। once only.

ये दे॑वासो दि॒व्येका॑दश॒ स्थ पृ॑थि॒व्यामध्येका॑दश॒ स्थ ।
अ॒प्सुक्षितो॑ महि॒नैका॑दश॒ स्थ ते दे॑वासो य॒ज्ञमि॒मं जु॑षध्वम् ॥११॥

ये देवासः। वैश्वदेवी। आप इत्यन्तरिक्षनाम, अन्तरिक्षायतना रुद्राः। माहात्म्येन। अष्टौ वसवः प्रजापतिर्वषट्कारः पूषा चेति। पृथिव्यायतना एकादश रुद्रा द्वादशादित्याः।

---

१. हे ... देवाः Mah., U. हे ... देवा द्योतनशीलाः Sy.

२. ये यूयं दिवि द्युलोक एकादश स्थ एकादशसङ्ख्याका भवथ Mah. ये यूयं दिवि द्युलोक एकादश स्थ एकं च दश चेत्येतत्सङ्ख्याका भवथ Sy. ये यूयम् ... दिवि द्युलोक एकादशसङ्ख्यया भवथ U.

३. महिम्ना स्वस्वमहिम्ना स्वस्वमाहात्म्येन। महिनेति पदं त्रिष्वपि स्थानेषु सम्बध्यते। सर्वत्र महाभाग्याविशेषात् Mah. महत्त्वेन स्वस्वविभूत्या। ... महिना देवास इत्येते सर्वत्र सम्बध्येते Sy. महिना महाभाग्येनैकादश स्थ। महिनेति त्रिष्वपि स्थानेषु सम्बध्यते। सर्वत्र हि महाभाग्याविशेषात् U.

४. ०ञ्का० P.

५. तथा पृथिव्यामधि पृथिव्युपर्येकादश स्थ। तथा ये यूयमप्सुक्षितोऽन्तरिक्षनिवासिन एकादश स्थ भवथ। अप्स्वित्यन्तरिक्षनामसु पठितम्। क्षियतिर्निवासार्थः। अप्स्वन्तरिक्षे क्षियन्ति निवसन्तीत्यर्थः। ...ते त्रिविधा यूयमिमं यज्ञं यजनीयमाग्रयणग्रहं जुषध्वं सेवध्वम् Mah. पृथिव्यामधि, उपर्येकादश स्थ, एतत्सङ्ख्याका भवथ। किञ्च, ...तद्धेतुत्वात्छन्दसम्। अप्स्वन्तरिक्षे क्षियन्ति निवसन्तीत्यप्सुक्षितः। ... अन्तरिक्षवासिनो देवा एकादश स्थ तत्सङ्ख्याका भवथ। यद्वाऽन्तरिक्षस्येयं सञ्ज्ञा। 'आपः पृथिवी' (Ngh. 1. 3.) इत्यन्तरिक्षनामसु पाठात्। यद्यपि 'तिस्र एव देवताः' (N. 7.5.) इत्युक्तत्वात् क्षित्याद्यभिमानिन्यो देवतास्तिस्र एव तथापि ... त्रयस्त्रिंशत्सङ्ख्याका भवन्ति। तत्तत्स्थाना अन्यास्तद्विभूतय इत्युक्तत्वात्। ...ते यूयं हे देवासः! मिलित्वोक्तसङ्ख्याका देवा इममस्मदीयं यज्ञं जुषध्वं सम्भजध्वम्। तत्सम्बन्धि हविर्वा सेवित्वा प्रीणयध्वम् Sy. पृथिव्याम्...उपर्येकादश स्थ। ये च यूयम् ... अप्स्वित्यन्तरिक्षनामसु पठितम्। क्षियतिर्निवासार्थः। अन्तरिक्षनिवासिनः...ते यूयं हे देवा यज्ञमिममाग्रयणलक्षणम् ...सेवध्वम् U.

६. RV. I.139.11=YV. 7. 19. Ms. D. puts the figure ॥१३९॥ here to indicate the end of one hundred and thirtyninth hymn. No such number is given in P. and M.

I.140.

वे॒दि॒षदे॑ प्रि॒यधा॑माय सु॒द्युते॑ धा॒सिमि॑व॒ प्र भ॑रा॒ योनि॑म॒ग्नये॑ ।
वस्त्रे॑णेव वासया॒ मन्म॑ना॒ शुचिं॑ ज्यो॒तीर॑थं शु॒क्रव॑र्णं॒ तमो॒हन॑म् ॥१॥

वेदिषदे। दीर्घतमा औचथ्यः।[1] वेद्यां[2] सीदते।[3] प्रियस्थानाय।[4] अग्नये।[5] सुष्ठु द्योतमानाय।[6] हविरिव।[7] निवासस्थानम्।[8] उपकल्पय[9] तत्र चैनं स्थापयित्वा। वस्त्रेणेव।[10] आच्छादय। स्तोत्रेण।[11] शुद्धम्।[12] ज्योतींषि[13] यस्य[14] रथास्तैरुह्यमानस्य।[15] श्वेतवर्णम्।[16] तमसो[17] हन्तारम्।[18]

अ॒भि द्वि॒जन्मा॑ त्रि॒वृद॑न्नमृ॒ज्यते संवत्स॒रे वा॑वृधे ज॒ग्धमी॒ पुनः॑ ।
अ॒न्यस्या॒सा जि॒ह्वया॒ जेन्यो॒ वृषा॒ न्य१॒॑न्येन॑ व॒निनो॑ मृष्ट वार॒णः ॥२॥

अभि द्विजन्मा। अभिविसृज्यते।[19] द्वयोर्लोकयोररण्योर्वा जायमानः।[20] त्रिवृत्।[21] अन्न-[22]

---

१. थ्यः M.

२. सीदेद्यं M. हे अध्वर्यो Sy.

३. सो० P. सीदते नित्यम् Sy.

४. प्रियधाम्ने प्रियस्थानायोत्तरवेदिलक्षण-प्रियाय Sy.

५. अग्ने P.
अपनयनादिगुणविशिष्टाय Sy.

६. शोभनद्योतनाय Sy.

७. ०रिह् M. हवीरूपमन्नमिव Sy.

८. स्थानं वेद्याख्यम् Sy.

९. प्रहर। प्रकर्षेण सम्पादयेत्यर्थः। Sy.

१०. ० णव M. तच्च स्थानं वस्त्रेणेव, तेन यथा मार्दवायास्तृणाति तद्वत् Sy.

११. मननीयेन सम्भारेण बर्हिषा वा वेदिस्थानं वासय Sy.

१२. कीदृशं तत्स्थानमिति तदुच्यते। ... उत्पवनप्रोक्षणादिनाऽमेध्यासुरादीनामप-गतत्वाच्छुद्धम् Sy.

१३. शुद्धज्योतिषि P. D.
ज्योतिष आज्यादेरग्नेर्वा रथस्थानीय-माधारभूतत्वात् Sy.

१४. Omitted by M.

१५. ०रू० P. D. ०रुह्यमानं is suggested for ०रुह्यमानस्य

१६. अग्न्युपेतत्वाद्दीप्तवर्णम् Sy.

१७. अत एव ... तमसोऽन्धकारस्य हन्ता-रमज्ञानस्य वा। अग्निसाध्ययज्ञादिद्वारा ज्ञानविचारकत्वादिति भावः। Sy.

१८. यद्वा तस्यां योनौ स्थाने वस्त्रेण यथा गोपनीयं वस्तु गोपायन्ति तद्वत्तमग्निं वासय निवासय स्थापय। मन्मना मननीयेन हृद्येन वस्त्रसदृशेन मृदुकाष्ठा-दिनाऽऽच्छादय वा। कीदृशम्? ज्योतीरथं दिव्यरथोपेतम्। शेषं पूर्ववत् Sy.

१९. अभि ऋज्यते प्राप्नोति। अभित आभि-मुख्येन नयति भक्षयति ... यद्वा भृज्यते 'भ्रस्जो पाके' पक्वं करोति वा Sy.

२०. द्वाभ्यामरणीभ्यां जायमानः। यद्वा। मथनेनाधानसंस्कारेण चोत्पन्नत्वात् द्विजन्मत्वम् Sy.

२१. आज्यपुरोडाशसोमरूपेण त्रिप्रका-रम् Sy.

२२. अदनीयम् Sy.

माज्यौषधसोमरूपम्। अग्निना भक्षितम्। एतज्जगत्[1]। पुनः। संवत्सरे[2]। परिणमति[3] सोऽयं[4] जेताऽग्निः[5]। एकस्य[6] यजमानेषु वर्तमानस्याग्नेः। आस्येन[7]। जिह्वया च कामानां वर्षिता[8] भवति। अथान्येन दवाग्निना[9]। वनिनो[10] वृक्षान्। न्यङ्[11] दहति[12]। वारणशीलः[13]।

**कृ॒ष्ण॒प्रुतौ॑ वेवि॒जे अ॑स्य स॒क्षितौ॑ उ॒भा त॑रेते अ॒भि मा॒तरा॒ शिशु॑म्।**
**प्रा॒चाजि॑ह्वं ध्व॒सय॑न्तं तृषु॒च्युत॒मा साच्यं॒ कुप॑यं॒ वर्ध॑नं पि॒तुः ॥३॥**

कृष्णप्रुतौ। कृष्णमार्गे[14]। दाहभयादत्यन्तं कम्पमाने[15]। अग्नेरस्य। सह निवसन्त्यौ[16]। द्यावापृथिवी[17]। उभे[18] अपि। एनं पुत्रभूतम्[19]। अभिगच्छतस्त्वष्टुर्जायमानम्[20]। प्राङ्मुखज्वाला-जिह्वम्[21]। तृणगुल्मादिकं[22] विनाशयन्तम्[23]। शीघ्रं दाह्यं प्रति[24] गच्छन्तम्। सेव्यं[25] यजमानानाम्। अयजमानानां कोपनम्[26]। पालयितुर्यजमानस्य[27]। वर्धनं[28] शिशुम्।[29]

---

१. अग्निमादक्षितमेत्तज्जगत् P. ०तमे ... तज्ज० D. ई इदम्। ईमित्यत्र सांहितिको मलोपश्छान्दसः Sy.
२. संवत्सरे पूर्णे Sy.
३. अग्निर्वर्धयति। जीर्णस्य पुनर्वृद्ध्य-भावाद्यजमानं हविर्वृद्ध्या प्रतिसंवत्सरं यागसमर्थं करोतीत्यर्थः। यद्वा। एकवारं भक्षितं हविः पुनः संवत्सरे पूर्णे संवत्सर उदरस्थं वर्धते वर्धयति वा भक्षितारम् Sy. ४. सोय M.
५. जाताग्निः P.D. जेन्यः प्रभूतो भवतीति शेषः। यद्वा वर्षिता सर्वेकेन रूपेणा-न्यस्य यज्ञे होत्रादेर्जिह्वया तदुपल-क्षितया स्रुचा जेन्यः प्रवृद्धो भवति Sy.
६. एतस्य P. अन्यस्य हविषः Sy.
७. आस्ये P. D.
८. वर्षकः सन् Sy.
९. अन्येनेवदा (न दावा) ग्निना P.D.। दावाग्निरूपेण Sy.
१०. वनसम्बन्धिनो वृक्षान् Sy.
११. यङ् P.D. यवं M.
१२. निमर्ष्टि। दहतीत्यर्थः Sy.
१३. वर० P. सर्वेषां वारकः सन् Sy.
१४. मथनोपक्रमे कृष्णप्रुतौ, अग्निसम्पर्कात्कृष्णवर्णतां प्राप्नुवत्यौ प्रापयन्त्यौ वा भूमिम् Sy. १५. वेविजे चलतः Sy.
१६. समानकार्यमग्न्युत्पादनं गच्छन्त्यावेवंभूते मातरौ Sy.
१७. मातृस्थानीये उत्पादयित्र्यौ Sy.
१८. उभेव M. उभे अरण्याख्ये मातरौ Sy.
१९. शिशुवदुत्पत्तिसमयेऽत्यल्पमग्निम् Sy.
२०. अभि तरेते, आभिमुख्येन प्राप्नुतश्च Sy.
२१. ०मुखच्छायाज्वाला० P. कीदृशं शिशुम्। ... प्राग्देशस्थितजिह्वास्थानीयज्वालम् Sy. २२. ०गुल्मा० P. D.
२३. तमो नाशयन्तम् Sy.
२४. अरणीभ्यां क्षिप्रं निर्गच्छन्तमक्लेशेन योनेः सकाशाच्छीघ्रमुत्पद्यमानम् Sy.
२५. आ ईषत् ... समवेतव्यं मृदुकाष्ठ-चूर्णादिना Sy.
२६. ०नः M. गोपनीयम् Sy.
२७. पालकस्य यजमानस्य Sy.
२८. प्रवर्धनं प्रवर्धयितारम्। उक्तप्रकारैर्लौकिकशिशुसाधारणैरुपेतं शिशुमग्निं मातरावुत्पादयत इत्यर्थः Sy.
२९. VM. ignores आ

मुमुक्ष्वो॒३॑ मन॑वे मानवस्य॒ते र॑घु॒द्रुवः॑ कृ॒ष्णसी॑तास ऊ॒ जुवः॑ ।
अ॒स॒म॒ना अ॑जि॒रासो॑ रघु॒ष्यदो॒ वात॑जूता॒ उप॑ युज्यन्त आ॒शवः॑ ॥४॥

मुमुक्ष्वः। कामा[1]न्मोक्तुमि[2]च्छन्तः। मनवे[3]। मनुष्या[4]नक्षुधितानिच्छते[5]। लघु शीघ्रं गच्छन्तः[6]। आकृष्टहला[7]ः। वेगवन्तः[8]। नानाविधरूपाः[9]। क्षिप्राः[10]। लघु च स्यन्दन्तो[11]ऽरण्यं दहन्तः। वातेनाकृष्टाः[12]। सर्वैर्मानवैरु[13]पयुज्यन्ते। तव[14] रश्मयः[15]।

आद॑स्य॒ ते ध्व॒सय॑न्तो॒ वृथे॑रते कृ॒ष्णमभ्वं॒ महि॒ वर्पः॑ करि॑क्रतः ।
यत्सीं॑ म॒हीम॒वनिं॒ प्राभि मर्मृ॑शदभिश्व॒सन्स्त॒नय॒न्नेति॒ नान॑दत् ॥५॥

आदस्य ते। अनन्तरमेव[16]। अस्याग्नेः[17]। वृक्षादीन् ध्वसयन्तः[18]। रश्मयः[19]। अनायासेनैव[20]।

---

१. कामं P.

२. कीदृश्यस्ताः। ... मुमुक्षव आहुतिद्वारा यजमानं मोक्तुमिच्छन्त्यो ब्रह्मलोकं प्रापयन्त्यः। ... ज्वालानामाहुतिद्वाराब्रह्मलोकप्राप्तिसाधनत्वं 'काली कराली' इत्युपक्रम्य श्रूयते। 'एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन्। तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः' (Muṇḍak. U.1.2.4–5.) इति Sy.

३. मननवते Sy.

४. मनुष्याः० P. D. ०धिता M. मानवानृत्विजः कर्मार्थमिच्छते यजमानाय तदर्थमध्वर्यादिभिरग्नेर्ज्वाला उपयुज्यन्ते यज्ञेषु। सूक्तस्याग्नेयत्वादौचित्याज्ज्वाला इति गम्यते Sy.

५. निगच्छते P. M.

६. ०च्छतः M.
क्षिप्रं गच्छन्त्यः Sy.

७. ०कलाः D.
कृष्णसीतासः कृष्णमार्गाः। उकारः समुच्चयार्थः Sy.

८. जवनशीलाः शीघ्रकारिण्यः स्वव्यापारेषु Sy.

९. असमना असमानमनस्काः। काश्चन प्राङ्मुख्यो गच्छन्ति काश्चन प्रत्यङ्मुख्य इति विविधमनस्काः। व्यत्ययेनैकवचनम्। यद्वा। असमना भिन्नवर्णाः। भिन्नवर्णत्वं च तत्रैव श्रूयते—'काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः' इति Sy.

१०. अजिरासो गमनशीलाः Sy.

११. शीघ्रं स्यन्दमानाः Sy.

१२. वातप्रेरिताः Sy.

१३. उपरियु० P. D.

१४. तव। रश्मयः is missing in M.
आशवो व्यापनशीला Sy.

१५. VM. ignores उ।

१६. अनन्तरम् Sy.

१७. ०स्याने (ग्ने) वृं० M. ०दि P. स्तूयमानस्याग्नेः Sy.

१८. ०न्तयो M. कीदृशास्ते। ... तमांसि ध्वंसयन्तः Sy.

१९. ते प्रसिद्धा विस्फुलिङ्गाः Sy.

२०. सहैव Sy.

उत्तिष्ठन्ति[1]। कृष्णम्[2]। अतिमानम्[3]। महत्। रूपम्[4]। कुर्वन्तः[5]। यदा मन्वयम्। सर्वतः परिगृह्य। महतीम्[6]। भूमिम्। पुनः पुनरामृशन्[7]। नासिकाश्वासशब्दसदृशं शब्दं कुर्वन्[8]। गर्जितसदृशं[9]। निर्घातसदृशं[10] शब्दं च कुर्वन्। प्रकर्षेणाभिगच्छति[11]।

**भूषन्न योऽधि बभ्रूषु नम्नते वृषेव पत्नीरभ्येति रोरुवत्।**
**ओजायमानस्तन्वश्च शुम्भते भीमो न शृङ्गा दविधाव दुर्गृभिः ॥६॥**

भूषन्न यः। सम्भवितुमिच्छन्[12]। इव। यः[13]। ओषधीषु[14]। नमते[15]। सोऽयं पुमानिव[16] शब्दे। पत्नीः[17]। अभिगच्छत्योषधीः[18]। शब्दं कुर्वन्[19]। बलमाचरन्[20]। अङ्गानि[21]। च। शोभयति[22]। भीम[23] ऋषभः। इव। शृङ्गाणि[24]। दोधवीति[25]। दुर्ग्रहो[26] ज्वालाः[27]।

---

१. सर्वतो गच्छन्ति Sy.
२. कृष्णवर्णम् Sy.
३. अनिमा॰ P. D. अव (नि) मा॰ M.
महान्तमभिभवद्गमनमार्गम् Sy.
४. रूपं प्रकाशम् Sy.
५. अत्यर्थं कुर्वन्तः Sy.
६. ॰गृहमर्वति P.
७. पुनः पुनरामृशन् Sy.
८. अभिश्वसन्सर्वतश्चेष्टमानः Sy.
९. ॰श M.
स्तनयञ्शब्दं कुर्वन् Sy.
१०. ॰श M.
अत्यर्थं शब्दयन् Sy.
११. अभितः प्रकर्षेणेति गच्छति। यथा इतस्ततो जिह्वाभिर्लेलिहानो भुगुभुगुध्वनिं कुर्वञ्ज्वलति तथैव विस्फुलिङ्गा उद्भवन्तीत्यर्थः Sy.
१२. भूतान्येव स्वतेजसा भूषयन्निव Sy.
१३. अग्निः Sy.
१४. बभ्रुवर्णास्वोषधीषु भरणकुशलासु वा जगताम् Sy.
१५. नम्नते M.
अपि अधिकं नम्नते नमति काष्ठानि प्रविशति Sy.
१६. किंचायं प्रविशन्वृषेव सेक्ता वृषभ इव Sy.
१७. तमेव पालयित्रीः समर्थयित्रीरोषधीः Sy.
१८. अधिग॰ M.
अभितो गच्छति। प्रथममोषधीः प्रविश्य पश्चात्प्रवृद्धः संस्ता एव वहतीत्यर्थः Sy.
१९. अत्यर्थं शब्दयन् Sy.
२०. किं चैवं कृत्वा ... ओज इति बलनाम। स्वयं बलमिवाचरन्। ... धूमादिभिर्विना केवलं तेजोरूप एव सन् Sy.
२१. अगोनि M. स्वशरीरभूता ज्वाला अपि Sy.
२२. दीपयति। पोषयतीत्यर्थः। Sy.
२३. भयङ्करो मृग इव Sy.
२४. स यथा दुर्ग्रहः सन् शृङ्गं चालयति तद्वदयमपि शृङ्गाणि शृङ्गवदुन्नता ज्वालाः Sy.
२५. अत्यर्थं चालयति Sy.
२६. प्रवृद्धज्वालः ... केनचिदपि ग्रहीतुमशक्यः सन् Sy.
२७. VM. ignores अधि।

स सं॒स्ति॒रो वि॒ष्टिरः॒ सं गृ॑भायति जा॒नन्ने॒व जा॑न॒तीर्नित्य॒ आ श॑ये ।
पुन॑र्वर्धन्ते॒ अपि॑ यन्ति दे॒व्य॑म॒न्यद्वर्पः॑ पि॒त्रोः कृ॑ण्वते॒ सचा॑ ॥७॥

स संस्तिरः।[1] दोहनात्मा।[2] अन्योषधीः सङ्गृह्णन्।[3] विस्तारयंश्चोषधीः।[4] ज्वालाभिः सङ्गृह्णाति।[5] जानन्।[6] एव। जानतीरोषधीः।[7] अनवरतम्।[8] आशेते।[9] पुनः।[10] वर्धन्ते।[11] वृद्धाश्चापि।[12] गच्छन्त्यग्निम्।[13] देवहितं ता वह्यमानाः।[14] द्यावापृथिव्योः।[15] अन्यत्।[16] रूपं कृष्णम्।[17] कुर्वन्ति।[18] सह।

तम॒ग्रुवः॑ के॒शिनीः॒ सं हि रे॑भि॒र ऊ॒र्ध्वास्त॑स्थुर्म॒म्रुषीः॒ प्राय॑वे॒ पुनः॑ ।
तासां॑ ज॒रां प्र॑मु॒ञ्चन्ने॑ति॒ नान॑द॒दसुं॒ परं॑ ज॒नय॑ञ्जी॒वमस्तृ॑तम् ॥८॥

तमग्रुवः।[19] अग्निम्। चलनस्वभावाः।[20] पुत्रयुक्ताः ?।[21] सम्। हि। रेभिरे संरब्धास्तं।[22] सर्वमनुष्यार्थम्।[23] मृता अपि पृथिव्यां निलीनाः।[24] पुनः। ऊर्ध्वाः।[25] प्रतस्थुः।[26] तासामोषधीनां जीर्णा-[27]

१. ०नात्मन्योषधीः D. M.
२. संस्तिर आच्छन्नः Sy.
३. कदाचिद्विस्तीर्णः सन् Sy.
४. सङ्गृह्णात्योषधीः Sy.
५. जानन्नेव यजमानार्थं प्रवृद्धेन भवितव्यमतो ज्वालाभिः संयोज्य इत्यधिगच्छन्नेव Sy.
६. ०नति ओष० M. यजमानार्थं प्रवृद्धाभिर्भवितव्यमित्यवगच्छन्तीर्ज्वालाः Sy.
७. नित्योऽविच्छिन्नः सन् Sy.
८. आशेरते M. आश्रयतीत्यर्थः Sy.
९. पुनरपि Sy.
१०. यागयोग्या यथा भवन्ति तथा वर्धन्ते Sy.
११. एवम्भूतज्वालाः ... पूर्वं प्रवृद्धा एव Sy.
१२. प्राप्नुवन्ति। यद्यप्यग्निज्वालयोरेकत्वं तथापि 'राहोः शिरः' इति वदौपचारिको गन्तुगन्तव्यभावः Sy.
१३. यागादिव्यवहारयोग्यं स्तुत्यं वाग्निम् Sy.
१४. एवं प्रवृद्धा ज्वाला ओषधयो वा Sy.
१५. पित्रोर्जगत्पालयित्रोस्ताभ्यां सम्भूय द्यावापृथिव्योः Sy.
१६. अन्य P. पूर्वमविद्यमानं तेजोमयम् Sy.
१७. लोकद्वयं स्पृशन्तीत्यर्थः Sy.
१८. सहः M. Omitted by P. and M. अग्निना सह Sy.
१९. तमग्रुपः D.
२०. ०वः P. अग्रतः स्थिताः। यद्वा। अङ्गुलिनामैतत्। अङ्गुलय इवाकुटिलाः Sy.
२१. वत्रयु० M. केशिनीः केशस्थानीयोर्ध्वभाविकाष्ठ्योपेता ज्वालाः Sy.
२२. खलु Sy.
२३. परिरम्भं कुर्वन्ति। ... आलिङ्गन्ति Sy.
२४. आगच्छतेऽग्नये भर्त्रे Sy.
२५. किंवं कुर्वत्यः ... मृता अङ्गारभावमापन्ना अपि Sy.
२६. ...स्वोपद्रवमजानत्यः Sy.
२७. ऊर्ध्वमुखा उन्नताः Sy.
२८. प्रतस्थिरे। मृतप्राया अपि प्रत्युत्थानं कृतवत्य इत्यर्थः। Sy.
२९. प्रतस्तसा० M. ज्वालानाम् Sy.

नाम्। जराम्[1]। प्रमुञ्चन्[2]। अयमुपरि गच्छति[3]। शब्दं कुर्वन्[4]। प्राणम्[5]। प्रकृष्टम्[6]। जीवितं[7] च[8] तासाम्। जनयन्[9]। अहिंसितम्[10]।

**अधीवासं परि मातू रिहन्नह तुविग्रेभिः सत्वभिर्याति वि ज्रयः ।**
**वयो दधत्पद्वते रेरिहत्सदानु श्येनी सचते वर्तनीरह ॥९॥**

अधीवासम्[11]। पृथिव्याम्[12]। अधिवसन्तमोषधीसङ्घम्[13]। परितः। आस्वादयन्[14]। एव। बहुशब्दं कुर्वद्भिः[15]। दह्यमानैः सत्त्वभिः[16]। वेगम्[17]। वियाति[18] जरदोषधिदाहात्। द्विपदे चतुष्पदे[19] च। अन्नम्[20]। प्रयच्छन्[21]। सदैव[22]। ओषधीश्चास्वादयन्[23]। कृष्णः[24]। मार्गः[25]। अनुसचते[26]। अहशब्द आश्चर्ये[27]।

---

१. वयोहानिम् Sy.

२. प्रकर्षेण मोचयन् Sy.

३. एवं कृतवतीषु सतीषु स भर्ताऽग्निः Sy.

४. तासां ज्वालानां सन्निधिं प्राप्नोति। यथा लोके काश्चन रमण्यो रमणेन सह निर्भरं क्रीडित्वा पश्चात्प्रोषिते तस्मिन्विरहेण जीर्णा म्रियमाणाः पश्चात्तस्मिन्नागते सति स्वदौर्बल्यमगणयित्वा सन्तोषेण परिष्वङ्गाय चेष्टन्ते। स भर्ता मन्त्रोच्चारणेन जरामपनीयोचितप्रदानेन प्राणयन्नक्षतीत्ययं भावोऽत्रानुसन्धेयः Sy.

५. कुर्वं P. जरापरिहाराय मन्त्रयन्निवात्यर्थं शब्दयन् Sy.

६. न केवलं जराहानिरेवापि तु ... प्रसुं प्राणम् Sy.

७. निरतिशयम् Sy.

८. ० वतं M.
प्राणधारणसामर्थ्यम् Sy.

९. उत्पादयन् Sy.

१०. काष्ठोदकादिप्रक्षेपेणाप्यहिंसितम् Sy.

११. M. adds परि after अधीवासम्।
अधिवा० P.
दावाग्निः स्तूयते Sy.

१२. अयमग्निर्मातुर्भूतानां निर्मातुर्भूमेः...उपर्याच्छादनस्थानीयम् Sy.

१३. तृणगुल्मौषध्यादिकम् Sy.

१४. लिहन् ... यद्वा मातुर्भूमेरधीवासमुपरि धार्यमाणं वस्त्रं परि परितो रिहन्सम्पादयन् Sy.

१५. प्रभूतं शब्दयद्भिः प्रभूतगमनैर्वा Sy.

१६. प्राणिभिः सहितः Sy.

१७. व्रयसा जवेन Sy.

१८. विविधं गच्छति Sy.

१९. पादवते द्विपदे चतुष्पदे च Sy.

२०. अन्नं तत्तदुचितम् Sy.

२१. ददत्। विपिने दावानले भीत्या पलायमानान्प्राणिनो व्याघ्रादयो भक्षयन्तीति प्रसिद्धम् Sy.

२२. किं कुर्वन्। सदा सर्वदा Sy.

२३. तृणादिकम् Sy.

२४. ०यन्त P. D. ०यन्तं M.
दहन् Sy.

२५. श्यामवर्णः Sy.

२६. तो P.
वियान्तम् ... अनुक्रमेण सचते सेवते। यत्र यत्राग्निर्गच्छति तत्र तत्र मार्गोऽपि कृष्णो भवति Sy.

२७. अहेति प्रसिद्धौ Sy.

अ॒स्माक॑मग्ने म॒घव॑त्सु दीदि॒ह्यध॒ श्वसी॑वान्वृष॒भो दमू॑नाः ।
अ॒वास्या॒ शिशु॑मतीरदीदे॒र्वर्मे॑व यु॒त्सु प॑रि॒जर्भु॑राणः ॥१०॥

अस्माकमग्ने । अस्माकम्[1] । अग्ने[2] । धनवत्सु[3]ऋत्विक्षु । दीप्यस्व । श्वासं कुर्वन्[4] । वृषभः[5] । दममनाः[6] । स[7] त्वं[8] त्वदीयाः शिशुमतीर्बडवाः[9][10] । गमनार्थं विमुच्य[11] । दीप्यस्व[12] । वर्मेव[13] । युद्धेषु[14] अस्मानत्यन्तं[15] परिचरन्[16] ।

इ॒दम॑ग्ने॒ सुधि॑तं॒ दुर्धि॑ता॒दधि॑ प्रि॒यादु॑ चि॒न्मन्म॑नः॒ प्रेयो॑ अस्तु ते ।
यत्ते॑ शु॒क्रं त॒न्वो॒३॒॑ रोच॑ते॒ शुचि॒ तेना॒स्मभ्यं॑ वनसे॒ रत्न॒मा त्वम् ॥११॥

इदमग्ने । इदं[18] स्तोत्रम् । अनायासेन सहितम्[19] । प्रयत्नेन सहितात्[20][21] । प्रियतमात्[22] । स्तोत्रात्[23] । अपि[24] । अग्ने । तव । प्रियतमम्[25] । भवतु[26] । यत् । तव । दीप्तं रूपम्[27][28] । शरीरस्य[29] । रोचते । शुद्धम्[30] । तेन[31] । अस्मभ्यम्[32] । आ प्रयच्छसि[33] । रत्नम्[34][35] ।

---

१. अस्मत्सम्बन्धिषु Sy.
२. अस्माकम् । अग्ने । omitted by P.
३. अन्नवत्सु यागेषु गृहेषु वा Sy.
४. श्वासंकुर्वन् M. अथ अथानन्तरम् ... श्वसनवान् ज्वालाभिश्चेष्टावानस्मत्प्राणनवान्वा Sy.
५. वर्षिताऽभिमतानाम् Sy.
६. ०मदाः M. दानमना दममना दान्तमना वा सर्वत्र भवेति शेषः Sy.
७. उक्तलक्षणस्त्वम् Sy.
८. ०या P. D. ०यां M.
९. शिशुशब्देन तदवस्था लक्ष्यते । शैशववतीर्ज्वालाः Sy. १०. ०ती ब० M.
११. अपक्षिप्य, विहाय Sy.
१२. भृशं दीप्यस्व Sy.
१३. कवचमिव Sy.
१४. सङ्ग्रामेषु Sy.
१५. अस्मद्द्वेष्टॄन् Sy.
१६. पुनः पुनः परिहरन् । यद्वा । युत्सु सङ्ग्रामेषु वर्मेव परिजर्भुराणो भव ... उक्तगुणको भव मघवत्सु यज्ञेषु दीप्यस्व Sy.
१७. VM. ignores अध ।
१८. अस्मदीयं सोमादिरूपं हविः Sy.
१९. सुधितं सुहितं सुष्ठु दत्तम् Sy. सुहितम् or हितम् is suggested for सहितम् ।
२०. दुष्टं स्थापितात्कठिनात्काष्ठादेः, अधि उपरि Sy.
२१. ०तान् P. D. M. हितात् is suggested for सहितात् ।
२२. ०मान् P.D.M. तव हृद्यादपि Sy.
२३. मननीयात् Sy.
२४. उशब्दोऽवधारणे । चिच्छब्दोऽपिशब्दार्थः Sy. २५. अतिप्रियतमम् Sy.
२६. अस्तु Sy.
२७. शुक्रं दीप्तम् Sy. २८. तेजः Sy.
२९. तन्वः शरीरस्य घृतेनोज्ज्वलितायाः ज्वालायाः Sy. ३०. निर्मलम् Sy.
३१. तेन सह Sy. ३२. अस्मान् Sy.
३३. सम्भजस्व Sy.
३४. रमणीयं मणिमुक्तादिकं वितरन् Sy.
३५. VM. ignores अधि । उ । त्वम् ।

रथा॑य॒ नाव॑मु॒त नो॑ गृ॒हाय॒ नित्या॑रित्रां प॒द्वतीं॑ रास्यग्ने ।
अ॒स्माकं॑ वी॒राँ उ॒त नो॑ म॒घोनो॒ जनाँ॑श्च॒ या पा॒रया॒च्छर्म॒ या च॑ ॥१२॥

रथाय नावम्[१]। सगृहः[२] सरथो[३] गच्छन्नुत्तितीर्षुर्नदीमाह[४]—रथाय[५]। गृहाय[६] चरणार्थम्। दृढमेक्षणाम्[७]। तरणदण्डयुक्ताम्[८]। नावम्[९]। अस्मभ्यम्[१०]। देहि[११]। अस्माकम्। वीरान्[१२]। अपि। धनवतः[१३]। दासान्[१४]। च। या नदी[१५]। पारयति[१६]। सुखम्[१७]। च। या[१८] करोति[१९]।

अ॒भी नो॑ अग्न उ॒क्थमिज्जु॑गुर्या॒ द्यावा॒क्षामा॒ सिन्ध॑वश्च॒ स्वगू॑र्ताः ।
गव्यं॒ यव्यं॒ यन्तो॑ दी॒र्घाहेषं॒ वर॑मरु॒ण्यो॑ वरन्त ॥१३॥

अभी नो अग्ने। अस्माकम्। अग्ने! उक्थम्[२०]। एव। सर्वदा स्वम् 'ओ थामो[२१] देव' इत्य-

---

१. Omitted by M.
२. रथाय ... हः D. सह P.
३. रथो P.
४. ०तीर्षन् न० P.
५. उत अपि च ... रंहणाय Sy.
६. सर्वस्यायतनभूताय Sy.
७. कीदृशीं ताम्। नित्यारित्रां नियतस्थिरस्फ-पोदकाकर्षणकाष्ठसाधनोपेताम् Sy.
८. ०र्णां द० M. पद्वतीम्...द्रव्यदेवता-मन्त्रादिरूपपादोपेताम् Sy.
९. संसारोत्तारिकां सोमयागात्मिकां नावम्। 'यज्ञो वै सुतर्मा नौः' (AB. 1.13.) इत्यादिषु श्रुतिषु नौरूपत्वेन स्तुतत्वात् Sy.
१०. नावस्म० M. नवामस्म० P. अस्माकं यजमानाय Sy.
११. ईदृशीं यज्ञात्मिकां नावम् ... देहि सम्पा- दय। रातिर्दानकर्मा। 'दासति राति' (Ngh. 3. 20) इति तन्नामसु पाठात् Sy.
१२. अस्मत्सम्बन्धिनः पुत्रादीन् Sy.
१३. हविर्लक्षणान्नवतः करोति Sy.
१४. यजमानानस्मानपि Sy.
१५. नौः Sy.
१६. The passage beginning with वीरान् and ending with पारयति is missing in M. पारयेत्, उत्तारयेत्।... जननमरणादि-बहुदुःखात्मकस्य पारं निरतिशयसुखास्पदं ब्रह्मलोकं प्रापयेत्। 'एष वः पुण्यः सुकृतो ब्रह्मलोकः' (Mundak. U. 1. 2. .6) इति यागाद्यनुष्ठानवतो श्रूयमाणत्वात् Sy.
१७. एवं प्रापय्य च या नौः शर्म सुखं निरतिशयं ब्रह्म Sy.
१८. प्रापयेत्। 'परस्यान्ते कृतात्मानः प्रवि-शन्ति परम्पदम्' इत्युक्तत्वात्। चित्त-शुद्ध्युत्पादनद्वारा 'विविदिषन्ति यज्ञेन दानेन' (Bṛh U. 4. 4. 22.) इति श्रुतेः Sy.
१९. VM. ignores उत। अग्ने। नः
२०. इत्थम् M.
शस्त्रम् Sy.
२१. तामो D. थामः M.

भिजुगुर्वाः। द्यावापृथिवी। सिन्धवः। च। स्वभूतास्ता अभिगृणन्तु। गोहितम्। यवहितं च देशम्। दीर्घमहस्सु। गच्छन्तः। वरणीयम्। अन्नम्। गावः। अवृष्णस्समदर्थम्।

## I.141.

**बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि।**
**यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥१॥**

बळित्था। तत्। सत्यमेव। इत्थम्। तदानीमेव हविषो निवपनाय। निधीयते। दर्शनीयम्। अग्नेरस्य। तेजः। यदेव। सहसः। जायते। यदि। एनम्। प्रति गच्छति। साधयति।

---

१. ०गूर्वाः M. आभिमुख्येन स्तुहि, प्रोत्साहय, सम्यक् शस्तमित्यङ्गीकुरु Sy.

२. द्यावापृथिव्यावपि यज्ञसाधनसम्पादनेन प्रोत्साहयताम् Sy.

३. स्यन्दनशीला नद्यः Sy.

४. स्वयमेव गामिन्यः Sy.

५. स्वभूता अभि० P. स्वभूत...अभि० D.

६. गोसम्भवं क्षीरादिकं गवां तृणाद्युत्पादनद्वारा Sy.

७. यव्यम्। उपलक्षणमेतत्। यवव्रीह्यादिजन्यं पुरोडाशादिकम्।

८. सर्वाणि Sy.

९. अहानि। सर्वकालम् Sy.

१०. प्रापयन्तः प्रोत्साहयन्तु Sy.

११. वरणीयं श्रेष्ठमन्यदपि यागसाधनम् Sy.

१२. इज्यमानमन्नरसादिकम् Sy.

१३. गवः P. गो...गावः M. अरुण्योऽरुणवर्णगोयुक्ताः। मत्वर्थीयो लुप्यते। आरम्भसाधनभूता उषसः। तद्धेतुत्वात्ताच्छब्द्यम् Sy.

१४. ०नस्म० M. प्रापयन्तु।...साधयन्तु। एतत्सर्वमग्नेः प्रसादादित्यग्नेरेव स्तुतित्वादाग्नेयत्वमविरुद्धम् Sy.

१५. Ms. D. puts the figure ॥१४०॥ here to indicate the end of one hundred and fortieth hymn. No such number is given in P. and M.

१६. प्रसिद्धम् Sy.

१७. बट् इत्था इत्युभे अपि सत्यनामनी। 'बट् श्रत् सत्रा ... इत्था' (Ngh. 3. 10.) इति तन्नामसु पाठात् Sy.

१८. सर्वैर्दृश्यमानप्रकारेण Sy.

१९. वपुषे शरीरव्यवहाराय दार्ढ्याय। ... जाठराग्निना भुक्तानां जरणेन शरीरधारणं प्रसिद्धम् Sy.

२०. धार्यते सर्वैः Sy.

२१. सर्वैर्दर्शनीयम् Sy.

२२. देवस्य द्योतनशीलस्यादित्यस्य Sy.

२३. यं दैव M. तत्रोपपत्तिमाह। ... यतः कारणात् Sy.

२४. ०सा M. मथनकाले बलेनोत्पन्नोऽतो बलाय धार्यत इत्यर्थः Sy.

२५. यदेतत्प्रसिद्धं लोकोपकारि, अग्नेस्तेजः Sy.

२६. प्रतिप्रतिगः P.D. मतिर्मदीया बुद्धिः ... उपगच्छति। उपगम्य वर्तते वा Sy.

२७. तेनैव तेजसा साधयति Sy.

स्तोताऽभिलषितम्[१]। अग्नेः[२]। स्तुतीः[३]। अनयन्त यजमानाः[४]। समानं गच्छन्त्यः[५]।

**पृक्षो वपुः पितुमान्नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु ।**
**तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ॥२॥**

पृक्षो[६] वपुः[७]। अन्नस्य[८]। आवपनस्थानं[९] भूमिम्। अन्नवानग्निः[१०]। अनवरतम्[११]। आशेते[१२]। अथ द्वितीयम्। अन्तरिक्षे। सप्तनदीके[१३], माताऽन्तरिक्षं तस्य[१४] शिवाः सप्त नद्यः सन्ति। तृतीयम्। अस्याग्ने[१५] रूपम्। आदित्यस्य। दोहाय[१६] निहितं तमिमम्। दश प्रमतयो[१७] मातरो यस्य तम्[१८]। दिशः[१९]। अजनयन्त[२०][२१]।

---

१. स्वाभीष्टम् Sy.

२. यज्ञसाधकस्याग्नेस्तेजसा Sy.

३. सर्वप्राणिनां वाचः।...धेनेति वाङ्नाम। 'धेना ग्नाः' (Ngh. 1. 11.) इति तन्नामसु पाठात् Sy.

४. ०षितम ... यन्त D. षितमसाधरेण यन्त P. नयन्ति। निर्वहन्ति जगद्व्यवहारम्। व्यत्ययेनात्मनेपदम्। यद्वा। ऋतस्य धेना यज्ञस्य सम्बन्धिन्यो मन्त्ररूपा वाचः सस्तुतो होत्रादिमुखेन सहैव प्रवर्तमाना अनयन्त नयन्ति, अग्नेः स्तोत्रं निर्वहन्ति। अग्नेस्तेजसा वा यज्ञं निर्वहन्ति। 'तेजोमयी वाक्' (Ch. U. 6.5.4.) इति श्रुतेः। अतः कारणात् मतिरुपह्वरत इत्यर्थः Sy.

५. समानं गच्छन्त्यः। सहैव प्रवर्तमानाः Sy.

६. वृ० P. D.

७. वबुः P.

८. प्रथमग्निः पृक्षोऽन्नसाधकः पाकादिना Sy.

९. आपवन० D. वपुष्मान्छरीराभिवृद्धिहेतुः Sy.

१०. हविर्लक्षणान्नयुक्तः Sy.

११. ०रतः M. शाश्वतः Sy.

१२. ईदृशः सन्प्रथमं पृथिवीस्थानः सन्... आशेते। दाहपाकादिलौकिकं कर्म यज्ञादि वैदिकं कर्म च निर्वर्तयन्भ्रुवो भूमौ वर्तत इत्यर्थः Sy.

१३. सप्तलोकशिवकरीषु मातृस्थानीयासु हितकरीषु वृष्टिषु द्वितीयमाशेते। मध्यमस्थानो विद्युद्रूपो वा वर्तते Sy.

१४. D. adds माता before तस्य।

१५. अस्य वृषभस्य वर्षितुरस्यैव वैद्युताग्नेः सहायत्वेन सम्बन्धिने Sy.

१६. दोग्ध्रे आदित्यस्योदकस्य वर्षयित्रे आदित्यरश्मये ... तत्प्रवृत्तये तृतीयमाशेते। द्युस्थानो वर्तते। यद्वाऽस्य वृषभस्य वर्षितुः प्रसिद्धस्यादित्यस्य सम्बन्धिने दोग्ध्रे रश्मये तत्प्रवृत्त्यर्थम्। आदित्यरश्मयो घर्मकाले भूमिस्थमुदकमाहृत्य सूर्यं प्रापय्य तत्र चिरकालं धृत्वा पुनरन्तरिक्षं प्राप्य मेघेषु स्थित्वा वर्षकाले प्रवर्षन्तीति प्रसिद्धम्। अतो रश्मेर्दोग्धृत्वम् Sy.

१७. ०मित० M.

१८. कीदृशं तम्।... दशसु दिक्षु प्रकृष्टमननवन्तं पूज्यत्वाय। यद्वा मथनकाले दशभिरङ्गुलीभिरुत्पन्नं लोकत्रये दश दिक्षु च व्याप्तमित्यर्थः Sy.

१९. ईदृशं त्रिस्थानमग्निं महाभागं योषणो मिश्रणशीलाः सर्वा दिशः Sy.

२०. उत्पादयन्ति। सर्वासु दिक्षु प्रसृत इत्यर्थः Sy.

२१. VM. ignores आ।

निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरयः।
यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥३॥

निर्यदीम्[1]। महतः[2]। तेजस[3] आच्छादयितुः[4]। बुध्नात्[5] स्वर्गात्[6]। यदा[7]। एनम्[8]। देवाः[9]। प्रज्ञाबलेन[10] तिष्ठन्तः। पृथिव्यामकुर्वन्[11]। यदा वा। एनम्[12]। तदनु[13]। पुराणः[14]। मातरिश्वा[15]। मधुन[16] उदकस्य। आधवे[17], अन्तरिक्षे। गुहायाम्[18]। सन्तम्[19]। बलादाहृतवान्[20]।[21]

प्र यत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति।
उभा यदस्य जनुषं यदिन्वत आदिद्यविष्ठो अभवद्घृणा शुचिः ॥४॥

प्र यत् पितुः[22]। यदायमग्निः। उत्तमात्[23]। स्वर्गात्। परि[24] देवैर्मातरिश्वना च पृथिव्याम्। प्रणीयते[25]

---

१. ०र्यती० D.
२. महिषस्य, महन्नामैतत् । 'महिषोऽभ्व ऋभुक्षाः' (Ngh. 3.3.) इति तन्नामसु पाठात् । महतो यज्ञस्य Sy.
३. ०सा M.
वर्पसः । रूपनामैतत् । रूपस्योपक्रमोपसंहारात्मकस्य सिद्धये Sy.
४. महस्तेज...यितु D.
महस्तेजसाच्छा० P.
५. बुध्नन् P.
मूलादाधानादारभ्य Sy.
६. स्वगाद् P.
७. यस्मात्कारणात् Sy.
८. यनेम् P. ईम्, एनमग्निम् Sy.
९. ईशानासः स्वकीयव्यापारसमर्थाः सूरयो मेधाविन ऋत्विजः Sy.
१०. बलेन मन्त्रादिरूपेण शारीरेण वा Sy.
११. निष्कुर्वन्ति साधयन्ति, उत्पादयन्ति काष्ठात् । यद्वा । एनमग्निं बुध्नादादितो मथनादारभ्य महिषस्य वर्पसो महतो रूपस्याहुतिस्वीकारसमर्थस्य सिद्धये निष्कुर्वन्ति Sy.
१२. एनमेवाग्निम् Sy.
१३. अनुक्रमेण Sy.
१४. पुराणात् । अनादिकालमारभ्य न केवलमिदानीमेवेत्यर्थः Sy.
१५. अन्तरिक्षे चेष्टमानो वायुः Sy.
१६. पूर्ववदिदानीम्...मधुनो मधुसदृशस्य Sy.
१७. आधवने प्रक्षेपे निमित्ते सति Sy.
१८. गुहायां वेद्यां काष्ठेषु Sy.
१९. निगूढं सन्तम् Sy.
२०. मथायति चालयति । उद्बोधयतीत्यर्थः । यद्वा मातरि, फलस्य मातरि यागे श्वसिति चेष्टत इति मातरिश्वा यजमानो गुहा सन्तमरण्योर्निगूढं सन्तं प्रादुर्भावायानुक्रमेण मथायति मथ्नाति । उत्पादयतीत्यर्थः । यस्मादेवंरूपस्तस्मात् स्तोतव्य इत्यर्थः Sy.
२१. VM. ignores निः। सूरयः
२२. यस्मात् पितुः—अन्नस्य पशुलक्षणस्य । षष्ठीस्थाने प्रथमा । तस्य Sy.
२३. परमत्वाद्धेतोः । उत्कृष्टत्वायेत्यर्थः Sy.
२४. परि, अनर्थकः Sy.
२५. तदयं प्र परि नीयते प्रकर्षेण परितो नीयते । पर्यग्निक्रियत इत्यर्थः । यद्वा । पितुस्त्पादकात्परमादुत्कृष्टाद् गार्हपत्यलक्षणस्याग्नेः सकाशादाहवनीयं प्रति प्र परि नीयते प्रकर्षेण नीयते Sy.

तदानीम्। अयमन्नेषु निधीयमानः[1]। वीरुधः। दन्तेषु[2]। आरोहयति[3]। द्यावापृथिवी[4]। यदा[5]। अस्य[6]। जन्म[7]। व्याप्नुवन्तः[8]। अनन्तरम्[9]। एव। अयं युवतमः। दीप्त्या[10]। शोचयिता[11]। भवति[12][13]।

**आदिन्मातृराविंशद्यास्वा शुचिरहिंस्यमान उर्विया वि वावृधे ।**
**अनु यत्पूर्वा अरुहत्सनाजुवो नि नव्यसीष्ववरासु धावते ॥५॥**

आदिन्मातृः। अनन्तरम्[14]। एव। ओषधीः[15]। अयमाविशत्[16]। यासु[17] पूर्वं दाहादाविवेश तासु च। अहिंस्यमानः[18]। उरुत्वेन[19]। विविधम्। वर्धते[20]। यदा चायम्। पूर्वाः[21]। दीर्घकालयोगिनी[22]-स्थिरप्ररूढाः[23]। अन्वारुहत्[24]। अथासु जीर्णासु। नवतरासु। अवरकालजातासु[25]। निधावते[26] नवतर[27]-मोषधीषु वर्तत इति[28]।

---

१. पशुपुरोडाशादिषु दाहमध्ये धीयमानाः। यद्वा। ... अशोष्याः प्रकर्षेण बुभुक्षिता भोक्तुमिष्यमाणाः Sy.
२. वनेषु मध्ये Sy.
३. आ... D. वनेष्वचा P. आरोहन्ति प्रविशन्तीत्यर्थः Sy.
४. उभावध्वर्युयजमानावुभे अरणी वा Sy.
५. यस्मात् Sy.　　६. अग्नेः Sy.
७. जन्म, उत्पत्तिम् Sy.
८. व्याप्नुतः स्वीकुरुत इत्यर्थः Sy. व्याप्नुतः is suggested for व्याप्नुवन्तः
९. अत एव कारणात् Sy.
१०. यजमानेष्वनुग्रहेण। यद्वा। घृणा घृणो दीप्तिमान्। मत्वर्थो लुप्यते। दीप्त्या वा Sy.
११. शो० P. शुद्धोऽयमग्निः Sy.
१२. सम्पन्नः। स्वीकारसमर्थोऽभवदित्यर्थः Sy.
१३. VM. ignores यत्
१४. अयमग्निराशुचिर्दीप्तः सन् ... पूर्वमन्त्रे यविष्ठोऽभवदित्युक्तत्वात्तदनन्तरमेव Sy.
१५. उत्पादयित्रीर्मातृस्थानीया दश दिशः Sy.
१६. ०विशन् P. सर्वतः प्रविशति। ... दिक्षु प्रकाशेन व्याप्त इत्यर्थः Sy.
१७. मातरो विशेष्यन्ते। यासु मातृषु Sy.
१८. परैरपीड्यमानः Sy.
१९. ०त्वन D. उरु, अतिप्रभूतम् Sy.
२०. विविधं प्रवृद्धोऽभवत्तास्वाविशत्। यथा लोके कश्चित्तेजस्वी जनन्याः स्तनपान-परिपीडादिभिः सम्यक्पोषितो लोके प्रकाश्य पुनरागत्य मातरमालिङ्गति तद्वदिति भावः Sy.
२१. प्रथमभाविनीरोषधीः Sy.
२२. दीर्घकालवियोगिन्यः स्थापनकाल एव प्रक्षिप्ताः Sy.
२३. ०लयोरग्निरीश्वरप्र० P.
२४. अनुक्रमेण ... आरोहति। ... उपरि प्रज्वलति Sy.
२५. अपर० D. अवरजाका० P. अत एव पूर्वापेक्षया निकृष्टासु पश्चाद्भाविनी-ष्वोषधीषु Sy.
२६. न धा० P. नितरां नीचैर्वा गच्छति। अन्तः प्रविशतीत्यर्थः। यदा काष्ठानामधस्तादु-परिष्टाच्च प्रविश्य ज्वलति तदा दिक्षु प्रकाशितोऽभवदित्यर्थः Sy.
२७. नवकर० M.
२८. VM. ignores आ। शुचिः

आदिद्धोतारं वृणते दिविष्टिषु भगमिव पपृचानास ऋञ्जते ।
देवान्यत्क्रत्वा मज्मना पुरुष्टुतो मर्तं शंसं विश्वधा वेति धायसे ॥६॥

आविद्धोतारम्। अनन्तरम्। एव। अग्निम्[1]। वृणुते[2]। अह्नामागमनेषु[3]। भाग्यमिवामुम्[4][5]। सम्पृञ्चन्तः[6]। प्रसाधयन्ति[7]। यस्मादयम्। हविर्भाजो देवान्[8]। कर्मणा[9]। बलेन[10] च। बहुभिः स्तुतः[11]। मर्तं[12] च। स्तुवन्तम्[13]। बहुधा[14]। अभिगच्छति[15]। धारणाय[16]।

वि यदस्थाद्यजतो वातचोदितो ह्वारो न वक्वा जरणा अनाकृतः ।
तस्य पत्मन्दक्षुषः कृष्णजंहसः शुचिजन्मनो रज आ व्यध्वनः ॥७॥

वि यदस्थात्। व्यस्थात्[17]। यदा। यजनीयः[18]। वातप्रेरितः[19]। कुटिलः[20]। इव। स्तेनः[21]। जीर्णा[22] ओषधीः। अपराङ्मुखः[23]। तस्य[24]। दहतः। कृष्णमार्गस्य[25]। शुद्धजन्मनः[26]। विविधमार्गस्य[27]। मार्गे[28]। दग्धानामोषधीनां रज एव[29]। अवतिष्ठति[30] सर्वं भस्मीभवति।

---

१. होतारं होमनिष्पादकमाह्वातारं वा देवानामीदृशमग्निम् Sy.
२. सम्भजते Sy. वृणते is in the pl. but is paraphrased by VM. in the sing. ऋञ्जते on the other hand is in the sing. and is explained in the pl.
३. दिवसंयणेषु निमित्तभूतेषु Sy.
४. किमिव। भगमिव। तं यथा जनाः प्रसाधयन्ति तद्वत्। यद्वा। महान्तं राजानमिव सूर्यदीप्तिवत्पूज्यमित्यर्थः Sy.
५. ० वमुं P. ६. ० वृच० P.D. हविषा स्तुत्या च सम्पृचाना ऋत्विजो यजमानाः Sy. ७. 'ऋञ्जतिः प्रसाधनकर्मा' (N. 6.21.) इति यास्कः Sy.
८. व्यवहर्तॄनृत्विजो यज्ञभुजो देवान्वा कत्वा मज्मना च योजयितुम् Sy ९. ० मंमम M. क्रतुना कर्मणा यागादिरूपेण Sy.
१०. शारीरेण बलेन च युक्तान् Sy.
११. बहुभिर्बहुधा वा स्तूयमानः Sy.
१२. मत्तं M. यजमानम् Sy.
१३. शंसं स्तुतिं च स्तुत्यं वा तम् Sy.
१४. विश्वधनो यद्वा विश्वात्मकोऽयम् Sy.
१५. वेति पूर्वोक्तान्कामयते Sy.
१६. हविर्लक्षणान्नाय। तस्माद्धोतारमग्निं वृणत ऋञ्जते च Sy. १७. वितिष्ठते सर्वतो व्याप्तो भवति Sy. १८. सर्वैर्यष्टव्यः। यष्टुं योग्यः सन् Sy. १९. वायुना प्रेरितः Sy. २०. तत्र दृष्टान्तः।... विद्रूपकादिरिव Sy. २१. बहुवक्ता Sy.
२२. स यथा जरणाः स्तुतीर्वितिष्ठते विविधं कुर्वन्वर्तते Sy. २३. अनिवारितोऽप्रतिहतप्रसरः...तद्वदयमप्यनाकृतोऽप्रतिबद्धप्रसरो व्यवस्थितः Sy. २४. अग्नेः Sy.
२५. पुनः पुनर्गम्यत इति जंहा मार्गः Sy.
२६. मन्त्रसहितारण्योरुत्पन्नत्वात् Sy.
२७. द्विवि० M. ०मार्गस्य मार्गस्य P. D. विविधज्वालस्यानियतमार्गस्य Sy.
२८. पतने मार्गे यज्ञरूपे Sy.
२९. रञ्जनात्मको लोकः Sy.
३०. आतिष्ठति। सर्वत आभयत्यग्नौ बहुधा यजतीत्यर्थः Sy. There is no verb in the second hemistich of the Vedic stanza. अवतिष्ठति seems to be the explanation of the preposition आ, used in the original. As स्था with अव is in the *ātmanepada*, आतिष्ठति or अवतिष्ठते is suggested for अवतिष्ठति।

रथो न यातः शिक्वभिः कृतो द्यामङ्गेभिररुषेभिरीयते ।
आदस्य ते कृष्णासो दक्षि सूरयः शूरस्येव त्वेषथादीषते वयः ॥८॥

रथो न । शक्तैः[१] । कृतः[२] । दृढाङ्गो रथः[३] । इव । कृतः[४] । द्याम्[५] । अङ्गैरात्मीयैः[६] । आरोचमानैः[७] । गच्छति[८] । अनन्तरम्[९] । अस्य[१०] । ते । कृष्णाः[११] । सरणमार्गाः[१२] । दह्यन्ते[१३] । शूरस्येवाग्नेः[१४] । दीप्तान्[१५]मार्गाद्[१६] भीताः । पलायन्ते[१७] । पक्षिणः[१८] ।[१९]

त्वया ह्यग्ने वरुणो धृतव्रतो मित्रः शाशद्रे अर्यमा सुदानवः ।
यत्सीमनु क्रतुना विश्वथा विभुररान्न नेमिः परिभूरजायथाः ॥९॥

त्वया ह्यग्ने । त्वया । हि[२०] । अग्ने ! वरुणः[२१] । धृतकर्मा[२२] । मित्रश्च[२३] । तेजसा आच्छादयति[२४] । अर्यमा च[२५] । त्वयैव शोभनदानः[२६] । यस्मात् त्वम्[२७] । सर्वम्[२८] । प्रति[२९] । कर्मणा । सर्वप्रकारम्[३०] ।

---

१. अयमग्निः....रज्जुभिः Sy. २. बद्धः Sy.
३. स यथा स्वीयैश्चक्रादिभिरङ्गैरीयते तद्वत् Sy. ४. यातः स्थापितः सन् Sy.
५. अन्तरिक्षम् Sy. ६. अर्थे॰ P.D. ज्वाला विस्फुरत्रवयवैः Sy. ७. गमनशीलैः Sy.
८. आज्येन हृष्टः सन् . . . गच्छति Sy.
९. प्रवृद्धयनन्तरम् Sy. १०. अग्नेः Sy.
११. कृष्णवर्णा भवन्ति Sy.
१२. सरणयो मार्गाः Sy.
१३. यत एवं भवन्ति तदर्थं दक्षि दहति काष्ठान्। पुरुषव्यत्ययः Sy. दह्यन्ते as an explanation of दक्षि is obviously incorrect. Padapātha reads धक्षि for दक्षि। धक्षि is of course 2nd per. sing. sub. of √ दह् 'to burn' and should mean 'do thou burn.'
१४. ॰स्यै॰ M. तत्र दृष्टान्तः। . . .कस्यचिद् विक्रान्तस्य दीप्तात्तेजसः सकाशाद् भीत्या पलायमाना इव Sy.
१५. ज्वलितस्याग्नेः . . . दीप्तात्तेजसः सकाशात् Sy. १६. ॰र्गात् M.
१७. ईषते गच्छन्ति Sy.
१८. गमनवन्तः पक्षिमृगादयः Sy.
१९. एवमन्तरिक्षं स्पृशन्सर्वतो दहतीति सर्वदा दावाग्निरूपेण स्तूयते Sy.
२०. खलु . . . हिशब्दो मन्त्रान्तरप्रसिद्धिद्योतनार्थः। 'त्वमग्ने वरुणो जायसे' (RV. V.3.1ᵃ.) इति हि मन्त्रान्तरम् Sy.
२१. हि। अग्ने! वरुणः। is missing in M. रात्र्यभिमानी देवः Sy.
२२. स्वीकृतवर्षणादिकर्मा भवति Sy.
२३. तथा मित्रोऽहरभिमानी देवः Sy.
२४. शातयति तमः Sy.
२५. उभयोर्मध्यवर्ती देवः Sy.
२६. शोभनदानो भवति। व्यत्ययेन बहुवचनम्। यद्वा। एते वरुणादयः सुदानवः शोभनदानाः स्वस्वकार्यकर्तारस्त्वया हि शाशद्रे तीक्ष्णीक्रियन्ते Sy.
२७. वरुणादीनामग्न्यायत्तत्व उपपत्तिमाह। . . .यस्मात्कारणात् Sy.
२८. सर्वतः Sy. २९. प्र . . . प्र॰ M.
३०. विडव इव विश्वात्मक इव Sy.

विभवसि[1] वरुणादीनधितिष्ठसि ततस्त्वम्। अरान्[2]। इव। नेमिः[3]। परिभूः[4]। अभवो[5] देवान्।

**त्वमग्ने शशमानाय सुन्वते रत्नं यविष्ठ देवतातिमिन्वसि ।**
**तं त्वा नु नव्यं सहसो युवन्वयं भगं न कारे महिरत्न धीमहि ॥१०॥**

त्वमग्ने। त्वम्। अग्ने[6]! भजते[7]। सुन्वते[8] न। धनम्[9]। युवतम! देवैस्ततम्[10]। प्रेरयसि[11]। तम्[12]। त्वाम्। क्षिप्रम्[13]। स्तुत्यम्[14]। वयम्[15]। सहसः[16]। पुत्र[17]! भगम्[18]। इव। स्तोत्रलक्षणे शब्दे कार्ये[19] वा। महाधन[20]! निधीमहि[21]।

**अस्मे रयिं न स्वर्थं दमूनसं भगं दक्षं न पपृचासि धर्णसिम् ।**
**रश्मींरिव यो यमति जन्मनी उभे देवानां शंसमृत आ च सुक्रतुः ॥११॥**

अस्मे रयिम्। अस्मासु। धनम्। इव[22]। सुप्रयोजनम्[23]। दममनसम्[24]। भाग्यम्[25]। बलम्[26]।

---

१. विभुमित्रार्यमात्मना सर्वव्यापी Sy
२. तत्र दृष्टान्तः। अरान् रथस्य शङ्कून् Sy.
३. बाह्यावलय इव। स यथा व्याप्य तिष्ठति तद्वदयमग्निर्वरुणादीन्व्याप्य तिष्ठति Sy.
४. स्वतेजसा सर्वतः परिभविता सन् Sy.
५. अनुक्रमेण ... जायसे। प्रादुर्भवसि Sy.
६. त्वम्। अग्ने! omitted by M.
७. त्वां स्तुवते Sy. शशमानः शंसमानः N.6.8.
८. स्वदर्थमभिषवं कुर्वते यजमानाय Sy.
९. तद्यागार्थं रत्नं रमणीयं हविः Sy.
१०. युवमेवैस्त० P. देवेषु तायमानं विस्तार्यमाणम् Sy.
११. व्याप्नोषि। अस्मत्प्रत्तं हविर्देवान्प्रापयसीत्यर्थः। इन्वतिर्व्याप्तिकर्मा। 'इन्वति ननक्ष' (Ngh. 2.18.) इति तन्नामसु पाठात् Sy.
१२. तादृशं हविर्भुजम् Sy.
१३. ०प्र P. D.
१४. ०त्य P.
नवतरं स्तुत्यं वा Sy.
१५. वायं P.
यजमानाः Sy.
१६. युवशब्देनोत्पत्तिर्लक्ष्यते। मथनकाले बलेनोत्पन्न बलस्य मिश्रयितर्वा। यद्वा। सहस्पुत्र Sy.
१७. सहसः। पुत्र! missing in M.
युवन्! नित्यतरुण! Sy.
१८. तत्र दृष्टान्तः। ... आदित्यमिव। यद्वा। महान्तं राजानमिव तं यथा स्तुवन्ति तद्वत् Sy.
१९. कारे शब्दे स्तोत्रलक्षणे Sy.
२०. महधन P. ०नं M. अस्मत्प्रदेयमहद्रमणीयधन! Sy.
२१. स्थापयामः। हविष्प्रदानसमये क्षिप्रमेव स्तुम इत्यर्थः Sy.
२२. यथा Sy.
२३. सुष्ठु अरणीयम् Sy.
२४. ०सं सं M.
दमनीयम्। उपार्ज्यम् Sy.
२५. सर्वैर्भजनीयम् Sy.
२६. उत्साहवन्तं प्रबुद्धं वा Sy.

इव। सम्पृणक्षि[1]। आरकम्[2]। यो[3] भागः सारथिरिवाश्वप्रग्रहार्थान् रश्मीन्[4]। अस्माकमिदं[5] अन्नं पारलौकिकं च। सर्वम्। नियच्छति[6]। देवानाम्[7]। स्तोत्रम्[8]। च। अनुयच्छति[9]। यज्ञे[10]। सुकर्मा[11]।

उत नः सुद्योत्मा जीराश्वो होता मन्द्रः शृणवच्चन्द्ररथः।
स नो नेषन्नेषतमैरमूरोऽग्निर्वामं सुवितं वस्यो अच्छ ॥१२॥

उत नः। अपि[12] च। अस्मान्[13]। सुदीप्तिः[14]। क्षिप्राश्वः[15]। ह्वाता[16]। मदयिता[17]। शृणोतु[18]। आह्लादकः[19]। सः[20]। अस्मान्। नयतु[21]। नेतृतमैः[22]। अमूढः[23]। अग्निः[24]। धनम्[25]। सुष्ठु प्राप्यम्[26]। श्रेष्ठम्। प्रति[27]।

अस्ताव्यग्निः शिमीवद्भिरर्कैः साम्राज्याय प्रतरं दधानः।
अमी च ये मघवानो वयं च मिहं न सूरो अति निष्टतन्युः ॥१३॥

अस्तावि[28]। स्तुतः[29]। अग्निः। कर्मवद्भिरस्माभिः[30][31]। मन्त्रैः[32]। साम्राज्यार्थं[33] धनानि।

---

१. ०वृण० P. D. २. ०रकं D. विद्यादिधारणकुशलं पुत्रं यथा . . . सम्पृणक्षि। उभयमपि ददासीत्यर्थः Sy.

३. इदानीं परोक्षेणाह। योऽग्निः Sy. अग्निः is suggested for भागः

४. अश्वीन् M. स्वकीयान् रश्मीन्यथा यमति नियमयति विस्तारयति तद्वत्तः Sy.

५. Omitted by P. जननाधारभूतावुभौ लोकाविहलोकपरलोकौ Sy.

६. यमति नियच्छति Sy.

७. देवसम्बन्धिनम् Sy. ८. स्तवम् Sy.

९. अनु omitted by P. आयच्छति। सर्वदा ददाति। यद्वा पूर्वार्धे पपृक्षासीत्यपि परोक्षत्वाय प्रथमपुरुषतया योज्यम् Sy.

१०. अस्मदीययज्ञे Sy.

११. शोभनकर्माऽयम् Sy. १२. उतशब्दोऽप्यर्थः। स च सम्भावनायाम् Sy.

१३. अस्मदीयमाह्वानम् Sy.

१४. ०प्ति P.D. कीदृशोऽयम्। . . . सुद्योतमानः Sy. १५. शीघ्रगमनाश्वः Sy.

१६. देवानामाह्वाता Sy. १७. मा० M. मदनशीलः Sy. १८. अपि नाम शृणुयात्। यद्वा। नोऽस्माञ् श्रावयेद् देवेषु मध्ये प्रख्यापयेत् Sy. १९. सुवर्णमयरथोपेतः Sy. २०. स प्रसिद्धोऽग्निः Sy.

२१. अपि नाम नयेत्। यज्ञस्य पारं प्रापयेत् Sy.

२२. अत्यर्थं नेतृभिः कर्मभिः स्तोत्रैर्वा Sy.

२३. अमूढबलः Sy. २४. वस्यो वसनीयः Sy. २५. किमर्थम्। वामं वननीयम् Sy.

२६. प्रोल्यं P. प्राल्यं D. ०प्य M. सुष्ठु प्राप्यं सर्वैः काङ्क्षणीयं स्वर्गम् Sy.

२७. भवति M. आभिमुख्येन प्राप्तुम् Sy.

२८. M. adds अग्निः after अस्तावि।

२९. स्तुतोऽस्माभिर्यजमानैः Sy.

३०. हविष्प्रदानादिकर्मवद्भिः। शिमीति कर्मनाम। 'शिमी शक्तिः' (Ngh. 2.1.) इति तन्नामसु पाठात् Sy.

३१. ०र्मभिरस्माभिः P.

३२. अर्चनसाधनैर्मन्त्रैः Sy.

३३. ०र्थं M. कीदृशोऽयम्। साम्राज्याय साम्राज्यस्येति कर्मणि षष्ठीस्थाने चतुर्थी। सम्यग् राजमानत्वम् Sy.

अत्यन्तम्[1]। प्रयच्छन्[2]। अमी[3]। धनवन्तः[4]। ये ते। च। वयम्[5]। च तत्र स्तोत्राणि। यथा। सूर्यः[6]। अत्यन्तम्[7]। वृष्टिं[8] विस्तारयति। एवं निस्ततवन्तः[9][10]।

I.142.

समिद्धो अग्न आ वह देवाँ अद्य यतस्रुचे ।
तन्तुं तनुष्व पूर्व्यं सुतसोमाय दाशुषे ॥१॥

समिद्धः। समिद्धः[11]। अग्ने! आवह[12]। देवान्[13]। यजमानाय[14]। पूर्वः सम्बद्धम्[15]। अपत्यम्[16]। कुरु[17]। सुतसोमाय[18]। यजमानाय[19][20]।

घृतवन्तमुप मासि मधुमन्तं तनूनपात् ।
यज्ञं विप्रस्य मावतः शशमानस्य दाशुषः ॥२॥

घृतवन्तम्। घृतवन्तम्[21]। समीपे[22]। करोषि। सोमवन्तं[23] च। अग्ने[24]! यज्ञम्।

---

१. अ(त्य)न्तं M. प्रकृष्टतरमत्यर्थम् Sy.
२. ददानः Sy.    ३. प्रयच्छामि M. इममग्निम्, अमी च पुरो वर्तमानाः Sy.
४. ऋत्विजः पुत्रादयो वा Sy.
५. पूर्वं स्तोतृत्वेन प्रसिद्धा वयमपि Sy.
६. तत्र दृष्टान्तः । ... मिहं मेहनशीलं मेघं यथा सूरः सूर्यः Sy.    ७. अत्यर्थम् Sy.
८. वृष्ट्यर्थं शब्दयति तद्वत् Sy.
९. ०स्ततत्तव० P. D. शब्दयन्तु । निष्टुर्वः स्तनतिः शब्दकर्मा । इतः परमप्यस्मत्पुत्रपौत्रादयो वयं चाग्निं स्तुम इत्यर्थः Sy.
१०. Ms. D. puts the figure ॥१४१॥ here to indicate the end of one hundred and fortyfirst hymn. No such number is given in P. and M.
११. सम्यग्दीपित एतन्नामकस्त्वम् Sy.
१२. अद्यास्मिन्यागदिने ... अस्मद्यज्ञं प्रति प्रापय Sy.
१३. हविषां भोक्तॄनग्न्यादीन् Sy.
१४. यागायोद्यतस्रुचे यजमानाय तदर्थम् Sy.
१५. संबन्धम् M.    पूर्वेभ्यो देवेभ्यो हितं पूर्वकालीनं वा Sy.    १६. यज्ञम् Sy.
१७. विस्तारय Sy.    १८. आवाह्य च सुतसोमाय यागार्थमभिषुतसोमाय Sy.
१९. दाशुषे हविर्दत्तवते । यद्यपीदानीमेवाहूयन्ते देवास्तथापि पूर्वानुष्ठानापेक्षया भाव्यपेक्षया वा दाशुष इत्युच्यते । हविर्दात्रे वा यजमानाय तदर्थम् Sy.
२०. VM. ignores अद्य। A fragment समिद्धो अग्न आ वह is quoted by Skandasvāmin in his commentary on N. 8.22; P. III. 142.
२१. Omitted by P. क्षरदाज्योपेतम् Sy.
२२. उप उपेत्य मासि निर्मिमीषे। मितो भवसि वा। सम्पूर्तिपर्यन्तं तिष्ठसीत्यर्थः Sy.
२३. माधुर्योपेतं सोमादिमधुरद्रव्येण तद्वन्तम् Sy.
२४. 'तनूनपादाख्यम्' इति कात्थक्यपक्षे तन्वो गावो भोगानां तासु जायमानत्वात् । ताभ्य उत्पन्नं क्षीरं क्षीरात्सर्पिरित्याज्यस्य नप्तृत्वम् । तद्वान्यजः । अग्निपक्ष आपस्तन्व उच्यन्ते । ताभ्य ओषधिवनस्पतयः । तेभ्योऽग्निरिति नप्तृत्वम् । अरणीभ्यामिति भावः । एतन्नामक हे अग्ने ! Sy.

मेधाविनः। मत्सदृशस्य।[1] यजमानस्य।[2] प्रयच्छतः।[3]

**शुचिः पावको अद्भुतो मध्वा यज्ञं मिमिक्षति ।**
**नराशंसस्त्रिरा दिवो देवो देवेषु यज्ञियः ॥३॥**

शुचिः पावकः। शुचिः।[4] पावकः।[5] महान्।[6] आज्येन।[7] यज्ञम्।[8] सिञ्चति।[9] स नराशंसः।[10] स्वर्गाद्वह्नः।[11] त्रिः।[12] आगच्छतु।[13] देवः।[14] देवमध्ये।[15] यज्ञार्हः।[16]

**ईळितो अग्न आ वहेन्द्रं चित्रमिह प्रियम् ।**
**इयं हि त्वा मतिर्ममाच्छा सुजिह्व वच्यते ॥४॥**

ईळितः। स्तुतस्त्वम्।[17] अग्ने! आवह।[18] अस्मिन्कर्मणि।[19] पूज्यम्।[20] प्रियम्।[21] इन्द्रम्। इयम्। हि।[22] मम। स्तुतिः।[23] सुजिह्व![24] त्वाम्।[25] अच्छ।[26] उच्यते।[27][28]

---

१. मत्सदृशस्य यजमानस्य Sy.
२. शंसमानस्य त्वां स्तुवतः Sy.
३. हविर्दत्तवतः Sy.
४. शुद्धो दीप्तो वा Sy.
५. अन्नस्यापूतस्य शोधयिता Sy.
६. अभूत इवाश्चर्यभूत इवावक्षणे भविता । आश्चर्यभूत इत्यर्थः Sy.
७. मध्वा मधुरेण रसेन Sy.
८. यज्ञमस्मदीयम् Sy.
९. समन्तात् सिञ्चति स्वदयतीत्यर्थः । यद्वा मधुरेण फलेन त्रिराभिमिक्षति योजयतीत्यर्थः Sy.
१०. ०स P.D. नरोशसे M. नरैः कर्मनेतृभिर्ऋत्विग्भिः शंसनीयोऽग्निः । ... 'नराशंसो यज्ञः' इति कात्थक्यपक्षे यज्ञाभिमानी देवो द्योतमानो द्युलोकादागत्यानुष्ठीयमानं यज्ञं त्रिराभिमिक्षति । अयं नराशंसो देवः Sy.
११. ०वहः M. द्युलोकादागत्य Sy.
१२. त्रिरा, उपसर्गवशाद्योग्यक्रियाध्याहारः । त्रिवारम् Sy.
१३. आगच्छति । त्रिराहरति वा फलम् । अवशिष्टं पूर्ववन्नेयम् Sy.
१४. द्योतनशीलः Sy.
१५. देवेषु मध्ये Sy.
१६. यज्ञसम्पादनार्हं ईदृशः Sy.
१७. सर्वैः स्तुत्य इध्मनामकस्त्वम् Sy.
१८. आहूय Sy.
१९. अस्मिन्यज्ञे Sy.
२०. चायनीयम् Sy.
२१. प्रीणयितारमस्मान् हविः स्वीकर्तुं वा प्रीतियुक्तम् Sy.
२२. हिः पूरणार्थः Sy.
२३. मननसाधना स्तुतिरूपा वाक् Sy.
२४. घृतपानेन शोभनज्वाल ! Sy.
२५. ताम् M. मा P.
२६. आभिमुख्येन प्राप्तुम् Sy.
२७. मतिरेवास्मदीयोच्यते Sy.
२८. अत्र पुरोडाशादीडभिमानियज्ञपरतया वा व्याख्येयम् । एवमुत्तरत्र यज्ञाङ्गैर्यज्ञसम्बन्धिदेवताभिश्च यज्ञ एवोच्यत इति तत्परत्वेन व्याख्येयम् Sy.

स्तृणानासो यतस्रुचो बर्हिर्यज्ञे स्वध्वरे ।
वृञ्जे देवव्यचस्तममिन्द्राय शर्म सप्रथः ॥५॥

स्तृणानासः । स्तृणन्तः[1] । ऋत्विजः[2] । बर्हिः[3] । यज्ञे[4] । सुष्ठ्वध्वरे[5] हूयमाने । छिनद्मि[6] । देवैर्व्याप्तम्[7] । इन्द्राय च । आवासस्थानम्[8] । सर्वतः[9] पृथुतमं बर्हिः[10] ।

वि श्रयन्तामृतावृधः प्रयै देवेभ्यो महीः ।
पावकासः पुरुस्पृहो द्वारो देवीरसश्चतः ॥६॥

वि श्रयन्ताम् । विवृतद्वारा भवन्तु[11] । यज्ञस्य वर्धयित्र्यः[12] । देवेभ्यः[13] । प्रयातुम्[14] । महीः[15] । शोधयित्र्यः । बहुभिः स्पृहणीयाः[16] । द्वारः[17] । देव्यः[18] । असज्यमानाः[19] ।

आ भन्दमाने उपाके नक्तोषासा सुपेशसा ।
यह्वी ऋतस्य मातरा सीदतां बर्हिरा सुमत् ॥७॥

आ[20] भन्दमाने । स्तूयमाने[21] । परस्परासन्ने[22] । नक्तोषासा[23] । सुरूपे[24] । महत्यौ[25] । यज्ञस्य । निर्मात्र्यौ[26] । सुष्ठु[27] । इदं बर्हिः[28] । आसीदताम्[29] ।

---

१. आस्तरन्तः Sy.
२. नियमितजुह्वादिपात्राः ... Sy.
३. °र्हि P.D. दर्भान् Sy.
४. सोमयागे Sy.
५. °र्हि च P.D.M. शोभनप्रायणीयाद्यवान्तरयागवति Sy.
६. विवर्जयन्ति । सम्पादयन्तीत्यर्थः Sy.
७. अतिशयेन देवगामिनम् Sy.
८. सुखसाधनं गृहम् Sy.
९. सर्वतो विस्तीर्णम् Sy. १०. बर्हि: P.
११. विविधं श्रयन्तु । विवृता भवन्तु Sy.
१२. कीदृश्यस्ताः ? ... यज्ञस्य वर्धयित्र्यः पूज्याः Sy. १३. देवानाम् Sy.
१४. °तु M. प्रापणाय Sy.
१५. महीं M. महत्यः Sy.
१६. °भि स्पृ° D. बहुस्पृहणीयाः Sy.
१७. यज्ञस्य द्वाराभिमानिन्यः Sy.
१८. देवः P.D.M. देवताः Sy.
१९. ...परस्परविप्रकृष्टा इत्यर्थः Sy.
२०. अ D. २१. सर्वैः स्तूयमाने Sy.
२२. परस्परं सन्निहिते Sy.
२३. उक्तगुणविशिष्टे अहोरात्रदेवते Sy.
२४. शोभनरूपे । पेश इति रूपनाम Sy.
२५. ...अपत्यरूपे वा प्रतिदिनं जायमानत्वात् । यह्वरित्यपत्यनाम । 'यह्वः सूनुः' (Ngh. 2.2.) इति तन्नामसु पाठात् Sy.
२६. ताभ्यामागमनाद्यज्ञस्य सम्पूर्तेर्यज्ञमातृत्वमुपचर्यते । यद्वा । अतिरात्रादीनामहोरात्रसाध्यत्वात् Sy.
२७. सुमत् स्वमेव । अस्माभिरप्रार्थिते इत्यर्थः Sy.
२८. यद्वा सुमद् बर्हिः, आस्तृतं दर्भम् Sy.
२९. आ समन्तात् ... उपविशताम् । यद्वा । ऋतस्येति कर्मणि षष्ठी । यज्ञमासीदताम् । आसाद्य च बर्हिरास्तृतं दर्भं स्वयमेवासीदताम् Sy.

मन्द्रजिह्वा जुगुर्वणी होतारा दैव्या कवी ।
यज्ञं नो यक्षतामिमं सिध्रमद्य दिविस्पृशम् ॥८॥

मन्द्रजिह्वा। मादयितृजिह्वौ[1]। सम्भक्तारौ[2] स्तुवताम्[3]। दैव्यौ[4]। होतारौ[5]। कवी[6]। यज्ञम्। अस्माकम्[7]। इमम्। यजताम्[8]। साधकम्[9]। अद्य[10]। द्युलोकस्प्रष्टारम्[11]।

शुचिर्देवेष्वर्पिता होत्रा मरुत्सु भारती ।
इळा सरस्वती मही बर्हिः सीदन्तु यज्ञियाः ॥९॥

शुचिर्देवेषु। शुद्धा। मरुत्सु[12]। देवेषु[13]। अर्पिता तदधिष्ठाना[14]। आदित्यस्य भार्या[15] वाक्। इळा[16]। सरस्वती[17] च। महती[18] तिस्र[19] इमाः। यज्ञार्हाः[20]। बर्हिः[21]। सीदन्तु[22]।[23]

तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मना ।
त्वष्टा पोषाय वि ष्यतु राये नाभा नो अस्मयुः ॥१०॥

तन्नस्तुरीपम्। तत्[24]। नः[25]। तारकं[26] रेतः[27]।

---

१. देवानां मादनज्वालौ Sy.
२. भृशं गृणतां स्तुवतां यजमानानां सम्भक्तारौ Sy. ३. ०ता P.
४. दै० M. देवसम्बन्धिनौ Sy.
५. अयञ्च मध्यमस्थानश्चेत्युभौ Sy.
६. ०वीर P. मेधाविनौ क्रान्तदर्शिनौ Sy.
७. ईदृशं नोऽस्मदीयम् Sy.
८. अनुतिष्ठतां पूजयतां वा सम्यग् निर्वाहयतामित्यर्थः Sy. ९. फलसाधनभूतम् Sy. १०. अन्व D.M. इन्द्र P.
११. ० स्पृ० P. द्युलोकवासिदेवान्स्पृशन्तम्। तैर्हविषः स्वीक्रियमाणत्वादिति भावः Sy.
१२. विरुद्धलक्षणयाऽमरणेषु Sy.
१३. द्योतनशीलेषु स्तोतृषु मरुत्सु, ऋत्विक्षु वा Sy.
१४. नियता। होत्रा होमनिष्पादिका Sy.
१५. भरतस्यादित्यस्य सम्बन्धिनी द्युस्थाना वाक् Sy.
१६. पार्थिवी प्रैषादिरूपा Sy.
१७. सर इत्युदकनाम। तद्वती स्तनितादिरूपा माध्यमिका च वाक् Sy.
१८. महती Sy. १९. एतास्तिस्रस्त्रिस्थानवागभिमानिदेवताः Sy.
२०. यज्ञार्हाः सत्यः Sy.
२१. बर्हिः स्तीर्णम् Sy.
२२. उपविशन्तु Sy. The passage beginning with महती and ending with सीदन्तु is missing in M.
२३. VM. ignores होत्रा
२४. तं प्रसिद्धम् Mah. तत् तादृशम् Sy.
२५. अस्माकम् Mah. अस्मदर्थम् Sy. अस्मभ्यमस्मदर्थम् U. अस्मदर्थम् SKN. II. 464. अस्माकम् Dur.
२६. तन्नस्तुरीपम्। तत्। नः missing in M. तुरा वेगेनाप्नोति तुरीपं शीघ्रप्रापकम् Mah. तूर्णं व्यापि Sy. तूर्णमश्नुते तूर्णं चाप्नोति U. तूर्णापि तूर्णव्यापि SKN. उदकम्। ...एवमत्र माध्यमिकस्त्वष्टेति विष्यत्वित्यनेन सम्बन्धात् तुरीपमुदकमित्युपपद्यते Dur.
२७. रेते P. D.

महत्[1]। बहु[2]। च। पर्याप्तम्[3]। आत्मना च बहु[4]। त्वष्टा[5]। सन्तानपोषायान्त:[6] प्रविष्ट:[7]।
नाभाववस्थित[8] बन्धम्[9]। अस्मत्काम:[10]। अस्माकम्। राये[11]। विमुञ्चतु[12][13]।

---

१. महान्तम् Mah. सच्च आविर्भवदभूतमिव सत्। यद्वा। महन्नामैतत्। सारतो महत् Sy. महत्, अभूतपूर्वम् U. महन्नामेदम्। सारतश्च महद् महत्त्वं तदिहाभिप्रेतं, मा भूत् पौनरुक्त्यं परेणेति तेन सारतो महदित्यर्थ:।. . . महत्सम्भूतमित्यद्भुतशब्दनिर्वचनं द्रष्टव्यमिति SKN. महदित्यर्थ:। 'अद्भुतो बहिष्ठ:' (Ngh. 3.3.) इति तन्नामसु पठितम् Dur.

२. बहुपु P.D. बहूनां प्राणिनामर्थायैव. . . यद्वा पुरु वारं बहु प्रभूतं च। वाशब्दश्चार्थे Sy. वाशब्दश्चार्थे बहु च वृष्ट्युदकं परिमाणत: SKN. बहुवारं च बहु देशान्तरमावृणोत्युदकम् Dur.

३. अलं समर्थम् Sy. पर्याप्तं च सर्वकामेभ्य: SKN.

४. बहु। क्रियाविशेषणमेतत् Sy. पुरु विश्वम्। एतत्क्रियाविशेषणम्। कथम्। विश्वं पुरु सुष्ठु भृशमित्यर्थ: SKN. बहु Dur.

५. त्वष्टा देव: Mah.,U. ईदृशमुदकं त्वष्टा वृष्ट्यादे: कर्ता। . . . तन्नामको वैद्युतोऽग्नि: Sy. त्वष्टा मध्यमस्थान: SKN. त्वष्टा तूर्णमश्नुत इति नैरुक्तास्त्विषेर्वा स्याद् दीप्तिकर्मणस्त्वक्षतेर्वा स्यात्करोतिकर्मण: N. 8. 13.

६. न: पोषायास्मत्पुष्ट्यै Sy. पुष्ट्यर्थम् SKN. धनपोषायेत्यर्थ:। वर्षे हि सति पशव: पुष्यन्ति Dur.

७. सन्तानपोष्टायान्त: प्रविष्टौ M.

८. ०त: M. नाभिं प्रति Mah. वृष्टेर्बन्धके मेघस्य नाभिस्थानेऽवस्थितमुक्तलक्षणमुदकम् Sy. राष्ट्रमध्यं प्रति U. नाभौ जगतोऽभिभूतायां वेद्यां वा नोऽस्माकं स्वभूतायाम् SKN. अस्माकं नाभौ मध्ये, अथवा नाभा न इत्येतत्त्वष्टुरेव विशेषणं स्यात् 'नाभान:' न अदीप्यमान:। किं तर्हि? दीप्यमान एव Dur.

९. बद्धम् M.

१०. अस्मान्कामयमानो देव: Sy. त्वष्टृविशेषणमेतत्। अस्मान्कामयमानस्त्वष्टा SKN. अस्माननुग्रहीतुं कामयमान: Dur.

११. समृद्धये च Sy. षष्ठ्यर्थे एषा चतुर्थी। कस्य पुष्ट्यर्थम्? रायो धनस्य गवादे: क्वचिन्मुञ्चतु SKN.

१२. विमुञ्चतु।. . .स्यतिरुपसृष्टो विमोचन इति यास्क: Mah. विविधं गमयतु। . . . यद्वा नो नाभा अस्मत्सम्बन्धियजनाभावुत्तरवेद्यां राये। षष्ठ्यर्थे चतुर्थी। रायो गवादिधनस्य पोषाय पुष्ट्यै स्यतिरुपसृष्टो विमोचनार्थ:। उक्तलक्षणां वृष्टिं मुञ्चतु Sy. विमुञ्चतु U. विमुञ्चति SKN. विमुञ्चतु वर्षभावेन Dur.

१३. The stanza is quoted and explained by Yāska:—
तत्र:। तूर्णमपि। महत्। सम्भृतम्। आत्मना। त्वष्टा धनस्य पोषाय विष्यतु। इत्यस्मयु:। अस्मान्कामयमान: N.6.21.
A fragment तर्न्नस्तुरीपमद्भुतं, is common to the RV. and the YV. 27.20. The rest of the stanza in the YV. reads as follows:—
पुरुक्षु त्वष्टा सुवीर्यम्।
रायस्पोषं विष्यतु नाभिमस्मे ॥

अवसृजन्नुप त्मनां देवान्यंक्षि वनस्पते ।
अग्निर्हव्या सुंषूदति देवो देवेषु मेधिरः ॥११॥

अवसृजन् । वनस्पते[1] त्वम्[2] । आत्मनैव । हविर्देवेष्ववसृजन्[3] । देवान्[4] । उपयज[5] । अग्निरयम्[6] । हव्यानि[7] । प्रेरयति[8] । देवानां मध्ये[9] । यज्ञियः[10][11] ।

पूषण्वते मरुत्वते विश्वदेवाय वायवे ।
स्वाहा गायत्रवेपसे हव्यमिन्द्राय कर्तन ॥१२॥

पूषण्वते । पूष्णा[12] । मरुद्भिस्तद्वते । सर्वदेवाय[13] । वायवे[14] । स्वाहा[15] । कुरुत[16] । गायत्रं साम[17][18] यस्योत्थापकम्[19] । हव्यम्[20] । इन्द्राय[21] च ।

स्वाहाकृतान्या गह्युप हव्यानि वीतये ।
इन्द्रा गहि श्रुधी हवं त्वां हवन्ते अध्वरे ॥१३॥

उत्तरा वैकल्पिकी निगदव्याख्याता ।

---

१. वनस्य ते M. वनानां पालक यूपाभिमानिदेवाग्ने ! Sy.
२. त्वाम् P. ३. स्वैरं वर्तयनृत्विजः स्वस्वकर्मसु व्यापारयन् Sy.
४. हविर्भुजः Sy. ५. उपेत्य यज Sy.
६. आहवनीयः Sy. ७. हवींषि Sy.
८. प्रेरयति स्वीकरोति Sy.
९. देवेषु, उभयेषां मध्ये Sy.
१०. देवो द्योतमानः । मेधिरो मेधावान् Sy.
११. VM. ignores देवः
१२. पूष्णा तद्वते Sy.
१३. सर्वदेवसङ्घाय Sy.
१४. गमनशीलाय वायुदेवाय च Sy.
१५. स्वाहाकारम् Sy.
१६. कुरुत ऋत्विजः ! Sy.
१७. वेप इति रूपनाम । गायत्रशब्द इतरसामोपलक्षणः । गायत्रं वेपो रूपं यस्य तादृशाय Sy.
१८. सम P. १९. ०पयकं P.
२०. हविः प्रदातुम् Sy.
२१. हव्याविन्द्राय M.

हे इन्द्र स्वाहाकृतानि । स्वाहा इत्येवंपूर्वा कृतिः करणमुच्चारणं यक्ष्यमाणदेवतानां ताः स्वाहाकृतयः । तद्वन्ति हव्यानि हवींषि । अत्र प्रयाजेषु वषट्कारप्रदानात्स्वाहाकृतं हविरित्यर्थः । तद्धविरुपेत्य, वीतये भक्षणाय । आगहि आगच्छ । ... तथा हे इन्द्र आगहि स्तोत्राण्यभिलक्ष्यागच्छ । आगत्य हवमस्मदीयाह्वानं, श्रुधि शृणु । यतस्त्वाम् । अध्वरेऽहिंसात्मके यागे हवन्त आह्वयन्ति, ऋत्विजोऽतः श्रुधि Sy.

Ms. D. puts the figure ॥१४२॥ here to indicate the end of one hundred and fortysecond hymn. No such number is given in P. and M.

I. 143.

प्र तव्य॑सीं॒ नव्य॑सीं धी॒तिम॒ग्नये॑ वा॒चो म॒तिं सह॑सः सू॒नवे॑ भरे ।
अ॒पां नपा॒द्यो वसु॑भिः स॒ह प्रि॒यो होता॑ पृथि॒व्यां न्यसी॑ददृ॒त्विय॑ः ॥१॥

प्र तव्यसीम्[1]। वृद्धिमतीम्[2]। नवतराम्[3]। धियं कर्म[4]। वाचः। स्तुतिम्[5]। सहसः[6]। पुत्राय। अग्नये। प्रभरे[7]। अपाम्[8]। नपात्[9]। यः[10]। वसुभिः[11]। सह[12]। सम्प्रियः[13]। होता[14]। वेद्याम्[15]। निषीदति[16]। प्राप्तयागकालः[17]।

स जाय॑मानः पर॒मे व्यो॑मन्या॒विर॒ग्निर॑भवन्मात॒रिश्व॑ने ।
अ॒स्य क्रत्वा॑ समिधा॒नस्य॑ म॒ज्मना॒ प्र द्यावा॑ शो॒चिः पृ॑थि॒वी अ॑रोचयत् ॥२॥

स जायमानः। सः[18]। प्रादुर्भवन्[19]। उत्तमे[20]। अन्तरिक्षे[21]। अग्निः प्रथमम्। वायवे[22]। आविरभवत्[23]

१. ०सि D. P. adds (यं हव्यानि प्रेरयति) after तव्यसीम्।
२. तवीयसीम्। अतिशयेन वर्धयित्रीम्। तवतिर्वृद्ध्यर्थः सौत्रो धातुः Sy.
३. अपूर्वाम् Sy.
४. यागलक्षणामुक्तगुणकं कर्म Sy.
५. उक्तलक्षणां वाचो मतिं स्तुतिरूपं कर्म Sy.
६. सहः D. कीदृशायाग्नये ? सहसो बलस्य Sy.
७. प्रकर्षेण करोमि Sy.
८. तासाम् Sy.
९. रे वाग्नवात् M. नप्ता। 'अद्भ्य ओषधय ओषधीभ्योऽग्निः' इत्यग्नेर्नप्तृत्वम्। अथवा। अपां न पातयिता वैद्युताग्निरूपेण प्रवर्षकत्वादिति भावः Sy.
१०. अग्निः Sy.
११. निवासयोग्यैर्गवादिधनैः Sy.
१२. सहितः Sy.
१३. संप्रारोचयन् M. See 1.143.2. यजमानस्य प्रीणयिता प्रियतमो वा तस्य Sy.
१४. होमनिष्पादकः सोऽग्निः Sy.
१५. पृथिव्यां वेदिलक्षणायाम् Sy.
१६. नितरां सीदति Sy.
१७. The passage beginning with ह्वाता and ending with प्राप्तयागकालः is omitted by M. प्राप्तप्रधानसमयः सन् Sy.
१८. पूर्वोक्तोऽग्निः Sy.
१९. अरणीभ्यामुत्पद्यमानः काष्ठेषु वा प्रादुर्भूतः सन् Sy.
२०. तदानीमेव... उत्कृष्टे Sy.
२१. विविधरक्षणवति वेदिदेशे Sy.
२२. अन्तरिक्षसञ्चारिणे वायवे ... अथवा मातरि फलस्य निर्मातरि यज्ञे श्वसिति चेष्टत इति मातरिश्वा यजमानस्तदर्थम् Sy.
२३. प्रत्यक्षोऽभूत्। 'त्वमग्ने प्रथमो मातरिश्वन आविर्भव' (RV.I.31.3) इत्यादिश्रुत्यन्तरप्रसिद्धेः। वायुसंयोगात्प्रज्वलित इत्यर्थः Sy.

तथा। अस्य। कर्मणा[1]। दीप्यमानस्य[2]। बलेन[3]। द्यावापृथिवी[4]। तेजः। प्रारोचयत्[5][6]।

अस्य त्वेषा अजरा अस्य भानवः सुसंदृशः सुप्रतीकस्य सुद्युतः।
भात्वक्षसो अत्यक्तुर्न सिन्धवोऽग्ने रेजन्ते असंसन्तो अजराः ॥३॥

अस्य त्वेषा[7]। अस्याग्नेः[8]। भानवः[9]। दीप्ताः[10]। अजराश्च[11]। अस्य रश्मयः। शोभनदर्शनस्य[12]। शोभनावयवस्य[13]। सुष्ठु द्योतमानस्य[14]। दीप्तबलस्य[15]। सेक्तुः पर्जन्यस्य[16]। आपः[17]। इव। अग्नेः। अत्यन्तमितस्ततश्चरन्तः। कम्पन्ते[18]। अस्वपन्तः[19]। जरावर्जिताः[20]।

यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना।
अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति ॥४॥

यमेरिरे। यम्[21]। आभिमुख्येनानीतवन्तः[22]। भृगवः[23]। विश्वधनम्[24]।

---

१. क्रतुना कर्मणा ज्वलनादिव्यापारेण Sy.

२. इन्धनैः सम्यग्वर्धमानस्याग्नेः। . . . मज्मना कृत्वा समिधानस्येति वा योज्यम्। प्रबलेन समिन्धनादिव्यापारेण समिध्यमानस्येत्यर्थः Sy.

३. बलनामैतत्। बलवता Sy.

४. द्यां च पृथिवीं च Sy.

५. ०यन् P. D. प्रकर्षेणादीपयत्। मध्ये शोचिश्शब्दव्यवधानश्छान्दसः Sy.

६. This stanza is missing in M.

७. ०षा M.

८. अस्य स्तूयमानस्याग्नेः Sy.

९. रश्मयः। दीप्तेरुक्तत्वादत्र विस्फुलिङ्गा अवगन्तव्याः Sy.

१०. दीप्तयः Sy.

११. ०श्च M. जरारहिता अजीर्णा अविरता इत्यर्थः Sy.

१२. ०ना अस्य M. सुष्ठु सम्यग् द्रष्टारः। सर्वतो व्याप्ता इत्यर्थः Sy.

१३. शोभनमुखस्य Sy.

१४. सुष्ठु सर्वतो द्योतमानाः Sy.

१५. त्वक्ष इति बलनाम। 'त्वक्षः शर्धः,' (Ngh. 2.9.) इति बलनामसु पाठात्। भासमानबलाः Sy.

१६. अक्तुरिति रात्रिनामैतत्। 'अक्तुरूर्म्याः' (Ngh. 1.7.) इति तन्नामसूक्तत्वात्। द्वितीयार्थे प्रथमा। अक्तुं जगदञ्जकं नैशं तमः . . . अतिक्रम्य Sy.

१७. स्यन्दमानाः सर्वत्र व्याप्नुवन्तः Sy.

१८. न रेजन्ते न कम्पन्ते। दाहपाकादिषु न चलन्ति। न चाल्यन्ते वाऽन्यैः। यद्वा नशब्दो दृष्टान्तवचनः। भात्वक्षसो भा इव त्वक्षो बलं यस्य तादृशस्यादित्यस्य सिन्धवो न रश्मय इव। ते यथा स्यन्दनशीला व्याप्तिमन्तः, अक्तुरति अञ्जकं तमोऽतिक्रम्यासंसन्तो रेजन्ते तद्वद् भात्वक्षसोऽस्याग्नेरुक्तलक्षणा दीप्तयोऽपि सर्वत्र रेजन्ते कम्पन्ते व्याप्नुवन्तीत्यर्थः Sy.

१९. स्वव्यापारेष्वस्वपन्तोऽविरताः Sy.

२०. अत एवाजराः Sy.

२१. अग्निम् Sy.

२२. ०ख्येनीतवन्तः P. D. आभिमुख्येन . . . ईरितवन्तः स्थापितवन्तः Sy. अभिलषितार्थसिद्धये प्रेरितवन्तः SKN. आत्माभिप्रेतार्थसिद्धये प्रेरितवन्तः Dur. एरिर इतीर्तिरुपसृष्टोऽभ्यस्तः N.4.23.

२३. भृगुगोत्रोत्पन्नाः पापस्य भर्जकाः Sy.

२४. सर्वधनम्। वेद इति धननाम। 'वेदो वरिवः' (Ngh. 2.10.) इति तन्नामसु पाठात् Sy. सर्वस्य वेदितारं सर्वधनं वा SKN. सर्वस्य वेत्तारम् Dur.

पृथिव्याः[1]। नाभौ[2]। भूतजातस्य[3]। बलार्थम्[4]। अग्निम्। तम्। गीर्भिः[5]। स्वे[6]। आयतने[7]। प्रेरय[8]। यः[9]। स्वयमेव[10]। वरुणः[11]। इव। धनस्य[12]। ईश्वरो[13] भवति[14]।

न यो वराय मरुतामिव स्वनः सेनेव सृष्टा दिव्या यथाशनिः।
अग्निर्जम्भैस्तिगितैरत्ति भर्वति योधो न शत्रून्त्स वना न्यृञ्जते ॥५॥

न यो वराय। यः[15]। वारयितुम्[16]। न शक्यते[17]। मरुतामिव। स्वनः[18]। सेनेव[19] च। उद्युक्ता[20]।

---

१. वेद्याः। एकदेशे कृत्स्नशब्दः। यद्वा 'एतावती वै पृथिवी' (TS. 2.6.4.5.) इत्यादिश्रुतेर्वेद्याः पृथिवीत्वम्। तस्या नाभावुत्तरवेद्याम् Sy. नाभिभूतायां पृथिव्यामुत्तरवेद्याम् SKN. उत्तरवेदिमध्यगतायाम् Dur.

२. नो P.

३. जातस्य D. भूतजातस्य Sy., SKN. उदकस्य Dur.

४. बलेन निमित्तेन Sy. बलनामैतत्। तद्धेतो चात्र वर्तते। बलहेतुनाऽन्नेन हविराख्येन SKN. बलनीयेन वीर्येणान्नेन हविर्लक्षणेन Dur.

५. स्तुतिभिः Sy. स्तुतिलक्षणाभिर्वाग्भिः Dur.

६. स्वकीये Sy.

७. गृहे, उत्तरवेद्याम् Sy. यज्ञगृहे SKN. गृहे। मा कस्यचिदार्त्विज्ज्येऽवस्थित इत्यभिप्रायः Dur.

८. प्राप्नुहि Sy. मुञ्चस्व। ... हिनोतिर्वृद्ध्यर्थः। अभि नुभि मर्यादायाम्। आङ् मर्यादायाम्। वर्धयस्व SKN. प्रेरय तस्मिंस्तस्मिन्कर्मणि वर्तमानम् Dur.

९. Omitted by P. M. अग्निः Sy.

१०. एको मुख्यः सन्नेक एव वा Sy. कीदृशः सोऽग्निः? उच्यते, य एक एव SKN.

११. तत्र दृष्टान्तः। ... वारक आदित्य इव। स यथा सर्वस्येष्टे तद्वत् Sy. वरुण इव यथाऽपां पतिर्न राजेः SKN. यथा वरुणः समुद्रान्तर्गतानां धनानामीष्ट एवं यः ... ईष्ट इत्यर्थः Dur.

१२. वसुनो गवादिधनस्य Sy. वसुनो धनस्य SKN. सर्वस्य धनस्य Dur.

१३. प्रदातुमिति शेषः। राजतीत्यैश्वर्यकर्मा। 'क्षियति राजति' (Ngh. 2.21.) इति तत्राम्सु पाठात् Sy. राजति ईष्टे SKN. राजतिरैश्वर्यकर्मसु पठितः Dur.

१४. VM. ignores आ
A fragment धर्मेद्दिरे भृगवः is quoted and partly explained by Yāska in N. 4.23. The stanza *in toto* is quoted and explained by both Skandasvāmin II. 264. and Durgācārya, *loc. cit.*

१५. अग्निः Sy.

१६. वरणाय निग्रहाय Sy.

१७. शक्तो न भवति Sy.

१८. तत्र दृष्टान्तत्रयमुच्यते। मरुतां स्वन इव। स यथाऽग्राह्यस्तद्वत् Sy.

१९. सा यथाऽन्यैरनिरोध्या तद्वत् Sy.

२०. उद्युक्ता P. वैरिक्षयार्थं प्रयत्नेनातिसृष्टा Sy.

दिवि भवा[1]। यथा। अशनिः[2]। अग्निः[3]। दंष्ट्राभिः[4]। तीक्ष्णाभिः[5]। वृक्षानत्ति[6] खादति[7]। भक्षयति[8] च[9]। सोऽयम्। भर्गः[10]। इव। शत्रून्। वृक्षान्[11]। नितरां प्रसाधयति[12]।

कुविन्नो अग्निरुचथस्य वीरसद्वसुष्कुविद्वसुभिः काममावरत् ।
चोदः कुवित्तुतुज्यात्सातये धियः शुचिप्रतीकं तमया धिया गृणे ॥६॥

कुवित्। बहु[13]। अस्माकम्। उच्यमानस्य[14] स्तोत्रस्य। अग्निः। कामयिता। भवतु। वासयिता[15]। बहु[16]। अस्माकं[17]। धनैः। कामान्[18]। आवृणोतु[19]। कामानां चोदयिता[20]। बहु। प्रेरयतु[21]। भजनाय[22]। कर्माणि। निर्मलाङ्गम्[23]। तम्[24]। अनया[25]। वाचा[26]। स्तौमि[27]।

घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋञ्जते ।
इन्धानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियम् ॥७॥

घृतप्रतीकम्। घृतलिङ्गम्[28]। युष्माकम्[29]। यज्ञस्य। धुरि[30] सीदन्तम्। अग्निम्। मित्रम्।

---

१. भवा वा M.
२. यथा पतत्येव न निवार्यते तद्वत् Sy.
३. अग्नि M.
४. ईदृक्सामर्थ्यमस्तीति दर्शयति। ... दन्तैर्दन्तस्थानीयाभिर्ज्वालाभिः Sy.
५. निशितैस्तीक्ष्णीभूतैः Sy.
६. अस्मद्विरोधिनः Sy. ७. भक्षयति Sy.
८. हिनस्ति। 'अर्व हिंसायाम्'। ... यद्यप्यत्तिभर्वत्योरदनमेवार्थस्तथापि तदवान्तरभेदोऽवगन्तव्यः Sy. भर्वतिरत्तिकर्मा N. 9.23.
९. मसो॰ M. ॰ति सचोर्य P. अग्निः Sy.
१०. तत्र दृष्टान्तः। ...सम्प्रहर्ता शूर इव। स यथा शत्रून्भर्वति भक्षयति तद्वत् Sy.
११. वनानि वृक्षादिसमूहान् Sy.
१२. नितरां प्रसाधयति। दहतीत्यर्थः। 'ऋञ्जतिः प्रसाधनकर्मा' (N. 6.21) इति यास्कः Sy.
१३. कुविद् बहुवारम् Sy.
१४. उचथस्य स्तोत्रस्य। ... यद्वा। उचथस्यैतन्नामकस्य महर्षेर्गोत्रप्रभवस्य न इति सम्बन्धः Sy.
१५. वासयिता। सर्वेषां वसुस्थानीयो वा Sy.
१६. प्रतिप्रभूतम् Sy.
१७. वासयितृभिर्धनैः Sy.
१८. कामयमान् M. प्रत्यर्थमभिमतं वा Sy.
१९. अभिमतप्रदानेन कामं निर्वर्तयत्वित्यर्थः Sy.
२०. अस्माकं कर्मसु प्रेरकः सन् Sy.
२१. त्वरयतु प्रेरयत्वित्यर्थः। तुजिः प्रेरणार्थः Sy.
२२. जना P. लाभाय Sy.
२३. शोभनावयवं शोभनज्वालम् Sy.
२४. अग्निम् Sy. २५. तमहमानय M.
२६. स्तुतिरूपया प्रज्ञया Sy.
२७. उच्चारयामि स्तौमीत्यर्थः Sy.
२८. घृतोपकमं प्रयाजादिष्वाज्यैर्हूयमानत्वात्। यद्वा प्रतीकमङ्गम्। दीप्तज्वालमित्यर्थः Sy. २९. युष्मत्सम्बन्धिनः Sy.
३०. धुरि निर्वहणे सीदन्तं यज्ञनिर्वाहकम् Sy.

इव। धनैः समेधयन्[1]। काष्ठैः प्रसाधयति। स समिध्यमानः[2]। रक्षोभि[3]रनाक्रान्तः[4]। यज्ञेषु[5]। दीप्यमानः[6]। निर्मलाम्[7]उपद्रवाभावात्[8]। अस्माकम्[9]। बुद्धिम्[10]। उ[11]यच्छति।[12]

**अप्रयुच्छन्नप्रयुच्छद्भिरग्ने शिवेभिर्नः पायुभिः पाहि शुग्मैः ।**
**अदब्धेभिरदृपितेभिरिष्टेऽनिमिषद्भिः परि पाहि नो जाः ॥८॥**

अप्रयुच्छन्। अप्रमाद्यन्[13]। अप्रमाद्यद्भिः[14]। अग्ने! कल्याणैः[15]। अस्मान्। पाहि[16]। तेजोभिः[17]। शक्तैः[18]। अहिंसितैः[19]। जागरूकैः। अन्वेषणीय[20]! निमेषमकुर्वद्भिः[21]। परितः। अस्मान्। रक्ष[22]। जायमानः[23][24]।

---

१. इध्मैर्दीप्यमानः Sy.

२. एवमिन्धानः सम्यग्दीप्यमानः Sy.

३. भिः M.

४. ०न्तो P.
ज्वालासमिदादिभिराक्रान्तः। अन्यैरनाक्रान्तो वा Sy.

५. यज्ञेषु वेदयत्सु स्तोत्रेषु निमित्तभूतेषु Sy.

६. स्वयं दीप्यमानः Sy.

७. शुभ्रवर्णां निर्मलां ज्योतिष्टोमादिकर्म वा Sy.

८. ०द्रभावात् P.

९. अस्मदीयाम् Sy.

१०. प्रज्ञां यागादिविषयाम्। धीरिति कर्मनाम। 'धीः ... शमी' (Ngh. 2. 1.) इति तन्नामसु पाठात् Sy.

११. उद्योजयत्येव। ... उशब्दोऽवधारणे Sy.

१२. VM. ingores उ

१३. अस्मास्वप्रमाद्यन् ... अविच्छिन्नप्रवृत्तिः सन् Sy.

१४. अप्र ... भिः M. ... अनवधानरहितैः Sy.

१५. मन्त्रकल्याणैः Sy.

१६. रक्ष Sy.

१७. पायुभी रक्षणप्रकारैः Sy.

१८. सुखकरैः Sy.

१९. केनचिदप्यपरिभूतैः Sy.

२०. ०सितै ... रन्वे० M. अन्वयणी P.
सर्वैरेषणीयाग्ने! Sy.

२१. निमेषरहितैः। अनलसस्वभावैरीदृशै रक्षणैः Sy.

२२. पालय। ... न केवलमस्मान्किन्त्वस्मत्पुत्रपौत्रादीनपि रक्ष Sy.

२३. जायमानोऽस्माभिर्दीप्यमानः सन्। ... यद्वा। उपर्युपरि जायन्त इति जाः। नो जा अस्मत्सम्बन्धिनीः पुत्रपौत्रादिरूपाः प्रजाः परि पाहि परितो रक्ष Sy.

२४. Ms. D. puts the figure ॥१४३॥ here to indicate the end of one hundred and fortythird hymn. No such number is given in P. and M.

I. 144.

एति प्र होता व्रतमस्य माययोर्ध्वां दधानः शुचिपेशसं धियम् ।
अभि स्रुचः क्रमते दक्षिणावृतो या अस्य धाम प्रथमं ह निंसते ॥१॥

एति प्र होता। अस्याग्नेः। कर्म[1] यागाख्यम्। होता[2]। प्रज्ञया[3]। उपगच्छति[4]। उच्छ्रितां[5]। धारयन्[6]। शुद्धरूपाम्[7]। स्तुतिम्[8]। अध्वर्युभिर्दक्षिणा ह्रियमाणाः[9]। स्रुचश्च[10]। अभिक्रमते[11]। याः[12] स्रुचः। अग्नेः[13]। स्थानमाज्यभागाद्यर्थम्[14]। प्रथमम्[15]। एव[16]। अभिनमन्ति[17] ताः स्रुच आदापयितु[18]मभिक्रमते।

अभीमृतस्य दोहना अनूषत योनौ देवस्य सदने परीवृताः ।
अपामुपस्थे विभृतो यदावसदध स्वधा अधयद्याभिरीयते ॥२॥

अभीमृतस्य[19]। अभि। एनम्। अस्तुवन्[20]। सत्यस्याग्नेः[21]। दोहनाः[22] स्तुतयः। योनौ[23] यज्ञ-

---

१. हविष्प्रदानादिरूपं कर्म कर्तुम् Sy.
२. होमनिष्पादकोऽध्वर्युः Sy.
३. कर्तव्यविशेषप्रज्ञया युक्तः सन्। मायेति प्रज्ञानाम। 'माया वयुनम्' (Ngh. 3.9.) इति तन्नामसु पाठात् Sy.
४. प्रकर्षेण गच्छति होतुम् Sy.
५. ०तान् P. D. उपर्यारूढाम् Sy.
६. धकारयत् P. दधानः। 'आचतुर्थात्कर्मणोऽभिसमीक्षेतेदं करिष्यति' इत्युक्तत्वात् Sy.
७. शोभनरूपोपेताम्। पेश इति रूपनाम Sy.
८. प्रज्ञाम् Sy.
९. ०णा P.D. दक्षिणा...M. आगत्य च दक्षिणावृतः प्रादक्षिण्येन वर्तमानाः Sy.
१०. जुह्वादीः Sy.
११. गृह्णाति Sy.
१२. या P.D.M.
१३. अग्ने P.
१४. धाम स्थानम् Sy.
१५. कीदृश्यः स्रुचः?...पात्रासादनकाले Sy.
१६. हशब्दः प्रसिद्धौ Sy.
१७. 'निस चुम्बने' इति धातुः। चुम्बन्ति भजन्त इत्यर्थः। प्रथममनुष्ठेयकर्म बुद्ध्या प्रैति पश्चात् स्रुचः क्रमत इत्यर्थः। ... यद्वा होता देवानामाह्वाताऽयमग्निरस्य यजमानस्य व्रतं कर्म ज्योतिष्टोमादि प्रज्ञाविशेषेण युक्तः सन्नेति, यज्ञदेशं प्रत्यागच्छति। कीदृशोऽयम्? ऊर्ध्वामूर्ध्ववर्ति शुचिपेशसं शोभनरूपोपेतं धियं ज्वालाचलनादिरूपं कर्म दधानो धारयमाणः। आगत्य च दक्षिणावृत उक्तलक्षणाः स्रुचो घृतपूर्णा जुह्वपभृदादिका अभिक्रमत आक्रमते। घृतं स्वीकर्तुं ज्वालाः प्रसर्पन्तीत्यर्थः। याः स्रुचः प्रथमं पूर्वं हविरासादनकालेऽस्याग्नेर्धाम स्थानं वेदिलक्षणं निंसते चुम्बन्ति प्राप्ताः Sy.
१८. ता P. D.
१९. अभिमृतस्य P.
२०. ०वत् P.M. अभिनवा भवन्ति। आविर्भवन्त्याभिमुख्येन स्तूयन्ते वा Sy.
२१. उदकस्य Sy.
२२. धाराः Sy.
२३. उत्पत्तिस्थाने Sy.

गृहे। देवस्य[1]। सदनस्थाने। सर्वतो वृता[2]: सोऽयम्। अपाम्[3]। उपस्थानेऽन्तरिक्षे[4]। विभृतो बहुधाभूय[5] ताः। यदा। प्रावसत्[6]। अध[7]। जलानि[8]। पिबति[9]। याभिः सह। सङ्गच्छते[10]।

**युयूषतः सवयसा तदिद्वपुः समानमर्थं वितरित्रता मिथः।**
**आदीं भगो न हव्यः समस्मदा वोळ्हुर्न रश्मीन्त्समयंस्त सारथिः ॥३॥**

युयूषतः[11]। अहोरात्रे समानप्रमाणे[12]। तत्[13]। एव। आग्नेयमुच्यमानं हविः[14]। मिश्रयतः[15]। समानम्[16]। सस्योत्पादनार्थं[17] कार्यम्। हविःशेषेण कुर्वाणे[18]। अनन्तरम्। एव तदुत्पन्नं हविः। भगः[19]। इव। सर्वैराह्वातव्योऽग्निः[20]। अस्मत्तः[21]। समादत्ते[22]। यथा। वोढुरश्वस्य[23]। रश्मीन्[24]। सारथिः[25]। सङ्गच्छते[26] तद्वद्धविः समादत्ते[27]।

---

१. द्योतमानस्यादित्यस्य Sy.
२. तद्रश्मिभिः परितो व्याप्ताः सत्यः Sy.
३. उदकानाम् Sy.
४. उत्सङ्गे। अन्तः Sy.
५. विशेषेण ताभिर्धार्यमाणः सन् Sy.
६. आक्रम्य निवसत्ययमग्निस्तदानीमित्यर्थः Sy.
७. अधुना Sy.
८. अमृतोपमा अपः Sy.
९. बति P. पिबति सर्वो लोकः Sy.
१०. अयमग्निः सङ्गच्छते वा भूमिं ता अधयत्। विद्युदात्मनोदकानि जगत् पाययत इत्यग्नेः स्तुतिः Sy.
११. यूयू० D.
१२. सवयसा समानवयस्कौ। वयःशब्देन सामर्थ्यं लक्ष्यते। समानसामर्थ्यौ Sy.
१३. यदा प्रवृद्धो भवति तदानीमेव Sy.
१४. वपुरग्नेः शरीरम् Sy.
१५. स्वस्वव्यापारेण मिश्रयितुमिच्छतः। प्रैषानन्तरं याज्यादिपाठो होतुर्व्यापारो वषट्कारानन्तरं होमोऽध्वर्योरिति विभागः। अत्रेदमनुसन्धेयम्। सवयसा समानवयस्कौ मिथः प्रत्येकं समानप्रयोजनं सुखप्राप्तिं वितरित्रता विशेषेण तरितुमिच्छन्तौ ... द्विवचनस्याकारः। आयापतो तद्वपुस्तदेव परस्परं शरीरं युयूषतो मिश्रयितुमिच्छतः परस्परमालिङ्गतः। तद्वदग्नि साकं होत्रध्वर्यू युयूषतः Sy.
१६. समानमर्थं समानप्रयोजनं निष्पत्तिम् Sy.
१७. सस्योत्पा० M. ०त्पा० P.
१८. मिथः प्रत्येकम् ... भृशं तरन्तौ होत्रध्वर्यू Sy.
१९. भाग: D. सर्वैः सेवनीय आदित्यः। स यथा सर्वतः पूजामादत्ते तद्वत् Sy.
२०. आहवनीयः Sy.
२१. अस्माकं सम्बन्धिनः Sy.
२२. आ सर्वतः ... सम्यक् स्वीकरोति Sy.
२३. वाहकस्याश्वादे रश्मीन्प्रग्रहानिव Sy.
२४. रश्मिवदायता घृतधाराः Sy.
२५. सरणशीलः सारथिवच्छ्रात्मकस्य रथस्य निर्वाहको वा सन् ... रथस्य यन्ता Sy.
२६. ग is corrected to य with red ink in M. सान्यथा M. स्वीकरोति, तद्वदयमग्निरपि हवींषि समयंस्त Sy.
२७. VM. ignores मिथः

यमीं द्वा सवयसा सपर्यतः समाने योना मिथुना समोकसा ।
दिवा न नक्तं पलितो युवाजनि पुरू चरन्नजरो मानुषा युगा ॥४॥

यमीं[1] द्वा । यम् । एनम्[2] । द्वौ । समानाग्नौ[3] । पूजयतो[4]ऽहश्च रात्रिश्चाहवनीया[5]ख्ये । एकस्मिन् । आयतने[6] स्थितं स्वयं च । समानगृहा[7]वेकस्मिन्काले परिवर्तमानत्वात्सोऽयम् । यथा । अह्नि[8] प्रातरादित्यात्मना जायत एवम् । श्वेतवर्णो[9]ऽग्नौ[10] । रात्रौ[11] च । दीप्तो[12] जायते । पुरूणि बह्वावर्तनानि[13] । मनुष्यहितानि[14] । युगानि[15] । सञ्चरन्[16] । जरावर्जितः[17][18] ।

तमीं हिन्वन्ति धीतयो दश व्रिशो देवं मर्तास ऊतये हवामहे ।
धनोरधि प्रवत आ स ऋण्वत्यभिव्रजद्भिर्वयुना नवाधित ॥५॥

तमीं हिन्वन्ति । तम् । एनम्[19] । प्रेरयन्ति[20] । अङ्गुलयः । दश[21] । असंश्लिष्टाः[22] । तं देवम्[23] । वयं मर्तासः[24] । रक्षणाय । हवामहे[25] । सोऽग्निः[26] । प्रकर्षवतः[27] । उच्छ्रितादन्तरिक्षात्[28] । उदकानि[29]

---

१. यमि P.
२. ०न D. अग्निम् Sy.
३. समानवयस्कौ समानसामर्थ्यौ वा Sy.
४. स्तुत्या हविष्प्रदानेन च प्रीणयतः Sy.
५. यनी० P.
६. योनौ फलस्योत्पत्तिस्थाने यज्ञे वर्तमानौ Sy.
७. मिथुना दम्पती इवैककार्योद्युक्तौ । समोकसा समाननिवासौ देवयजनस्थानावीवृशौ होत्रध्वर्यू Sy.
८. कथेत्याह ... अहनीव Sy.
९. पलितः पूर्वमङ्गारावस्थायां जीर्णोऽपि Sy.
१०. एवं पूज्यमानोऽग्निः Sy.
११. रात्रावपि । सर्वदेत्यर्थः Sy.
१२. समिन्धनानन्तरं युवा तरुणस्तेजसा सर्वस्य मिश्रयिता च Sy.
१३. बहुव M.
बह्वान्याविकम् Sy.
१४. ०ष्याहि० P. एवं जातोऽयम् ... मनोः सम्बन्धीनि Sy.
१५. जायापतिरूपाणि होत्रध्वर्युरूपाणि वोद्दिश्य Sy.
१६. भक्षयन् Sy.
१७. अजीर्णो जरारहितो वर्तते Sy.
१८. V.M. ignores मिथुना
१९. अग्निम् Sy.
२०. प्र० D.
प्रीणयन्ति मन्थनकाले Sy.
२१. दशसङ्ख्याकाः Sy.
२२. विशः परस्परविश्लिष्टाः Sy.
२३. द्योतमानम् Sy.
२४. मत्तासः M.
मनुष्या वयं यजमानाः Sy.
२५. आह्वयामः Sy.
२६. कोऽस्य विशेष इत्युच्यते । अयमग्निःSy.
२७. धनोः धनुषः सकाशात् प्रवत आ प्रकर्षेण गच्छतो बाणानिव । तान्यथा शत्रोरुपरि मुञ्चन्ति । आ इत्युपमार्थे । तद्वत्सोऽग्निः Sy.
२८. धनुस्थानीयाद्भिजशरीरसकाशात् Sy.
२९. प्रकृष्टवेगवतो रश्मीन् Sy.

भूम्यां प्रवेशयति[1] तथा । उपरि अर्जद्भिरुदकैः[2] । अज्ञानानि[3] मनुष्याणाम् । नवानि[4] । धत्ते[5][6] ।

त्वं ह्यग्ने दिव्यस्य राजसि त्वं पार्थिवस्य पशुपाइव त्मना ।
एनी त एते बृहती अभिश्रिया हिरण्ययी वक्करी बर्हिराशाते ॥६॥

त्वं ह्यग्ने । त्वम् । हि । अग्ने ! दिवि भवस्य देवगणस्य[7] । ईश्वरो[8] भवसि । त्वम् । पार्थिवस्य[9] । गोपाल[10] । इव पशूनाम्[11] । आत्मनैव[12] । एवंविधस्य तव[13] । श्वेते[14] । बृहत्यौ[15] । अभिगमनस्वभावे[16] । हिरण्मयालङ्कारे[17] । गमनशीले[18] जङ्घे[19] । बर्हिः[20] । आशाते[21] ।[22]

अग्ने जुषस्व प्रति हर्य तद्वचो मन्द्र स्वधाव ऋतजात सुक्रतो ।
यो विश्वतः प्रत्यङ्ङसि दर्शतो रण्वः संदृष्टौ पितुमाँइव क्षयः ॥७॥

अग्ने जुषस्व । अग्ने ! तदिदम्[23] । वचनम्[24] । सेवस्व[25] । कामय[26] च । मादयितः[27] । अन्नवन्[28] !

---

१. निवे॰ P. ऋच्छति गमयति । रिविगं-त्यर्थः । अत्रान्तर्भावितण्यर्थोऽयम् । ... अपिशब्दोऽनर्थको धात्वर्थमात्रानुवादी Sy. २. एवं प्रवृद्धोऽग्निः ... अनुष्ठानार्थमभितः सञ्चरद्भिर्जंय-मर्थमभिगच्छद्भिर्वा तदर्थम् Sy.

३. वयुनानि प्रज्ञानान्यनुष्ठानविषयाणि Sy.

४. नूतनानि Sy.

५. धारयति ज्ञापयतीत्यर्थः । यद्वा, अभि-व्रजद्भिराभिमुख्येन गच्छद्भिर्होत्रादिभिः क्रियमाणानि नवानि वयुनानि प्रज्ञा-विशिष्टानि स्तोत्रादीनि ... धत्ते Sy.

६. VM. ignores अपि

७. देवादेर्विद्युदात्मना वृष्ट्यादेर्वा Sy.

८. ईशिषे । ऐश्वर्यनामैतत् Sy.

९. पृथिवीसम्बन्धिनो मनुष्यादे राज-सीश्वरो भवसि Sy.

१०. तत्र दृष्टान्तः । ... पशुपालको यथा स्वसामर्थ्येनैव पशूनां निरोधनिर्ग-मनादिव्यापारेषु समर्थो भवति तद्वत् । एतद्दृष्टान्तेनात्यन्तस्वातन्त्र्यमुक्तं भवति Sy. ११. पशून् M.

१२. ॰नैवं॰ D. आत्मनैवैवं वयं मर्तासो रक्षणाय हवामहे विधस्य P. किमन्य-तन्त्रत्वेन नेत्याह । ... आत्मनैव स्वसामर्थ्येनैव Sy.

१३. यस्मादेवं तस्मात् ... तव Sy.

१४. एते प्रसिद्धे एनी, एतवर्णे शुभ्रे द्यावा-पृथिव्यौ Sy.

१५. कीदृश्यौ ते ?... महत्यावतिविस्तृते Sy.

१६. ॰मस्वभा॰ P. अभिश्रिया प्राप्तैश्वर्ये अभितः सेव्ये वा Sy.

१७. हितरमणीये Sy.

१८. वक्वरी अतिकुशलं शब्दयन्त्यौ Sy.

१९. जघं P. २०. यज्ञम् Sy.

२१. अश्नुवाते व्याप्नुतः ।... ईदृश्यौ द्यावापृथिव्यौ बर्हिरश्नुवाते Sy.

२२. VM. ignores एते

२३. तादृशम् Sy.

२४. प्रियकरं वचो वाग्रूपं स्तोत्रम् Sy.

२५. सेवस्व हविः । प्रीतो भव वा स्तुत्या Sy.

२६. पुनः कामयस्व Sy.

२७. मादनशील स्तुत्य वा Sy.

२८. हविर्लक्षणान्नवन् Sy.

यज्ञजात! सुप्रज्ञ! भूयस्त्वं प्रज्वलन्। सर्वत एव। अभिमुखः। भवसि। दर्शनीयः। रमयिता। सन्दर्शने मनुष्यस्य। अन्नवानिव। निवासः।

## I.145.

तं पृ॑च्छता॒ स ज॑गामा॒ स वे॑द॒ स चि॑कि॒त्वाँ ई॑यते॒ सा न्वी॑यते ।
तस्मि॑न्त्सन्ति प्र॒शिष॒स्तस्मि॑न्नि॒ष्टयः॒ स वाज॑स्य॒ शव॑सः शु॒ष्मिण॒स्पतिः॑ ॥१॥

तं पृच्छत। अग्निम्। पृच्छत। सः। देवेषु गच्छति। वेद चावगन्तव्यम्। सः। ज्ञातैव। गच्छति। क्षिप्रम्। तस्मिन्। सन्ति। प्रशंसनानि। अभिलषितानि च। सः। बलस्य। अन्नस्य

१. ०ज्ञे ज्ञा० P. ०ज्ञाज्जा० M. यज्ञार्थमुत्पन्न Sy.
२. शोभनकर्मञ् शोभनप्रज्ञ वा Sy.
३. यस्त्वं is suggested for भूयस्त्वं
४. य ईदृशस्त्वं विश्वतः सर्वस्य स्थावरजङ्गमस्य जगतः Sy.
५. अभिमतोऽनुकूलोऽसि न पराङ्मुख इत्यर्थः Sy.
६. दर्शनीयः सर्वैः Sy.
७. रमयित्वा पार्थिवस्य वा P. रमणशीलो रमयिता वा भवसि सर्वस्य Sy.
८. सम्यग्दर्शने।...यद्वा तव संदृष्टौ सत्यां सर्वो जनः Sy.
९. तत्र दृष्टान्तः। पितुमानिव। प्रतिप्रभूतान्नस्वामी यथा सर्वैस्तस्यो गन्तव्यश्च भवति तद्वत् Sy.
१०. निवासवान्भवति Sy.
Ms. D. puts the figure ॥१४४॥ here to indicate the end of one hundred and fortyfourth hymn. No such number is given in P. and M.
११. गच्छति M. हे यजमानाः...यस्त्वर्गादिविषयं प्रष्टव्यमस्ति तत् Sy.
१२. तस्यैव प्रष्टव्यत्वेऽतिशयमाह...सर्वत्र गच्छति Sy.
१३. स देवेषु। गच्छति is missing in M.
१४. अत एव स वेद स च...जानाति Sy.
१५. प्रष्टव्यम् Sy.
१६. संज्ञात्वैव M. स एव चेतनावान्। स विशेषज्ञ इत्यर्थः Sy.
१७. स एवेयते श्रेयसकाशं गच्छति। पुनर्गतिरेव विशेष्यते...सोऽग्निरेव नु क्षिप्रमीयते। यद्यजमानस्य श्रेयमस्ति तमर्थं ज्ञातुं शीघ्रमेव गच्छतीत्यर्थः। यद्वा ज्ञानार्थमीयते सेव्यते तथा शीघ्रमनुसेव्यते। यस्मादयमुक्तरूपस्तस्मात्तमेव पृच्छतेत्यर्थः Sy.
१८. तस्मिन् तस्मिन् D. तत्रापेक्षिताः कामाः सन्तीत्याह। तस्मिन्नग्नौ Sy.
१९. ०शास० M. प्रशासनानि नियमनसामर्थ्यानि सन्ति। असाध्यं नियम्यापि साधयितुं शक्त इत्यर्थः Sy
२०. तस्मिन्नेवाग्नौ...एष्टव्या भोगाः सर्वफलसाधका यागा वा सन्ति Sy.
२१. अग्निः Sy.
२२. बलस्य Sy.
२३. वाजस्यान्नस्य Sy.

च[1]। शोषयितुः[2]। स्वामी[3]।

तमित्पृच्छन्ति न सिमो वि पृच्छति स्वेनेव धीरो मनसा यदग्रभीत् ।
न मृष्यते प्रथमं नापरं वचोऽस्य क्रत्वा सचते अप्रदपितः ॥२॥

तमित्पृच्छन्ति । अग्निम्[4]। एव। सर्वे[5] पृच्छन्ति। स तु वन्धकोऽग्निः[6]। न कञ्चन। पृच्छति[7]। यथा मनुष्यः। आत्मना ज्ञेयसमीपगतेनार्थं जानात्येवमग्निरेकत्रावस्थित एव। मनसा[8] दूरस्थमपि। गृह्णाति[9]। प्रज्ञावान्[10]। यस्मादसावग्निः। स्ववचनात् पूर्वम्[11]। उत्तरं[12] वा। परकीयं वचनम्। न। सहते स्वयमेवासन्दिग्धं कथयतीत्यर्थः। दर्परहितश्चेत्[13]। अग्नेः[14]। ज्ञानेन[15]। सङ्गतो[16] भवति[17] मनुष्यः[18]।

तमिद्गच्छन्ति जुह्वस्तमर्वतीर्विश्वान्येकः शृणवद्वचांसि मे ।
पुरुप्रैषस्ततुरिर्यज्ञसाधनोऽच्छिद्रोतिः शिशुरादत्त सं रभः ॥३॥

तमिद् गच्छन्ति[19]। तम्। एव। होतारः[20]। गच्छन्ति[21]। तमेव। यत्नुमत्यः[22] प्रजाः। सः

१. शोषयतु M. ०तु P. बलवतो राजादेरपि Sy. २. पतिः पालयिता दाता ...स्वामी। यस्मादयं महानुभावस्तस्मात्तमेव पृष्ट्वा पुरुषार्थं साधयतेति Sy.
३. VM. ignores सः। सः। ईयते। तस्मिन्
४. पूर्वमन्त्रेऽग्निं पृच्छतेत्युक्तम्। अत्र तु सोऽनूनयेन प्रष्टव्य इत्याह—तमित् तमेवाग्निम् Sy. ५. सर्वजनः Sy.
६. ०ग्नि D. ७. स तु नान्यं पृच्छति प्रश्नसमयेऽपि।...न विपृच्छति विपरीतं न पृच्छति Sy. ८. स्वेनेव मनसा। इवशब्द एवार्थे। स्वकीययैव बुद्ध्या Sy.
९. यत्कार्यमग्रभीद् वदामीत्यादत्ते तदेव प्रतिब्रूते न तु प्रश्नानुकूलम्। स्वतन्त्रेश्वर इत्युक्तं भवति। यद्वा प्रष्टा धीमान्स्वेन मनसा वाचा वाच्यं विचार्य...यद्वाक्यं वक्तव्यत्वेन स्वीकुर्यात्तदेवाग्निं पृच्छति। न तु बहु भाषत इत्यर्थः Sy.
१०. पृष्टोऽपि धीरो धीमानयम् Sy.
११. परवाक्यासह्यत्वमाह। अयमग्निः... स्ववाक्यात्पूर्वभावि Sy. १२. तथा... स्वोक्त्यनन्तरभावि प्रतिवचनम् Sy.
१३. अर्पर० M. यस्मादयमेवंविधस्तस्मात् ...अप्रवृप्तो यद्वा तेन शिक्षितोऽनुदृप्तः सर्वो लोकः Sy. १४. ०ग्ने P. अस्य महानुभावस्याग्नेः Sy. १५. क्रतुना रक्षणादिकर्मणा Sy. १६. सङ्गच्छते। जीवतीत्यर्थः Sy. १७. ०ष्याः P.
१८. VM. ignores वि। न
१९. पुच्छन्ति P.
२०. अस्मदीया जुह्वपभृवादयस्तमित् तमेवोद्दिश्याज्यपूर्णाः सत्यः ... यद्वा हूयन्त इति जुह्व आहुतयः सोमादिरूपाः। अथवा जुह्वादिषु स्थितान्याज्यान्यप्याश्रयाश्रयिणोरभेदेन जुह्व इत्युच्यन्ते 'मञ्चाः क्रोशन्ति' इतिवत्। ता अपि तमेव गच्छन्ति, अस्य सर्वदेवतात्मकत्वादन्येतरदेवतार्थमपि हूयमानं चेति भावः... अग्नेः सर्वदेवतात्मकत्वं तैत्तिरीया आहुः। 'ते देवा बिभ्यतोऽग्निं प्राविशंस्तस्मादाहुरग्निः सर्वा देवताः' (TS. 6. 2. 2. 6.) इति Sy.
२१. प्रीणयितुम् Sy.
२२. प्राप्तिमत्यः स्तुतयः। ... तमेवाग्निं गच्छन्ति सर्वदेवतात्मकत्वादेव Sy.

एकः[१]। सर्वाणि। सूक्तानि[२]। शृणोतु[३]। मे[४]। बहुप्रैषः[५] प्रैषाः स्तुतिविशेषाः। तरणकुशलः[६]। साधयिता[७] यज्ञस्य। अविच्छिन्नरक्षणः। शिशुः[८] सन्। उद्युक्तान्छत्रून्[९]। यथार्थं समादत्ते[१०]।

**उपस्थायं चरति यत्समारत सद्यो जातस्तत्सार युज्येभिः।**
**अभि श्वान्तं मृशते नान्द्यै मुदे यदीं गच्छन्त्युशतीरपिष्ठितम् ॥४॥**

उपस्थायम्। यदसौ[११]। केनचित् सङ्गच्छते[१२] स[१३] ततः। उपस्थायोपस्थाय[१४]। चरति[१५] काले काल उपतिष्ठते। तदानीमेव[१६]। जातः[१७]। तेजोभी राक्षसान्योद्धुम्। छद्मना[१८] चरति। शमिः[१९] श्रमिपर्यायः[२०]। नन्दनसाधने[२१] यज्ञे। प्रजानां[२२] मुदे[२३]। तासां[२४] श्रान्तिम्। अभिमार्ष्टि[२५]। यदि[२६]। एनम्[२७]। गच्छन्ति[२८]। कामयमानाः[२९] प्रजाः समीपे[३०]। एकभूतं स्थितम्[३१]।

---

१. प्रथमाग्निः Sy.
२. यथांसि स्तोत्ररूपाणि Sy.
३. शृणोति Sy.
४. मदीयानि Sy.
५. कोऽस्य विशेष इत्युच्यते . . . बहुप्रैषभाक्। यद्वा बहुप्रेषणः सर्वस्याज्ञापयितेत्यर्थः Sy.
६. ०लाः P. तारयिता Sy.
७. यज्ञसाधकोऽन्यधीनत्वाद्यज्ञस्य Sy.
८. शिशुवत्प्रियकारी शोचयिता वा शत्रूणाम् Sy.
९. ०क्तं P. एवम्भूतोऽग्निः . . . यज्ञादिसंरम्भवान्सन् Sy.
१०. आदत्ते हविरादिकं स्वीकरोति Sy.
११. यदाऽध्वर्युः Sy.
१२. समागच्छत मथनेनाविरभवत् Sy.
१३. Omitted by M.
१४. उत्पत्त्यनुकूलव्यापारं करोति Sy.
१५. अनुतिष्ठति Sy.
१६. उत्पन्नः सन् Sy.
१७. योद्धुं सम्बद्धुं समर्थः फलैर्मिश्रयितुम्। अर्हैस्तेजोभिर्वा युक्तः सन् Sy.
१८. छद्मना D. अरण्योर्गूढः सञ्चचार। यद्वा युज्येभिरश्वैर्जातमात्र एव सर्वत्र सञ्चचार Sy.
१९. त्वमि P. D. एवं प्रवृद्धोऽयम् . . . श्रान्तं शान्तं वा यजमानम् Sy.
२०. ०वर्यमया P .D.
२१. नन्दनीये कर्मणि निमित्तभूते सति Sy.
२२. ० ना P.
२३. तस्य सन्तोषाय Sy.
२४. तासं P.
२५. अभिमर्शनं करोति। फलप्रदानेनेति भावः। यथा लोके गुर्वादिः श्रान्तं शिष्यादिकं स्पृशति तद्वत् Sy.
२६. यदा Sy.
२७. अग्निम् Sy.
२८. प्राप्नुवन्ति तदाऽभिमुखाते Sy.
२९. का(म)य० M. कामयमाना आज्यधारास्स्तुतयो वा Sy.
३०. ०पं M.
३१. ०तास्थि० M. व्याप्य वर्तमानम् Sy.

स ईं मृगो अप्यो वनर्गुरुप त्वच्युपमस्यां नि धायि ।
व्यब्रवीद्वयुना मर्त्येभ्योऽग्निर्विद्वाँ ऋतचिद्धि सत्यः ॥५॥

स ई[1] मृगः। अग्निः[2]। यजमानम्। मृगयते[3]। उदकहितः[4]। काष्ठानि[5] गच्छन्। समीपस्थायां[6] भूम्यां बर्हिषि। उपधीयते[7] च। वि ब्रवीति[8] च। ज्ञानानि[9]। मनुष्येभ्यः[10]। अग्निः[11]। हि[12]। विद्वान्[13]। ऋतज्ञः[14]। सत्यकर्मा[15]।[16]

## I. 146.

त्रिमूर्धानं सप्तरश्मिं गृणीषेऽनूनमग्निं पित्रोरुपस्थे ।
निषत्तमस्य चरतो ध्रुवस्य विश्वा दिवो रोचनापप्रिवांसम् ॥१॥

त्रिमूर्धानम्। अग्निवायुसूर्यात्मकत्वाद् गार्हपत्यादिभेदाद्वा त्रिमूर्धानमाथर्वणिकैः[17][18]

१. ई P.D.M.

२. स एवाग्निः Sy.

३. मृगो मार्जयिताऽन्वेषणशीलो वा Sy. मृगो मार्ष्टेर्गतिकर्मणः N. 1.20.

४. उभक० M. आप्यो गन्तव्यः। अपः कर्म तत्र साधुर्वा Sy.

५. वनगामी। ऋच्छतेर्गमेश्चेदं रूपम्। यद्वा गमेरेव Sy.

६. ओषध्यादिभिराच्छादितायां वेद्याम् Sy. VM. seems to explain उपमस्यां as समीपस्थायाम्। भूम्यां बर्हिषि may be taken either an explanation of त्वचि (lit. on the skin, or seat) or in apposition to समीपस्थायाम्. In the latter case, त्वचि will be left unexplained.

७. उपमायामुपमात्मदायाम् Sy.

८. विशेषेण ब्रवीत्युपदिशति Sy.

९. ज्ञाति P. प्रज्ञानान्यनुष्ठेयज्ञानानि।... वयुनमिति प्रज्ञानाम। 'वयुनमभिख्या' (Ngh. 3.9.) इति तन्नामसु पाठात् Sy.

१०. मरणधर्मभ्यो यजमानादिरूपेभ्यः Sy.

११. ईदृक्सामर्थ्यमस्तीति दर्शयति। अयमग्निः Sy.

१२. हिशब्दः प्रसिद्धौ Sy.

१३. सर्वज्ञः Sy.

१४. यज्ञस्योदकस्य वा चेतिता ज्ञाता Sy.

१५. सत् क्रियमाणं कर्म। तत्र साधु। सत्सु भवो वा। सत्फलं तदर्हतीति वा। सम्यक्फलप्रद इत्यर्थः। यस्मादयमुक्तसामर्थ्योपेतस्तस्मात् प्रश्नोपदेशो युक्तः Sy.

१६. VM. ignores नि
Ms. D. puts the figure ॥१४५॥ here to indicate the end of one hundred and fortyfifth hymn. No such number is given in P. and M.

१७. अनयाऽग्निर्यज्ञरूपेण स्तूयते। त्रिमूर्धानं सवनत्रयरूपमूर्धत्रयोपेतम् Sy.

१८. ०कै D.

काली कराली च करालजिह्वेत्यर्थाः। सप्तमी रश्मिभिर्युक्ताम्[1]। स्तुहि[2]। द्यावापृथिव्योः[3]। उत्सङ्गे वर्तमानम्। परिपूर्णम्[4]। अग्नेः[5]। निषदनम्[6]। स्थावरजङ्गमयोरभ्युदयाय भवति तम्[7]। विश्वानि[8]। दिवः[9]। नक्षत्राणि[10]। स्वतेजसा पूरयन्तं[11] स्तुहि[12,13]।

**उक्षा महाँ अभि ववक्ष एने अजरस्तस्थावितऊतिर्ऋष्वः।**
**उर्व्याः पदो नि दधाति सानौ रिहन्त्यूधो अरुषासो अस्य ॥२॥**

उक्षा महान्। सेक्ता[14]। महान्[15]। द्यावापृथिव्यौ। अभिवहसि[16]। जरारहितः। तिष्ठति[17]। अभिमुखरक्षणः[18]। दर्शनीयः[19]। भूम्या[20] उत्थितः[21]। उत्तरवेद्याम्[22]। पादम्[23]। निधत्ते[24]। लिहन्ति च।

---

१. सन्तप्तमी P. नियामकसप्तच्छन्दोयुक्तम् Sy. २. ०क्ता P. ३. गृणीहि स्तुहि Sy. ४. अविकलं सम्पूर्णफलम् Sy.

५. अग्निसाध्यमङ्गनादिगुणयुक्तं वा Sy. अग्निम् is suggested for अग्नेः

६. निषण्णम्। मध्ये वर्तमानमित्यर्थः। भूमिस्थद्रव्येण द्युलोकस्थदेवताभिश्च साध्यत्वादिति यावत् Sy.

७. ध्रुवस्य निश्चलस्य। चरतो हविर्भक्षयतो- ऽस्याग्नेः सम्बन्धिनं यज्ञम् Sy.

८. सर्वाणि Sy. ९. देवः M. द्युलोकादा- गतानि Sy. १०. देवविमानानि Sy.

११. सर्वतः पूरयितारम् Sy.

१२. यद्वाऽयमग्निरेवोच्यते। त्रिमूर्धवदत्र क्षित्य- न्तरिक्षद्युलोकाख्यस्थानत्रयोपेतं, लोक- त्रयव्याप्तमित्यर्थः। गार्हपत्यादिस्था- नत्रयवर्तिनं वा। सप्तरश्मि सप्तज्वालम्। अनूनमन्यूनम्। पित्रोर्द्यावापृथिव्योरस्य उत्सङ्गे निषत्तम्... निषण्णम्। आप- प्रिवांसं सर्वतः पूरयन्तं कामानामुक्त- लक्षणविशिष्टमग्निं गृणीषे गृणीहि स्तुहि। किञ्च चरतः सर्वत्र ज्वालाभिर्गच्छतो ध्रुवस्य धृतत्वादविचलितस्य दिवो द्योत- मानस्यास्याग्नेर्विश्वा सर्वाणि रोचना रोचमानानि तेजांसि सर्वत्र व्याप्नुवन्तीति शेषः। ईदृशमग्निं स्तुहीत्यन्तरात्मनः प्रैषः Sy.

१३. VM. ignores अस्य

१४. सक्ता P. सेक्ता फलप्रदानसमर्थ इत्यर्थः Sy.

१५. महा P. अत एव महान् महिम्ना स्वरूपे- णोद्वृत्तवृषभसदृशोऽयमग्निः Sy.

१६. ०थिव्या भविष्टति P. अभि, अभिक्रम्य व्याप्य ववक्षे वहति व्याप्नोतीत्यर्थः।... वृष्ट्यादिप्रदानेन हविर्वहनेन च लोकद्व- यस्य वासिनो देवान्मनुष्यांश्च रक्षती- त्यर्थः Sy. VM. explains ववक्षे by अभिवहसि but ववक्षे can be either 3rd pers. sing. or 1st pers. sing. Ā red. perf. of √ वक्ष् 'to increase'. Sy. derives it from √ वह् but he also cons- trues it as 3rd. pers. sing.

१७. स्थितो वर्तते। यथोक्तगुणो ऽयमित ऊतिरित एव गमनवानस्मद्देवयजनाभि- मुखगमनवांस्तस्थौ वर्तते Sy.

१८. ०खे र० D. प्राप्तरक्षणः सन् Sy.

१९. महान्पूज्यः। महन्नामैतत्। 'ऋष्व उक्षः' (Ngh. 3.3.) इति तन्नामसु पाठात् Sy.

२०. विस्तृताया भूम्याः Sy.

२१. भूम्या...उच्छ्रितः M. २२. सानौ समु- च्छ्रिते प्रदेशे वेदिलक्षणे Sy. २३. पदानि Sy. २४. स्थापयति। करोति Sy.

अस्य । आरोचमाना रश्मयः । उदकायतनं दिवम् ।

समानं वृत्समभि संचरन्ती विष्वग्धेनू वि चरतः सुमेके ।
अनपवृज्याँ अध्वनो मिमाने विश्वान्केताँ अधि महो दधाने ॥३॥

समानं वत्सम् । समानम् । वत्सम् । अभि । सञ्चरन्ती । अहोरात्रे । शोभमाने । विष्वक् । विचरतः । अपवर्जितुमशक्यान् । दीर्घान् मार्गान् । गमनेन परिच्छिन्दती । विश्वान् । आवासान् । प्रति । तेजः । दधाने ।

धीरासः पदं कवयो नयन्ति नाना हृदा रक्षमाणा अजुर्यम् ।
सिषासन्तः पर्यपश्यन्त सिन्धुमाविरेभ्यो अभवत्सूर्यो नॄन् ॥४॥

धीरासः । धीरा अग्निम् । स्थानम् । नयन्ति । कवयः । त्रिषु स्थानेषु । हृदयेनैव ।

---

१. अग्नेः Sy.
२. अथवा आरोचनाः Sy.
३. ऊधःस्थानीयमन्तरिक्षं रिहन्ति लिहन्ति । यद्वाऽस्योध ऊधःस्थानीयं यजमवयास आरोचना ब्रह्मवर्चसेन यजमाना रिहन्ति, अभिमतस्वर्गादीनि लिहन्ति Sy.
४. ०नP.
५. एकमेव Sy.
६. वत्सस्थानीयं पुत्रवद्धर्यहेतुमग्निम् Sy.
७. समानम् । वत्सम् । अभि । is missing in M. अभिमुखम् Sy.
८. सञ्चरन्त्यौ Sy.
९. द्वे धेनू अग्निहितकरणेन प्रीणयित्र्यौ पत्नीयजमानलक्षणे धेनू Sy.
१०. कीदृश्यौ ते ?... शोभनकर्माणौ शोभनमेहने वा परिचरणकुशले इत्यर्थः Sy.
११. सञ्चरतः । स्तनपानादिसदृशेन्धनप्रक्षेपसम्मार्जनादिना सम्यग्वर्धयत इत्यर्थः Sy.
१२. अपवर्जनीयरहितान् Sy.
१३. ०र्गा P. अग्नेः प्रान्तप्रदेशान्केशाद्यमेध्यरहितान् Sy.
१४. निचरतोऽध्व... गमनेन M.
१५. ०न्दति P. सम्पादयित्र्यौ Sy.
१६. सर्वाणि Sy.
१७. आवासा D. प्रज्ञानानि प्रवर्धनविषयाणि Sy.
१८. अधि, अधिकम् Sy.
१९. महान्ति Sy.
२०. धारयन्त्यौ । ईदृश्यावध्वर्युयजमानरूपे जायापतिरूपे वा धेनू विश्वग्विचरतः Sy.
२१. धीमन्तः प्रयोगज्ञा अध्वर्य्वादयः Sy.
२२. ०ग्नि P.
२३. स्थानं वेदिलक्षणम् Sy.
२४. प्रापयन्ति मथनदेशात् गार्हपत्याद्वा । अथवा वक्ष्यमाणलक्षणा यजमानादयः पदमास्पदं सर्वकामानामास्पदमेनं गमयन्ति Sy.
२५. कीदृशास्ते ?... क्रान्तदर्शिनो मेधाविनोऽनूचाना वा । 'ये वाऽनूचानास्ते कवयः' (AB. 2. 2.) इति श्रुतेः Sy.
२६. बहुप्रकारया Sy.
२७. बुद्ध्या Sy.

जरावर्जितमग्निम्। रक्षमाणाः। सम्भक्तुमिच्छन्तश्चाग्नेर्धनस्य। स्यन्दनम्। परितः पश्यन्ति। अग्निं परिचरद्भ्यः। सूर्योऽपि। नेतॄन् रश्मीन्। आविर्भावयति।

**दिदृक्षेण्यः परि काष्ठासु जेन्य ईळेन्यो महो अर्भाय जीवसे।**
**पुरुत्रा यदभवत्सूरहैभ्यो गर्भेभ्यो मघवा विश्वदर्शतः॥५॥**

दिदृक्षेण्यः। दर्शनीयः। दिक्षु। परितः। जनयितव्यः। स्तोतव्यः। महतः पितुः। बालजीवनार्थम्। यस्मादयम्। पुरूणि धनानि। धनवान्। विश्वस्य दर्शनीयः। एभ्यः। गर्भेभ्यः। जीवनाय सूः। एव। भवति।

## I.147.

**कथा ते अग्ने शुचयन्त आयोर्ददाशुर्वाजेभिराशुषाणाः।**
**उभे यत्तोके तनये दधाना ऋतस्य सामन्रणयन्त देवाः॥१॥**

कथा ते अग्ने। कथम्। ते। अग्ने! दीप्यमानाः। गन्तुः। प्रयच्छन्ति। अग्नेः सह।

---

१. अजर्यमजीर्णमेनमग्निम् Sy.
२. धारयमाणाः Sy.
३. एवंरूपास्ते...स्यन्दमानं यज्ञद्वारा फलानि स्रवन्तम् Sy.
४. ०ग्ने...प० M. शुश्रूषन्त इत्यर्थः Sy.
५. एभ्य एवं कुर्वद्भ्यः Sy.
६. सर्वस्य प्रसविताऽयमग्निः Sy.
७. ० वि P. ८. नृभ्यो नेतृभ्यः।...नृनित्यत्र वचनव्यत्ययः। नृन्प्राणिनोऽनुग्रहीतुमिति वा योज्यम् Sy.
९. ०श्मीनं वि० P. ०श्मीनां वि० M. तेषामनुग्रहेण प्रत्यक्षोऽभवत् Sy.
१०. अनुग्रहयुक्त्या दर्शनयुक्तो भवति। यद्वा द्रष्टुमेष्टव्यो दर्शनेच्छाविषयभूतः Sy.
११. परस्परं क्रान्त्वा वर्तमानासु दशसु दिक्षु Sy. १२. अत एव...सर्वत्र प्रादुर्भवनशीलो भवति जयशीलो वा Sy.
१३. प्रयाणसमये...स्तुत्यो भवति Sy.
१४. किमर्थमेवम्।...महतो देवादेः Sy.
१५. अर्भकस्याल्पस्य यजमानादेर्वा जीवसे जीवनाय। हविर्वहनेन धनप्रदानेनेति विवेकः Sy.
१६. यस्मात्खलु Sy. १७. बहुषु देशेषु Sy.
१८. हविर्लक्षणान्नवान् Sy.
१९. सर्वविषयद्रष्टव्यवानयमग्निः Sy.
२०. षष्ठ्यर्थे चतुर्थी। एषामृत्विजां गर्भवच्छिशुवदत्यन्तरक्षणीयानाम् Sy.
२१. प्रसविता, उत्पादयिता Sy.
२२. P. reads आरे and D.M. सूरे for सूः। एव।
२३. भवति। तस्मात्प्राना हुवा रक्षमाणाः कवयः पदं नयन्तीति पूर्वत्र सम्बन्धः Sy.
२४. Ms. D. puts the figure ॥१४६॥ here to indicate the end of one hundred and fortysixth hymn. No such number is given in P. and M.
२५. केनोपायेन Sy.
२६. तव सम्बन्धिनो रश्मयः Sy.
२७. दीप्तिं सर्वत्र चक्षाणाः प्रकटयन्तः Sy.
२८. आयुरायुष्यम्। कर्मणि षष्ठी Sy.
२९. ददति। दाञ् दाने। छान्दसो लिट्। तमुपायमनुगृहाणेत्यर्थः Sy.
३०. ईदृशा रश्मयः...अग्नेः सहितम् Sy.

अश्नुवानाः[1]। देवाः[2]। यदा[3]। पुत्रे[4] त्वयि। तोकभूते[5]। द्यावापृथिवी[6]। निदधानाः[7]। सत्यस्य[8] तव[9]। स्तोत्रे[10]। रमन्तः[11]।

**बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः।**
**पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वन्दे अग्ने ॥२॥**

बोधा मे। बुध्यस्व[12]। अग्ने! मम[13]। इदम्[14]। स्तोत्रम्[15]। युवतम[16]! पूज्यतमम्[17]। सम्भृतम्[18]। अन्नवन्[19]! त्वामयजमानः[20] कश्चित्[21]। हिनस्ति[22]। यजमानः[23]। त्वाम-

---

१. आशु शीघ्रं सम्भक्तार आशूःसम्भक्तारो वा। वाय्वादेरपि शीघ्रं सम्भक्तार इत्यर्थः। यद्वा समन्ताच्छोषयितारः। यद्वा सर्वं व्याप्नुवन्तः Sy. २. व्यवहर्तारो यजमानाः Sy. ३. यस्मात् Sy.
४. अनवच्छेदेन कुटुम्बस्य विस्तारके। यद्वा तोके पुत्रे तनये तत्पुत्रादौ च Sy.
५. पुत्रे Sy. ६. उक्ते अन्नायुषी Sy.
७. धारयन्तः Sy.
८. यज्ञस्य सम्बन्धिनि Sy. ९. त P.D.
१०. स्तोत्रो P. D. साम्नि रथन्तरादौ Sy.
११. रमन्ते रमयन्ति शब्दयन्त्येव वा। यस्मादन्नायुष्पुत्रादिसहिताः सोमेनेष्ट्वा साम्नि रमन्ते तस्माद् रश्मयो ददतीत्यवगम्यत इत्यर्थः। तादृशांस्त्वदीयान्रश्मीन्मामप्यनुगृहाणेत्यर्थः Sy. VM. explains रणयन्त as रमन्तः which is not correct. रणयन्त is imf. inj. Ā. 3rd per. pl. of the caus. of √ रण् 'to rejoice.' Sy. construes it in the present tense. १२. तद्यागादागत्यानामिकया गृहीतं भस्म तूष्णीमुखायां प्रास्य बोधा म इति द्वयृचेनोख्याग्निमुपतिष्ठते... बुध्यस्वाभिप्रायमिति शेषः। यद्वा कर्मणि षष्ठी। मद्वचनं जानीहीत्यर्थः Mah. स्तुतो भवेत्यर्थः Sy. प्रास्योख्यायामुपतिष्ठते बोधा म इति द्वाभ्यां त्रिष्टुब्गायत्रीभ्याम्।... बुध्यस्व U.
१३. मम Mah. मदीयस्य Sy. मम U.
१४. इदानीं क्रियमाणस्य Sy.
१५. स्तुतिरूपस्य वचनस्य। कर्मणि षष्ठी। उक्तलक्षणं वचः Sy.
१६. मिश्रयितृतम, अथवा युवतम U.
१७. ०तम D. M. किम्भूतस्य। भूयिष्ठस्य वचसो मंहिष्ठस्य भूयिष्ठस्यातिशयेन बहु मंहिष्ठं तस्य Mah. अतिशयेन पूजनीयस्य Sy. भूयिष्ठस्य U.
१८. प्रहृतस्य श्रोत्रपथं प्रापितस्य। आदरोक्तस्येत्यर्थः Mah. प्रकर्षेण सम्पादितस्य Sy. श्रोत्रपथं प्रापितस्य U.
१९. स्वधाऽन्नमस्यास्तीति स्वधावांस्तत्सम्बोधने स्वधावः Mah. हविर्लक्षणान्नेन तद्वन्नग्ने Sy. हे स्वधावोऽन्नवन् U.
२०. ० नाः P. २१. त्वशब्द एकशब्दार्थः सर्वादिः... त्व एकः पुरुषः Mah. अत्र यास्कः 'त्वो नेम इत्यर्धस्य' (N. 3.20.) इत्युक्त्वैतदेवोदाजहार। एको जनः Sy. एकः पुरुषः U.
२२. पीयतिराक्रोशतिकर्मा।... पीयति, आक्रोशति निन्दति Mah. वधकर्मैतत्। हिनस्ति। यज्ञादिना न पूजयतीत्यर्थः Sy. आक्रोशतिकर्मा। आक्रोशति ...त्वाम् U. २३. एकस्त्वाम् Mah. एकः Sy. एकः पुरुषः U.

नुस्तौति[1]। तत्राहं[2] त्वां वन्दनकुशलः[3]। तव। तनूम्[4]। स्तौमि[5][6]।

**ये पा॒यवो॑ मामते॒यं ते॑ अग्ने॒ पश्य॑न्तो अ॒न्धं दु॑रि॒तादर॑क्षन् ।**
**र॒रक्ष॒ तान्त्सु॒कृतो॑ वि॒श्ववे॑दा॒ दिप्स॑न्त इ॒द्रि॒पवो॒ नाह॑ देभुः ॥३॥**

ये पायवः[7]। ये[8]। रश्मयः[9]। ते[10]। ममतायाः पुत्रम्[11]। बृहस्पतिशापादन्धीभूतं माम्[12]। पश्यन्तः[13]। उपद्रवात्[14]। चक्षुःप्रदानेन[15] पुराऽरक्षन्[16]। अथ परोक्षः—तानधुनापि[17]। शोभनस्य कर्तॄन्[18]। विश्वधनो-[19]

---

१. त्वां स्तौति। कश्चित् स्तौति कश्चिन्निन्दतीति लोकस्वभावः Mah. अनुकूलमुच्चारयति Sy. स्तौति।...एष लोकस्य स्वभावः कश्चिदाक्रोशति कश्चित् स्तौतीति U.

२. एवं सति Mah. तयोर्मध्ये Sy. एवं च सति U.

३. कीदृशोऽहम्। वन्दारुर्वन्दनशीलः। 'शृवन्द्योरारुः' (P. 3.2.173.) इत्यारुः प्रत्ययः शीलार्थः Mah. वन्दनशीलोऽहम् Sy. वन्दनशीलः सन् U.

४. तनूं P.M. शरीरम् Mah. तनूं तव मूर्तिम् Sy. शरीरम् U.

५. स्तौमि नमामि च 'वदि अभिवादनस्तुत्योः' (I. 11) Mah. स्तौमि Sy. वन्दे U.

६. This stanza is borrowed by YV. 12.42.

७. वायवः P.

८. अत्रेतिहासमाचक्षते। उचथ्यबृहस्पतिनामानौ द्वौ ऋषी आस्ताम्। तत्रोचथ्यस्य ममता नाम भार्या, सा च गर्भिणी। तां बृहस्पतिर्गृहीत्वाऽरमयत्। शुक्रनिर्गमनावसरे प्राप्ते गर्भस्थं रेतः प्राबोधीद्धे मुने रेतो मा त्याक्षीः पूर्वमहं वसामि, रेतःसङ्करं मा कार्षीरिति। एवमुक्तो बृहस्पतिर्बलात् प्रतिरुद्धरेतस्कः सञ्छशाप। हे गर्भ त्वं यतो रेतोनिरोधमकरोस्तस्त्वं दीर्घं तमः प्राप्नुहि। जात्यन्धो भवेति। एवं शप्तो ममतायां दीर्घतमा अजायत। स चोत्पन्नस्तमोऽध्ययथयाऽग्निमस्तौषीत्। स च स्तुत्या प्रीत आन्ध्यं पर्यहरदिति। तदिदमत्रोच्यते Sy.

९. प्रसिद्धाः पालयितारो रश्मयः Sy.

१०. तव सम्बन्धिनः Sy.

११. पुत्रा P. ममतायाः पुत्रं दीर्घतमसम् Sy. ममता नाम काचिदृषिपत्नी तस्या अपत्यम् BB.

१२. चक्षुर्हीनम् BB.

१३. अन्धोऽयमतोऽस्माभी रक्षणीय इत्यवगच्छन्तः सन्तः Sy.

१४. दुष्टं प्राप्ताद् दुःखात् Sy. कूपपतनलक्षणात्।...दुरितशब्दः अवृद्धाविद्रंष्टव्यः BB. १५. ०प्रसादनेन P.

१६. प्रकाशप्रदानेन दुरितहीनमकुर्वन् BB.

१७. धान० M. रश्मीन् BB.

१८. सुखकर्तॄन् Sy. तथा शोभनं कर्म कृतवतः BB.

१९. विश्वप्रज्ञः Sy. त्वं विश्वस्य वेदयिता। 'गतिकारकयोरपि' (Cf. गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च Uṇādi 676) इत्यसुन्। विश्वानि वेदांसि वा यस्य तादृशो भवान् BB.

ऽग्निः। रक्षति[१] ततस्त्व मामिदानीम्[२]। दम्भितुमिच्छन्तः[३][४]। एव। शत्रवः[५]। न। एव[६]। देभुः[७][८]।

**यो नो अग्ने।**

शौनकः—

> द्वावुचथ्यबृहस्पती ऋषिपुत्रौ बभूवतुः।
> आसीदुचथ्यभार्या तु ममता नाम भार्गवी॥
> तां यवीयान् बृहस्पतिर्मैथुनायोपचक्रमे।
> शुक्रस्योत्सर्गकाले[९] तु गर्भस्तं[१०] प्रत्यभाषत॥
> इहास्मिन् पूर्वसम्भूते[११] न कार्यः शुक्रसंकरः[१२]।
> तं शुक्रप्रतिषेधं[१३] तु न ममर्ष बृहस्पतिः॥
> स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति।
> स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः[१४]॥ इति॥

**यो नो॑ अग्ने॒ अर॑रिवाँ अघा॒युर॑राती॒वा म॒र्चय॑ति द्व॒येन॑।**
**मन्त्रो॑ गु॒रुः पुन॑रस्तु॒ सो अ॑स्मा॒ अनु॑ मृक्षीष्ट त॒न्वं॑ दुरु॒क्तैः॥४॥**

यो नो अग्ने। यः[१५]। अस्मान्[१६]। अग्ने! अदाता[१७]। अघमिच्छन्[१८]। अरातित्वयाच्छन्[१९]। अदा-

---

१. ०क्षु M. रक्षति। अस्मत्पालनायेति भावः। तैरस्मानपि रक्षिष्यतीत्यर्थः Sy. ररक्षेः परोक्षे लिट्। आदरेण परिगृह्य पालयेति। 'छन्दसि लुङ्लङ्लिटः' (Pa. 3.4.6.) इति लिट्। परोक्ष एव ररक्ष विशेषेण परिजग्राहेत्यर्थः BB.

२. एवं रक्षितानस्मान् Sy.

३. परिभवितुमिच्छन्तः। . . . दम्भेस्सनि 'सनीवन्तर्ध०' (Pa. 7.2.49.) इतीडागमः। 'दम्भ इच्च' (Pa. 7.4.56.) इतीकारः। अथभावश्छान्दसः। दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् 'हलन्ताच्च' (Pa. 1.2.10.) इति सनः कित्त्वम् BB.

४. ०न्तं P.

५. कामादयः Sy. राक्षसादयः BB.

६. अहेति विनिग्रहार्थीयः। न खलु Sy.

७. दम्भितुं शक्नुवन्ति . . . मद्रा सूक्तद्रष्टा दीर्घतमाः स्वयमेवात्मानं परोक्षतया ब्रवीति Sy. न परिबभूवुः। ततः प्रभृति तथा ररक्षेति। . . . 'दम्भेश्च' (Vār) इति वक्तव्यम् इति लिटः कित्वादुपधालोपः। दभिः प्रकृत्यन्तरं वा BB.

८. VM. ignores अग्ने।
This Stanza is borrowed by TS. 1.2.14.5.

९. ०क्त० P. D. M. १०. ०स्तां D.

११. इहास्मि पूर्वसंभूतो BD.

१२. ०क्त० P.D.M.

१३. तच्छुक० BD. ०क्त० P. D. M.

१४. BD. IV. 11-14. १५. शत्रुः Sy.

१६. ०स्माद् P.D.M. युष्मद्रक्षितान् Sy.

१७. अस्मद्दानप्रतिबन्धक इत्यर्थः Sy.

१८. ०तारमि० P. मारणादिरूपपापेच्छावान् Sy.

१९. स्वयमदानवान् . . . शत्रुत्वमाचरन् Sy.

नेनाथेच्छया[1] च । बाधते[2] । अस्मै[3] । मदीयः[4] सोऽयम्[5] । मन्त्रः[6] । पुनः[7] । गुरुः[8] । भवतु । स मदीयैर्दुरुक्तैः[9] । शरीरम्[10] । अनुलिम्पतु[11] गरिमा गुरुरिति[12] ।

**उत वा यः सहस्य प्रविद्वान्मर्तो मर्तं मर्चयति द्वयेन ।**
**अतः पाहि स्तवमान स्तुवन्तमग्ने माकिर्नो दुरिताय धायीः ॥५॥**

उत वा यः । अपि[13] । च । सहसि भव[14] ! यः । प्रकर्षेण जानन्[15] । मर्तः[16] । मर्तम्[17] । बाधते[18] । पूर्वोक्तेन[19] द्वयेन[20] । अस्मात्[21] । रक्ष । स्तूयमान ! स्तुवन्तम्[22] । अग्ने ! मा । अस्मान् । दुरिताय[23] । स्थापय[24][25] ।

---

१. ०थ० P. मानसवाचिकभेदेन द्विविधेन मन्त्रेण । न ददामीति मानसो मन्त्रः, निन्दाद्यारोपेण दाननिवारणं वाचिको मन्त्रः । यद्वा मायाहेतुकेन विरुद्धरूपेण द्विविधेन मन्त्रेण । यो विरुद्धमाचरति तत्र तत्कीर्तयति यच्च प्रियं ब्रूते तत्र करोति, अन्यत्करोत्यन्यद्वदतीत्येवं मन्त्रस्वरूपद्वैविध्यम् । पूर्वं मानसवाचिकभेदेनेदानीं वाचिककायिकभेदेनेति विवेकः Sy.

२. ईदृशेन मन्त्रेण यः शत्रुर्मर्चयति भर्त्सयति विधेयीकरोति वाऽस्मान् Sy.

३. तस्मै D.

४. ०यं M.

५. ०यमन्तः P.D.

६. मन्त्रैकदेशो मानसरूपः Sy.

७. पुनः पुनः M.

८. षष्ठ्यर्थे चतुर्थी । प्रयोक्तुरेव पुनर्गरितास्तु Sy.

९. ०यैरुक्तैः P.D. दुर्वाक्यैर्निन्दारूपैर्वाचिकैः Sy.

१०. स्वकीयां तनुम् Sy.

११. अलि० P. अनुमार्ष्टु, अनुक्रमेण लुम्पतु । यद्वा स द्विविधो मन्त्रोऽस्मै प्रयोक्त्र एव गुरुर्गरितास्तु । अन्यान्यप्यस्मन्यपकाराय प्रयुक्तानि निष्ठुरभाषणानि सन्ति । तैर्दुरुक्तैः सोऽरातिः स्वतनुमेवावलुम्पतु । स्वात्मानमेवावृत्य वहत्वित्यर्थः Sy.

१२. गारिता गु (र)रिति M.

१३. पूर्वमन्त्रे द्विविधकुटिलमन्त्रेण कर्तारं तन्मन्त्रणं प्राप्नोतु मा, अस्मानित्युक्तम् । अत्र तु तन्मन्त्रणात्पाहीत्यग्निः प्रार्थ्यते Sy.

१४. ०सी P. सह इति बलनाम । तत्र भवाग्ने ! Sy.

१५. मायामन्त्रणं प्रकर्षेण जानन् Sy.

१६. मत्तः M. मरणधर्मा मनुष्यः Sy.

१७. मत्तं M. मनुष्यम् Sy.

१८. विधेयीकरोति भर्त्सयति वा Sy.

१९. पूर्वोक्तरीत्या Sy.

२०. द्विविधमन्त्रेण Sy.

२१. अस्मान् M. तादृशाद् भर्त्सनात् तत्कर्तुः सकाशाद्वा Sy.

२२. स्तुतिं कुर्वन्तम् Sy.

२३. तत्कृताय दुर्मन्त्रणप्रयुक्तदुःखाय समर्थम् Sy.

२४. मा स्थापय । दुरितभाजनं मा कार्षीरित्यर्थः Sy.

२५. Ms. D. puts the figure ॥१४७॥ here to indicate the end of one hundred and fortyseventh hymn. No such number is given in P. and M.

I.148.

मथीद्यदीं विष्टो मातरिश्वा होतारं विश्वाप्सुं विश्वदेव्यम्।
नि यं दधुर्मनुष्यासु विक्षु स्वर्णं चित्रं वपुषे विभावम्॥१॥

मथीद्यदीम्[1]। बलाद[2]ाजहार[3]। यदा[4]। एनम्[5]। एतस्य[6]ावासमनुप्रविष्टः[7]। वायुः[8]। होता[9]रम्। विश्वरूपम्[10]। विश्वदेवहितम्[11]। यं च मातरिश्वनाहुतं[12] तदा[13]। मनोरपत्यभूतासु[14]। प्रजासु[15]। भृगवो[16] निदधुः[17]। आदित्यम्[18]। इव। चित्ररूपम्[19]। सर्वरूपस्य प्रकाशार्थम्[20]। दीप्तम्[21]उत्तरत्र सम्बन्धः[22]।

ददानमिन्न ददभन्त मन्माग्निर्वरूथं मम तस्य चाकन्।
जुषन्त विश्वान्यस्य कर्मोपस्तुतिं भरमाणस्य कारोः॥२॥

ददानमित्। हविः[23] प्रयच्छन्तम्[24]। एव। शत्रूणां[25] मननानि। न। हिंसन्ति[26]। ममापि।

---

१. मथिद्यती P.
२. बा० P.
३. प्रमन्थनात् प्रादर्शयदित्यर्थः Sy.
४. यम् Sy.
५. अग्निम् Sy.
६. ० मस्यावा० P.
७. काष्ठेष्वन्तःप्रविष्टः सन् Sy.
८. वृष्ट्यादिनिर्मात्रन्तरिक्षश्वसनो वायुः Sy.
९. देवानामाह्वातारम् Sy.
१०. अप्स्विति रूपनाम। नानारूपं पार्थिववैद्युतजाठरादिभेदेनाहवनीयादिभेदेन वा। यद्वा कालीकराल्यादिरूपेण ज्वालानां वैरूप्याद्विश्वरूपत्वम् Sy.
११. सर्वदेवयोग्यक्रियासाधुम् Sy.
१२. ०धृतं M. ०हृतवन् P.
१३. तदानीं M.
१४. पुनः स एव विशेष्यते ... मत्वा कर्म कुर्वतीषु। ... मनुष्यशब्दो निरुक्ते बहुधा निरुक्तः Sy. मनुष्याः कस्मात्? मत्वा कर्माणि सीव्यन्ति मनस्यमानेन सृष्टाः। ... मनोरपत्यं मनुषो वा N.3.7.
१५. ऋत्विग्रूपासु प्रजासु Sy.
१६. भगवः P. यजमानाः Sy.
१७. धारयन्ति। ... यद्वा पूर्वं देवा मनुष्यासु मनोरपत्यभूतासु विक्षु प्रजासु प्राणिषु वपुषे स्वरूपाय यागादिस्वरूपप्रकाशाय शरीरधारणाय वा जाठराग्निरूपेण निदधुः स्थापितवन्तः Sy.
१८. तत्र दृष्टान्तः। स्वर्णं स्वरणं स्वीरणं वाऽऽदित्यमिव Sy. स्वरादित्यो भवति। सु अरणः। सु ईरणः। स्वृतो रसान्त्स्वृतो भासं ज्योतिषां स्वृतो भासेति वा N.2.14.
१९. चायनीयम् Sy.
२०. वपुषे यज्ञशरीरसिद्धये Sy.
२१. विविधप्रकाशनवन्तं यथा प्रकाशादिसाधनाय धारयन्ति तद्वत् Sy.
२२. ईदृशं यं निदधुस्तं मथीदिति पूर्वत्रान्वयः Sy.
२३. मननीयं स्तोत्रं हविरादिकं वा Sy.
२४. अग्नये कुर्वाणमेव माम् Sy.
२५. दम्भितारो वैरिणः Sy.
२६. हिनस्ति D. M. दम्भितुं हिंसितुं न प्रभवन्ति Sy.

तस्मै प्रयच्छतः[1]। सोऽग्निः। कवनम्[2]। कामयतु[3]। अनेषन्त[4]। विश्वानि भूतानि[5]। अस्य[6]। स्तुतिकर्म। अग्नेरुपस्तवम्। कुर्वतः[7]। स्तोतुः।

**नित्ये चिन्नु यं सदने जगृभ्रे प्रशस्तिभिर्दधिरे यज्ञियासः।**
**प्र सू नयन्त गृभयन्त इष्टावश्वासो न रथ्यो रारहाणाः ॥३॥**

नित्ये चिन्नु। गार्हपत्ये[8]। यम्[9]। कृण्वन्ति यं च[10]। यज्ञसम्पादिनः[11]। स्तुतिभिः[12]। धारयन्ति[13]। तं सुष्ठु। आहवनीयायतने[14]। प्रणयन्ति[15]। यज्ञार्थम्। परिगृह्णन्तः[16]। अश्वाः। इव। रथसम्बन्धिनः[17]। वेगं कुर्वन्तः[18] प्रणयनार्थम्[19]।

**पुरूणि दस्मो नि रिणाति जम्भैराद्रोचते वन आ विभावा।**
**आदस्य वातो अनु वाति शोचिरस्तुर्न शर्यामसनामनु द्यून् ॥४॥**

पुरूणि दस्मः[20]। बहूनि काष्ठानि[21]। दर्शनीयः[22]। जम्भैः[23]। विनाशयति[24]। अनन्तरं[25] च।

---

१. ०त P. D. मम कोऽतिशय इत्युच्यते। तस्य तादृशस्य प्रदातुर्मम Sy.
२. वरणीयं स्तोत्रादिकम् Sy.
३. कम० P. D. अस्यार्थं कामयते। कनतिः कान्तिकर्मा।... यस्मादेवं तस्मात्त्वं दम्नु-वन्तीत्यर्थः Sy.
४. जुषन्त सर्वे देवाः। अतो न दबभन्तेत्यर्थः Sy.
५. M. adds च after विश्वानि। सर्वाणि हविष्प्रदानादिरूपाणि Sy.
६. अस्य यजमानस्य मम Sy.
७. न केवलमग्निरेव कामयते किन्तु सर्वे देवाः कामयन्त इत्याह... भरमाणस्य कुर्वाणस्य Sy.
८. नित्य एव गार्हपत्यलक्षणेऽग्न्यासादनस्थाने। ... 'नित्यं गतश्रियो ध्रियते नित्यं गार्हपत्यम्'। इति सूत्रात् गार्हपत्यो नित्यः। तदाश्रयत्वात्सदनमपि नित्यमुच्यते Sy.
९. मथनेनोत्पन्नमग्निम् Sy.
१०. नु क्षिप्रं जगृभ्रे गृह्णन्ति Sy.
११. संवा० P. M. यज्ञयोग्या यजमाना ऋत्विजो वा Sy.
१२. गृहीत्वा प्रशस्तिभिः प्रशंसाभिः स्तुतिभिः Sy.
१३. धारयन्त्याहवनीयार्थम् Sy.
१४. ०यतेन D. धृत्वा च, इष्टावेषणसाधने यज्ञे निमित्तभूते सति Sy.
१५. सुष्ठु प्रणयन्ति Sy.
१६. ऋत्विजः Sy.
१७. रथवन्तस्तत्र नियुक्ताः।...ते यथा धृत्वा रथस्वामिनमभिमतदेशं नयन्ति तद्वत् Sy.
१८. रंहसा गच्छन्तः Sy.
१९. VM. ignores चित्। नु
२०. ०स्म M. अत्र दावाग्निरूपेणायं स्तूयते Sy.
२१. वृक्षादीनि Sy.
२२. उपक्षपयिताऽयमग्निः Sy.
२३. दम्भैः M. केन साधनेनेति तदुच्यते। जम्भैर्दन्तस्थानीयाभिर्ज्वालाभिः Sy.
२४. नितरां हिनस्ति Sy.
२५. दाहानन्तरम् Sy.

रोचते। अरण्ये। दीप्तिमान्। अनन्तरम्। अस्य देवस्याग्नेः। शोचिः। वातः। अनुगच्छति। क्षेप्तुः। इव। शरविषयम्। निरसनं वायुः। दिवसान्। लक्षीकृत्य।

**न यं रिपवो न रिषण्यवो गर्भे सन्तं रेषणा रेषयन्ति।**
**अन्धा अपश्या न दभन्नभिख्या नित्यास ईं प्रेतारो अरक्षन् ॥५॥**

न यं रिपवः। न। यम्। शत्रवः। न्यूनीकुर्वन्ति। न च। रिषण्यवः। व्याधादयः। गर्भे। सन्तं तम्। अन्धाः। अदर्शना इत्यात्मनो निर्देशः, ते। न। हिंसन्ति। प्रज्ञानेन किं तर्हि, अनवरतोद्युक्ताः। एनम्। तर्पयितारः। हविर्भी रक्षन्ति।

---

१. दीप्तो भवति Sy.
२. वृक्षादिसमूहात्मके Sy.
३. विविधप्रकाशयुक्तः सन् Sy.
४. ववाग्नेः M. ५. ज्वालानुकूलम् Sy.
६. अग्निसखिभूतो वायुः Sy.
७. अन्विति वीप्सार्थे ... अनुकूलं वाति। ज्वाला आदाय गच्छति Sy.
८. तत्र दृष्टान्तः।...क्षेप्तुः सकाशात् Sy.
९. शरो नाम हिंसासाधनलोहमयमिषुमुखं तत्प्रचुराम्। यद्वा शरो नाम वंशावान्तरजातीयः काष्ठविशेषः। तद्विकारामिषुमिव। ... यद्वा शर एव शर्या। अथवा शरो हिंसा तत्करोतीति शर्या, इषुस्तां यथा वायुर्नोदकजन्यो वेगो वाऽनुकूलं प्रेरयति तद्वत् Sy. शर्या इषवः शरमय्यः N.5.4.
१०. असनां गच्छन्तीम् Sy.
११. प्रतिदिनम् Sy.
१२. VM. ignores आ
१३. अग्निम् Sy. १४. नराः Sy.
१५. न दुःखयन्ति Sy.
१६. न वर्षीष्यवः M. अन्ये हिंसकाः। ... न हिंसन्ति Sy.
१७. व्याघा॰ M. कीदृशास्ते? रेषणा हिंसनस्वभावाः। यद्वा तैः क्रियमाणा हिंसनप्रकारा न हिंसन्ति Sy.
१८. गर्भवद्रक्षकेऽरणिमध्ये Sy.
१९ वर्तमानम् Sy. २०. ॰दर्शोन्तम् P. ॰दर्शोन्त D. २१. अख्याभिख्या, अभितः ख्याति माहात्म्यम्। अन्धा ज्ञानशक्तिरहिता अविद्वांसः Sy.
२२. अन्धराकाद॰ P. अत एवापश्या अद्रष्टारः। यद्वा विद्वांसोऽप्यभावयितारोऽनुपासका इत्यर्थः Sy.
२३. ईदृग्रूपा उभयेऽपि Sy.
२४. न दभ्नुवन्ति न हिंसन्ति। लौकिकोपकारेणापि प्रयोजकत्वादिति भावः Sy.
२५. तर्ह्यस्य पारमार्थिकं रूपं के जानन्तीति चेदुच्यते ... नित्या अविचलितभक्तयोऽग्निहोत्रादिनित्यकर्मरता वा। अग्न्यनुग्रहात्स्वयमपि नित्या भविष्यन्तीति भाविनित्यत्वमाश्रित्य नित्या उपचर्यन्ते। तादृशा यजमानाः Sy. २६. एवम् M.
२७. यज्ञादिना तमेव तर्पयितारः सन्तः Sy.
२८. यज्ञादिरूपेण भजन्त इत्यर्थः Sy.
२९. VM. ignores अभिख्या
Ms. D. puts the figure ॥१४८॥ here to indicate the end of one hundred and fortyeighth hymn. No such number is given in P. and M.

## I.149.

**म॒हः स रा॒य एषं॑ते॒ पति॒र्दन्नि॒न इ॒नस्य॒ वसु॑नः प॒द आ ।**
**उप॒ ध्रज॑न्त॒मद्र॑यो वि॒धन्नित् ॥१॥**

महः स रायः[1]। महत्[2]। सः[3]। धनम्[4]। स्वामी[5]। प्रयच्छत्[6]। प्रागच्छति[7][8]। ईश्वरः[9]। ईश्वरस्य[10]। वासयितुर्यजमानस्य[11]। गृहे[12]। तमागच्छन्तम्[13]। ग्रावाणः[14]। परिचरन्ति[15][16]।

**स यो वृषा॑ न॒रां न रोद॑स्योः॒ श्रवो॑भि॒रस्ति॒ जी॒वपी॑तसर्गः ।**
**प्र यः स॑स्रा॒णः शि॑श्री॒त योनौ॑ ॥२॥**

स यो वृषा। सः[17]। यः[18]। वृषा[19]। यजमानानाम्[20]। न[21]। द्यावापृथिव्योः[22]। श्रवैः सह। भवति[23]। प्राणिभिरुपयुक्तधनविसर्गोऽप्रवृक्ते कर्मणि[24]। गार्हपत्ये[25]। सस्राणः[26]।

---

१. Omitted by P. and D.
२. महतः पूज्यस्य Sy.
३. अग्निः Sy.
४. गवादिरूपस्य धनस्य Sy.
५. पालकः स्वामी Sy.
६. यदभिमतं प्रयच्छन् Sy.
७. आभिमुख्येनास्मद्देवयजनं प्रति Sy.
८. गच्छति Sy.
९. स्वामी, सर्वस्य पतिरित्यर्थः Sy.
१०. स्वामिनोऽपि Sy.
११. ईदृशोऽयं वसुनो धनस्य Sy.
१२. आस्पदभूते वेदिस्थाने, आ आश्रयति। उपसर्गवशाद्योग्यक्रियाध्याहारः। यद्वा वसुनो निवासयोग्यस्य धनस्यापि, इन इति सम्बन्धः। यद्वा वसुप्राप्तिः प्रतिष्ठा Sy.
१३. उपगच्छन्तमेनमभिषवार्थम् Sy.
१४. ०र्ण P.D. ग्राववन्तो यजमानाः Sy.
१५. परिचरन्त्येव। 'विध विधाने' तौदाविकः। ... निघाताभावश्छान्दसः। यद्वा पूर्वत्र तच्छब्दश्रुतेरत्र यच्छब्दाध्याहारेणास्य सम्बन्धादनिघातः। यद्वाऽद्रयोऽभिषवग्रावाणः स्वशब्दैरुप, उपेत्य विधन्नित्पूजयन्त्येव। आह्लादं जनयन्तीत्यर्थः Sy.
१६. VM. ignores आ। इत्
१७. तादृशः Sy.
१८. अग्निः Sy.
१९. सेक्ता। उत्पादक इत्यर्थः Sy.
२०. मनुष्याणाम् Sy.
२१. इव Sy.
२२. एवं सर्वोत्पादकः श्रवोभिः सर्वत्र श्रूयमाणैर्यशोभिर्युक्तः सन् Sy.
२३. वर्तते Sy.
२४. सर्वोत्पादक इत्युक्तं तत्रोपपत्तिमाह। यतोऽयं जीवपीतसर्गः। जीवैर्नानाविधैः पीत आस्वादितः सर्गः सृष्टिक्रमो यस्य स तथोक्तः। ... अत्रायं सृष्टिक्रमः। अयमग्निः स्वदत्तं हविरादित्यं प्रापय्य तद्रश्मिभिः सह वैद्युतरूपेण मेघद्वारोदकेन प्रवर्ष्य सर्वान्प्राणिनः प्रापयति, इत्यतो वृष्ट्युत्पादनद्वारोत्पादयिता Sy
२५. ०त्ते M.D.
२६. इदानीं साक्षादुत्पादकत्वमाह। योऽग्निः ... गर्भाशये Sy.
२६. सहस्राणः M. प्रविष्टः सन् Sy.

प्रश्रितो[1] भवति[2]।

**आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्वा ।**
**सूरो न रुरुक्वाञ्छतात्मा ॥३॥**

आ यः पुरम्। यश्च[3]। नर्मणोऽसुरस्य[4]। पुरम्[5]। अज्वलयत्[6]। अतनशीलः[7]। कविः[8]। नभसि भवो[9] वायुः। इव। गमनशीलः[10]। सूर्यः। इव। रोचमानः[11]। अनेकशरीरः[12][13]।

**अभि द्विजन्मा त्री रोचनानि विश्वा रजांसि शुशुचानो अस्थात् ।**
**होता यजिष्ठो अपां सधस्थे ॥४॥**

अभि द्विजन्मा। अभितिष्ठतु[14]।

---

१. प्रा० M. निषिक्तं रेतः पारयति। नृपश्वादिदेहाकारेण परिणमयतीत्यर्थः। यद्यग्निर्न पचेत् पुरयेदेव नोत्पद्यते। तस्मादयं साक्षादेवोत्पादकः। स तादृशो-ऽग्निर्यशस्वी वर्तत इत्यर्थः। यद्वा योऽ-ग्निर्नरो न नराणां कर्मसूत्साहयुक्तानां यजमानानामिव ... तेषां यथा स्वर्गा-द्यभिमतवर्षकस्तद्वद्द्योदस्योरपि। श्राव्य-यवाचिना शब्देनाश्रयिणो लक्ष्यन्ते। भूलोकवर्तिनां वृष्टिप्रदानेन द्युलोकव-र्तिनां हविष्प्रापणेनेति भावः। स तादृ-शोऽग्निः श्रवोभिर्हविर्लक्षणैः सोमाज्या-दिभिरन्नैर्निमित्तभूतैर्जीवपोतसर्गो जीव-विशेषैर्यजमानैरविशेषेण सर्वैर्वाऽऽस्वा-दितस्वभावः सन्नस्ति प्रकृष्टो वर्तते। अमुर्माणि हविर्भिः प्रीणयित्वा स्वाभि-मतान्भोगान् भुञ्जत इत्यर्थः। किञ्च योऽग्निर्योनौ स्वकीयस्थाने वेदिलक्षणे सत्राणः प्रविष्टः सञ्छिद्रश्रीत स्वस्मि-न्नाप्तं पुरोडाशादिकं पचति सोऽयम-ग्निरस्ति महानुभावो वर्तते Sy. नरा मनुष्या नृत्यन्ति कर्मसु N.5.1.

२. VM. ignores यः

३. अग्निः Sy.

४. नर्मवतीं यजमानानां सम्बन्धिनीम् ... यद्वा नृणां मनसि स्थितां यजमा-नानां यज्ञार्थं यां भूमिं प्रत्यग्न्यागमन-मनीषा विद्यते ताम् Sy.

५. उत्तरवेदिम् ... पुरं तत्स्थानम् Sy.

६. दीपयति Sy.

७. कीदृशोऽयम्? अत्योऽपेक्षितदेशं प्रत्य-तनशीलः Sy. ८. क्रान्तदर्शी Sy.

९. न भवति P.M. नभस्याकाशे भवो नभस्वान्वायुरिव Sy.

१०. अरणकुशलः Sy. ११. दीप्यमानः Sy.

१२. शतात्मा। शतं सहस्रमित्यपरिमित-वचनः। तत्तद्यजमानगृहापेक्षयाऽऽहव-नीयगार्हपत्याद्यपेक्षया वा नानारूपत्वम्। अथवा मित्रवरुणभेदेनाग्नेर्मित्रादिरूपं 'त्वमग्ने वरुणो जायसे यत्' (RV. V.3.1.) 'इन्द्रं मित्रं वरुणमग्निमाहुः' (RV. I.164.46.) इत्यादिश्रुतिषु प्रसिद्धम्। अग्नेरेवेन्द्राद्यात्मकत्वमाहु-रिति द्वितीयमन्त्रस्यार्थः Sy.

१३. अतः स तादृशोऽग्निरस्त्युत्कृष्टं वर्तत इति पूर्वत्रान्वयः Sy.
VM. ignores आ

१४. अभितः... तिष्ठति Sy.

अरण्योर्जातः[1]। त्रीणि। तेजांसि[2]। त्रींश्च[3]। लोकान्[4]। दीप्यमानः[5]। होता[6]। यष्टृतमः[7]। अन्तरिक्षे[8]। वर्तमानः[9]।

**अयं स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या ।**
**मर्तो यो अस्मै सुतुको ददाश ॥५॥**

अयं सः। अयम्। सः। होता[10]। यः[11]। अरण्योर्जातः[12]। विश्वानि। दधे[13]। वरणीयानि। अन्ननिमित्तानि[14]। मनुष्यः[15]। यः। अग्नये[16]। शोभनापत्यः[17]। प्रयच्छति[18]।[19]

## I. 150.

**पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा । तोदस्येव शरण आ महस्य ॥१॥**

पुरु त्वा। बहु[20]। त्वा[21]। हविः प्रयच्छन्[22]। स्तौमि[23]।

---

१. अयमग्निर्द्विजन्मा द्वाभ्यामरणीभ्यां जायमानः। यद्वा मथनात्प्रथमं जन्म, उत्पत्त्यनन्तरं पवमानेष्ट्यादिसंस्काररूपं द्वितीयं जन्म। एवं द्विजन्मत्वम्। अथवा द्यावापृथिवीभ्यामुत्पन्नत्वात् Sy.
२. तादृशोऽग्निः ... त्रीणि रोचनानि क्षित्यादिस्थानानि गार्हपत्यादीनि वा Sy.
३. न केवलं त्रीण्येव किन्तु विश्वा ... सर्वाण्यपि Sy. ४. रञ्जनात्मकानि क्षित्यादिलोकान् Sy. ५. प्रकाशयन् दीपयन् Sy. दीपयमानः is suggested for दीप्यमानः ६. देवानामाह्वाता Sy. ७. यष्टृतमः सन् Sy.
८. अपां प्रोक्षण्याद्युदकानां सधस्थे सहस्थाने यागदेशे Sy.
९. ० ना P. अरण्यात् तिष्ठति Sy.
१०. हो P. होमनिष्पादकः। अरणीभ्यामुत्पन्नस्यैव गार्हपत्यद्वाराऽऽहवनीयत्वाद्वाह्वाता वा देवानां सः Sy.
११. यो द्विजन्मा स एव Sy.
१२. ०ता P. १३. धारयति Sy.
१४. श्रवस्या। अन्नोऽन्नं हविर्लक्षणं तदिच्छया Sy. १५. मर्त्यः Sy.
१६. अग्नेये P. यस्मा उक्तस्वरूपायाग्नये Sy.
१७. शोभनपुत्रो भवति Sy.
१८. ददाति सः Sy.
१९. Ms. D. puts the figure ॥१४६॥ here to indicate the end of one hundred and fortyninth hymn. No such number is given in P. and M.
२०. यद्वा बहु दाश्वानिति सम्बन्धः। पुत्रं देहि वित्तं देहीत्याद्याशासनानि ब्रवीमीत्यर्थः Sy. बहु। किम्? सामर्थ्याद्धविः। यत्त्वद्दैवत्यं यच्चान्यद्दैवत्यं तत्सर्वम् SKN.
२१. त्वाम् Sy; Dur. त्वामेव SKN.
२२. ०न् M. किं तूष्णीं नेत्याह। यतो दाश्वानभिमतं हविर्दत्तवानस्मि, अतो वोचे Sy. तुभ्यं ददद्हम् SKN. दानवानहम् Dur.
२३. यस्मादेवं तस्मादभिमतं बहु वोचे त्वमपि तत्सर्वं देहीत्यर्थः Sy. ब्रवीमि। किम्? सामर्थ्यादागच्छेति। आह्वयामीत्यर्थः। अत्रैकवाक्यतार्थं यस्मात्तस्मादित्यध्याहार्यम्। तस्मादत्र त्वामेव वोचे यस्मात् SKN. आह्वयामीत्यर्थः Dur.

अभिगन्ता। अग्ने! तवाभवति? प्रेरकस्य धनानाम्। उदारस्य। गृहे। अभिगन्ता यथा भवति।

---

१. आ आभिमुख्येनारिः, भर्ता हविरादिप्रापणेन सेवकोऽहम् Sy.
ईश्वरस्त्वं सर्वहविषाम्... अन्यदेवतानामपि त्वय्येव हव्यस्य होमात्... अरिरमित्रः प्रसिद्धस्योपादानं यथाऽरिर्ऋच्छतेर्गत्यर्थस्य शत्रून्प्रति गच्छत्यसौ तैर्वाऽर्यते। एवमीश्वरोऽपि तेन तेन भूतानुग्रहेण सर्वप्रवृत्तिर्गतिः। अर्यतेर्वाऽर्यो भृत्यजनेन। यद्यस्मादन्यदेवत्या अप्यग्नावाहुतयो हूयन्ते सवनीयादिदेवेभ्यो विभजन्ते भृत्यजनेभ्य इत्येवमेतद्दृष्ट्वोपलभ्य पतिस्त्वं सर्वहविषामित्येवमदक्षन्मन्त्रदृक्।...आकारः पादपूरणः SKN.
सुचिरमपि विचार्य तवाहमरिरेव स्तोमानामुच्चारणेऽर्य ईश्वर एव। समर्थोऽहमाह्वयामि त्वां स्तोतुं बहु च दातुमित्यभिप्रायः Dur.

२. तमाभ० P. इतरसाधारण्येन ब्रुवतः (ते) कथं दातव्यमिति न मन्तव्यं, यतोऽहं हे अग्ने तव स्वित् तवैव Sy.
स्विदेवार्थे तवैवाहं स्वभूत इति शेषः SKN. ३. तत्र दृष्टान्तः... तोदस्येव शिक्षकस्य स्वामिनः Sy.
कथमिव स्वभूत इति, उच्यते। तोदस्येव तुदति भृत्यजनांस्तैर्वा तोदमात्मन इच्छतीति गृहस्थोऽत्र तोदोऽभिप्रेतः। यथा तोदस्य गृहस्थस्य SKN.
विदीर्णस्य कस्यचिच्छ्वभ्रस्य कूपस्योपरि... एवमत्र शब्दसारूप्यादुपमार्थोपपत्तेश्च तोदशब्दस्तुदस्य भूप्रवेशस्याभिधायक उपपद्यते। स्त्रिया अपि चालतप्रवेशस्तोद उच्यते Dur.

४. महतः Sy., SKN., Dur.

५. शरणेऽस्य गृहे यथा गर्भदासादिः, आ समन्तान्नियतो वर्तते तद्वदहमपि Sy.
गृहनामैतत्। गृह आत्मीये च किञ्चित्सर्वं स्वभूतं भवति तद्वदहमित्यर्थः। प्रसिद्धस्त्वमेव नान्यद्देवतान्तरम् SKN.
आश्चर्यं। ... बिले 'शृ हिंसायाम्' तस्य शरणं बिलम्। तद्विदारितं भवति। यथा हि श्वभ्रे बिले कस्मिंश्चिद्बह्व्य आपो गच्छन्ति न च तस्य श्वभ्रस्य महतो ग्रहणशक्तिपरिहाणं भवत्येवं तवानेकाश्चानेकदेवताश्चाहुतीरस्माभिः प्रत्ताः प्रतीच्छतो न सामर्थ्यपरिहाणमस्ति। अतो देवतानामस्माकं त्वमेवातिविशिष्टोपकारप्रवृत्तोऽतस्त्वामेवाह्वयामि Dur.

५. तोदस्तुदतेः ... बहु दाश्वांस्त्वामेवाभिह्वयामि। अरिरमित्र ऋच्छतेः। ईश्वरोऽप्यरिरेतस्मादेव। यदन्यदेवत्या अग्नावाहुतयो हूयन्त इत्येतद् दृष्ट्वैवमवक्ष्यत्। तोदस्येव शरण आ महस्य। तुदस्येव शरणेऽधि महतः N. 5.7; SKN. II. 322.

७. V.M. ignores. स्वित्। आ। आ

**व्यंनिनस्य धुनिनंः प्रहोषे चिदररुंषः । कुदा चुन प्रजिगंतो अदेवयोः ॥२॥**

अनिनस्य[1]। ईश्वरवर्जितस्य[2]। धनिनोऽपि[3]। प्रहोषे=प्रकृष्टे यज्ञशब्दे[4]। अपि[5]। तद्[6] धनमप्रयच्छतः[7]। कदा। चिदपि[8]। स्वैरं गृहादन्यत्र प्रयच्छतो यदा गन्तुमिच्छति तदानीमेवानवेक्ष्याप्यतिथीन्[9] निर्गच्छतः[10]। देवांश्चानिर्गच्छतः[11] कदर्यस्यारिरभिगन्ता वृद्धो[12] भवति।

**स चुन्द्रो विप्र मर्त्यो मुहो व्राधन्तमो दिवि । प्रप्रेत्ते अग्ने वुनुषंः स्याम ॥३॥**

स चन्द्रः। सः[13]। ह्लादयिता[14] देवमनुष्याणाम्। मेधाविन्! मनुष्यः[15]। वर्धमानतमो[16] भवति।

---

१. पूर्वमन्त्रे त्वामीष्टं बहु विज्ञापयामीत्युक्तम्। अत्र तु स्वविलक्षणेभ्यो दानादिरहितेभ्यो दानं न दातव्यमिति प्रार्थ्यते। हे अग्ने त्वां विशेषेण ब्रवीमि। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। अथवा सन्निहितत्वाद् वोच इत्यनुषज्यते। अस्मदर्थं यद् व्यजिज्ञपं तद्विरुद्धं वोचे। वक्ष्यमाणस्वरूपस्य न दातव्यमिति ब्रवीमीत्यर्थः Sy.

२. तेषां स्वरूपमाह ... अस्वामिनः। स्वामस्वामिनं कुर्वाणस्य Sy.

३. तथा धनिनः समग्रधनवतः। पूर्वमेव धनवतः। दानस्य निरर्थकत्वात्तन्निवार्यते। यद्वा यागाद्यनुपयोगिधनवत इत्यर्थः Sy.

४. याज्ञा D.P. प्रकर्षेण होतुम्। ... यद्वा प्रहोषेऽनिनस्येति सम्बन्धः। प्रकर्षेण होतुमसामर्थ्यस्येत्यर्थः। अत्रैनशब्देन तत्स्थं सामर्थ्यं लक्ष्यते Sy.

५. चि P. चिच्छब्दः समुच्चयार्थः Sy.

६. तं P. ७. अददतो दक्षिणारूपेण Sy.

८. अत्र चनेति निपातद्वयसमुदायः। तत्र चशब्दः समुच्चये नशब्दो निषेधे Sy.

९. ०थिः P.

१०. ०मेव ... नि० M. कदाचिदपि प्रकर्षेण देवानस्तुवतः ... यद्वा चनेति चिच्छब्दपर्यायः। उक्तप्रकारेण दुष्टस्यापि कदाचित्प्रजिगतो यदा कदाचित् त्वां स्तुवतो विवोचे। तादृशस्य दातव्यमिति विशेषेण ब्रवीमि। किमु वक्तव्यमस्मदर्थमिति भावः Sy.

११. श्च निच्छतः P. देवानात्मनोऽनिच्छतः। एतेषां न दातव्यमिति विवोच इत्यर्थः। निन्दितानां स्वरूपनिरूपणेन स्वस्यातादृशत्वाद् बहु वोच इत्येतदुक्तमेवेत्युक्तं भवति Sy.

१२. कदर्स्यारि रभिगन्तद्वृद्धो P. व्यृद्धो M. VM. ignores वि

१३. यो मर्त्यस्त्वां यजते सः Sy.

१४. सर्वेषामाह्लादकश्चन्द्रसदृशो भवति। यद्वा चन्द्र एव भवति। यजमानानां चन्द्रत्वप्राप्तिं छन्दोगा आमनन्ति 'पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा' (Chā.U.5.10.4.) इति। 'सोमलोके विभूतिमनुभूय' (Praśna.U.5.4.) इति च। तथा मुण्डकेऽपि द्युलोकप्राप्तिराम्नायते 'एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति, तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः' इति, 'एष वः पुण्यः सुकृतो ब्रह्मलोकः' (Mu.U.1.2.5-6) इति च Sy.

१५. यजमानः Sy. १६. मे ... व० M. प्रवृद्धतमः। इतरदेवानामपि श्रेष्ठः Sy.

महान्[1]। स्वर्गलोके[2] वयं च। त्वत्प्रीत्यर्थम्[3]। प्रयच्छन्तः[4]। प्र[5] स्याम[6]।[7]

## I. 151.

**मित्रं न यं शिम्या गोषु गव्यवः स्वाध्यो विदथे अप्सु जीजनन् ।**
**अरेजेतां रोदसी पाजसा गिरा प्रति प्रियं यजतं जनुषामवः ॥१॥**

मित्रं न यम्। सखायम्[8]। इव। यम्[9]। कर्माभिलषितासु[10]। गोषु[11]। गा इच्छन्तः[12]। प्रादुर्भावयन्ति[13]। यज्ञे[14]। उदकार्थम्[15]। सुकर्माणः[16]। तस्योद्यतो बलेन[17]। वाचा च[18]। द्यावापृथिव्यौ। अरेजेताम्[19]

---

१. महतोऽपि Sy. २. द्युलोके Sy.
३. अतः, अग्ने ते तव प्रप्रेत्प्रकर्षेणैव ... यद्वा प्रीणयित्वा प्रप्रेत् स्याम Sy.
४. सम्भक्तारः स्याम Sy.
५. प्रव P. D.
६. The passage beginning with प्रयच्छन्तः and ending with स्याम is omitted by M. प्रकृष्टा एव भवेम Sy.
७. VM. ignores इत्। अग्ने
Ms. D. puts the figure ॥१५०॥ here to indicate the end of one hundred and fiftieth hymn. No such number is given in P. and M.
८. मित्रमिव स्थितम् Sy.
९. अग्निम् Sy.
१०. कर्मनामैतत्, 'शिमी शक्तिः' (Ngh. 2.1.) इति तन्नामसूक्तत्वात्। प्रकाशवृष्ट्युत्पादनादिकर्मणा। .... यद्वा शिम्या, इत्येतत्क्रियया सह सम्बध्यते Sy.
११. यज्ञेषु निमित्तभूतासु Sy.
१२. गा आत्मन इच्छन्तः। अत्र यद्यपि गव्यव इत्येतावत्तं न गोष्विति। तथापि गव्यव इत्यत्र गोस्वामित्वं प्रतिपाद्यते। तच्चैकया द्वित्राभिरपि स्यात्। अतः स्पृहणीया बह्वय इत्यवगमयितुं गोष्विति पदम्। यथा 'गवामस्मि गोपतिः' (RV. VII.98.6ᵉ) Sy.
१३. शिम्या मथनादिकर्मणा ... जनयन्ति यजमानाः। यद्वा, अप्सु निमित्तभूतासु जीजनन्त्सर्वप्राणिनामुपकाराय वृष्ट्यर्थं चेत्यर्थः Sy. १४. यागे Sy.
१५. अप्सु, अन्तरिक्षे वैद्युतरूपेण वर्तमानम्। आप इत्यन्तरिक्षनाम। 'आपः पृथिवी' (Ngh.1.3.)इति तन्नामसूक्तत्वात् Sy.
१६. सुष्ठु, आध्यातारः फलस्योत्पादयितारः शोभनध्याना वा Sy.
१७. बालेन P. एवमुत्पन्नस्याग्नेः पाजसा बलेन Sy.
१८. भयङ्करशब्देन च Sy.
१९. अकम्पेताम्। अग्नेः सकाशात्कम्पनम् 'अरेजेतां रोदसी होतृवूर्ये' (RV.I.31.3ᶜ) इत्यादिश्रुतिषु प्रसिद्धम्। न च सर्वरक्षणार्थमुत्पादितोऽग्निर्लोकद्वयस्य भीतिमजनयत्, किमेतदिति वाच्यम्, निन्दास्तुतित्वात्। यथा लोकौ बिभीतस्तथा प्रवृद्धोऽभवदिति स्तुतौ पर्यवसानात्। यद्यप्यत्राग्निरेव प्रतिपाद्यते मित्रस्तु परं दृष्टान्तित एव तथापि द्युस्थानस्याग्नेरेव मित्रत्वान्मन्त्रस्य मैत्रत्वमविरुद्धम्। यद्वा मित्रं न सखायमिव स्थितं मित्रनामकं देवं यज्ञेऽन्तरिक्षे चर्त्विजः प्रादुर्भावयन्ति Sy.

तं प्रियम्[1]। यजनीयं[2] मित्रम्। प्रति[3]। जन्मवतां[4] मनुष्याणाम्[5]। रक्षणमास्ते, इयं मैत्री।

**यद्ध त्यद्वां पुरुमीळ्हस्य सोमिनः प्र मित्रासो न दधिरे स्वाभुवः।**
**अध क्रतुं विदतं गातुमर्चत उत श्रुतं वृषणा पस्त्यावतः ॥२॥**

यद्ध स्यत्। यदा[6]। खलु[7]। वाम्[8]। इदम्[9]। यजमानस्य[10]। पुरुमीळ्हस्य[11]र्त्विजः। मित्राणि[12]। इव[13] मित्रम्। अप्रतीऽकुर्वन्[14]। अनन्तरम्[15]। युवयोरागमनम्[16]। श्रद्धानाय तस्मै प्रीत्यर्थम्[17]। तत् कर्म। विदितम्[18]। अपि च। अशृणुतं[19] स्तुतिम्[20]। वर्षितारौ[21]। गृहवतस्तस्य[22] पुरुमीळ्हगृहस्थस्य[23][24]।

**आ वां भूषन्क्षितयो जन्म रोदस्योः प्रवाच्यं वृषणा दक्षसे महे।**
**यदीमृताय भरथो यदर्वते प्र होत्रया शिम्या वीथो अध्वरम् ॥३॥**

आ वां भूवन्। युवयोः[25]। द्यावापृथिव्योः[26]। अहोरात्रात्मना जन्म[27]। सर्वाः प्रजाः[28]।

---

१. प्रियं सर्वेषां प्रियतमं प्रीणयितारं वा Sy.
२. यष्टव्यमग्निम् Sy.
३. निमित्तीकृत्य Sy.
४. प्रति। जन्मवतां is missing in M.
५. प्राणिनाम् Sy.
६. हे मित्रावरुणौ यद् यस्मात्कारणात् Sy.
७. ह इति पूरणः Sy.
८. युवाम् Sy.
९. त्वदुक्तलक्षणं कर्म Sy.
१०. जनमा॰ P. सोमिनः स्वाभुवः सोमवतः स्वाभवनशीलस्य। कर्मणि षष्ठी Sy.
११. बहुलाभीष्टसेचनस्य Sy.
१२. मित्राणीव मित्रभूता ऋत्विजः Sy.
१३. ॰णीति व M.
१४. प्रकर्षेण धारयन्ति Sy.
१५. अतः कारणात् Sy.
१६. युष्मद्गमनम् Sy.
१७. अर्चते। षष्ठ्यर्थे चतुर्थी। अर्चतः पूजयतो यजमानस्य Sy.
१८. अवि॰ P. जानीतम् Sy.
१९. शृणुतम् Sy.
२०. आह्वानं स्तोत्रं वा Sy.
२१. कामानां वर्षितारौ युवाम् Sy.
२२. पस्त्या, इति गृहनाम। 'पस्त्यं दुरोणे' (Ngh.3.4.) इति तन्नामसूक्तत्वात्। तद्वः प्राचीनवंशादिगृहवतो यजमानस्य Sy.
२३. यद्वा यद्यस्मात्सोमिनः सोमवतः पुरुमीळ्हस्यैतन्नामकस्य राज्ञो मित्रासो न मित्राणीव स्थिताः स्वाभुवः स्वाभवनशीलाः स्वस्वव्यापारसमर्था दधिरे, अधातः कारणात्तस्यार्चतेऽर्चतः क्रतुं विदतमित्यादि पूर्ववत् Sy.
२४. VM. ignores स्वाभुवः
२५. हे वृषणा कामानां वर्षितारौ हे मित्रावरुणौ वां युवयोः सम्बन्धि Sy.
२६. द्यावापृथिव्योः सकाशात्। द्यावापृथिवीभ्यामेव सर्वेषामुत्पत्तेः। यद्वा मित्र इति सर्वोपकारी, अग्निरुच्यते वरुण इति तमोनिवारक आदित्य उभयोः पृथिवीद्युस्थानत्वात्। ततः पूर्वमन्त्रे मित्रदृष्टान्तत्वेनाग्निः स्तुतः। अत इदमधिगम्यतेऽग्निरेव मित्र इति। तथाऽन्यत्रापि Sy.
२७. जननम्, उत्पत्तिम् Sy.
२८. क्षितयो मनुष्या यजमानाः Sy.

अलङ्कुर्वन्ति[1]। स्तोत्रैः प्रकर्षेण[2] वाच्यम्। महते। वर्धमानाय[3] तत्। यत्[4]। यजमानम्[5]। अन्नम्[6]। अश्वं[7] प्रति। वाहयथस्तदानीम्[8]। तस्य यज्ञम्। स्तुत्या[9]। होमादिकर्मणा[10] च हेतुभ्याम्[11]। प्रगच्छतः[12]।[13]

**प्र सा क्षितिरसुर या महि प्रिय ऋतावानावृतमा घोषथो बृहत्।**
**युवं दिवो बृहतो दक्षमाभुवं गां न धुर्युप युञ्जाथे अपः ॥४॥**

प्र सा क्षितिः। प्रकृष्टा[14]। सा भवति। पृथिवी[15]। हे बलवन्तौ[16]! या। अत्यन्तम्[17]। युवयोः प्रिया[18]। सत्यवन्तौ[19]! सत्यमन्धकारापनोदनेन[20]। अत्यन्तम्[21]। आघोषथः[22] प्रकाशयथस्तेजसा[23]। युवाम्। दिवः[24]। महतः[25]। बलकरम्[26]। आभवनशीलमश्वम्[27]। गामनड्वाहम्[28]। इव। धुरि[29]।

---

१. सर्वतोऽलङ्कुर्वन्ति श्लाघन्त इत्यर्थः Sy

२. स्तुत्यं तादृग्युवयोर्जन्म Sy.

३. सर्वविषयबलाय Sy.

४. जन्मनः प्रवाच्यत्वमाह। यदीं यस्मादेव कारणात्। अथवा। ईमित्यनर्थकः। 'मिताक्षरेष्वनर्थकाः कमीमिद्विति' (N.1.9.) इत्युक्तत्वात् Sy.

५. यद् यस्माच्च कारणाद्वर्तते युष्मान्प्राप्तवते यजमानाय च Sy.

६. ऋताय यज्ञाय भरथः सामर्थ्यम् Sy.

७. ०श्व D.

८. वाहरथ० P. वाहरथ० D. M. भरथोऽभिमतं फलम्। अथवोभयत्र कर्मणः सम्प्रदानत्वाच्चतुर्थी, यज्ञं यजमानं च भरथ इत्यर्थः Sy.

९. यस्माच्च होत्रया स्तुतिरूपया वाचा ...होत्रेति वाङ्नाम। 'होत्रा गीः' (Ngh. 1.11.) इति तन्नामसु पाठात् Sy.

१०. शिम्या हविष्प्रदानादिकर्मणा च Sy.

११. ०भ्यः P.

१२. ०तं P.D. प्रकर्षेण प्राप्नुथः। तस्मात्प्रवाच्यं जन्म भूषयन्तीत्यर्थः Sy.

१३. VM. ignores वृषणा। यत्

१४. प्रकर्षेण सम्पादिता। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। तामासीदतमिति शेषः Sy.

१५. या क्षितिर्देवयजनरूपा Sy.

१६. ०न्तो P. D. असुरौ बलवन्तौ मित्रावरुणौ ... युवाम् Sy.

१७. महदत्यधिकम् Sy.

१८. प्रियतरा प्रीणयित्री वा सा क्षितिः।... यागभूमिर्देवानां प्रियेति प्रसिद्धम् Sy.

१९. आसाद्य च ... ऋतवन्तौ युवाम् Sy.

२०. ऋतमस्मदीयं यज्ञम् Sy.

२१. असत्यन्तं P. बृहत्प्रवृद्धम् Sy.

२२. अघो० P. आघोषयथः M.

२३. अर्बकल्येन सम्पादित इति स्तुतमित्यर्थः Sy.

२४. द्युलोकस्य Sy.

२५. ते P. D.

२६. बलतरम् M. धुरि दक्षं तर्पणवहनसमर्थम्। अथवा बृहतो दिवो महतो द्युलोकस्यदेवान्दक्षं प्रीणयितुमिति शेषः। यद्वा कर्मणि षष्ठी। दिवो द्योतनात्मकं बृहतः प्रभूतं दक्षमभिमतसाधनसमर्थम् Sy.

२७. सर्वतो भवनशीलम् Sy.

२८. उपयोगे दृष्टान्तः ... धेनुमिव तां यथोपयुञ्जते तद्वत्। यद्वा विकारे प्रकृतिशब्दः। क्षीरादिकमिव। तस्मादुतमाघोषथः Sy.

२९. शारीरबलस्य निर्वाहे तदर्थम् Sy.

उपयुञ्जाथे[1]। जलायेति[2]।

**मही अत्रं महिना वारमृण्वथोऽरेणवस्तुज आ सद्मन्धेनवः।**
**स्वरन्ति ता उपरताति सूर्यमा निम्रुच उषसस्तक्ववीरिव ॥५॥**

मही अत्र। महान्तौ[3]। अस्मिन्[4]। वरणीयं धनम्[5]। माहात्म्येन[6]। प्रक्षिपथ[7]। अक्षयाः[8]। पयसः क्षोप्त्र्यः[9]। धेनवः[10]। मदीये। गृहे[11]। आगच्छन्ति[12]। ताश्च धेनवः[13]। उपरमूल[14] ऊधसि ततम्[15]। सुवीर्यं[16] पयः। प्रेरयन्ति[17] भवद्भ्यां प्रेर्यमाणाः[18]। रात्रयः[19]। दिवसाश्च[20]अन्योन्यसक्तम्[21]। आगच्छन्ति[22]। यथा। स्तेनमनुधावन्तेन[23] सङ्गच्छति[24] (ते) तद्वत्[25]।

---

१. सेवेथे तत्रत्यं हविः स्वीकुरुथ इत्यर्थः Sy.

२. जलोयेति M. अपः कर्म सोमयागरूपम् Sy.

३. हे मित्रावरुणौ युवां मही महत्याम् Sy.

४. अस्यां पृथिव्याम् Sy.

५. धर० P. D.
वरणीयं प्रदेशम् Sy.

६. महत्त्वेन या धेनूः Sy.

७. गमयथः। अन्तर्भावितण्यर्थोऽयम्। गमनादिव्यवहारस्य तयोरधीनत्वाद् द्यावापृथिव्योरभिमानिदेवत्वाच्च मित्रावरुणयोः Sy.

८. सायङ्काले युष्मन्महत्त्वेनारेणवोऽनवद्यास्तस्कराद्यनपहारेणानष्टा वा Sy.

९. क्षीराणां प्रदात्र्यः। तुञ्जतिर्दानकर्मा Sy.

१०. ता एता धेनवो गावः Sy.

११. सद्मनि गोष्ठे Sy.

१२. आ आश्रिता आगच्छन्ति वा। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः Sy.

१३. ता एवङ्कारिता धेनवः Sy.

१४. उपतिरमूल M. उपरिमूल is suggested for उपरमूल

१५. स्थितं M. उपरताती। सप्तम्या लुक्, मेघानां विस्तारवत्यन्तरिक्षे मेघाच्छन्ने सति Sy.

१६. सर्वस्य प्रसवितारं सुवीर्यं शोभनसामर्थ्यं वा। 'सुवीर्यो मर्या यथा गोपायत इति तत्सूर्यस्य सूर्यत्वम्' (TB. 2.2.10.) इति श्रुत्यन्तरात्। आदित्यमभिलक्ष्य Sy.

१७. स्वरन्ति शब्दयन्ति सुखसञ्चाराय। 'स्वृ शब्दोपतापयोः' भौवादिकः Sy.

१८. ०र्णं P.

१९. कस्मिन्काल इति तदुच्यते . . . सर्वेष्वपि सायङ्कालेषु Sy.

२०. उषःकालेषु च Sy.

२१. ०श्चानन्योम् P. ०संसक्त० M.

२२. आगच्छन्ति seems to be the explanation of आ of the original.

२३. तत्र दृष्टान्तः। तक्ववीरिव। तक्वा स्तेनः। तस्य वेता गन्ता मनुष्यः। स यथा क्रोशति तद्वत्। एवं निरुद्धानां गवां सुखचारो युष्मदायत्त इति तयोः स्तुतिः Sy.

२४. संसक्तं ग० M.

२५. The passage beginning with सक्तमागच्छन्ति and ending with तद्वत् is omitted by P. Ms. D. adds (चरन्ति च युवाभ्यामभिलषि) after तद्वत्।

आ वा॑मृ॒ताय॑ के॒शिनी॑रनूषत॒ मित्र॒ यत्र॒ वरु॑ण गा॒तुमर्च॑थः ।
अव॒ त्मना॑ सृ॒जत॒ं पिन्व॑त॒ं धियो॑ यु॒वं विप्र॑स्य॒ मन्म॑नामिरज्यथः ॥६॥

आ वामृताय। मित्रावरुणौ! वाम्।[1] यज्ञार्थं दीर्घसत्रेषु। केशिनः[2] प्रजाः। आभिमुख्येन। अस्तुवन्।[3] मित्रावरुणौ![4] यत्र।[5] गमनम्।[6] पूजयथस्तदा।[7] आत्मनैव। तेभ्यः कामानवा-[8]सृजतम्।[9] अपिन्वतम्[10]च।[11] तत्कान्?[12]। युवाम्। मेधाविनः।[13] अभिलषितानाम्।[14] ईश्वरौ[15] भवथः।[16]

यो वां॑ य॒ज्ञैः शं॑शमा॒नो ह॒ दाश॑ति क॒विर्होता॒ यज॑ति मन्म॒साध॑नः ।
उपाह॒ तं गच्छ॑थो वी॒थो अ॑ध्व॒रमच्छा॒ गिरः॑ सुम॒तिं ग॑न्तमस्म॒यू ॥७॥

यो वां यज्ञैः। यः।[17] वाम्।[18] यज्ञैः।[19] यजमानः।[20] हविः[21] प्रयच्छति।[22] कविः।[23] होता।[24] यजति[25]

---

१. युवाम् Sy.
२. केशवत्योऽग्नेर्ज्वालाः Sy. केशिन्यः is suggested for केशिनः
३. हविःसमर्पणेनाभिपूजयन्तीत्यर्थः Sy.
४. हे मित्र हे वरुण युवामुभौ Sy.
५. यागे Sy.
६. गमनं देवयजनदेशं वा। गातुरिति पृथिवीनाम, 'गातुः पृथ्वी' (Ngh.1.1.) इत्युक्तत्वात् Sy.
७. स्वीकुरुथ इत्यर्थः Sy. तत्र is suggested for तदा
८. वृष्टिम् Sy.
९. अवाङ्मुखं विसृजतम् Sy.
१०. अपि M. वर्धयतमित्यर्थः Sy.
११. Omitted by M.
१२. धियोऽस्मदीयानि कर्माणि Sy. कामान् is suggested for कान्
१३. एवं कृत्वा विप्रस्य मेधाविनो यजमानस्य Sy.
१४. मननवतीनां स्तुतीनाम् Sy.
१५. ईश्वरौ स्वामिनौ भवथः। इरज्यतिरैश्वर्यकर्मा। 'इरज्यति पत्यते' (Ngh. 2.21.) इति तन्नामसूक्तत्वात् Sy.
१६. This hymn is omitted by P. P reads ईश्वरौ भवथः only.
१७. यो ह यः खलु यजमानः Sy. अयं यजमानः Dur.
१८. वा P. युवामुद्दिश्य युवाभ्यां वा Sy. युष्मदः सम्प्रदाने चतुर्थी भवति द्विवचनमेतत्, युवाभ्यां मित्रावरुणाभ्याम् SKN. मित्रावरुणौ Dur.
१९. यः। वाम्। यज्ञैः is omitted by M. यागनिमित्तभूतैः Sy. सप्तम्यर्थे एषा तृतीया, यज्ञेषु SKN.
२०. शंसमानः Sy. शंसन्स्तुवन् SKN. शसमानः शंसमानः N.6.8.
२१. हविरादिकम् Sy. किम्? सामर्थ्याद्धवींषि SKN.
२२. स्वस्वत्वं निवर्त्य युष्मत्स्वत्वापादनं करोति Sy. ददाति SKN.
२३. य एव कविरनूचानः। 'येऽनूचानास्ते कवयः' (AB.2.2.) इति श्रुतेः। अथवा कविर्मेधावी Sy. मेधावी SKN. क्रान्तदर्शनः Dur.
२४. सम्यग्घोमनिष्पादको यजमानः Sy. आह्वाता देवानाम् SKN. आह्वाता Dur.
२५. सोमयागादिकं करोति Sy. यागं च करोति SKN.

च। मननीयानां[1] साधयिता। तम्[2]। उप[3]। एव[4]। युवां गच्छथः[5]। यज्ञं[6] च तस्य[7]। कामयेथे[8]। तथा सत्यस्माकं स्तुतीः[9]। प्रति[10]। अस्मत्कामौ[11]। आगच्छतम्[12][13]।

**युवां यज्ञैः प्रथमा गोभिरञ्जत ऋतावाना मनसो न प्रयुक्तिषु ।**
**भरन्ति वां मन्मना संयता गिरोऽदृप्यता मनसा रेवदाशाथे ॥८॥**

युवां यज्ञैः[14]। युवाम्। यज्ञैः। प्रथमौ। गोविकारैरञ्ज[15]। समञ्जन्ति[16]। यज्ञवन्तौ[17]। मनसः[18]।

---

१. मननीयद्रव्यदक्षिणादिसाधनोपेतः सन् Sy. मननमनुष्ठेयपदार्थविषयज्ञानं तत्साधनभूतं यस्यास्ति स मन्मसाधनोऽधिकृत इत्यर्थः SKN. विज्ञानसाधन इत्यर्थः Dur.

२. तमेव यजमानं सुमतिं शोभनप्रज्ञम् Sy. तमेव SKN. तं प्रति Dur.

३. उपलक्ष्य Sy. उपेत्येतद् गच्छथ इत्येतेन सम्बध्यते SKN.

४. इव P.D. अहशब्द एवार्थे पदपूरणो वा SKN.

५. प्राप्नुथः खलु Sy. उपगच्छथो नान्यम् SKN. उपगच्छथः Dur.

६. अध्वरशब्देनात्र सम्बन्धाद्धविरुच्यते। अध्वरसम्बन्धि हविरित्यर्थः। यत एवमतोऽहमपि तथाभूत एवेति ब्रवीमि SKN. अध्वराश्रितानि हवींषि। वयमपि चैवंगुणविशिष्टा एव यतो ब्रूमः Dur.

७. तदीयम् Sy.

८. वीथः कामयेथे Sy. उपगम्य च वीथो भक्षयथस्तस्यैव नान्यस्य SKN.

९. ०तिः P. गिरः स्तुतीः Sy. मदीयां स्तुतिं शोभनां प्रज्ञां वा SKN. एता अस्मद्गिरः Dur.

१०. अभिलक्ष्य Sy. आभिमुख्येन Dur.

११. अस्मान्कामयमानौ युवाम् Sy. अस्मत्कामौ मामनुग्रहीतुमित्यर्थः SKN. अस्मान्कामयमानाविति Dur.

१२. गच्छतम्। तादृशं मां प्राप्य स्तुतीः स्वीकुरुतमित्यर्थः। अत्र यद्यपि तमिति सामान्यनिर्देशः प्रतिभाति तथाप्यस्मयू इत्युक्तत्वाद् दीर्घतमाः स्वात्मानमेव परोक्षतयोक्तवानिति गम्यते। यद्वा यो ददाति यश्च यजते तमुपेत्य तदीयं यज्ञं कामयेथे। अतोऽस्मयू युवां सुमतिं मां मदीया गिरः स्तुतीरच्छ, अभिलक्ष्य गच्छतम् Sy. गच्छतम् SKN. आगन्तुमिच्छथः Dur.

१३. VM. ignores. ह। सुमतिम् N.6.8; SKN. II. 419.

१४. यजनसाधनैः Sy.

१५. पयआदिभिः Sy.

१६. व्यञ्जयन्ति यजमाना देवभागं यागेषु क्षीरादिभिर्व्यञ्जन्त इत्यर्थः। यद्वा गोभिरञ्जते स्तुवन्ति Sy.

१७. ०न्तौ P. D. यज्ञवन्तौ वृष्ट्युदकवन्तौ वा। मित्रावरुणौ युवाम् Sy.

१८. तत्र दृष्टान्तः। ... कर्मणि षष्ठी। मन इव। तद्यथा प्रथमं व्यञ्जयन्ति मुख्यं कुर्वन्ति तत्पूर्वकत्वात्सर्वव्यवहारस्य Sy.

इव। प्रेरणेषु[१] यथा तत् तच्छीघ्रं[२] कुर्वन्ति कर्म तद्वत्। भरन्ति[३] च। युवाभ्याम्[४]। अभिलषितेन[५]। संयतेन[६] हविषा सह। स्तुतीः[७]। युवां च गर्वरहितेन[८]। मनसा[९]। धनयुक्तम्[१०]। आगच्छथः[११]।

**रे॒वद्व॑यो दधाथे रे॒वदा॑शाथे॒ नरा॑ मा॒याभि॑रि॒तऊ॑ति॒ माहि॑नम् ।**
**न वां॒ द्यावोऽह॑भि॒र्नोत सिन्ध॑वो॒ न दे॑व॒त्वं प॒णयो॒ नान॑शुर्म॒घम् ॥९॥**

रेवद्वयः। धनयुक्तम्[१२]। अन्नम्। दधाथे[१३]। धनयुक्तञ्च[१४]। आगच्छथः[१५]। नेतारौ[१६]! कर्मभिः[१७]। इत आगमनं[१८] युवयोर्धनं भवतु। युवयोः। ऐश्वर्यम्[१९]। धनं च[२०]। द्यावः[२१]। दिवसाः[२२]। नद्यः[२३]। देवाश्च[२४]। न। आनशुः[२५]। न। अपि। असुराः[२६][२७]।

---

१. प्रयोगेषु Sy.
२. Omitted by M.
३. सम्पादयन्ति Sy.
४. युवाम् Sy.
५. मननवता Sy.
६. युवामेव सम्यग् गच्छता चित्तेन Sy.
७. तिः युः M.
८. यस्मादेवं तस्मात् ... अनभिभववता Sy.
९. प्रकृष्टेन चेतसा युक्तौ सन्तौ Sy.
१०. धनवत्कर्मास्मदीयम् Sy.
११. अश्नुवाथे व्याप्नुथो ददाथे इत्यर्थः Sy.
१२. धनवत् Sy.
१३. ०धाते P.
उभयं च धारयथः Sy.
१४. सनयु० P. यस्मादेवं तस्माद् ... धनवत्। सहद्दृष्टत्वाद्वय इति गम्यते। धनविशिष्टमन्नम् Sy.
१५. ०तः P. D. अश्नुवाथे अस्मभ्यं ददाथे इत्यर्थः Sy.
१६. ०रौ M.
नेतारौ युवाम् Sy.
१७. मायाभिर्युवयोः प्रज्ञाभिः Sy.
१८. इतोऽस्मदभिमुखं गमनवत्, इतो रक्षणवद्वा Sy.
१९. महन्नामैतत्। अतिमहत् Sy.
२०. मघं धनं च नानशिरे Sy.
२१. द्यावा P. D. द्रावा M. ताभिः सहिता द्यावो दिवसाः Sy.
२२. अहोभी रात्रिभिः। अत्राहश्शब्देन रात्रिरभिधीयते, द्योशब्देनाह्नः पृथगभिधानात् ... अहश्च रात्रिश्चोभे न तरत इत्यर्थः Sy.
२३. स्यन्दनशीला नद्यो नचैवानशुः Sy.
२४. युवयोर्देवत्वम् Sy.
२५. न प्राप्नुवन्ति ... लोकत्रये युवयोः पराभवितारो न केऽपि सन्तीत्यर्थः Sy.
२६. पणयोऽसुरा अपि नानशुः Sy.
२७. VM. seems to explain माहिनम् as ऐश्वर्यं and मघम् as धनम् and ignores न। न Ms. D. puts the figure ॥१५१॥ here to indicate the end of one hundred and fiftyfirst hymn. No such number is given in P. and M.

I. 152.

**युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः ।
अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे ॥१॥**

युवं वस्त्राणि। युवम्[१]। तेजांसि[२]। पीनौ[३]। वसाथे[४]। युवयोः। सन्तताः[५]। पूज्याः[६]। च। घनविसर्गाः[७]। सर्वाणि च। अनृतानि[८] वृत्रस्य। तेजसा विनाशयथः[९]। सत्येन[१०] प्रकाश्यमानौ[११]। मित्रा-वरुणौ ! सञ्च्छेथे[१२]।

**एतच्चन त्वो वि चिकेतदेषां सत्यो मन्त्रः कविशस्त ऋघावान् ।
त्रिरश्रिं हन्ति चतुरश्रिरुग्रो देवनिदो ह प्रथमा अजूर्यन् ॥२॥**

एतच्चन। एषां[१३] मनुष्याणां मध्ये। कः[१४]। चिदेव। एतद्[१५]। विजानाति[१६] किं तत्। सत्यः[१७]। पूजनीयः[१८]। कविभिश्शस्तः[१९]। हिंसावान्[२०]। असुरेषूद्गूर्णः[२१]। चतुरश्रः[२२] सन्। त्रिरश्रिम्[२३]। हन्ति[२४]। त्रियामा रात्रिस्त्रिरश्रिरुच्यते[२५] तं गमयत्यहस्तस्यां वर्तमानायाम्। राक्षसाः[२६]। प्रथमाः[२७]। एवाहर्मुख[२८]

---

१. युवाम् Sy.
२. आच्छादनयोग्यानि वासांसि Sy.
३. पीवसा पीनौ ... यद्वा पीनान्यच्छिद्राणि Sy.
४. आच्छादयथः। यद्वा पीवसा स्थूलेन प्रभूतेन तेजसा वस्त्राणि दधाथे अविच्छिन्नानि वस्त्रस्थानीयानि तेजांसि धारयथ इत्यर्थः Sy.
५. अच्छिद्रा अच्छिद्राः Sy.
६. मननीयाः Sy.
७. घवि० D.
सवि०। घवि० M. सर्गाः सृष्टयः Sy.
८. असत्यान्यप्रियाणि पापानि Sy.
९. नाशयतम् Sy.
१०. ऋतेन फलेन तत्साधनेन यज्ञेन वा Sy.
११. ० मानेन M.
१२. अस्मभ्यं योजयथ इत्यर्थः Sy.
१३. एतयोर्मध्ये। बहुवचनं पूजार्थम्। यद्वा तदनुचरापेक्षया बहुवचनम् Sy.
१४. एकः Sy.
१५. एतं M. वक्ष्यमाणं सामर्थ्यरूपं कर्म Sy.
१६. विशेषेण चेतत्यनुतिष्ठतीत्यर्थः Sy.
१७. स विशेष्यते। स एकः सत्योऽबाध्यः सत्सु भवो वा Sy. १८. मन्त्रो मननवान् Sy.
१९. कविभिर्मेधाविभिः शंसनीयः Sy.
२०. हिंस० D. हिंसमानः P. अनेन वक्ष्यमाणस्य सामर्थ्यस्य सम्भाविता (सम्भावना) प्रतिपादिताऽभवदित्युक्तम् Sy.
२१. न केवलमायुधसामर्थ्यं किन्तूग्रः स्वयमुद्गूर्णबलः Sy.
२२. ततोऽप्यधिकायुधवान् Sy.
२३. अश्रित्रयोपेतमायुधं त्रिरश्रि, तद्वन्तम्। मत्वर्थो लुप्यते। उपलक्षणमेतत्। सर्वायुधसम्पन्नमित्यर्थः। एतन्नामानं वा Sy.
२४. हिनस्त्यतिबलं शत्रुम् Sy.
२५. त्रियारामात्रि० P.
२६. ०सां P. युवयोरेकस्यैव सामर्थ्येन देवनिदो ह देवनिन्दकास्तु Sy.
२७. समर्थाः सन्तोऽपि Sy.
२८. ०हम्मु० P.

एव। जीर्णा[1] आसन्तोऽयमहोरात्रविभागो मित्रावरुणकृतः।

**अपादेति प्रथमा पद्वतीनां कस्तद्वां मित्रावरुणा चिकेत।**
**गर्भो भारं भरत्या चिदस्य ऋतं पिपर्त्यनृतं नि तारीत् ॥३॥**

अपादेति। पादयुक्तानां[2] प्रजानाम्। अग्रे[3]। पादवर्जितः[4]। आगच्छति[5]। युवयोः[6]। कः[7]। तदिदं कर्म[8]। जानाति[9]। यस्तया जानाति तस्य[10]। पुत्रः[11]। कुटुम्बभारम्[12]। वहति[13]। सत्यं[14] च। पूरयति। अनृतम्[15]। चरति[16][17]।

**प्रयन्तमित्परि जारं कनीनां पश्यामसि नोपनिपद्यमानम्।**
**अनवपृग्णा वितता वसानं प्रियं मित्रस्य वरुणस्य धाम ॥४॥**

प्रयन्तमित्। प्रगच्छन्तम्[18]। एवादित्यम्। कन्यकानामुषसाम्[19]। जरयितारं वयम्

---

१. स्वयमेव जीर्णा भवन्ति। ... युवयोर्मध्य एकोऽपि महाबलः, मिलितयोस्तु सामर्थ्यं किमु वक्तव्यमिति भावः। अपदेयां युवयोरेतदुत्तरत्र वक्ष्यमाणं सामर्थ्यमेकः सत्यादिलक्षणो विचिकेतद् विशेषेण जानाति। शेषं पूर्ववत् Sy.

२. पादवतीनां मनुष्यादीनां प्रजानाम् Sy.

३. प्रथमभाविनी Sy.

४. पादयुक्तोषा P.D.
पादरहितोषाः Sy.

५. प्रतिदिनं सूर्यचन्द्रादिवत्स्वस्याः परिभ्रमणाभावात्सूर्यगमनेनैव स्वगमनादपादिति च, एतीति चोपचर्यते Sy.

६. Omitted by P. D.

७. तत् तादृशम् Sy.

८. युवयोः प्रसिद्धं कर्म ... मित्रावरुणयोरहोरात्रदेवत्वादहोरात्रयोरन्तरालसंबंधित्वादेतत्कर्मत्वम् Sy.

९. क आचिकेत क आभिमुख्येन जानाति। 'कित ज्ञाने'। तत्तुल्यमित्यर्थः Sy.

१०. अस्य लोकस्य Sy.

११. ०त्रं P. गर्भो युवयोर्गर्भस्थानीयः शिशुरादित्यः। अहोरात्रयोर्मध्यकाल उत्पन्नेस्ताभ्यामेव मित्रावरुणत्वात्, 'अहोरात्रे वै मित्रावरुणौ' (TS.2.4.10.1) इति श्रुतेः Sy.

१२. कुडुंबतारं P. कुडुंबभा० D. भारं निर्वाहम् Sy.

१३. स आहरति बिलसमन्तान्निर्वहत्येव। हरति वाऽस्य भारं जाड्यम्। चिदित्यवधारणे Sy.

१४. तत्कर्ममिति तदुच्यते। ऋतं सत्यं जगतः प्रकाशगमनादिरूपम् Sy.

१५. उक्तविलक्षणमन्धकारं गमनादिनिरोधं च Sy.

१६. तरति is suggested for चरति। नितरति निमज्जयति नाशयतीत्यर्थः। शिशोर्भगङ्गारवहनरूपं कर्म युष्मत्सामर्थ्यादिति Sy.

१७. VM. ignores मित्रावरुणा। आ। आ। चित्। नि

१८. प्रयच्छ० P.D.

१९. कमनीयानां दीप्तानां कन्यकास्थानीयानामुषसाम् Sy.

परितः। पश्यामः[1]। न कदाचिदपि[2]। उपनिषीदन्तं[3] पृथिव्याम्। अनवपृक्तान्यपतितानि[4] तेजांसि। विततानि। आच्छादयन्तम्। मित्रावरुणयोः[5]। प्रियम्[6]। आवासस्थानम्[7]।

**अनश्वो जातो अनभीशुरर्वा कनिक्रदत्पतयदूर्ध्वसानुः।**
**अचित्तं ब्रह्म जुजुषुर्युवानः प्र मित्रे धाम वरुणे गृणन्तः ॥५॥**

अनश्वो जातः। अश्ववर्जितः[8]। अभीशुवर्जितरश्वानयो[9][10] रथः। गमनशीलः[11]। प्रादुर्भूतः[12]। शब्दं कुर्वन्[13]। पतति[14]। विस्तृतोर्ध्वभागस्तस्मिन्नेव[15][16] प्रादुर्भूते। चित्तवर्जितम्[17]। स्तोत्रम्[18]। जुजुषुः[19]। युवानः[20]। मित्रे। वरुणे[21] स्थितम्। तेजः[22]। प्रगृणन्तः[23]।

**आ धेनवो मामतेयमवन्तीर्ब्रह्मप्रियं पीपयन्त्सस्मिन्नूधन्।**
**पित्वो भिक्षेत वयुनानि विद्वानासाविवासन्नदितिमुरुष्येत् ॥६॥**

आ धेनवः। मामतेयं[24] माम्। रक्षन्त्यः[25]। धेनवो[26] युवयोः। स्तोत्रप्रियं[27] माम्। सर्व-

---

१. वयं परिपश्यामः Sy.
२. क्षणमात्रमपि Sy.
३. निषीदन्तं न पश्यामः। एतदपि तयोः सामर्थ्यम् Sy.
४. ०क्तानि D. अनवपृण्णान्यत एव विततानि तेजांसि Sy.
५. मित्रस्य वरुणस्य च Sy.
६. सर्वेषां प्रियभूतम् Sy.
७. धाम तेजःस्थानभूतम्। यद्वा प्रियं धामेति सम्बध्यते। तयोः प्रेमस्थानमीदृशमादित्यं युष्मदनुज्ञया सञ्चरन्तं पश्यामसि Sy.
८. स एवादित्योऽनश्वो यद्यपि शीघ्रगाम्यश्वरहितः Sy.
९. तथा ... आलम्बनाधारप्रग्रहस्थानीयरश्मिरहितः Sy.
१०. ०जितोऽश्वान० P.D.
११. ०ल P. तथाप्यर्वा ... शीघ्रगमनवान् Sy.
१२. ०त P.D. सम्पन्नः Sy.
१३. Omitted by P. तथाविधोऽप्ययमादित्यः ... अत्यर्थं क्रन्दयन् Sy.
१४. गच्छति Sy.
१५. विस्तृ० D. ऊर्ध्वसानुरुपर्युपरि समुच्छ्रयणः सन् Sy.
१६. ०स्तस्मिन्नेव P.
१७. अचित्तं चित्ताविषयम् Sy.
१८. ब्रह्म परिवृढमुक्तरूपं कर्म Sy.
१९. जुजु० P.M. सेवन्ते। मनुष्याः सूर्यस्य निरालम्बान्तरिक्षसञ्चारात्मकं कर्म वरुणमित्रयोरधीनमिति स्तुवन्तीत्यर्थः Sy.
२०. युवानो मिश्रयन्तस्तयोर्धाम्न्यारोपयन्तः Sy.
२१. मित्रे वरुणे चोभयोः Sy.
२२. तेजःस्थानम् Sy.
२३. प्रगृह्णन्तः P. ०न्ता M. युवयोस्तेजःप्रभवमिति प्रकर्षेण स्तुवन्तः Sy.
२४. ममतायाः पुत्रं दीर्घतमसं माम् Sy.
२५. अवन्त्यः प्रीणयन्त्यः Sy.
२६. धेनवो गावः Sy.
२७. परिवृढस्य कर्मणः प्रियतमं, परिवृढस्याग्नेः प्रीणयितारं वा Sy.

स्मिन्[१]। ऊधनि[२] यत्र यत्र[३] याचका याचन्ते तत्र सर्वत्र वर्तमानाः। अपीपयस्ततः[४]। अन्नम्[५]। भिक्षेत[६]। भिक्षामार्गम्[७]। जानन्नथ[८]। वाचा[९] याचकं प्रयच्छामीति। परिचरन्[१०] याच्यः। दीनं[११] महान्[१२]। रक्षेत्[१३] [१४]।

**आ वां मित्रावरुणा हव्यजुष्टिं नमसा देवाववसा ववृत्याम्।**
**अस्माकं ब्रह्म पृतनासु सह्या अस्माकं वृष्टिर्दिव्या सुपारा ॥७॥**

आ वां मित्रावरुणा। मित्रावरुणौ! देवौ[१५]! यज्ञं[१६] प्रत्यहम्। वाम्[१७]। अन्नार्थम्[१८]। रक्षणार्थं[१९] च। आवर्तयामि[२०] तथा सति। अस्माकम्[२१]। स्तोत्रम्[२२]। युद्धेषु[२३]। शत्रूनभिभवतु[२४]। अस्माकमेव। वृष्टिः। सुष्ठु। पारयित्री[२५] भवतु[२६]। दिवि भवेति[२७]।

---

१. स्वकीये Sy.
२. ऊधसि Sy.
३. Omitted by M.
४. अपिबयं P. Missing in M. आपीपयन्सर्वत आप्याययन्तु। ... ऊधोगतेन क्षीरेण युवाभ्यां प्रदेयेन नोऽस्मान्रक्षन्तीत्यर्थः। 'मित्रावरुणाभ्यां पयस्या' (TS. 7.5. 22. 1.) इति श्रुतेः Sy.
५. पितोर्हुतशिष्टस्यान्नस्य तादृगन्नम् Sy.
६. याचेत युष्मान् Sy.
७. एवं प्रवृत्तहविर्वयुनान्यनुष्ठानविषयज्ञानानि Sy.
८. हुतशेषो भक्षणीय इत्यवगच्छन्दीर्घतमाः Sy.
९. आस्येन भक्षयितुम् Sy.
१०. पुरि D.
युवां परिचरन् Sy.
११. अदितिमखण्डितमन्यूनमेतत्कर्म Sy.
१२. महन् P.
१३. यथा शिष्टं भिक्षेत यथा च कर्म समापनेन रक्षेत्तथाऽपीपयन्नित्यर्थः Sy.
१४. VM. ignores आ
१५. देवनशीलौ Sy.
१६. हव्यजुष्टि हविःसेवाम् Sy.
१७. युवाम् Sy.
१८. नमस्कारोपलक्षितेन स्तोत्रेण Sy
१९. रक्षणेन निमित्तभूतेन Sy.
२०. आवर्तयेयम्। यद्वा नमस्कारेणावसाऽन्नेन चा ववृत्याम् Sy.
२१. ०तंव ... स्माकं M. अस्माकं सम्बन्धि Sy.
२२. इदानीं क्रियमाणं परिवृढं कर्म Sy.
२३. सङ्ग्रामेषु Sy.
२४. सह्याच्छत्रूनभिभूयात्। अनेन कर्मणा शत्रूनभिभवेयमित्यर्थः Sy.
२५. आर० M.
सुष्ठु पारयित्री भवत्विति शेषः। वृष्टौ सत्यां व्रीह्यादिद्वारा कर्मसमाप्तेरिति भावः Sy.
२६. ० तु M.
२७. Ms. D. puts the figure ॥१५२॥ here to indicate the end of one hundred and fiftysecond hymn. No such number is given in P. and M.

I. 153.

**यजा॑महे वां म॒हः स॒जोषा॑ ह॒व्येभि॑र्मित्रावरुणा॒ नमो॑भिः ।**
**घृ॒तैर्घृ॑तस्नू॒ अध॒ यद्वा॑म॒स्मे अ॑ध्व॒र्यवो॒ न धी॒तिभि॒र्भर॑न्ति ॥१॥**

यजामहे। यजामहे[1]। वाम्। महान्तौ[2]। सङ्गतौ[3]। हविर्भिः[4]। मित्रावरुणौ! नमस्कारैश्च[5]। घृतैश्च[6]। घृतं प्रति गन्तारौ[7]। अध[8]। यत्[9]। युवयोः[10]। अस्माकम्[11]। अध्वर्यवः[12]। कर्मभिः[13]। न[14]। सम्भरन्ति[15] तैश्च यजामहे।

**प्रस्तु॑तिर्वां॒ धाम॒ न प्रयु॑क्ति॒रया॑मि मित्रावरुणा सुवृ॒क्तिः ।**
**अ॒नक्ति॒ यद्वां॑ वि॒दथे॑षु॒ होता॑ सु॒म्नं वां॑ सू॒रिर्वृ॑षणा॒विय॑क्षन् ॥२॥**

प्रस्तुतिः। त्वक्तुः[16] स्तुतिः[17]। युवयोः[18]। तेजः[19]। नागमयति[20]? । अभिगच्छामि[21]। मित्रावरुणौ! शोभनस्तुतिकौ[22]! यदा। वाम्[23]। यज्ञेषु[24]। होमं कुर्वन्नध्वर्युः[25]। हविर्भिरनक्ति[26]। सुखकरं[27] हविः। युवाभ्याम्[28]। प्रेरयन्[29]। वर्षितारौ[30]! यष्टुमिच्छन्[31]। वाम्।

---

१. Missing in M. पूजयामो यजमाना ऋत्विजश्च Sy.
२. महन्तौ P. D.
३. संग्रन्तौ M. कीदृशाः ? सजोषाः समानप्रीतियुक्ताः Sy.
४. पुरोडाशादिभिः Sy.
५. नमस्कारोपलक्षितैः Sy.
६. Omitted by P.
७. घृतस्य स्रावयितारौ Sy.
८. घृतं ... च M. अपि च Sy.
९. यस्मात्कारणात् Sy.
१०. युवाम् Sy.
११. अस्मदीयाः Sy.
१२. अध्वर्यवोऽपि Sy.
१३. कर्मभिः स्वकीयैः Sy.
१४. ०भिप्र D. अत्र नशब्दोऽप्यर्थे। तेऽपि Sy.
१५. पोषयन्ति तस्माद्यजामहे Sy.
१६. त्व P. Omitted by D.
१७. प्रस्तुतिः प्रस्तावना, करोमीति (क्रियत इति) सङ्कल्प एव Sy.
१८. युवयोः सम्बन्धिनो यागस्य Sy.
१९. तावतैव युवयोर्धाम तेजःस्थानम् Sy.
२०. न प्रयुक्तिः कृत्स्नप्रयोगो न सम्पन्नः Sy.
२१. प्राप्नोमि Sy.
२२. ०कौ P.D. सुवृक्तिर्युवयोः शोभनावर्जकश्च युष्मत्परिग्रहादस्मि Sy.
२३. यदपां D.
युवाम् Sy.
२४. विदथेषु यज्ञेषु Sy.
२५. होमनिष्पादकोऽयमध्वर्युः Sy.
२६. ०भिनरनक्ति P. होमं ... भीरनुलि M. हविषाऽऽगच्छति। होमं करोतीत्यर्थः। यद्वा होता देवानामाह्वाता, एतन्नामक ऋत्विक् शस्त्रादिना वामनक्ति व्यञ्जयति Sy.
२७. सुखं देवत्वलक्षणमयामीति शेषः Sy.
२८. युवयोः। ... युष्मत्सम्बन्धि Sy.
२९. सूरिर्युष्मन्माहात्म्यवित् Sy.
३०. कामानां वर्षितारौ Sy.
३१. यागं कर्तुमिच्छन् Sy.

पीपाय धेनुरदितिर्ऋताय जनाय मित्रावरुणा हविर्दे ।
हिनोति यद्वां विदथे सपर्यन्त्स रातहव्यो मानुषो न होता ॥३॥

पीपाय[1]। वृद्धा[2] पयसा। गौः[3]। यज्ञार्थम्[4]। जनाय[5]। मित्रावरुणौ[6]! हविषां दात्रे[7]। युवाभ्याम्। यदा। हविः प्रेरयति[8]। यज्ञे। परिचरन्[9]। सः[10]। दत्तहविष्को[11] धेनुः[12]? मानुषः[13]। इव। होता[14] हविषः प्रेरणाद्धोतॄणां सामा[15]नाधिकरण्याल्लि[16]ङ्गभेदः[17]।

उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः ।
उतो नो अस्य पूर्व्यः पतिर्दन्वीतं पातं पयस उस्रियायाः ॥४॥

उत वाम्। अपि च। युवयोः[18]। प्रजासु[19]। मादयित्रीषु[20]। पयोलक्षणमन्नम्[21]। गावः। ओषधीनां वर्धयित्र्य[22] आपः[23]। च। आप्याययन्ति[24]। देव्यः[25]। अपि च। अस्माकम्[26]।

---

१. M. adds धेनुः after पीपाय।
२. अदितिः, अदीना बहुक्षीरा सती पीपाय क्षीरेण पुनः पुनराप्यायताम्... पयस्यादिहविष्कं यज्ञं पयोव्रतादिषु यजमानं चेत्यर्थः Sy.
३. प्रीणयित्री गौः Sy.
४. युष्मत्सम्बन्धियज्ञाय Sy.
५. यजमानाय Sy.
६. ॰णौ P.
७. हविषो दात्रे Sy.
८. हिनोति हविरादिना प्रीणयति। तदा पीपायेत्याह Sy.
९. स्तुत्या पूजयन् Sy.
१०. स प्रसिद्धः Sy.
११. रातहव्य एतन्नामा राजा Sy.
१२. ॰विष्के ... धे॰ M.
१३. मनुष्यस्य यजमानस्य सम्बन्धी Sy.
१४. एतन्नामक ऋत्विगिव Sy.
१५. ॰तृस॰ M.
१६. ॰ण्यालि॰ D.
१७. VM. ignores अदितिः
१८. युवाम् Sy. मित्रावरुणावुच्येते ...युवयोरर्थाय SKN.
१९. यजमानलक्षणासु Sy. स्त्रीलिङ्गनिर्देशान्मनुष्यजातिषु SKN. मनुष्येषु Dur.
२०. M. adds च after मादयित्रीषु। युष्माभिर्मदनीयासु Sy. मदयित्रीषु देवानाम्। सप्तमीश्रुतेः स्थितमिति शेषः SKN. मदयितृषु वर्तमानम् Dur.
२१. मदनीयमन्नं पयोरूपं पुरोडाशादिरूपं वा Sy. अन्धोऽन्नपेयस्याख्या SKN. हविर्लक्षणं यदेतदस्मिन्नहन्येभिर्मनुष्यैर्भवद्भ्यां देयं पयस्याख्यमाज्याख्यं च Dur.
२२. वद्ध॰ D. व्रीह्यादिप्रवर्धकानि Sy.
२३. उदकानि Sy.
२४. तासामभिवृद्ध्यर्थं पीपयन्त आप्याययन्तु Sy. प्यायतेर्वृद्ध्यर्थस्येदं रूपम्। वर्धयन्त्यः SKN. आसां गवामुपकारं कुर्वन्त्यो वर्धयन्तीत्यर्थः। यदेतदशनपानयोग्यमाज्यताम्राख्यलक्षणमाभिरद्भिर्गोभिश्च युवयोरन्धो वर्ध्यते Dur.
२५. द्योतनशीलाः Sy. देव्यः SKN. दानादिगुणयुक्ताः Dur.
२६. अस्मत्सम्बन्धिनः Sy. अस्माकमृत्विजाम् SKN.

प्रत्नः । सर्वस्यास्य जगतः । पतिः । दमयितेन्द्रस्त्वाप्याययति । कामयतम् । पिबतं च । उस्रियायाः । पयः ।

---

१. पूर्व्यः पूर्वकालीनः Sy. पुराणः ... चिरन्तन एव याज्य इत्यर्थः SKN. अस्मत्पूर्वो यजमानः Dur.

२. यज्ञस्य Sy. अन्नस्य SKN. हविषः Dur.

३. पालकोऽग्निः Sy. स्वामी SKN. पतिः। पूर्वं हि द्रव्यस्य यजमानः पतिर्भवति ततः स तदृत्विग्भ्यः समर्पयति देवतार्थं संस्कुरुतैतदिति। ततस्ते तस्य हविषः पतयो भवन्ति। तानपेक्ष्य यजमानः पूर्व्यः पतिः। तदपेक्षयैवर्त्विज आहुः Dur.

४. मम० M.
दाता भवत्विति शेषः। अग्नौ हूयमानत्वात्सर्वेषामपि हविषाम् Sy.
युवाभ्यां वन् ददद् दाता दास्यते तदित्यर्थः SKN. तेनाप्येतद्भवन्तावेवोद्दिश्यास्माभ्यत्युत्सृष्टम्। एवमपि स दन्भवति। अपि वयं यथाव्यादिष्टमेव तेन पूर्व्येण हविष्पतिना भवद्भ्यामेतद् दद्यः Dur.

५. यस्मादेवं तस्माद्धे मित्रावरुणौ वीतं भक्षयतं पुरोडाशादिकम् Sy. एतद् द्रव्यं ज्ञात्वा वीतमश्नीतम् ... यदस्य नातिद्रवं नातिकठिनं तदश्नीतम् SKN. नातिकठिनस्याशनयोग्यस्य स्वं भागमस्माभिर्दीयमानमश्नीतं युवामित्यर्थः। ... पारिशेष्याद् वीतमित्यस्य शब्दस्य पयस्यया सह सम्बन्धः। सा च नातिकठिना नातिद्रवाऽशनयोग्या। तस्माद् वीतमित्येष शब्दोऽशनार्थ इत्युपपद्यते। लोकेऽपि हि नातिकठिने नातिद्रवेऽशनशब्दः प्रसिद्धोऽश्नाति पायसमिति Dur.

६. अपिबन्तं P. यवमपिबं M. पातम्। यद्वा घनीभूतं पयस्याया वीतं स्रवद्रूपं पातम् Sy. पिबतं च। ... यद् द्रवञ्च तच्च पिबतम् SKN. पिबतं च यदेतदाज्यस्य स्वं भागमुपस्तरणाभिघारणसम्बद्धम्। ... एवमस्मिन्मन्त्र उस्रियायाः पयसा निष्पन्नस्येति श्रूयमाणे पयस्याज्ये प्रतीयेते। तयोराज्यं पेयं, तत्पातमित्यनेन सम्बध्यते Dur.

७. क्षीराद्युत्स्राविण्या गोः Sy. गोः सम्बन्धिन इति शेषः। उस्रियेत्यादिपठमानस्यैव निर्विविक्षयोपन्यासः। उत्स्राविणो येऽस्यां भोगास्त ऊर्ध्वं स्रवन्ति गच्छन्ति क्षीरदधिनवनीतक्रमेण SKN. अश्नीतं पिबतं पयस उस्रियायाः। उस्रियेति गोनाम। उस्राविणोऽस्यां भोगाः (उस्रेति च) N.4.19.

८. पयोविकारभूतस्य पायसाख्यस्य हविषः SKN. पयस्याख्यस्योस्रियायाः पयसा निष्पन्नस्य Dur.
N. 4. 19; SKN. II. 254

९. Ms. D. puts the figure ॥१५३॥ here to indicate the end of one hundred and fiftythird hymn. No such number is given in P. and M.

## I. 154.

**विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।**
**यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥१॥**

विष्णोर्नु कम्। विष्णोः[1]। कर्माण्यहम्[2]। क्षिप्रमेव[3]। ब्रवीमि[4]।
यः[5]। पृथिव्यां[6] भवान्। लोकान्[7]। विममे[8]। यश्च। धाम[9]।

---

१. विष्णोरेव Mah., U. हे नरा विष्णोर्व्यापनशीलस्य देवस्य Sy.

२. कर्माणि Mah.
वीरकर्माणि Sy., BB.

३. नु कमित्यव्ययमवधारणार्थम् Mah. नु कमतिशीघ्रम्...अत्र यद्यपि 'नु कम्' इति पदद्वयं तथापि यास्केन 'नवोत्तराणि पदानि' (Ngh. 3.13.) इत्युक्तत्वाच्छाखान्तर एकत्वेन पाठाच्च 'नु' इत्येतस्मिन्नेवार्थे 'नु कम्' इति पदद्वयम् Sy. 'नु कम्' इति निपातसमुदायोऽवधारणार्थः U. नु कमिति क्षिप्रनाम BB.

४. प्रब्रवीमि Mah., Sy., U. प्रकर्षेण (प्रकर्षेण) ब्रवीमि। छान्दसो लुङ्। 'बहुलं छन्दस्यमाङ्योगेऽपि' (Pa. 6.4.75.) इत्यडभावः BB.

५. विष्णुः Mah., Sy., U.

६. भवा M. पृथिवीसम्बन्धीनि Sy. विष्णुर्विशेष्यते। यः पार्थिवानि पृथिव्यन्तरिक्षद्युलोकभवानि... 'पृथिव्या ञाञौ' (Vār. 4.1.85.) इत्यञ्प्रत्ययः BB.

७. ०वाल्लोकं P. पृथिव्यन्तरिक्षद्युलोकस्थानानि ... 'लोका रजांस्युच्यन्ते' (N.4.19.) इति यास्कोक्ते- रजःशब्दो लोकवाचकः। यद्वा यः पार्थिवानि रजांसि पार्थिवपरमाणून् विममे परिगणितवान् Mah. रजांसि रञ्जनात्मकानि क्षित्यादिलोकत्रयाभिमानीन्यग्निवाय्वादित्यरूपाणि...अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः। तथा च मन्त्रान्तरम्, 'यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः' (RV.I.108.9.) इति। तैत्तिरीयेऽपि 'योऽस्यां पृथिव्यामस्यायुषा' इत्युपक्रम्य 'यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्' (TS.1.2.12.1.) इति। तस्माल्लोकत्रयस्य पृथिवीशब्दवाच्यत्वम् Sy. पृथिव्यन्तरिक्षद्युलोकानि...रजांसि, 'लोका रजांस्युच्यन्ते' (N.4.19.) इति रजश्शब्दो लोकवचनः U. पृथिवीशब्देन त्रयो लोका उच्यन्ते। ...यः पार्थिवानि रजांसि ज्योतींषि, अग्निविद्युत्सूर्यात्मकानि। यद्वा...पृथुषु भवानि रजांसि वसूनि BB.

८. निर्ममे Mah. विशेषेण निर्ममे Sy. निर्मितवान् U. विनिर्मितवान् BB.

९. देवानां सहवासस्थानं द्युलोकरूपम्। ... सह देवास्तिष्ठन्ति यस्मिंस्तत्सधस्थम् Mah.
सहस्थानं लोकत्रयाश्रयभूतमन्तरिक्षम् Sy. सहस्थानं देवानाम् U. सहस्थानं सर्वेषामन्तरिक्षम्। 'सुपि स्थः' (Pa. 3.2.4.) इति कः। 'सध मादस्थयोः०' (Pa. 6.3.96.) इति सधादेशः BB.

[1]उत्त[2]स्नाति। विक्र[3]ममाणः। त्रे[4]धा। उरुगा[5]मेन उरुभिर्वा स्तोत[6]व्यः।[7]

---

१. द्यावक्तम्नाति M.
यश्च विष्णुरुत्तरमुपरितनम् Mah.
उद्गततरमतिविस्तीर्णम् Sy.
उत्तरं द्युलोकाख्यम् U.

२. यथाऽधो न पतति तथा स्तम्भितवान्...
'स्कम्भ रोधने' Mah. तेषामाधारत्वेन स्तम्भितवान्निर्मितवानित्यर्थः। अनेनान्तरिक्षाश्रितं लोकत्रयमपि सृष्टवानित्युक्तं भवति। यद्वा यो विष्णुः पार्थिवानि पृथिवीसम्बन्धीनि रजांसि पृथिव्या अधस्तनसप्तलोकान्विममे विविधं निर्मितवान्। रजःशब्दो लोकवाची 'लोका रजांस्युच्यन्ते'(N. 4.19) इति यास्केनोक्तत्वात्। किंच यश्चोत्तरमुद्गततरमुत्तरभाविनं, सधस्थं सहस्थानं पुण्यकृतां सहनिवासयोग्यं भूरादिलोकसप्तकमस्कभायत् स्कम्भितवान्सृष्टवानित्यर्थः।... अथवा पार्थिवानि पृथिवीनिमित्तकानि रजांसि लोकान्विममे। भूरादिलोकत्रयमित्यर्थः। भूम्यामुपार्जितकर्मभोगार्थत्वादितरलोकानां तत्कारणत्वम्। किंच यश्चोत्तरमुत्कृष्टतरं सर्वेषां लोकानामुपरिभूतम्। अपुनरावृत्तेस्तस्योत्कृष्टत्वम्। सधस्थमुपासकानां सहस्थानं सत्यलोकमस्कभायत् स्कम्भितवान् ध्रुवं स्थापितवानित्यर्थः Sy. स्तम्भितवान् U. अस्तम्भयदधारयत्। अस्कम्नादिति वक्तव्ये 'स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च' (Pa. 3.1.82.) इति श्नाप्रत्ययः। छन्दसि शायजपि(Pa.3.1.84.)इति व्यत्ययेन हेरभावेऽपि श्नश्शायजादेशः BB.

३. अग्निवायुसूर्यरूपेण पदत्रयं निदधानः। विपूर्वस्य क्रमतेः 'लिटः कानज्वा' (Pā. 3.2.106.) इति कानचि रूपम् Mah. विविधं क्रममाणः। विष्णोस्त्रेधा क्रमणम् 'इदं विष्णुर्वि चक्रमे' (RV. I. 22.17.) इत्यादिश्रुतिषु प्रसिद्धम् Sy. विभज्य क्रममाणः पदत्रयं कुर्वन्, लिटः कानजादेशः BB.

४. त्रि० P.D.M. त्रिषु लोकेषु Mah.
त्रिप्रकारं स्वसृष्टांल्लोकान् Sy.
त्रिषु लोकेषु BB.

५. उरुर्गायो गमनं यस्य, उरुभिर्महात्मभिर्गीयत इति वा Mah.
उरुभिर्महद्भिर्गीयमानोऽतिप्रभूतं गीयमानो वा। य एवं कृतवांस्तादृशस्य विष्णोर्वीर्याणि प्रवोचम् Sy.
उरुगमनः U.
उरुभिर्महात्मभिर्गायत इत्युरुगायः। 'कै गै शब्दे' यद्वा उरुभिर्गन्तव्यः। 'गाङ् गतौ'। ... य इत्थमित्थमकरोत्तस्य विष्णोर्वीर्याणि प्रवोचम्, स मे धीवाढर्यं करोत्विति BB.

६. ०ध्या P.

७. VM. ignores कम्। प्र
The YV. adds the words विष्णवे त्वा to the stanza of the RV.
विष्णवे हविर्धानशकटाभिमानिविष्णुप्रीत्यर्थं त्वां निहन्मि निखनामीति शेषः Mah.
This stanza is borrowed by YV. 5.18; TS. 1.2.13.5.

**प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।**
**यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥२॥**

प्र तद्विष्णुः। प्र। सः[1]। विष्णुः। स्तूयते[2]। वीर्येण[3]। मृगः[4]। इव। भयानकः[5]। कुत्सित-कर्मचारी[6]। पर्वते वर्तमानः[7]। यस्य[8]। विस्तीर्णेषु[9]। त्रिषु[10]। पदनिधानस्थानेषु[11]। सर्वाणि। भूतानि[12]।

---

१. स प्रसिद्धो विष्णुः...तदिति लिङ्गव्यत्ययः Mah. यस्येति वक्ष्यमाणत्वात्स इत्यवगम्यते । स महानुभावः Sy.

२. प्रस्तूयते सर्वैरिति शेषः ।...प्र स्तवत इत्यत्र व्यत्ययेन यकः स्थाने शप्प्रत्ययः Mah.
स्तूयते सर्वैः । कर्मणि व्यत्ययेन शप् Sy.
स्तूयते । यकः स्थाने शप् छान्दसः U.

३. असाधारणवीरकर्मणा Mah. स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण Sy. वीरकर्मणा U.

४. किम्भूतो विष्णुः ? 'मृजूष् शुद्धौ' मार्ष्टि शोधयतीति मृगः । नोऽनर्थकः पादपूरणः Mah.
वीर्येण स्तूयमानत्वे दृष्टान्तः ।... सिंहादिरिव । यथा स्वविरोधिनो मृगयिता सिंहः Sy. यथा मृगः सिंहः स्तूयते U.

५. बिभेत्यस्मादसौ भीमः Mah. भीमो भीतिजनकः...तद्वदयमपि मृगोऽन्वेष्टा शत्रूणां भीमो भयानकः सर्वेषां भीत्यपादानभूतः । परमेश्वराद् भीतिः 'भीषास्माद्वातः पवते' (TA. 8.8.1.) इत्यादिश्रुतिषु प्रसिद्धा Sy. बिभेत्यस्मादिति भीमः U.

६. कौ पृथिव्यां मत्स्यादिरूपेण चरतीति कुचरः M. कुत्सितहिंसादिकर्ता, दुर्गमप्रदेशगन्ता वा...कुचरशब्दस्य यथादिकुत्सितकर्मकर्ता कुषु सर्वासु भूमिषु लोकत्रये सञ्चारी वा Sy. कुत्सितचारी प्राणिवधजीवनः U.

७. गिरि वेदवाण्यां गिरौ देहे वाऽन्तर्यामिरूपेण तिष्ठतीति गिरिष्ठाः । अथवा न इवार्थः । गिरिष्ठाः पर्वतस्थितः कुचरः कुत्सितचारी प्राणिवधजीवनो भीमो भयङ्करो मृगो न सिंह इव स यथा वीर्येण स्तूयते तद्वत् Mah. पर्वताद्युन्नतप्रदेशस्थायी सर्वः स्तूयते...तथा गिरिष्ठा गिरिवदुच्छ्रितलोकस्थायी । यद्वा गिरि मन्त्रादिरूपायां वाचि सर्वदा वर्तमान ईदृशोऽयं स्वमहिम्ना स्तूयते Sy.
गिरिष्ठाः पर्वतस्थानः । यद्वा हीनोपमानत्वादन्यथा व्याख्यायते । सर्वैरेतैर्मृगादिभिः पदैरिन्द्रो विशिष्यते । स हि विष्णोरुपमानं भवितुमर्हति । मृगो न ... यथा शुद्धोऽपहतपाप्मा इन्द्रः । भीमो भीषणः, कुचरः क्वायं चरतीति कुचरः । कुशब्दस्य सम्प्रसारणं छान्दसम् । गिरिष्ठा गिरिर्मेघस्तत्रेन्द्रो वृष्ट्यर्थं तिष्ठति । अथ कौ पृथिव्यां चरतीति कुचरो मत्स्यकूर्मादिरूपेण । अथ गिरि वेदवाक्ये तिष्ठति गिरिष्ठाः । अथ देहोऽपि गिरिरुच्यते तस्मिन्नात्मत्वेन तिष्ठतीति गिरिष्ठाः U.

८. विष्णोः Mah, Sy., U.

९. उरुषु प्रभूतेषु Mah. विस्तीर्णेषु Sy. महत्सु U.

१०. त्रिसङ्ख्याकेषु Sy.

११. पादप्रक्षेपणस्थानेषु लोकेषु Mah.
पादप्रक्षेपेषु Sy.
विक्रमणेषु लोकेषु U.

१२. भूतजातानि Mah., Sy., U.

अधिवसन्ति[1][2]।

प्र विष्ण॑वे शू॒षमे॑तु॒ मन्म॑ गिरि॒क्षित॑ उरुगा॒याय॒ वृष्णे॑ ।
य इ॒दं दी॒र्घं प्रय॑तं स॒धस्थ॒मेको॑ विम॒मे त्रि॒भिरित्प॒देभिः॑ ॥३॥

प्र विष्णवे । प्रगच्छतु[3]। विष्णवे[4]। बलकरम्[5]। स्तोत्रम्[6]। पर्वते[7] वर्तमानाय। महागमनाय[8]। वर्षित्रे[9]। यत्[10]। इदम्[11]। दीर्घम्[12]। प्रकर्षेण सम्बद्धम्[13]। त्रैलोक्यम्[14]। एकः[15]। त्रिभिः। एव। पदैः[16]। परिचिच्छेद[17]।

यस्य॒ त्री पू॒र्णा मधु॑ना प॒दान्यक्षी॑यमाणा स्व॒धया॒ मद॑न्ति ।
य उ॑ त्रि॒धातु॑ पृथि॒वीमु॒त द्यामेको॑ दा॒धार॒ भुव॑नानि॒ विश्वा॑ ॥४॥

यस्य त्री । यस्य[18]। त्रीणि । पदानि[19]। प्रोषध्यादिभिः[20] स्वरसैः। पूर्णानि। अक्षीयमाणा[21]न्नेन[22]।

---

१. अधिनिवसन्ति स स्तूयत इत्यर्थः Mah. आश्रित्य निवसन्ति स विष्णुः स्तूयते Sy. उपरि निवसन्ति U.

२. मृगो न भीमः कुचरो गिरिष्ठाः। मृग इव भीमः कुचरो गिरिष्ठाः। मृगो मार्ष्टेर्गतिकर्मणः। भीमो बिभ्यत्यस्माद्, भीष्मोऽप्येतस्मादेव। कुचर इति चरति कर्म कुत्सितम्। अथ चेद् देवताभिधानं क्वायं न चरतीति। गिरिष्ठा गिरिस्थायी। गिरिः पर्वतः। समुद्गीर्णो भवति। पर्ववान्पर्वतः। पर्व पुनः पृणातेः प्रीणातेर्वा। N. 1.20. This stanza is borrowed by YV. 5.20.

३. विष्णुमेतु प्राप्नोतु। कर्मणः सम्प्रदानत्वाच्चतुर्थी Sy.

४. सर्वव्यापकाय Sy.

५. अस्मत्कृत्यादिजन्यं बलं महत्त्वम् Sy.

६. मननं स्तोत्रं मननीयं शूषं बलं वा Sy.

७. कौवृषाय ? गिरिक्षिते वाचि गिरिवदुन्नतप्रदेशे वा तिष्ठते Sy.

८. बहुभिर्गीयमानाय Sy.

९. वर्षित्रे कामानाम्। एवं महानुभावं शूषं प्राप्नोतु Sy.

१०. कोऽस्य विशेष इत्युच्यते, यो विष्णुः Sy.

११. इदं प्रसिद्धं दृश्यमानम् Sy.

१२. अतिविस्तृतम् Sy.

१३. नियतम् Sy.

१४. सहस्थानं लोकत्रयम् Sy.

१५. एक एवाद्वितीयः सन् Sy.

१६. पादैः Sy.

१७. विशेषेण निर्मितवान् Sy.

१८. विष्णोः Sy.

१९. पादप्रक्षेपणानि Sy.

२०. ०भि P. मधुना मधुरेण दिव्येनामृतेन Sy.

२१. अक्षीयमाणानि Sy.

२२. स्वधयाऽन्नेन Sy.

मादन्ति[1]। यः[2]। च[3]। पृथिवीम्[4]। च। द्यां[5] चान्तरिक्षसम्बन्धत्वात्। त्रिसन्धानम्[6]। दाधारेत्येत[7]-देवोक्तम्। एको दाधार। भुवनानि[8]। सर्वाणीति।

**तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति।**
**उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥५॥**

तदस्य। तत्[9]। अस्य[10] विष्णोः। प्रियम्[11]। स्थानम्[12]। अभिप्राप्नुयात्[13]। नरः। यत्र[14]। देवकामाः[15]। मदन्ति[16]। विस्तीर्णं[17] क्रममाणस्य[18]। स्तोतैर्बन्धनकृत्[19]। इत्थं[20] तत्स्थानमभिप्राप्नोति। विष्णोः[21]। पदे[22]। परमे[23] दिवि। उदकस्य[24]। उत्पत्तिस्थानम्[25][26]।

---

१. मादयन्ति तदाश्रितजनान् Sy.
२. यं P.D.M.   ३. एव Sy.
४. प्रख्यातां भूमिम् Sy.
५. द्योतनात्मकमन्तरिक्षं च Sy.
६. त्रयाणां धातूनां समाहारस्त्रिधातु। पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा Sy.
७. धृतवान्...उत्पादितवानित्यर्थः। छन्दोगारण्यके 'तत्तेजोऽसृजत तदपोऽसृजत ता आप ऐक्षन्त' इति भूतत्रयसृष्टिमुक्त्वा 'हन्ताहमिमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (Chā. U. 6.3.2-3.) इत्यादिना त्रिवृत्करणसृष्टिरुपपादिता। यद्वा त्रिधातु कालत्रयं गुणत्रयं वा दाधारेत्यन्वयः Sy.
८. भूतजातानि चतुर्दशलोकांश्च। यद्वा पृथिवीशब्देनाधोवर्तीन्यतलवितलादिसप्तभुवनान्युपात्तानि। द्युशब्देन तदवान्तररूपाणि भूरादिसप्तभुवनानि। एवं चतुर्दशलोकान्विद्वा भुवनानि सर्वाण्यपि तत्रत्यानि भूतजातानि Sy.
९. सर्वैः सेव्यत्वेन प्रसिद्धम् Sy.
१०. महतो विष्णोः Sy. ११. प्रियभूतम् Sy.
१२. अन्तरिक्षनामैतत्।...अविनश्वरं ब्रह्मलोकमित्यर्थः Sy. पाथोऽन्तरिक्षम्। यथा व्याख्यातम् N.6.7.
१३. व्याप्नुयाम् Sy.
१४. तदेव विशेष्यते—यत्र स्थाने Sy.
१५. देवं द्योतनस्वभावं विष्णुमात्मन इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तः Sy.
१६. तृप्तिमनुभवन्ति, तदश्यामित्यन्वयः Sy.
१७. ०र्णं M. पुनरपि तदेव विशेष्यते...अत्यधिकम् Sy. १८. सर्वं जगदाक्रममाणस्य तत्तदात्मना Sy.   १९. ततोऽधिकं नास्तीत्याह...स हि बन्धुः स खलु सर्वेषां सुकृतिनां बन्धुभूतो हितकरो वा, तस्य पदं प्राप्तवतां न पुनरावृत्तेः। 'न च पुनरावर्तते' (Chā. U. 8.15.1.) इति श्रुतेस्तस्य बन्धुत्वम्। हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः Sy.
२०. इत्थमुक्तप्रकारेण Sy.   २१. अत एव विष्णोर्व्यापकस्य परमेश्वरस्य Sy.
२२. स्थाने Sy.   २३. उत्कृष्टे निरतिशये केवलसुखात्मके Sy. २४. मधुरस्य Sy.
२५. The passage beginning with अस्य and ending with उत्पत्तिस्थानम् is omitted by P. उत्सो, निष्यन्दो वर्तते। तदश्याम्। यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति। सङ्कल्पमात्रेणामृतकुल्यादिभोगाः प्राप्यन्ते तादृशमित्यर्थः Sy.
२६. VM. ignores सः। हि

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥६॥

ता वाम् । तानि[1] । इन्द्राविष्ण्वोः[2] । स्थानानि[3] । कामयामहे[4] । गमनाय[5] । यत्र[6] । रश्मयः । बहु-शिरस्काः[7] । गच्छन्तः[8] । अत्र[9] । एव[10] । तत्[11] । महागतेः[12] । वर्षितुर्विष्णोः[13] । परार्ध्यस्थम्[14] । पदम्[15] । भासते[16] ।

---

१. तान् M.
गन्तव्यत्वेन प्रसिद्धानि Sy.

२. हे पत्नीयजमानौ वां युष्मदर्थम् Sy.
वां व्यत्ययेन द्वितीयाद्विवचनमेकवचनस्य स्थाने, त्वां विष्णुं स्तुवन् SKN.

३. सुखनिवासयोग्यानि स्थानानि Sy.
गृहाणि निवासस्थानानीत्यर्थः SKN.
निवासस्थानानि Dur.

४. कामयामहे । तदर्थं विष्णुं प्रार्थयाम इत्यर्थः Sy.
कामयामहे SKN.

५. युवयोर्गमनाय Sy. गमनायात्मनः । अथवा वामिति षष्ठीद्विवचनम् । दम्पती पतिपत्नी यजमानावुच्येते । युवयोर्गमनाय कामयामहे वयमृत्विजः SKN.

६. येषु वास्तुषु Sy.

७. अत्यन्तोन्नत्युपेता बहुभिराश्रयणीया वा Sy. श्रयणादिक्रियायोगाच्छृङ्गस्थानीयत्वाद्वा दीप्तिरत्र शृङ्गमुच्यते, बहुदीप्तयः SKN.
बहुदीप्ताः Dur.

८. अथवा गन्तारोऽतिविस्तृताः । यद्वा । यातो गन्तारः । अतादृशाः, अत्यन्तप्रकाशयुक्ता इत्यर्थः Sy. अथवा गमनशीलाः, क्रियाभेदादुत्तरोऽर्थो भिन्नं वाक्यमत एवमुच्यते SKN. अथवा मुहूर्तमप्यनवस्थायिनः Dur.

९. वास्त्वाधारभूते द्युलोके Sy. एष्वेव स्थानेषु SKN.
तेषु स्थानेषु Dur.

१०. खलु Sy. अहशब्दो विनिग्रहार्थीयः SKN.

११. तादृशं सर्वत्र पुराणादिषु गन्तव्यत्वेन प्रसिद्धम् Sy.

१२. बहुभिर्महात्मभिर्गातव्यस्य, स्तुत्यस्य Sy.
रसादानादिक्रियाद्वारेण बहुगतेः SKN.
उरुगमनस्य Dur.

१३. कामानां वर्षितुर्विष्णोः Sy. वर्षितुः, विवेर्वेतद्रूपम्, ऋकारोपजनेन । व्याप्तुरित्यर्थः SKN.

१४. निरतिशयम् Sy.
प्रकृष्टम् SKN.

१५. स्थानम् Sy. विष्णोः स्वभूतम् . . . पदम् . . . स्थानमादित्यमण्डलाख्यम् SKN.
आदित्यमण्डलस्थानम् । स्थाने हि पदसञ्ज्ञा, पदस्थ इति लोकेऽपि वक्तारो भवन्ति Dur.

१६. स्वमहिम्ना स्फुरति Sy. अग्रे भाति, अग्रे दीप्यते, अर्वागिदं सर्वं कृत्वा भातीत्यर्थः Dur.

विस्तीर्णम्।

I. 155.

प्र वः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्चत ।
या सानुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना ॥१॥

प्र वः पान्तम्। युयम्। सोमाख्यस्याऽन्नस्य। पानीयम्। सत्कर्म कर्तुमिच्छते। महते। शूरायेन्द्राय। विष्णवे। च। प्रयच्छत। यौ। पर्वतानाम्। उच्छ्रिते देशे। शत्रुभिरहिंस्यौ।

---

१. अतिप्रभूतम् Sy.
भूरि प्रभूतम्। अथवा परमं पदं दिव एकदेशः परार्ध्यशब्दवाच्यः, तेन च तात्स्थ्यात्मण्डलं लक्ष्यते। कुत एतत्। 'दिव आहुः परे अर्धे पुरीषिणम्' (RV. I. 164. 12b.) इति मन्त्रान्तरे दर्शनात्। तथा च भाष्यकारः—'परमं पदं परार्ध्यस्थम्' (N.2.7.) इत्याह। अवभाति, अवभासते ज्ञापयत इत्यर्थः। 'भूरीति बहुनामधेयम्' इति पठित-स्यापि निर्विवक्षया पुनर्वादः 'प्रभवतीति सतः' इति कारकपरिग्रहार्थम्। प्रभवति हि तत्सर्वस्यानुग्रहाय SKN.

२. अयं मन्त्रो यास्केन गोशब्दो रश्मिवाचक इति व्याचक्षाणेन व्याख्यातः Sy. तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहुशृङ्गाः। भूरिति बहुनो नामधेयम्। प्रभवतीति सतः। शृङ्गं श्रयतेर्वा। शृणातेर्वा। शम्नातेर्वा। शरणायोद्गतमिति वा। शिरसो निर्गतमिति वा। अयासोऽयनाः। तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि। पादः पद्यतेः। तन्निधानात्पदम्। पशुपादप्रकृतिः प्रभागपादः। प्रभागपादसामान्यादितराणि पदानि N. 2.7; SKN. II. 54.

३. VM. ignores अव

Ms. D. puts the figure ॥१५४॥ here to indicate the end of one hundred and fiftyfourth hymn. No such number is given in P. and M.

४. हे अध्वर्य्वादयो वो युष्माकं सम्बन्धि Sy.

५. अन्धः सोमलक्षणमन्नम् Sy.

६. वनीयं P. पर्नीयं D. पालनस्वभावं पातव्यं वा Sy.

७. संक० M.

८. धियायते स्तुतीरिच्छते Sy.

९. विक्रान्ताय Sy.

१०. व्यापकायैतन्नामकाय देवाय च Sy.

११. प्रकर्षेण सम्पादयत Sy.

१२. कस्तयोरतिशय इत्युच्यते।...याविन्द्राविष्णू Sy.

१३. प्रीणनवतां पूरणवतां वा....उक्तलक्षणानां लोकानाम् Sy. पर्ववान्पर्वतः। पर्व पुनः पृणातेः प्रीणातेर्वा N. 1.20.

१४. सानुनि समुच्छ्रितप्रदेशे। सर्वलोक इत्यर्थः। अथवा मेघानां समुच्छ्रितप्रदेशे। 'पर्वतो गिरिः' (Ngh. I.10.) इति मेघनामसूक्तत्वात्, तत्र Sy.

१५. Omitted by M.

१६. ०स्था M. अदम्भनीयौ परैरनभिभाव्यौ Sy.

महान्तौ[1]। तस्थतुः[2]। यथा[3]। अश्वेन। कल्याणेन कश्चित् तिष्ठति।

**त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति।**
**या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥२॥**

त्वेषमित्था[4]। दीप्तम्[6]। इत्थम्। सङ्गतम्[7]। कर्मवतोः[8]। इन्द्राविष्णू! सोमस्य[9] पाता। युवयोः[10]। वर्धयति[11]। यौ[12]। मर्त्यहिंसार्थम्[12]। प्रतिधीयमानम्[13]। एव। वैद्युतस्याग्नेरशनेः[14][15]। निरसितुः[16]। तेजः[17]। यजमानाद् रक्षथो[18] यथा स न विद्युद्धतो भवति।

**ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मातरा नयति रेतसे भुजे।**
**दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ॥३॥**

ता ईम्। ताः[20]। एतत्[21]। सोमपाल्नः[22]। महत्। पौंस्यम्[23]। वर्धयन्तीन्द्राविष्णुभ्यां[24][25] वृष्टा[26]

---

१. अत एव महो महान्तौ। यद्वा। महो महति स्वतेजसि सानुनीत्यनेन सम्बन्धः Sy. २. तिष्ठतः Sy.

३. तत्र दृष्टान्तः। अर्वता वेगवताऽश्वेनेव। तेन यथाऽत्युच्छ्रितं प्रदेशमारोहति तद्वदुच्चं पदमारूढौ। तस्मात्ताभ्यामर्चत Sy.

४. अभिमतदेशप्रापणसमर्थेन Sy.

५. ०मित्था P. इति सा निगदव्याख्याता N. 11.8.

६. प्रदीप्तम् Sy.

७. समरणं सम्यग्यागदेशगमनम् Sy.

८. इष्टप्रदानादिकर्मवतोः Sy.

९. हुतशिष्टसोमपीतयजमानः Sy.

१०. रक्षति यागेन पूजयति। यद्वा शिमीवतोः प्रहरणादिकर्मवतोर्वां युवयोस्त्वेषं दीप्तं शौर्योपेतं, समरणं सम्यक्परस्परगमनोपेतं वृष्टिप्रदानाय मेघविदारणरूपं यजमान उदच्यति रक्षति स्तौतीत्यर्थः Sy.

११. इन्द्राविष्णू Sy.

१२. मर्त्यहिं० P. मर्त्याय मनुष्याय हविर्दात्रे यजमानाय Sy.

१३. प्रतिघातव्यं फलरूपम् Sy.

१४. अग्नेः सकाशात् Sy.

१५. ०ग्नेः D.

१६. अभिमतक्षेप्तुर्निरसितुर्वा शत्रूणाम् Sy.

१७. असनं चलनशीलं प्रदानशीलमशादिकम् Sy.

१८. अविच्छेदेन प्रवर्तयथः। वन्ही हुतं हविः स्वीकृत्य तन्मूलादेव फलमपि दास्यथ इत्यर्थः Sy.

१९. ०सन्नवि० P.

२०. सोमरूपाः प्रसिद्धा आहुतयो यजमानेन हुताः Sy.

२१. ईमित्यनर्थको वा Sy.

२२. अस्येन्द्रस्य Sy.

२३. पास्यं M.
पुंसः कर्म वक्ष्यमाणरूपं बलम् Sy.
पौंस्नम् is suggested.

२४. वर्धयन्ति Sy.

२५. ० भ्या D.

२६. पुष्ठा P.

प्राप्तः। स[1] द्यावापृथिवी[2]। भोगाय[3]। उदकाय च[4]। निनयति[5]। स पुत्रः सन्[6]। गुह्यम्[7]। प्रसिद्धं[8] च[9] द्वे नामनी। पितुः[10] सकाशात्। अथ[11] बौधायनोक्तं 'सोमयाजी'[12] इति तृतीयम्[13]। नाम[14]। दिवः[15]। रोचने[16] यज्ञे। धारयति[17]।

**तत्तदि॑दस्य॒ पौंस्यं॑ गृणीमसी॒नस्य॑ त्रा॒तुर॑वृ॒कस्य॑ मी॒ळ्हुषः॑ ।**
**यः पार्थि॑वानि त्रि॒भिरिद्वि॑गामभिरु॒रु क्रमि॑ष्टोरुगा॒याय॑ जी॒वसे॑ ॥४॥**

तत्तदित्। तत्। तत्। विष्णोः[18]। वीर्यम्[19]। स्तुमः। ईश्वरस्य[20]। पालयितुः[21]। वृकवर्जितस्य[22] रक्षोवर्जितो[23] हि यज्ञात्मा विष्णुः। कामानां सेक्तुः[24]। यो[25] देवः। पार्थिवानि[26] रजांसि। त्रिभिः। एव[27]। विविधगमनैः[28] पदैः। विस्तीर्णम्[29]। क्रान्तवान्[30]। रक्षसां हननेनोरुगमनाय[31] भूतजाताय। जीवितु-[32]मिति[33]।

---

१. स चेन्द्रः सोमपानजनितं सामर्थ्यम् Sy.
२. द्यावापृथिव्यौ Sy.
३. तेषां भोगाय रक्षणाय च Sy.
४. रेतसे प्राणिनां पुत्राद्युत्पादनसामर्थ्याय Sy.
५. नितरां प्रापयति Sy.
६. पुरुत्राता सर्वो जनः Sy.
७. अवरं निकृष्टं नाम पौत्रसञ्ज्ञम् Sy.
८. परं तदुत्कृष्टं पुत्र इति नाम Sy.
९. प्रसिद्धञ्च M.
१०. पालकाद्विष्णोरनुग्रहात् । यद्वा । पितुः स्वोत्पादकात्स्वयमुत्पन्नं सत् Sy.
११. ०थयो P. १२. ०जी D.P.
१३. तदुभयापेक्षया तृतीयं पितेति नाम ... 'त्रीणि वाव रेतांसि पिता पुत्रः पौत्रः' (TS.5.6.8.4.) इति श्रुतेः। अस्यायमर्थः। अग्नौ हुताः सोमाहुतय आदित्यमण्डलं प्राप्य द्वादशात्मनः सवितुर्मूर्त्यन्तरावि(रे इ)न्द्राविष्णू पोषयन्ति तुष्टौ तौ मेघद्वारा वर्षतः। तया वृष्ट्या सस्यादिद्वारा प्रजाः पुत्रपौत्रादिरूपेण वर्धयत इत्येवं महानुभावाविन्द्राविष्णू इति Sy.
१४. नमनं द्यावापृथिव्योः स्थापितं सामर्थ्यम् Sy. १५. द्योतमानस्यादित्यस्य Sy.
१६. अधि, अधिकं रोचने रोचमाने मण्डले Sy.
१७. VM. ignores अधि
१८. अस्य महानुभावस्य Sy.
१९. पुंस्त्वं पराक्रमातिशयम् Sy.
२०. सर्वस्य स्वामिनः Sy.
२१. पालकस्य Sy.
२२. वृको हिंसकस्तस्मादविस्तद्रहितस्य Sy.
२३. हवि: D. २४. नित्यतरुणस्य Sy.
२५. स्तुत्येषु पराक्रमेषु मध्य एकमुदाहरति । यो विष्णुः Sy.
२६. पृथिव्यादीनि प्रथनवन्ति वा सामर्थ्याद्रजांसीति गम्यते। लोकत्रयस्यापि पृथिवीशब्दवाच्यत्वं पूर्वमुदाहृतम् Sy.
२७. ०वं M.
२८. विध० M. विवृतग० D.
२९. विस्तीर्णं यथा भवति तथा Sy.
३०. विचक्रम इत्यर्थः Sy.
३१. उरुगातव्याय ... यद्वा, उरुगायाय । षष्ठ्यर्थे चतुर्थी। उरुगायस्य विष्णोरीदृशं पराक्रमं गृणीमसि Sy.
३२. लोकत्रयरक्षणाय ... जीवसे जीवनाय रक्षणाय Sy.
३३. VM. ignores इत्

द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति ।
तृतीयमस्य नकिरा दधर्षति वयश्चन पतयन्तः पतत्रिणः ॥५॥

द्वे इत्। सर्वं द्रष्टुः[1]। अस्य। द्वे। एव। क्रमणे[2] पृथिवीमन्तरिक्षं च। आभिमुख्येन[3] दृष्ट्वा। मर्त्यः[4]। तयो[5]श्चरति[6]। तृतीयम्। अस्य[7] पदम्[8]। न कश्चिदपि[9]। नाधर्षयति[10]। तथा पक्षयुक्ताः[11] श्येनादयः[12]। च[13]। पतयन्तो[14] नाधर्षयन्ति[15] ।[16]

चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् ।
बृहच्छरीरो विमिमान ऋक्वभिर्युवाकुमारः प्रत्येत्याहवम् ॥६॥

चतुर्भिः। चतुर्भिः[17] पुरत्रैः?[18] सह[19]। शत्रूणां नवतिम्[20]। च पुराणि। नमनसाधनै[21]-र्वीर्यैः। यथा। रथचक्रम्[22]। प्रवृत्तम्[23]। तिर्यग्गच्छतो[24] मनुष्यान् कम्पयत्येवम्[25]। अवीविपत्[26]=अक-

---

१. स्वर्गस्य सर्वस्य वा द्रष्टुर्विष्णोः Sy.
२. क्रमेण P. D. M. पदे Sy.
३. सर्वभूत्वादिना प्रख्याय Sy.
४. मनुष्यः Sy.
५. ०स्तयोः P.
६. ०न्ति P.D. गच्छति, भजते। भुरण्यतिः कण्ड्वादिर्गतिकर्मा। 'भुरण्यति शवति' (Ngh.2.14.) इति तत्कर्मसु पाठात्। प्रसिद्धत्वाद् भूलोकं वृष्ट्याद्यागमनादन्तरिक्षं चेत्युभे क्रमणे जानाति Sy.
७. विष्णोः Sy.
८. क्रमणं द्युलोकाख्यम् Sy.
९. कोऽपि मर्त्यो नकिर्नैव Sy.
१०. बुद्ध्या नाभिभवति। ज्ञातुं न शक्नोतीत्यर्थः Sy.
११. न केवलं मनुष्य एवापितु...वेतारो मरुतोऽपि Sy.
१२. तथा पतत्रिणः पतनशीला गरुडादयो वायवो वा Sy.
१३. Omitted by P.D.
१४. पतयन्तः सर्वत्र गमनसमर्थाः Sy.
१५. नैव शक्नुवन्ति।...सत्यलोकस्यात्यन्तविप्रकृष्टत्वेन सर्वेषामविषयत्वादिति भावः Sy.
१६. VM. ignores वयः
१७. प्रथमाविल्यात्मा विष्णुश्चतुर्भिः Sy.
१८. ० भिपुरत्नैः M. ० भिपुर० P. पुत्रैः is suggested.
१९. सहिताम् Sy.
२०. चतुर्नवतिमित्यर्थः Sy.
२१. गमनसा० P.D. मननसा० M. एतत्सङ्ख्याकान्कालावयवान् नामभिः स्वकीयनमनप्रकारैः प्रेरणविशेषैः Sy.
२२. बहुरोपेतं चक्रमिव Sy.
२३. वृत्तं यथा भवति तथा Sy.
२४. विविधातनस्वभावान् Sy.
२५. ०यन्त्ये० P.D. तं यथा शत्रोरुपरि प्रक्षेपणाय भ्रामयति Sy.
२६. अपि विपत् M.

भ्रमयत्[1] "इन्द्राविष्णू[2] दृंहिताः शम्बरस्य[3]" इति मन्त्रः, "शतं मेषान्[4] वृक्ये[5] चक्षदानम्[6]" इत्येको मन्त्रः, "ऋज्राश्वः शतमेकं च मेषान्[7]" इत्यपरं[8] एवमत्रापिच्छन्दोऽनुविधानेन[9] पञ्चानामनुपादानमथवा चकारात्सञ्च चेत्यर्थो[10] लभ्यत इति। महाशरीरः[11]। रसाहरणपरैस्तेजोभिः। लोकान्[12] विमिमानः[13]। युवा[14]। न कश्चित्कुमारः[15]। प्रतिगच्छति[16]। आह्वमिति[17]।[18]

## I. 156.

**भवा॑ मि॒त्रो न शेव्यो॑ घृ॒तासु॑ति॒र्विभू॑तद्युम्न एव॒या उ॑ स॒प्रथाः॑ ।**
**अधा॑ ते विष्णो वि॒दुषा॑ चि॒दर्ध्यः॒ स्तोमो॑ य॒ज्ञश्च॒ राध्यो॑ ह॒विष्म॑ता ॥१॥**

भवा मित्रः। मित्रशब्दश्छन्दसि[19] पुंल्लिङ्गत्वं[20]। दर्शनाभिमतम्। इव। त्वं सुखनिमित्तम्[21]।

---

१. तद्वदुक्तसङ्ख्याकान्कालावयवानवीविपत् कम्पयति भ्रमयति। ...के पुनस्ते? उच्यन्ते। संवत्सर एकः। अयने द्वे। पञ्चर्तवः। द्वादश मासाः। चतुर्विंशत्य(तिर)र्धमासाः। त्रिंशदहोरात्राः। अष्टौ यामाः। एकस्मिन्दिने पर्यावर्तमानानि मेषादीनि द्वादशलग्नानीति मिलित्वा चतुरधिकनवतिसङ्ख्याकानवीविपत्। नन्वादित्यः स्वयमपीतरवत्परिभ्रमति कथं भ्रमयतीत्युच्यते, नैव दोषः। एतेषां भ्रामकस्य ध्रुवस्य विष्णोर्मूर्त्यन्तरत्वात्। अथवा स्वभ्रमणाधीनत्वादितरेषां परिभ्रमणस्यातः स्वयं भ्रमयतीत्युच्यते Sy.

२. इन्द्रो विष्णु M.

३. RV. VII.99.5[a].

४. शतमेषं P.

५. वृक्षेक्य M.

६. RV. I.116.16[a].

७. मेन् P. मोषान् D. RV.I.117.18[d].

८. ०रम् P.D.

९. छन्दो० M.

१०. ० त्यत्रो P.

११. एवं कालात्मको विष्णुः ... विराडात्मना सर्वदेवमनुष्यादिशरीराणां स्वशरीरत्वात् Sy.

१२. यद्वा ... स्तुतिमद्भिर्मन्त्रविद्भिर्वा विमिमानः। यद्यपि विभुस्तथापि भक्त्यधीनत्वात्तुल्या मीयते Sy.

१३. विवमानः P. विममानः D. M. विविधमात्मानं मिमानो देवतिर्यगात्मना विभज्य स्थापयन् Sy.

१४. सर्वत्र मिश्रणशीलो नित्यतरुणो वा Sy.

१५. अत एवाकुमारोऽनल्पः Sy.

१६. एवम्भूतो महाविष्णुः ... गच्छति Sy.

१७. आह्वानं प्रति ... यज्ञदेशम् Sy.

१८. Ms. D. puts the figure ॥१५५॥ here to indicate the end of one hundred and fiftyfifth hymn. No such number is given in P. and M.

१९. मितेर्दुःखात्त्राता सखा आदित्यो वा मित्रः ...तद्वत् Sy.
मित्रः प्रमीतेः। त्रायते N. 10.21.

२०. पुंल्लिगस्य P.

२१. सुखे साधुः सुखकर्ता Sy.

भव[1]। घृतेनाक्रुष्यमाणः[2]। व्याप्तयशाः[3]। एवं गच्छन्[4]। सर्वतः पृथुतमस्तत्र[5] तत्र प्रयोजनम्। अनन्तरम्[6]। एव। ते[7] हि। विष्णो! त्वत्कृतं[8] जानता[9]। वर्धनीय[10] इत्येतद् विशदमाह स्तोम इति। स्तोमः[11]। यज्ञः। च। संसाधनीयः[12]। हविष्मतेति[13]।

**यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति ।**
**यो जातमस्य महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥२॥**

यः पूर्व्याय। यः[14]। पूर्वस्मिन्काले भवाय[15]। विधात्रे[16]। सर्वदा नवतराय[17]। सुमज्जन्वः सुशब्दपर्याय[18] इत्युक्तं शोभना जाया[19] भवत्यस्य तस्मै[20]। यो हवींषि[21] प्रयच्छति[22]। यो वा। अस्य[23]। महतः[24]। सञ्जातम्[25]। महत्त्वम्[26]। ब्रवीति[27]। सः[28]। एव[29]। अन्नैः[30]। आत्मीयं शत्रुम्[31]। अभिभवति[32][33]।

---

१. प्रतिविशेषणं नो भवेति सम्बन्धः Sy.
२. घृतमुदकमासूयते येन स तादृशः। यद्वा। घृतमाज्यमाभिमुख्येन नीयते यस्मै स तादृशः Sy.
३. प्रभूतयशाः प्रभूतान्नो वा Sy.
४. एवया रक्षणस्य मिश्रयिता प्रापयिता Sy.
५. सर्वतः पृथुः Sy. ६. उ इति पादपूरणः। हे विष्णो त्वं यस्मादीदृशो भवसि, अथाऽस्मात् Sy. ७. तव Sy.
८. The passage beginning with ते and ending with त्वत्कृतम् is missing in M.
९. विदुषा त्वन्माहात्म्यवेदिना यजमानेन Sy.
१०. ०यम् M. पुनः पुनः प्रवर्धनार्हः। एकवारकरणे न सम्पूर्यत इत्यर्थः Sy.
११. स्तोत्रविशेषः Sy. १२. ०शंसा P. समाराधनीयः। यद्वा विदुषा होत्रा स्तोमो राध्यो हविष्मता यजश्च राध्यः Sy.
१३. VM. ignores उ
१४. The passage beginning with यः and ending with यः is omitted by M. यो मर्त्यः Sy.
१५. पूर्वकालीनाय, नित्यायेत्यर्थः Sy.
१६. विविधजगत्कर्त्रे Sy.
१७. नित्यनूतनायात्यन्तरमणीयायेत्यर्थः। स्तुत्याय वा Sy.
१८. सुशब्दः M. १९. ०नजा० M.
२०. स्वयमेवोत्पन्नाय। . . . यद्वा सुतरां मादयतीति सुमत्, तादृशी जाया यस्य स तथोक्तः, तस्मै सर्वजगन्मादनशीलश्रीपतय इत्यर्थः Sy. सुमत्स्वयमित्यर्थः N.6.22.
२१. हविरादिकम् Sy.
२२. उक्तगुणकाय विष्णवे व्यापकाय ददाशति . . . ददाति Sy.
२३. अस्य विष्णोः Sy.
२४. महानुभावस्य Sy.
२५. ०त M. जातं जन्मोत्पत्तिं हिरण्यगर्भादिरूपं जन्म Sy.
२६. महत् पूज्यम् Sy.
२७. ब्रूयात् . . . सङ्कीर्तयेत् Sy.
२८. सोऽपि दाता स्तोता च Sy.
२९. उशब्दोऽपिशब्दार्थः Sy.
३०. अन्नैः कीर्तिभिर्वा युक्तः सन् Sy.
१३. युज्यं चित्सर्वैर्गन्तव्यमेव तत्पदम् Sy.
३२. अभि, आभिमुख्येनासद् गच्छति प्राप्नोति Sy.
३३. VM. ignores विष्णवे। उ। चित्

तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन ।
आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥३॥

तमु स्तोतारः। तम्[1]। एव। प्रत्नम्[2]। हे स्तोतारः! यथा। पूजयितु जानीथ। तथा यज्ञस्य[3]। मध्ये[4] वर्तमानम्। जन्मवतौषध्यादिना[5] हविषा। पूरयत[6]। तथा अस्य[7] च। नाम[8]। विविधं[9] ब्रूत विष्णुर्विष्णुर्विष्णुरिति[10]। प्रत्यक्षः शेषः—महतः[11]। तव। शोभनां मतिम्[12]। भजामहे[13] इति[14]।

तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः ।
दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुते ॥४॥

तमस्य। मरुद्भिरानीयमानस्य[15]। विधातुः[16]। अस्य[17]। तत्[18]। यज्ञाख्यं[19] कर्म। राजा[20]। वरुणः[21]।

---

१. तमेव विष्णुम् Sy.
२. पूर्वार्हमनादिसंसिद्धम् Sy.
३. The passage beginning with जानीथ and ending with यज्ञस्य is missing in M.
४. यज्ञस्य गर्भभूतं यज्ञात्मनोत्पन्नमित्यर्थः । 'यज्ञो वै विष्णुः' (SB. 1.1.2.13.) इति श्रुतेः। यद्वा। ऋतस्योदकस्य गर्भं गर्भकारणमुदकोत्पादकमित्यर्थः । 'अप एव ससर्जादौ' (Manu. 1.8.) इति स्मृतेः Sy.
५. एवम्भूतं विष्णुं यथा विद जानीथ तथा जनुषा जन्मना स्वत एव न केनचिद् वरलाभादिना Sy.
६. ०रय M.
स्तोत्रादिना प्रीणयत यावदस्य माहात्म्यं जानीथ तावदित्यर्थः Sy.
७. महानुभावस्य विष्णोः Sy.
८. अस्य। नाम। च। M. सर्वैर्नमनीयमभिधानं सार्वात्म्यप्रतिपादकं विष्णुरित्येतन्नाम Sy.
९. जानन्तः पुरुषार्थप्रदमित्यधिगच्छन्त आ समन्ताद्...वदत, सङ्कीर्तयत । यद्वा नाम यज्ञात्मना नमनं विष्णोरेव सर्वेषां स्वर्गापवर्गसाधनायेष्ट्याद्यात्मना द्रव्यदेवतात्मना वा परिणाममा जानन्तो यूयं विविक्तन ब्रूत स्तुत Sy.
१०. विष्णुर्विष्णुरिति M.
११. इदानीं साक्षात्कृत्याह। हे विष्णो सर्वात्मक देव ... महतः Sy.
१२. सुमतिं सुष्टुतिं शोभनात्मिकां बुद्धिं वा Sy.
१३. सेवामहे वयं यजमानाः Sy.
१४. VM. ignores आ। जानन्तः। चित्। विष्णो
१५. मरुतामृत्विजां सङ्घातो मारुतम् । तद्वतः । मत्वर्थो लुप्यते । मरुतां देवानां सम्बन्धिनो वा Sy.
१६. मेधाविनः Sy. १७. यजमानस्य Sy.
१८. सत् P.
तं प्रसिद्धम् Sy.
१९. यागं यज्ञात्मकं विष्णुम् । 'यज्ञो वै विष्णुः' (SB. 1.1.2.13.) इति श्रुतेः Sy.
२०. राजमानः Sy.
२१. ०ण P.

सेवते। अश्विनौ[१] च। धारयति[२]। फलम्[३]। उत्तमम्[४]। अन्हो लम्भयितारम्[५]। गोव्रजम्[६]। च[७]। अयं विष्णुः[८]। गवां प्रदानार्थं[९] सहाययुक्तः[१०]। विवृतद्वारं[११] करोति[१२]।

**आ यो वि॒वाय॑ स॒चथा॑य॒ दैव्य॒ इन्द्रा॑य॒ विष्णुः॑ सु॒कृते॑ सु॒कृत्त॑रः।**
**वे॒धा अ॑जिन्वत्त्रिषध॒स्थ आर्य॑मृ॒तस्य॑ भा॒गे यज॑मान॒माभ॑जत् ॥५॥**

आ यो विवाय[१३]। यः[१४]। आगच्छति। सेव्याय[१५]। दिवि भवः। इन्द्राय[१६]। शोभनकर्मकृते[१७]। तथाविधः[१८]। विष्णुः। स[१९] विधाता[२०]। प्रीणयति[२१]। त्रिस्थानः[२२]। आर्यमित्येतदेवाह[२३]। ऋतस्येति यज्ञस्य। फले[२४]। यजमानम्[२५]। भाजयति[२६]।

---

१. तमेव क्रतुं यागमश्विना, अश्विनौ सचेते। अन्येऽपि देवाः सचन्ते सेवन्ते Sy.
२. धृतवान् Sy.
३. बलं फलप्रदानसामर्थ्यरूपम् Sy. बलम् is suggested for फलम्
४. उत्कृष्टतमम् Sy.
५. अहर्वत्तारम्। स्वर्गोत्पादकमित्यर्थः Sy.
६. व्रजं च मेघं च। व्रज इति मेघनाम। 'व्रजश्चरुः' (Ngh. 1.10.) इति तन्नामसु पाठात् Sy.
७. ०जंश्चा० M.
८. सवनत्रयात्मना व्याप्तो विष्णुः Sy.
९. ०र्थं M. १०. ०क्तोऽपि M. यजमानादिसखिभिर्युक्तः सन् Sy.
११. तं वृष्टयुदकाय...अपगतावरणं करोति। आहुतिद्वारा यज्ञस्यैव वृष्टयुत्पादकत्वात्। यद्वा मारुतस्य मरुत्सङ्घातस्य देवगणस्य, वेधसो विधातुः स्रष्टुर्विष्णोः, क्रतुं कर्म पालनादिरूपं, वरुणादयः सचन्ते। तदधीनत्वात्पालनस्य। स च सखिवानिन्द्रमरुदादिसहायोपेतः तद्युक्तलक्षणं वरं वृष्टयुत्पादनादिसामर्थ्यरूपं बलं दाधार। तथा व्रजं चापोर्णुते Sy.
१२. VM. ignores तम्
१३. The passage beginning with आ and ending with विवाय is omitted by P. D.
१४. विष्णुः Sy. १५. सचथाय...याग-साहाय्यकरणाय Sy.
१६. इरां हविर्लक्षणान्नं द्रावयतीतीन्द्रो यजमानः।...तस्मा उक्तरूपाय यजमानाय Sy. इन्द्र इरां दृणातीति, इदंकरणादित्याग्रायणः N.10.8.
१७. शोभनस्तुतिकर्त्रे Sy.
१८. सुकृत्तरः शोभनफलप्रदानां मध्ये श्रेष्ठः Sy. १९. सं P. D.
२०. अभिमतफलविधाता Sy.
२१. प्रीणयति। जिवि प्रीणनार्थः Sy.
२२. त्रिसङ्ख्योपेतसहस्थानवान्। सवनत्रयस्थानः क्षित्यादिस्थानत्रयो वा विष्णुः Sy. २३. आगन्तव्यं यजमानम् Sy.
२४. भागे हुतशेषरूपे Sy.
२५. भाययति P. आभजद् भजति समीपयतीत्यर्थः। यद्वा। ऋतस्य यज्ञस्य भागे फले यजमानमाभजत् स्वामित्वेन स्थापयति Sy.
२६. VM. ignores आ
Ms. D. puts the figure ॥१५६॥ here to indicate the end of one hundred and fiftysixth hymn. No such number is given in P. and M.

I. 157.

**अबो॑ध्य॒ग्निर्ज्म उदे॑ति॒ सूर्यो॒ व्यु१॒॑षाश्च॒न्द्रा म॒ह्यावो॑ अ॒र्चिषा॑ ।**
**आयु॑क्षाताम॒श्विना॒ यात॑वे॒ रथं॒ प्रासा॑वीद्दे॒वः स॑वि॒ता जग॒त्पृथ॑क् ॥१॥**

अबोधि। होमार्थं[1] प्रबुद्ध आसीत्। अग्निः[2]। पृथिव्याः[3] पर्यन्तात्। सूर्यः। उद्गच्छति। ह्लादयित्री[4]। महती। उषाः। तेजसा[5]। अन्धकारं[6] विवृणोति[7]। अश्विनौ[8] च। गमनाय[9]। आत्मीयं[10] रथम्। युक्तवन्तौ[11]। सविता[12] च। देवः[13]। जङ्गमम्[14]। स्वे स्वे[15] कार्ये। प्रासावीत्[16], आश्विनं सूक्तम्।

**यद्यु॒ञ्जाथे॒ वृष॑णमश्विना॒ रथं॑ घृ॒तेन॑ नो॒ मधु॑ना क्ष॒त्रमु॑क्षतम् ।**
**अ॒स्माकं॒ ब्रह्म॒ पृत॑नासु जिन्वतं व॒यं धना॒ शूर॑साता भजेमहि ॥२॥**

यद्युञ्जाथे। यदि[17]। युञ्जाथे[18]। वर्षितारम्[19]। अश्विनौ! रथम्[20]। अथ धरता[21]। उदकेन[22]। अस्माकम्[23]। धनम्[24]। सिञ्चतम्[25]। अस्माकमेव[26]। स्तोत्रम्[27]। सङ्ग्रामेषु[28]। कामप्रदानेन प्रीणयतम्।

---

१. ०बु० M. प्रतिबोधितः Sy.
२. अयमग्निर्विहितः सन् Sy.
३. ज्मायाः पृथिव्या वेदिलक्षणायाः सम्बन्धी सन्। ज्मेति पृथिवीनाम। 'ग्मा ज्मा' (Ngh.1.1.) इति तन्नामसूक्तत्वात् Sy.
४. प्राणिनामाह्लादिनी सती Sy.
५. अर्चिषा प्रकृष्टेन तेजसा Sy.
६. तमांसि Sy. ७. विवासयति Sy.
८. यत इयमुषा उदेति यतश्च सूर्यो यतश्चायमग्निः प्रबुद्धो भवति, अतः कारणाद्धे अश्विनौ Sy.
९. देवयजनगमनाय Sy.
१०. युष्मत्सम्बन्धिनम् Sy.
११. रासभाभ्याम् ... आभिमुख्येन युञ्जाथाम् Sy.
१२. तथा सविता सर्वकर्मणोऽनुज्ञाता देवः Sy.
१३. देवे M. १४. जङ्गमं प्राणिजातम् Sy.
१५. स्वस्वकर्मानुरोधेन Sy.
१६. प्रसौतु। अनुजानातु Sy.
१७. यदा Sy. १८. यदि। युञ्जाथे omitted by P.D. योजयथः Sy.
१९. ०षि० D. वृष्ट्यादिवर्षकम् Sy.
२०. तदा Sy. २१. ०रथा P. घृतेनोदकेन Sy. २२. मधुना मधुरेण Sy.
२३. अस्मदीयम् Sy.
२४. बलं क्षत्रियजातं वा Sy.
२५. प्रवर्धयतमित्यर्थः। यद्वा घृतेन क्षरणरूपेण मधुना मधुरेणामृतेनोक्षतं युष्मद्रथस्थेन मधुनाऽस्मदीयं बलं प्रवर्धयतमित्यर्थः। अश्विनौ रथस्य मधुपूर्णत्वं 'मधुवाहनो रथः' (RV. I. 157.3[a]) इत्यादिषु प्रसिद्धम् Sy.
२६. अस्मदीयासु...प्रजासु Sy.
२७. ब्राह्मं तेजः Sy.
२८. पुत्रभृत्यादिमनुष्यरूपासु प्रजासु। ... पृतनेति मनुष्यनाम। 'विवस्वन्तः पृतनाः' (Ngh. 2.3.) इति तन्नामसूक्तत्वात्। यद्वा। पृतनासु परकीयासु प्रजासु ब्रह्म तासां परिपृढमन्नमस्माकं जिन्वतं प्रीणयतम्। ब्रह्मेत्यन्ननाम। 'ब्रह्म वर्चः' (Ngh.2.7.) इति तन्नामसूक्तत्वात् Sy.

वयम्। धनानि। सङ्ग्रामे। शत्रुभ्यः भजेमहि।

**अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः।**
**त्रिवन्धुरो मघवा विश्वसौभगः शं न आ वक्षद्द्विपदे चतुष्पदे ॥३॥**

अर्वाङ्। अस्मान्। आयातु। त्रिचक्रः। रथः। मधु येनोह्यते। क्षिप्राश्वः। अश्विनोः। ऋषिभिः सुष्ठु स्तुतः। त्रिसन्धानः। धनवान्। विश्वानि सौभाग्यानि यस्य। सुखम्। अस्माकम्। द्विपदे। चतुष्पदे च। आवहतु।

**आ न ऊर्जं वहतमश्विना युवं मधुमत्या नः कशया मिमिक्षतम्।**
**प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥४॥**

आ न ऊर्जम्। आवहतम्। अस्मभ्यम्। अन्नम्। अश्विनौ! युवाम्। मधुमत्या च। भवतो-रश्वाजन्या। अस्मान्। सिञ्चतम्। आयुश्चास्माकम्। वर्धयतम्। पापानि च। शोधयतम्।

---

१. तवीयानि धनानि बहुविधानि Sy.
२. शूरसातौ शूराणां प्रहारादिना युक्ते सङ्ग्रामे Sy.
३. लभेमहि Sy.
४. अर्वाङ् M. अस्माद् P. D. अस्मदभिमुखः Sy.
५. गच्छतु Sy.
६. ०क्रो M. चक्रत्रययुक्तः Sy.
७. ०नोच्यते M. मधुवोढा Sy.
८. शीघ्रगाम्यश्वोपेतः Sy.
९. अत एवास्माभिस्स्तूयमानः Sy.
१०. निम्नोन्नतकाष्ठत्रयोपेतः। सारथ्याश्रयस्थानं बन्धुरम् Sy.
११. सर्वसौभाग्योपेतः Sy.
१२. ईदृशोऽश्विनो रथो नोऽस्माकम् ... पुत्रादिप्रजायै Sy.
१३. पशवे च Sy.
१४. प्रापयतम् Sy.
१५. अस्माकम् Sy.
१६. ऊर्जं बलं प्राणनसमर्थमन्नं वा Sy.
१७. युवा P.
१८. माधुर्योपेतया Sy.
१९. कशया वाचा, इष्टप्रदानरूपया। ... कशेति वाङ्नाम। 'कशा धिषणा' (Ngh. 1.11.) इति तन्नामसूक्तत्वात्। यद्वा मधुमत्या मधुरवृष्टिमत्या माधुर्योपेतया कशयाऽश्वताडन्या नोऽस्मान् मिमिक्षतम्। मध्विति, उदकनाम। 'मधु पुरीषम्' (Ngh. 1.12.) इति तन्नामसूक्तत्वात्। कशयाऽश्वताडनेन शीघ्रमागत्य वृष्टिरूपं फलं दास्यत इति कशाया मधुमत्त्वम् Sy.
२०. अस्मत् P.
२१. प्रोणयतम् Sy.
२२. आयुष्यम् Sy.
२३. प्रवर्धयतम्। प्रपूर्वस्तिरतिर्वर्धनार्थः Sy.
२४. रपांसि ... पापानि Sy. रपो रिप्रमिति पापनामनी भवतः N. 4.21.
२५. ०धयति तद् M. निःशेषेण शोधयतम् Sy.

द्वेष्टृ[1]श्च। निवारयतम्[2]। भवतं[3] च। अस्माकं[4] सहभुवौ[5]।

**युवं ह॒ गर्भं॒ जग॑तीषु धत्थो यु॒वं विश्वे॑षु॒ भुव॑नेष्व॒न्तः।**
**यु॒वम॒ग्निं च॑ वृषणाव॒पश्च॒ वन॒स्पतीँ॑रश्विना॒वैर॑येथाम्॥५॥**

युवं ह। युवाम्। खलु। जगतीषु[6]। गर्भम्। धत्थः[7]। युवाम्[8]। सर्वेषु च। भुवनेषु[9]। अन्तर्गर्भं[10] धत्थः[11]। युवामेव। अग्निम्। वृषणौ[12]! स्वकार्ये प्रेरयथः[13]। उदकानि। च। वनस्पतींश्च। अश्विनौ[14]!

**यु॒वं ह॑ स्थो भि॒षजा॑ भेष॒जेभि॒रथो॑ ह स्थो र॒थ्या॒३ राथ्ये॑भिः।**
**अथो॑ ह॒ क्ष॒त्रमधि॑ धत्थ उग्रा॒ यो वां॑ ह॒विष्मा॒न्मन॑सा द॒दाश॑॥६॥**

युवं ह। युवाम्। खलु[15]। भवथः। भेषजेभ्योऽपि[16]। भिषजौ[17]। भवथः। अपि[18] च। रथनेतृभ्योऽपि[19]। अतिशयेन रथे नेतारौ[20]। अपि च युवाम्[21]। उग्रौ[22]। बलम्। तस्मिन्नधिनिधत्थः[23][24]।

---

१. द्वेष्यममित्रादिकम् Sy.
२. नाशयतम् Sy.
३. अभ० M. भवन्तौ। ऐकमत्यं भजत-(तम्) इत्यर्थः। वाक्यभेदादनिघातः Sy.
४. भवतं चास्माकम् is omitted by P.
५. ०भ्रु० M. The passage beginning with युवाम् and ending with सहभुवौ is omitted by D. सहभुवावस्मत्कार्येषु सहभवनवन्तौ Sy.
६. गमनशीलासु गोषु मध्ये Sy. ७. धत्तः M. धारयथः Sy. ८. युवं M. न केवलं गोष्वेवापि तु ... युवाम् Sy
९. भूतजातेषु Sy. १०. मध्ये Sy.
११. वृष्टिद्वाराऽमिष (भिषग्) रूपत्वेन गर्भस्वरेतसः पोषकत्वात् Sy.
१२. कामानां वर्षितारौ! Sy.
१३. प्रवर्तयेथाम्। आहुतिभोगायाग्निं स्वीकृत्य च वृष्ट्युदकान्युदकैरोषधिवनस्पत्यादिकमेतान्यस्मदर्थं प्रेरयेथाम् Sy.
१४. This Stanza is omitted by P.D. VM. ignores च
१५. हशब्दो 'अश्विनौ हि देवानां भिषजौ' (AB 1.18.) इत्यादिप्रसिद्धिद्योतनार्थः Sy. १६. भेषजैरौषधैः 'भेषजौषधभैषज्यान्यगदो जायुः' (Amara. 2.6. 50.) 'अगदं तत्रौ— (तन्त्रमौ) षधम्' (Cf. Vaij. IV. 4.141:—'जायुः पुंस्यगदस्तन्त्रं भैषज्यौषधभेषजम्' इति चाभिधानात् Sy. १७. भि० D.
१८. वि० M. १९. रथवोढृभिरश्वैः Sy.
२०. रथवन्तौ स्थः। 'आ वां रथो अश्विना' (RV. I.118.1.) इत्यादिप्रसिद्धिद्योतनार्थो हशब्दः Sy. २१. युवायम् M. युवयोः Sy. २२. यस्मादेवं तस्माद् हे उग्रा उद्गूर्णसामर्थ्यावश्विनौ! Sy.
२३. अधिकम् Sy.
२४. धारयथोऽत्यधिकमनुगृह्णीथ इत्यर्थः। प्रभूतबलौ युवां रथमारुह्यास्मद्देवयजनमागत्य हविरन्नं मां धृत्वाऽस्मद्यज्ञेऽस्मान्निर्विचिकित्सितमिति तात्पर्यार्थः Sy.

यः।[1] युवाभ्याम्।[2] यजमानः।[3] मनसैव।[4] हविः प्रयच्छति।[5]

द्वितीयस्याष्टकस्यायमध्यायं व्याकरोदिति।
द्वितीयं माधवार्यस्य[6] पौत्रः श्रीवेङ्कटात्मजः॥[7]

---

# ॥ अथ द्वितीयेऽष्टके तृतीयोऽध्यायः[8] ॥

"वसु रुद्रा पुरुमन्तू[9]" व्याचिख्यासति माधवः।
प्रदर्शयँल्लङो वृत्तिं लुङश्च तदनन्तरम्॥१॥
भूतेऽनद्यतने लङ् स्याल् लुङ् स्मृतोऽद्यतनेऽपि च।
लिटः परोक्षे स्मरणाल्लङ्[10] प्रत्यक्षेऽवशिष्यते॥२॥
लङ् "इन्द्रो[11] अस्माँ अरदत्[12]" "अपाहन् वृत्रं परिधिम्।[13]"
"स्यावो[14] मरुतः[15] स्वधासीद्यन्मामेकं[16] समधत्त[17]"॥३॥
"किं यविष्ठो न आजगन्[18]" "तद्वो[19] देवा अब्रुवन्[20]" च।
"प्रत्यायं[21] सिन्धुमावदन्। उपातिष्ठन्त गिर्वणः[22]"॥४॥

---

१. आज्यपुरोडाशादिहविर्युक्तो यजमानः Sy.  २. युष्मदायत्तेन चेतसा Sy.
३. हविराविकम् Sy.  ४. ददाति Sy.
५. VM. ignores ह। ह
६. ०ध० D.
७. Ms. D. puts the figure ॥१५७॥ here to indicate the end of one hundred and fiftyseventh hymn. No such number is given in P. and M.
८. Omitted by P.D.
९. ०मन्त्रू P. ०मन्तु M. RV.I.158.1ª.
१०. लट् M.
११. ०न्द्रोस्मा P.D. ०न्द्रोऽस्माँ M.
१२. RV. III. 33. 6ª.
१३. यवा० M.
१४. RV. III. 33. 6ᵇ.
१५. वे P.  १६. ०त P.
१७. समवत्त R. RV. I. 165.6ª⁻ᵇ.
१८. RV. I. 161. 1ª.  १९. वे P.
२०. अग्रव० M. RV. I.161.2ᵇ.
२१. प्रत्या० P.
२२. गीर्व० P. RV. I. 11.6ᵇ⁻ᶜ.

प्रत्यक्षाण्येव सर्वाणि परोक्षे चापि दृश्यते ।
इन्द्रस्य नु वीर्याणीति[1] सूक्तं तत्र निदर्शनम् ॥५॥

कर्मणामत्र पारोक्ष्यं चकारेति[2] प्रदर्शितम् ।
एवं च सर्वे सूक्तस्थाः[3] परोक्षाः[4] स्युरमी लङः ॥६॥

परोक्षे लोकविज्ञाते प्रयोक्तुर्दृष्टिगोचरे ।
लङं कात्यायनो ब्रूते "जिहीत[5] पर्वतो गिरिः" ॥७॥

परोक्षे लोकविज्ञाते बहवो वैदिका लङः ।
प्रयोक्तुर्दर्शनायोग्ये विषयेऽपि स्थिता इति ॥८॥

"अधारयन्त वह्नयोऽभजन्त सुकृत्यया[6]"
"घनो वृत्राणामभवः[7]" "सद्यो वृद्धो अजायथाः[8]" ॥९॥

शक्नुवन्त्यृषयो द्रष्टुमतो[9]ऽदर्शनगोचराः ।
लङोऽपि च समीचीना इति केचिदवस्थिताः ॥१०॥

दृश्यतेऽद्यतने चापि लङ् "आयमद्य सुकृतम्[10]"
"अवाचचक्षं पदमस्य[11]" "उग्रं निधातुरन्वायम्[12]" ॥११॥

प्रत्यक्षे वा परोक्षे वा लुङ् भूतेऽद्यतने भवेत्[13] ।
"अभि स्तोमा[14] अनूषत" "सनिं[15] मेधामयासिषम्[16]"

---

१. RV. I. 32. 1ᵃ.
२. च करोति M.
३. ०स्था P. D.
४. ०क्षा P. D.
५. RV. I. 37.7ᵈ.
६. RV. I. 20.8ᵃ·ᵇ.
७. RV. I. 4.8ᵇ.
८. RV. I. 5.6ᵇ.
९. ०ष्टुं मतो० M.
१०. RV. I. 125. 3ᵃ.
११. RV. V. 30.2ᵃ.
१२. निधतु० D. निदधा० M. RV. V. 30.2ᵇ.
१३. ० नेऽभवत् M.
१४. RV. I. 11. 8ᵇ.
१५. ०निर्मे० D. सन्निमे P.
१६. RV. I. 18.6ᵈ.

"आपो अद्यान्वचारिषं रसेन समगस्महि" ।
"उदगादयमादित्यः" "एषायुक्त परावतः" ॥ १३॥

"वि सुपर्णो अन्तरिक्षाणि" "अयुक्त सप्त शुन्ध्युवः"
"अच्छा सिन्धुं मातृतमाम्" अद्यतन्य इमा इति ॥ १४॥

अद्यापि भूतसामान्ये पश्यामोऽद्यतनीमिमाम् ।
"सं वो मदासो अग्मत" "वधीर्हि दस्युं धनिनं" ॥ १५॥

"अकारि रत्नधातमः" सूक्तादौ लुङ् प्रदृश्यते ।
मनसा निर्मितः स्तोमस्तस्य वक्तुमुपक्रमः ॥ १६॥

ननु भूतलकारेषु सङ्कीर्णेषु ततस्ततः ।
परोक्षादिविभागोऽस्मिन् निर्बन्धः केन पाणिनेः ॥ १७॥

विहितेषु लकारेषु भूतमात्रे ततो वयम् ।
तत्तद्वाक्यानुरूपेण वक्ष्यामोऽर्थांस्तथा तथा ॥ १८॥

नैव युक्तं रूपभेदादर्थभेदश्च युज्यते ।
पश्यामोऽपि च वाक्येषु भेदं पाणिनिदर्शनम् ॥ १९॥

---

१. अ० M.
२. ०गस्म० M. RV. I. 23. 23[a-b].
३. RV. I. 50.13[a].
४. ०तम् M. RV. I. 48.7[a].
५. सुव० P.
६. RV. I. 35.7[a].
७. ०शान्ध यु० M.
८. RV. I. 50.9[a].
९. RV. III. 33.3[a].
१०. ०माद्य० P. ०ऽद्यतनी० is suggested for ०ऽव्यतनी०
११. RV. I. 20.5[a].
१२. ०धीहि P. M. विधिहि D.
१३. RV. I. 33. 4[a].
१४. ० धामतः M. इति is added by P. D. M. after रत्नधातमः।
RV. I. 20.1[a].
१५. लङ् M. R.
१६. निव० P.
१७. यत्तद्वाक्यानुसारेण M. ०नुसारेण R.
१८. ० मोऽर्थास्तथा M.
१९. ० र्शितम् R.

स्पष्टमेव लकारार्थान्पश्यामो ब्राह्मणेषु च ।
हरिश्चन्द्रो ह वैधसः शौनःशेपं निरीक्ष्यताम् ॥२०॥
तस्माद्यथा तथा भूते परोक्षाद्यतनादिकम् ।
प्रदर्शयेत्प्रयत्नेन मन्त्रेष्वपि च पण्डितः ॥२१॥
स्पष्टः संवादसूक्तेषु परोक्षाद्यतनादिकः ।
तथान्येषु च सूक्तेषु न तं भेदं परित्यजेत् ॥२२॥
न पश्यति यदा मन्त्रे तं विशेषं प्रयत्नतः ।
अपि वैकाङ्क्षिकलं भवतिच्छान्दसं तदा ॥२३॥ ॥ इति ॥

## I. 158.

**वसू॑ रु॒द्रा पु॑रु॒मन्तू॑ वृ॒धन्ता॑ दश॒स्यतं॑ नो वृषणाव॒भिष्टौ॑ ।**
**दस्रा॑ ह॒ यद्रेक्ण॑ औचथ्यो वां॒ प्र यत्स॒स्राथे॑ अक॑वाभिरू॒ती ॥१॥**

वसू रुद्रा । दीर्घतमाः —
वासयितारौ[12] । घोरौ[13] । बहूनां ज्ञातारौ[14] । वर्धमानौ[15] । प्रयच्छतम्[16] । अस्मभ्यम् । वृषणौ[17] ! अभ्येषणे[18] । दर्शनीयौ[19] ! यत्[20] । धनम्[21] । औचथ्यः[22] । वां याचते[23] । यच्च युवाम्[24] । अकुत्सिताभिः[25] । ऊतिभिः[26]

1. स्पष्ट...प० M. 2. Omitted by M. 3. वैधनः P.D. Cf. AB.7.13.
4. ०शेपं D. 5. विशेषणम् M.
6. निरीक्ष्यताम् M. 7. यथा P.
8. ०कम् M. R. 9. भवन्ति M. R.
10. ०सः P. ०साः M. R.
11. Omitted by R.
12. वासयितारौ प्रजानाम् । वसुना धनेन तद्वन्तौ वा मत्वर्थो लुप्यते Sy.
13. रुद्रौ । रुद् दुःखं तद्धेतुभूतं पापं वा, तस्य द्रावयितारौ । सङ्ग्रामे भयङ्करं शब्दयन्तौ वा Sy. रुद्रो रौतीति सतः N.10.5.
14. मनेरौणादिकस्तुन्प्रत्ययः Sy.
15. स्तोत्रादिना Sy.
16. दत्तं विलिप्तं फलम् Sy.
17. कामानां वर्षितारौ ! Sy.
18. आभिमुख्येन पूजितौ, अभीष्टसाधकौ वा हशब्द उक्तगुणप्रसिद्धिद्योतनार्थः Sy.
19. अस्मद्विरोध्युपक्षपयितारौ Sy.
20. किमर्थं दीयत इति चेत् ? यद् यस्मात् Sy.
21. रेक्णो धनम् Sy.
22. ०त्थ्ये P. उचथ्यस्य पुत्रो दीर्घतमाः Sy.
23. युवाम् Sy.
24. स्तुतिव्याजेन प्रार्थयते तदर्थम् । यद्वाऽयं यजमानो यदस्माद्रेक्णो हविर्लक्षणमन्नं वा युवाभ्यां दास्यति ददातीति शेषः Sy.
25. यस्मात् Sy. 26. अकुत्सितैः Sy.
27. ऊतिभी रक्षणैः Sy.

सह । दाशुषे[1] प्रसारयथ[2]स्तद् दशस्यतम्[3] ।[4]

**को वां दाशत्सुमतये चिदस्यै वसू यद्धेथे नमसा पदे गोः ।**
**जिगृतमस्मे रेवतीः पुरंधीः कामप्रेणेव मनसा चरन्ता ॥२॥**

को वां दाशत् । कः । युवयोः[5] । सुमतये[6] । अस्यै महत्यै[7] । निष्कृत्यर्थं प्रयच्छति[8] । यदिदम्[9] । युवां वासयितारौ[10] ! पशोः[11] । स्थाने । अन्नेन[12] सह । यजमानान् दधाथे[13] । तौ युवां युवयोः पशुमतीः[14] । प्रज्ञाः[15] । अस्मभ्यम् । उज्जिगृतम्[16] । कस्य कं कामं पूरयामीत्येवं कामप्रेणेव[17] । मनसा[18] । इतस्ततश्चरन्तौ[19][20] ।

**युक्तो ह यद्वां तौग्र्याय पेरुर्वि मध्ये अर्णसो धायि पज्रः ।**
**उप वामवः शरणं गमेयं शूरो नाज्म पतयद्भिरेवैः ॥३॥**

युक्तो ह[21] । अश्वैर्युक्तः[22] । युवयोः[23] । तुग्रपुत्रं[24] परिरक्षणार्थम् । पारयिता[25] । गमनशीलः[26] । यद्वयः ।

---

१. दाशुके P.
२. प्रकर्षेण दत्थस्तस्माद्दशस्यतम् Sy.
३. दर्शनस्यतम् M. यस्मादभिमतप्रदौ यस्मात्त्वायं प्रार्थयते ददाति वा हविस्तस्माद् दशस्यतमित्यर्थः Sy.
४. VM. ignores ह
५. युवयोः सम्बन्धिन्यै Sy.
६. शोभनबुद्धयै । चित्पूजायामप्यर्थे वा स्वल्पेनैव हविषा महत्फलप्रदानरूपायै ईदृश्या अपि बुद्धयै प्रीणनाय Sy.
७. ०तयोस्यै P.D. वक्ष्यमाणरूपायै Sy.
८. को दद्यात्, दातुं शक्नुयात् । युवयोः प्रभावस्यातिमहत्त्वादिति भावः Sy.
९. कथं मतेः सौष्ठवमिति तदुच्यते, यद् यस्मात्कारणात् Sy.
१०. वासयितारावश्विनौ ! Sy.
११. भूम्याः सर्वैर्गन्तव्यायाः स्तुत्याया वा वेदिरूपायाः स्थाने । 'एतावती वै पृथिवी यावती वेदिः' (TS. 2.6.4.5.) इति श्रुतेः । गौरिति भूमिनाम ।...तादृशे स्थाने Sy. गौरिति पृथिव्या नामधेयम् । यद् दूरं गता भवति । यच्चास्यां भूतानि गच्छन्ति । गातेर्वौकारो नामकरणः N. 2.5.
१२. हविर्लक्षणेन यवमात्रप्रकारेणान्नेन Sy.
१३. दाधा० P. अस्माभिः प्रार्थितौ सन्तौ... धारयथो बहुप्रदानविषयां बुद्धिम् Sy.
१४. क्षीरादिधनवतीः Sy.
१५. शरीरधारिकाश्शरीराभिवृद्धिहेतूर्गाः Sy.
१६. ०गतं M. ०गृहं P. शब्दयतं दत्तमित्यर्थः । 'गृ शब्दे' Sy.
१७. ०प्रेरणेव M. इवशब्द एवकारार्थः । कामपूरकेणैव ।... 'प्रा पूरणे' कामं प्रातीति कामप्रः Sy. १८. मनसा सह Sy.
१९. चरन्तौ यजमानस्य कामाः पूरणीया इति कृतसङ्कल्पावित्यर्थः Sy.
२०. VM. ignores चित्
२१. अत्रेतिहासमाहुः । तौग्र्यनामकं राजानं युद्धे शत्रवः पराभाव्य पाशैर्दृढं बद्ध्वा समुद्रमध्ये प्रचिक्षिपुः । स चोत्तरीतुमशक्तः सन्नश्विनौ तुष्टाव । तौ च तुष्टौ शीघ्रमेव रथमश्वैर्योजयित्वा समुद्रमागत्य तमुत्तार्यापालयतामिति ... सोऽत्रोच्यते Sy.
२२. अश्वैर्युक्तः खलु Sy. २३. युवयोः सम्बन्धी Sy. २४. तू० P. एतन्नाम्ने राज्ञे तद्बन्धमोचनार्थम् Sy. तुग्रपुत्रस्य is suggested for तुग्रपुत्रं
२५. पारणकुशलो रथः Sy.
२६. स च पज्रः पाजसा बलेन तीर्णः सन् Sy.

विहितः[1]। उदकमध्ये[2]। ततोऽहम्[3]। युवयोः पालनम्[4]। शरणम्। उपगच्छेयम्[5]। यथा। कश्चन शूरः[6]। पतयद्भिः[7]। अश्वैः। युद्धगृहं[8] शीघ्रमभिगच्छति[9]।[10]

**उप॑स्तुतिरौचथ्यमु॑रुष्येन्मा मामि॒मे प॑त॒त्रिणी॒ वि दु॑ग्धाम् ।**
**मा मामेधो॒ दश॑तयश्चि॒तो धा॒क् प्र यद्वां॑ ब॒द्धस्त्मनि॒ खाद॑ति॒ क्षाम् ॥४॥**

उपस्तुतिः[11]। उपेत्य[12] क्रियमाणा स्तुतिः। दीर्घतमसम्[13]। रक्षतु[14]। मा। माम्। इमे[15]। अहोरात्रे[16]। विदुग्धाम्[17]=चरणं विदोहः[18]। मा च। माम्[19]। दशभिः[20] काष्ठैर्निर्मितः[21]। अतोऽयं प्लावार्थं एषः काष्ठसङ्घातः[22]। अधाक्षीत्। यत्[23]=यस्मात्। युवयोः[24]। भूमिम्। आत्मनि[25]। बद्धोऽयं[26][27] दीर्घतमाः[28]। प्रक्षा-

---

१. धारितः स्थापितः Sy.
२. मध्ये D. अम्भसो मध्ये समुद्रस्य मध्ये Sy.
३. यस्मादेवं तस्मात् Sy.
४. प० M. रक्षणम् Sy.
५. सम्प्राप्नुयाम् । ऐहिकदुःखाद्विमुक्तो युष्मत्स्थानं सम्भजेयम् Sy.
६. गतौ दृष्टान्तः । . . . शूर इव Sy.
७. तपय० P.
८. स यथा, शत्रून् जित्वा निर्भयं स्वगृहम् Sy.
९. प्राप्नोति तद्वत् Sy.
१०. VM. ignores ह
११. ०स्तुति P. अत्राख्यानमाहुः । जराभर्भं-(जर्जं)रितगात्रं जात्यन्धं दीर्घतमसं मामतेयं वरिवसितुमशक्नुवानाः स्वगर्भदासा अग्नौ प्रदाहाय प्रचिक्षिपुः । तत्र क्षिप्तोऽश्विनावस्तावीत् । तौ चैनमरक्षताम् । ततोऽप्यम्रियमाणमुदकेऽवपातयन् । तत्र निमग्नः पुनरश्विनौ तुष्टाव । तुष्टौ सन्तौ तौ जलादुदहार्ष्टाम् । एतमवध्यं तं त्रैतननामा कश्चिद्दासोऽस्य शिरो वक्षश्च व्यतक्षत्, ततोऽप्यपालयतामिति तदिदमुभयाभ्यां (ऋग्भ्यां) मुच्यते Sy.
१२. बुद्ध्योपेत्य क्रियमाणा स्तुतिः Sy.
१३. ०तमं M. उचथस्य पुत्रं दीर्घतमसं माम् Sy.
१४. ०त M. रक्षोद्राहाद्युपद्रवात् Sy. उरुष्यती रक्षाकर्मा N.5.23.
१५. एवं सामान्येनोक्त्वा विशेषेण प्रत्युपद्रवपरिहारं प्रार्थयते । इमे प्रसिद्धे Sy.
१६. ०मेहोरात्रैः P.D. ०रात्रैः M. पतनशीले पुनरावर्तनशीले अहोरात्रे Sy.
१७. ०ग्धान् P.D. ०दग्धान् M. विशेषेण दोहगतसारं मा कार्ष्टाम् । प्राणनिर्गमनानुकूल्यं मा कुरुतामित्यर्थः Sy.
१८. ०हा M.
१९. मं P.
२०. दशवारः Sy.
२१. ०ष्ठं P.
२२. चितः सञ्चितः सम्पादितः. . . प्रज्वालितेन्धनसङ्घः Sy.
२३. Omitted by P. M. दुःसहदुःखप्राप्तिं दर्शयति । यद् यस्मात् Sy.
२४. युवयोः सम्बन्ध्ययं जनः Sy.
२५. आत्मना Sy.
२६. पाशैर्गाढं वेष्टितः सन् Sy.
२७. बोधयन् M.
२८. ०मा P.

दति[1], अभिगच्छति। अङ्गदेशे[2], अस्त्यश्विनोः[3] सम्बन्धः[4]।

न मा॑ गरन्न॒द्यो॑ मा॒तृत॑मा दा॒सा यदी॑ं॒ सुसं॑मुब्धम॒वाधुः॑ ।
शिरो॒ यद॑स्य त्रैत॒नो वि॒तक्ष॑त्स्व॒यं दा॒स उरो॒ अंसा॒वपि॑ ग्ध ॥५॥

शौनक :—

जीर्णं तु दीर्घतमसं खिन्नास्तत्परिचारिणः[5]।
दासा बद्ध्वा[6] नदीतोये दृष्टिहीनमवादधुः ॥
तत्रैकस्त्रैतनो नाम शस्त्रेणैनमपाहनत्[7]।
शिरश्चासावुरश्चैव स्वयमेव न्यकृन्तत ॥
अङ्गदेशसमीपे तु नद्यः सर्वाः समुद्वहन्[8]।
जनयामास चोत्थाय कक्षीवत्प्रमुखानृषीन्[9] ॥

न मा गरन्[10]। इमा आपः[11]। सर्वेषां मातृस्थानीयाः[12]। दासाः[13]। यम्[14]। एनम्[15]। सु सम्यग् बद्धम्[16]। अप्स्ववादधुः[17]—प्राक्षिपन्[18]। तथा यदा[19]। अस्य[20]। शिरः[21]। त्रैतनो नाम[22]। छेत्तुं[23] विप्रक्रान्तः। स्वयमेव[24]। दासः[25]। आत्मीयमुरः[26]। अंसौ च तेन शस्त्रेण[27]। अपि। हन्तु[28]।[29]

१. भक्षयति। गन्तुमशक्तः सन् भूमौ परिलुठतीत्यर्थः। तस्मात्तुपस्तुतिरौचथ्यमुख्येऽदिति Sy.
२. ०त्यङ्गे देशः M.
३. अस्त्यश्विनौ P. D.
४. सर्वं बन्धं M. VM. ignores चितः
५. ०चारणः P.
६. बध्वा P.D.M.
७. ०मवाहनन M.
८. तं नद्यः समुदक्षिपन् BD.
९. BD. IV. 21-22, 24ab, 25cd.
१०. मा मां दीर्घतमसं गरन् न गिरेयुः, निमग्नं मा कुर्युः। 'गृ निगरणे' Sy.
११. नदनशीलाः Sy.
१२. मातृवज्जगतां हितकारिण्य आपः Sy.
१३. अस्मदुपक्षयपितारो मदीयगर्भदासाः Sy.
१४. यस्मात् Sy.
१५. दीर्घतमसं माम् Sy.
१६. सुष्ठु सङ्कुचितसर्वाङ्गम् Sy.
१७. अवाधुः M.
१८. अवाङ्मुखमपातयन् Sy.
१९. यस्मात् Sy.
२०. अस्य मम Sy.
२१. ०राः M.
२२. एतन्नामको दासोऽत्यन्तनिर्घृणः सन् Sy.
२३. विविधं तष्टवान् Sy.
२४. तस्मात्स दासः Sy.
२५. स्वकीयमेव शिरस्तक्षतु Sy.
२६. न केवलं शिर एवापितु मदीयमुरो वक्षःस्थलम् Sy.
२७. तौ P.D. स्वशस्त्रेणैव Sy.
२८. ०न्तुः M. हतवान्विदारितवानित्यर्थः। हन्तेर्लुङि च्छान्दसमेतद्रूपम्। ततः स्वकीयमुरोंऽसावपि...तथा कृतवान्। तद्वयोर्माहात्म्यमिति भावः Sy.
२९. VM. ignores न। मा। गरन्

दी॒र्घत॑मा माम॒ते॒यो जु॑जु॒र्वान्द॑श॒मे यु॒गे ।
अ॒पाम॒र्थं य॒तीनां॑ ब्र॒ह्मा भ॑वति॒ सार॑थिः ॥६॥

दीर्घतमाः[1]। दीर्घतमाः। मामतेयः[2]। जीर्णः[3]। दशमे। युगे वार्धक्ये[4] वर्तमानः[5]। अपाम्[6]। प्रवणम्[7]। गच्छन्तीनाम्[8]। ब्राह्मणः[9]। भवति[10]। सारथिः[11][12]।

I. 159.

प्र द्यावा॑ य॒ज्ञैः पृ॑थि॒वी ऋ॑ता॒वृधा॑ म॒ही स्तु॑षे वि॒दथे॑षु॒ प्रचे॑तसा ।
दे॒वेभि॒र्ये दे॒वपु॑त्रे सु॒दंस॑से॒त्था धि॒या वार्या॑णि प्र॒भूष॑तः ॥१॥

प्र द्यावा। द्यावापृथिवी[13]। यज्ञैः सह[14]। उदकस्य वर्धयित्र्यौ[15]। महत्यौ। सुमती[16]। यज्ञेषु[17]। स्तोतुमुपक्रमे[18]। देवाः पुत्रा ययोर्भवन्ति ते[19]। देवैः=देवपुत्रैः[20][21]। सुकर्माणौ ते[22][23]। इत्थम्[24]। कर्मणा[25]।

१. एतन्नामा महर्षिः Sy.

२. मावतेयः M. स च मामतेयो ममतायाः पुत्रः Sy.

३. ०र्णा P. दशमे युगेऽतीते सति . . . जीर्णो वलीपलितगात्रो बभूव Sy.

४. दशयुगपर्यन्तं महानुभावयोरश्विनोः प्रभावात्पूर्वोक्ताद् दुःखाद्विमुक्तोऽत्यन्तसुखी स्वस्वपुत्रभार्यादिभिः सहितो जीवितवान् Sy.

५. वर्धमानः P.

६. ०नो वां M. अपामप्कार्याणां प्रजानाम् । यद्वा । अपामपसां कर्मणामर्थं प्रयोजनं यतीनां तासां प्रजानाम् Sy.

७. पुरुषैरर्थ्यमानं कर्मफलं स्वर्गादिकम् Sy.

८. प्राप्नुवतीनाम् Sy.

९. ब्रह्मणः P.D. ब्रह्मा ब्रह्मसदृशः परिवृढो भवति Sy.

१०. देवो भवतीत्यर्थः Sy.

११. सारथिवन्निर्वाहको भवति Sy.

१२. एवमस्य वृत्तान्तं मन्त्रोऽनुवदति । स्वयं वा स्वात्मानं पारोक्ष्येणाश्विनोर्महानुभावत्वं प्रकटयितुं ब्रवीति Sy.
Ms. D. puts the figure ॥१५८॥ here to indicate the end of one hundred and fiftyeighth hymn. No such number is given in P. and M.

१३. द्यावापृथिव्यौ Sy.

१४. अहं यजमानो यज्ञैर्यागैस्तत्प्रदानैर्निमित्तभूतैर्हविष्प्रदानार्थम् Sy.

१५. कीदृश्यौ ते ? यज्ञस्य वर्धयित्र्यौ Sy.

१६. प्रकर्षेणास्मांश्चेतयित्र्यावस्माभिश्चेतयितव्ये वा । ईदृश्यौ स्तुषे Sy.

१७. यागेषु Sy.

१८. प्रकर्षेण स्तौमि । पुरुषव्यत्ययः Sy.

१९. ये द्यावापृथिव्यौ . . . देवा यजमानाः पुत्रस्थानीयास्तद्भूतका ययोस्ते तादृश्यौ । यद्वा । देवैर्भिर्विशिष्टे Sy.

२०. ०यो भ० P. D. ०न्ति M.

२१. यजमानैः Sy. २२. ०त्रै P. M.

२३. दंस इति कर्मनाम । शोभनकर्मोपेते Sy.

२४. सत्यम् । इत्थेति सत्यनाम । 'सत्रा . . . इत्था' (Ngh. 3.10.) इति तन्नामसु पाठात् Sy.

२५. अस्मदनुग्रहबुद्ध्या Sy.

धनानि[1]। भावयन्तः[2,3]।

**उत मन्ये पितुरद्रुहो मनो मातुर्महि स्वतवस्तद्धवीमभिः।**
**सुरेतसा पितरा भूम चक्रतुरुरु प्रजाया अमृतं वरीमभिः ॥२॥**

उत मन्ये। उत[4]। ब्रवीमि[5]। दिवः[6]। अद्रोग्धुः[7]। स्तोत्रम्[8]। पृथिव्याश्च[9]। स्ववर्चनम्[10]। तत्[11]। महत्त्वम्[12]। आह्वानैः[13] स्तौमि[14]। शोभनरेतस्के[15]। द्यावापृथिवी[16]। बहुतरम्। विस्तीर्णम्। अमरणसाधनमन्नम्[17]। आत्मीयैरुरुत्वैः[18]। प्रजायाः[19] देवमनुष्यादिकायाः। चक्रतुः[20]।

**ते सूनवः स्वपसः सुदंससो मही जज्ञुर्मातरा पूर्वचित्तये।**
**स्थातुश्च सत्यं जगतश्च धर्मणि पुत्रस्य पाथः पदमद्वयाविनः ॥३॥**

ते सूनवः। ते[21]। पुत्राः[22]। सुकर्माणः[23]। शोभनज्ञानाः[24]। महत्यौ। द्यावापृथिव्यौ[25]। वृष्टयर्थम्[26]।

---

१. वरणीयानि धनानि Sy.

२. अस्मभ्यं प्रभूयतोऽलङ्कुर्वतो वत्त इत्यर्थः। यद्वा वार्याणि हवींषि धिया कर्मणा निमित्तेन कर्मसमाप्त्यर्थं प्रभूयतः प्रकर्षेण स्वीकुर्वतः Sy.

३. VM. ignores प्र। ये

४. अपिच Sy.

५. मन्ये जानामि प्रसादयामीत्यर्थः। यद्वा तत्तादृशमुक्तलक्षणं मनो हवीमभिर्ह्वयनैर्महि मन्येऽतिमहत्प्रवृद्धं मन्ये Sy.

६. वः M. पितृस्थानीयायाः पाव्याः Sy.

७. नहि कदाचित्पिता स्वपुत्रादये द्रुह्यति Sy. दिवः being in the fem. gen. अद्रोग्ध्र्याः as qualifying दिवः is suggested for अद्रोग्धुः

८. चित्तम् Sy.

९. सर्वस्योत्पादयितुरन्तरिक्षस्य द्युलोकस्य ...यद्वा पितुर्द्युलोकस्य मातुर्भूम्याः। 'द्यौर्वः पिता पृथिवी माता' (RV.I.191.6.) इति श्रुतेः Sy. माताऽन्तरिक्षं निर्मीयन्तेऽस्मिन्भूतानि N.2.8.

१०. तादृश्याः पृथिव्याः...स्वायत्तं बलं स्वयमेवास्मदनुग्रहाय त्वरमाणम् Sy.

११. तादृशमनुग्रहयुक्तम् Sy.

१२. अत एव ... महत् Sy.

१३. हवनैराह्वानैः Sy.

१४. द्यावापृथिव्योर्मनोऽस्मदाह्वानैः प्रीणयामीत्यर्थः Sy.

१५. शोभनसामर्थ्येन Sy.

१६. माता च पिता च पितरौ द्यावापृथिव्यौ Sy. As द्यावापृथिवी is not a Vedic word but a classical Sanskrit word, used by VM. himself, the correct form should be द्यावापृथिव्यौ

१७. अमरणभूतमभिलषितम् Sy.

१८. त्वं P. वरिष्ठं रक्षणविशेषैः Sy.

१९. ०यां P. यजमानादिरूपायाः Sy.

२०. कुरुतः Sy. २१. प्रसिद्धाः Sy.

२२. युवाभ्यामुत्पन्नाः पुत्रस्थानीयाः प्रजाः Sy.

२३. ०ण P. शोभनकर्माणः Sy.

२४. ०नां P. ०नान् D. शोभनदर्शनाः Sy.

२५. मातृवद्धितकारिण्यौ Sy.

२६. पूर्वचित्तये प्रथमबुद्धयेऽनुग्रहरूपायै Sy.

जानन्ति[1]। स्थावरस्य। जङ्गमस्य। च। धारणार्थम्[2]। आदित्यस्य भवत्योः पुत्रस्य[3]। स्थानम्[4]। रक्षथो[5] ध्रुवाम्। जरामरणरहितस्य[6][7][8]।

**ते मायिनौ ममिरे सुप्रचेतसो जामी सयोनी मिथुना समोकसा।**
**नव्यंनव्यं तन्तुमा तन्वते दिवि समुद्रे अन्तः कवयः सुदीतयः ॥४॥**

ते मायिनः। ते[9]। कर्मवन्तः[10]। चक्रुः[11]। शोभनप्रज्ञानाः[12]। सबन्धू[13]। समानोत्पत्तिस्थाने[14]। समाननिचये[15] द्यावापृथिवी। मिथुनभूते[16]। यज्ञैस्ततस्त्व ते नवतरं नवतरम्[17]। तन्तुम्[18]। विस्तारयन्ति[19]। अन्तरिक्षस्य[20]। दीप्तस्य[21]। अन्तः[22]। क्रान्तदर्शनाः[23]। शोभनद्योतनास्तेजसस्तन्तून्[24][25] विस्तारयन्ति[26]।

---

१. महानुभावतामवगच्छन्ति Sy.

२. ईदृशस्य धर्मणि धारणे रक्षणे निमित्तभूते सति Sy.

३. पुत्रस्थानीयस्योभयविधस्य जगतः Sy.

४. पदं स्थानं, सत्यमबाध्यम् Sy.

५. रक्षथो वत्थ इत्यर्थः Sy.

६. न विद्यते द्वयं यस्य तादृशस्य। स्वजीवनाय युष्मद्व्यतिरिक्तमजानत इत्यर्थः Sy.

७. यद्वा ते प्रसिद्धाः सूनव उत्पद्यमानाः, स्वपसः शोभनप्रकाशादिकर्माणः, सुदंससः शोभनदर्शनाः सुष्ठूपक्ष(प)यन्तो वाऽऽत्मानं, स्वव्यापारायेदृशा रश्मयो, मही महत्यौ द्यावापृथिव्यौ पूर्वचित्तये प्राणिनां पूर्वज्ञानाय जज्ञुर्जातवन्तो द्यावापृथिव्योरन्तराले व्याप्ता इत्यर्थः। किंच स्थातुर्जगतश्च धर्मणि धारणे तदर्थमद्वयाविनो मार्गद्वयरहितस्य ... पुत्रस्य युष्मत्पुत्रस्थानीयस्यादित्यस्य पदं मार्गं सत्यं पाथोऽवश्यं रक्षथः Sy.

८. VM. ignores च। सत्यम्

९. प्रसिद्धे द्यावापृथिव्यौ Sy.

१०. माया प्रज्ञा। स्वविषयप्रज्ञावन्तः प्रज्ञोपलक्षितकर्मवन्तो वा Sy.

११. मिमते, प्रमाणेन परिच्छिन्दन्ति Sy.

१२. ना P. सुष्ठु प्रकर्षेण चेतितुं शक्ता रश्मयः Sy.

१३. सं० M. कीदृश्यौ ते? जामी परस्परं भगिनी (न्यौ) Sy. १४. ०नोत्प० P.

१५. समानस्थाने। द्युपृथिव्योरेकस्मिन्नेवावकाशस्य आकाशेऽवस्थानात्, समीचीनस्थाने वा Sy. ० निलये is suggested for ० निचये। द्यावापृथिव्यौ should be the correct form. See note १६ on stanza 2 of this hymn.

१६. प्राण्युत्पत्तये मिथुनभूते, परस्परमवियुक्ते इत्यर्थः Sy.

१७. नवतरत्नेः M. Omitted by P.

१८. ० न्तु P. तननीयं विस्तारणीयम्। जात्येकवचनम्। रश्मीन् Sy.

१९. समन्ताद्विस्तारयन्ति Sy.

२०. समुद्रेऽन्तरिक्षे। समुद्रशब्दोऽन्तरिक्षनामसु पाठात्तद्वचनः Sy. समुद्रः कस्मात् समुद्द्रवन्त्यस्मादापः, समभिद्रवन्त्येनमापः। सम्मोदन्तेऽस्मिन्भूतानि। समुदको भवति। समुनत्तीति वा N.2.10.

२१. M. adds अन्तरिक्षस्य after दीप्तस्य। दिवि द्योतमाने Sy. २२. अन्तर्मध्ये Sy.

२३. मेधाविनः स्वव्यापारविषयज्ञानवन्तः Sy.

२४. सुष्ठु द्योतना रश्मयः Sy.

२५. ०स्तन्तून् P.

२६. VM. ignores आ

तद्राधो अद्य सवितुर्वरेण्यं वयं देवस्य प्रसवे मनामहे ।
अस्मभ्यं द्यावापृथिवी सुचेतुना रयिं धत्तं वसुमन्तं शतग्विनम् ॥५॥

तद्राधः । तत्[1] । धनम्[2] । अद्य । सवितुः[3] । वरणीयम् । वयम्[4] । देवस्य[5] सवितुः । प्रसवे[6] । स्तुमो[7] भवतीभ्यां दत्तम् । अस्मभ्यम् । द्यावापृथिवी[8] । सुमत्या[9] । नानाविधमर्थजातम्[10] । दत्तम्[11] । धनवन्तम्[12] । गोशतयुक्तम्[13] ।[14]

## I. 160.

ते हि द्यावापृथिवी विश्वशंभुव ऋतावरी रजसो धारयत्कवी ।
सुजन्मनी धिषणे अन्तरीयते देवो देवी धर्मणा सूर्यः शुचिः ॥१॥

ते हि । ते[15] । हि[16] । द्यावापृथिव्यौ । सर्वस्य सुखस्य भावयित्र्यौ[17] । उदकवत्यौ[18] । लोकार्थम्[19] । ध्रियमाणस्तोत्रे[20] । शोभनजन्मानौ[21] । धृष्टे[22] । देवी[23] । मध्येन[24] । सर्वस्य

---

१. तादृशम् Sy. २. पुरुषार्थसाधनसमर्थं गवादिधनम् Sy. ३. पितुः P. सर्वस्य प्रसवितुः Sy. ४. यजमानाः Sy.

५. आदित्यस्यान्तर्यामिरूपिणः Sy.

६. अनुज्ञायां सत्याम् Sy.

७. स्तुवो M. याचामहे । मन्यतिर्याच्ञाकर्मा । छान्दसः शप् । यद्वा पुनः पुनरभ्यस्यामः । लप्सी(लभे)महीति यावत् । 'म्ना अभ्यासे' व्यत्ययेनात्मनेपदम् Sy.

८. द्यावापृथिव्यौ Sy.

९. शोभनचेतनेनास्मदनुग्रहबुद्ध्या Sy.

१०. अर्थं जातं P. धनम् Sy.

११. दत्त P. १२. निवासयोग्यगृहादिविशिष्टम् Sy. १३. गोश० M. शतसङ्ख्याकगवादिविशिष्टम् Sy.

१४. Ms. D. puts the figure ॥१५६॥ here to indicate the end of one hundred and fiftyninth hymn. No such number is given in P. and M.

१५. प्रसिद्धे Sy. १६. खलु Sy.

१७. विश्वं सुखभावयितृ ययोस्ते विश्वशम्भुवा, विश्वस्य सुखयित्र्यावित्यर्थः Sy.

१८. ऋतवत्यौ Sy.

१९. रजस उदकस्य, उदकोत्पत्तौ Sy. उदकं रज उच्यते N.4.19.

२०. ०णः स्तो० P. अकृच्छ्रेण धारकः कविर्ययोस्ते तादृश्यौ । उदकोत्पादनायाप्रयत्नवत्यावित्यर्थः । यद्वा धारयत्कविर्मनीषी, आदित्यो ययोस्ते तादृश्यौ । वृष्टयुदकधारयत्सूर्योपेते इत्यर्थः Sy.

२१. शोभनजन्मवत्यौ Sy.

२२. धर्षणोपेते स्वव्यापारेषु प्रगल्भे इत्यर्थः । ...अत्र यद्यपि धिषणे इत्येतत्, 'धिषणे रोदसी' (Ngh. 3. 30.) इति तन्नामसूक्तत्वाद् द्यावापृथिवीनाम, तथापि 'द्यावापृथिवी' इत्यस्य विद्यमानत्वाद् यौगिकं द्रष्टव्यम् Sy.

२३. द्योतमाने Sy. देव्यौ is suggested for देवो

२४. तयोरन्तराले Sy.

धारणार्थम्[1] । निर्मलः[2] । सूर्यः[3] । देवः । गच्छति[4] ।

**उरुव्यचसा महिनी असश्चता पिता माता च भुवनानि रक्षतः ।**
**सुधृष्टमे वपुष्ये न रोदसी पिता यत्सीमभि रूपैरवासयत् ॥२॥**

उरुव्यचसा । बह्ववकाशे[5] । महत्यौ[6] । असक्ते[7] द्यावापृथिव्यौ । पितृमातृभूते[8] । भूतानि[9] । रक्षतः[10] । सुधृष्टतमे[11] । वपुषे[12] हिते च भवतः । यस्मात् । एते[13] । सर्वतः । सूर्यः[14] परिगृह्य । नक्षत्रैरोषधीभिश्च[15] । अभिवासयति[16] ।

**स वह्निः पुत्रः पित्रोः पवित्रवान्पुनाति धीरो भुवनानि मायया ।**
**धेनुं च पृश्निं वृषभं सुरेतसं विश्वाहा शुक्रं पयो अस्य दुक्षत ॥३॥**

स वह्निः । सः । वोढा[17] । द्यावापृथिव्योः[18] । पुत्रः[19] । पवित्ररश्मियुक्तः[20] । शोधयति[21] । भुवनानि[22] । प्राज्ञः[23] । कर्मणा[24] । पृथिवीम्[25] । च । सस्यानामुत्पादयित्रीम्[26] । उदकस्य सेक्तारम्[27] । शोभनरेतस्कम्[28] ।

---

१. प्रकाशोदकदानादिधारणेन युक्तः सन् Sy.
२. ०ल P.D.M. शुद्धो विश्वस्य शोधयिता वा Sy.
३. दीप्यमानः Sy.
४. सर्वदा गच्छति । 'इङ् गतौ' दैवादिकः । तादृशं कर्म युवयोरनुग्रहादिति स्तुतिः Sy.
५. ०वला P. D. ०वलाशे M. प्रभूतव्यञ्चनवत्यावतिविस्तीर्णे Sy.
६. अत एव महत्यौ Sy.
७. असज्यमाने परस्परवियुक्ते इत्यर्थः Sy.
८. पिता पालयित्री द्यौर्माता निर्मात्री पृथिवी चेत्युभे Sy.
९. भुवनजातानि Sy.
१०. पालयतः Sy.
११. अतिशयेन धृष्टे । छान्दसस्तकारलोपः । प्रगल्भे Sy.
१२. वपुक्षे M. ०ष P.D. वपुषो हिते इव । प्राणिनां पितराविव शरीररक्षके इत्यर्थः Sy.
१३. ०वते P.D.
१४. पितृस्थानीया द्यौः Sy.
१५. निरूपणसाधनैः प्रशस्तैः प्रकाशैर्निरूप्यमाणैर्वृष्ट्यादिभिर्वा Sy.
१६. ०सति P. . . .अधितिष्ठति । तस्मात्पिता माता च भुवनानि रक्षतः Sy.
VM. ignores न
१७. फलस्य वोढा धारकः सन् Sy.
१८. मातापित्रोर्द्यावापृथिव्योः Sy.
१९. पुरुत्राता पुत्रस्थानीय आदित्यः Sy.
२०. पावनरश्मियुक्तः Sy.
२१. ०यितु P. पावयति प्रकाशयतीत्यर्थः Sy.
२२. भूतजातानि Sy.
२३. धीमान् Sy.
२४. प्रज्ञया स्वकीयया Sy.
२५. स एव पुत्रः . . .धेनुं प्रीणयित्रीं भूमिम् Sy.
२६. ०मुत्पा० P. शुक्लवर्णाम् Sy.
२७. सेक्तारं द्युलोकञ्च मायया पुनाति प्रकाशयतीत्यर्थः Sy.
२८. शोभनसामर्थ्यं शोभनोदकं वा Sy.

दिवसैः[1]। सर्वदा[2] दीप्तम्[3]। उदकस्य[4] स्वभूतम्। कवयो दुहन्ति[5]। सारमिति[6]।

अयं देवानामपसामपस्तमो यो जजान रोदसी विश्वशंभुवा ।
वि यो ममे रजसी सुक्रतूययाजरेभिः स्कम्भनेभिः समानृचे ॥४॥

अयं देवानाम्। अयम्[7]। देवानाम्[8]। व्याप्तानाम्[9]। व्याप्ततमः[10]। यः[11]। जजान[12]। द्यावा-[13]पृथिवी। सर्वस्य सुखस्य भावयित्र्यौ[14]। विममे[15] च। यः। ते[16]। शोभनकर्मेच्छया[17]। स देवः, एते[18] अजरैः[19]। उत्तम्भनसाधनैः[20] रश्मिभिः। इतरेतरावष्टब्धे[21] करोति।

ते नो गृणाने महिनी महि श्रवः क्षत्रं द्यावापृथिवी धासथो बृहत् ।
येनाभि कृष्टीस्ततनाम विश्वहा पनाय्यमोजो अस्मे समिन्वतम् ॥५॥

ते नो गृणाने। ते[22]। अस्मभ्यम्। स्तूयमाने[23]। महती[24]। महत्[25]। अन्नम्[26]। बलञ्च[27][28]।

---

१. सर्वाण्यहानि सर्वकालमित्यर्थः Sy.

२. ०सै स० P. ०सै र्वदा D. ०वसैर्वदा M. ३. दीप्तम् Sy.

४. अस्य द्युलोकस्य । यद्वा । कर्मणि षष्ठी । इमं द्युलोकम् Sy.

५. बोध्य ।... ईदृशो महानुभाव आदित्यस्तयोः पुत्र इति द्यावापृथिव्योः स्तुतिः Sy. ६. पयःस्वरूपमुदकम् Sy.

७. पूर्वं पुत्रमाहात्म्येनैते प्रशस्येदानीं स्वोत्पादकस्तुत्या प्रशंसति, अयम् Sy.

८. अयम् । देवानाम् । is omitted by M. देवानां मध्ये देवतमः Sy.

९. अप इति कर्मनाम, तेन तद्वांल्लक्ष्यते । कर्मवतां मध्ये Sy.

१०. प्रकृष्टकर्मा Sy. ११. अयमित्युक्तं क इत्याह। यो देवः Sy. १२. उत्पादितवान् Sy. १३. रोदसी द्यावापृथिव्यौ महानुभावे Sy. द्यावापृथिव्यौ is suggested for द्यावापृथिवी

१४. सर्वप्रकारेण भूतानां सुखस्य भावयित्र्यौ Sy. १५. च P. न केवलमुत्पादनमात्रमपितु यो देवः ... विममे विशेषेण परिच्छिनत्ति Sy. १६. तस्ते P. रजसी रञ्जनात्मिके द्यावापृथिव्यौ । रजसी इति द्यावापृथिव्योर्नाम । 'रजसी सदसी' (Ngh. 3.30.) इति तन्नामसु पाठात् । उक्तरूपे Sy.
ते refers to heaven and earth.

१७. किं स्वोपभोगाय ? नेत्याह...शोभनकर्मेच्छया । येन कर्मणा प्राणिनां सुखं सम्भवति तादृक्कर्मेच्छया । अपर्वतद्वुत्तरत्र सम्बध्यते । सुक्रतूयया, उक्तेन निमित्तेन Sy. १८. इमे द्यावापृथिव्यौ Sy.

१९. ०जनैः P. अजीर्णैर्वृद्धतरैः Sy.

२०. गतिप्रतिबन्धसाधनैर्वज्राङ्कुभिः Sy.

२१. ०र्थैः M. सम्यक् सर्वतः पूजितवान् स्थापितवानित्यर्थः.... यस्मादेवं तस्मादयमेव देवोऽयमेवापस्तम इत्येवं महानुभावेन परमेश्वरेणोत्पन्ने इति स्तुतिः Sy.

२२. प्रसिद्धे Sy. २३. अस्माभिः स्तूयमाने सत्यौ । कर्मणि कर्तृप्रत्ययः Sy.

२४. महत्यौ is suggested for महती

२५. अतिप्रभूतम् Sy.

२६. सर्वत्र प्रसिद्धमन्नं सर्वत्र श्रूयमाणां कीर्त्तिं वा Sy. २७. क्षत्रं बलं धासथः Sy.

२८. Omitted by M.

महती[1]। युवां द्यावापृथिवी[2]। अन्नम्[3]। येन[4]। सर्वाः[5] प्रजाः[6]। अभिभवेम[7]। सर्वदा[8]। तत् स्तुत्यम्। बलम्[9]। अस्मासु[10]। सम्प्रेरयतम्[11]।

## I.161.

**किमु श्रेष्ठः किं यविष्ठो न आजगन्किमीयते दूत्यं१ कद्यदूचिम ।**
**न निन्दिम चमसं यो महाकुलोऽग्ने भ्रातर्द्रुण इद्भूतिमूदिम ॥१॥**

किमु श्रेष्ठः। देवसकाशाद्[12] दूतार्थमागच्छन्नयं[13] किम्[14]। वृद्धः[15]। आहोस्विद् युवा[16]। योऽस्मान्[17]। आगच्छति[18]। किमयमस्मान्प्रति देवप्रहितः। दूत्यम्[19]। आगच्छति[20]। किं वा तत्[21]। यत्[22]।

---

१. अतिप्रभूतम् Sy. महत् is suggested for महती
२. द्यावापृथिव्यौ Sy.
३. विश्व० P.
४. अन्नबलेन Sy.
५. ०र्वा M.
६. पुत्रादिरूपाः प्रजाः ।...कृष्टय इति मनुष्यनाम। 'कृष्टयश्चर्षणयः' (Ngh. 2.3.) इति तन्नामसु पाठात् Sy.
७. अभितो विस्तारयाम Sy.
८. सर्वेष्वप्यहस्सु Sy.
९. शरीरबलम् Sy.
१०. सम्यगिन्वतं व्याप्नुतं प्रवर्धयतमित्यर्थः । इन्वतिर्व्याप्तिवचनः । 'इन्वति ननक्ष' (Ngh. 2.18.) इति तन्नामसु पाठात् Sy.
११. Ms. D. puts the figure ॥१६०॥ here to indicate the end of one hundred and sixtieth hymn. No such number is given in P. and M.
१२. देवासकाशान् M.
१३. ऋभवो नाम सुधन्वनस्त्रयः पुत्रा ऋभुर्विभ्वा वाज इति। ते च मनुष्याः सन्तः सुकर्मणा देवत्वं प्राप्य कदाचित्कर्मकाले सोमपानाय प्रवृत्ताः । तान्प्रति देवैः प्रेरितोऽग्निः परस्परसमानरूपान् दृष्ट्वा स्वयमपि तदाकारं धृत्वा तेषु मध्ये स्वयं चतुर्थः सन् पातुं प्रवृत्तः। ते चमसं आगतं तं समानरूपमवलोक्य विवेक्तुमसमर्थाः परस्परमेवं सन्विहते, अयं किमु Sy.
१४. किं नु खलु Sy.
१५. अस्मत्तोऽयं प्रशस्यतमो वयसा श्रेष्ठः Sy.
१६. किं वाऽस्माकं युवतमोऽस्मत्तः कनीयान् Sy.
१७. नः M.
१८. आगमत् प्राप्तः ।...अजगन्निति गतिकर्मा। 'अगन्, अजगन्'(Ngh. 2.14.) इति तन्नामसु पाठात् Sy.
१९. दूत्यं दूतकर्म देवसम्बन्धि Sy.
२०. ईयते गच्छति। देवैः प्रेरितो दूतोऽस्मानागतो वा Sy.
२१. कथं निश्चेतव्यमित्यर्थः । वयं तावत्त्रय एवेदानीं चत्वारः समानरूपा वर्तामहे तस्मादधिकः किमु श्रेष्ठ इति विचिकित्सा Sy.
२२. यदेतत् Sy.

वयमेनं कार्यार्थमागतं ब्रूमः[1]। आगतस्त्वायमस्मानेकमिमम्। महातटम्[2]। 'चमसं चतुरः कृणोतन' इति वक्ष्यति। तद्धि प्रस्तुतं देवेषु, वयं तेन चमसेन किं प्रयोजनमिति न। निन्दामः[3]। किन्तु अग्ने[4]! भ्रातः! इत्यामन्त्र्य। द्रुमस्य[5] च। वहुधा भावनम्[6]। एवं[7]।[8] वदामः।[9]

**एकं चमसं चतुरः कृणोतन तद्वो देवा अब्रुवन्तद्व आगमम् ।**
**सौधन्वना यद्येवा करिष्यथ साकं देवैर्यज्ञियासो भविष्यथ ॥२॥**

एकं चमसम्। अग्निर्वदति[10]—एकमिमम्[11]। चमसम्[12]। चतुरस्त्वमसान्[13]। कृणुत[14]। तदिदं[15] कार्यम्। युष्माकम्[16]। देवाः[17]। अब्रुवन्[18]। अहं च तत्[19]। युष्माकम्[20]। आनीतवान्[21]। सौधन्वनाः[22]! यदि[23]। एवं[24] यथोक्तम्। अकरिष्यथ[25] ततः। देवैः। सह। यूयमपि यज्ञार्हाः। भविष्यथ[26]।

---

१. ब्रूमस्तत्कृत् कथं निश्चेतव्यमित्यर्थः Sy.
२. ०कटं P.
महाकुलोत्पन्नस्त्वष्ट्रा निर्मितत्वात् Sy.
३. अधिकः समागत इति पानमकृत्वा चमसं न ब्रूयामः Sy.
४. एवं सन्दिह्य कथञ्चित् स्वतोऽन्यं निश्चित्य तं प्रति, आपरोक्ष्येण (अपारोक्ष्येण) ब्रूवते। हे अग्ने भ्रातर्भ्रातृवद्भागाहं! भ्राता यथा बलात् स्वकीयभागं स्वीकरोति तद्वत् समानरूपमाश्रित्य बलाच्चमसपानाय प्रवृत्त इति भ्रातरित्युक्तम् Sy.
५. अतः कारणात्... विकारे प्रकृतिशब्दः। ततश्च तत्स्थे तच्छब्दः। ... दारुविकारश्चमसस्य Sy.
६. प्राप्तिम् Sy.
७. इच्छब्दोऽवधारणे Sy.
८. ब्रूमः Sy.
९. VM. ignores च। किम्
१०. एवं पृष्टोऽग्निस्तान्प्रत्युवाच Sy.
११. एवमि० P. त्वष्ट्रा सम्पादितं पूर्वमेकमेव सन्तम् Sy.
१२. Omitted by P.
१३. चतुःसङ्ख्याकान्। . . . यथोपरितने 'ज्येष्ठ आह चमसा द्वा करेति' इत्युपक्रम्य 'कनिष्ठ आह चतुरस्करेति' (RV. IV. 33.5.) इति चतुष्कं निर्धारितम् Sy.
१५. उक्तं चतुर्धाकरणरूपं कर्म, उत्तरत्र वक्ष्यमाणमश्वरथादिकरणरूपं च कर्म Sy.
१६. युष्मान्प्रति Sy.
१७. इन्द्रादयः Sy.
१८. अब्रवम् P.
न केवलमहमेव ब्रवीमि किन्तु ... देवाः ... अब्रुवन् Sy.
१९. देवत्वप्राप्त्युपायत्वेन तत् तादृशं कर्म Sy.
२०. युष्माकं वक्तुम् Sy.
२१. प्राप्तोऽस्मि Sy.
२२. सधन्वनाः P.
सुधन्वनः पुत्रा यूयम् Sy.
२३. यस्मादेवं तस्माद्यूयं यदि Sy.
२४. यद्येवं M.
मदुक्तप्रकारेण Sy.
२५. अवरिष्यतं P. कर्तुं शक्नुथ Sy.
On the analogy of the form भविष्यथ, करिष्यथ is suggested for अकरिष्यथ
२६. हवि० P. इति तैरुक्तमित्यर्थः Sy.

**अग्निं दूतं प्रति यदब्रवीतनाश्वः कर्त्वो रथ उतेह कर्त्वः ।**
**धेनुः कर्त्वा युवशा कर्त्वा द्वा तानि भ्रातरनु वः कृत्व्येमसि ॥३॥**

अग्नि दूतम् । देवलोकं प्रति गच्छन्तमग्निम्[1] । दूतम्[2] । प्रति । यत्[3] । उक्तवन्तः[4] । इन्द्रस्याऽश्वः । कर्तव्यः[5] । रथश्चाश्विभ्याम्[6] । अस्मिन्नेव लोके । धेनुश्च[7] । बृहस्पतये कर्तव्या । पितरौ[8] च द्वावात्मीयौ । युवत्ववन्तौ[9] । कर्तव्यौ । तान्येतानि[10] कृत्वा । अनन्तरमेकं[11] चमसं चतुरः कृत्वा[12] । देवान् युष्मान् । अग्ने ! भ्रातः ! अनुगच्छाम[13] इत्युत्तरत्र सम्बन्धः ।

**चकृवांस ऋभवस्तदपृच्छत क्वेदभूद्यः स्य दूतो न आजगन् ।**
**यदावाख्यच्चमसाञ्चतुरः कृतानादित्त्वष्टा ग्नास्वन्तर्न्यानजे ॥४॥**

चकृवांसः । एतत्सर्वं[14] कृतवन्तः । पश्चाद् हे ऋभवः[15] ! तदा । यूयमपृच्छत[16] । क्वाधुना[17][18] । सः[19] । अभूत्[20] । योऽयम् । दूतः । अस्मान् । आजगाम[21], अग्निर्नूनमश्वादिकरणव्यासङ्गोऽस्मत्सकाशाज् जगाम । यदाग्निः[23] । चमसान् । अवाम्यदप्रतीक्ष्यानादाय[24] जगाम[25] । अनन्तरम्[26] । त्वष्टा[27] तानादाय । देवपत्नीषु[28] ।

---

१. अङ्गनादिगुणविशिष्टम् Sy.
२. दूतकर्म प्राप्तवन्तं त्वाम् Sy.
३. यत्कार्यम् Sy.
४. अब्रुवन् । व्यत्ययेन मध्यमः Sy.
५. एकस्मादश्वादश्वान्तरं कर्तव्यमित्यर्थः । 'अश्वादश्वमतक्षत' (RV.I.161.7.) इति वक्ष्यमाणत्वात् Sy.
६. अपि च रथः... कर्तव्यः Sy.
७. चर्मरहिता मृता गौनित्यबोगभ्री पुनर्नूतना कार्या Sy.
८. द्वौ पितरौ जीर्णौ सन्तौ Sy.
९. युवानौ शयानौ प्रकृष्टयौवनोपेतौ Sy.
१०. युष्माकं देवानां तानि तैरुक्तानि कर्माणि Sy. ११. अनतर० D. ०मेवकं M. अनु पश्चात् Sy.
१२. कृत्व्या कर्मणा Sy.
१३. अन्वगं० P. एम आभिमुख्येन प्राप्नुमः । ...यद्वा । ऋषेरिदं वाक्यम् । हे ऋभवो यूयमागतमग्निं दूतम्प्रति यदब्रवीतन यत्कार्यं वक्ष्यमाणरूपं कर्तव्यत्वेन वदथाङ्गीकुरुथ तानि सर्वाणि सम्पाद्य हे भ्रातरग्ने ! कृत्व्या कर्मणेमसीति ब्रूयेत्युविराह Sy. १४. तत्कार्यम् Sy.
१५. पश्चात्ते ऋषभः P. ऋषभः M. अत्र यद्यप्यृभुरिति त्रयाणां मध्य एकस्य नाम तथापि तस्य प्राधम्यात् 'छत्रिणो गच्छन्ति' इतिवत्सर्वेऽप्यृभव उच्यन्ते Sy.
१६. प्रश्नं कुरुत Sy.
१७. कुत्र Sy. १८. त्वाधु० P.
१९. Omitted by M. स दूतः Sy.
२०. गतः Sy. २१. आगमत्प्राप्तः Sy.
२२. ०गामानाग्नि० P.
२३. एवम्भूते सति यदायम् Sy.
२४. अख्यापयत् M. कृतांश्चमसान्... अभिपश्यति Sy.
२५. आज० M.
२६. अनन्तरमेव Sy.
२७. तस्य चमसस्योत्पादक एतन्नामको देवः Sy. २८. स्त्रीषु Sy. मेना ग्ना इति स्त्रीणाम् N. 3.21

अन्तः[1]। निहितवान्[2]।[3]

हनामैनाँ इति त्वष्टा यदब्रवीच्चमसं ये देवपानमनिन्दिषुः।
अन्या नामानि कृण्वते सुते सचाँ अन्यैरेनान्कन्या३ नामभिः स्परत् ॥५॥

हनाम। अग्निनाऽवस्थातांश्चमसान्दृष्ट्वा यदा। त्वष्टा। अब्रवीत्। अत ऊर्ध्वं ये[4]। देवानां सोमपानसाधनम्[5]। चमसम्। निन्दन्ति[6]। तान्[7]। वयं हनाम[8]। इति, तत[9] ऊर्ध्वं प्रमादाच्चमसानां निन्दा भवेदिति[10] तत्परिहारार्थमृत्विजः[11]। यज्ञे[12]। सह[13]। अन्यानि[14]। नामानि। कुर्वन्ति[15] होताध्वर्युर्ब्रह्मोद्गातेति। तैरेव[16]। नामभिः। तान्[17] कवचभूते। वाग्देवी[18]। स्पृणाति[19] रक्षार्थं।

इन्द्रो हरी युयुजे अश्विना रथं बृहस्पतिर्विश्वरूपामुपाजत।
ऋभुर्विभ्वा वाजो देवाँ अगच्छत स्वपसो यज्ञियं भागमैतन ॥६॥

इन्द्रो हरी[20]। ऋभुभिः[21] कृतौ द्वावश्वौ[22]। इन्द्रः। स्वरथे युयुजे[23]। अश्विनौ च। रथमात्मीयं-

---

१. मध्ये Sy.

२. व्यक्तोऽभूत्। त्रियमात्मानममन्यते त्वष्टा Sy.

३. VM. ignores हत्। हत्। चतुरः। कृतान्

४. य ऋभवः Sy.

५. देवैः पातव्यम् Sy.

६. निन्दामकुर्वन् Sy.

७. एनान्वक्ष्यमाणान्। . . . एतच्छब्दस्य प्रकृतपरामर्शकत्वादृभूणां प्रकृतत्वात्तेषां हननप्रसक्तिं दर्शयति Sy.

८. पूजार्थं बहुवचनम्। . . . देवयोग्यं त्वाष्ट्रचमसं मनुष्या ऋभवः स्वीकृत्य चतुर्धा व्यभजंस्तान् हनामेति यदाऽब्रवीदित्यर्थः Sy.

९. त D. Omitted by P. तत प्रभृति Sy.

१०. ०चमसं चकार भवेदिति P.

११. मनुष्याः Sy.

१२. अभिषुते सोमे पानाय प्रस्तुते सति Sy.

१३. परस्परम् Sy.

१४. होत्रध्वर्यूद्गात्रादीनि Sy.

१५. . . .। पूर्वनाम प्रच्छाद्योपहवकाले 'अध्वर्य उपह्वयस्व, होतरुपह्वयस्व' इत्येवमन्यैरेव नामभिरात्मानं त्वष्टृवधभीत्या प्रख्यापयन्तीत्यर्थः Sy.

१६. अन्यैरेव Sy.

१७. एनान् नरान् Sy.

१८. वाग्देवी M. स्वोत्पादयित्री माता Sy.

१९. प्रीणयति। 'स्पृ प्रीतिबलयोः' Sy.

२०. इन्द्रो हरी omitted by M.

२१. ऋतुभिः P.

२२. पूर्वं सृष्टानां क्रमेण विनियोगमाह . . . एतन्नामानावश्वौ Sy.

२३. योजितवान् Sy.

रथ्वैर्युयुजाते[1]। बृहस्पतिश्च[2]। सर्वरूपामेभिः[3] कृतां[4] धेनुम्[5]। आत्मानमुपनिन्ये[6]। एवं[7] युष्माभिः कृतेषु शिल्पेषु देवैः परिगृहीतेषु, ऋभ्वादयस्त्रयो[8] यूयम्। देवान्[9]। प्राप्तवन्तः। सुकर्माणः[10]। यज्ञियं[11] च। भागम्[12]। प्राप्ताः[13]।

**निश्चर्मणो गामरिणीत धीतिभिर्या जरन्ता युवशा ताकृणोतन ।**
**सौधन्वना अश्वादश्वमतक्षत युक्त्वा रथमुप देवाँ अयातन ॥७॥**

निश्चर्मणः। मृताया गोश्चर्ममात्रादेव[14][15]। गाम्[16]। उत्पादितवन्तः[17]। कर्मभिः। यौ च। जीर्णौ पितरौ। तौ। युवत्वयुक्तौ[18]। पुनः कृतवन्तः[19]। सौधन्वनाः[20]! अश्वात्[21]। द्वितीयमश्वम्[22]। कृतवन्तः[23], ह्यावश्वावश्विनोः[24] कृतवन्तः। एतत्सर्वं कृत्वा गमनार्थं कञ्चन रथम्[25]। युक्त्वा[26]। देवान्[27]। उपगताः[28]।

---

१. योजितवन्तौ Sy.
२. बृहतो मन्त्रस्य पालयितैतन्नामको देवः Sy.
३. नानारूपोपेताम् Sy.
४. कृतः M.
५. गाम् ।...यद्यप्यत्र गौरिति विशेषो न श्रुतस्तथापि पूर्वं धेनुः कर्त्वेत्युक्तत्वात् पुरस्ताच्च 'ये धेनुं विश्वजुवं विश्वरूपाम्' (RV.IV.33.8.) इति वक्ष्यमाणत्वाच्च विश्वरूपा गौरित्येवाध्यवसीयते । अत एव विश्वरूपामित्यस्याश्वपङ्क्तिरिति केचन व्याचक्षते, तदसत् । युष्मत्सम्पादितानि रथादीनीन्द्रादयः स्वभागत्वेनाकल्पयन् Sy.
६. उपागमत् स्वीकृतवानित्यर्थः Sy.
७. तस्मात् Sy.
८. ऋभुर्विभ्वा वाजश्च यूयम् Sy.
९. इन्द्रादीन् Sy.
१०. शोभनाश्वरथादिकर्मवन्तो यूयम् Sy.
११. यज्ञार्हं यज्ञसम्बन्धिनम् Sy.
१२. सोमरूपं देवत्वं प्राप्तैः सेवनीयम् Sy.
१३. प्राप्नुत । कर्मसामर्थ्येन हविर्भुजो भवतेत्यर्थः । इत्येवमृषिराह Sy.
१४. यूयं निश्चर्मणो मृताया गोः सकाशादुत्कृत्ताच्चर्मणः Sy.
१५. ०त्रा P.D. ०त्राम् M.
१६. देवानां P.D.
नूतनाम् Sy.
१७. उत्पा० P. निरगमयत, उत्पादितवन्त इत्यर्थः । तेनैव चर्मणा संवीतां तत्सदृशीमन्यां धेनुं कृतवन्त इत्यर्थः Sy.
१८. युवत्वं युक्तवन्तौ P.D. यद्यपि पूर्वमेवादयादीनां विनियोग उक्तस्तथापि तेषामत्यन्तदुःखसम्पादत्वज्ञापनाय पुनराह । न केवलं गोकरणमेवापि च...युवानौ Sy.
१९. अकुरुत Sy.
२०. सनध० M.
२१. अश्वा P.D.M. एकेन विद्यमानेनाश्वेन Sy.　२२. अश्वान्तरम् Sy.
२३. प्रयत्नेन सम्पादितवन्तः Sy.
२४. ०नौ P.D.
२५. यस्मादेवं कृतवन्तस्तस्माद् रथं युष्मदीयम् Sy.
२६. युक्ता P. अश्वैर्योजयित्वा Sy.
२७. इन्द्रादीन् Sy.
२८. देवसमीपं प्राप्नुत Sy.

इदमुदकं पिंबतेत्यंब्रवीतनेदं वां घा पिबता मुञ्जनेजंनम् ।
सौधन्वना यदि तन्नेव हर्यंथ तृतीयें घा सवंने मादयाध्वै ॥८॥

इदमुदकम्[१]। देवेष्वृभवः[२] सोमपीथमैच्छंस्तान्देवा अब्रुवन्[३]। प्रातःसवने[४] वसतीवरीः[५]। पिबतेति[६]। माध्यन्दिने[७] वा[८]। सोमनेजनम्[९]। उदकम्[१०]। पिबतेति[११], न तदैच्छ[१२]न्नृभवस्ततो[१३] देवानिन्द्रः सन्दधाति[१४], देवा[१५] यूयमृभूनित्यमब्रू[१६]तेति[१७] देवानुक्त्वा ऋभूनेव[१८] वदति। हे सौधन्वनाः[१९]! यदि। न। एतत्[२०]। एवम्[२१]। इच्छथ[२२]। तृतीयसवने। सोमेनैव[२३] मादयाध्वा इति[२४]।

आपो भूयिंष्ठा इत्येको अब्रवीदुग्निर्भूयिंष्ठ इत्युन्यो अब्रवीत् ।
वधर्यन्तीं बहुभ्यः प्रैको अब्रवीदृता वदंन्तश्चमसाँ अंपिंशत ॥९॥

आपो भूयिष्ठाः। ब्रह्मवाद्यं[२५] वदन्त ऋभव[२६] एत्ये[२७]तरेतरं पृष्ट्वा, कश्चित्[२८]। आपः[२९]। सर्वेभ्यः

---

१. Omitted by P.D.
२. ०घृभवः P. इदानीमृषिर्देवैरुक्तमर्थं तान्सम्बोध्य यूयमृभूनेवमुक्तवन्तः स्वे-स्वनुवदति Sy.
३. उक्तवन्तः Sy.
४. एतत्प्रातःसवनिकाभिप्रायम् Sy.
५. सतीपरः M. इदमुदकं सोमलक्षणम् Sy.
६. एतद् माध्यन्दिनसवनाभिप्रायम् Sy.
७. ०न M.
८. अथवा घ इत्यनर्थकः प्रसिद्धयर्थो वा Sy.
९. इदं मुञ्जनेजनं, मुञ्जवान् नाम पर्वतः सोमोत्पत्तिस्थानम्। तत आहृतत्वात्तेन मुञ्जतृणेन शोधितमपगततृणमित्यर्थः Sy. १०. इदं सोमरसरूपमुदकम् Sy.
११. पिबतेत्यब्रवीतन Sy.
१२. उभयसवनसम्बन्धि सोमपानकार्यम् Sy.
१३. नैव कामयथ(ध्वे)। हर्यतिः कान्तिकर्मा। 'हर्यत्युशिक्' (Ngh.2.6.) इति तत्कर्मसु पाठात् Sy. १४. सद० P.
१५. देवानि P. १६. एवम् Sy.
१७. यूयमृभूनुक्तवन्तः Sy.
१८. अथवा ऋभून्प्रति तस्यैवेदं वाक्यम्। हे सौधन्वना यूयं देवत्वं प्राप्य देवयजनं प्रति सोमपानाय रथेनागत्य श्रान्तानब्रवान्प्रातःसवन इदमुदकं सोमलक्षणं पिबतेत्यब्रवीतन Sy.
१९. सुधन्वनः पुत्रा यूयम् Sy.
२०. इदं वा मुञ्जनेजनं मुञ्जेन दूषितं वाजिनं पिबत Sy.
२१. Omitted by P. पश्चात् तद् इयम् Sy. २२. यदि नेच्छथ Sy.
२३. ०थ० D. मादयः M. मत्यर्थं तृप्ता भवथ। 'ऋभवो देवाः सोमस्य मत्सन्' इति तृतीयसवने तेषां सोमपानसद्भावात् Sy.
२४. VM. ignores घ। घ
२५. ब्रह्मवद्यं is suggested for ब्रह्मवाद्यं
२६. चमसचतुर्धाकरणकाले किमिति सत्यं वदन्तो व्यभजन्निति तदाह Sy. ऋभव उरु भान्तीति वर्तेन भान्तीति वर्तेन भवन्तीति वा N.11.15.
२७. एत्य is omitted by M.
२८. त्रयाणामन्यतमः Sy.
२९. ०प P.

पदार्थेभ्यो भूयिष्ठाः[1]। इति। अब्रवीत्[2]। अन्यः। अग्निः सूक्ष्मरूपेण सर्वत्र व्याप्तः[3]। भूयिष्ठः[4]। इति। अब्रवीत्। सीताप्रहारं[5] गच्छन्ती[6] पृथिवी। सर्वेभ्यः। प्ररिरिच[7] इति। तृतीयः। अब्रवीत्। इत्थं[10] सत्यानि[11]। वदन्तः[12]। एकस्मात्त्वमसात्त्रीश्चमसान्। अपिंशत[13]।

श्रो॒णामेक॑ उद॒कं गामवा॑जति मां॒समेकः॑ पिंशति सू॒नयाभृ॑तम् ।
आ नि॒म्रुचः॒ शकृ॒देको॒ अपा॑भर॒त्किं स्वि॑त्पु॒त्रेभ्यः॑ पि॒तरा॒ उपा॑वतुः ॥१०॥

श्रोणाम्[14]। पित्रोर्वञ्जाम्? ! एकः[15]। उदकं प्रति[16]। पानाय विसृजति[17]। मांसम्। एकः। पित्रोर्व्यजनार्थमाहृतम्[18]। असिना[19]। शकलीकरोति[20]। अथापरः[21]। अस्तमयात्[22]। प्राक्। शकृत्[23]।

---

१. महद्युदकालप्रशस्तं लोकोपकारकं तत्त्वान्तरमस्ति Sy.

२. आपो भूयिष्ठा इत्युक्तमवादीत्। अपामेव श्रेष्ठत्वम् 'अप एव ससर्जादौ' (Manu. 1.8.) इत्यादिशास्त्रात् Sy.

३. सर्वत्र (शकली करो अथापरोस्तमयात्प्राक् शकृदपभरतीत्यं शुश्रूषमाणेभ्यः) व्याप्तः D. सर्वत्र शकलीकरोत्यथोपरोऽस्तमयात्प्राक् शकृदपदभवतीत्यर्थं शुश्रूषमाणेभ्यः पुत्रेभ्यस्तौ पितरौ किं स्विद् व्याप्तौ P.

४. आन्तरं बाह्यं च वाहपाकभुक्तजरणादिव्यापारेणाग्नेरेव जगन्निर्वाहकत्वादग्नेरेव भूयिष्ठत्वमित्येव मन्यते Sy.

५. प्रा० D.　　६. ०न्ति P.

७. वधरिति रेफान्तोऽपि वज्रनाम। 'वधः ...अर्कः'(Ngh.2.20.)इति तन्नामसु पाठात्। तद्विच्छति वृष्ट्युदकार्येति वधर्यन्ती मेघपङ्क्तिरुच्यते। यद्यपीयं स्ववधार्थं वज्रं स्वयमेव नापेक्षते तथापि वृष्टधर्ममिन्द्रवज्रेण हन्यमानत्वात्तदीच्छतीत्युपचर्यते। यद्वा बहुभ्यस्तेषामर्थाय वधर्यन्ती वधमात्मन इच्छन्ती भूमिम्। छान्दसो रेफोपजनः। तामेव Sy.

८. संवादिभ्यः Sy.

९. परि० D.　　श्रेष्ठतमामब्रवीत्। उदकस्यापि मेघकारणत्वात् Sy.

१०. इत्यर्थं P.　　११. सत्यादीनि M. उक्तरूपाणि यथार्थानि वाक्यानि Sy.

१२. परस्परं ब्रुवन्तः Sy.

१३. अपिशत M. अवयविनोऽकुरुत। चतुर्धा व्यभजतेत्यर्थः। 'पिश अवयवे' Sy.

१४. णा M. अत्र ऋभव एर्वात्विग्रूपेण स्थित्वा यज्ञं निर्वहन्तीत्याह श्रोणाम् Sy. पित्रोर्त्यं गाम् is suggested for पित्रोर्वञ्जाम्

१५. ऋभुषु मध्य ऋत्विक् Sy.

१६. शोणवर्णमुदकं रुधिरम्...गाम्... बाह्यभूमिं प्रति Sy.

१७. गमयति। रक्षोभागत्वेन स्थापयति Sy.

१८. व्यञ्जना० is suggested for व्यजना०

१९. Omitted by P. D. सम्पादितम् Sy.　२०. छेदनसाधनेन स्वधितिना Sy.

२१. हृदयजिह्वावक्षआद्याकारेणाहृतं सम्पादितं मांसं पिशत्यवयवीकरोति, स्वधितिना तत्तदवयवान्विभजतीत्यर्थः Sy.

२२. ०स्तयात् M. निश्शेषेण छिन्नान्मांसात् Sy.

२३. कुत्सितं जरत्तृणमूवध्यनामकम् Sy.

अपभरति।[1] इत्थं[2] शुश्रूषमाणेभ्यः[3] पुत्रेभ्यः[4]। तौ पितरौ[5]। किम्[6]। स्वित्[7]। ररक्षतुः[8]।[9]

**उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः ।**
**अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ॥११॥**

उद्वत्सु। उद्गूहितुमशक्यस्य[10] सवितुः। गृहे[11]। यदा[12]। अवर्तिध्वम्[13]। तस्य[14]। उन्नतेषु[15] क्षेत्रेषु। ओषधीः[16]। अकृणुत[17]। निम्नेषु[18] च। उदकानि[19]। शोभनकर्मेच्छया[20]। नेतारः![21] तत्। आश्रितरक्षणं मयि[1]

---

१. अपाहरच्छिरसनाय Sy. २. एवम् Sy.
३. ऋत्विग्रूपेण स्थितेभ्यः Sy.
४. पुत्रस्थानीयेभ्य ऋभुभ्यः सर्वेष्वनुष्ठितेषु Sy.
५. यज्ञस्य पालयितारौ जायापती Sy.
६. The passage beginning with शकलीकरोति and ending with किं is omitted by P.
७. नु खलु Sy.
८. ररक्षत M. रक्षतुः P. प्राप्नुतः। . . . सर्वं तैरेवानुष्ठितमिति तयोर्न किञ्चित्कृत्यमस्तीत्यर्थः। अथवायमर्थः। एकस्तेषामन्यतमः श्रोणां पङ्गुकां गामुदकं प्रत्यवगमयति। अपरः सूनया मांसविक्रयिण्या, आभृतं सम्पादितं मांसं पिंशति। अपर आ निम्रुचोऽस्तमयादर्वागेव शकृद् गोपुरीषं हरति। एवमृभुभिरनुष्ठिते सति किं स्विदेतस्मात्परिचरणादन्यत्पुत्रेभ्यः सकाशाद्युपावयुरुपगच्छेतामिति Sy.
९. VM. ignores उप
१०. आग्राह्यस्यादित्यस्य Sy. गूहितुमशक्यस्यादित्यस्य SKN. IV. 67. योऽयमगोह्य आदित्योऽगूहनीयो न गूहितुं शक्यः केनचिदपि Dur.
११. मण्डले Sy. मण्डलाख्ये SKN. अस्य मण्डले Dur. १२. यावत्कालम् Sy. यदा रात्रावित्यभिप्रायः SKN.
१३. सुप्तवन्तः स्थ, रात्रौ निर्व्यापारास्तिष्ठथ Sy. सस्वप्ते (अस्वाप्त) SKN. सुप्ता एव निगूढा भवथ Dur. १४. अस्मै प्राणिजाताय तदुपकारार्थम् Sy. अस्मै जनाय SKN. अस्मै लोकाय Dur.
१५. तस्येन्ने० P.D. उन्नतेषु प्रदेशेषु मेर्वादिषु Sy. 'उपसर्गाच्छन्दसि धात्वर्थे' (Pā 5.1.118.) इति वतिः, उद्गतेषून्नतेषु। केषु? सामर्थ्याद् भूप्रदेशेषु SKN. ये उन्नताः प्रदेशा भुवोऽङ्कुरनाक्रान्तास्तेषु Dur.
१६. व्रीहियवादिकम् Sy. रश्मीनां च भूतलगतास्याहोन्या व्यभिचरतीत्याथर्वणे व्यापारदर्शनादुपपन्नं तृणादिकरणम् SKN. तृणं कुशादि Dur. १७. कृतवन्तः स्थ Sy. प्रतिसंवत्सरं कुरुध्वे . . . वर्षेणादित्यमण्डलादौ वर्तमानाः Dur.
१८. प्रवणदेशेष्वस्मा एव Sy. निर्गतेषु SKN. निम्नेषु भुवः प्रदेशेषु Dur.
१९. पानावगाहनक्षमा अपः SKN. उदकम् Dur.
२०. शोभनं कर्म, एभिः कृतमिति यथा यजमानाः स्तुवन्ति तदिच्छयेत्यर्थः Sy. अप इति कर्मनाम। शोभनमपः स्वपस्तत इच्छाक्यजन्तादकारप्रत्यये भावे ततष्टाप्, तृतीया हेतौ, करणेच्छाहेतुना SKN. लोकानुग्रहप्रवृत्तया वर्षक्रियया Dur.
२१. नेतरतः P. नेतरः D. नेतराः M. पुराणप्रसिद्धान् सुधन्वनः पुत्रान्कर्मणा देवत्वं प्राप्तवत ऋभून् स्तुत्वा वेदप्रसिद्धया सूर्यरश्मिरूपानृभूनिदानीं स्तौति। तथा च यास्को निरुक्ते पुराणप्रक्रियासिद्धानु-

बाध्यमाने स्तोतरि। न। अनुगच्छथ न तथेदानीं कुरुथेति। यास्कस्त्वाह—"आदित्योऽप्यहनीयः। तस्य यदस्वपथ गृहे" तदद्येदमृभवो नानुगच्छथ "यावत्तत्र भवथ न तावदिह भवथेति"

**संमील्य यद्भुवना पर्यसर्पत क्व स्वित्तात्या पितरा व आसतुः ।**
**अशपत यः करस्नं व आददे यः प्राब्रवीत्प्रो तस्मा अब्रवीतन ॥१२॥**

संमील्य। मनुष्याणां नेत्राणि सम्मीलयन्तः। सर्वाणि भुवनानि। यदा। पर्यसर्पत सवित्रा सह गच्छन्तः। तदा युष्माकम्। मातापितरौ। तातयव्दार्हौ। क्व। आसतुः, पितृशुश्रूषणप-

---

भूत्वहुधा निरुच्य तदुदाहरणत्वेन 'विष्ट्वी शमी' इत्येतामुदाहृत्य 'आदित्यरश्मयोऽप्यृभव उच्यन्ते' (N.11.16.) इत्युक्त्वा तस्मिन्नर्थ एतामृचमुदाजहार। हे ऋभव उरु प्रभूतं भासमाना ऋतेनादित्येन भासमाना वा ऋतेनोदकेनोदकार्थमुत्पन्ना वा। रश्मीनामुरुभासमानत्वं प्रसिद्धम्। तथाऽऽदित्यादुत्पत्तिरप्युदकार्थं भवनमपि रश्मीनां धर्मकाले भूमिगतं सारमादाय पुनर्वर्षकाले प्रवर्षन्तीति प्रसिद्धम् 'आदित्याज्जायते वृष्टिः' (Manu 3.76) इति शास्त्रात्। तथाविधा नरः प्रकाशवृष्ट्युदकादेर्नेतारो यूयम् Sy. हे ऋभवो रश्मयः SKN. उपकरिष्यन्तो यूयमृभवः। Dur.

१. स्तोतनिरानु० M. ०च्छ P. D.

२. यतस्वपत P.D. यदस्वपत M.

३. N.11.16; SKN. IV. 67.

४. तावन्तं कालम् Sy. तदा SKN. यावत्तत्र निगूढा भवथ Dur.

५. अहनि Sy. रात्रिलक्षणे वर्तमानकाले SKN. रात्री Dur.

६. इदानीम् Sy. इदं जगत् SKN.

७. ०स्वपत...मृभ० M.

८. अनुसृत्य न गच्छथ। यावन्तं कालं रात्री सूर्ये निगूढा वर्तध्वे तावन्तमेव कालमहन्यपि नानुगच्छथेत्यर्थः। यद्वा। अगोपनीयस्य तस्य गृहेऽन्तरिक्षे यावावन्तं कालमसस्तन वृष्टिमदत्त्वा स्वापमकुरुत तावन्तं कालमद्येदानीं वर्षसमय इदं सस्याभिवर्धनवृष्टिप्रवाहरूपं कर्म नानुगच्छथ। अनुसृत्य न प्राप्नुथ। यावन्तं कालं विवर्षथ तावन्तमेव कालं प्रवर्षयेत्यर्थः Sy. यावत्तत्र भवथ न तावदत्र। ततश्च युष्मद्विना निरालोकोऽयं लोकः। एतद्वो माहात्म्यमिति स्तुतिः SKN. न तावदिह भवथ। ततश्च युष्मद्विनाभावे निरालोकोऽयं लोकः सम्पद्यते। एतद्वो महाभाग्यमहमनुकीर्तयामि। ते यूयमिदं नामास्माकं कुरुतेति Dur.

९. N.11.16.; SKN. IV. 67. VM. ignores अद्य

१०. समीलयन्त M. हे ऋभवो रश्मयो यूयं यदा...सम्मीलनं कृत्वा जलधरपटलैराच्छाद्य Sy. ११. भूतजातानि Sy.

१२. वर्य० P. ०समर्प० M. परितः सर्पणं कुरुथो वर्षथ इत्यर्थः Sy.

१३. जगतः पालकौ सूर्याचन्द्रमसौ Sy.

१४. ०र्हो M. तातौ तायमाने वृष्ट्युदके। यद्वा तात्या तासु वर्षासु...अथवा पितृविशेषणम्।...तत्कालीनौ Sy.

१५. कुत्र खलु Sy.

१६. तिष्ठतः।...यद्वा...अहोरात्रविभागेन प्रवर्षयेत्यर्थः Sy.

रागां[1] भवतामिदानीं क्व तावभवतामिति[2]। यः[3]। यः प्रहरामीति[4]। करम्[5]। आदत्ते[6]। तं यूयं हुङ्कारेणा-ऽशपत[7]। यो युष्मान्। प्रकृष्टा भवन्त[8] इति। अस्तौत्[9]। तस्मै यूयमपि। अधिकवचनमकुरुत[10] [11]।

**सुषुप्वांसं ऋभवस्तदपृच्छतागोह्य क इदं नो अबूबुधत् ।**
**श्वानं बस्तो बोधयितारमब्रवीत्संवत्सर इदमद्या व्यख्यत ॥१३॥**

सुषुप्वांसः। रात्रौ[12] सुषुप्वांसः। ऋभवः[13]। प्रातस्तत्[14]। अपृच्छत[15]। हे सवितः[16]! कः। इदम्[17]। अस्मान्[18]। प्रातरेवाबूबुधदिति[19]। तत्र श्वानम्[20]। बस्तः[21]। बोधयितारम्[22]। अब्रवीच्छ्वेति[23] [24] संवत्सरमाह[25] बस्त इत्यात्मानम्। इत्थं[26] यूयं संवत्सरमात्र[27] एव तपःप्रभावाद्रश्मीभूताः। सर्वमिदम्[28]। प्रकाश-[29]यथेत्युपिवचनम्[30]।

**दिवा यान्ति मरुतो भूम्याग्निरयं वातो अन्तरिक्षेण याति ।**
**अद्भिर्याति वरुणः समुद्रैर्युष्माँ इच्छन्तः शवसो नपातः ॥१४॥**

दिवा यान्ति। द्युलोकेन[31]। गच्छन्ति[32]। मरुतः[33]। भूम्या[34]। गच्छत्यग्निः[35]। अयम्। वातः[36]।

---

१. ०शुषुवां P. २. क...तामव० P.
३. यः कोऽपि वृष्टिप्रतिबन्धकारी राक्षसादिः Sy. ४. ईदृशान् वो युष्मान् Sy.
५. बाहुनामैतत्। 'करस्नौ बाहू' (Ngh. 2.4.) इत्युक्तत्वात्। अत्र स्वकारान्तम्। युष्मदीयं हस्तम् Sy.
६. गृह्णाति प्रतिरोधं करोति तम् Sy.
७. नाशयथ Sy.
८. भवदन्त P. अभ० M. यश्च प्राब्रवीत्प्र-कर्षेण वाचा निरुध्ये Sy.
९. इम्यस्तोत् P. १०. ०तः M. प्रकर्षेण भर्त्सनादिशब्दं कुरुथ। यद्वा यो नूनं स्तौति तं प्रकर्षेण स्तुतेत्यर्थः Sy.
११. VM. ignores स्वित्। उ
१२. आदित्यमण्डले स्वपन्तो वर्षणाय Sy.
१३. ०प्वांसंभवः M. रश्म्यात्मका यूयम् Sy.
१४. तमादित्यं तद् वाक्यम् Sy.
१५. प्रश्नं कुरुत Sy.
१६. केनचिदगोपनीयादित्य स्वामिन् ! Sy.
१७. कर्म वर्षणरूपम् Sy.
१८. अस्मदीयम् Sy.
१९. बोधयति प्रेरयति साहाय्यं करोति Sy.
२०. अन्तरिक्षे श्वसन्तं वायुम् Sy.
२१. सर्वस्य वासयिताऽऽदित्यः Sy.
२२. बाध० P. प्रेरयितारम् Sy.
२३. प्रावादीत्। असौ युष्मान्प्रेरयतीति Sy.
२४. श्वेति P. २५. ०ब्रवी...संव० M.
२६. ०त्मनाग्नि० P.
२७. अथ वायुसहायेन वर्षन्तो यूयं संवत्सरे पूर्णे Sy. २८. अद्येदानीमिदं जगत् Sy.
२९. विविधं प्रकाशितवन्तः। पूर्वं सूर्याचन्द्रमसौ यथा न दृश्येते तथा वर्षित्वेदानीं वर्षकाले-ऽतीते विश्वं जगद् व्यक्तं कुरुथेत्यर्थः Sy.
३०. VM. ignores अद्य
३१. द्युलोकात् Sy. ३२. आगच्छन्ति Sy.
३३. वृष्ट्यनुकूला देवाः Sy. ३४. भूमेः सकाशात् Sy. ३५. आगच्छति Sy.
३६. सर्वदा सञ्चारी वायुः Sy.

अन्तरिक्षेण। याति। अद्भिः। याति। वरुणः। नदीभिरिव। युष्मान्। इच्छन्तः। शवसः। पुत्रा ऋभवः। तदिदं सर्वं भवत्प्रणीतमिति।

## I. 162.

**मा नो॑ मि॒त्रो वरु॑णो अर्य॒मायुरिन्द्र॑ ऋभु॒क्षा म॒रुतः॒ परि॑ ख्यन् ।**
**यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्याणि ॥१॥**

मा नः। आयुर्वायुः। मा। अस्मान्। मित्रादयः। महान्। इन्द्रस्य।

---

१. अन्तरिक्षात् Sy.
२. आयाति Sy. ३. ताभ्यः Sy.
४. आयाति Sy.
५. आवरको जलाभिमानी देवः Sy.
६. समुन्दनस्वभावैः Sy.
७. वृष्ट्यनुकूलचिकीर्षया युष्मानेव Sy.
८. वृष्टिकार्यस्य बलस्य Sy.
९. नपातयितार ऋभवः Sy.
१०. यद्वा पूर्वं वृष्टिसाहाय्यायागता एते देवाः कृतकार्याः सन्तः पुनर्युष्मान्कामयमानाः स्वस्वदेशं प्रति यान्तीत्यर्थः Sy.
११. Ms. D. puts the figure ॥१६१॥ here to indicate the end of one hundred and sixtyfirst hymn. No such number is given in P. and M.
१२. एति सततं गच्छतीत्यायुर्वायुः Mah. आयुः सततगन्ता वायुः Sy. आयुर्वायुर्वकारलोपेन U. अयनस्वभावकत्वाद्वायुः। छान्दसो वकारलोपः SKN. अत्र वायुरयनो वकारलोपेन। स कस्मात्? अयनात्, एति ह्यसौ विश्वम् Dur.
१३. मा, इति प्रतिषेधार्थीयः परिख्यन्नित्येतेन सम्बध्यते SKN.
१४. अस्मान् Mah., Sy. अस्माकम् U., SKN., Dur.
१५. के मा निन्दन्तु तानाह। मित्रोऽहरभिमानी देवः। वरुणो रात्र्यभिमानी देवः। अर्यमाऽऽदित्यः Mah. अहरभिमानी देवो मित्रः। रात्र्यभिमानी वरुणः। अर्यमा तयोरन्तरालाभिमानी, आदित्यः Sy. के ते देवाः? मित्रो वरुणोऽर्यमा U. परस्ताद्यच्छब्दश्रुतेस्तच्छब्दाध्याहारः। तन्मित्रो वरुणोऽर्यमा SKN.
१६. ऋभवो देवाः क्षियन्ति निवसन्ति यस्मिन्स ऋभुक्षा देवाधारः प्रजापतिः। यद्वेयर्ति व्याप्नोति सर्वमित्यृभुक्षाः। अर्तेर्मुक्षिन्प्रत्ययः।... इन्द्रविशेषणं वा Mah. देवानां निवासभूतः प्रजापतिः। यद्वैतन्महन्नाम, इन्द्रविशेषणम्। 'ऋभुक्षा उक्षा' (Ngh.3.3.)इति तन्नामसु पाठात् Sy. महन्नामैतत्, महान्। अथवा, उरु भातीत्यृभुर्विस्तीर्णमन्तरिक्षम्। तस्मिन्यः क्षयति वसति स ऋभुक्षाः, अथवा ऋभवः सौधन्वनास्तेषां यः क्षयति राजतीष्टे इत्यर्थः स ऋभुक्षाः SKN. स हि, उरुक्षयणः। उरावन्तरिक्षे क्षियति निवसति। अथवा क्षियतिरैश्वर्यार्थः। कस्येष्टे? ऋभूणां देवानां राजेति च तेषामीष्टे। एवमृभुशब्दात्पूर्वपदं क्षियतेरैश्वर्यकर्मण उत्तरपदम् Dur.
१७. इन्द्रो देवराजः Mah. इन्द्रः प्रसिद्धः Sy.

निषेधनु[1]। यत्[2]। बलवतः[3]। देवजतिस्य[4]। अश्वस्य[5]। वक्तं प्रक्रमामहे[6]। यज्ञे[7]। वीर्याणि[8] किमदेवोऽसौ स्तूयत इति परिख्यानसम्भवः[9][10]।

---

१. मित्रादयो देवाः . . . मा परिख्यन्मा निन्दन्तु। परिख्यानं निन्दा। . . . अस्माभिर्देवाः स्तुता नत्वश्वादयस्तिर्यञ्च इति यद्यपि निन्दोचिता, तथाप्यश्वरूपेण देवानामेव स्तुतिः क्रियते Mah. अश्वं स्तोतुं प्रवृत्तान्मित्रादयो देवाः . . . परिख्यानं मा कुर्वन्तु। परिख्यानं नाम निन्दा। महानुभावं देवजातमश्वं बुद्ध्वा नराः स्तुवन्तीति मा कुर्वन्तु Sy. मा गर्हन्तु। . . . देवाः स्तुत्या नत्वश्वप्रभृतयस्तिर्यञ्च इति स्याद् गर्हा। अतो ब्रवीमि मा परिख्यन्निति। यद्यपि गर्होचिता तथाप्यश्वादिरूपेण देवानामेव स्तुत्यत्वादित्याशयः U. परिख्यानं परिवर्जनम्। अनुमदन्तमाकाङ्क्षुः। यद्वाऽनुमन्यन्तामित्यर्थः SKN. मा . . . तान्युच्यमानानि चक्षीरन्। किं तर्हि, अनुमन्यन्ताम् Dur. निषेधन्तु is suggested for निषेधतु

२. यस्मात् Sy.    ३. वाजिनोऽश्वस्य Mah. बेजनवतो बहुप्रवतो वा Sy.

४. ॰जनि॰ P. कीदृशस्य वाजिनः ? . . . देवात्सूर्याज्जातस्योत्पन्नस्य, देवैर्जनितस्य वा। "सूरादश्वं वसवो निरतष्ट" (YV. 29.13.) इत्युक्तेः Mah. बहुदेवतास्वरूपेणोत्पन्नस्य। उषःप्रादीनामस्य शिरआद्यवयवत्वादिति भावः। 'उषा वाऽश्वस्य मेध्यस्य शिरः' (Bṛh. U. 1.1.1.) इत्यादिश्रुतेः। यद्वा देवेभ्यो जातस्य गन्धर्वकुल उत्पन्नत्वात् Sy. देवैर्जनितस्य U. "(स) प्रथमामाहुतिमजुहोत्ततो मनुष्या अजायन्त। स द्वितीयामजुहोत्ततोऽश्वः" इति श्रुतेर्देवादग्नेराहुत्या जातस्य। अथवा 'सूरादश्वं वसवो निरतष्ट' (YV. 29. 13.) इति दर्शनाद्देवैर्वसुभिरादित्याज्जातस्य SKN.

५. 'सप सम्बन्धे' सपति देवैः सह युज्यत इति सप्तिस्तस्य Mah. सर्पणशीलस्य। अश्वनामैतत्। एवंविधस्याश्वस्य महानुभावस्य Sy.
सरणस्य U., SKN.

६. वयम् . . . उच्चारयिष्यामः Mah. प्रकर्षेण ब्रूमः। अतो मा परिख्यन्प्रत्युतानुगृह्णन्त्वित्यर्थः Sy. उच्चारयामः U. प्रकर्षेण वक्ष्यामः Dur.

७. यज्ञे Mah., U. वेदनसाधने यज्ञे Sy. यज्ञेऽश्वमेधादौ SKN.

८. चरित्राणि Mah., U. वीरकर्माणि सामर्थ्यानि Sy.    गुणान् Dur.

९. किं दे॰ M.

१०. यद्वाजिनो देवैर्जातस्य सप्तेः सरणस्य प्रवक्ष्यामो यज्ञे विदथे वीर्याणि। मा नस्त्वं मित्रश्च वरुणश्चार्यमा चायुश्च वायुरयन इन्द्रश्चोरुक्षयण ऋभूणां राजेति वा मरुतश्च परिख्यन् N.9.3; SKN. III. 144.

This stanza=YV. 25. 24.

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति ।
सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः ॥२॥

यन्निर्णिजा । यत् । निर्णिक्तेन मणिमयेन । धनेन । आच्छादितस्य । ग्रासम् । गृहीतम् । मुखतः । हरन्त्यतिरिक्तमन्नमश्वायोपहरन्तीत्यश्वमेधब्राह्मणं तदा । सुष्ठ्वग्रतो गच्छन् । अजः । शब्दं कुर्वन् । इन्द्रापूष्णोः । स्थानम् । अपि । गच्छति ।

---

१. यदा Mah. यस्मात् Sy. यदा U.
२. निर्णिजाक्तेन P. कीदृशस्याश्वस्य ?... निर्णेजनेन स्नानेन प्रावृतस्य संस्कृतस्य । आलम्भनकाले स्नापितस्य, निर्णेजनं निर्णिक् तया Mah. निर्णिगिति रूपनाम । 'निर्णिग् वव्रिः' (Ngh. 3.7.) Sy. निर्णेजनेनोदकस्नानेन संस्कृतस्य, आलम्भनकाले यत्स्नापनमश्वस्य तदेतदुक्तम् U. ३. मणि येन । सौवर्णमणिलक्षणेन Mah. मणिकाख्येन U.
४. रेक्ण इति धननाम । धनेन...प्रावृतस्याश्वस्य, सौवर्णान्मणीन्केसरपुच्छेषु पत्न्य आवपन्ति (Cf. सौवर्णान्मणीन् केसरयोः पुच्छे च प्रवयन्ति Kā Sr.20.5.17.) इत्युक्तेः Mah. रेक्ण इति धननाम । ...'रेक्णो रिक्थम्' (Ngh. 2.10.) इति ...तन्नामसूक्तत्वात् । उभयत्र मत्वर्थो लुप्यते । रूपवता हिरण्यवताऽऽभरणेन Sy. रेक्ण इति धननाम । धनेन ...सुवर्णान्मणीन्केसरपुच्छेषु पत्न्य आवपन्ति तदभिप्रायमेतत् U. ५. सर्वतो वेष्टितस्याश्वस्य Sy. केसरपुच्छेषूपचितस्याश्वस्य U. ६. रातिं दानमाज्यसक्तुधानालक्षणम् Mah. दातव्यां दातव्यत्वेन गृहीतामजाम् Sy. आज्यसक्तुधानालाजालक्षणम् U.
७. गृहीताम् Mah., Sy., U.
८. अश्वस्य मुखतो मुखाग्रे Mah. मुखतः पुरस्तात् Sy. मुखतः U.
९. हरन्त्य० P. नयन्ति प्रापयन्ति 'अश्वाय रात्रिहुतशेषं प्रयच्छति' इत्युक्तेः Mah. नयन्ति, ऋत्विजः Sy. अश्वाय रात्रिहुतशेषं प्रयच्छन्ति (Cf. अश्वाय रात्रिहुतशेषं प्रयच्छति Kā Sr.20.5.18.) इत्येतदभिप्रायम् U. १०. अन्नम् is omitted by P.D. ११. ०योवाह०P.
१२. कीदृशोऽजः ? ...सुष्ठु प्राञ्चति पूर्वं गच्छति सुप्राङ् । ललाटे बद्ध इत्यर्थः । 'कृष्णग्रीव आग्नेयो ललाटे (रराटे) पुरस्तात्' (YV.24.1.) इत्युक्तेः Mah. सुष्ठु प्रवास्यागमनः Sy. सुष्ठु प्रागञ्चनोऽजः U.
१३. अजश्छागः Mah. स तादृशोऽजः Sy.
१४. मेम्यच्छब्दानुकरणम् । मे मे इति शब्दं कुर्वन् Mah. हन्यमानः । 'मीञ् हिंसायाम्' ...यद्वा तस्य शब्दानुकरणं मे मे शब्दं कुर्वन् Sy मेम्यदिति शब्दानुकरणम् । मे मे इति शब्दं कुर्वाणः U.
१५. इन्द्रश्च पूषा चेन्द्रपूषणौ तयोः । ...इन्द्रस्य पूष्णश्च Mah. इन्द्रः प्रसिद्धः पूषा पोषको देवोऽग्निस्तयोः Sy. इन्द्रस्य पूष्णश्च U.
१६. प्रियमिष्टं पाथोऽन्नं पशुलक्षणम् Mah. सर्वोऽपीन्द्रस्येतीन्द्रप्रियत्वम् । एवंरूपं पाथोऽन्नम् Sy. पाथोऽन्नं पशुलक्षणम् U.
१७. भक्षाय नाभिबद्धोऽप्यागच्छति 'सौमापौष्णः श्यामो नाभ्याम्' (YV.24.1.) इत्युक्तेः । हुतशेषमन्नं यदश्वाय दीयते तदा ललाटनाभिबद्धावजौ भक्षायागच्छत इत्यर्थः Mah. प्राप्नोतु Sy. अभ्यागच्छति U.

विश्वरूपः[1] पर्यङ्गेष्वैन्द्रापूष्णः[2] पशुरश्वस्य[3] ग्रीवासु ललाटे वा बध्यते तदनयोः स्थानम्।[4]

**एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः।**
**अभिप्रियं यत्पुरोळाशमर्वता त्वष्टेदेनं सौश्रवसाय जिन्वति ॥३॥**

एष च्छागः। "आग्नेयं ग्रीवं पुरस्ताल्ललाटे पौष्णमन्वञ्चम्[5]" इत्युक्तम्। अयम्। छागः।[6] बलवता।[7] अश्वेन[8] सह। पूष्णे।[9] दीयमानो[10] यज्ञस्य प्रतिवेदात्[11] ?। सर्वदेवहितोऽश्वस्य।[12] पुरतः।[13] नीयते।[14] अभिप्रियम्।[15] पशुपुरोडाशम्।[16] यदा।[17] अश्वेन[18] सह निर्वपन्ति तदानीम्।[19] अश्वम्।[20] त्वष्टा।[21]

---

१. विश्वानि रूपाणि यस्य। नानावर्ण इत्यर्थः Mah. बहुवर्णोपेतः कृष्णग्रीवः कृष्णललामो वा नैकवर्ण इत्यर्थः। एवंरूपोऽयम् Sy. नानावर्णः। 'कृष्णग्रीव आग्नेयो रराटे पुरस्तात्' (YV. 24.1.) इत्येतदभिप्रायमेतत् U.

२. ० पंङ्गव्ये ० M. ० न्द्रापौष्णः is suggested for ० न्द्रापूष्णः

३. P. repeats पशुरश्वस्य पशुरश्वस्य

४. VM. ignores प्रियम्
This stanza=YV. 25. 25.

५. ०न्वञ्ज० D.

६. छागोऽजः Mah. शृङ्गरहितोऽजः Sy. आग्नेयश्छागः U.

७. वेगवता Mah. शीघ्रव्यापकेन Sy. व्यापकेन सहितः U. ८. ०तो श्वे० D.

९. कीदृशश्छागः ? ... पुष्णाति देवानिति पूषाग्निस्तस्य Mah. पोषकस्याग्नेः Sy. पोषकस्याग्नेश्च U.

१०. भागो भजनीयः 'आग्नेयो रराटे' (YV.24.1.) इत्युक्तत्वात् Mah. भजनीयः Sy., U. ११. ०दान् P.

१२. विश्वेभ्यो देवेभ्यो हितः सर्वदेवार्हः, अग्नेः सर्वदेवात्मकत्वात् Mah. सर्वदेवार्हः। अग्नेः सर्वदेवात्मकत्वात्तदर्हत्वेन सर्वदेवप्रियत्वम् Sy. विश्वेभ्यः सर्वेभ्यो देवेभ्यो हितः। अग्नेः सर्वदेवात्मकत्वात्सर्वदेवप्रियत्वम् U.

१३. पुरस्तात् Mah. एवंविधोऽजः ... पुरस्तात् Sy. अग्रतोऽग्रे स्थितः U.

१४. नीयते प्राप्यते ललाटबद्धत्वात् Mah. प्राप्यते Sy. नीयते ... सोऽपि पर्यङ्गस्य एव U.

१५. अभिप्रीणातीति तम्, समन्ताद्देवानां प्रीणयितारम् Mah. प्रीणयितारम् Sy. अभिप्रेतम् U.

१६. पुरो डाशन्ते ददत्येनं स पुरोडाशस्तं पुरस्ताद्दातव्यम् Mah. पुरस्ताद्दातव्यम् Sy. पुरोडाशं कर्तुम् U.

१७. यस्मादेवं क्रियते तस्मात् Sy. यच्च U.

१८. अरणवताऽश्वेन सह Sy. अश्वेन सहितम् U.

१९. तदा Mah. अश्वस्तस्मिन्काले सञ्ज्ञाप्यते पशुपुरोडाशः क्रियते तदेतदुक्तम् U.

२०. एनं छागम् Mah. एनमजम् Sy., U.

२१. त्वष्टा इत् त्वष्टैव प्रजापतिरेव Mah. त्वष्टा सर्वस्योत्पादको देवः 'त्वष्टा रूपाणि विकरोति' (TS.1.5.9.2.) इति श्रुतेः। तूर्णव्यापकोऽग्निर्वा, 'उभे त्वष्टुर्बिभ्यतुः' (RV.I.95.5.) इत्युक्तत्वात्। 'अहोरात्रे इति वा। अरणी इति वा' (N.8.15.) इति यास्केन 'अरणी बिभ्यतुः' इत्युक्तत्वादरणिसम्बन्धोऽग्निरेवेति गम्यते Sy.

एव विशसनकुशलः[1]। शोभनाश्वत्वाय[2]। संस्करोति[3]।

**य॒द्ध॒वि॒ष्य॑मृतु॒शो दे॑व॒यानं॒ त्रिर्मानु॑षाः॒ पर्यश्वं॑ नय॑न्ति ।**
**अत्रा॑ पू॒ष्णः प्र॑थ॒मो भा॒ग ए॑ति य॒ज्ञं दे॒वेभ्यः॑ प्रतिवे॒दय॑न्न॒जः ॥४॥**

यद्धविष्यम्[4]। यदा। हविषे हितमग्निम्। स्वे स्वे काले[5]। देवान्प्रति गन्तारम्[6]। ऋत्विजः[7]। त्रिः[8]। परिणयन्ति[9]। तत[10] उदङ् नीयमानस्याश्वस्य[11]। अग्रतः[12]। पूष्णः[13]। भागः[14]। गच्छति[15] स्वकीयेन[16] शब्देन। यज्ञम्। देवेभ्योऽश्वमेधम्। निवेदयन्[17]। अजः[18]।[19]

---

१. ०लः P.
२. किमर्थम्। सौश्रवसाय शोभनं श्रवः कीर्तिर्यस्य स सुश्रवास्तस्य भावः सौश्रवसं तस्मै सुकीर्तये। यज्ञे मृतानां स्वर्गाप्तेरुक्तत्वात् Mah. देवानां शोभनाश्वनिमित्तम् Sy. शोभनान्तःकरणाय U.
३. प्रीणाति Mah. प्रीतिहेतुकं करोति Sy. प्रीणाति स हि तस्याधिकार इति U.
This stanza=YV. 25. 26
४. कीदृशमश्वम्? हविष्यं हविषे हितं हविर्योग्यम् Mah. हविर्योग्यम् Sy.
५. ऋतावृतौ यज्ञकाले Mah. ऋता ऋतौ काले काले Sy. ऋतावृतौ U.
६. Omitted by P. देवानां प्रापणीयं देवेषु यानं गमनं यस्य तम्, देवयानमार्गगमनं वा। यद्वा देववदादित्यवद्यानं गतिर्यस्य, अनिवारितगतिमित्यर्थः Mah. देवानां प्रापणीयम् Sy.
सञ्चारिणं देवयानं देवानां प्रापणीयं देवयानमार्गगामिनं वाऽऽदित्यवदनिवारितगतिं वा U.
७. मनुष्या ऋत्विजः Mah. ऋत्विजः Sy. ऋत्विग्यजमानाः U.
८. त्र D. वारत्रयम् Mah. त्रिः संस्कृतं स्नापनाभ्यञ्जनसुवर्णमणिकप्रचारैः U.
९. पर्यग्निकुर्वन्ति Mah. पर्यग्निकुर्वन्तीत्यर्थः Sy. परिणयन्त्यश्वम् U.
१०. अत्रास्मिन्समये पर्यग्निकरणकाले Mah. अस्मिन्समये Sy. अत्र तत्रेत्यर्थः, तस्मिन्काले U.
VM. seems to explain अत्र as ततः in the sense of तस्मिन्काले तस्मिन्प्रदेशे वा
११. दीय० M. ०नेस्या० P.
१२. प्रथमः पुरोगामी सन् Mah., Sy.
१३. ०ग्रतः (यूपे मे वृश्चन्त्यपि च ये वहन्ति वा येश्वयूपस्य तक्षन्ति नकारलोपः। पूष्णः D. पोषकस्य वृद्धस्य वाग्नेः ... 'पूष वृद्धौ' पूषति वर्धते पूषाग्निः Mah. पोषकस्याग्नेः Sy., U.
१४. भागोऽजः Mah., Sy. भागोऽजाख्यः U.
१५. गच्छति Mah., Sy.
१६. स्वशब्देन Mah.
१७. किं कुर्वन्। देवेभ्यो यज्ञं प्रतिवेदयन् ख्यापयन्...ज्ञापयन् Mah. प्रख्यापयन् Sy देवेभ्यः प्रतिवेदयन्नजः स्वकीयेन शब्देन U.
१८. अयः P.
१९. VM. ignores अजम्
This stanza=YV. 25. 27.

होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शंस्ता सुविप्रः ।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आ पृणध्वम् ॥५॥

होताध्वर्युः[1] । होता[2] । अध्वर्युः[3] । आभिमुख्येनाध्वर्युं प्रति गच्छन्प्रतिप्रस्थाता[4] । अग्नीध्रः[5] । ग्राव्णः स्तोत्रेण गृह्णन् ग्रावस्तोता[6] । मैत्रावरुणः[7] । ब्रह्मा[8] । च सर्वे[9] । एतेनानेन[10] । यज्ञेन[11] । साध्वलङ्कृतेन[12] । स्विष्टेन[13] च देवानां तृप्तिकराः । नदीः[14] । परलोके पूरयध्वम्[15][16] ।

१. हे होत्रादय ऋत्विजः Mah.

२. के, ऋत्विजस्तानाह । ...आह्वाता देवानां तन्नामक ऋत्विक् Mah. देवानामाह्वातैतन्नामक ऋत्विक् Sy. होता तत्र शंसिता सुविप्र इति सम्बन्धः U.

३. अध्वरमिच्छत्यध्वर्यति Mah. अध्वरयुरध्वरस्य नेता Sy.

४. आभिमुख्येनावयजतीत्यावयाः ... प्रतिप्रस्थाता Mah. सोऽपि... आभिमुख्येन हवियां गमयिता। अध्वर्योविशेषणमेतत्। ...यद्वा। आभिमुख्येनावयष्टा प्रतिप्रस्थातोच्यते Sy. यस्मिन्यज्ञ आवया आभिमुख्येन वयति कर्मणीत्यात्रयाः U.

५. अग्निमिन्द्धे दीपयति, अग्निमिन्धोऽग्नीत् Mah., Sy. अग्निदीपकः U.

६. ग्रावाणः स्तोतारं M. स्तोत्रा P. ग्राव्णो गृह्णाति स्तौति ग्रावग्राभः। कर्मण्यण्, ह्रस्य भः। ग्रावस्तोता Mah. ग्राव्णः स्तुत्वा गृह्णातीति ग्रावस्तुत् Sy. ग्रावग्राहः सोमाभिषवाय ग्रावग्रहणशीलः U.

७. उतापि, शंस्ता शंसति स्तौति शंस्ता प्रशास्ता Mah. उतापि च... प्रशास्ता Sy. यस्मिन्यज्ञे ... विशसिता शस्त्राणामपि U.

८. शोभनो विप्रो मेधावी सुविप्रो ब्रह्मा 'ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति' (N. 1.8.) इत्युक्तेः। अयमनुक्तर्त्विगुपलक्षकः Mah. सुविप्र इति मेधाविनाम। शोभनमेधोपेतो ब्रह्मोच्यते। 'ब्रह्मा त्वो वदति जातविद्याम्' (RV.X.71.11.) इत्यत्र "ब्रह्मैको जाते जाते विद्यां वदति ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति" (N.1.8.) इत्युक्तत्वाद् ब्रह्मैव सुविप्रशब्देनाभिधेयः। स चानुक्तर्त्विगुपलक्षकः Sy. साधु मेधावी साधु ब्राह्मणो वा U.

९. एते यज्ञेन वक्षणाः पृणध्वमिति सम्बन्धः Mah. एते सर्वे Sy.

१०. अनेन is omitted by P. तेन प्रसिद्धेन Mah., Sy.

११. यज्ञेनाश्वमेधेन Mah. यज्ञेन Sy., U.

१२. कीदृशेन यज्ञेन ? स्वलङ्कृतेन। रत्नयोरैक्यं, सुष्ठ्वलङ्कृतेन विप्रहविर्दक्षिणादिभिः शोभितेन Mah. सुष्ठ्वरणीयं कृतेन स्वलङ्कृतेन वोच्चारसौष्ठवादिना सुष्ठु सम्पादितेन Sy. साध्वलङ्कृतेन U.

१३. सुष्ठ्विष्टेन Mah., Sy. साध्विष्टेन U.

१४. नदीर्घृतकुल्याद्याः ... वहन्तीति वक्षणाः Mah. अभितो घृतकुल्यादीन्प्रवहणस्वभावाः प्रसिद्धा नदीर्वा Sy. नदीर्देवानां तुष्टिकराः U.

१५. घृतपयोदधिपयस्यापुरोडाशमांसैः पूरयत। ...यज्ञं सम्पाद्य फलं साधयतेत्यर्थः Mah. सर्वतः पूरयत, यज्ञं सम्यग्निर्वर्त्य फलं साधयतेत्यर्थः Sy. पयोदधिपयस्यापुरोडाशमांसैरापृणध्वमापूरयध्वम्। अकृपणं दातव्यमित्यभिप्रायः U.

१६. VM. ignores आ।

This stanza=YV. 25. 28

यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति ।
ये चार्वते पचनं संभरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥६॥

यूपव्रस्काः[1] । यूपं ये वृश्चन्ति[2] । अपि च । ये । वहन्ति[3] । चषालं[4] वा । ये । अश्वयूपस्य[5] । तक्षन्ति[6], नकारलोपश्छान्दसः । ये[7] । च । अश्वाय[8] । पचनोखाम्[9] । सम्भरन्ति[10] । अपि च । तेषाम्[11] । आगोरणमुद्यमः[12] । अस्मान्[13] । व्याप्नोतु[14] ।

उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।
अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥७॥

उप प्रागात्[15] । देवानुपप्रैदश्वः[16] । शोभनपश्चादियुक्तम्[16] । अभिलषितं[17] च ।

---

१. ०प्रस्काः P.
२. व्र० D. तेषां केषाम् ? ...यूपाय वृश्चन्ति तरुं छिन्दन्ति ते यूपव्रस्काः Mah. यूपार्हवृक्षस्य व्रश्चनकर्तारश्छेत्तारः Sy. यूपं ये वृश्चन्ति त एवमुच्यन्ते U.
३. महति P. यूपं वहन्ति ते यूपवाहाः । कर्मण्यण् । छिन्नस्य यूपस्य वोढारः Mah. छिन्नस्य वोढारः Sy. यूपं ये वहन्ति U.
४. यूपाग्रभागे स्थाप्यं काष्ठम् ... 'चषालो यूपकटकः' इत्यमरः Mah. यूपस्योपरि-स्थाप्यं यूपाग्रभागं चषालमाहुः Sy. चषालं यूपाग्रभागम् U. ५. येश्वयू० P. येऽश्वयू० M. अश्वबन्धनयूपार्थम् Mah. अश्वबन्धनयूपाय Sy., U. अश्वयूपाय is suggested for अश्वयूपस्य
६. तक्षन्ति । वचनव्यत्ययः । ... 'तक्षू तनूकरणे' साधु सम्पादयन्तीत्यर्थः Mah. तक्षतीति वचनव्यत्ययः । साधु सम्पादयन्ति Sy. तक्षति । तक्षन्तीति प्राप्ते छान्दसमेकवचनम् । साधु सम्पादयन्ते U.
७. अपिच ये नरा Mah. ये जनाः U.
८. अरणवतेऽश्वाय Sy.
९. पचनो वा M. पच्यतेऽनेनेति पचनं पाकसाधनं काष्ठभाण्डादिकम् Mah., Sy. काष्ठादि U.
१०. संहरन्ति, आनयन्ति Mah.
११. तेषामृत्विजाम् Mah., Sy. तेषां जनानां सम्बन्धिनी U.
१२. अभिगोरणमभिगूर्तिरुद्यमः Mah. सङ्कल्पः, सर्वथा करणीयमिति बुद्धिः Sy. 'गुरी उद्यमने' आगूरणमभिगूर्तिः । स्वकाले सर्वं करणीयमिति बुद्धिः U.
१३. अस्मत्सम्बन्धिनाम् Sy.
१४. प्रीणातु व्याप्नोतु वा । अस्माकं यज्ञं सम्यक् साधयत्वित्यर्थः । 'इवि व्याप्तिप्रीणनयोः' ... तेषामुद्यमोऽस्मान्प्रीणात्वित्यर्थः Mah. व्याप्नोतु । इन्वतिर्व्याप्तिवचनः 'इन्वति ननक्ष'(Ngh.2.18.) इति तद्वचनेषु पाठात् । यद्वा तेषामभिगूर्तिर्नोऽस्मानिन्वतु । यागं साधु पारं प्रापय्य फलेन योजयत्वित्यर्थः Sy. व्याप्नोतु U.
This stanza=YV. 25. 29
१५. उपगच्छतु Mah. उपप्रैतु Sy. उपैतु U. प्रकर्षेणोपागात् । लोडर्थे लुङ् । उपागच्छतु SKN. प्रकर्षेणैतु Dur.
१६. सुमत्स्वयम्. . .सुमदित्यव्ययं स्वयमित्यर्थे Mah. यद्वा स्वयमेव मावयितुरमे मयि Sy. स्वयम् U. स्वयमेव । अत्रैकवाक्यतायै यत्तच्छब्दौ योग्यतार्थसम्बन्धायाध्याहार्यौ SKN. स्वयमेव । एवमत्र शब्दसाकल्यादर्थोपपत्तेश्च 'सुमत्' इत्यस्य 'स्वयम्' इत्येष विपरिणाम उपपद्यते Dur. सुमत्स्वयमित्यर्थः N.6.22.
१७. मननीयं फलम् Mah., Sy. मननम् U. किं पुनस्तत् ? उच्यते । यज्ञेनेष्टं स्यादिति । सामर्थ्याद्यज्ञसाध्यं विशिष्टं फलम् SKN. मननीयमर्थजातम् । Dur.

मम[1]। अधायि[2]। सोऽयं मनुष्यैर्वोढृभि[3]रभिलषितपृष्ठः[4]। देवानाम्। अभिलषितानि[5]। उपभवति[6]। अपगच्छन्तं[7] चैनमश्वम्। मेधाविनः[8]। ऋषयः। स्तोत्रैरनुमदन्ति[9]। देवानाम्[10]। पोषणाय[11]। कुर्मो वयम्[12]। एनं शोभन[13]स्तुतिमिति[14]।

**यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।**
**यद्वा घास्य प्रभृतमास्ये ३ तृणं सर्वा ता ते अपि देवेष्वस्तु ॥८॥**

यद् वाजिनः। यद्। बलवतः[15]। अश्वस्य। पादबन्धनम्[16]। दाम[17]। या च। शिरसि

---

१. मया Mah., Sy. मम U. मम, मदीयमिति शेषः SKN. अहम् Dur.

२. धायि P. धायि D. M. धृतमित्यर्थः Mah. धीयते। फलभूतोऽश्व आगतः स च मया धृत इत्यर्थः Sy. निहितम् U. लुङोऽयं दधातिर्निपूर्वार्थो द्रष्टव्यः। न्यधायि निहितम् SKN. मनसा ध्यातवानित्यर्थः Dur. ३. ०वोढृतिभिः M.

४. अयं वीतं पुष्टं पृष्ठं यस्य। यद्वा वीतं कामितं पृष्ठं यस्य, अश्वपृष्ठमारोहणाय सर्वे कामयन्ते, स वीतपृष्ठोऽश्वः Mah. किमर्थम्?...साधुपोषणेन प्राप्तपश्चाद्भागः कान्तपृष्ठो वा। अत्यन्तं तृप्त इत्यर्थः Sy. साधुपोषणेन प्राप्तपश्चाद्भागः कामितपृष्ठो वा। अश्वपृष्ठं हि सर्व एवारोढुं कामयन्ति (न्ते), यत एवमतो ब्रवीमि U. वीतेः कान्तिकर्मणः, वीतं कान्तं पृष्ठं यस्य सः। अश्वमेधसम्भूतोऽयमश्व इत्यर्थः SKN.

५. आशा मनोरथान्पूरयितुमिति शेषः Mah. तादृशोऽयं देवानामाशाः पूरयितुम् Sy. शंसनानि साधु साध्वयं पशुरागच्छेदित्येवमादीनि U. तदर्थं देवानां यागाङ्गभूतानां या, आशा प्रार्थना हविर्भूतमिमश्वं भक्षयेत्येवंरूपा SKN.

६. उपगच्छतु। उपसर्गेण क्रियावृत्तिः Mah. उपगच्छतु Sy. उपागतः U. उपेत्युपसर्गश्रुतेर्योग्यक्रियाऽध्याहारः, उपागच्छतु SKN. ७. अवग० M. उपगच्छन्तं is suggested for अपगच्छन्तं

८. यागार्थमागतमेनम् Sy.

९. मन्त्रदर्शिन ऋत्विजः Mah. विप्रा मेधाविन ऋत्विजः, ऋषयोऽतीन्द्रियद्रष्टारोऽन्ये वा विप्रा ऋषयश्च Sy. मेधाविनो विप्राः Dur. १०. अनुमोदन्तां तुष्यन्तु Mah. अनुमोदन्ताम्। सम्यक् कृतमिति परितुष्यन्तु Sy. अनुमोदन्ति (न्ते) U. अनुशब्दो मदन्तीत्येतेन सम्बध्यते...मदिरत्र सामर्थ्यान्मन्यतेरर्थे। लोडर्थे च लट्। अनुमन्यन्ताम् SKN.

११. आशास्यमानानाम् Sy.

१२. पोषणं पुष्टम्। भावे निष्ठा। निमित्ते सप्तमी। देवपुष्टिनिमित्तम् Mah. पोषणाय Sy., U. पोषणं पुष्टं, भावे निष्ठा, निमित्तार्थे च सप्तमी पोषणनिमित्ते पुष्ट्यर्थमित्यर्थः SKN. पोषणाय Dur.

१३. कृतवन्तः। संहितायां दीर्घः Mah. कुर्मः Sy. कृतवन्तः U., SKN.

१४. शोभनो बन्धुर्बन्धनं यस्य तं यमश्वं बद्धवन्तः Mah. शोभनबन्धनमश्वम् Sy. शोभनबन्धनं शोभनार्थवादं वा U. सुबन्धनं यूपे रशनया सम्यग् बद्धमित्यर्थः SKN. शोभनयूपबन्धनम् Dur. N. 6. 22; SKN. II. 469., This stanza=YV. 25. 30.;

१५. वेगवतः Mah. गमनवतोऽश्वस्य Sy. वेजनवतः U. १६. पादबन्धनरज्जुः Mah. सम्यगवच्छेदकं बन्धनं पादबन्धनं दामास्ति Sy. सम्यगवच्छेदकं पादबन्धनम् U. १७. दम P. ग्रीवाबद्धा रज्जुः Mah., Sy. ग्रीवाबन्धनरज्जुः U

भवा। रशना। अस्य। नियमनी रज्जुः। यत्। च। अस्य। आस्ये। निक्षिप्तम्। तृणम्। सर्वाण्येवञ्जातीयकानि। तवाश्व! देवेषु। सन्तु।

यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति।
यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥९॥

यवदवस्य। यत्। अस्य। मांसम्। पिपीलिका। भक्षितवती। यत्। वाऽस्य। स्वरूस्व-धित्योः। लिप्तम्। भवति। यच्च। शमितुः। हस्तनखेषु।

---

१. भावा P. शीर्षे भवा शीर्षण्या शिरोबद्धा ...रज्जुः Mah. अस्य ... शिरसि बद्धा Sy. शिरसि बद्धा U.

२. कटिस्था रशना रज्जुः, अस्यान्यापि या रज्जुः Mah. खलीनरज्जुः Sy.

३. अश्वस्य Sy.

४. ०मिनी P. नियोजनीया रज्जुः U.

५. यात् P. या D.

६. Omitted by M. वाऽश्वा। अस्या-श्वस्य च प्रसिद्धम् Mah. अश्वस्य। ...चशब्दो ह्यर्थे स च प्रसिद्धयर्थः Sy. अश्वस्य यद्वा यः पादपूरणे U.

७. मुखे Mah., Sy., U. ८. प्रहृतं प्रक्षि-प्तम् Mah., Sy. प्रहुतं निक्षिप्तम् U.

९. सर्वाणि ता तानि Mah. तानि सर्वाणि Sy. सर्वाणि तानि U. १०. तव सम्ब-न्धीनि Sy. ११. देवोपयोगीनि Mah. देवेषु मध्ये Sy. देवेष्वपि प्रजापतये U.

१२. भवन्तु देवत्वं प्राप्नुवन्तु वा। अत्रोप-युक्तानां सर्वेषां देवत्वमाशास्यते Mah. भवन्तु, देवत्वं प्राप्नुवन्तु वा। वचन-व्यत्ययः। अत्रोपयुक्तानां सर्वेषां देवत्वं किलाश्वस्य तत्प्राप्तिर्नाशासनीया Sy. अस्तु। सन्त्विति प्राप्ते वचनव्यत्ययः U.

१३. VM. ignores च। ता। अपि This stanza=YV. 25. 31.

१४. यदङ्गम् Sy. १५. अ(श्व)स्य M. अश्वस्य Mah. तदवयवभूतस्य Sy. अश्वाङ्गभूतस्य U. १६. क्रविः।... क्रविष इति कर्मणि षष्ठी Mah. आम-मांसस्य।...यद्वा कर्मणि षष्ठी। अश्वस्य यन्मांसम् Sy. मांसस्याङ्गम् U. 'क्रव्यं विकृत्ताज्जायते' इति नैरुक्ताः। N. 6.11.

१७. मक्षिका Mah., Sy., U.

१८. अभक्षयत् Sy. भक्षितवती U.

१९. यन्मांसम् Mah. २०. अथवा Mah., Sy. २१. पश्वञ्जनकाले Mah. 'स्वरुणा पशुमनक्ति' (Cf. RV. IV. .6. 3.) इति श्रुतेः Sy.

२२. स्वरुः स्वधितयः यत् M. यत्स्वधितौ वासे लिप्तमस्ति। छेदनकालेऽवदानकाले च Mah., Sy. छेदनकाले U.

२३. लग्नमस्ति U.

२४. यच्च शमितुर्हस्तयोर्लिप्तम् Mah., Sy. यच्च हस्तयोश्शमितृ रिप्तम् U.

२५. यच्च शमितुर्नखेषु लिप्तं हे अश्व, सर्वा ता सर्वाणि तान्यपि देवेषु... भवन्तु। वचनव्यत्ययः। सर्वं त्वदीयं देवभोग्यं भवतु Mah. विशसनकाले... नखेषु लिप्तम्...तानि सर्वाणि हे अश्व! ते तव सम्बन्धीनि देवेष्वस्तु देवेषु सन्तो-षार्थाय भवन्तु Sy.

२६. VM. ignores यत्। सर्वा। ता। ते। अपि। देवेषु। अस्तु This stanza=YV. 25. 32.

यदूवंध्यमुदरंस्यापुवाति य आमस्यं क्रविषो गन्धो अस्ति ।
सुकृता तच्छंमितारः कृण्वन्तूत मेधं शृतपाकं पचन्तु ॥१०॥

यदूवध्यम्[1]। यत्। ऊवध्यम्[2]। उदरात्[3]। अपगच्छति[4]। यच्च। आमस्य[5]। मांसस्य। गन्धः[6]। भवति[7] निर्गतः सह मांसशकलैः। तानि[8] सर्वाणि। सुसंस्कृतानि[9]। शमितारः[10]। कृण्वन्तु[11]। अपि च। अश्वं च[12]। यथा सुष्ठु शृतं[13] भवति तथा। पचन्तु[14]।

यत्ते गात्रादुग्निना पुच्यमानादुभि शूलं निहंतस्यावुधावंति ।
मा तद्भूम्यामा श्रिषुन्मा तृणेषु देवेभ्युस्तदुशद्भ्यो रातमंस्तु ॥११॥

यत्ते गात्रात्। यत्[15]। तव। गात्रात्[16]। अग्निना। पच्यमानात्[17]। सञ्ज्ञप्तस्य[18] मांसम्।

---

१. ०ध्य P.

२. ईषज्जीर्णतृणपुरीषं यत्...भक्षितमपक्वमामाशयस्थमूवध्यमुच्यते Mah. ईषज्जीर्णं तृणपुरीषम् Sy. भक्षितमपरिणतमामाशयस्थमूवध्यमुच्यते U.

३. उदकरात् P. उदरस्य Mah. उदरस्य सम्बन्धि Sy. उदरस्यापूतं पुरुषभूतम् U.

४. गन्धायते U.

५. अपक्वस्य Mah., Sy., U.

६. लेशः Mah., Sy. गन्धः U.

७. पाकस्य समये यत्किञ्चिदूवध्यमपक्वस्य च लेशोऽस्ति, आमगन्धोऽस्ति Sy. विद्यते U.

८. तत्सर्वम् Mah., Sy., U.

९. सुकृतं सुसंस्कृतम् Mah. सुकृतमुक्तदोषरहितम् Sy. दोषरहितानि U.

१०. विशसितारः Mah. विशसनकर्तारः Sy., U.

११. कुर्वन्तु Mah., Sy., U.

१२. अश्वं च is omitted by P. D. मेध्यमश्वम् Mah. मेध्यं यज्ञार्हं पश्ववयवम् Sy. मेध्यं यज्ञार्हम् U.

१३. शृतो देवयोग्यो जातः पाको यस्मिन्कर्मणि तथा पचन्तु Mah. देवयोग्यपाकोपेतं यथा भवति तथा Sy. देवयोग्यपाकम् U.

१४. अतिपक्वमीषत्पक्वं च मा कुर्वन्त्वित्यर्थः Mah. पचन्तु। पितृमनुष्यादियोग्यमतिपक्वमीषत्पक्वं च मा कुर्वन्त्वित्यर्थः Sy. पचन्तु U.
This stanza=YV. 25. 33.

१५. यत्र M. शूले सशेषश्रपणं तदभिवदत्ययं मन्त्रः U.

१६. शरीरात् Mah. अवयवात् U.

१७. ना० D.

१८. निःशेषेण हतस्य Mah., Sy., U.

हृदयशूलम्[1]। अभ्यवधावति[2] तत्र यल्लिप्तं भवति। मा। तद्धवयशूलेन[3]। भूम्याम्[4]। तृणेषु[5] वा। श्लिष्टं भवतु। तदपि[6]। देवेभ्यः। कामयमानेभ्यः[7]। प्रत्तम्[8]। अस्तु[9]।

**ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति ।**
**ये चार्वतो मांसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु ॥१२॥**

ये वाजिनम्। ये[10]। अश्वम्[11]। परितः पश्यन्ति[12]। किं पक्व उत नेति। ये च[13]। एनम्[14]। आहुः[15]। सुरभिरयं[16] पक्वः[17]। निर्हर[18]। इति[19]। ये[20]। च। अश्वस्य[21]। देवेभ्यः प्रदीयमानं मांसम्। रक्षणार्थं[22]

---

१. यवङ्गम् Mah. तव यदङ्गं रसरूपम् Sy. यदङ्गरसरूपम् ... मांसादुत्कृष्टम् U.

२. ऊष्मा रसो वाऽवधावति, अधस्ताद् गच्छति ... शूलेन पाके क्रियमाणे यन्निर्गच्छति Mah. शूलमभिलक्ष्य ... निर्गच्छति Sy.
ऊष्मरूपं रसो वाऽवधावति गच्छति तथा ...शूलमभिलक्ष्य ... धावति गच्छति U.

३. तन्निर्गतमूष्माङ्गाविकम् Mah. तवाङ्गम् Sy., U.

४. भूम्याश्लिष्टं मा भूत् Mah. भूम्याम् ... आश्लिष्टं मा भूत् ... पाकसमये Sy. मा श्लिषत् ... भूम्याम् U.

५. विशसनसमये तृणलग्नं मास्तु Mah. विशसनसमये दर्भेषु माऽवगच्छतु Sy. मा च तृणेषु U.

६. तत्पतितं तृणलग्नं सर्वम् Mah. तर्हि तत्पतितं कुत्र गच्छतु ? इति चेदुच्यते तत्तावृशम् Sy.

७. कामयजमा० P. कीदृशेभ्यो देवेभ्यः ? उशन्ति कामयन्ते त उशन्तस्तेभ्यो हविःकामयमानेभ्यः 'वश कान्तौ' Mah. कृत्स्नं हविः कामयमानेभ्यो देवेभ्यः Sy. देवेभ्यस्तदुशद्भ्यः U.

८. दत्तमस्तु Mah., Sy. दानमस्तु U.

९. VM. ignores अा। मा
This stanza=YV. 25. 34.

१०. ये जनाः Mah., U.

११. पक्वं वाजिनमश्वम् Mah. अश्वावयवम् Sy.
पक्वं सन्तम् U.

१२. ०न्तीति M. अयं पक्व इति जानन्ति Mah. परितः पावनवृद्ध्यपेक्षन्ते Sy.

१३. ईमित्यव्ययं चार्थे Mah.

१४. अश्वम् U.

१५. एवं कथयन्ति Mah.

१६. किम् ? सुगन्धः Mah.
शोभनगन्धः Sy.
किमाहुः ? सुरभिरयमश्वः U.

१७. पाको जातः Mah.

१८. अतो निर्हर, अग्नेः सकाशादुत्तारयेति Mah. किञ्चिदस्मभ्यं देहीत्याहुः। यद्वा। निश्शेषेण देवेभ्यो हरेत्याहुः। यतः सुरभिरतो देवयोग्यमिति Sy. किञ्चिदस्मभ्यं देहीति U.

१९. इतिशब्दः प्रकारवचनः U.

२०. जनाः Mah. नराः Sy.

२१. अस्य ... अश्वस्य Sy. अश्वस्य सम्बन्धिनीम् U.

२२. ०सर० M. हुतशिष्टमांसयाचनाम् Mah., Sy. हुतशिष्टमांसयाञ्चाम् (च्ञाम्) U.

परिवसन्ति[1]। तेषां[2] सर्वेषाम्। उद्यमनम्[3]। अस्माकमेव[4]। फलप्रदं[5] भवतु।[6]

**यन्नीक्षणं मांस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि ।**
**ऊष्मण्यापिधाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम् ॥१३॥**

यन्नीक्षणम्। श्रुतं मांसमुत नेति, येन। मांसपचनीम्[7]। उखाम्[8]। अवेक्षते[9] दर्व्यादिना[10]। येषु[11]। पात्रेषु[12]। यूष्णः[13]। आभिमुख्येन[14] सेचनं भवति। यानि च तेषां पचनानाम्[15]ऊष्मनिरोधार्थानि[16]।

---

१. कुर्वते Mah. काङ्क्षन्ते Sy. काङ्क्षते (न्ते) U. २. अपिच तेषां पाकद्रष्ट्रादिजनानाम् Mah. उक्तविधानाम् Sy. तेषां सम्बन्धिनी U.
३. उद्यमः Mah. अभित उद्यमनम् Sy. या, अभिगूर्तिः सा U.
४. अस्मान् Mah., Sy., U.
५. प्रीणातु। यद्वाऽयं मन्त्रो देवपरो व्याख्येयः। ये देवाः पक्वं वाजिनं परिपश्यन्ति कदा होष्यतीति। ये च विलम्बं दृष्ट्वा सुरभिः पाको जातोऽस्मभ्यं निर्हर देहीत्याहुः। ये चार्वतो मांसभिक्षामुपासते मांसं याचन्ते तेषामभिगूर्तिः सङ्कल्पोऽस्मान्प्रीणातु। सफलो भवत्वित्यर्थः Mah. व्याप्नोतु। यथाऽस्माभिरश्वे, उपालब्ध एवं स्पृहयन्ति तथा यज्ञो निर्वाहयत्वित्यर्थः। यद्वा मन्त्रो देवपरो व्याख्येयः। ये देवा वाजिनं पक्वं परिपश्यन्ति, कदा होष्यतीति। विलम्बं दृष्ट्वा ये च सुरभिरीमेनं निर्हर निश्शेषेणास्मभ्यं देहीत्याहुः। ये चार्वतोऽश्वस्य मांसभिक्षामुपासते तेषामभिगूर्तिर्न इन्वतु। तेषामुद्यमः सफलो भवत्वित्यर्थः Sy. व्याप्नोतु। यद्वा देवपरोऽयं मन्त्रो व्याख्येयः। ये देवा वाजिनं परिपश्यन्ति पक्वं कदा होष्यतीति। विलम्बं दृष्ट्वा ये च सुरभिरयमश्वोत (श्वोऽतः) निर्हर निःशेषेणास्मभ्यं देहीत्याहुः। ये चार्वन्तो (र्वतो) मांसभिक्षामुपासते लिप्सते, (न्ते) उतो तेषामभिगूर्तिं (र्तिः) न इन्वतु। वयं तु देवानामनन्यभूता इत्यभिप्रायः U.
६. VM. ignores उतो
This stanza=YV. 25. 35.
७. कीदृश्या उखायाः? मांस्पचन्या मांसं पच्यते यस्यां सा मांस्पचनी तस्या मांसपाकाधिकरणभूतायाः Mah. मांसपचन्याः Sy. मांस्पचन्याः 'मांसस्य पचि युड्घञोः' इत्यकारलोपः U.
८. ०खं M. उखायाः स्थाल्याः Mah., Sy.
९. क्षिते P. नितरामीक्षणं पाकपरीक्षार्थं दर्शनम् Mah. पाकपरीक्षासाधनम् Sy. यद् नीक्षणं नितरामीक्ष्यते श्रृतादच तव सम्बन्धिनोऽर्था इति ... तन्नीक्षणम् U.
१०. काष्ठम् Sy. येन दर्व्यादिना (दर्व्यादिना)U. ११. यानि Mah., Sy., U.
१२. आसेचनसाधनानि ... पात्राणि Mah., Sy. १३. यूष्णं P.D. पक्वरसस्य Mah. रसस्य क्वथितस्य Sy. वसायाः U. १४. आसिच्यन्ते येषु तानि Mah. आसिच्यते येष्वित्यासेचनानिU.
१५. पचमानानाम् M. चरूणां मांसपूर्णपात्राणाम् Mah. पात्राणां मांसपूर्णानाम् Sy. चरूणां स्थालीनाम् U.
१६. ०रो (घा) र्था० M. ऊष्माणं धारयन्ति तान्यूष्मण्यानि। ... आच्छादन ऊष्मा बहिर्न यातीत्यर्थः Mah. ऊष्मनिवारणार्हाणि Sy. यानि चोष्मण्यानि U

अपिधा[1]नानि यानि[2] च[3]। अङ्गानाम्। लक्ष[4]णानि यान्यास्या[5]दयो विशस[6]नसाधनीभूतास्त इमे[7] सर्वा[8]। अश्वम्[9]। अलङ्कुर्वन्ति[10]।

**नि॒क्रम॑णं नि॒षद॑नं वि॒वर्त॑नं॒ यच्च॒ पड्वी॑श॒मर्व॑तः ।**
**यच्च॑ प॒पौ यच्च॑ घा॒सिं ज॒घास॒ सर्वा॒ ता ते॒ अपि॑ दे॒वेष्व॑स्तु ॥१४॥**

निक्रमणम्। निक्रमणा[11]दयः क्रियाविशेषाः। विधि[12]र्विशेषणकर्मा, अपर्टि[13]र्गतिकर्मा, पादेन[14] कृतो[15] विक्षेपः पड्वीशम्[16]। यत्। चोद[17]कम्। पपौ[18]। यत्। च। तृणम्[19]।

---

१. आच्छादनपात्राणि Mah. अपिधानानि तत्साधनानि Sy. पिधानानि U.

२. Omitted by P. ३. वा M.

४. चिह्नसाधनानि हृदयाद्यवयवज्ञापकानि वेतसमयानि Mah. हृदयाद्यवयवाङ्कनसाधना वेतसशाखाः Sy. अङ्गोपलक्षकाः। शरीरवचनोऽङ्गशब्दः U.

५. स्वधित्यादयः Mah., Sy. वेतसमय्यः U.

६. विशसनकरणभूताः Mah. अवदानसाधनाः Sy. अश्वविशसनाधिकरणभूताः U. ७. एते पदार्थाः Mah.

८. सर्वम् P. Omitted by M. तानि सर्वाणि U.

९. Omitted by P. एतम्...अश्वावयवम् Sy.

१०. अलङ्कुर्वन्ति स्वव्यापारेण साधयन्तीत्यर्थः Mah. परितो भूषयन्ति स्वस्वव्यापारेण साधयन्तीत्यर्थः। 'भूष अलङ्कारे' भौवादिकः, अलङ्कुर्वन्ति परिरक्षन्ति वाक्यम् U. This stanza=YV. 25. 36.

११. नितरां क्रमते यत्र तन्निष्क्रमणस्थानम्। निषदनं नितरां सीदत्यस्मिन्निति निषदनमुपवेशनस्थानम्। विवर्तनं, विविधं वर्तते यत्र तदितस्ततो लुण्ठनस्थानम्। सर्वत्राधिकरणे ल्युट्।...क्रियापरा वा निक्रमणादयः शब्दाः। आलम्भनसमये यान्यश्वस्य निक्रमणादीनि चेष्टितानि Mah. नितरां क्रमते यत्र तन्निक्रमणं स्थानम्। नितरां सीदत्यत्रेति निषदनम्। विवर्तनं विविधवर्तनमितस्ततो लुण्ठनं यत्र तत्।...अत्र सर्वत्र देवार्थस्याश्वस्य रोमादीनामपि निरर्थकत्वाभावाय तत्स्थानमपि स्वीक्रियते। यद्वा क्रियापरा वगन्तव्याः। आलम्भनसमये निग्रहेण या निक्रमणादयश्चेष्टाः सन्ति ता इत्यर्थः Sy. निक्रमणं गमनं वसतिस्थानात्। निषदनं तत्रैव स्थितिः। विवर्तनं भ्रमणं, यान्येतानि चेष्टितानि U.

१२. विधिः omitted by M.

१३. ०वभिर्ग० M.

१४. वादेन M. १५. कृते P.

१६. पड्वीशं P. पच्वीशं D. षड्वीशं M. यच्चार्वतोऽश्वस्य पड्वीशं पदेषु विशति पड्वीशं पादबन्धनम् Mah. ...यद्वा बन्धनं पद्, तद्वान्प्रदेशः Sy. पादेषु विशतीति पड्विशं पादबन्धनमुच्यतेऽर्वतोऽश्वस्य U.

१७. जलम् Mah. उदकम् Sy., U.

१८. पीतवान् Mah. अपिबत् Sy. पीतवान् U. १९. अदनीयं तृणादिकम् Mah., Sy. यवसम् U.

भक्षितवान्[1][2][3]।

**मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः ।**
**इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्यश्वम् ॥१५॥**

मा त्वाग्निः। धूमगन्धः[4]। अग्निः। पच्यमानं त्वा[5]। मा। शब्दं[6] कारयेत्। मा च। उखा[7]। दीप्ता[8]। क्षरन्ती[9]। विविक्ता[10] भिन्ना भवतु याज्यया। इष्टं[11] देवैः। प्रार्थितम्[12]। अभिगू-

---

१. भक्षितवान् Mah. अभक्षयत् Sy. भक्षितवान् U.

२. हे अश्व ता तानि सर्वाणि ते तव निक्रमणादीनि देवेष्वस्तु सन्तु। देवार्थस्याश्वस्य रोमादीनामपि निरर्थकत्वं माऽस्त्वित्यर्थः Mah. . . . देवेषु व्याप्नोतु। तान्यपि निरर्थकानि मा भूवन्नित्यर्थः Sy.
सर्वाणि तानि निक्रमणादीनि ते तव हे अश्व, अपि देवेष्वपि प्रजापतयेऽस्तु सन्तु। तान्यपि निरर्थकानि मा भूवन्नित्याशयः U.

३. VM. ignores यत्। च। अर्वतः। सर्वा। ता। ते। अपि। देवेषु। अस्तु This stanza=YV.25.38.

४. कीदृशोऽग्निः? . . . धूमस्य गन्धो लेशो यत्र सोऽल्पधूमवानित्यर्थः Mah. धूमेन व्याप्तः Sy. कथम्भूतः? . . . अल्पधूमावरणः। मांसं हि पचन्नग्निर्बहुलमप्यल्पधूमावरणो भवति U.

५. हे अश्व पच्यमानाश्वावयव . . . त्वाम् Mah. त्वाम् Sy.

६. ध्वनिं मा कारयतु। ध्वनौ सति भाण्डभङ्गः स्यात्। बहुमानं मांसं सिमसिमेति शब्दं करोति तन्मास्तु Mah. मा ध्वनयत्। धूमं दृष्ट्वा शब्दं मा कुर्वित्यर्थः। अश्वस्य शब्दने प्रायश्चित्तविधानात्। यद्वा हे पच्यमानाश्वावयव त्वा त्वां धूमगन्धिरग्निर्मा ध्वनयीत्। ध्वनौ सति भाण्डभङ्गः स्यात् Sy. ध्वनिः शब्दकर्मा, शब्दं कारयेत् . . . तच्च बह्यमानं सिमसिमाशब्दं करोत्यत एवमुच्यते U.

७. उषा P. स्थाली Mah., Sy.

८. वि० P. अतितापेन दीप्यमाना Mah. अत्यन्ताग्निसंयोगेन दीप्ता Sy. सन्दीपिताऽत्यन्ताग्निसंयोगेन U.

९. रसन्ति P. कीदृश्युखा? जघ्रिर्जिघ्रति गन्धं गृह्णातीति, . . . अधिष्ठात्र्या देवताया घ्राणम् Mah. जिघ्रन्ती तापेन Sy. जघ्रिर्गन्धगृहणशीलोखा। नन्वचेतनोखा कथं गन्धं जिघ्रति? उच्यते। अधिष्ठात्र्योऽत्र देवताः सन्तीति पुरस्तात्प्रतिपादितं तच्चात्र पुनः स्मार्यते U.

१०. विभक्ता M. मा चलतु 'ओविजी भयचलनयोः' Mah. अभितो मा वीचलत्तापातिशयेन मा नीनशदित्यर्थः Sy. अभिविनक्तु, अभिनष्टा विदीर्येत वा। उद्भूतया बृद्धा मांसरसं तदिहोच्यते U.

११. ०व्यषट्टं P. इष्टं प्रयाजैः Mah. होतुमिष्टम् Sy. योगेन सङ्गतीकृतम् U.

१२. आप्रीभिः पर्यग्निकृतम् Mah. होमायानीतम् Sy. कामितम् U.

१३. ये यजामह इत्यागूर्योक्तम् Mah. आभिमुख्येन प्रदानायोद्यतम्। यद्वा। इष्टं प्रयाजैराप्रीतं वीतं पर्यग्निकृतमभिगूर्तं ये यजामह इत्यागूर्योक्तम् Sy. अभ्युद्यतम् U.

तम्। वषट्कृतमुच्चैर्[1]वषट्कृतम्[2]। तमिमम्[3]। देवाः। प्रतिगृह्णन्ति[4]। अश्वम्।

**यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै ।**
**संदानमर्वन्तं पड्बीशं प्रिया देवेष्वा यामयन्ति ॥१६॥**

यदश्वाय। "अश्वाय निहन्यमानायोपास्यन्ति[5] बर्हिश्च शतवलं च कृत्तिं[6] चाधिवासं च कशिपु[7] च" इति कल्पः। यत्। अश्वाय निहन्यमानाय[8]। कृत्त्याख्यं वासः[9]। अधीवासं[10] च। उपस्तृणन्ति[11]। यानि चालङ्कारार्थानि। अस्मै[12]। हिरण्यानि[13] निहितानि। तान्येतानि[14] प्रियाणि[15]। संदितम्[16]। अश्वम्[17]। पादेन[18] विक्षिपन्तम्। देवेषु। प्रापयन्ति[19][20]।

---

१. ०ड्कृ० P.D.

२. ०ड्कृ० P.D. वषट्कारेण संस्कृतम् Mah. वषट्कारेण देवसंस्कृतम् Sy. वषट्कृतं चादानकाले। यद्वा। इष्टं प्रयाजैर्वातिमाप्रीभिः पर्यग्निकृतमभिगूर्तं ये यजामह इत्यागूर्योक्तं, वषट्कृतं वषट्कारेण संस्कृतम् U.

३. तमेवंविधमश्वम् Mah. एवम्भूतं तम् Sy. तादृशम् U.

४. प्रतिगृह्णन्तु Mah. प्रतिगृह्णन्ति Sy., U.
This stanza=YV. 25. 37

५. ०माना ये (य) पा० M.

६. कृतं P. कृन्तं D.

७. कशीपु M.

८. सञ्ज्ञप्यमानाय Sy., U.

९. वस्त्रम् Mah.

१०. ०धि० D. अपवासं P. आच्छादकम् Mah. उपर्याच्छादनयोग्यम् Sy., U.

११. सर्वत आच्छादयन्ति 'स्तृञ् आच्छादने' Sy.

१२. अश्वाय Mah., Sy., U.

१३. सौवर्णशकलानि Mah. सौवर्णराजतकांस्यानि कल्पयन्ति Sy.

१४. वस्तूनि Mah.

१५. कीदृशानि? ... प्रियाणि देवानामिष्टानि Mah. देवानां प्रियतराणि चात्वाले बद्ध्वा स्थापितानि Sy.

१६. सदि० P. शिरोबन्धनम् Mah., Sy. सन्दीयतेऽनेनेति सन्दानं शिरोबन्धनम् U.

१७. षष्ठ्यर्थे द्वितीया। अर्वतोऽश्वस्य Mah. Sy. अर्वत इति विभक्तिव्यत्ययः। अश्वायेति सामानाधिकरण्यात् U.

१८. पादबन्धनम् Mah. पादेषु प्रविष्टं पादबन्धनम् Sy. पादवासः U.

१९. आगमयन्ति। ऋत्विजोऽश्वस्यैतानि देवेष्वेव प्रापयन्तीत्यर्थः Mah. प्रापयन्ति Sy. गमयन्ति U.

२०. VM. ignores आ
This stanza=YV. 25.39.

यत्ते॑ सा॒दे मह॑सा॒ शूकृ॑तस्य॒ पार्ष्ण्या॑ वा॒ कश॑या वा तु॒तोद॑ ।
स्रु॒चेव॒ ता ह॒विषो॑ अध्व॒रेषु॒ सर्वा॒ ता ते॒ ब्रह्म॑णा सूदयामि ॥१७॥

यत्ते सादे। यत्[1]। तव। अधिरोहणे[2]। बलेन[3]। शीघ्रगमनार्थं[4] मुखनासिकाभ्यां[5] शूकृतस्य[6]। पार्ष्ण्या[7]। वा। कशया। वा। अश्वारोह[8]स्तुतोद[9]। तादृशानि[10]। तव। सर्वाणि[11]। यज्ञेषु[12]। स्रुचा[13]। हवींषि[14]। इव। मन्त्रेण[15]। देवेषु प्रेरयामि[16][17]।

चतु॑स्त्रिंशद्वा॒जिनो॑ दे॒वब॑न्धो॒र्वङ्क्री॒रश्व॑स्य॒ स्वधि॑तिः॒ समे॑ति ।
अच्छि॑द्रा॒ गात्रा॑ व॒युना॑ कृणोत॒ परु॑ष्परुरनु॒घुष्या॒ वि श॑स्त ॥१८॥

चतुस्त्रिंशत्। बलवतः[18]। देवज्ञातेः[19]। पशून्[20]। अश्वस्य। स्वधितिः[21]। विशसनार्थं[22] सङ्ग-

---

१. यस्मात् Sy. २. गमने ... सदनं सादः, घञ् Mah. सदने गमने निमित्तभूते सति Sy. सीदन्त्यश्ववारा अस्मिन्निति सादोऽश्वपृष्ठं तस्मिन्त्सादे U.
३. बले D. महस्त्वेनान्वितः सन् U.
४. ०र्थं P. ५. मुखसि० P. D.
६. शूकृ० P. D. शूकृतमस्यास्ति शूकृतस्तस्य। शब्दानुकरणमेतत्। शूकारं कुर्वतः Mah. शूत्कारं कुर्वतः Sy., U.
७. पादाधोभागेन Mah.
८. अश्ववारः Mah. अवस्थितोऽश्ववारःU.
९. पीडितवान्। 'तुद् व्यथने' Mah. व्यथयति Sy., U.
१०. तानि Mah., Sy., U.
११. पाष्णिकशाताडनानि Mah.
१२. यागेषु Sy. १३. यथा स्रुचा जुह्वा सूदयामि तद्वत्। एकं तावद पादपूरणाय Mah. स्रुचा यथा सूदयन्ति तद्वत् Sy. यथा स्रुचा ... जुह्वति U.
१४. इव is omitted by P. हविराज्यादिकम् Mah., Sy. हविरिति विभक्तिव्यत्ययः U. १५. त्रयीलक्षणेन U.
१६. 'सूद क्षरणे' चुरादिः, क्षारयामि। यज्ञ आहुतित्वेन कल्पयामीत्यर्थः Mah. क्षरामि। आहुतित्वेन कल्पयामीत्यर्थः Sy. सूदयामि क्षारयामि, आहुतित्वेन कल्पयामीत्यर्थः U.
१७. VM. ignores ता
This stanza=YV. 25.40
१८. कीदृशस्याश्वस्य ? ... वजति गच्छतीति वाजी तस्य, वेगवत इत्यर्थः Mah. अश्वस्य Sy. वेजनवतोऽश्वस्य U.
१९. ०वयज्ञा० M. देवानां बन्धुः प्रियस्तस्य। देवा बन्धवो यस्येति वा। भावी निर्देशः Mah. देवानां प्रियस्य Sy.... देवा बन्धवोऽस्येति वा भावी देवबन्धुः। देवो ह्यसौ भविष्यति। एवम्भूतस्याश्वस्य U.
२०. चतुस्त्रिंशत्सङ्ख्याकान्युभयपार्श्वास्थीनि ... अश्वस्य चतुस्त्रिंशद्वङ्क्योऽजादीनां षड्विंशतिः Mah. एतत्सङ्ख्यान्युभयपार्श्वास्थीनि, ... इतरेषामजादीनां षड्विंशतिरेव। 'षड्विंशतिरस्य वङ्क्रयः' (AB. 2.6.) इति प्रैषात् Sy. वङ्क्रय उभयपार्श्वस्यास्थीनि U. पार्श्वास्थीनि is suggested for पशून्
२१. पशुच्छेदनसाधनोऽसिः Mah. छेदनसाधनोऽसिः Sy., U.
२२. ०ति वि० M. छेदनाय Mah., Sy.

च्छेते यूयम्। अच्छिद्राणि। गात्राणि। मार्गेण। कुरुत। सर्वाण्येव शरीराण्यप्रमादार्थं समीपस्थानाम्। विकर्ष्य। विशस्त।

एकुस्त्वष्टुरश्वंस्या विशुस्ता द्वा युन्तारा भवतुस्तथं ऋतुः ।
या ते गात्राणामृतुथा कृणोमि ताता पिण्डानां प्र जुहोम्युग्नौ ॥१९॥

एकस्त्वष्टः। दीप्तस्य। अश्वस्य। प्रजापतिरेकः। विशस्ता भवति। "कस्त्वा छ्यति कस्त्वा विशास्ति" इति मन्त्रः। द्वौ च देवेषु। यन्तारौ। भवतस्तूपरो गोमृग इति। तथा।

१. सम्यगागच्छति Mah. सम्यगच्छति Sy. एकमकृत्वा सङ्गच्छति (ते) यतोऽतो ब्रवीमि U.
२. अतो हे ऋत्विजः Mah. हे विशसनस्य कर्तारः Sy. हे शमितारः U.
३. छिद्रहीनानि । ... स्वधितिना छिन्नानि सच्छिद्राणि वर्तन्ते तान्यच्छिद्राणि कुरुत Mah. अच्छिद्राणि यथा भवन्ति तथा ... हृदयजिह्वावक्षःप्रभृतीनि प्रज्ञाय मध्ये छिन्नानि मा कुरुतेत्यर्थः Sy. अच्छिद्राण्यनवखण्डितानि U.
४. शरीरावयवान् Sy.
५. वयुनेन ज्ञानेन Mah. वयुनानि प्रज्ञानानि। वयुनमिति प्रज्ञानाम। 'वयुनमभिख्या' (Ngh.3.9.) इति तन्नामसूक्तत्वात् Sy. प्रज्ञानेन U.
६. 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः । ... प्रतिपर्व प्रत्यवयवम् Mah. तदर्थम् ... प्रतिपर्वं प्रतिहृदयाद्यवयवम् Sy. पर्वपर्व हृदयाद्यङ्गम् U.
७. प्रक० M. इदमिति नाम्ना संशब्द ... 'घुषिर् शब्दे' Mah. इदमवद्यमिति संशब्दैव Sy.
इदमिदमिति संशब्द्य U.
८. ०स्तः P.D.M. यूयं विशस्त विशसनं छेदं कुरुत Mah. विशसनं कुरुत ... 'गात्रं गात्रमस्यानूनं कृणुतात्' (AB. 2.6.) इति प्रैषात् Sy. विशसनं कुरुत। उत्तरार्धस्यैव मन्त्ररूपसम्बन्धः U.
९. VM. ignores चतुस्त्रिंशत्
This stanza=YV. 25.41.
१०. दीप्तस्य Mah. अस्य दीप्तस्य Sy. आदित्यादुत्पन्नस्याश्वस्य । तदुक्तम्, 'सूरादश्वं वसवो निरतष्ट' (RV. I. 163.2.) इति U.
११. ऋतुः ... ऋतूपलक्षितः कालात्मा प्रजापतिरेवाश्वस्य शस्तेत्यर्थः Mah. स कः? ऋतुः। एतदुपलक्षितः कालात्मा, तस्यैव सर्वेषामपि पर्यवसितृत्वात् । यद्वा । ऋतुर्निश्शङ्कविशसनाय गन्ता शमिता Sy. संवत्सरः। तदुक्तम् 'संवत्सरस्य तेजसेति' U.
१२. एक एव Sy.
१३. विशसनकर्ता Mah. विशसनस्य कर्ता Sy. विशसिता U.
१४. ०श्यति M. १५. TS. 5.2.12.1.
१६. द्यावापृथिव्यभिमानिदेवौ Mah. अहोरात्रे देवौ द्यावापृथिव्यौ वा ऋत्विजौ भवतः Sy. अहोरात्रौ द्यावापृथिव्यौ वा U.
१७. ०रौ M. नियमनकर्तारौ ... तयोरेव सर्वेषां नियन्तृत्वादिति भावः Mah. नियमयितारौ Sy. नियन्तारौ U.
१८. तूबरः P.D.

कालस्त्वापि वाऽग्निगुरुत्वापापस्य कालस्त्वेति[1] मन्तारः। यानि[2]। तव[3]। गात्राणाम्[4]। यागकाले[5] मांसानि। छिनधि[6]। मांसपिण्डानाम्[7]। तानि तान्यहम्[8]। अग्नौ। प्रजुहोमि[9]।

मा त्वा॑ तपत्प्रि॒य आ॒त्मापि॒यन्तं॒ मा स्वधि॑तिस्त॒न्व१॒ आ ति॑ष्ठिपत्ते ।
मा ते॑ गृ॒ध्नुर॑विश॒स्ताति॒हाय॑ छि॒द्रा गात्रा॑ण्य॒सिना॒ मिथू॑ कः ॥२०॥

मा त्वा तपत्। मा। त्वा[10]। तापयतु[11]। प्रियम्[12]। शरीरम्[13]। देवान्[14] प्रति गच्छन्तम्[15]। मा च। स्वधितिः[16]विशसने प्रवृत्ता। तव। आस्थानं[17] करोतु न तिष्ठतु[18] शीघ्रं छिनत्तु। मा च। ते[19]।

१. कल० P. D.

२. यान्यङ्गानि Mah. यानि हृदयाद्यवयवानि Sy.

३. एवमश्वस्य विशसितुर्यन्तुनुक्त्वाऽध्वर्युः स्वकर्माह हे अश्व ते तव Mah. एवमश्वस्य विशसितुनुक्त्वाऽथेदानीं स्वकीयं कर्माऽध्वर्युराह या ते यानि तव हे अश्व U.

४. गात्रसम्बन्धिनाम् Mah. गात्राणां मध्ये Sy. अङ्गानाम् U.

५. ऋतावृतूपलक्षिते वसन्तादियज्ञकाले Mah. काले Sy. ऋतावृतौ काले काले U.

६. च्छ्यमि M. अहं कृणोमि हन्मि छिनद्मि 'कृञ् हिंसायाम्' स्वादिः Mah. छिनद्मि सम्पादयामि Sy. बन्धनानि कृणोमि करोमि U.

७. पिण्डानां मध्ये Sy. मांसपिण्डानां मध्ये U.

८. तानि तान्यङ्गानि Mah. तानि तानि प्रज्ञानानुरोधेन Sy.

९. प्र is omitted by P. प्रकर्षेण हुतानि करोमि Mah. प्रकर्षेण हुतं करोमि Sy. प्रज्ञानानुरोधेन जुहोम्यग्नौ U.

This stanza=YV. 25.42

१०. त्वाम् Mah., Sy. त्वाशब्देनात्र विज्ञानात्मोच्यते U.

११. तप्तं दुःखितं मा कार्षीत्। तव देहवियोगजनिता व्यथा मा भूदिति विज्ञानात्मानं प्रत्युच्यते Mah. तप्तं मा कार्षीत्। वियोगजनिता व्यथा मा भूदित्यर्थः Sy.

१२. प्रियो वल्लभो भोगायतनत्वात् Mah. भोगायतनत्वात्तव प्रियतरः Sy. सुखदुःखयोर्भोक्ता प्रिय आत्मा प्राण उक्तः। स हि श्रुतौ 'प्रियमित्येतदुपासीत' (Bṛh. U. 4.1.3.)इत्युक्तम् U.

१३. तवात्मा देहः Mah. देहः Sy.

१४. देवलोकम् Mah. देवान्प्रति Sy.

१५. अप्येतीत्यपियंस्तम्...गच्छन्तम् Mah. देवलोकगमनप्रवृत्तं सन्तम् U.

१६. शस्त्रम् Mah., Sy., U.

१७. तनूरङ्गानि Mah., Sy. शरीरस्य U.

१८. मा स्थापयतु सर्वाणि छित्त्वा देवेभ्यो ददात्वित्यर्थः Mah. त्वयि चिरमाश्रितानि मा कार्षीत् Sy. अस्थापयदेकादशमवदानभूतम् U.

१९. तव Mah., Sy., U.

मांसाघ्यवीनां[1] शस्ता[2]। व्याधः[3]। अस्मानतिक्रम्य[4]। असिना[5]। छिद्राणि[6]। गात्राणि[7]। मृषा[8]। करोतु[9][10]।

**न वा उ॑ ए॒तन्म्रि॑यसे॒ न रि॑ष्यसि दे॒वाँ इदे॑षि प॒थिभि॑ः सु॒गेभि॑ः ।**
**हरी॑ ते॒ युञ्जा॒ पृष॑ती अभूता॒मुपा॑स्थाद्वा॒जी धु॒रि रास॑भस्य ॥२१॥**

न वै[11]। अश्व! न त्वम्[12]। एव[13]। तत्[14]। म्रियसे[15]। नच। विनष्टो भवसि किन्तु[16]। देवान्। एव[17]। गच्छसि[18]। मार्गैः[19]। सुगमैर्देवलोकं प्राप्तस्य। इन्द्राग्नी[20]। ते[21]। सहायौ[22]। भवत एवम्[23]। मरुता-[24]

---

१. मांसाल्प्यविनां P. मांसाघ्यपीनां M. मांसार्थी। अवीनां is suggested for मांसाघ्यवीनां

२. अत एवाविशस्ता न विशेषेण शसति हिनस्त्यविशस्ता विशसनेऽकुशलः Mah. विशसनेऽकुशलश्शमिता Sy. विशसनेऽकुशलः U. ३. कीदृशश्शमिता ? गृध्नुर्गृध्यतीति गृध्नुर्लुब्धः केवलं मांसग्रहणेच्छुः Mah. केवलमांसग्रहणेप्सुः Sy. मांसग्रहणे गर्धालुर्लुब्धः U.

४. त्यक्त्वा, शास्त्रोक्तक्रमं त्यक्त्वा Mah. न्यूनातिरेकभावेन ... अतिक्रम्य Sy. अतिक्रम्य U. ५. शासेन Mah.

६. छिद्राण्यवयवाच्छिद्रानि Mah. छिद्राणि तिर्यक्छिद्रानि Sy. छिद्राणि U.

७. अङ्गानि Mah. तत्तदङ्गम् Sy.

८. मिथुरिति मिथ्यार्थेऽव्ययम् Mah. मिथ्या व्यर्थम् Sy. मिथ्या U.

९. मा कार्षीत् ... अन्यथा माच्छिदत्। सम्यगवदानानि करोत्वित्यर्थः Mah. मा कार्षीत् Sy. १०. VM. ignores तन्वः। This stanza=YV.25.43

११. M. adds उ after वै।

१२. नैव खलु Sy. १३. वै, एवार्थे, उ अवधारणे Mah. वैशब्द एवकारार्थः। उ इत्यवधारणे नैवेदानीम् Sy.

१४. त P. Omitted by M.

१५. हे अश्व त्वमेतत्प्रेत्य म्रियसे, इतराश्ववन्मृतो न भवसि देवत्वप्राप्तेर्वक्ष्यमाणत्वात् Mah., Sy.

१६. अत एव न रिष्यसि हिंस्यसे, ध्यर्थहिंसाया अभावात् Mah., Sy.

१७. गच्छसि। अथो युक्ता मदुक्तिः Mah. प्राप्नोषि। अतो युक्तैवोक्तिः Sy.

१८. मार्गैर्देवयानरूपैः Mah. मार्गैर्देवयानलक्षणैः Sy.

१९. ननु प्रत्यक्षत्वे मरणमङ्गनाशश्च दृश्यते तर्हि कथमेवमुच्यते तत्राह। सुष्ठु गम्यते यत्र ते सुगास्तैः सुगेभिः सुगैः साधुगमनैः Mah. शोभनगमनसाधनैः Sy.

२०. कथं देवान्प्रति गमनं तत्राह। ... Mah. एतन्नामानाविन्द्रस्याश्वौ Sy. हरी इन्द्रस्य N.1.15.

२१. तव Mah. U. त्वां वोढुम् Sy.

२२. युञ्जौ रथे युक्तौ Mah., Sy. योजनार्हौ वोढारौ प्रतिधुरौ U.

२३. भविष्यतः ... भूतकालप्रयोगो भविष्यदर्थे Mah. भविष्यतः। आशंसारूपत्वाद् भूतार्थनिर्देशः Sy. तदुक्तमश्वरथयाने 'यु॒ञ्जन्त्यस्य॒ काम्या॒ हरी॒' (RV. I.6.2.) इति U.

२४. पृषती मरुतां वाहनभूते तव युञ्जावभूताम् Mah. पृषत्यौ मरुतां वाहनभूतौ (ते) ... युक्तौ (ते) भविष्यतः Sy. मरुतां सम्बन्धिनावश्वौ प्रतिधुरावभूताम् ... एभिर्विश्वैस्त्वं समानं लोकं सम्प्राप्त इत्यभिप्रायः U. पृषत्यो मरुताम् N.1.15.

अश्वी। सोऽयम्[1]। अश्विनोरश्वस्य[2]। धुरि[3]। उपतिष्ठतु[4]।[5]

**सुगव्यं नो वाजी स्वश्व्यं पुंसः पुत्राँ उत विश्वापुषं रयिम् ।**
**अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो अश्वो वनतां हविष्मान् ॥२२॥**

सुगव्यं[6] नः। शोभनगोसमूहम्[7]। अश्वसमूहम्[8]। पुंसश्च[9]। पुत्रान्[10]। उत[11]। सर्वस्य पोषकम्[12]। धनं च। अस्माकम्। अश्वः[13] करोतु। अनागास्त्वं[14] च। अदीनः[15]। कृणोतु। बलं[16] च। अस्मभ्यम्[17]।

---

१. कश्चिदश्वः Mah. कश्चित् Sy.
२. रासभस्याश्विवाहनस्य Mah. अश्विवाहनस्यैतन्नामकस्याश्वस्य Sy. अश्वसम्बन्धिनः। रासभावश्विनोरित्याद्दिष्टं प्रयोजनम् U.
३. अश्विवाहनस्थाने Mah. स्थाने वर्तमानः Sy.
४. अवति P. उपस्थास्यति। देवत्वं प्राप्तस्य तव वहनायेन्द्रादयो निजवाहनानि प्रेषयिष्यन्तीति भावः। यद्वा तत्तद्देवभावं प्राप्तं त्वां तानि तानि वाहनानि वक्ष्यन्तीत्यर्थः Mah. उपस्थास्यति वहतीत्यर्थः। यद्वा रासभस्य भानोर्धुरि वर्त्मनि युक्तो वाजी, अश्व उपस्थास्यति देवत्वं गच्छतस्तव गमनायेन्द्रादयः स्वस्ववाहनानि प्रेषयन्तीत्यर्थः। यद्वा तत्तद्देवभावमापन्नं त्वां तानि तानि वाहनानि वहन्ति Sy. एनमुपप्लुत्य स्वयमेवोपास्थादुपस्थितः U.
५. VM. ignores उ। This stanza =YV. 25. 44
६. Omitted by M. इदानीं याच्ञा क्रियते Mah.
७. शोभनं गोसमूहम्। ... गवां समूहो गव्यम्, शोभनं गव्यं सुगव्यम् Mah. शोभनेन गोसमूहेन युक्तम् Sy. शोभनगव्यम् U.
८. अश्वानां समूहोऽश्व्यम्। ... शोभनमश्व्यं स्वश्व्यम् Mah. शोभनाश्वसमूहयुक्तम् Sy. शोभनाश्वं च करोतु U.
९. ०सश्च P.
१०. पुत्रशब्दोऽपत्यवाचक इति पुंस इति विशेषणम्। यद्वा पुंसः पुरुषार्थसाधकान्पुत्रान्करोतु Mah. पुत्रशब्दः स्त्रीपुमपत्यसाधारणोऽतः पुमपत्यानीत्यर्थः। यद्वा पुंसो वध्वादीन् पुत्रान्पुरुरक्षकानात्मजान्। स्त्र्यपत्यानि पुमपत्यानि चेत्यर्थः Sy. पुंसः पुत्रान्करोतु। दुहितरः पुत्राश्च पुत्रशब्देनोच्यन्त इत्यतो विशेषणं पुंस इति U.
११. अपि च Mah., Sy., U.
१२. पुष्णातीति पुषः। ... विश्वस्य सर्वस्य पुषस्तं सर्वजनपोषणसमर्थं धनं करोत्वित्यर्थः Mah. विश्वपोषणसमर्थं धनम् Sy. सर्वस्य पोषकम् U.
१३. देवत्वं प्राप्तोऽश्वः Mah. अश्व आलभ्यमानः Sy.
१४. अनास्त्वं P. नास्त्यागोऽपराधः पापरूपो यस्य सोऽनागास्तस्य भावोऽनागस्त्वं, दीर्घश्छान्दसः। निष्पापत्वं करोतु पापसद्भावे उक्तफलाप्राप्तेः Mah. सर्वतो निष्पापत्वं करोतु। उक्तानां फलानां न्यूनातिरेकजनितपापक्षयाभावेऽसम्भवादपापत्वं प्रार्थ्यते Sy. अनपराधम् U.
१५. अदिनः M. कीदृशोऽश्वः। अदितिर्नास्ति दितिः खण्डनं दैन्यं वा यस्य सः Mah. अदीनोऽश्वः Sy. अदितिर्देवमाता च करोतु। नैघण्टुको वाऽदितिशब्दः। ... अदीनोऽश्वः U.
१६. क्षतत्राणं, परवा (पश्वा) सम्भनाद्रक्षणं वा करोतु Mah. क्षात्रं तेजः Sy.
१७. अस्माकम् Mah., Sy., U.

प्रयच्छतु[1]। अश्वः। पर्यङ्गै[2]र्युक्तः[3]।

## I. 163.

**यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ।**
**श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥१॥**

यदक्रन्दः। यदा[4]। त्वं शब्दं कृतवानसि[5]। पुरा[6]। जायमानः[7]। उद्यन्[8]। अन्तरिक्षात्[9]। अपि[10]। वा। जलाद[11]द्भूतो[12]ऽन्तरिक्षान्वाश्वो जातस्तदानीं शीघ्रं प्रादुर्भवतः[13]। श्येनस्य। पक्षावा[14]स्ताम्। हरिणस्य। बाहू[15] तत्[16]। तव। अश्व[17]। महत्[18]। जननम्[19]। उपस्तोतव्यम्[20]।

---

१. करोतु। वनतिः करोत्यर्थः Mah. सम्भजतां कुरुताम् Sy. करोत्यर्थे वनतिः करोतु U.

२. पर्यङ्गैर्यु० P. हविरस्यास्तीति हविष्मान् ...हविर्भूतावयवः । यद्वा देवत्वाप्त्या हविष्मानीदृशोऽश्वः Mah. हविर्भूतावयवोपेतः Sy. हविष्मानश्वः सर्वेऽश्वावयवा हवींषि U.

३. VM. ignores नः
This stanza=YV. 25. 45.
Ms. D. puts the figure ॥१६२॥ here to indicate the end of one hundred and sixtysecond hymn. No such number is given in P. and M.

४. यस्मात् Sy. ५. क्रन्दितवान् । ह्रेषारवमकार्षीः Mah. महाशब्दमकरोर्यजमानमनुग्रहीतुम् Sy. ह्रेषाशब्दमकार्षीः U.

६. प्रथमम् Mah., U. पूर्वम् Sy.

७. उत्पन्नः Sy. ८. उत्पद्यमानः Mah. जायमानः Sy. उद्गच्छन् U.

९. अन्तरिक्षादुदधेर्वा Mah. अन्तरिक्षनामैतत् । उदकसमुन्दनापादानात्वगन्धवादिसम्मोदनाधिकरणाद् वाऽन्तरिक्षात् ...यद्वा समुद्र आदित्यः समुन्दनाद् वृष्ट्या तस्माद्वा जायमानः Sy. अन्तरिक्षलोकात्पार्थिवाद्वा समुद्रात् U.

१०. अथवा Mah., Sy.

११. पक्षोः सकाशात् Mah. सर्वकामानां पूरकादुदकात् Sy. अन्यस्माज्जलसदृशात्स्थशोर्वा U. १२. जलाद्रुद्भूतो० P.

१३. ०त P. १४. M. repeats पक्षौ पक्षौ । पतनसाधनौ पक्षौ...तौ यथा शीघ्रपतनसाधनौ तादृशावित्यर्थः Sy. श्येनस्य पक्षौ शीघ्रतयाऽजैषीः U.

१५. M. repeats बाहू बाहू । ०हु P. हरिणस्य बाहू अनेन क्रन्दनेन जिताविति शेषः । श्येनपक्षौ शौर्येण हरिणबाहू वेगेनेत्यर्थः Mah. तव बाहू हरिणस्य बाहू इव, तौ यथा वेगवन्तौ तादृशावित्यर्थः Sy. हरिणस्य बाहू शीघ्रतयाऽजैषीरिति शेषः U.

१६. Omitted by P. D.

१७. अरणकुशलाश्व Sy. अरणाश्व U.

१८. माहात्म्यम् Mah. १९. जातम् Mah. जन्म जननम् Sy. उत्पन्नम् U.

२०. स्तोतुं योग्यम् Mah. उपेत्य सर्वैः स्तोतव्यम् । ...यस्मादेवं तस्मात्ते जन्म स्तुत्यमित्यर्थः Sy. उपसङ्क्रम्य स्तुत्यं स्तवनीयमृत्विग्भिः U.
This stanza=YV. 29. 12.

यमेनं दृत्तं त्रित एनमायुनगिन्द्रं एणं प्रथमो अध्यतिष्ठत् ।
गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट ॥२॥

यमेन । यमेन[1] । त्रिताय दत्तम् । अश्वम् । स त्रिस्थानो वायुः[2] । आयुक्तवान्[3] । इन्द्रश्च । एनम्[4] । पूर्वं[5] जातम्[6] । अध्यतिष्ठत्[7] । गन्धर्वश्च[8] । अस्य[9] । रशनाम्[10] । अगृह्णात्[11] । तमिममश्वम्[12] । हे वसवः[13] ! सूर्यात्[14] । उत्पादितवन्तः[15] । "वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंशतिः । ते अग्रेऽश्वमयुञ्जन्[16]" इति मन्त्रः[17] ।

---

१. नियामकेनाग्निना Sy. यमो द्युस्थान आदित्यस्तेन SKN.
२. त्रिस्थानो वायुः Mah., U. पृथिव्यादिषु त्रिषु स्थानेषु वर्तमानः स्तीर्णतमो वा वायुः Sy. त्रिस्थानो वायुर्ऋषिर्वा सः SKN.
३. आयुरायुक्त० P. युक्तवान् Mah. रथे योजितवान् Sy. युक्तवान् U. युक्तवान् रशनया पर्यायणेन वा . . . पर्यायितवान् वेत्यर्थः SKN. यत्रायं योक्तव्यस्तत्र Dur.
४. अश्वम् Mah., Sy., U., SKN.
५. आद्यो Mah. प्रतमः प्रकृष्टतमः । प्रथम इति मुख्यनाम Sy. उत्कृष्टो देवानां मध्ये SKN. सर्वदेवानां मुख्यः । कोऽन्य एवमास्थातुं शक्नुयादित्यभिप्रायः Dur.
६. पूर्वजातम् P.
७. अधिष्ठितवान् Mah., Sy. आरूढः SKN.
८. विश्वावसुः Mah., U. सोमः Sy.
९. अश्वस्य Sy. आह्रियमाणस्य SKN.
१०. नियमनरज्जुम् Sy. बन्धनीं रज्जुम् SKN.
११. गृहीतवान् । य ईदृशस्तं स्तुमः Mah. अग्रहीत् Sy. अगृह्णात् । य इत्थम्भूतोऽश्वस्तं वयं स्तुम इति वाक्यशेषः U. गृहीतवान् SKN. गृह्णाति Dur.
१२. एवंमहानुभावम् Sy.
१३. अष्टगणदेवाः Mah. वसवो रश्मयः Sy. हे वसवो यूयम् U. स्वेन स्वेन व्यापारेण सर्वस्याऽऽच्छादयितारः SKN.
१४. आदित्यमण्डलात् Mah. आदित्यात् Sy. आदित्यमण्डलात् U.
१५. उत्पा० P. निष्कृष्टवन्तः Mah. निश्शेषेण साधु सम्पादितवन्तः । यद्वा वसुशब्देनोक्ता एव यमादयः परामृश्यन्ते । हे वसवः ! स्वस्वव्यापारेण सर्वस्याच्छादयितारो यूयं सूरादादित्यादश्वमेनं निरतष्ट, अतक्षत । निरित्येष समित्येतस्य स्थाने । तक्षतिः करोतिकर्मा । स च क्रियासामान्यवचनः ! अत्रौचित्याद्धारणे वर्तते । सम्यग्धारितवन्त इत्यर्थः Sy. निष्कृष्य कृतवन्तः U. निरित्येष आ इत्येतस्य स्थाने . . . सोऽत्र सामर्थ्याद् हारणे (आह्वाने) वर्तते, आहृतवन्त इत्यर्थः SKN. निष्कृष्टवन्तः । . . . एवमेतस्मिन्मन्त्रे सूर्यप्रभवोऽश्व इति स्तूयते Dur.
१६. ०ग्ने अश्वमायु M. ०ग्रेश्व P. D. TS. 1.7.7.2.
१७. This stanza=YV. 29.13.= N.4.17; SKN. II.227.

असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन ।
असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥३॥

असि यमः । देवगुह्येन[1] । कर्मणा त्वम्[2] । यमादिः[3] । भवसि तत्र मन्त्रः "अग्निः पशुरासीत्तेनायजन्त[4] स एतं लोकमजयत्[5]" इत्येवम् । सोमेन । सह[6] । सम्पृक्तः[7] । भवसि । तस्य[8] तव[9] । त्रीणि[10] । उत्पत्तिस्थानानि[11] सन्तीति । आहुः सूर्यस्त्वष्टा[12] प्रजापतिरिति[13] ।

त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे ।
उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम् ॥४॥

त्रीणि ते[14] । त्रीणि । ते । कथयन्ति । द्युलोके । बन्धनानि—उत्पत्तिस्थानान्येवम्[15] । अन्तरिक्षे[16] च । त्रीणि[17] स्थानानि सन्ति[18] । त्रीणि[19] च । अन्तः[20] । समुद्रे[21] । अपि ।

---

१. गोप्येन Mah. गोपनीयेन दुर्निरूपेण वा Sy. गुप्तव्रतेन U. २. सर्वत्र व्याप्तिरूपेणेत्यर्थः । तेन त्रितस्त्रिषु स्थानेषु तायमानो वायुरसि 'त्रित एनमायुनक्' (RV.I.163.2.) इत्युक्तत्वात्तद्रूपत्वम् । अथवा गुह्येन व्रतेन गोपनीयेन कर्मणा योगादिसाधनरूपेण त्रितः, एतन्नामक ऋषिरसि Sy.

३. यमोऽसि आदित्यश्चासि त्रितस्त्रिस्थान इन्द्रोऽसि Mah. नियमिताऽग्निरसि, तेन वसत्वात्तच्छब्दव्यपदेशः । तथा आदित्योऽसि Sy. असि यमो भवसि चादित्यः U.

४. ०नय० P. ५. VS. 23.17.

६. मध्यतः U. ७. एकीभूतोऽसि Mah. वि इत्येष समित्येतस्मिन्नर्थे । सम्पृक्तोऽसि तेन गृहीतत्वात् Sy. एताभिर्देवताभिस्तव सायुज्यं जातमित्यभिप्रायः U.

८. एवं यमादिभिः सायुज्यं प्राप्तस्य Mah.

९. दिवि नभस्यादित्यरूपेण स्थितस्य Mah. तव दिवि द्युलोक आदित्ये वा वर्तमानस्य Sy. द्युलोक आदित्यात्मनाऽऽस्थितस्य U.

१०. ऋग्यजुःसामरूपाणि मण्डलान्तरपुरुषार्चींषि ... 'यदेतन्मण्डलं तपति तन्महदुक्थम्' इत्यादिश्रुतेः Mah. वसव आदित्यो द्युस्थानं चेति त्रीणि Sy. ऋग्यजुःसामलक्षणानि मण्डलान्तरपुरुषार्चींषि U.

११. स्वरूपाणि Mah. उत्पत्तिकारणानि Sy.

१२. बुधा आहुः Mah. आहुः पुराविदः Sy. आहुर्बुधाः U.

१३. VM. ignores दिवि । त्रितः । अर्वन् This stanza=YV. 29.14.

१४. Omitted by D. इदानीं स्थानत्रयेऽपि त्रीणि बन्धनानीत्याह Sy.

१५. उत्प० P. त्रीणि बन्धनानि पूर्वमन्त्रोक्तान्याहुः Mah. बन्धनानि त्रीण्याहुस्तानि पूर्वमुक्तानि Sy. १६. उदकेषु Mah. अबुपजीवितत्वाद् भूलोकोऽप्यप्शब्देनाभिधीयते, पृथिव्याम् Sy. १७. कृषिवृष्टिर्बीजमिति Mah., U. अन्नं स्थानं बीजमिति त्रीणि Sy. १८. Omitted by D. १९. मेघो विद्युत् स्तनयित्नुरिति Mah. त्रीणि वृष्ट्युत्पत्तिनिमित्तानि मेघो विद्युत्स्तनितमिति Sy. मेघो विद्युदशनिरिति U. २०. समुद्रमध्ये Sy. मध्ये U. २१. अन्तरिक्षमध्ये Mah. समुद्द्रवणादपादानात्समुद्रमन्तरिक्षम् । तस्मिन् Sy समुद्रशब्देनान्तरिक्षमभिधीयते । अन्तरिक्षस्य U.

च। समुद्रमध्यस्थं तव परमं जन्म समुद्राधिपतिर्वरुण एव। मम। शंसत्वस्मोत्स्थानादस्मान्त्वा-
श्वोऽजनीति। यत्। तव। वदन्ति। उत्तमम्। जन्मेति।

**इ॒मा ते॑ वाजिन्नव॒मार्ज॑नानी॒मा श॒फानां॑ सनि॒तुर्नि॒धाना॑।**
**अत्रा॑ ते भ॒द्रा र॑श॒ना अ॑पश्यमृ॒तस्य॒ या अ॑भि॒रक्ष॑न्ति गो॒पाः ॥५॥**

इमा ते। पिण्याकादिभिरश्वमवमृजन्ति तानि। इमानि तथा। इमानि। शालां सम्भक्तुः। तव। शफानाम्। निधानस्थानानि। अत्र। तव। शोभनाः। पश्यामि। दर्भमयीर्मौञ्जीश्च। यज्ञस्य। गोप्तारः। या रशनाः।

---

१. उतापि च Mah. इवशब्दश्चार्थेऽपि च Sy. अपि च U.
२. वरुणरूपस्त्वम् Mah. पापस्य वारकः फलस्यावर्जयिता वा त्वम् Sy.
३. माम् Mah. मह्यम् Sy. मम U.
४. प्रशंससि। कर्मणि षष्ठी। छन्दतिरर्चतिकर्मा। अर्चनं प्रशंसनम् Mah. कथयसि ...तादृशं प्रशस्यं जन्म यज्ञसाधनभावेन कथयसीत्यर्थः Sy. शंसति कथयति U.
५. शंसत्वस्मान् D. शंसत्वममस्मात् P.
६. अश्वात्त्वा० P.
७. यत्र Mah. येषु त्रिषूक्तेषु स्थानेषु Sy. यत्र U.
८. बुधा आहुः Mah. कथयन्ति। यद्वा यत्र यस्मिन्नादित्ये परमं जनित्रमाहुः Sy.
९. ०म D. M. निरतिशयम् Sy.
१०. जनित्रम्...आदित्यरूपेण Mah. जनेरौणादिक इत्रप्रत्ययः Sy. जन्म वायुरूपेण U. ११. VM. ignores अर्वन् This stanza=YV.29.15
१२. पिण्डयाका० D. पिण्डयका० P.
१३. अवमार्ज्यते यैस्तान्यवमार्जनानि वेतसकटादीनि Mah. अङ्गसंशोधकानि स्थानानि Sy. यैस्तवावमार्जनं कृतं तान्येव मार्जनानि मूत्रवेतसकटप्रभृतीनि U.
१४. उक्तानि द्युलोकादीनि Sy.
१५. ०ना D.
१६. नियन्तुः पादवासस्य Mah. यागसम्भक्तुस्तव Sy. पादवासः U.
१७. हे वाजिन्नश्व! ते सम्बन्धीनि Sy.
१८. खुराणाम् Mah., U.
१९. निधानानि स्थानानि Mah. सञ्चारप्रदेशा इत्यर्थः Sy. निधानानि, यत्र पादवासःप्रभृतीनि धीयन्ते तानि U.
२०. पुत्र M. यज्ञे Mah. एषूक्तस्थानेषु Sy.
२१. भव M.
२२. भद्राः कल्याणरूपाः स्तुत्याः Mah. भन्दनीयाः कल्याणाः Sy. स्तुत्याः U.
२३. दृष्टवानस्मि Sy. अहमपश्यम् U.
२४. ०र्यो M.
२५. मजीश्च P. ०ञ्जीं च M.
२६. ऋतस्य ऋतं यज्ञम्...कर्मणि षष्ठी Mah. सत्यभूतस्य यज्ञसाधनस्य वाश्वस्य। कर्मणि षष्ठी। ऋतम् Sy.
२७. गोपायन्ति गोपा रक्षणकर्त्र्यः Mah. गोपयित्र्यो रशनाः Sy. गोपायितव्यान्यश्वान् U. गोप्त्र्यः is suggested for गोप्तारः as it qualifies रशनाः and should be in the fem. gend.
२८. मध्यबन्धनरज्जूः Mah. ग्रीवादिषु संयुक्ता रज्जूः Sy.

अभिरक्षन्तीति[1] ।[2]

आत्मानं ते मनसारादजानामवो दिवा पतयन्तं पतङ्गम् ।
शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि ॥६॥

आत्मानम्। तव[3]। शरीरम्[4]। मनसा[5] चक्षुःसहितेन। समीपेन[6]। पश्यामि[7]। अधस्ता-[8]त्पृथिव्यां पश्यामि। दिवा[9]। गच्छन्तम्[10]। आदित्यमादित्यवदश्व: स्तूयते ततस्तमेवाश्व: पश्या-[11]म्यश्वरूपमिति। शिरश्च[12] तव। पश्यामि[13]। मार्गैः[14]। सुगमैः[15]। पांसुवर्जितैः[16]। गच्छत्[17]। पतन-

---

१. अभितः पालयन्ति ताः। . . . यद्वा, इमा ते तवाश्वमार्जनान्यङ्गप्रक्षालनसाधनान्युद - कानि। इमानि सनितुस्तव शफानां निधानानि देवयजनभूमयः सञ्चारप्रदेशा वा। अत्रास्मिन्देवयजनस्थाने वा रक्षा गोपास्तव पालयितारो राजपुरुषा ऋत्विजो वा ऋतस्य सम्बन्धिन्योऽभिरक्षन्ति ता अवश्यम् Sy.

२. VM. ignores वाजिन्
This stanza=YV. 29. 16.

३. एवमश्वं स्तुत्वा भविष्यत्कर्मणा स्तौति हे अश्व, ते तव Mah. एतैरधस्तनैरश्वचरित्रैरश्वमभिष्टुत्याथेदानीं भविष्यत्कर्मभिरभिष्टौति. . . ते तव दिव्यम् U.

४. पशुसंस्पर्शनोत्तरकालमात्मानम् U.

५. प्रसन्नदोषेण प्रकृष्टगमनवता चेतसा Sy.

६. ०पे M. दूरे Mah. अतिदूरे स्थितम् Sy. दूरात् U. ७. जानामि Mah. अतिव्याप्तं भावयामीत्यर्थः Sy.

८. अधस्तात्प्रदेशात् Mah., U. अवस्तारस्तासमर्थ्याद् भूमेः। भूमिमारभ्य Sy.

९. नभोमार्गेण Mah. अन्तरिक्षेण मार्गेण Sy. दिवं प्रति U.

१०. उत्पतन्तम् Mah., U. गच्छन्तं व्याप्नुवन्तम्। यद्वा यतो दिवाऽन्तरिक्षेण मार्गेण दिवि वा पतयन्तं गच्छन्तं पतङ्गमादित्यमश्वः, आवो व्याप्नोषि। अतो व्याप्तं जानामि Sy.

११. Omitted by P. सूर्यं प्रति Mah. आदित्यरूपिणम् U.

१२. शिरः सूर्यरूपम् Mah.

१३. भावयामि। एवं लोकत्रयव्याप्तं भावयामीत्यर्थः। यद्वा त आत्मानमेवं भावयामि। मनसा दिवा द्योतनात्मकेनान्तरिक्षमार्गेण दिवः सकाशाद्वा, अधोऽवस्तादवाङ् - मुखं पतयन्तं यागदेशं प्रति व्याप्नुवदत एव पतङ्गं पतनशीलमधःपतदादित्यसदृशं वा। एवं तव शिरो भावयामीत्यर्थः। शिरश्चैवमपश्यम्। उक्तरूपैर्देवयजनमार्गैर्जेहमानं यज्ञदेशं व्याप्नुवत्पतत्रि शीघ्रगामि शिरः पश्यामि। यद्यप्यात्मशब्देन सशिरस्कं शरीरमुक्तं तथापि देहात्पूर्वं शिरसो दृश्यमानत्वात्पृथगभिधीयते Sy.

१४. नभोमार्गैः Mah. मार्गैः। आदित्यमण्डलादप्युपरिभूतैः सत्यलोकमार्गैरित्यर्थः। तत्र प्रतिबन्धाभावान्मार्गाणामुक्तरूपत्वम्। तथाविधैस्तैः Sy. मार्गैः U.

१५. मार्गैः सुगमैः M. सुगैः सुखेन गम्यते येषु ते सुगास्तैः Mah. शोभनगमनसाधनैः Sy. सुगमनैः U.

१६. पांसु० M. अरेणुभिर्नास्ति रेणुर्येषु तेऽरेणवस्तैः। उपद्रवरहितैरित्यर्थः Mah. अपापैः Sy. १७. गच्छत् Mah. उपर्युपरि व्याप्नुवत् Sy. गच्छत् U. As पतत्रि is in the neut., the reading should be गच्छत्।

शीलमिति[1]।

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः।
यदा ते मर्तो अनु भोगमानळादिद् ग्रसिष्ठ ओषधीरजीगः ॥७॥

अत्रा ते। अत्र—अश्वस्त्वं[2] व्रज[3] ऊर्ध्वमेकादशान्मासाद्[4] वद्धस्य। तव। उत्तमम्[5]। रूपम्। अहमपश्यम्[6]। जयशीलम्[7]। अन्नस्य[8]। पदे[9]। गन्तुः[10]। आकारः[11] सप्तम्यर्थस्य[12] स्फुटीकरणार्थः। यदा। तव[13]। मनुष्यः। भोगसाधनं[14] घासम्। अग्रतोऽनुप्रापयति[15]। अनन्तरम्[16]। एव। ग्रसितृतमो-[17]

---

१. पतनशीलं गन्तृ Mah. पतनवत् Sy. उत्पतनशीलम् U.
This stanza=YV. 29. 17.

२. अस्मिन् Mah. अस्मिन्यागवेशे Sy. द्युलोके U. अत्र स्थितोऽत्र वा काले SKN एतस्मिन्काले Dur.

३. व्रजा D.

४. ०मेकादशात्मा सन् D. ०शास्मान् सं P.

५. उत्कृष्टरूपेणोत्कृष्टतमम् Sy. अत्यन्तोत्कृष्टम् SKN. उत्कृष्टम् Dur.

६. पश्यामि Mah., Sy. एवं द्युलोकावस्थितस्य तवाहं रूपमपश्यम् U. दृष्टवानहम् SKN.

७. जेतुमिच्छत् Mah., U. गन्तुमिच्छन्तम् Sy. जेतमिच्छन्तं सर्वम् SKN. जेतुमिच्छमानम् Dur.

८. अन्नानि हवींषि Mah. कर्मणि षष्ठी, इषमिष्यमाणमन्नमन्नानि वा Sy. अन्नानि U. अन्नस्य हविराख्यस्य सम्बन्धिनि SKN.

९. मण्डले Mah. स्थाने देवस्थाने देवयजनप्रदेशे आजिधावनस्थाने वा Sy. स्थाने वेद्याख्ये SKN. शरपथे वेद्यां वा. . .यज्ञेनापि ह्यन्नमेवामुष्मिँल्लोके जीयते तस्माद्वेद्यामित्येवोपपद्यते Dur.

१०. सूर्यस्य . . . 'गौर्नादित्ये बलीवर्दे' (Keśava as quoted by Bhānuji Dīkṣita in his commentary on Amara 3.3.25.) इत्यभिधानाद् गौरादित्यः Mah. भूम्याः Sy. गन्तुर्मण्डलस्य U. पृथिव्या अवयव इति शेषः SKN. भूम्याः Dur.

११. समन्तात् Mah. सर्वतः Sy. आस्थितम् U.

१२. सम्य० P.

१३. पृथिवीस्थितस्य . . . ते तव U.

१४. भोक्तव्यमन्नम् Sy. वाहनादिकम् U. वाहत (वाहन) लक्षणम् SKN.

१५. ०प्रवयन्ति P. यन्ति M. अनुव्याप्नोति, हवीरूपं भोग्यं समर्पयति Mah. नशतिर्गतिकर्मा अनुक्रमेण समीपं गमयति Sy. अनुव्याप्नोत् U. अनु इत्येतवानडित्येतेन सम्बध्यते . . . अनुसंव्याप्नोति तं वाहयतीत्यर्थः SKN. प्राप्नोति Dur.

१६. तदानीमेव तदनुग्रहाद्विलम्बमकृत्वा Sy. आदित्, इति पादपूरणार्थौ U. यदेति श्रुतेस्तदेत्यध्याहार्यम्। आद् अथ तदा, इत् पदपूरणः श्रान्तः सन् SKN.

१७. ग्रसत इति ग्रसिताऽतिशयेन ग्रसिता ग्रसिष्ठोऽत्यन्तं भक्षयिता Mah. महातृष्णयेव ग्रसितृतमो भक्षयितृतमः सन् Sy. ग्रसितृतमोऽतिशयेन भक्षयिता सन् U. अतिशयेन ग्रसिता भक्षयिता SKN.

अश्व। ता ओषधीः[1]। भक्षयसीति[2]।[3]

**अनु॑ त्वा॒ रथो॒ अनु॒ मर्यो॑ अर्व॒न्ननु॒ गावोऽनु॒ भगः॑ क॒नीना॑म् ।**
**अनु॒ व्राता॑स॒स्तव॑ स॒ख्यमी॑यु॒रनु॑ दे॒वा म॑मिरे वी॒र्यं॑ ते ॥८॥**

अनु त्वा रथः। रथोऽश्वमाहरति सर्वेषाम्, अथापि सः। त्वाम्। अनुभवति[4] न त्वत्सममाहरतीत्यर्थः। एवं मर्त्यो[5]ऽप्युदारः[6]। त्वामनुभवति[7]। तथा गावश्च[8] पयःप्रभृतेर्दातारः। त्वामनुभवन्ति[9][10]। कन्यकानाम्[11]। भगः[12] सौभाग्यं च। त्वामनुभवन्ति[13] सुभगा हि कन्यका पितॄणां विक्रये[14] बहु धनमावहति, अथवा सौभाग्यं पतिभ्यो धनमात्मन आहरति। अश्वरक्षिणो व्राताः[15]। तव। सख्यम्[16]। गताः[17]। तव। देवाः[18]। वीर्यम्[19]। अश्व[20]!

---

१. हवींरूपाः Mah. अन्नानि Sy.

२. 'गॄ निगरणे' गिरसि भक्षयसि Mah. महानुभावोऽपि त्वं लौकिकाश्ववत्तुच्छेन पुरुषेण दीयमानं स्वल्पं भक्ष्यमनुग्रहात्स्वीकरोषीत्यर्थः Sy. गृह्णासि गिरसि वा। अन्यो हि वाहितश्चलितुमपि न शक्नोति त्वं वीर्यवत्तरोऽसीति भावः U. अवगिरसि, अभ्यवहरसि गृह्णासि भक्षयसीत्यर्थः SKN. अन्ये हि प्राणिनः परिश्रान्ताश्चरितुमपि न शक्नुवन्ति, त्वं तु सुतरामोषधीर्भक्षयसीत्येतदधिकं तवेति Dur.

३. यदा ते मर्तो भोगमन्वापदथ ग्रसिष्ठतम ओषधीरगारीः। जिगर्तिगिरतिकर्मा वा। गृणातिकर्मा वा गृह्णातिकर्मा वा N.6.8. This stanza=YV. 29. 18.= SKN. II. 418.

४. अनु, वर्तते इति शेषः Mah. अनुसृत्य रथो गच्छति ततः पुरतोऽश्वस्य गमनात् Sy. अनु, इति परभावमाचष्टे ... यस्य सुकृतिनो गृहे त्वं चेष्टसे तस्य गृहे ... रथस्त्वामनु U.

५. मनुष्यः Mah. मर्त्यः। जात्येकवचनम् Sy. मनुष्याः U.

६. मर्त्यो ह्य० M.

७. ०स्त्वम् P.

८. गावोऽपि Sy.

९. ०स्त्वम् P.

१०. त्वामनुगच्छन्ति Sy.

११. कन्यानाम् Mah. कन्यकानां स्त्रीणाम् Sy., U.

१२. अभ० P. D. M. भाग्यं सौन्दर्यम् Sy.

१३. यत्र त्वं तत्र रथादयः स्युरित्यर्थः Mah. त्वद्गमनमनु Sy. तत्रैते पदार्था भवन्तीत्यर्थः U. ० भवति is suggested for ० भवन्ति

१४. अवि० M.

१५. मनुष्यसङ्घाः Mah. व्राताः सङ्घात्मका अन्येऽश्वसमूहा वस्वादिदेवगणा वा Sy. पुरुषसङ्घा अपि U.

१६. मैत्रीम् Mah. त्वामनु, अनुसृत्य तव ... सखिभावम् Sy., U.

१७. प्रापुः Mah. गच्छन्ति Sy. अन्वीयुः U.

१८. किं बहुना, देवाः Mah. ऋत्विजो द्योतमाना देवा वा त्वामनुसृत्य Sy. किमन्यद्बहु वदामः ... देवाः U.

१९. तव वीर्यं सामर्थ्यम् Mah. वीरकर्म Sy., U.

२०. गमनशीलाश्व ! Sy.

अजानन्निति[1]।

**हिर॑ण्यशृङ्गो॒ऽयो॑ अ॒स्य पादा॒ मनो॑जवा॒ अव॑र॒ इन्द्र॑ आसीत् ।**
**दे॒वा इद॑स्य हवि॒रद्य॑माय॒न्यो अर्व॑न्तं प्रथ॒मो अ॒ध्यति॑ष्ठत् ॥९॥**

हिरण्यशृङ्गः। हिरण्मयैर्मणिभिरलङ्कृतः शिरोभागो हिरण्यशृङ्ग उच्यते हिरण्यशृङ्गो[2]ऽयं भवति। तथा, अस्य[3]। पादाः[4]। अयोवद्[5] दृढा भवन्ति। मनोवेगः[6]। सूर्यश्च। अस्य गमनेऽवरः[7]। भवति[8] न सममनेन गच्छतीत्यर्थः। देवाः[9]। अस्य। अदनीयम्[10]। हविः। अभिगच्छन्ति[11]। यः[12]। भ्रातृव्यम्[13]। प्रथमम्[14]। अधितिष्ठति[15]।

---

१. जा० M. अनुमितवन्तः Mah. ममिरे स्तुत्या मान्ति। अतः सर्वोऽपि त्वामनुसरः (सरति)। त्वं तु सर्वस्य श्रेष्ठ इत्यर्थः Sy. अचिन्त्यशक्तिस्त्वमसीत्यभिप्रायः U.
VM. ignores अनु। अनु
This stanza=YV. 29.19.

२. कीदृश इन्द्रः? ... हिरण्यवच्छृङ्गं दीप्तिर्यस्य। शृङ्गमिति ज्वलन्नामसु पठितम् Mah. अयमश्वो हिरण्यशृङ्गो हितरमणीयशृङ्गो वोन्नतशिरस्को हृदयरमणशृङ्गस्थानीयशिरोरुहो वा Sy. हिरण्यं शृङ्गस्थानीयमस्येति हिरण्यशृङ्गः U.

३. अश्वस्य Mah., Sy. यस्य चास्य U.

४. पाव इत्यवयवानाम् U.

५. ०व P. अयो लोहं हिरण्यं वा। अयोरूपाः पादा इत्यर्थः Mah. अयोमया अयःपिण्डसदृशा इत्यर्थः Sy. अय इति सर्वेषां रजतादीनामुपलक्षणम्।... रजतादिविशिष्टा अवयवाः U.

६. कीदृशाः पादाः? ...मनोवज्जवो वेगो येषां ते Mah. मनोवेगाः। अथवा, एतदिन्द्रविशेषणम्। ईदृशस्याश्वस्य सामर्थ्यं प्रति मनोवेग इन्द्रोऽपि Sy. मनोवेगयुक्ताः U.

७. अपरः M. सोऽपीन्द्रोऽवर इन्द्रापेक्षया न्यूनः Mah. निकृष्टः Sy. यस्मात्त्वावरः कनिष्ठ इन्द्रः U.

८. अभवत्। वायुरूपेणाश्वस्यावस्थानात् U.

९. इवेत्यर्थेऽप्यर्थे च Mah. देवा इत् सर्वेऽपि देवाः Sy. देवा अपि U.

१०. देवस्यायनीयम् M. दनी० P. अत्तुं योग्यमद्यं हविश्च तदद्यं हविरद्यं हविर्लक्षणं भक्ष्यं प्रति Mah. हविषोऽदनं भक्षणं, स्वार्थिको यत्। अदनयोग्यं हविर्वाऽपेक्ष्य Sy. हविर्लक्षणमदनीयम् U.

११. आगच्छन् Mah., U. प्राप्ताः Sy.

१२. इन्द्रः Sy.

१३. अश्वम् Mah.

१४. प्रथमो मुख्यः Mah. प्रथमभावी सन् Sy.

१५. अधिष्ठितवान् Mah. स्वहविष्ट्वेन स्वकीयत्वेन वा आश्रितवानित्यर्थः Sy. स चेन्द्रो यस्य हविरद्यमागतं तं वयं स्तुम इति शेषः U.
VM. ignores इत्
This stanza=YV. 29.20.

**ईर्मान्तासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः ।**
**हंसाइव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥१०॥**

ईर्मान्तासः[1] यास्कः[2]—"समीरितान्ताः[3] पृथ्वन्ता वा[4]। संसृतमध्यमाः[5] शीर्षमध्यमा[6] वा। शिर[7] आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये[8] चोत्तिष्ठति, इदमपीतरच्छिर एतस्मादेव,

---

१. सूर्याश्वरूपेणायमश्वः स्तूयते Mah. अत्राश्वसमूहस्तुतिद्वारेणायं स्तूयते Sy. आदित्यस्य रथे येऽश्वा युक्तास्तद्द्वारेणायमश्वः स्तूयते U. आदित्याश्वानामियं स्तुतिः, ते च सप्त SKN.

२. ०स्क M.

३. N. adds [सुसमीरितान्ताः] after समीरितान्ताः।
कीदृशा अश्वाः ?...ईर्यंत ईर्मः 'ईर प्रेरणे' ...ईर्मः प्रेरितोऽन्तः शरीरप्रान्तो येषां ते पृथुजघनोरस्का इत्यर्थः Mah. ईरिताः प्रेरिता अन्ता येषां ते तथोक्ता विरलान्ता इत्यर्थः Sy.
ईरितोऽन्तो येषां त ईर्मान्ता ईर्मान्ता एवेर्मान्तासः। तेषां हि सप्तानामश्वानां समीरितान्ता विक्षिप्ताः प्रान्ताः विरला इत्यर्थः। वृष्टान्ता वा। ते हि पृथूरस्काः पृथुजघनाश्चेत्यर्थः U. ईरिता प्रेरिताः SKN. तेषां सप्तानां येऽश्वाश्चत्वारस्ते समीरितान्ता विक्षिप्तान्ताः प्रसृतान्ताः प्रविरला इत्यर्थः। तेषामेवाश्वानां पृथवोऽन्ताः पृथूरस्काः पृथुजघना वेत्यर्थः Dur.

४. N. adds सिलिकमध्यमाः after वा

५. सिलिकः श्लिष्टः संलग्नो मध्यमो मध्यप्रदेशो येषां ते सिलिकमध्यमाः कृशोदरा इत्यर्थः। 'श्लिष श्लेषणे' Mah. संसृताः सङ्कृता मध्यप्रदेशा येषां ते तथोक्ता मध्ये निबिडा इत्यर्थः। अथवा शरीरस्यैते विशेषणे। ईर्मं ईरितः पुरतो नुन्न इत्यर्थः। तादृशः पृथुरन्तो जघनप्रदेशो येषां ते तादृशाः। पुष्टस्वात्प्रौढपृष्ठाः संलग्नमध्याश्चेत्यर्थः। जघनपुरोभागाद्यपेक्ष्य सिलिकमध्यमा इत्युक्तम् Sy. संलग्नमध्यमाः कृशोदरा इत्यर्थः। सप्तानामपि संश्लिष्टा उदरप्रदेशाः। निरुदरास्तेऽश्वा इत्यर्थः U. ये तु मध्यमास्ते संसृताः सङ्कृताः परःसमुच्छ्रिता इत्यर्थः। तेन त ईर्मान्ताः सिलिकमध्यमाश्चोच्यन्ते। अथवा प्रत्येकं शरीरद्वारेणैते विशेषणे। अश्वस्यान्तरेकत उरोऽन्यतो जघनं स येषामीर्मा प्रेरितः पृथुरित्यर्थः, त ईर्मान्ताः। मध्यमप्रदेश उदरं स येषां संसृतः सङ्कृतस्तनुरित्यर्थः। ते सिलिकमध्यमाः। शीर्षं प्रधानो मध्यमो येषां ते सिलिकमध्यमाः। अथवा शिर इत्यादित्य उच्यते सोऽधिष्ठातृत्वान्मध्यवर्ती येषां ते सिलिकमध्यमाः SKN. संसृतमध्यमाः संश्लिष्टमध्यमा इत्यर्थः। तेषां हि सप्तानां ये मध्यमास्त्रय इतरेतरमुत्पीड्य संश्लेषेणावस्थिताः। अथवा पृथुजघनोरस्कानां सतां मध्यमाश्शरीरप्रदेशाः सप्तानामपि संश्लिष्टाः संलग्नास्तनवः। निरुदरास्तेऽश्वा इत्यर्थः। यो हि तेषां सप्तानां मध्यमः स शिरोभूतः प्रधान इत्यर्थः Dur.

६. शीर्षमा P.D.M.

७. N. adds अपि वा before शिरः

८. चैनां ति० M. चैयां ति० N.

समाश्रितान्येतदिन्द्रियाणि भवन्ति[१]। संशूरणासः[२][३] शूरदशवतेर्गतिकर्मणः[४]। दिव्या दिविजाः[५]। अत्या पतनाः[६]। हंसा[७] हन्तेर्घ्नन्त्यध्वानम्[८]। श्रेणिश्श्रयतेः[९] समाश्रितो[१०] भवति[११]। यदाक्षिषुर्यदापन्[१२]। दिव्यम्। अज्ममजनीयमाजिम्[१३]। अश्वाः[१४], अस्त्यादित्यस्तुतिरश्वस्य[१५], आदित्यादश्वो[१६] निरतष्ट इति

---

१. भवति P.D.M.

२. समित्ययमुपसर्गो यतन्त इत्याख्यातेन सम्बन्धयितव्यः Sy. समित्युपसर्गो यतन्त इत्याख्यातेन सम्बन्धयितव्यः SKN.

३. N. adds (दिव्यासो अत्याः) after संशूरणासः। शू शीघ्रं रणो रवो युद्धं वा येषां ते शूरणाः। यद्वा शूरणो रविस्त-दीयाश्शूरणाः Mah. विक्रमशीलाः Sy. सहिताः शूरणेन भगवताऽऽदित्येन U. शूर आदित्यः स नेता येषां ते शूरनेतृका-श्शूरणासः SKN. स हि परानभिमुखो गच्छत्येव न पर्य्यावर्तते Dur.

४. ०र् P. D.

५. निवि० M. दिवि भवा दिव्याः Mah., Sy. दिविजाः U. दिवि जाताः SKN.

६. अत्यातनाः P. D. अतन्ति सततं गच्छ-न्ति, अत्याः सकृद्युक्ता ब्रह्माहःपर्यन्तं रविरथं वहन्ति Mah. अतनशीलाः। यद्यप्ययमश्वनाम। तथाप्यश्वशब्दस्य वक्ष्यमाणत्वादयं यौगिकोऽवगन्तव्यः। ईदृशा अश्वाः Sy. सततगमनाः। ते हि सकृद्युक्ता ब्राह्मं सहस्रयुगपर्यन्त-महर्वहन्ति। य इत्थंभूता अश्वाः U. परस्तादश्वश्रुतेः पौनरुक्त्यप्रसङ्गादत्य-शब्दः सत्यप्यश्वनामत्वे क्रियायोगा-द्विशेषणत्वेन द्रष्टव्यः। ... सततगामिन इत्यर्थः SKN. ते ह्यतन्त्येव मुहूर्तमपि नावतिष्ठन्ते Dur.

७. N. adds हंसा इव श्रेणिशो यतन्ते before हंसाः।
हंसा यथा गमनाय यतन्ते तथाऽश्वा अपि Mah. तत्र दृष्टान्तः।...ते यथा श्रेणी-भूता ईर्मान्तास इत्याद्युक्तरूपाः सन्तो-ऽन्तरिक्षे गमनाय यतन्ते तद्वत् Sy. यथा हंसाः ...प्रथमगमनाद्यान्कुर्वन्ति, एवमश्वा अपीत्युपमार्थः U. हंसा इव गच्छन्ति Dur.

८. ०र्घ्नन्त्य० P. ०र्घ्नन्त्य० D.

९. ०णि P. D. M. श्रेणिश इति is added by N. before श्रेणिः। श्रेणीभूताःMah. एकव्यापाराणां बहूनां समूहः श्रेणिरित्युच्यते। शीघ्रधावनाय श्रेणिशः पङ्क्तीभूय Sy. श्रेणीभूता एकया रीत्या U. समूहीभूताः SKN. पङ्क्तीकृताः Dur.

१०. ता N.

११. भवन्ति N.

१२. ०वं D. M. ०यवावं P. यदा ... संय-तन्ते सम्यक् प्रयत्नं कुर्वन्ति तदा ... व्याप्नुवन्ति Mah. सम्यग्यत्नं कुर्वन्ति ... यदा ... व्याप्नुवन्ति Sy. यतन्ते ... कदेत्याह यदा यस्मिन्काले ... व्या-प्नुवन्ति U. सम्यग्गच्छन्ति। कदा ? उच्यते...यदा ... व्याप्नुवन्ति SKN. यस्मिन्काले, आप्नुवन्ति ... यदा त आप्नुवन्त्युदयादारभ्य यावदस्तमिति तदैव यतन्ते Dur.

१३. ०मज्जनी० D. ०यमजमजनी० M. दिव्यजन्ममजनीयमानं जिमश्वाः P. ० जनिमाजिम् N. गमनं सङ्ग्रामं वा Mah. गमनं गन्तव्यं वा मार्गम् Sy. अजनमाजिम् U. अजतं (नं) गमन-मार्गम् SKN. अजनिम्। अज्यतेऽस्यां गम्यत इत्यजनिर्वीहिका। स्वर्गपथ इत्यर्थः Dur.

१४. सप्त रविरथस्थाः Mah. अश्वा आदित्यस्य स्वभूताः SKN.

१५. स्यादित्यस्तुतिरश्वः स्व M. ०दित्यस्य स्तु० P.D.

१६. आदित्यदित्यश्वो P.

'सूरादश्वं' वसवो निरतष्ट[1]' इत्यपि निगमो भवति[2]"[3]। इति।

**तव शरीरं पतयिष्ण्वर्वन्तव चित्तं वातइव ध्रजीमान् ।**
**तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरन्ति ॥११॥**

तव शरीरम्[4]। तव। शरीरम्[5]। पतनशीलम्[6]। अर्वन्! तव। चित्तं[7] च।[8] वातं[9] इव। वेगवान्[10]। तव। शृङ्गाणि[11]। विष्ठितानि[12]। बहुधा[13]। अरण्येषु[14]। शत्रूणां वीर्याणि हरमाणानि[15]। चरन्ति[16]।

---

१. निरतष्टे D. RV. I. 163.2ª; VS. 29.13.
२. P. adds न before भवति
३. ईर्मान्ताः (सुसमीरितान्ताः) पृथ्वन्ताः वा। सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा। अपि वा शिर आदित्यो भवति। यदनुशेते सर्वाणि भूतानि। मध्ये चैषां तिष्ठति। इदमपीतरच्छिर एतस्मादेव। समाश्रितान्येतदिन्द्रियाणि भवन्ति। संशूरणासो दिव्यासोऽत्याः। शूरः शवतेर्गतिकर्मणः। दिव्या दिविजाः। अत्या अतनाः। हंसा इव श्रेणिशो यतन्ते। हंसा हन्तेर्घ्नन्त्यध्वानम्। (श्रेणिश इति) श्रेणिः श्रयतेः। समाश्रिता भवन्ति। यदाक्षिषुर्दिव्यमज्ममश्वाः। अज्मम् अज्मनिमाजिमश्वाः। अस्त्यादित्यस्तुतिरश्वस्य। आदित्यादश्वो निरतष्ट इति। 'सूरादश्वं' वसवो निरतष्ट' (RV. I. 163. 2ª.) इत्यपि निगमो भवति N. 4.13; SKN. II. 226. VM. ignores इव। यतन्ते This stanza=YV. 29.21
४. शिरं D.
५. शिरं D.
६. उत्पतनशीलम् Mah. पतनशीलं आप्तमित्यर्थः Sy.
७. मनः Sy.
८. P. D. M. add त्वं after च।
९. शीघ्रगमनवायुरिव Sy.
१०. वेगवत्। वात इव वेगवत्सूक्ष्मार्थान्गच्छतीत्यर्थः Mah. तद्वच्छीघ्रगमनानुकूलमित्यर्थः Sy. गतिमद् वेगवत् सूक्ष्मानर्थान्प्रति गच्छेदित्यर्थः U.
११. दीप्तयः Mah. शिरसो निर्गताश्शृङ्गस्थानीयाः केशाः Sy. शृङ्गाणीति ज्वलन्नामसु पठितम्। तवार्चींषि U.
१२. विद्युच्चन्द्रार्काग्निषु स्थितानि Mah. विविधं स्थिताः Sy. विविधं स्थितानि ...विद्युच्चन्द्रार्काग्न्यादिषु U.
१३. विविधम् Mah. बहुषु प्रदेशेषु Sy. बहुधा U.
१४. वनेषु Mah., U.
१५. जर्भुराणानि 'जृम्भ विकसने' विकसितानि Mah. मनोहराणि पूर्यमाणानि वेवम्भूताः केशाः ... यद्वा अश्वस्य शृङ्गाभावात्तद्वदुन्नतानि तेजांसि परिगृह्यन्ते Sy. देदीप्यमानानि U.
१६. दावाग्निरूपेण चरन्ति प्रसरन्ति Mah., U. This stanza=YV. 29.22.

उप प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः ।
अजः पुरो नीयते नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः ॥१२॥

उप प्रागात्। उपप्रगच्छति[1]। विशसनस्थानम्[2]। बलवान्[3]। अश्वः[4]। देवानञ्चता[5]। मनसा[6]। दीप्यमानः[7]। तस्याश्वस्य[8]। बन्धुः[9]। अजो ललाटे नियुक्तः[10]। पुरः[11]। नीयते[12]। अनुनयन्ति[13] तमश्वम्। पश्चात्[14]। क्रान्तदर्शनाः[15]। स्तोतारः[16]।

उप प्रागात्परमं यत्सधस्थमर्वाँ अच्छा पितरं मातरं च ।
अद्या देवाञ्जुष्टतमो हि गम्या अथा शास्ते दाशुषे वार्याणि ॥१३॥

उप प्रागात्। उप प्रागात्[17]। यत्[18] स्वर्गाख्यम्[19]। परमम्[20]। स्थानम्[21]। अर्वान्=

१. आगतः Mah. उपप्रैति Sy. उपप्र, अगात् U.　२. विशसनम् U.
३. कीदृशोऽर्वा ? ...वजतीति वाजी गमनशीलोऽश्ववान्वा Mah. अश्वः Sy. वेजनवान् U.
४. अरणकुशलः Sy. अरणोऽश्वः U.
५. देवानां च ता D. देवान्प्रत्यञ्चति देवद्र्यक् तेन... देवान्प्रति गतेन Mah. देवान्गच्छता Sy. देवान्प्रत्यञ्चितेन U.
६. चित्तेन Mah.
७. दीधीते दीध्यानः Mah. ध्यायन्। कदा देवानस्मदवयवेनार्चामि देवत्वं प्राप्नोमीति वा मनसि ध्यायन् Sy. ध्यायन् हिरण्यगर्भपदम् U.
८. अस्य Mah., Sy., U.
९. नाभौ।...तदुक्तम् 'सौमापौष्णः श्यामो नाभ्याम्' (ŚB. 13.2.2.6.) इति Mah. नहनं बन्धुभूत इत्यर्थः। यद्वा। अस्य बन्धनस्थानीयोऽविमुक्तत्वात् Sy.
१०. एवम्भूतोऽजः Sy.
११. अग्रे Mah. पुरस्तात्... पुरतः Sy.
१२. स्थाप्यते Mah. प्राप्यते Sy. तदुक्तम् 'कृष्णग्रीव आग्नेयो रराटे पुरस्तात्' (YV. 24.1.) इति U.
१३. ०ते ननुनय० D. अनुगच्छन्ति Mah. अनु अनुसृत्य, पश्चादनन्तरम्। अत्र पश्चाप्युभयोः पर्यवसितोऽयं एक एव तथाप्यजाश्वोभयानन्तर्यत्वप्रकटनाय पदद्वयम्। यद्वा। अन्विति क्रियया सम्बध्यते... गच्छन्ति Sy. गच्छन्ति U.
१४. अनन्तरम् Sy. अनुलग्नाः पश्चात् U.
१५. ऋत्विजः Mah. अनूचानाः।...'ये वा अनूचानास्ते कवयः' (AB.2.2.) इति श्रुतेः। यद्वा कवय इति मेधाविनाम 'कविर्मनीषी' (Ngh. 3.15.) इति तन्नामसु पठितत्वात् Sy.　१६. रेभन्ते रेभाः 'रेभृ शब्दे' स्तोतार इत्यर्थः Mah. रेभ इति स्तोतृनाम। 'रेभो जरिता' (Ngh. 3.16.) इति तत्र पाठात् Sy. This stanza=YV. 29.23.
१७. Omitted by M...उपगच्छति Sy. एवमश्वमभिष्टुत्याथेदानीं यजमानं कृतकृत्यतया सम्बोधयन्नाह...प्राप्तवान् U.
१८. यस्मात् U.　१९. सुकृतिभिरेकत्र निवासयोग्यं स्वर्गाख्यं यदस्ति तत् Sy.
२०. उत्कृष्टम् Mah., Sy., U.
२१. सहस्थानम् Mah., Sy. सहस्थानं देवमनुष्याणाम् U.

गमनवान्[1]। पितरम्। मातरम्। चात्मीयौ[2]। द्रष्टुं[3] ननु न तौ मृतौ 'मातृमन्तं पितृमन्तम्' इति वचनात्, एवं तर्हि दैव्यं पितरं मातरं चाप्तुम्। अथ प्रत्यक्षः—अद्य[4]। देवान्[5]। पर्याप्ततमः[6]। गच्छ[7]। अथायम्[8][9]। आशास्ते[10] होता। यजमानाय[11]। वरणीयान्यायुःप्रभृतीनि[12]।[13]

## I. 164.

**अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः।**
**तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥१॥**

अस्य वामस्य। अस्य[14]। वननीयस्य[15] सूर्यस्य[16]। पलितस्य[17]=रश्मिभिश्श्वेतैर्युक्तस्य[18]।

---

१. अर्वाऽश्वः . . . अर्वञ्छब्दस्य नलोपाभावश्छान्दसः Mah. अरणकुशलोऽयमश्वः Sy. अर्वाऽश्वः। नकार उपजनः U.

२. द्यावापृथिव्यावभि समीपे Mah. यस्मात्पितरं मातरं च द्यावापृथिव्यौ U.

३. आभिमुख्येन प्राप्तुम् Sy. 'अच्छाभेराप्तुमिति शाकपूणिः' (N. 5.28.) अभ्यगात् U.

४. अद्य P. D. M. अस्मिन्काले Sy.

५. अद्य एव देवलोकं गते हे यजमान! . . . अद्य त्वं देवान् . . . देवलोकम् Mah

६. प्रीततमः सन् Mah. प्रीततमः, स्वर्गं प्राप्नोमीति हर्षयुक्त इत्यर्थः Sy.

७. गच्छेः Mah. एवम्भूतः . . . गच्छेर्देवान्। हिशब्दो यज्ञ उपयुक्तस्य पशोः स्वर्गप्राप्तेः 'सगर्भ्योऽनु सखा सयूथ्यः' (TS. 1.2.4.2.) इत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थः Sy. कृतकृत्यः सन्देवान्गम्या गच्छेः . . . हिर्निश्चये U.

८. अनन्तरम् Sy. ९. यजमानः Sy.

१०. हि नूनमाशास्ते, देवगणोऽश्वो वा ददात्वित्यर्थः Mah. यद्वा पुरुषस्य व्यत्ययः। आशास्ते प्रार्थये यजमानार्थम् Sy. आशास्तेऽश्व एव U. ११. अथैवं देवत्वं गताय वायुवे हविर्दत्तवते तुभ्यम् Mah. हविर्दत्तवते स्वस्मै Sy. एवंगताय भवते . . . दत्तवते हवींषि यजमानाय U.

१२. भोग्यवस्तूनि Mah. धनानि Sy.

१३. VM. ignores हि
This stanza=YV. 29. 24.
Ms. D. puts the figure ॥१६३॥ here to indicate the end of one hundred and sixtythird hymn. No such number is given in P. and M.

१४. अत्र द्वितीयपादे तच्छब्दश्रुतेः प्रथमपादे प्रतिविशेषणं योग्यक्रियार्थसम्बद्धो यच्छब्दोऽध्याहार्यो योऽयं दिवि द्योतते तस्यास्य Sy. अस्य प्रत्यक्षादिप्रमाणासन्निहितस्य परोक्षस्य At. द्वितीये पादे तच्छब्दश्रुतेर्योगा(ग्या)र्थसम्बन्धो यच्छब्दोऽध्याहार्यः। योऽयं दिवि दीप्यते तस्यास्य SKN. एतस्मिन्मन्त्रे सूर्यः प्रधानः सूक्ते सूर्याधिकारात्। तस्मात् 'अस्य वामस्य' इत्येषः 'अस्य' शब्दोऽन्तोदात्तः Dur. १५. वमनी M.

१६. सम्भजनीयस्याऽऽरोग्यार्थिभिः सर्वैः सेवनीयस्य Sy. कुब्जस्य शरीरेण परिच्छिन्नस्य व्यापकस्य वा At.

१७. पतित॰ M.

१८. ॰भिश्चंते॰M.॰तंयु॰ D. ॰भि श्वे॰P. पालयितुः प्रकाशवृष्ट्यादिप्रदानेन पालकस्य Sy. पालयितुः SKN. अयं हि सर्वमेवेदं जगत्पालयति Dur.

तस्य। ह्वातव्यस्य[1]। भ्राता[2]। मध्यमोऽपि[3]। अस्ति[4] वायुः। व्याप्तः[5]। तृतीयः[6]। भ्राता[7]। घृतपृष्ठः[8]=अग्निः। अस्य[9]। एषां मध्ये[10]। विशां पतिम्[11]। सप्तपुत्रम्[12]अमुम्[13]।

---

१. ह्वातव्यस्याऽऽह्वानार्हस्यादित्यस्य Sy. यो होतोद्गाता विचारकस्तस्य होतुः At. आह्वानार्हस्येत्यर्थः SKN.

२. भृता P. तादृशो भ्राता ... भ्रातुस्त्यानीयः ... यथा लोके भ्राता पितृधनस्य भागं हरति तद्वत्। मध्यस्थानमन्तरिक्षलोकं हरतीति वा। वृष्ट्यर्थं रश्मिभिराहृतानां भौमानां रसानां हरणाद्वा भ्रातेत्युच्यते। पित्र्येण धनेन स्वार्जितेन वा भर्तव्यो भवतीति भ्राता। मध्यमो वायुरपि वृष्ट्यर्थं रसैर्भक्तव्यो भवति Sy. जागृदवस्थायां नाम्ना विश्वस्य प्रथमस्य भ्रातुर्द्वितीयो भ्राता At. क्रियाशब्दो वा भ्रातृशब्दो हरतेर्बिभर्तेर्वृष्ट्यर्थः। रश्मिभिराहृतानां भौमानां हर्ता भर्तव्यो वा रसैः SKN. भागहर्ता भर्तव्यो वोदकेन Dur.

३. मध्यमस्थानः। मध्ये भवो वायुरुच्यते। आदित्याग्नी अपेक्ष्यास्य मध्यमत्वम् Sy. मध्ये स्वप्ने भवतीति मध्यमो नाम्ना तैजसः At. मध्यमो वायुः SKN.

४. भवति Sy., At. भवति। एकस्मात्कारणादुत्पन्नत्वात् SKN.

५. ०षु न्याप्तः P. सर्वत्र व्याप्तः। नहि वायुरहितः कश्चित्प्रदेशोऽस्ति Sy. अश्नो मेघस्य गिरेर्वा नामैतत्। तैजसो हि मेघसदृशः। निद्रया तिरोहिततेजस्त्वात्। स्वप्नाख्यगन्धर्वनगराधिष्ठातृत्वाच्च गिरिवदाश्चर्यविषयः At. अशनो व्यापी SKN. व्यापनो वायुरित्यर्थः। स हि द्युलोकादादित्येनोदकेन ध्रियते हरति चोदकं द्युलोकात् Dur.

६. त्रयाणां पूरणस्तृतीयः। उक्तोभयापेक्षया तृतीयत्वम् Sy. वायुरादित्योऽग्निरित्येवं परिसङ्ख्याय वायोस्तृतीयोऽग्निर्भवति। सर्वस्माद्धि वायुर्बलवान्। वायुरपि च ज्योतिरेव Dur.

७. भृतं P. भ्रातृत्वं प्रतिपादितप्रकारेणात्रापि द्रष्टव्यम्। रात्रौ सवितुस्तेजोभागस्य हरणाद् दिवा स्वकीयतेजसो भागस्य तदर्थमेव भक्तव्यत्वाद् वा भ्रातृत्वम् Sy. तृतीयो भ्राता सुषुप्तौ, नाम्ना प्राज्ञः At. ऐन्द्राग्ने हविषि संस्तुतो वा हविर्भागहर्ता Dur.

८. घृतमाहुतिलक्षणं पृष्ठे यस्य तादृशः Sy. घृतौ क्षरितौ लीनौ पृष्ठौ परिभवौ बाह्यप्रवेशसमौ जागरस्वप्नौ यस्मिन्स घृतपृष्ठः प्राज्ञः। 'घृ क्षरणदीप्त्योः' At. घृतेन वा यः स्पृष्टः स घृतपृष्ठः पार्थिवोऽग्निः सः SKN. पृथिवीस्थानः Dur.

९. Omitted by P.

१०. एषु भ्रातृषु मध्ये पुरोदेशे वा Sy. अत्र विश्वादिषु त्रिषु At. एषां च मध्ये SKN.

११. विशां प्रजानां पालयितारम् Sy. विश्वतैजसप्राज्ञानां पतिं पातारं स्वचैतन्यदानेन रक्षकम् At. विश्वस्य पातारं भौमस्य रसस्य पालयितारं वा रश्मिभी रक्षितारमित्यर्थः SKN. सर्वस्य जगतः पालयितारम् Dur.

१२. सर्पणरश्मिपुत्रोपेतम्। ऐतिहासिकपक्षे 'अदितिः पुत्रकामा' (TB.1.1.9.1.) इति प्रस्तुते मित्रावरुणादिष्वदितिपुत्रेष्वस्यादित्यस्य सप्तमपुत्रत्वम् Sy. तुरीयं सप्तपुत्रम्। सप्त महदादयो जगत्प्रकृतयः पुत्राः कार्यभूता विकृतयो यस्य सः At. अन्यत्र सप्तपुत्रं सप्तसङ्ख्याका रश्मयः पुत्राः पुत्रस्थानीया अस्य, सप्तमो वा योऽदितेः पुत्र इतीतिहासपक्षे। 'अदितिः पुत्रकामा' (TB.1.1.9.1.) इति प्रस्तुतस्यैव मित्रं च वरुण इत्यादिषु सप्तम इति। सर्पणा वा सततगन्तारो रश्मयः पुत्रा रसादानप्रकाशनात्पुत्रवदेनं, पुरुणस्त्रातारो यस्य स सप्तपुत्र आदित्यस्तम् SKN.

१३. ०त्रममृतम् P.

अपश्यमादित्यम्[1], सप्तादित्यरश्मयं[2] इति वदन्[3]तीति[4]।

---

१. ईदृशं महानुभावमादित्यमपश्यमद्राक्षम्। भावनयाऽऽत्मत्वेन साक्षात्करोमीत्यर्थः। 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इति श्रुतिः Sy. दृष्टवानस्मि At. पश्याम्यहम् SKN.
तत्रैतस्मिंस्त्रेधा विभक्ते ज्योतिषि प्रधानमेतमेवाहमपश्यम् Dur.

२. अपश्यमादित्यरश्मय P.

३. एवं वा—अस्य वामस्य विश्वस्योद्गिरितुः स्रष्टुरित्यर्थः। पलितस्य पालयितुः स्वसृष्टजगत्पालनशीलस्य होतुरादातुः स्वस्मिन् संहर्तुरित्यर्थः। परमेश्वरस्य सृष्ट्यादिकर्तृत्वं श्रुतिस्मृतिपुराणादिषु प्रसिद्धम्। तस्य तादृशस्य परमेश्वरस्य भ्राता तद्भागहारी तदंशभूतः सूत्रात्मा मध्यमः सर्वत्र मध्ये वर्तमानोऽस्ति जगद्धारकत्वेन वर्तते। स वाश्नो व्यापनशीलः। 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि' (Bṛh. U. 3.7.2.) इति श्रुतेः। वक्ष्यमाणविराडपेक्षया वा मध्यमत्वम्। किंचास्य परमेश्वरस्य तृतीयो घृतपृष्ठः। घृतमित्युदकनाम, तेन तत्कार्यं शरीरमुच्यते। तदेव पृष्ठं स्पर्शकं वा यस्य स तादृशः। 'पृष्ठं स्पृशतेः' (N.4.3.) इति निरुक्तम्। यद्वा प्रदीप्तपृष्ठः। पृष्ठशब्दः कृत्स्नशरीरोपलक्षकः। प्रकाशितशरीराभिमानीत्यर्थः। न स्वयं सूक्ष्मशरीराभिमानिसूत्रात्मवत्स्पर्शनाविषयो भवति। अत्रैषु मध्ये विश्पतिं विशां प्रजानां पतिम्। उपलक्षणमेतत्। सर्वस्य पतिमित्यर्थः। 'सर्वस्य पतिः सर्वस्येशानः' (Cf. Bṛh. U. 4.4.15.) इति श्रुतेः। सप्तपुत्रं सप्त लोकाः पुत्रा यस्य तादृशं, स्वमायया सृष्टसर्वलोकमित्यर्थः। अपश्यं, पश्येयं साक्षात्करोमीत्यर्थः। अयमर्थः—स्वाधीनमायो जगत्कारणभूतः परमेश्वर एकः। तत उत्पन्नौ स्थूलसूक्ष्मशरीराभिमानिनौ द्वौ विराट्सूत्रात्मानौ। तेषु मध्ये द्वयोः साक्षात्कारे मोक्षाभावात् सृष्ट्यादिकारणं परमेश्वरं ज्ञेयत्वेन प्रसिद्धं श्रवणमननादिसाधनेन साक्षात्करोमीत्यर्थः। एवमुत्तरत्राप्यध्यात्मपरतया योजयितुं शक्यम् ...यत्र 'द्वा सुपर्णा' (RV. I. 164.20.ª) इत्यादौ स्फुटमाध्यात्मिको ह्यर्थः प्रतीयते तत्र तत्र प्रतिपादयामः Sy.

४. अस्य वामस्य वननीयस्य। पलितस्य पालयितुः। होतुर्ह्वातव्यस्य। तस्य भ्राता मध्यमोऽस्त्यशनः। भ्राता भरतेर्हरतिकर्मणः। हरते भागं भर्तव्यो भवतीति वा। तृतीयो भ्राता घृतपृष्ठोऽस्यायमग्निः। तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा। विश्पतिं सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्रमिति वा। सप्त सृप्ता सङ्ख्या। सप्तादित्यरश्मय इति वदन्ति N.4.26; SKN. II. 279.

सप्त यु॑ञ्जन्ति॒ रथ॒मेक॑चक्र॒मेको॒ अश्वो॑ वहति स॒प्तना॑मा ।
त्रि॒नाभि॑ च॒क्रम॒जर॑मन॒र्वं यत्रे॒मा विश्वा॒ भुव॒नाधि॑ त॒स्थुः ॥२॥

सप्त युञ्जन्ति । सप्तर्तवः[१]। कालरथम्[२]। संवत्सरैकचक्रम्[३]। युञ्जन्ति तम्[४]। एकः[५]। अश्वः[६]। वहत्यादित्यः[७]। सप्त[८] रश्मयो यस्मै रसानभिसन्नामयन्ति[९]। तत्[१०]

---

१. सप्त, एतत्सङ्ख्याका अश्वाः Sy. वामस्येत्यनेन परिच्छिन्नस्येत्युक्तं, केन परिच्छेदः? वेदेनेत्याह। तन्मात्राः पञ्च, महदहमौ च द्वावेवं सप्त At. सप्तसङ्ख्योपेताः सर्पणा वा Dur.

२. कल० P. रथं रंहणस्वभावं सूर्यस्य सम्बन्धिनम् Sy.
रथरूपकल्पितं शरीरम् At.
रंहतेर्गतिकर्मणः। रंहितारं गन्तारमादित्यम् SKN. रंहणमादित्यम्। ... रंहणश्चासौ मुहूर्तमप्यनवस्थायित्वात् Dur.

३. ०रैचक्रा P. एकरथाङ्गोपेतम्। यद्यपि त्रीणि चक्राणि तथापि तेषामेकरूपत्वादेकचक्रमित्युच्यते Sy. एकः कालश्चक्रवद् भ्रामको यस्य तम् At. एकमेव चरितारं दीपितारमित्यर्थः। चरितारं गन्तारमित्यर्थः। उदिते ह्यादित्ये स एवैकश्चरति वा नान्यानि ज्योतींषि तद्रश्मिभिराच्छादितत्वाददृश्यमानत्वात् SKN. एक एव ह्यसावन्तरिक्षे चरति। इतराणि ज्योतींषि नाशयत्येव स्वेन तेजसा प्रकाशेन Dur.

४. अनुबध्नन्ति, वहन्त्यहोरात्रनिर्वाहाय Sy. योजयन्त्यात्मना, उदितमात्रमेव SKN.
योजयन्त्यात्मना रश्मयः ... उदयन्नेव ह्यसावादित्यो रश्मिभिर्युज्यते Dur.

५. एतो P. एक एवाहङ्कारः At.
स च तैर्युक्त एकः SKN.
एक एव Dur.

६. अश्वस्थानीयः At. अशनो व्यापी SKN. अशनो व्यापनः सर्वभूतानाम् Dur.

७. एक एव वायुः सप्तरूपं धृत्वा वहतीत्यर्थः। वाय्वधीनत्वादन्तरिक्षसञ्चारस्य Sy.
चेष्टयति At. गच्छति SKN., Dur.

८. किं वस्तुतः सप्त? नेत्याह...सप्तनामा, एक एव सप्ताभिधानः सप्तधा नमनप्रकारो वा Sy. सर्पतीति सप्त, सङ्क्षिपतीति वा, नामा नामयिता स रुद्रश्चेष्टको यस्य। अहङ्कारस्य रुद्रो देवता At. सप्त रश्मयो यस्मै रसानभिसन्नामयन्ति, सप्तर्षयो वा यं प्रति स्तावकत्वेन नमन्ति स सप्तनामा SKN.
सप्तपुत्र इत्येवमाद्याः सप्तसङ्ख्यायुक्ताः स्तुतयोऽस्य। ...सप्तनामा सर्पणः सप्तभिर्वा रश्मिभिर्युक्तः Dur.

९. ०यति P. D.

१०. त P.M.

त्रिनाभि[1]। चक्रं[2] त्र्यृतुः[3] संवत्सरो ग्रीष्मो वर्षा हेमन्त इति नाभयः। अजरम्[4]। अनाश्रयम्[5]। यस्मिंस्तच्चक्रे[6]। सर्वाणि। इमानि[7]। भूतानि[8]। अधितिष्ठन्ति[9]।

---

१. त्रिणाभि M. एकचक्रमित्युक्तं कीदृशं तत्? इत्यत आह। त्रिनाभि वलयत्रयमध्यस्थितनाभिस्थानीयच्छिद्रत्रयोपेतम् Sy.
त्रिधा नभति। 'नभ दीप्तौ' At.
उत्तरोऽर्धर्चः संवत्सरस्तुतिः। त्रिनाभि नाभित्रयं ग्रीष्मो वर्षा हेमन्त इत्येत ऋतवो नाभिस्थानं यस्य तत्त्रिनाभि SKN. स एवंलक्षण एकचारी व्यापनः ...यथा वहत्युवयादारभ्य यावदस्तमिति तदेवं वहन्किमभिनिर्वर्तयतीत्युच्यते त्रिनाभिसंयुक्तम् Dur.

२. एकचक्रमित्यत्र चक्रशब्देन यदुक्तं तत्। त्रिधा हि कालो भिद्यते। प्रकृतेः परः, प्रकृतिसन्निहितः, शुद्धब्रह्मणोऽर्वाचीनः। ईशः प्रकृतिचेष्टकः प्रथमः कालः। क्षणलवात्मा द्वितीयः। सूर्यात्मा तृतीयः। ईदृशं चक्रं चास्य रथस्य त्रिधा कालः। चक्रवद् भ्रामकत्वात् At. चक्रं संवत्सराख्यम्। परिवर्तमानसामान्यात्संवत्सरस्य चक्रव्यपदेशः SKN. कालचक्रम्। चकनधर्मि, चकनं चलनमुच्यते। चलनधर्मि क्रमणधर्मि वा Dur.

३. त्यृतु P. त्यृतुः M. एतदेवास्य त्रिनाभित्वमभिप्रेतम् Dur.

४. अमरणधर्मकम् Sy.
जरावर्जितम् SKN.
तत्संवत्सरचक्रमजरणधर्मि, नहि संवत्सरस्य जरा नाम धर्मोऽस्ति Dur.

५. अशिथिलम् Sy. अगमयितृ। स्थानान्तरं न गच्छतीत्यगन्तृ, इत्युच्यते At.
अप्रतिहतमन्यत्राश्रितत्वेन पराश्रयमित्यर्थः SKN. अप्रतिगतमनाश्रितमन्यत्र क्वचिदिति Dur.

६. कालचक्रे At. यस्मिन् SKN.

७. प्रसिद्धानि Sy.

८. Omitted by P.
भूतजातानि Sy.
भुवनानि At. भूतजातानि SKN.

९. आश्रित्य तस्थुस्तिष्ठन्ति Sy. अध्यधिश्रित्य तस्थुरविमुच्य तिष्ठन्ति At.
अधिशब्दः ... कर्मप्रवचनीयसञ्ज्ञकः पदपूरणः। उत्पत्तिप्रलयस्थितिभिरपि स्थानि? यदनपेक्ष्य न कस्यचिदुत्पत्तिः स्थितिः प्रलयो वास्तीत्यर्थः SKN. अभिसन्तिष्ठन्ते। आश्रितानि विनाशमुपयान्ति। विनाशोऽपि हि संस्थोच्यते। तदेवंलक्षणं त्रिनाभिकालचक्रमजरं च आदित्योऽभिनिर्वर्तयति यच्चेदमभिनिर्वर्त्यते कालचक्रं तदेतदुभयमप्यहं स्तौमीत्येवमस्य मन्त्रस्य पूर्वोऽर्धर्च आदित्यप्रधान उत्तरः संवत्सरप्रधान इति Dur.

पञ्चधा च त्रिधा चैव षोढा द्वादशधैव च ।
संवत्सरं चक्रवच्च पराभिः कीर्तयत्यृषिः ॥इति शौनकः॥

१. ०रश्च० P. २. धरा० P.
३. ०पश्च० M. ०यन्त्य० P.
४. BD. IV. 35.
५. यद्वा। एकचक्रमेकचारिणमसाहाय्येन सञ्चरन्तं रथमादित्यमण्डलं सप्त युञ्जन्ति। सर्पणस्वभावाः सप्तसङ्ख्या वा रश्मयः सप्तप्रकारकार्या असाधारणाः परस्परविलक्षणाः षड्ऋतवः। एकः साधारण इत्येवम्। अथवा मासद्वयात्मकाः षड्, अपरोऽधिकमासात्मक इत्येवं सप्तर्तवो युञ्जन्ति। एतस्य कार्यं निर्वहन्तीत्यर्थः। स चैकोऽसहायोऽश्वो व्यापनशील आदित्यः सप्तनामा सप्त रसानां सन्नमयितारो रश्मयो यस्य तादृशः, सप्तर्षिभिः स्तूयमानो वाऽऽदित्यो वहति धारयति भ्रमयतीत्यर्थः। किम्? त्रिनाभि चक्रम्। तिस्रो नाभिस्थानीयाः सन्ध्याः सम्बद्धा वा त्रय ऋतवो यस्य तत्तादृशम्। के ते? ग्रीष्मवर्षाहेमन्ताख्याः। यद्वा भूतभविष्यद्वर्तमानाख्यास्त्रयः कालास्त्रिनाभयः। तद्विशिष्टं चक्रं चक्रवत्पुनः पुनः परिभ्रममाणं संवत्सराख्यं चक्रमजरं मरणरहितम्। नहि कदाचिदपि कालो म्रियते। 'अनादिनिधनः कालः' (*Tithitattva* of Raghunandana P. 1.) इति स्मृतेः। अनर्वमप्रतिहतम्। ईदृशं संवत्सराख्यं चक्रं नानाकालावयवोपेतमथमादित्यः पुनरावर्तयति। संवत्सरादर्वाचीनानां तत्रैवान्तर्भावात्। ततो युगादीनां तदावृत्तिसाध्यत्वात्संवत्सरस्य चक्रत्वेन निरूपणम्। पुनः कीदृशं तत्? यत्र यस्मिंश्चक्र इमा विश्वा भुवना, इमानि सर्वाणि भूतान्यधितस्थुराश्रित्य तिष्ठन्ति कालाधीनत्वात्सर्वस्य स्थितेः। ईदृशस्य कालस्य कारणभूतपरमेश्वरपरिज्ञानेन मोक्षसद्भावात् Sy.

सप्त युञ्जन्ति रथम्। एकचक्रमेकचारिणम्। चक्रं चकतेर्वा चरतेर्वा। क्रामतेर्वा। एकोऽश्वो वहति सप्तनामादित्यः। सप्तास्मै रश्मयो रसानभिसन्नामयन्ति। सप्तैनमृषयः स्तुवन्तीति वा। इदमपीतरन्नामैतस्मादेव। अभिसन्नामात्। संवत्सरप्रधान उत्तरोऽर्धर्चः। त्रिनाभिचक्रम्। त्र्यृतुः संवत्सरः। ग्रीष्मो वर्षा हेमन्त इति। संवत्सरः संवसन्तेऽस्मिन्भूतानि। ग्रीष्मो ग्रस्यन्तेऽस्मिन्रसाः। वर्षा वर्षत्यासु पर्जन्यः। हेमन्तो हिमवान्। हिमं पुनर्हन्तेर्वा। हिनोतेर्वा। अजरमजरणधर्माणम्। अनर्वमप्रत्यृतमन्यस्मिन्। यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते। तं संवत्सरं सर्वमात्राभिः स्तौति N.4.27; SKN.II.281.

**इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः ।**
**सप्त स्वसारो अभि सं नवन्ते यत्र गवां निहिता सप्त नाम ॥३॥**

इमं रथम्। इमम्[1]। कालरथम्[2]। ये[3]। अधितिष्ठन्ति[4]। सप्तर्तवः[5]। सप्तर्तुचक्रम्[6]। सप्त। अश्वाः[7]। वहन्ति[8]। सप्त[9]। स्वसारोऽश्वाः[10]। तस्मिन्नर्थेऽभिसम्पतन्ति[11]। यत्र[12]। उदकानाम्[13]। नामकानि[14]। सप्त[15] ज्योतींषि। निहितानि[16]।

---

१. उक्तस्वरूपमादित्यमण्डलाख्यं संवत्सराख्यं वा Sy. सूक्ष्मदेहमाश्रित्योक्तम्। अथ स्थूलदेहमाश्रित्योच्यते। इमं प्रत्यक्षादिसन्निहितम् At.

२. रथं स्थूलदेहम् At. ३. यानि At.

४. अभिति० P. अधिष्ठिताः। संवत्सरपक्षेऽयनर्तुमासपक्षदिवसरात्रिमुहूर्ताख्याः सप्तावयवा अधितिष्ठन्ति Sy. अधि, अधिष्ठायाश्रित्य ये तस्थुः At.

५. सप्त रश्मयः Sy. सप्ताङ्गानि वर्तन्ते At.

६. कीदृशं तत्? सप्तचक्रं, चक्रनाच्चरणात्क्रमणाद्वा चक्राणि रश्मयस्ते सप्त यस्य रथस्य तादृशमुभयविधं रथम् Sy. तैरेव सप्ताङ्गैः सप्तचक्रो देहः। 'चक तृप्तौ प्रतिघाते च' सप्ताङ्गानि सप्तचक्राणीष्टप्रवर्तकानि यस्यानिष्टान्निवर्तकानीति वा सप्तचक्रस्तं सप्तचक्रम् At.

७. पूर्वोक्ता अधिष्ठिता अश्वा व्यापनशीलाः Sy. सप्ताश्वा रजस्तमःसहितानि कर्मेन्द्रियाणि At. ८. वहन्ति निर्वहन्ति च Sy. गमयन्ति चालयन्ति At.

९. असाधारणाः परस्परविलक्षणकार्याः षड्तवः सर्वसाधारण एक इति सप्तत्वम्। यद्वा। उक्तरूपा मासद्वयात्मकाः षट् त्रयोदशमासात्मकः सप्तम इति सप्तत्वम् Sy. १०. तादृशं रथं सप्त स्वसारः स्वयंसरणाः। स्वरादित्यः। तेन सारिताः परस्परं स्वसृभूता वा सप्तसङ्ख्याका रश्मय ऋतवश्च Sy. सप्त धर्माधर्मसहितानि ज्ञानेन्द्रियाणि स्वसारो भगिनीस्थानीयानि At.

११. आभिमुख्येन सङ्गच्छन्ते Sy. इतरेन्द्रियशक्तीनामभि, आभिमुख्येन संनवन्ते प्रवर्तन्ते। 'णु स्तुतौ' अनेकार्था धातवः At.

१२. यस्मिन्नथ उभयविधे Sy. यत्र विषये At.

१३. गवां वाचां स्तुतिरूपाणाम् Sy. रजस्तमःसहितानां कर्मेन्द्रियाणां तथा धर्माधर्मसहितानां ज्ञानेन्द्रियाणां च At.

१४. नमनानि सप्तस्वररूपाणि Sy. नामानि दैवतानीन्द्रियदेवताः At.

१५. सप्तविधानि Sy. सप्तसङ्ख्याकानि At.

१६. निहितानि। सप्तस्वरोपेतैः सामभिः स्तुत्यं रथमित्यर्थः। यद्वा गवामुदकानां सप्त सर्पणस्वभावानि नाम नमनानि यत्र यासु स्वसृषु निहिता। स्वसारः परस्परस्वसृभूता देवनद्योऽभि संनवन्ते Sy. नितरां हितान्यनुकूलानि ... अस्यायमर्थः—मूर्धादित्रिकं, करावङ्घ्री चेति सप्ताङ्गानि चक्राख्यानि। सप्त, सप्तकमित्येव सप्त वहच्छरीरं गमयन्ति चालयन्ति। खानि, कर्मकरणानि कर्मेन्द्रियाणि रजस्तमसीत्येव सप्तैव। तथान्यानि खानि धर्माधर्मसहितानि ज्ञानेन्द्रियाणि पञ्च, एवं सप्त, आमूर्तेर्विषयान्सङ्ग्राहयन्ति। यत्र येषु विषयेषु खानि सुरैरिन्द्रियदेवताभिः प्रवृत्ति प्रापितानीन्द्रियाणि तान्विषयान् संयोजयन्ति। एवं स्थूलशरीरमुक्तम् At.

को द॑दर्श प्रथ॒मं जाय॑मानमस्थ॒न्वन्तं॒ यद॑न॒स्था बिभ॑र्ति ।
भूम्या॒ असु॒रसृ॑ग॒त्मा क्व॑ स्वि॒त्को वि॒द्वांस॒मुप॑ गा॒त्प्रष्टु॑मे॒तत् ॥४॥

को ददर्श। चक्रं स्तुत्वा[1]ऽऽदित्यमेव स्तौति[2]—कस्तम्[3]। ददर्श[4]। प्रथममेव[5]। जायमानं[6] पुरुषम्[7]। अस्थन्वन्तम्[8]। यदि कश्चिद्। अनस्था[9]। बिभर्ति[10]। भूम्याः[11]। चालकः[12]। तां भूमिमवि[13]-सृजन्। तस्या आत्मभूतः[14]। क्व[15]। स्विद्[16] वर्तते[17] तादृशः क इति। कः[18]। विद्वांसम्[19]। प्रष्टुम्। उप-

१. चक्रस्त्वादि ० P. स्तुत्यादि० M.

२. एवं प्रपञ्चस्य कालायत्ततां प्रतिपाद्य तस्य कारणभूतस्य परमेश्वरस्याविषयत्वमाह Sy.
देहात्मपक्षनिरासोऽत्र At.

३. ०स्तद् M. कः पुमान्? At.

४. द्रष्टुं शक्नुयात् Sy. पश्यति मन्यते व्याघातात् At.

५. कदा? प्रथमं सृष्टेः पूर्वम्। अव्याकृतावस्थायामित्यर्थः Sy. कारणमात्मानम् At.

६. प्रथममात्रविकारमापन्नम्। उत्पद्यमानं प्रपञ्चमित्यर्थः Sy. जायमानदेहचक्रमिति At.

७. पुरुषमस्थन्वन्तं P. अस्थिमन्तं शरीरम्। उपलक्षणमेतत्। कार्यभावमापन्नमित्यर्थः Sy. सावयवम् At.

८. दुर्ज्ञेयत्वे हेतुमाह।...यस्मात् Sy., At.

९. अस्थिरहिताऽशरीरा साङ्ख्यप्रसिद्धा प्रकृतिर्वेदान्तप्रसिद्धा, ईश्वरायत्ता माया Sy. अस्थिरहितो निरवयवः At.

१०. गर्भवदन्तर्धारयति। अव्याकृतावस्थायामनस्थोऽशरीरः परमेश्वरो बिभर्ति। यदा केवलः परमेश्वरो मायाशबलितः सन्निदं जगन्निर्मितवानुत्पत्तिसमये देहादिरहितस्य कस्यचिदभावात्को ददर्श Sy. धारयेदन्यथाऽनवस्था स्यात् At.

११. तदानीं मनो नित्यमात्मा च नित्यस्तत्संयोगात्कश्चिदात्मा जानातीति चेत्सोऽपि न सम्भवतीत्यत आह। भूम्याः सम्बन्धि पार्थिवं स्थूलशरीरम् Sy. यो निरवयव आत्मा भूम्याः पार्थिवादिधातोर्देहस्य At.

१२. ०का० D. युक्ताश्चा कलंकस्तां P. असुः प्राणस्तदुपलक्षितं सूक्ष्मशरीरम् Sy. असुः क्षेप्ता प्रवर्तकः At.

१३. इवसृ० D. असृक् शोणितम्। एतत्सप्तधातूपलक्षकम्। यद्यपि शरीरं पञ्चभूतात्मकं तथापि भूतद्वयप्रत्यक्षत्वात्तदपेक्षयोक्तम् Sy. अतश्चासृक् तद्वान्देहः At.

१४. आत्मा तैः सम्बद्धश्चेतनः Sy.

१५. क्वस्मि P. तादृशो देहेन्द्रियसङ्घातरूप आत्मा तस्मिन्समये कुत्रास्ति, प्रष्टा प्रतिवक्ता चोभावपि नास्ति, (न स्तः) इत्यर्थः। 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' (Bṛh. U. 4.3.23.) इति श्रुतेः Sy.

१६. स्विच्छब्दोऽसम्भावनायाम् At.

१७. आस्ते, न कश्चिदस्तीत्यर्थः। 'नान्यत्किञ्चन मिषत्' (AA. 2.4.1.) इति श्रुतेः Sy. स्यादेव At.

१८. Omitted by P.D. कः शिष्योऽल्पमतिः Sy. नन्वमुमर्थमेतैरेव त्रिभिर्हेतुभिः सर्वे कथं न विदुः पुरुषाः? शृणु। कः पुरुषः At.

१९. जगत्कारणविषयज्ञानवन्तमन्यं गुर्वादिकमेतत्कारणं प्रष्टुम् Sy. जानन्तमेतदात्मस्वरूपम् At.

गच्छति[1] भूमिः[2]=शरीरम् 'सूर्य आत्मा जगतस्तस्थुषश्च' इत्युक्तमिति[3]।

**पाकः पृच्छामि मनसाविजानन्देवानामेना निहिता पदानि ।**
**वत्से बष्कयेऽधि सप्त तन्तून्वि तत्निरे कवय ओतवा उ ॥५॥**

पाकः पृच्छामि। पक्तव्यप्रज्ञस्तत्[4]। मनसा[5] निरूपणेऽपि। अविजानन्[6]। पृच्छामि[7]। देवानाम्[8]। एना[9]। निहितानि[10]। आवासस्थानानि[11] 'सप्तर्तवो द्वादशमासाः पञ्चर्तवस्त्रय[12] इमे लोका असावादित्य एकविंश एतावन्तो वै देवलोकाः' इति ब्राह्मणम्[13]। वत्से[14]। एकहायने[15]। अधि[16]। सप्त। दीर्घसूत्राणि[17]। तिर्यक्सूत्रैर्[18]वातुम्[19]। कवयो[20] देवाः।

---

१. उपगच्छति। ... यद्वा प्रथमं प्रथमभाविनं जगतः कारणभूतं को ददर्श कः साक्षात्करोति जायमानमस्थन्वन्तं मनुष्यमनस्थिकः परमेश्वरः सशरीरमशरीरो यद्यस्माद् बिभर्ति। द्रष्टुरपि तत्कार्यत्वादिति भावः Sy.

२. ०मि M. (RV. I. 115.1[d].)

३. VM. ignores एतत्

४. ०व्यं प्र० D. पक्तव्योऽपक्वमतिरहम् Sy. पक्वोऽबालः प्रशस्तः At.

५. असंस्कृतेन Sy. सङ्कल्पविकल्पवता मनसा हेतुना At.

६. ०णेऽप्यवि M. अतिगहनं तत्त्वं विशेषेण ज्ञातुमशक्नुवन् Sy. सामान्येन जानन्नपि विशेषेण न जानन् निर्विशेष आत्मनि किं ज्ञातव्यम् At.

७. प्रश्नं करोमि Sy.

८. देवानामपि Sy. देवानामिति वेदानां, वर्णव्यत्ययात् At.

९. आ P. एनानि Sy., At.

१०. गूढानीत्यर्थः। यद्वा देवानां पदानि तत्त्वानि निधिवद् गोपायित्वा स्थापितानि। अतः पृच्छामि तत्त्वज्ञानोपयोगायेति शेषः Sy. निगूढार्थानि लक्षणया प्रवृत्तानि 'तत्त्वमसि' (Cha. U.6.8.7.) इत्यादीनि पृच्छामीत्यन्वयः At.

११. सन्देहास्पदानि तत्त्वानि Sy. ब्रह्मविष्णुरुद्राणां प्रसिद्धानि पदानि 'अस्य वामस्य' (RV. 1.164.1.) इत्यत्रार्थतः प्रसिद्धानि At.

१२. ०वः स्त्र० M.

१३. ०ण M. (Cf. TB. 3.8.10.3.)

१४. सर्वस्य निवासभूते Sy. पुत्रत्वमापन्ने At.

१५. वष्किति सत्यनाम। तत्कयतीति बष्कय आदित्यः। यद्वा बष्कयो नामैकहायनो वत्सः। पुनरपि वत्सशब्दस्य पृथङ् निर्देशाद् बष्कयशब्देन तत्कालमात्रं लक्ष्यते। तस्मिन्नादित्ये Sy. बष्किर्हि गत्यर्थः। सर्वे गत्यर्था ज्ञानार्थाः At.

१६. अति M. अधिकम् Sy. एवंपृष्टा गुरवो यद् ब्रूयुस्तदाह। अप्यधिकान्निष्कामान्काम्याननिषिद्धेतरान् At.

१७. तायमानान्सप्त सोमसंस्थान् Sy. सप्तधातूपलक्षांस्तन्तून् At.

१८. जगद्रूपतिर्यक्तन्तून् Sy.

१९. वातु P.M. वेतुम् Sy. अवितुं ज्ञापयितुम्, उ अभिमतं वस्तु At.

२०. मेधाविनो यजमानाः Sy. कवयो गुरवः At.

वितेनिरे[1]। संवत्सर ऋतवो निहितास्तेषामहोरात्रैर्वानमिति।[2]

**अचिंकित्वाञ्चिकितुषश्चिदत्र कवीन्पृच्छामि विद्मने न विद्वान्।**
**वि यस्तस्तम्भ षळिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥६॥**

अचिकित्वान्। अज्ञानन्नहम्[3]। विदुषः[4]। चित्[5]। अत्र[6]। कवीन्[7]। पृच्छामि। ज्ञानाय[8]। ननु[9]। विद्वान् विजिगीषया पृच्छामि[10]। यो देवः[11]। षट्[12]। इमान्[13]। ऋतून्[14]। वितस्तम्भ[15] मेधीभूतो[16] धारयति। तस्याजायमानस्य[17]। रूपे[18]। किम्[19]। अपि। स्विदस्ति, अनुवृत्तं रूपं किं स्विदस्ति। ऋतुशः[20]

---

१. वितन्नि॰ D. तत्नीरे P. वितन्वन्ति। यद्वा सप्त तन्तवः सप्त च्छन्दांसि, तानि वितन्वन्ति। किमर्थम्? ओतवै सप्त सोमसंस्थारूपतिर्यक्तन्तुसन्तानाय। यज्ञनिर्माणायेत्यर्थः। यज्ञानां स्थितेः सूर्याधीनत्वादिति भावः। ईदृशं तत्त्वं पृच्छामीत्यर्थः Sy.
विततान्विस्तृतान्यज्ञान् वितत्निरे। विशेषेण तन्वन्ति At.
२. VM. ignores उ
३. देवतातत्त्वमजानन्नहम् Sy.
अजानन् At.
४. विशेषेण तत्त्वं जानतः Sy.
सम्यग्जानतः At.
५. सम्यक् At.
६. अस्मिंस्तत्त्वविषये Sy.
७. क्रान्तदर्शिनोऽधिगतपरमार्थान् Sy.
ज्ञापने प्रौढान् At.
८. वेदनाय परमार्थज्ञानाय Sy. परोक्षज्ञानाय At.
९. नैव विद्वान्। शास्त्रश्रवणादिना विद्वानिव वर्तमानोऽप्यहं परमार्थतो नैव विद्वान् At.
१०. विद्वान् न पृच्छाम्यपि स्वज्ञानादेव Sy.
११. यः परमेश्वरः Sy.
योऽहम् At.
१२. यद्यपि लोकाः सप्त तथापि सत्यलोकस्य कर्मिणां सर्वेषां साधारणत्वाभावाद् षडित्युक्तम् Sy.
१३. इमानि Sy.
प्रसिद्धानि कामादीनि At.
१४. लोकान्रञ्जनात्मकान् Sy.
रजांसि मलानि रजोगुणकार्याणि वा पुण्यप्रसादात् At.
लोका रजांस्युच्यन्ते N. 4.19.
१५. वीत॰ P. स्तम्भितवान्नियमितवान्। 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय' (Cha. U.8.4.1) इति श्रुतेः Sy. विशेषेण तस्तम्भ, स्तम्भयिष्यामि At.
१६. मेधिभू॰ P. मेधीभू॰ D. M.
१७. ननु षडेवोक्ताः सप्तमः किमिति न निर्दिष्ट इति? उच्यते। अजस्य जननादिरहितस्य चतुर्मुखस्य ब्रह्मणः Sy.
अजस्य नित्यस्यात्मनः At.
१८. स्वरूपे Sy.
स्वरूपे जगति At.
१९. किं स्विदेव। तत्र केनाप्यधिगन्तुं शक्यमित्यर्थः। कंश्चिद्देवोपासकैरर्चिरादिमार्गेण गन्तव्यत्वादिति भावः Sy.
किं स्विदेकमेव रूपमादरणीयमपि स्विदनेकमेव रूपमादरणीयमिति सोऽहं पृच्छामि At.
२०. ॰शो P.

काल एक[1] उपलभ्यत इत्युत्तरमिति[2]।

**इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः।**
**शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥७॥**

इह ब्रवीतु। इह[3]=मत्समीपे। ब्रवीतु[4]। यः[5]। एनम्[6]। अङ्ग[7]। वेत्ति[8] कश्चन सम्बोधयत्य-ङ्गेति। अस्य[9]। वामस्यादित्यस्य[10]। गन्तुः[11]। यत् पदम्[12]। निहितं[13] यत्रायं पदं निवर्त्ते[14] तद्वत्तु[15] संवत्सरे-ऽस्य[16] पदं निहितमिति यद्वा संवत्सरः पदमस्य भवति। शिरस्तः[17]। क्षीरम्[18]। दुहन्ति[19]। गावः[20] काश्चित्।

---

१. एकं सत्यलोकाख्यं पुनरावृत्तिरहितं स्थानम् Sy.

२. ०त्युत्तार० M. यद्वा षड्रजांसि विलक्षणाः षड्तवः। तान्यस्तम्भयत्तत्त्वम्। अजस्य गमनशीलस्य जन्मरहितस्य वाऽऽदित्यस्य रूपे रूप्यमाणे दृश्यमाने मण्डल एक-मद्वितीयं किमपि स्वित्। यत्किञ्चिद-वाङ्मनसगम्यं तत्त्वमस्ति तत्पृच्छामि। 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (Cha. U. 1.6.6.) इत्यादिश्रुतिप्रतिपादितं तत्त्वमित्यर्थः। अथवा षडिमानि रजांसि त्रिविधान् भूलोकांश्च यस्तस्तम्भ। 'तिस्रो भूमी-र्धारयन्। त्रीरुत द्यून्' (RV. II. 27.8.) इति निगमः। तस्याजस्य परब्रह्मणो रूपे नानाविकारभाजि जगति किमपि स्विदेकमेकात्मकमस्तीति प्रश्नः। अविशेषमस्ति नाममात्रमेकरूपमस्ती-त्युत्तर—विवक्षया प्रश्नः। 'अस्तीत्ये-वोपलब्धव्यम्' (Ken. U. 2.6.13.) इति श्रुतेः Sy.

३. इदानीम् Sy. गुरुलक्षणमत्र। इह ब्रह्म-विद्यायाम् At.

४. वक्तु Sy.

५. Omitted by P.
वक्ता यः At.

६. एतद्वक्ष्यमाणं तत्त्वम् Sy. इदमात्म-तत्त्वम् At.

७. क्षिप्रमविचारेण Sy.
असन्दिग्धम् At.

८. जानाति At.

९. कीदृशं तत्? अस्य पुरतो दृश्यमानस्य Sy. किं वेद? तत्राह। अस्य प्रत्यक्षादिप्रसिद्धस्य At.

१०. वननीयस्य Sy. कुत्सस्य परिच्छिन्नस्य जीवस्य At.

११. गन्तुरादित्यस्य Sy. तथा वेः सुपर्णस्य परमात्मनो ब्रह्मणो यत्तदिति पदं लक्षणया प्रवृत्तं वेद स इह वक्तु स एव गुरुः स्या-दित्यर्थः At.

१२. सर्वैर्गन्तव्यं स्वरूपम् Sy. स्वमिति पदम् At.

१३. गूढं वर्तते Sy.
लक्षणया प्रवृत्तम् At.

१४. निवर्त्ते P.

१५. ०त P. ०वनु M.

१६. ०रस्य D.

१७. ०स्तद M. शिरोवदुन्नतस्य सर्वेषामुत्कृ-ष्टस्य वा Sy. किञ्चायमाभाणकोऽपि गुरुणा भवित्रा ज्ञेय इत्याह...शिरसः सकाशात् At.

१८. क्षीरमुदकम् Sy.

१९. क्षरन्ति Sy.

२०. केचन वर्षकालीना रश्मयः Sy.

अस्य[1] स्व[2]भूता नतु जघनार्धात्[3]। आच्छादकं[4] तेजोरूपम्[5]। वसानास्ता[6] गावः। उदकम्[7]। पादेन[8]। पिबन्ति[9] न त्वास्येनेति रश्म्य[10]भिप्रायः, रश्मयो हि विसृजन्त्या[11]ददते चोदकमिति।

**माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे।**
**सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥८॥**

माता पितरम्। काचिन्माता[12]। स्वपितरम्[13]। ऋतुकाले[14]। भेजे। अभिमुखम्[15]।

---

१. आदित्यस्य Sy. उक्तस्य पुरुषस्य At.
२. स्व is omitted by P. M.
३. ०नाद्धाद् M. ४. ०कः M.
५. रूपनामैतत् Sy. वरणीयं, विचित्ररूपवत्। रूपसहितं रोचनादिरागेण रञ्जितमरञ्जितरागद्वयवियुक्तं कमनीयं माञ्जिष्ठं वस्त्रम् At. ६. वा० M. आच्छादयन्तोऽतिविस्तरेण तेजसा तपन्तः केवलास्य गावो रश्मयः Sy. परिदधाना गावः At. ७. स्वसृष्टम् Sy.
८. सृष्टेनैव मार्गेण Sy. पादेन At.
९. भूमिं निरुदकां कुर्वन्तीत्यर्थः। तस्य स्वरूपं अवोचिदित्यन्वयः Sy. अन्तर्भावितण्यर्थोऽयम्। पार्थं पाययन्ति बोधयन्ति। अयमाभाणकोऽपि भवित्रा गुरुणा ज्ञेयः। आभाणकविवृतिस्तु तस्य जीवस्य शिष्यभावं गतस्य गावो वेदाः क्षीरं सारं ब्रह्मामृतरसं शीर्ष्णो उपनिषद्भागादूर्ध्वस्थानीयाद् दुहृते दुहन्ति स्पष्टं प्रतिपादयन्ति। कथम्भूताः? वव्रि सत्वरजस्तमोभिश्चित्रपटसदृशं त्रिगुणात्मकप्रपञ्चं ब्रह्मव्यतिरिक्तं वस्तु प्रतिपादयन्त्य इव वृण्वमानाः। परमार्थतस्तु सर्वत्र ब्रह्मपरत्वाद् ब्रह्मैव प्रतिपादयन्ति वेदाः। उदकम्, कं सुखमकं दुःखं तस्मादुद्गतं सुखमयं दुःखरहितं शुद्धं ब्रह्म पदैकदेशेनोपनिषद्भागेन स्वांशेन महावाक्येन वापुः पाययन्ति बोधयन्ति। ... यद्यपि सर्वोऽपि वेदो ब्रह्मपरः। किन्तु, सगुणेशविषयाणां तत्त्वार्थविवेचकत्वात्कर्मविषयाणां वेदानां त्वंपदार्थविवेचकत्वाद् ब्रह्मात्मैक्यपरवेदापेक्षितपदद्वयार्थप्रतिपादकत्वेनोपनिषदेकवाक्यत्वमेव। तथापि सगुणेशविषयकर्मविषयवेदमार्गेषु न स्पष्टा ब्रह्मधीरुपनिषत्सु स्पष्टा भवतीत्यभिप्रायेणोदकं पदापुरित्युक्तं न किञ्चिदप्यनुपपन्नम At.
१०. रम्यभिप्रायं P. M.
११. विव्रजत्यावदतो P.
१२. सर्वस्य निर्मात्री पृथिवी Sy. मायासम्बद्ध आक्षेपाशङ्कायामुच्युत्तरम्। नन्वाचार्योपदेशे किं भवति? जीवब्रह्मभेदिकाया मायाया निवृत्तिः। ननु सा माया स्पृष्ट्वा भिनत्त्यस्पृष्ट्वा वा? द्वितीयेऽनवस्था, अतिप्रसङ्गो वा। स्पृष्ट्वा चेत् कं स्पृशति? जीवं चेदितरेतराश्रयः। परस्पर्शोऽसम्भावितस्तं प्रति चोद्यं कार्यम्। मुखप्रतिमुखभेदके च दर्पणेऽप्येवं वाच्यम्। अत्राप्यस्पर्शेऽतिप्रसङ्गः। प्रतिबिम्बस्पर्शेऽन्योन्याश्रयः। असम्भवो बिम्बस्पर्शः। अत्रोत्तरमिदं, सन्निधिसत्तालक्षणेन सम्बन्धेन मुखं स्पृष्ट्वा प्रतिबिम्बाद्भिनत्ति दर्पणस्तर्हि प्रकृतेऽप्येवमित्यत्रोच्यते। माता सृष्टेर्जननी माया At.
१३. पालकं द्युलोकं तत्स्थं द्युलोकस्थमादित्यमित्यर्थः Sy. ईशम् At. १४. ०लैः M. ऋत उदके यज्ञे वा निमित्तभूते सति Sy. ऋते विना At. १५. आभजते Sy. संस्पृशत्यपि, आ बभाज ईषद्भजति At.

कर्मणा[1]। तस्यामृत:[2]। श्रद्दधानेन[3] मनसा[4]। सङ्गता[5] सीताऽऽसीत्। ततोऽनन्तरं[6] गृहीतरसा[7]। पितुः-सकाशान्मिथुनीभावेन[8] बीभत्समाना। पित्रा च मैथुनानन्तरं परित्यक्ताभूत्[9] ततः। अप्नवन्तो[10] मनुष्या[11] दरिद्रैः। उपवक्तव्यताम्[12]। अगच्छन्निति[13], आदित्यः पृथिवीमभिवर्षति वर्षासु तत्रैतदुक्तमिति[14]।

**युक्ता मातासीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वन्तः।**
**अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु योजनेषु ॥९॥**

युक्ता मातासीत्। काचिन्माता[15]। दक्षिणस्याम्[16]। धुरि[17]। पुत्रेण युक्ता[18]।

---

१. केन द्वारेण ?... धीत्या कर्मणा यागादिरूपेण । स्वकीयेनाऽऽप्यसोमादिहविषा तर्पयतीत्यर्थः Sy. सन्निधिसत्तालक्षणमिथ्यासम्बन्धमनुभवन्त्यपि धीती At.
२. ०त P. ततः पूर्वं पिता च Sy. प्रादौ At.
३. शूरंद० P. अस्यामभिप्रायवता Sy.
४. चेतसा Sy. कार्येण At. ५. संश्लिष्टो वर्तते खलु, वृष्टिमकरोदित्यर्थः Sy. सङ्गता बभूव At. ६. ०सीता सतो० P.D. ०सीता स्तुतो० M. हि ततः At.
७. सा माता ... गर्भरसेन गर्भोत्पत्तिनिमित्तेन रसेन Sy. सा च माया ... गर्भरसा रसः परमात्मा 'रसो वै स रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' (T.U.1.6.1.) इति श्रुतेः। गर्भो गर्भीकृतः प्रच्छादितो रसो यया सा गर्भरसा At.
८. गर्भबन्धनेच्छावती Sy. प्रपञ्चजननद्वारा बन्धनहेतुः। जुगुप्सितसंसारहेतुरित्येके। अभयस्यात्मनो भयजननीत्यन्ये At.
९. नितरां विद्धाऽऽसीत्। यद्वा। गर्भे रस ओषध्याद्युत्पादनसमर्थमुदकं यस्या सा तादृश्युदकेनात्यन्तं क्लिन्ना निविद्धा कृषीवलैर्हलमुखेन नितरां विदारिता भवति बीजवापार्थम्। अत्रायं समाधिः। या काचन योषिदपत्यार्थं स्वपति युवानं यौति स च तस्यामनुरागयुक्तः सङ्गतो भवति सा चान्तर्वत्नी सती पुत्राञ्जनयतीति तद्वदत्रापि Sy. नियतं विद्धं ताडनं तत्त्वज्ञानकृतं यस्याः सा निविद्धा। तत्त्वज्ञाननाश्येत्यर्थः At.
१०. भाविव्रीहिप्रियङ्ग्वाद्यन्नवन्त एव Sy. अनया च नमस्वन्तो नमनवन्तः सङ्कोचवन्तः At. ११. परिच्छिन्नमात्मानं मन्यमाना जीवा अज्ञानप्रयुक्ता एव At.
१२. ०ष्या० D. उपेत्य वचनं परस्परं सम्यगभिवृद्धानि सस्यानीति वचनम् Sy. उपवाकमप्रधानवाक्यं महावाक्यादितरत्कर्मविबोधकं वाक्यम् At.
१३. ०नि० P. प्राप्नुवन्ति। यद्वा हविर्लक्षणान्नवन्त उपेत्य वचनं प्रैषादिरूपमीयुः। वृष्टौ सत्यां सस्यादिद्वारा यागमनुतिष्ठेयुरित्यर्थः Sy. प्राप्नुवन्ति। तत्राधिकृतास्ते भवन्तीत्यर्थः At.
१४. VM. ignores हि। सा। इत्
१५. निर्मीयन्तेऽस्मिन्भूतानीति माता द्यौः Sy. माया निवर्तते। केन ? विद्यया। स प्रमा न वा ? न चेद्व्यर्था प्रमा। सत्या चेद् द्वैतम्। असती वृथा ... तदत्रोच्यते ... माता जगज्जननी मायाऽपि At.
१६. अभिमतपूरणसमर्थायाः पृथिव्याः Sy. प्रौढायाः संविद्रूपाया मुक्तेर्बलवत्या वोत्साहवत्या वा At. १७. निर्वहणे Sy. धूःस्थानीयान्तःकरणशोधके सत्त्वे At.
१८. योगनिरूपिणी चेत् At.

आसीद्[1]वर्षतेन[2] तस्यां मातरि। निधास्य[3]मानो गर्भः[4]। ओषिकासु कासुचिद्[5] दीप्तिषु[6]। वर्तते[7] इति दक्षिणायने वृष्ट्युन्मुख[8]मादित्यं दृष्ट्वा वदति। शब्दं[9] करोति। कश्चन वत्सः[10]। अनुपश्यति[11] च। गां मातरम्[12]। त्रिषु। योजनेषु[13] स्थिताम्। नानारूपाम्[14], 'अन्तरिक्षेण व्यवहिता भूमिरादित्यस्य त्रिषु योजनेषु भवति योजनशब्दो योगपर्यायः, यद्वाऽस्यां विश्वं भूतमधि[15] प्रजायते तेनेयं 'चित्रा' इति ब्राह्मणमिति[16]।[17]

**ति॒स्रो मा॒तॄस्त्रीन्पि॒तॄन्बि॒भ्रदेक॑ ऊ॒र्ध्वस्त॑स्थौ॒ नेमव॑ ग्लापयन्ति ।**
**म॒न्त्रय॑न्ते दि॒वो अ॒मुष्य॑ पृ॒ष्ठे वि॑श्व॒विदं॑ वाच॒मवि॑श्वमिन्वाम् ॥१०॥**

तिस्रो मातुः। दिवमन्तरिक्षं भूमिं च तिस्रः[18]। मातुः। तेषां पुत्रभूतः कश्चित्[19]।

---

१. वर्षणाय समर्थोऽभूदित्यर्थः Sy. भवति तिष्ठति । सत्त्वगुणस्था माया विद्यामुक्तिहेतुः At.

२. ०ष ते० M. ३. ०धान्य० P.

४. गर्भस्थानीय उदकसङ्घः Sy. विद्योत्पत्तौ किं भवति ? तत्राह । ...अन्तः, आन्तरो जागरस्थविश्वादान्तरः स्वप्नस्थतैजसस्तस्मादान्तरः सुषुप्तौ प्राज्ञस्ततोऽप्यान्तरस्तुरीयो नास्मादन्य आन्तरोऽस्तीत्यन्तर्गर्भशब्दाभ्यामुक्तः सर्वा(र्व)सर्वान्तरः। आन्तरेभ्यो विश्वतैजसप्राज्ञेभ्य आन्तरस्तुरीयः At. ५. काचिद् P.

६. उदकवत्सु मेघपङ्क्तिष्वन्तर्मध्ये Sy. बलवतीषु तिसृष्ववस्थासु At

७. तिष्ठति Sy. गतिनिवृत्तो भवति At.

८. वृष्ट्मु० P.

९. वर्षणसमये शब्दयति Sy. अन्वमीमेत् ... अनुगच्छेदनुसरेदभ्यसेत् At.

१०. पुत्रस्थानीय उदकसङ्घः Sy. पुत्रभावमापन्नः शिष्यः At.

११. अनुक्रमेण पश्यति वर्षतीत्यर्थः। यद्वा त्रिषु योजनेषु सत्सु वत्सो मेघो वर्षणाय गां भूमिं प्रत्यमीमेत्। अनन्तरं सर्वो जनोऽनुक्रमेण विश्वरूप्यं सस्यादिभिर्नानारूपवतीं भूमिमपश्यत्पश्यति Sy. अनन्तरम्...स पश्यतीति सूचितम्। युक्ता मातेति सम्बन्धः At.

१२. मातरि P. गां महावाक्यरूपिणीं वाचम् At.

१३. मेघरश्मिवायुषु संयुक्तेषु सत्सु Sy. योगेषु श्रवणमनननिदिध्यासनात्मकेषु सत्सु At.

१४. विश्वरूपवतीम् Sy. विश्वं रूपमस्येति विश्वरूप्यं सगुणं ब्रह्म तदस्मिन्नस्तीति ... प्रशस्तो विश्वरूपस्तद्वन्तं वा। विश्वानि तानि रूपाणि तद्वन्तं वा At.

१५. अभू० M.

१६. The passage beginning with अधि प्रजायते and ending with ब्राह्मणमिति is omitted by P.

१७. VM. ignores अन्तः

१८. सस्यवृष्ट्याद्युत्पादयित्रीः। क्षित्यादिलोकत्रयमित्यर्थः Sy. अथ तुर्यः प्रपञ्च्यते, लक्ष्मीगौरीसरस्वतीः At. तासां is suggested for तेषां

१९. एकः प्रधानभूतोऽसहायो वा पुत्रस्थानीय आदित्यः संवत्सराख्यः कालो वा Sy. मुख्यत्वेन परमात्मैव At.

शीर्वन्त। पितृन्[1] सूर्यं वायुमग्निं च। धारयन्[2]। ऊर्ध्वम्[3]। तिष्ठति[4]। नच[5]। तम्[6]। अवग्लपयन्ति[7] तेन ध्रियमाणाः[8]। स चायमादित्यो[9] यस्यामुष्य[10]। पृष्ठे[11]। विश्वस्य वेदमित्रीम्[12]। सर्वस्वाज्ञायमान-परिमाणाम्[13]। वाचं[14] स्वित[15]? कथयन्ति[16] 'सर्वा[17] वागादित्ये वर्तते' इत्यृषयः कथयन्ति[18]।

**द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य ।**
**आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥११॥**

द्वादशारम्। द्वादशमासारम्[19]। तच्चक्रम्[20]। नहि[21] कदाचित्[22]।

---

१. जगतां पालयितुंल्लोकत्रयाभिमानिनोऽग्निवायुसूर्याख्यान् Sy. विष्णुहरब्रह्मणः पुत्रत्वेन At. २. ध० D. बिभ्रत् सन् Sy. पुत्रत्वेन धारयन्नियमयन् At.
३. उन्नतोऽत्यन्तदीर्घः... सूर्यपथो सर्वेभ्य उन्नतः Sy. अवस्थात्रयात्परतस्स्थितस्तुरीयः At.
४. तिष्ठति भूतभविष्यद्वाद्यात्मना Sy.
५. एनम् Sy. मुक्ती... एनं तुरीयं मुक्तम् At. ६. अवकृष्य At.
७. The passage beginning with तिस्रो मातृः and ending with अवग्लपयन्ति is omitted by P. नच तम्। अवग्लपयन्ति is omitted by D. ग्लानि नैव कुर्वन्ति। नहि काल आदित्यो बाऽन्येन पराभूयते Sy. अज्ञानेन न पीडयन्ति At.
८. न P. ९. ०त्यस्त० D.M.
१०. आदित्यस्य सम्बन्धिनीं मन्त्रयन्त इत्यर्थः Sy. दिवो दीप्यमानस्यामुष्य परमात्मनः At.
११. दिवः पृष्ठे द्युलोकस्योपर्यन्तरिक्षे Sy. उपरिभागे तुरीये स्थितम् At.
१२. विश्ववेदनसमर्थां विश्वैर्वेदनीयां वा Sy. विश्वं जाग्रतं पुरुषं वेत्तीति (ताम्) At.
१३. सर्वस्वाज्ञा० P. ०ज्ञायम० M. असर्वव्यापिनीम् Sy. विश्वमिन् विश्वस्नेहस्त्रहिताम्... 'ञिमिदा स्नेहने' व्यत्ययेन मिच्छब्दस्य मिन्वा ताम्।... मिन्वऽच्छब्दः प्रधानवाचीत्यन्ये। अर्थतस्त्वेक एव तिष्ठति तात्पर्यतो विश्वमेत्यपनयतीति ताम्। तुरीयरूपेणावस्थापयन्तीमित्यर्थः। तुरीये संस्कारकल्पनाकल्पनाभ्यां तुरीयतुरीयातीतयोर्योगिवेदान्तिविप्रतिपत्तिरिति सञ्ज्ञामेवमात्रे विवादः At. १४. गर्जितलक्षणाम् Sy. महावाक्यरूपिणीं वाचम् At.
१५. स्वित P. स्थिताम् is suggested for स्वित
१६. गुप्तं परस्परं भाषन्ते देवाः Sy. तिस्रो मातरस्त्रयश्च पितरस्तुरीयमेकमुपविशन्तीत्याह। मन्त्रयन्ते गुप्तं भाषन्ते। एकान्त उपविशन्ति At.
१७. सर्वं P. १८. VM. ignores विद:
१९. द्वादशसङ्ख्याकमेषादिराश्यात्मकैर्मासात्मकैर्वाऽरै रथाङ्गावयवैर्युक्तम् Sy. 'त्रिनाभि चक्रम्' (RV. I. 164.2.) इत्यत्रोक्तं त्रिषु कालेषु मध्यमकालमाह। द्वादशारं द्वादश मासा अरा यस्य At. अराः प्रत्यृता नाभौ N. 4.27.
२०. शास्त्रान्तरप्रसिद्धम् At.
२१. पुनः पुनः क्रमणशीलं मण्डलाख्यं रथचक्रं वा Sy. कालचक्रम् At.
२२. नैव खलु Sy.

जरणाय[1] भवति[2]। तदिदं चक्रम्। आदित्यस्य[3] स्वभूतम्। दिवम्[4]। परितः। पुनः पुनर्वर्तते[6]। तस्मिन्नत्र[7] चक्रे[8]। पुत्रस्यानीयाः[8]। अहोरात्रात्मकत्वाद्[9] मिथुनभूताः[10]। सप्त। शतानि। विंशतिः[11]। चाहोरात्राणाम्[12]। तिष्ठन्ति[13] तमिममर्थमग्नेनिवेदयति[14] सिद्धार्थान्वाख्यानेषु[15] काञ्चन देवतामपि निवेशयन्तीति[16] वक्ष्यामः[17]।

**पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम्।**
**अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम् ॥१२॥**

पञ्चपादम्। पञ्चर्तुपादम्[18]। पितरम्[19]।

---

१. जरायै Sy. जरणाय योग्यं रक्षयितुं शक्यम् At.

२. भव P. P. adds अंश्च पितुन् सूर्यं वायुमग्निं च धारयन्नूर्ध्वंस्तिष्ठति नच तमवम्लपयन्ति after भवति।

३. ऋतस्योदकस्य सत्यात्मकस्य वाऽऽदित्यस्य Sy. सत्यस्य परमात्मनः सम्बन्धिनीम् At.

४. द्युलोकस्यान्तरिक्षस्य (द्युलोकमन्तरिक्षम्) परितः Sy. द्योतमानां ब्रह्मविद्याम् At.

५. ऋते विना वर्जयित्वा At.

६. सञ्चरति Sy. वर्तते। ब्रह्मविद्याया अभाव एव कालचक्रप्रभाव इत्यर्थः At.

७. The passage beginning with तदिदम् and ending with चक्रे is omitted by M. अत्रास्मिंस्त्वदीये चक्रे Sy. अत्र कालचक्रे At. अस्मिंश्च is suggested for तस्मिंश्च

८. तेस्था॰ P. पुत्रवदुत्पद्यमानाः प्राणिनां दुःखात्त्रातारो वा Sy. आ समन्तात् पुत्रा अवयवा अंशाः At.

९. ॰त्वा P.

१०. मिथुः P. मिथः M. ॰ता D. स्त्रीपुंसरूपेण परस्परं मिथुनभूताः Sy. अन्योन्यसङ्घट्टितरूपा मिथुनीभूता इव At.

११. ॰ति P.M. विंशत्युत्तरसप्तशतसङ्ख्याकाः।...षष्ट्यधिकशतत्रयसङ्ख्याकान्यहानि, तावत्य एव रात्रय इत्येवं तद्विभागः। 'सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एवोऽह्नःसम्मानः' (AA.3.2.1.) इत्यारण्यकम् Sy.

१२. अहोरात्ररूपाः Sy. रात्रिदिवसरूपाः At.

१३. निष्पद्यन्ते Sy. आतिष्ठन्ति At.

१४. तमित्यमग्ने॰ P. D.

१५. सर्वदा गमनयुक्तादित्य! यद्वा। अग्नेरेव स्थानत्रये तत्तदात्मना वर्तमानत्वादसावप्यग्निरित्युच्यते Sy. अग्रणीः At.

१६. ॰वेदय॰ M.

१७. VM. ignores आ। अग्ने

१८. पञ्चसङ्ख्याकर्त्वात्मकपादोपेतम्। एतद्धेमन्तशिशिरयोरेकत्वाभिप्रायम् Sy. अनेन प्रथमः काल उच्यते। तस्य कालस्य मूलप्रकृतिरेव देहः। तस्याः पञ्चावयवाः ...पञ्च पादा अंशा यस्य तं पञ्चपादम् At. पञ्चर्तवः पादा यस्य स पञ्चपादस्तम् SKN. ऋतवो हि संवत्सरस्य पादास्तैरसौ पतति गच्छति Dur.

१९. पितरन् M. सर्वस्य प्रीणयितारम् Sy. जगतां पितरम् At. पातारं वा सर्वस्य SKN. पालकं सर्वभूतानामुत्पादयितारं वा Dur.

द्वादशमासाकृतिम्[1]। दिवः[2]। आहुः[3]। परस्मिन्[4]। अर्धे[5] स्थितम्। उदकवन्तम्[6]। अथ[7]।
इमे[8]। अन्ये[9]। दिव उपरे[10] मूले[11] स्थितम्। विद्रष्टारम्[12]। सप्तर्तुचक्रे[13]। षडृत्वरे[14]।

---

१. P. adds विति तदिदं चक्रमादित्यस्य स्वभूतां दिवं परितः पुनः पुनर्वर्तते तस्मिंश्चक्रे पुत्ररं after द्वादशमासाकृतिम्।
द्वादश मासा एवाकृतयो यस्य तादृशम् Sy. द्वादशाकारम्। सृष्टिस्थितिसंयमार्थानि चत्वारि चत्वारि रूपाणि सन्त्यस्य। विष्णुपुराणाद्युक्तानि प्रकृतिविधात्रादीनि ब्रह्मप्राणिकर्तृकानि At. द्वादश मासा आकृतिराकारो यस्य स द्वादशाकृतिस्तम् SKN. द्वादशमासप्रविभक्तविग्रहम्। 'द्वादश मासाः संवत्सरस्य' (Cf. AB. 1.28.) इति च ब्राह्मणम् Dur. २. द्युलोकस्य Sy., SKN. दिवस्तत्त्वज्ञाः At.

३. अर्पितमाहुः। एतदुत्तरत्र स्थितमत्राप्यनुषज्यते। यद्यत्रार्पितं तत्तदर्धानमतः संवत्सरं सूर्यायत्तमाहुरित्यर्थः Sy. अर्पितमित्येतदनुषङ्गः स्यात्तेनादित्यमाहुरर्पितं केचित् SKN. ४. तात्स्थ्यात्ताच्छब्द्यम्। परस्मिन् Sy. कतिपय इतरे तत्त्वविदस्तु At. अपरे SKN.

५. अर्धेऽन्तरिक्षलक्षणेऽवस्थित आदित्य इत्यर्थस्तस्मिन् Sy. तात्स्थ्यादत्र ताच्छब्द्यम्। 'मञ्चाः क्रोशन्ति' इति यथा। परस्मिन्नर्धे यः स्थित आदित्यस्तत्रेत्यर्थः SKN.

६. वृष्ट्युदकेन तद्वन्तं प्रीणयितारं वा। पुरीषमित्युदकनाम। उक्तलक्षणं संवत्सरचक्रम् Sy. उदकवन्तमब्धिशायिनं नारायणं पञ्चपादादिगुणमाहुः। 'दिव आहुः परे अर्धे पुरीषिणम्' (RV. I. 164. 12b.) इत्यस्याल्पार्थं वदन्ति केचित्, पुरीषशब्देनाविद्यावान्तरापि च्छाया जीवास्योच्यते, तद्वन्तं सूत्रात्मकं नारायणं दिवः स्वर्गलोकस्य पर उत्कृष्टेऽर्धे भागे वैकुण्ठाख्ये लोके At. वृष्ट्युदकेन तद्वन्तं संवत्सरमाहुः SKN. ७. अपि च Sy. अनन्तरम् At. ८. इमे प्रसिद्धाः At.

९. अन्ये केचन वेदवादिन एवमाहुः Sy. एक आचार्याः At. १०. उपरि M.

११. उपरमन्तेऽस्मिन्नुपरताः प्राणिनोऽत्रेति वा, उपरः संवत्सरस्तस्मिन् Sy. अद्रीत्यादिषु। निघण्ट्वादौ त्रिंशन्मेघनामसु मध्य एकोनविंशतिनामानि पर्वतस्याप्यभिहितानि भवन्तीति सम्प्रदायज्ञा आहुः। अपरे कैलासादिके सन्तम At. उपरि स्थितमिति शेषः SKN. उपर्यवस्थिताः Dur.

१२. The passage beginning with दिवः and ending with विद्रष्टारम् is omitted by P. विविधदर्शनकरमादित्यम् Sy., SKN. विचक्षणं विश्वरूपाख्यं यद्वं तमाहुः At. विविधानां सर्वभूतकर्मणां द्रष्टारम् Dur.

१३. सप्तादित्यरश्मयस्तद्द्वारेण चक्रस्यानीया यस्य स तथोक्तः। यद्वा। अयनर्तुमासपक्षाहोरात्रिमुहूर्तानि सप्त सप्त चक्राणि पुनः पुनः क्रममाणानि यस्य तादृशे Sy. सप्तदशे महदादिसप्तपरिधौ At. चक्रनाच्चरणात्क्रमणाच्चक्रा रश्मयस्ते सप्त, आदित्यद्वारेण सम्बन्धिनो यस्य स सप्तचक्रस्तस्मिन् SKN. अथवा सप्तचक्र आदित्यः। स हि सप्तभी रश्मिभिश्चक्रते दीप्यते Dur.

१४. षड्वृत्वरे P. षड्ऋत्वरे M. षड् ऋतव एवारा नाभौ प्रत्युताः सम्बद्धा यस्य तथोक्तलक्षणे संवत्सरे रथे Sy. षड्नुपरिधौ वर्तमानेन मध्यमेन चराचरादौ ब्रह्माण्डे At. षड्भिररभूतैर्युक्ते तस्मिन्संवत्सरचक्रे SKN.

अर्पितम्[1]। आहुः[2], सोऽयं देवताभूतः पृथिव्याः पर्यन्ते दृश्यते ततो दिवीत्युभयथा वादः।

**पञ्चारे चक्रे परिवर्तमाने तस्मिन्ना तस्थुर्भुवनानि विश्वा ।**
**तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः ॥१३॥**

पञ्चारे। हेमन्तशिशिरयोः समासेन पञ्चारे[3]। संवत्सरचक्रे[4]। परिवर्तमाने[5]। तस्मिन्[6]। आतिष्ठन्ति[7]। सर्वाणि[8]। भुवनानि[9]। तस्य चक्रस्य[10]।

---

१. अर्पिम् P. अधिकृतम् At. यद्यदर्पितं तदधीनं तद्भवति, अतोऽत्रार्पितत्वेनाधीनत्वं लक्ष्यते, अधीनमाहुः SKN. एवमेके संवत्सरमादित्यप्रविष्टमाहुः Dur.

२. आहुः । एतदुक्तं भवति । अमुमादित्यं दक्षिणोत्तररूपभिन्नगतेस्तीव्रमन्दादिभावस्य च कालाधीनत्वात्तदधीनमाहुः । अन्ये तु संवत्सराद्यात्मकस्य कालस्य सूर्यगमनागमनसाध्यत्वात्तदायत्तत्वमाहुरिति Sy. ब्रह्माणं तमाहुः At. केचित्संवत्सरमादित्यस्यायत्तमाहुः । अन्य आदित्यं संवत्सरस्य । कथम्पुनः संवत्सर आदित्यायत्तः, आदित्यो वा संवत्सरस्य ? उच्यते । संवत्सरस्तावदहोरात्रनिर्वर्त्यः । तेन स तस्यायत्तः । आदित्यस्यापि संवत्सरावयवभूतैर्ऋतुभिस्तावदस्य तीव्रत्वमन्दत्वे क्रियेते । गतेश्च कालवैषम्यं, दक्षिणोत्तरादिदिग्गमनभेदश्च । अतः सोऽपि संवत्सरायत्तः SKN. एवमेतस्यामृच्यादित्यसंवत्सरौ स्तूयेते Dur. This stanza is explained in N. 4. 27; SKN. II. 283.

३. पञ्चर्तुरूपैररैर्युक्ते Sy. एवंविधकालाख्येऽधीशानं लिङ्गदेहमाश्रितः सर्वसंसार इत्युच्यते ।... कर्मेन्द्रियाणि, ज्ञानेन्द्रियाणि, तन्मात्राणि, प्राणाश्चान्तःकरणानि चेति राशयः। एवं पञ्चावयवा अस्य (तस्मिन्) At. इत्यत्र तावत्पञ्चर्तुतया। ... ऋतवः पञ्च हेमन्तशिशिरौ(रयोः) तुल्यप्रभावत्वात्समासेनैकः। इतरे चत्वारस्तेऽरभूता यस्य तत्(सः) पञ्चारस्तस्मिन् SKN. पञ्चर्तुतया संवत्सरस्य स्तुतिः। ऋतवोऽरत्वेनाभिप्रेताःDur. इति पञ्चर्तुतया। 'पञ्चर्तवः संवत्सरस्य'(AB.1.1.14.)इति च ब्राह्मणम्। हेमन्तशिशिरयोः समासेन N.4.27.

४. सप्तच P. चक्रे संवत्सरात्मके Sy. तत्करोति चक्रम् । कुम्भः केचित् । लिङ्गशरीरमेकमेव कर्तृ न त्वात्मा। अविवेकादात्मनि कर्तृत्वं प्रतीतम्। यद्वा चरतीति चक्रम् । रूपसिद्धिरभ्रेया । लिङ्गधारक(त्व)मेव लोकान्तरसञ्चारित्वमात्मन इत्युक्तं भवति। तस्मिन् ... चक्रे At. चक्रे संवत्सराख्ये SKN. ५. संवत्सरपरिवत्सरादिरूपेण पुनः पुनरावर्तमाने सति Sy. लोकान्तरं वाञ्छति सति At. परिगृह्येदं सर्वं जगद् वर्तमाने Dur.

६. कालचक्रे Sy. परोक्षे At. प्रकृतप्रतिनिर्देशोऽयम् । पूर्वस्यामृचि ... यत्प्रकृतं तस्मिन् SKN. ७. वर्तन्त इत्यर्थः Sy. आधारीकृत्य तिष्ठन्ति At. आस्थितान्यारूढानीत्यर्थः SKN. अधिरूढं बभ्रमीति Dur. ८. D. repeats सर्वाणि सर्वाणि। सर्वमेवेदम् Dur.

९. भूतजातानि Sy., SKN. स्थूलशरीराणि तस्य च भावविकारा इति At. जगत् Dur. १०. तस्य चक्रस्य मध्ये वर्तमानः Sy. तस्य चक्राख्यस्य लिङ्गस्य At. अथैवमतिमहताऽपि सर्वभूतचक्रेणाक्रान्तस्य कालचक्रस्य Dur.

अक्षभूत आदित्यः[1]। न कदाचित्। तप्यते[2] न नमति[3]। भारमहत्त्वेऽपि[4]। न च। शीर्यते[5]। चिरात्[6]। एवारभ्य[7]। नाभिसहितो[8] लौकिकं चक्रं नाभिपरिवर्तने शीर्णं भवति[9]।

**सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति ।**
**सूर्यस्य चक्षू रजसैत्यावृतं तस्मिन्नार्पिता भुवनानि विश्वा ॥१४॥**

सनेमि चक्रम्। मुहूर्ता नेमयस्तद्युक्तम्[10]। जरावर्जितम्[11]। कालचक्रम्[12]। विवर्तते[13]। युक्ताः[14]।

---

१. अक्ष P. P. adds च आहुः परस्मिन्नर्थे स्थितमुदकवन्तमयेमे अन्ये विव उपरे मूलं स्थितं विव्रष्टाम्यः after अक्षभूतः। अक्षो भ्रामक आधारः प्रथमकालः। शुद्ध आत्मा प्रधानञ्चेत्येके At. अक्षभूत आदित्यः SKN. अग्रमक्षः संवत्सराख्यः Dur.

२. न पीड्यते Sy. न भ्राम्यति न कदाचिदपि नश्यति At. नैव . . . तप्यते। न सन्तापयति। नापयास्यतीत्यर्थः Dur.

३. नुमति M.

४. सकलभुवनवहनेन प्रभूतभारोऽपि Sy. भूरीणां भर्ता। आधारनाशे सर्वशून्यता स्यादित्यर्थः At. बहुभारेण सर्वभूतैर्बहुभारोऽपि SKN. एवमपि बहुभारः सन् Dur.

५. न भिद्यते Sy. न नश्यति। परमार्थतो न देहत्रयधर्मेण युज्यते, जीवात्मनाशे कृतनाशाभ्यागमप्रसङ्गः At. न वा तप्तोऽपि सन् सहसैव नश्यति Dur.

६. सनातन एव Sy. सर्वदैव At. पुराण एव SKN. चिरन्तन एव सः Dur.

७. The passage beginning with आदित्यः and ending with एवारभ्य is omitted by P.

८. समाननाभिकः सर्वदैकरूपनाभिरसौ Sy. चक्रस्य लिङ्गस्य नाभावेव वर्तमानोऽपि जीवात्मा At. सह नाभ्या, नाभिस्त्रय ऋतवो ग्रीष्मो वर्षा हेमन्त इत्येते। आदित्यमण्डलं वा SKN. अक्षः Dur.

९. यथा लौकिकरथाक्षो भारेण भग्नो भवति। अक्षघातेन च नाभिर्विधुता भवति तद्वदत्रापि नास्तीत्यर्थः Sy. This stanza occurs in N. 4. 27; SKN. II. 282.

१०. नेयमस्त० P. ०स्तद्यु M. समाननेमि। एकप्रकारबहिर्वलयमक्षीणनेमि Sy. अनेनान्यदपि जगच्चक्रमस्तीति प्रासङ्गिकं यदन्वेदः सर्वमुक्तिपक्षं निराचष्टे। . . . नेमिशब्दोऽर्धवाची। इह जगति प्रकृतिः पुरुषश्चार्धे विद्येते। तदंशत्वेन जडाजडप्रपञ्चौ नेमिनी ताभ्यां सहितं कृत्स्नं जगत्सनेमि। नेमिभिर्नेतृभिः। परिच्छिन्नैः सङ्कुचद्भिर्जीवैः सह वर्तमानं जगदित्यर्थः। अन्ये त्वाहू रथनेमिरिव जडप्रपञ्चस्योपरि स्थितश्चेतनप्रपञ्चो नेमिस्तेन युक्तं जगच्चक्रम् At.

११. सदातनमपि जरारहितम् Sy. अजरमनश्वरम्। आत्मज्ञानासङ्गाय इति शेषः। अनेन जगच्चक्रस्य प्रवाहनित्यतोक्ता At.

१२. ०लं च० M. चक्रं संवत्सराख्यम् Sy. जगच्चक्रम्। 'भ्रमतीति वा चरतीति वा चक्रम्' इति शाकपूणिः। पुनः पुनरुत्पत्त्यादिधर्मैर्युज्यमानमित्यर्थः At.

१३. पुनः पुनर्विशेषेण वर्तते Sy. विवर्तते विवर्तोऽयं प्रपञ्चो न परिणाम इत्यर्थः At.

१४. स्वस्वव्यापारयुक्ताः Sy. योगाः At.

दश[1] दिशा[2]स्तच्चक्रम्। अस्यां भूम्याम्[3]। वहन्ति[4]। सूर्यस्य[5]। दर्शनसाधनं[6] तच्चक्रम्। उदकेन[7]। परि-वृतम्[8]। एति[9]। तस्मिन्[10]। सर्वाण्येव। भुवनानि[11]। अर्पितानि[12], सूर्यस्तस्मिंश्चक्रे[13]ऽर्पितैरहोरात्रैः सर्वाणि भूतानि[14] पश्यति।

**साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति।**
**तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥१५॥**

साकञ्जानाम्[15]। सह जातानां मिथुनभूतानाम्। सप्तथमृतुम्[16]। एकजम्[17]। आहुः[18]। षट्।

---

१. यमेन्द्रादयः पञ्च लोकपाला निषाद-पञ्चमाश्चत्वारो ब्राह्मणादयो वर्णा मिलित्वा दशसङ्ख्याकाः Sy.
आत्मानुसन्धानसिद्ध्यर्थं दशसङ्ख्याकाः At. २. यु...द० M.
३. ऊर्ध्वतनायामीषायामुपरि विस्तृतभूम्यां वा Sy.
विवर्तनिवृत्तिहेतुं कथयति। ... ऊर्ध्वं ब्रह्मविद्यायाम्। उद्रूर्ध्वमात्मानं तनोतीत्युत्ताना ब्रह्मविद्या। निमित्तसप्तम्येषा। अविद्यानिवर्तकब्रह्मविद्योत्पत्त्यर्थ-मित्यर्थः At.
४. निर्वहन्ति। कृत्स्नं जगन्निर्वहन्तीत्यर्थः। तन्निर्वाहार्थत्वात्कालस्य Sy. अनुवर्तन्ते। निर्वहणीयाऽनुवर्तनीयेत्यर्थः At.
५. आदित्यस्य Sy. तदा च सूर्यस्य परमात्मनः At.
६. चक्षुः ख्यानस्वभावं सर्वस्य चक्षुःस्थानीयं वा मण्डलम् Sy. ज्ञापकं ज्ञानम् At. चक्षुः ख्यातेर्वा चष्टेर्वा N.4.3.
७. वृष्ट्युदकेन Sy.
तत्पूर्वं संशयविपर्यासाऽसम्भावनामलेन At. उदकं रज उच्यते N.4.19.
८. व्याप्तम् Sy. आवृतमाच्छादितमनु-त्क्रूतमासीत् At.
९. गच्छति Sy. आगच्छति At.
१०. तादृशे मण्डले Sy.
तस्मिंश्चक्षुषि ज्ञापके ज्ञाने At.
११. भूतजातानि Sy. जगन्ति At.
१२. अर्पितानि, तदधीनत्वात्तेषाम् Sy. विलीनानि भवन्ति At.
१३. ०स्तद्यस्मिन् च० M. ०क्रेऽर्पितैर० P.
१४. भुवनानि P.
१५. ०नां P. एकस्मादादित्यात्सहोत्पन्नानां सप्तानामृतूनां मध्ये Sy. 'पञ्चारे' (RV.I.164.13.) इत्यत्र लिङ्गं वक्तुं प्रसक्तं, 'सनेमि' (RV.I.164.14.) इत्यत्रानुप्रसक्तं स्थूलशरीरं विविच्योच्यत इति लिङ्गमाहुः। ...देहेन्द्रियादिभिः सार्धं जायमानमिवानं ब्रह्म यस्मिन् (तत्)। नेदं षष्ठीबहुवचान्तं पदम् At.
१६. 'षप गतौ' षत्नोपश्छान्दसः। सप्तापि लोकान्सपति गच्छतीति सप्तथम् At.
१७. एककम् M. एकेनोत्पन्नम्। ...चैत्रा-दीनां द्वादशानां मासानां द्वयमेलनेन वसन्ताद्याः षडृतवो भवन्ति। अधिक-मासेनैक उत्पद्यते सप्तमर्तुः। नच तादृशो मास एव नास्तीति मन्तव्यम् 'अस्ति त्रयोदशो मास इत्याहुः' (TS. 6.5.3.4.) इति श्रुतेः Sy.
कारणशरीरात्परं लिङ्गं तु तेनैव जायत इत्येकजम्। द्वाभ्यां जायत इति द्विजं स्थूलशरीरम् At.
१८. आहुः कालतत्त्वविदः Sy.

एवं[1]। द्वाभ्यां मासाभ्यां संयुक्ताः[2]। सर्वस्य द्रष्टारः[3]। संवत्सराद् देवाज्जाताः[4][5]। इति[6]। तेषामृतूनां[7] सम्बन्धीनि। सर्वेषामिष्टान्यृतुलिङ्गानि[8]। स्वे स्वे काले निहितानीमानि[9]। स्थाने[10]। संवत्सराय[11] पुनः पुनरावर्तन्ते[12]। रूपशः[13]। विकृतानि नानारूपाण्यृतुलिङ्गानि[14] संवत्सरे पुनः पुनरावर्तन्त[15][16] इति[17]।

**स्त्रियः सुतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदुन्धः ।**
**कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत् ॥१६॥**

स्त्रियः सतीः। स्त्रीपुंविभागः शरीरकृतो नात्मभूते सूर्ये स विशेषो भवतीति[17] पश्यन्[18] वदन्त्य[19]-

१. इत्थञ्च एवकारार्थः Sy.

२. ऋतवो मासद्वयरूपाः Sy. अथ लिङ्गदेहावयवानाह ... ज्ञानकर्मेन्द्रियरूपेण युगलरूपाश्शब्दाद्या इन्द्रियार्थाश्च At.

३. गन्तारः Sy. ऋषयः प्राणाः। 'प्राणा वाव ऋषयः' (Cf. ŚB.6.1.1.1.) इति श्रुतेः At.

४. देवादादित्यात् Sy.

५. ०रा देवा ज्ञा० P.D. सप्तमाधारस्य त्रयोदशस्य मासस्य देवाभावः। 'निःसूर्योऽधिकमासो मण्डलं तपते रवेः।' इत्यादिस्मृतेः। तस्मात् षडेव देवजा अदेवज एकः Sy. आकाशजं श्रोत्रजातं वाक्च, वायुजौ त्वक्पाणी, तेजोजं चक्षुःपादम्, अब्जं रसनोपस्थं, भूजौ घ्राणपायू, उभयेन्द्रियात्मकमनेकभूतजं मन एवमेकादशेन्द्रियाणि भवन्त्युक्तानि At.

६. एवमाहुः Sy.

७. ऋतूनां स्वरूपाणि Sy. यमादीनां लिङ्गावयवानाम् At.

८. ऋष्टा० P. सर्वलोकाभिमतानि Sy. एत्रणस्थानानि विषयरूपाणि गन्धादीनि At.

९. इमानि is omitted by P. D. पृथक् पृथक् स्थापितानि Sy. विधिप्रतिपादितानि चेत् At.

१०. तत्तत्स्थाने Sy. धामनि धामनि स्वर्गादिके स्थाने स्थाने, वैदिके ज्ञाने ज्ञाने वा At.

११. जगद्व्यवहाराय पुनः पुनरावर्तन्त इत्यर्थः Sy.

१२. चलन्ति Sy. उपयुज्यन्ते स्थातारमात्मानं बद्धुम् At.

१३. रूपभेदेन। ... स च रूपभेदस्तैत्तिरीयैराम्नातः। 'स रसमह वसन्ताय प्रायच्छद्यवं ग्रीष्माय' (TS. 7.2.10.1.) इत्यादि Sy. रूपं रूपमनेकदेहग्रहणमित्यर्थः At.

१४. विविधाकृतियुक्तानि Sy. तानि चेद्विकृतानि काम्यानि वा निषिद्धानि वा At.

१५. स्थात्रेऽधिष्ठात्रे तदर्थाय Sy. स्थायिने, स्थिरं स्थातारमात्मानं मोचयितुम् At.

१६. VM. ignores स्थात्रे

१७. इति is omitted by P.

१८. पश्य P.

१९. ०न्त्य० P. पूर्वजन्मनि सिद्धानां स्त्रीणामन्यादीनां चात्राधिकार उच्यते At.

नात्मविदाम्— स्त्रियः[1]। सतीः[2]। इमाः[3]। मम[4]। तत्त्वविदः[5] पुंसः[6]। आहुस्त[7]मिममर्थम्[8]। चक्षुष्मानेव[9]। जानाति[10] प्राज्ञः। न पुनः। अन्धः[11]। विजानाति[12]।

---

१. संस्त्यानवत्यो योषितः Sy. स्त्रियोऽपि At. स्त्रीत्वपुंस्त्वयोरेकत्रासम्भवात्स्त्रीशब्दोऽत्र क्रियानिमित्तस्त्रातुर्वाचकः पुंशब्दोऽपि पुरुमनसः SKN. त्रायतेः पालनार्थस्यात्र स्त्रीशब्दो निरुच्यते। पालयित्र्य एवैताः सत्यः कृत्स्नस्य जगतः। एत एव रश्मयो नाडीभिराध्यात्मिकीभिरनुप्रविश्य प्राणिनां शरीराण्युपपक्ति कुर्वन्ति। ततः स्थितिरुपजायते। एत एव वर्षप्रदानेन कृत्स्नं जगत्त्रायन्ते तस्मात्त्राणात्स्त्रिय एताः Dur.

२. सत्यः। योषिद्वदुदकस्यगर्भधारणात्स्त्रीत्वम्। एषां रश्मीनामाविष्टलिङ्गत्वात्स्त्रीलिङ्गता Sy. परमात्मनः सतीः सम्बन्धिनीरात्मविद्याप्रवणाः At. तमोऽपनयनान्नपक्त्यादिना कृत्स्नस्य जगत इत्यर्थः SKN.

३. तान् उ तान् रश्मीनेव Sy. अत्यन्तोत्कृष्टान्। उकारोऽत्र पूरणार्थः At. रश्मीन्। उ इति पदपूरणः SKN. तानेवं लक्षणान्रश्मीन्पालयितॄन्सतः Dur.

४. मदीया या वीचितयः Sy. मम ब्रह्मविस्त्वेन At. मह्यम् SKN. मम Dur.

५. स्ववि० P. D. ब्रह्मविदः SKN.

६. प्रभूतवृष्ट्युदकसेक्तॄन् पुरुषानाहुः। प्रतिनिर्देशापेक्षया पुंल्लिङ्गता Sy. पुरुषान् At. पुरुमनसो बहुमनस आत्मादिविषयस्य मननस्य ज्ञानस्य कारणभूतानित्यर्थः SKN. एतान्पुंसः Dur.

७. आहुः . . . कथम्? आदित्यान्तरपुरुषो हि बुद्ध्यधिदैवतं, तदवयवभूताश्च रश्मयः। तेनैते बुद्धिमधिष्ठाय ब्रह्मविदः सर्वानात्मादीनर्थान्प्रकाशयन्ति। अत उच्यते बहुनो ज्ञानस्य कारणभूतानाहुरिति SKN. एत एव रश्मयो बहुप्रज्ञाना इत्येवं ब्रह्मविद आहुः। एत एवान्नपक्त्यादिनोपकारेणोपकुर्वन्तो जगत्त्रायन्ते। एत एव बुद्धेः सर्वार्थप्रकाशित्वेनोपकुर्वन्तीत्यभिप्रायः। आदित्यान्तरपुरुषो हि बुद्ध्यधिदेवता। तदवयवभूताश्च रश्मयः। ते नाड्यन्तर्गता अध्यात्मपुरुषस्य विज्ञानमुपाहरन्ति। अतस्तेषां बहुप्रज्ञानत्वमुपपद्यते Dur.

८. अमुमर्थमत्यन्तनिगूढम् Sy. तांश्च SKN. ताभ्यां गुणाभ्यां युक्तान् Dur.

९. चक्षुष्मा० P. ज्ञानदृष्ट्युपेतः कश्चिन्महान् Sy. चक्षुष्मानेवासौ। ब्रह्मविद्यायां जात्यन्धनियमनिर्बन्धो नास्तीत्यर्थः At. प्रज्ञशब्देनात्र ब्रह्मज्ञानमुच्यते। क्षितायुकरत्वाद् ब्रह्मज्ञानवान् SKN. योऽक्षण्वान्भवति दर्शनवान्विज्ञानवान्वेदार्थविज्ञानेनोपजनितप्रज्ञः स एव Dur.

१०. ०तिनि M. एवं जात्यन्धस्यापीत्याह। . . . पश्यति चेद् ब्रह्म At. पश्यन्ति SKN. पश्यत्यास्ते नित्यकालं नित्ययुक्तत्वात् Dur.

११. अतथारूपः स्थूलदृष्टिः Sy. अन्ध एवासौ At. अन्धस्तद्रहितः सन् SKN. इतरस्तु योऽन्धोऽध्यानवानश्रुतवेदोपनिषत्कः Dur. तमोऽप्यन्ध उच्यते। नास्मिन्ध्यानं भवति। न दर्शनम्। अन्धन्तम इत्यभिभाषन्ते। अयमपीतरोऽन्ध एतस्मादेव N.5.1.

१२. न विचेतयति न जानाति Sy. ब्रह्मविद्यां न वेत्ति चेत् At. न विजानाति SKN. स मन्दबुद्धित्वान्नैतान्याथात्म्यतः पश्यति। न विजानातीत्यर्थः Dur.

विद्वान्[1]। यः। कस्यचित्[2] पुत्रो भवति। सः। इममर्थम्[3]। आजानाति[4]। यः[5]। तान्येतानि भूतानि। एवं[6] वेद[7]। स जानातिशयेन[8]। पितुः[9]। पिता[10]। भवति[11] न तु[12] पुत्र इति[13]।

---

१. यः कविः क्रान्तदर्शी Sy. तत्त्वज्ञो यः At. मेधावी यः SKN. यः पुनरेवमेतान्याधात्म्यतः पश्यति स एव क्रान्तदर्शनो भवति परिनिष्ठितविद्य इत्यर्थः Dur. २. स्त्रीपुरुषरूपाणां रश्मीनां पुत्रस्थानीयः, पुत्र जगतां त्राता वृष्ट्युदकलक्षणोऽस्ति Sy. बहुनोंऽहस आत्मज्ञानस्य त्राता परिनिष्ठितविद्यश्चेत्यर्थः SKN. स च परिनिष्ठितविद्यत्वादेव बहुनोंऽहसस्त्राता Dur.

३. स एव पुत्रः। यद्वा। ईमिनमर्थम्। स्त्रीणां सतीनां पश्चात्पुरुषभावम् Sy. इदमात्मतत्त्वम् At. स तान्, ईमिति पदपूरणः SKN. स एवैतानेवम् Dur.

४. सर्वतो जानाति। पित्रोः स्थितिं पुत्र एव जानाति नान्यः Sy. आज्ञापयतीति स गुरुः स्यादेव। ज्ञापको हि गुरुर्ज्ञानेनैव ज्ञापयति At. जानाति नेतरः SKN. आभिमुख्येन यथावत्पश्यति नेतरो मूढः Dur. ५. यः कश्चित् . . . तानि Sy. पुत्रत्वात् पितरं प्रत्यनुपदेष्टृत्वमिति चेत् तत्राह यस्तावदात्मतत्त्वम् At. यश्च तान् SKN. यश्च तानेवम् Dur.

६. स्त्रीपुरुषपुत्ररूपाणि जानीयात् Sy. विजानाति At., SKN. पश्यति Dur.

७. तं P. ८. जाना॰ P.

९. पिता वृष्ट्या जगत्पालको रश्मिसमूहस्तस्यापि Sy. पितुरपि At., SKN, Dur. १०. पिता, आदित्यः सः Sy. पितृस्थानीयः पालयिता वा SKN.

११. आदित्य एव भवतीत्यर्थः। यद्वा लौकिकोक्तिरियम्। यस्तानि जानाति स एवं भवति। स्वयं पितुः पुत्रः सन्नपि स्वपुत्रापेक्षया पिता च भवति। पुत्रपौत्रादिसहितश्चिरकालं जीवी भवतीत्यधिदैवतम्। अथाध्यात्मम्—या इदानीं स्त्रियः सतीः स्त्रीत्वं प्राप्ता आहुर्लौकिकास्तान् उ तानेव मे मह्यं पुंसः पुरुषानाहुः प्रतिपादयन्ति तत्त्वज्ञाः। कथमन्यस्यान्यभावः? उच्यते। एकस्यैव निरस्तसमस्तोपाधिकस्यात्मनस्तद्देहावस्थानमात्रेण तत्तद्व्यपदेशोपपत्तेः। श्रूयते हि 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी' (Sve. U. 4.3.) इत्यादि। स्त्रीत्वं पुंस्त्वं चोभयमपि वस्तुतो नास्तीत्युक्तं भवति। श्रुतिरपि तदभावं बोधयति। 'नैव स्त्री न पुमानेष नैव चायं नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन स चोद्यते (युज्यते) (Sve. U. 5.10.) द्वितीयः पादः पूर्ववत्। किं च पुत्रो वयसाऽल्पोऽपि यः कविः क्रान्तप्रज्ञो ज्ञानी स्यात्, ईमिममर्थं स विविच्य जानाति। एवमुक्तलक्षणस्य परमात्मनस्ता तानि स्त्रीत्वपुंस्त्वादीनि यो विजानाबौपाधिकानि जानीयात्स पितुः स्वोत्पादकस्यापि ज्ञानरहितस्य पिता, असत्पितृवत्पूज्यो भवति। उक्तमर्थमभिप्रेत्य ताण्डकब्राह्मणम्—'शिशुर्वाऽऽङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत्स पितृन्पुत्रका इत्यामन्त्रयत्' इत्युपक्रम्य 'ते देवानपृच्छन्त ते देवा अब्रुवन्नेष वाव पिता यो मन्त्रकृत्' (TMB. 13.3.24.) मन्त्रद्रष्टुरेव किल पितृत्वं, तत्त्ववित् पितुष्पितासदिति किमाश्चर्यमित्यभिप्रायः Sy. लौकिकं पुत्रत्वं ब्रह्मविद्याविषय आतिदेशिकेन पितृत्वेन श्रौतेन बाध्यते At. पिता भवतीत्यर्थः। स ह्याधिदैविकमात्मानमभिसम्पन्नो भवति। न हि तस्य पिता नाम कश्चित्। स एव हि सर्वेषां जनानां पिता भवतीत्यभिप्रायः Dur. १२. Omitted by M.

१३. VM. ignores उ। This stanza occurs in N. 5. 1; SKN. II. 286.

**अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।**
**सा कद्रीची कं स्विदर्धं परागात्क्व स्वित्सूते नहि यूथे अन्तः ॥१७॥**

अवः परेण[1]। परेण लोकेन[2]। अवस्तात्[3]। परस्ताच्च[4]। एनेन[5]। अवरेण लोकेन[6] द्यावापृथिव्योर्मध्यत इत्यर्थस्तत्र। काचिद् गौः[7]। पदा[8]। कं च वत्सम्[9]। बिभ्रती[10]। उदतिष्ठद्[11]हराख्यम्। सा च गौः[12]। कञ्चिदर्धम्[13]हराख्यमक्रान्ती[14] राज्याख्यम्। कम्[15]। चित्[16]। अर्धमतीत्य[17]। प्रादुरभूत्[18] सा गौस्तं वत्सम्। क्व[19]। स्वित्। जनयतीति[20] प्रश्नः।

---

१. अत्राग्नौ हूयमानाऽऽहुतिर्गोरूपेण स्तूयते Sy. ननु कथमुपदेशः कर्तव्यः? किं त्वंपदार्थानुवादेन तत्पदार्थोपदेशस्तत्पदार्थानुवादेन त्वंपदार्थोपदेशो वा? अत्रेवमुत्तरम् At.

२. परस्तात् P. परेण पदा पादद्वयेन स्वावयवेनाकृष्य Sy. आवादनूद्य परेण ब्रह्मणा योज्य इति शेषः At.

३. अधोऽवस्तादधोदेशे Sy. अवरो जीवः At.

४. पर० P. परस्तादुपरि देशे Sy. पश्चात्परः परमात्मा ब्रह्म At.

५. अनेन Sy. अनेन जीवेन At.

६. अवरेण च पदा पादद्वयेनाकृष्य Sy. अवरेण जीवेन सह योज्यः At.

७. गोरूपा गमनशीलया Sy. ततो गौः श्रुतिः At.

८. आहुतिसङ्घेन पोष्यम् Sy. पादेन महावाक्यात्मनैकदेशेन At.

९. वत्सस्थानीयमग्निम् Sy. पुत्रभावमापन्नं शिष्यम् At.

१०. धारयन्ती Sy. परमात्मस्वरूपेण योजयन्ती At.

११. ०तिष्ठ० M. सूर्यं प्रत्युत्तिष्ठति। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' (Manu. 3. 76) इति स्मृतेः Sy. उत्तिष्ठदुत्कर्षेणास्ते श्रवणमनननिदिध्यासनरूपमुत्कर्षं प्राप्नोति। कार्यकारणभेदविषयकाऽत्र At.

१२. अर्थवं कृतवती साऽऽहुतिः Sy. सा स्वात्मानुभूता At.

१३. ०दर्धं० D. 'रीङ् गतौ' गतिरत्र नाशः। ...कत् कुत्सितं संसारमशुभं रीयते ध्वंसते नाशयतीति परमात्मज्ञानाभ्यासः कद्री, ताम् At.

१४. ०ति P. अञ्चन्ती is omitted by M. क्व गतेत्यनिश्चयगमना। आदित्यं प्राप्तवतीत्यर्थः Sy. अञ्चति गच्छति पूजयति च कद्रीची, स्वात्मानुभूतित्वात् At.

१५. कं फलभाजं पुरुषं प्रति Sy. कमपि At.

१६. ०र्धं० D. अर्धमार्गम्...यद्वा। अर्धमृद्धम् Sy. भागलक्षणयाऽवशेषितमशक्नुमपि जडत्वमंशम् At.

१७. आगत्य Sy. पराकृत्य At.

१८. परागच्छति Sy. गच्छत्यनुभवति At.

१९. आगत्य च क्वचित्...कुत्र प्रदेशे Sy. क्व स्थाने At.

२०. फलमुत्पादयति Sy. ननु यद्यपि भागलक्षणया स्वस्य चिदंशग्रहणेनाङ्गत्याग उक्तस्तथापि माया तं जडांशं पुनरप्यपेक्षते सूते। इति चेन्न, क्व स्थाने जडांशं सूते पुनः? न हि स्विदात्मनि। प्रणष्टत्वात्। नाप्यात्मनि, नापि कारणे। तस्य निरस्ताविद्यत्वात् At.

न[1] तावत्। गवां[2] यूथमध्ये प्रसूत[3] इत्युक्तमादित्यं दृष्ट्वा वदति।

**अवः परेण पितरं यो अस्यानुवेद पर एनावरेण।**
**कवीयमानः क इह प्र वोचद्देवं मनः कुतो अधि प्रजातम् ॥१८॥**

अवः परेण। अस्य वत्सस्य[4]। पितरम्[5]। परस्य लोकस्य[6]। अवस्तात्स्थितम्[7]। यः। अनुवेद[8]। परस्ताच्च[9] स्थितम्[10]। अस्य। अवरस्य[11] लोकस्य। स[12] कविमात्मानं कुर्वन्[13]। कः[14]। इहागत्य[15] तत्।

---

१. नहीतरगोवद्वियम् Sy.

२. सजातीयगोमध्ये Sy. अथ कारणादियूथे तदपि नेत्याह, न हि यूथेऽन्तरिति, ईशमायाभिप्रायेणैतदुक्तं भवति न जीवमायाभिप्रायेण At.

३. साधारण्येन यत्र क्वचिन्न सूतेऽपि तु कस्मिंश्चिदनुष्ठातरि। अतः स महान्को नु खल्विति। यद्वा। आदित्यरश्मिसमूह एव गोरूपेण स्तूयते। गौः, उक्तलक्षणा रश्मिरूपा गौर्वत्सं वत्सवद्रक्षणीयं यजमानमुक्तक्रमेण बिभ्रती, उदस्थात्। अथ तथा कृत्वा सा कद्रीच्यद्दृश्यगमना सती कं स्विदर्धंमूर्धमर्धस्थानभाजं वा कं स्वित्पुरुषमादित्यं, परागादप्रतिनिवृत्ता गता। 'तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः' (Mu. U. 1.2.5.) इति श्रुतेः। तथा कृत्वा च क्व स्वित्सूते कस्मिंश्चिन्नादिलोके जनयति न सर्वत्र Sy. जीवमायानाशे सति कुण्ठितशक्तिरीशमाया क्व संसाररूपं जगत्सूते स्वित्। नात्मनि, नाप्यात्मदेहेन्द्रियादियूथे। जीवमायांशेन तस्या अपि निर्मूलत्वेन नष्टप्रायत्वात् At.

४. पूर्वमन्त्रोक्तव्यतिहारं जानन्नेव गुरुर्दैवतमित्युच्यतेऽनेन मन्त्रेण . . . अस्य जगतः At.

५. एतल्लोकपालमग्निम् Sy. ईश्वरम् At.

६. आदित्येन सह Sy. परमात्मना योज्य इति शेषः At.

७. अवरो जीवः At.

८. अनुक्रमेण जानाति Sy. आचार्योपदेशक्रमेण यो वेद वेत्ति At.

९. ०स्था० P. पश्चात् परः At.

१०. आदित्यमस्य पितरं पालकम्। सोऽप्यमुमेव लोकं वृष्ट्यादिना पालयति। तादृशमादित्यम् Sy.

११. अपर० M. अनेनावरेणाग्निना सह योऽनुवेद, अग्न्यादित्यौ व्यतिहारेणोपास्ते। यद्वा, अभिभूतरजस्तमस्कादुद्बुद्धसत्त्वावत एव स्वाधीनमायावेतावेकत्वेन वाऽधिगच्छति Sy.
अनेनावरेण योज्यः At.

१२. स तादृशः पुरुषः Sy. स एव At.

१३. कविवदाचरन् क्रान्तदर्शित्वमात्मनः ख्यापयन् Sy. कवींस्तत्त्वज्ञानिच्छ्य्यानात्मन इच्छन्। शानच्प्रत्ययः। स्वरस्त्वनुसर्तव्यः। कविमिव ब्राह्मणमिवात्मानमाचरन्। कविर्ब्रह्म स इवाचरतीति विग्रहः। आचरतीत्याचार्यः। 'आचार्यो ब्रह्मणो मूर्तिः' (Manu 2. 226.) इति श्रूयते At.

१४. न चैवं वाच्यमेवंविधा गुरवः सुलभा इति। यथावसरस्तूपदेशः। नात्र त्वरणीयमित्यत आह . . . को दुर्लभः कः पुरुषः At.

१५. अस्मिंल्लोके Sy. ब्रह्मविद्यायाम् At.

ब्रूयात्[1]तस्य लक्षणम्। देवनशीलम्[2]। मनः[3]। कुतः[4]। अधि[5]। प्रजातमिति[6] प्रश्नेन सूचयत्युदितादादित्याज्जायमानः[7] 'तस्मादन्तरेमौ लोकौ यन्, सर्वेषु[8] सुवर्गेषु लोकेष्वभितपन्नेति'[9] इति ब्राह्मणम्[10]।

**ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः।**
**इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति ॥१९॥**

ये अर्वाञ्चः[11]। ये[12]। अर्वाञ्चो[13] रश्मयः। तान्। एव पुनः। पराचः[14]। आहुस्तथा। ये। पराञ्चः[15]। तान्। एव। अर्वाचः[16]। आहुः। इन्द्रश्च=आदित्य[17] इन्द्रः सः। च। सोमश्च[18]। यानि[19] तानि। तथा चक्रथुः[20]। तानि[21] तेजांसि। धुरा[22]।

---

१. प्रब्रवीति Sy. प्रवक्ष्यति At.
२. द्योतमानं देवविषयमलौकिकं वा Sy. तं देवं परमात्मानम् At.
३. वक्तरि लब्धे श्रोता स्यात्तथा श्रोतरि सति वक्ता स्यात्। यतः श्रोतापि दुर्लभ इत्याह मनश्चित्तम् At.
४. कस्माददृष्टविशेषात् Sy. कुतः कारणात् At.
५. आधिक्येन Sy. अधिकं शुद्धम् At.
६. उत्पन्नम्। उभयमपि दुर्लभमित्यर्थः Sy. जातं भवेत्। तत्र कारणं सत्कर्मादि तत्तु दुरनुष्ठानम्। शुद्धान्तःकरणस्यैवाध्यात्मश्रवणं निर्वहतीति श्रोतापि दुर्लभ इत्यर्थः At. ७. उदिता आदित्या जायते मनस्त० M. ०स्तस्यावन्तरमौ D.
८. Omitted by P.
९. अपि त० P. १०. TB.1.2.4.1. VM. ignores प्र
११. ०ञ्चं० P. ब्रह्मविद्येतरमन्त्राद्युपदिष्टानां ब्रह्मलोकप्राप्तावपि पुनरावृत्तिरित्यनेनोच्यते At.
१२. सूर्यसोमयोश्चक्रे वर्तमाना रश्मयो यहादयश्च तत्परिभ्रमणवशेन Sy.
१३. अर्वागञ्चना अधोमुखाः सन्ति Sy. येऽर्वाञ्चो मनुष्या मन्त्राद्युपासकाः At.
१४. पराङ्मुखाञ्चनानूर्ध्वानाहुः कालविदः Sy. ब्रह्मलोकगामिन आहुः At.
१५. ०ञ्चः D. तथा प्रथमं ये पराञ्चः परागञ्चनाः Sy. ये पराञ्चो ब्रह्मलोकादिस्थाः At.
१६. तानर्वाचो मनुष्यानाहुः। ब्रह्मविद्याऽभावे मन्त्राद्युपविष्टाः पुनरावर्तन्ते। मन्त्रादौ मनुष्याणामेवाधिकार इति सूचितम् At.
१७. इन्द्रः परमेश्वर इरां भूमिं (इराया भूमेः) वृष्ट्या धारक आदित्यः। यद्वा द्वादशादित्यानां मध्य इन्द्रोऽप्येकः 'विदस्यविन्द्रयुताः' इत्युक्तत्वादयमपीन्द्रः Sy. ननु मर्त्यलोकस्थान्के ब्रह्मलोकं प्रापयन्ति, के वा ब्रह्मलोकस्थान्मर्त्यलोकं प्रापयन्ति। किं कर्माण्येवेत्याह। इन्द्र ईश्वरः प्रयोजककर्ता At.
१८. हे सोम त्वम् Sy. त्वञ्च भोः सुन्वत्कर्मिन् प्रयोज्यकर्तः At. सोम is in the voc. in the original. The reading सोम for सोमश्च is therefore suggested.
१९. युवां या यानि मण्डलपरिभ्रमणानि Sy. युवां या यानि कर्माणि At.
२०. कृतवन्तौ Sy. कृतवन्तौ स्थः At.
२१. तानि कर्माणि At.
२२. तत्र दृष्टान्तः....शकटादौ धुरि Sy. अग्रेसरेण लिङ्गशरीरेण At.

युक्ता अश्वाः। इव रथान्। लोकान्। वहन्ति, आदित्यचन्द्रमसावलातचक्रवदितरेतरं तेजोभिरापूरयन्तो परिवर्तेते तेजोभिर्जगद्धारयन्ताविति।

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥२०॥**

द्वा सुपर्णा। द्वौ। सुपतनावादित्यश्च सोमश्च। सह लोकनिर्वहणे युञ्जानौ। सखायौ। एकम्। वृक्षं संवत्सरम्। आश्रित्य। तिष्ठतः। तयोः। एकः। तस्य स्वादु। फलम्। अत्ति। अनश्नन्। अन्यः सोमः। तमभिविपश्यति सोममत्तीन्द्र

---

१. सम्बद्धा अश्वादयो यथा धुरं वहन्ति तद्वत् Sy. युक्तानि At.

२. धुरा न युक्ता यथा रथस्य धुरा युक्ता अश्वास्तं रथं देशाद्देशान्तरं प्रापयन्ति तद्वदित्यर्थः At.

३. रञ्जनात्मकस्य लोकस्य। कर्मणि षष्ठी। लोकम् Sy.
मनुष्यलोकम् At.

४. निर्वहन्ति।...यद्वा। एतत्पूर्वार्द्धं दृष्टान्तितम्। धुरा युक्ताः। धुरि स्थितं चक्रमपि धुरशब्देनोच्यते। तत्र युक्ताः समर्पिताः पुरुषास्तत्परिभ्रमणवशेनार्वाञ्चोऽपि पराञ्चः पराञ्चोऽप्यर्वाञ्चो भवन्ति तद्वत् Sy.
ब्रह्मादिलोकं प्रापयन्ति। रजसो ब्रह्मलोकाद्वा वहन्ति मर्त्यलोकं प्रापयन्ति At.

५. ०चकात० M.

६. ०जोऽभि० M.

७. ०वर्तयेते P. D.

८. अत्र लौकिकपक्षिद्वयदृष्टान्तेन जीवपरमात्मानौ स्तूयेते Sy.
अतो ब्रह्मविद्यैवाश्रयणीया। सा चाविद्यासिद्धं जीवमनु (नू) द्य तत्पदार्थप्रतिपादनममुमर्थमभिप्रेत्य जीवपरमात्मानावाह At.

९. यथा लोके द्वौ सुपर्णौ सुपतनौ शोभनगमनौ Sy.

१०. सोम P. D.

११. सयुजा समानयोगौ Sy.
द्वौ साधूनभ्युदयनिःश्रेयसपक्षान् बिभ्रतौ जीवपरमात्मानौ सयुजा At.

१२. समानख्यानौ Sy.
अन्योन्यमभुञ्जन्तौ सखाया परस्परोपकारिणौ At.

१३. एकमेव वृक्षम् Sy. समानमेकं वृक्षं वृश्चनीयं देहम् At.

१४. परित आलिङ्ग्य At.

१५. आश्रयतः Sy.

१६. तयोर्मध्ये At.

१७. एको जीवः At.

१८. पिप्पलं पक्वं स्वादुतरम् Sy. पिप्पलफलसमं बहुदोषयुक्तमपि कर्मफलम् At.

१९. स्वादु कृत्वा,अत्ति स्वदिति(स्वदते) At.

२० अभुञ्जानोऽपि At.

२१. अपरः Sy. परः परमात्मा At.

२२. अभिपश्यति Sy. अभितोऽस्यर्थं प्रकाशते At.

इति[1]।

---

१. तद्वद् द्वौ सुपर्णस्थानीयौ क्षेत्रज्ञपरमात्मानौ, सयुजा समानयोगौ योगो नाम सम्बन्धः स च तादात्म्यलक्षणः। स एवात्मा जीवात्मनः स्वरूपं यस्य परमात्मनः स तदात्मा। एवमन्यस्यापि स एवात्मा परमात्मनः स्वरूपं यस्य जीवात्मनः। एवमेकस्वरूपावित्यर्थः। अनेन भास्करमतानुसारिणोऽतिरेकिनाम्नो जीवात्मा परमात्मनो नान्यः। स च परमात्मा जीवादन्यो नानाजीवाश्रयणादिति मतं निरस्तं भवति। ननु सम्बन्धो द्विष्ठः स च पक्षिणोरेव भेदमपेक्षतेऽतः कथमैकात्म्यमिति। न। औपाधिकभेदं वास्तवाभेदं चापेक्ष्य प्रवृत्तः। अत एव सखायौ समानख्यानौ नान्यख्यानौ। नन्वेकस्य यादृशं ख्यानं तादृशमेवान्यस्येति व्युत्पत्त्या भेदः स्फुटं प्रतिभाति कथं तादात्म्यमुच्यते ? इति न वक्तव्यं, नात्र परस्परं दृष्टान्तदार्ष्टान्तिकभावोऽपि तु यस्य यादृशं ख्यानं स्फुरणं परमात्मनस्तदेव ख्यानमितरस्यापि जीवात्मन इति सखायावित्युच्यते। एकरूपप्रकाशावित्यर्थः। अत उपपन्नमैकात्म्यम्। अनेन वास्तवभेदोऽपि निरस्तः। 'समानं वृक्षं परि षस्वजाते' इत्यत्र यथाऽऽश्रयान्तराभावादुभयोरेकाश्रयत्वमभ्युपगन्तव्यं तद्वत् 'सयुजा सखाया' इत्युभयत्राप्येकयोगाख्याने आश्रयणीये। वृश्च्यत इति वृक्षो देहः। स चोभयोः समान एक एव। जीवस्य भोगार्थत्वात्परमात्मना सृष्टेर्महाभूतैरारब्धत्वात्तस्योपलब्धिस्थानत्वाच्चोभयोरपि समानः। तादृशं समानं वृक्षं परि षस्वजाते परिष्वजत आश्रयतः। न च जीवस्य वस्तुत ईश्वरत्वे कथं जीवबुद्धया संसारशोकाविति वाच्यम् ? तयोर्मोहकृतत्वात्। तथा चाथर्वणिका अमुं मन्त्रमाम्नायास्य सन्देहनिवर्तकमुत्तरं मन्त्रमेवमामनन्ति "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" (Mundak. U. 3.1.2.) इति। अस्यायमर्थः। एक एव शरीरे पूर्णः पुरुषः परमात्मा निमग्नो निगूढः सन् स्वयमपीश्वरोऽप्यनीशत्वबुद्धया मुह्यमानो मूढः सञ्शोचति। संसारेऽहं कर्ता सुखी दुःखीति जननमरणे अनुभवति। यदा तु जुष्टं नित्यतृप्तमन्यं संसारशोकातीतमीशं परमेश्वरं पश्यति स्वानन्यतया साक्षात्करोति, तदा वीतशोको देहाद्व्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयः सन्नस्य महिमानमिति। निरस्तसमस्तोपाधिकस्य परमेश्वरस्य महिमानं सार्वात्म्यसर्वज्ञत्वादिमहिमानमित्येति प्राप्नोति। न च तद्भावानाप्तौ तन्महिमा प्राप्यते। अतस्तद्रूपो भवतीत्यर्थः। तस्माद्वस्तुत एक एव भेदस्तु मोहकृत इति सिद्धम्। अनुभवदशायां लौकिकबुद्धया भेदमभ्युपेत्योच्यते। ततोऽन्यो जीवात्मा पिप्पलं कर्मफलं स्वादुभूतमत्ति भुङ्क्ते। यस्य यदुपार्जितं तत्तस्य स्वादु भवति। अन्यः परमात्माऽनश्नन्नाप्तकामत्वेनाभुञ्जानः स्पृहाया अभावात्। 'आप्तकामस्य का स्पृहा' (Gaudapāda's Kārikā 1.9.) इति स्मृतेः। तस्मादवास्तवभेदमुपजीव्य तयोरन्य इत्युक्तम्। वस्तुतस्तु 'अनीशया शोचति मुह्यमानः' (Mundak U. 3.1.2.) इत्युक्तत्वादभेद एव। तादृशः परमात्मा स्वात्मन्यध्यस्तं जगत् साक्षित्वेनेक्षते Sy.

यत्रा॑ सुप॒र्णा अ॒मृत॑स्य भा॒गमनि॑मेषं वि॒दथा॑भि॒स्वर॑न्ति ।
इ॒नो विश्व॑स्य॒ भुव॑नस्य गो॒पाः स मा॒ धीरः॒ पाक॒मत्रा वि॑वेश ॥२१॥

यत्रा सुपर्णा[1]। यत्र[2]। सुपतना[3] आदित्यरश्मयः[4]। अमृतस्य[5]। भागम्[6]। अनिमेषम्[7]। वेदनेन[8]। अभिप्रगच्छन्ति[9]। ईश्वरः[10]। सर्वेषाम्[11]। भूतानाम्[12]। गोपायिताऽऽदित्यः[13]। सः[14]। मा[15]।

---

१. ०वर्णाः P. कोऽयमत्रार्थस्य प्रकाशस्त-त्रेदमुत्तरम् At. अधिदैवतं तावदस्या ऋचोऽर्थः SKN.

२. आदित्यमण्डले Sy. यत्रार्थे प्रकाशेऽभि-व्यज्यमाने सति At. यत्रेति सप्तमी-श्रुतेः स्थिता इति शेषः।...यस्मिन्ना-दित्यमण्डले स्थिताःSKN. यस्मिन्मण्ड-लेऽवस्थिताः Dur.

३. शोभनगमना रश्मयः Sy. मोक्षपक्षीया जीवाः At. सुपर्णा इति रश्मिनाम।... रश्मयः SKN. ते हि शोभनमर्थमुद्दिश्य तपोऽपयातलक्षणं पतन्ति। अथवा शोभमानाः पतन्तीति सुपर्णाः Dur.

४. वादि० P.

५. उदकस्य Sy. अमृतस्याऽऽनन्त्यस्य मुक्त-रूपस्य ब्रह्मणः At. प्राणिनां जीवनहेतु-त्वादमृतसदृशस्यामरणधर्मणो वा भौम-रसलक्षणस्योदकस्य SKN. अमरध-र्मिण उदकस्य Dur.

६. भजनीयमंशमादाय Sy. भजनं प्राप्तिम् At. अंशं स्वं स्वम् SKN. भजनीय-मंशमादाय पृथिवीलोकात्तेनान्विताः सन्तः Dur.

७. अनवरतम् Sy. अनश्वरम् At. निमेष-वर्जितम्, महताऽऽदरेण सातत्येन वेत्यर्थः SKN. अनिमिषमाणा इवा-दरवन्त इत्यर्थः Dur.

८. ज्ञानेन, अस्माभिरेवं कर्तव्यमिति बुद्ध्या Sy. ज्ञानेन वृत्तिलक्षणेन At. देवता-माहाभाग्यात्स्वेन केनापि विज्ञानेन SKN. स्वकर्माधिकारयुक्तेनान्विताः सन्त इदमेवास्माभिः कर्तव्यं रसादानादि-लक्षणं कर्मेत्यभिस्वरन्ति Dur.

९. अभिप्रापयन्ति Sy. अभिस्वरतिर्गतौ At. 'स्वृ शब्दोपतापयोः' आभिमुख्ये-नोपतापयन्ति शोषयन्तीत्यर्थः। अथवा स्वरतिरत्र गतिकर्मस्वपठितोऽपि गत्यर्थः। भागमिति द्वितीयाश्रुतेरादायेति शेषः। यस्मिन्नादित्यमण्डल उदकस्यात्तं स्वं रस-मादाय गच्छन्तीत्यर्थः। SKN. सर्व-भूतानि ... अभितपन्तीत्यर्थः। अथवा। अभिस्वरन्त्यादित्यमण्डलमभिप्रयन्ति, आभिमुख्येन रसान्गृहीत्वा प्रयान्तिDur.

१०. स्वामी Sy. ईश्वर एव At. यच्छब्द-श्रुतेस्तच्छब्दोऽध्याहार्यः। तत्र स्थितः ...ईश्वरः SKN. यत्रैतदेवंलक्षणं कर्म कुर्वन्त्यादित्यरश्मयस्तत्र किम्? इत्युच्यते ... इनो ह्यसावादित्य ऐश्वर्येण भवति Dur.

११. अत्र ज्ञानमार्गे विघ्ननिरासकः परमेश्वर एव सेव्यमान इत्याह ... सर्वस्य At., SKN.

१२. भूतजातस्य Sy., SKN. लोकस्य At. भूतस्य Dur.

१३. तथा तस्यैव ... गोपायिता रक्षिताऽ-यमादित्यः Sy. ज्ञानमार्गप्रवृत्तस्य गोपा गोप्ता रक्षकः At. गोपायिता च, य इति शेषः परस्तात्तच्छब्दश्रुतेः SKN. गोपायिता भवत्यादित्यो मण्डलान्तर-पुरुषो यस्तत्र मण्डलेऽवस्थितः Dur.

१४. परमेश्वरः Sy. कथं भिन्नस्वभावयो-रैक्यं तत्राह स इनश्चिन्मात्रांशः At.

१५. माम् Sy., At., SKN., Dur.

धीरः[1] । पाकम्[2] । अत्र[3] । आ । विवेश[4] आदित्यः, उदकं रश्मयः[5] सम्भरन्ति स चाज्ञान्मनुष्याणामात्मना-[6] ऽधितिष्ठति[7] ।

---

१. धीमान् प्राण्यनुग्रहबुद्धियुक्तः सन् Sy. धीः, इराऽवशिष्यमाणा यस्य स तथा At. प्रज्ञावानादित्यः SKN. प्रतिविशिष्टया बुद्ध्यान्वितो बुद्धिरेव हि तस्य शरीरम् Dur.

२. पक्तव्यमपक्वप्रज्ञम् Sy. पाकं प्रशस्तं विगलितासद्बुद्धिलीयत्वादिदोषं चिन्मात्रं सन्तम् At. अधित्वाद्भक्तियुक्तत्वादपक्वप्रज्ञत्वाच्च पक्तव्यप्रज्ञम् SKN. सम्यग्दर्शनोऽनुग्राह्यतया Dur.

३. धिर, पाक मन्त्र P. अस्मिन्स्वकीयमण्डले Sy. अत्र वेदनेऽसन्निवृत्तिलक्षणे At. अत्रादित्यमण्डले SKN.

४. प्रवेशयति । अत्रास्मदीये देहे वा नियामकतया प्रविष्ट इत्यधिदैवतपक्षे Sy. प्रविशति । प्रवेश औपचारिकः । चिन्मात्रयोर्जीवपरयोरैक्यं न विरुध्यत इत्यर्थः At. आवेशयतु प्रापयत्वित्यर्थः SKN. आविशतु Dur.

५. उदकाश्मयः P.

६. ०त्मताधि० P.

७. अथाध्यात्मपक्षे । यत्र यस्मिन्नात्मनि, सुपर्णा शोभनपतनानि स्वस्वविषयग्रहणाय गमनकुशलानीन्द्रियाणि चक्षुरादीन्यमृतस्य भागम् । अत्र विषयावच्छिन्नचैतन्यममृतमित्युच्यते । तस्य भागं भजनीयं स्वस्वांशमनिमेषं निमेषरहितमनारतं, विदथा वेदनेन वृत्त्यवच्छिन्नचैतन्येनावरुद्धान्यभिस्वरन्त्यभिप्रयन्त्यावरणापगमनेन स्फोरयन्ति । किञ्च यस्त्विनः स्वामी, अस्य देहस्य विश्वस्य भुवनस्य गोपा गोपायिता रक्षिता । यद्वा विश्वस्य भुवनस्य भूतजातस्य स्वामी, अस्य देहस्य गोपाः । अनेन तत्त्वंपदार्थयोरैकत्वं प्रतिपादितं भवति । स परमेश्वरो धीरः समाधिनिष्ठः सर्वदाऽविक्रियो मा मां पाकं परिपक्वमनस्कं यागदानादिनाऽपगतरजस्तमस्कत्वेन दर्पणवदतिनिर्मलसत्त्वोद्रिक्तमनस्कं मामाविवेश । उक्तरूपे चित्ते तादृशं वस्तु स्फुरतीत्यर्थः । यद्वा । अपरिपक्वमना अहं पूर्वमज्ञानदशायां मदन्य ईश्वरोऽस्तीत्यविद्वांस्ततः परमस्ति कश्चित्सर्वज्ञः सर्वेश्वरः सत्यज्ञानादिलक्षण इति निश्चित्य पश्चाद् गुरुशास्त्राभ्यां स एवाहमस्मीति मत्त्वैवं पारम्पर्येणावगत्य, असम्भावनाविपरीतभावने व्युदस्य भावनया साक्षात्कृत्य परिपूर्णः परमात्माऽभूवमित्यर्थः । ....नन्वनवच्छिन्नस्य परमात्मनः सर्वत्र व्याप्तत्वात्प्राप्तिरेव नोपपद्यते । सम्प्रति (सत्यम्) अत्र प्राप्तिर्द्विविधा, प्राप्तप्राप्तिरप्राप्तप्राप्तिश्चेति । प्राप्तस्यापि कण्ठे चामीकरन्यायेनाऽऽवरणाज्ञानहानद्वारेण प्राप्तिरुपपद्यते Sy. अध्यात्ममप्यस्या ऋचोऽर्थः । यत्र यस्मिञ्छरीरे स्थिता रश्मयः प्रकाशकत्वाद्रश्मिसदृशानि चक्षुरादीनीन्द्रियाणि । अमृतस्य रूपादेर्ज्ञेयस्य विषयस्य, भागं स्वं स्वमंशं चक्षू रूपं श्रोत्रं शब्दं घ्राणादीनि गन्धादीन्यनिमेषं विज्ञानेनोपतापयन्ति । आत्मानं प्रकाशयन्तीत्यर्थः । तत्र भोक्तृत्वेन स्थित इन ईश्वरः सर्वस्येन्द्रियग्रामस्य गोपा यः स धीरः प्रज्ञावान् । पाकं पक्तव्यप्रज्ञमत्रैवस्थितमाविशतु मम प्रकाशोभवत्वित्यर्थः । अथवा—यत्रेत्यात्मा निर्दिश्यते न शरीरम् । भागमित्यत्र च पूर्ववदावायेति शेषः । स्वर-

**यस्मिन्वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे ।**
**तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद ॥२२॥**

यस्मिन् वृक्षे[1] । यस्मिन् । आदित्यवृक्षे[2] । मधुन उदकस्यात्तारः[3] । सुपतनाः[4] पक्षिणो रश्मयः ।

---

तिश्च गत्यर्थः । यस्मिन्निहितानीन्द्रियाणि विषयस्यांशं स्वमादाय विज्ञानेनोपलभ्यार्थमभिगच्छन्ति । ईश्वरो गोपायिता च स मामाविशत्विति ।... पूर्वो देवताविषयः । अयमात्मविषय इति विशेषः SKN. आध्यात्मिकमुच्यते ...यत्र यस्मिञ्छरीरे सुपतनानीन्द्रियाण्यवस्थितानि स्वेषु स्वेष्वायतनेषु कृष्णताराविषु । किं कुर्वन्ति? इत्युच्यते, अमृतस्यामरधर्मणो ज्ञानस्य भागं भजनीयं स्वं स्वं रूपादिलक्षणमंशमादाय विदथा वेदनेन विज्ञानेन युक्तानि, अभिस्वरन्ति नहीन्द्रियाणां चैतन्यमस्तीति । तानि ह्यचेतनानि चेतनस्य पुरुषस्य कर्तुर्विज्ञानमयस्य करणानि, तदधिष्ठात्र्यस्तु देवताश्चेतनाः ।... किं कुर्वन्ति? अभिस्वरन्ति, अभिप्रयन्ति विषयविज्ञानं पुरुषस्यापि भोक्तुः पटूकुर्वन्ति । अथवाऽभिस्वरन्ति बुद्धिमाभिमुख्येन विषयविज्ञानमादाय बाह्यप्रत्ययाधानार्थं स्वरन्ति गच्छन्तीत्यर्थः । तत्र किम्? इत्युच्यते । तत्र योऽवस्थित ईश्वर इनः सर्वेषामिन्द्रियाणां गोपायिता य आत्मा स मा धीरो धीमान् ... पक्तव्यप्रज्ञोऽसम्यग्दर्शिनमसर्वज्ञं विपक्वप्रज्ञः सम्यग्दर्शी सर्वज्ञः सोऽत्रैव हि देहेऽवस्थितो बुद्ध्यधिदैवतभावेन तैजसाख्यो मामाविवेश, आविशत्वनुग्राह्यतया स माममत्रैवावस्थितोऽनुगृह्णात्वित्यर्थः । तदनुग्रहाद्ध्यस्य सम्यग्दर्शनं प्रकाशते तथाशास्यत इति Dur.

यत्र सुपर्णाः सुपतना आदित्यरश्मयः । 'अमृतस्य भागम्' उदकस्य । अनिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वा । ईश्वरः सर्वेषां भूतानां गोपायिताऽऽदित्यः । 'स मा धीरः पाकमत्रा विवेश' इति । धीरो धीमान् । पाकः पक्तव्यो भवति । 'विपक्वप्रज्ञ आदित्यः' । इत्युपनिषद्वर्णो भवतीत्यधिदैवतम् । अथाध्यात्मम् । यत्र सुपर्णाः सुपतनानीन्द्रियाण्यमृतस्य भागं ज्ञानस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वा । ईश्वरः सर्वेषामिन्द्रियाणां गोपायितात्मा । 'स मा धीरः पाकमत्रा विवेश' इति । धीरो धीमान् । पाकः पक्तव्यो भवति । विपक्वप्रज्ञ आत्मेत्यात्मगतिमाचष्टे N. 3. 12; SKN. II. 154.

१. अत्र वृक्षस्वरूपकल्पना । अधिदैवमादित्यमध्यात्ममात्मानं च प्रशंसति, यस्मिन्नादित्ये Sy. एवं चेज्जीवानां मुक्तिः स्यात्कर्मफलं क्व नु । कर्मकर्तृत्वे न मुक्तिः स्यात् । प्रारब्धं तु न नश्यति । प्राप्ताप्राप्तविवेकेन लिङ्गदेहस्यैव भोक्तृत्वमित्युच्यते At.

२. वृक्षवत्सर्वफलाश्रयभूते Sy. वदनीये लिङ्गशरीरे स्थिताः At.

३. °द्य° P. मध्वित्युदकनाम । तदवन्तीति मध्वद उदकस्यात्तारः Sy. कर्मफलभोक्तारः At.

४. °ना M. रश्मयः Sy. जीवाः At.

निविशन्ते[1]। यस्मात्त्व, अधि[2]। विश्वे[3] सुपर्णाः। सुवते[4]। तस्य। एव वृक्षस्य[5]। आहुः[6]। पिप्पलम्[7]। स्वादु[8]रसम्। तस्याग्रे[9][10] स्थितम्। तत्[11] पिप्पलम्। नो। आप्नोति[12]। यः[13]। पितरमादित्यम्[14]। न। वेद[15], इत्य[16]नादित्यविदो निन्दा।

---

१. निवेशयन्ते P. निवेश० D. प्रविशन्ति रात्रौ Sy.
लोकाल्लोकान्तरं निविशन्ते, कर्मफलं भुञ्जते At.

२. उपरि Sy. अधिकानि काम्यानि, निषिद्धात्मकानि संसारकारणानि At.

३. पश्वे M. विश्वस्य Sy. सर्वात्मका अमुक्तास्च भवन्ति। एवं लिङ्गदेहस्थानां जीवानां त्रैविध्यमुक्तम् At.

४. स्नुवते P. पुनरुदयकाले प्रकाशं जनयन्ति च यस्मादादित्यात् Sy. ऐहिकामुष्मिकफलानि सुवते कुर्वते च At.

५. आदित्यवृक्षस्य Sy.
लिङ्गदेहस्य At.

६. Omitted by P. कथयन्ति तत्त्वविदः। यद्वा सर्वस्याधि, उपरि वर्तमानमाहुः Sy.

७. ०पलं P. पालकं फलम् Sy. परमार्थतः पिप्पलं कर्मफलम् At.

८. रसवत् Sy.
स्वदनीयम् At.

९. तेऽस्य M.

१०. उपरि, उपासनानन्तरम् Sy. ननु जीवस्य चिन्मात्रतत्त्वज्ञानादेव मुक्तिरस्तु, किमन्तर्गतेन तत्पदार्थज्ञानेन प्रक्रियापरिकल्पितेन। तत्राह यतोऽग्रे At.

११. तद् ब्रह्म At.

१२. नशतिर्गतिकर्मा। तत्फलं न प्राप्नोति। वेदितारस्त्वग्रे पिप्पलमाहुरित्यर्थः Sy. उदुत्कृष्टं न नशद् न प्राप्नोत्येव सः At.

१३. यो नरः Sy.

१४. ईदृशं पितरं जगतः पालयितारम् Sy. जगत्कारणं तत्पदार्थमीशम् At.

१५. व M, नोपास्ते ... इत्यधिदैवपक्षे Sy. न वेत्ति वैदिकेषु केवलयुक्तेरप्रामाण्यादिति भावः At.

१६. न वेद, इति is omitted by P. अथाध्यात्मपक्षे। यस्मिन्परमात्मनि वृक्षे वृक्षवद् गमनादिरहितेऽविक्रिये सुपर्णाः शोभनगमनानीन्द्रियाणि मध्वदो मधुनो ज्ञानस्यात्तॄणि तज्ज्ञानेन ज्ञानभाञ्जीत्यर्थः। निविशन्ते स्वापकाले स्वस्वविषयेभ्यः प्रतिनिवृत्तान्यात्मनिवृत्त्या लीयन्ते पुनः प्रबोधकालेऽधि विश्वे विश्वस्योपरि सुवते च, उद्यन्ति स्वस्वविषयोपलभन्त इत्यर्थः। तस्य परमात्मनः पिप्पलं पालकं संसारत उद्धारकं स्वादु, आस्वादनीयममृतत्वलक्षणं ज्ञानम्। यत्फलास्वादने पुनः क्षुत्तृष्णाशोकमोहजरामरणादयो न भवन्ति तद्धि स्वादुतमम्। इतरस्वर्गादिफलानि पुनर्जननाद्यापादकत्वादापातस्वादूनि। तत्फलमग्रे स्वरूपज्ञानोत्तरकालमाहुः। यः पुमान् पितरं पालकं ज्ञानफलं तत्फलाधारमात्मानं वा न वेद न जानाति गुरुशास्त्राभ्यां स तत्फलं मोक्षशास्त्र प्राप्नोति। अत आत्मानं यो वेद स एव तन्मोक्षफलं प्राप्नोतीत्यर्थः। यद्वा 'चर्मवदाकाशम्' (Śvet. U. 6. 20.) इत्यादिश्रुतिर्ज्ञानादन्योपायस्यामृतत्वप्राप्तिं निवारयति। 'ब्रह्म वेद ब्रह्मैव भवति' (Mu.U.3. 2.9.) इत्यादिका तु ज्ञानात्प्राप्तिमाह। तस्मादीदृशं परमेश्वरं विदित्वा मुक्तो भूयासमित्यर्थः Sy.

यद्गा॑य॒त्रे अधि॑ गाय॒त्रमाहि॑तं॒ त्रैष्टु॑भाद्वा॒ त्रैष्टु॑भं नि॒रत॑क्षत ।
यद्वा॒ जग॒ज्जग॒त्याहि॑तं प॒दं य इत्तद्वि॒दुस्ते अ॑मृत॒त्वमा॑नशुः ॥२३॥

यद्[1] गायत्रे। यत्[2]। गायत्रे[3] छन्दसि। अधि[4]। निहितम्[5]। गायत्रं[6] यत्। वा पदम्। त्रैष्टुभाच्छ[7]न्दसः। त्रैष्टुभम्[8]। निरतक्षत=पृथक्[9]कुर्वन्। यत्। वा। जङ्ग[10]मस्वभावात्। जगत्यां[11](म्)। निहितम्। ये[12]। एव। तत्। पदम्[13]। विदुः[14]। त एव। अमृतत्वम्[15]। आनशुः[16], त्रीणि वैदिकानिच्छन्दांसि तानि चामुमादित्यं वहन्ति तस्मादेवादित्यो गायत्र[17]स्त्रैष्टुभो जागतश्च भवति यद्वा गायत्रादीनि सामानि

---

१. यं D. अथ महावाक्यविषये गायत्रीत्रिष्टुब्जगत्यश्छन्दांसि सन्ति तान्याह At.
२. यद् ब्रह्म At.
३. प्राथम्यात्सर्वैः स्तुत्यत्वाच्च गायत्री भूस्तदीयं स्थानं गायत्रम् ...तत्र Sy.
गायत्रीछन्दसि At.
४. उपरि Sy.
अधिकं सर्वोत्कृष्टम् At.
५. 'हि गतौ' आगतमवगतं ज्ञातं तद् ब्रह्म At.
६. आग्नेयं पदम्...प्रथमसृष्टत्वाद् गायति त्रायते चेति व्युत्पत्त्या च प्रजापतेर्मुखाद् गायत्र्या सहोत्पन्नत्वाद् भक्त्याऽग्निरपि गायत्रः। 'गायत्रोऽग्निः' (TS. 2.2.5.5.) इति श्रुतेः। भूम्यामग्निः स्थापित इति यदस्ति Sy. गायत्रं ब्रह्मेत्युच्यते। सञ्ज्ञाकरणस्य प्रयोजनं वक्ष्यामः At.
७. द्वितीयत्वाद् वृष्टिपर्जन्यविद्युद्रूपत्रिस्तोभयुक्तादन्तरिक्षात् Sy.
पक्षान्तरे वाशब्दः।... त्रिष्टुप्छन्दस्कान्मन्त्रात् At.
८. ०से न्त्रैं० P. स्तोभयुक्तमूर्ध्वाधस्तिर्यग्लक्षणस्तोभत्रयोपेतं वायुम् Sy.
त्रिष्टुभा प्रोक्तत्वात्त्रैष्टुभं ब्रह्मेत्युच्यते At.
९. साधु सम्पादितवन्तो देवा इति यदस्ति Sy. निष्कृष्य निर्णीतवन्तः। के? हिरण्यस्तूपाद्या आचार्याः At.
१०. वा, अथवा ... गमनशीलमादित्याख्यं पदम् Sy. यद् वा पक्षान्तरमिदं जगन्निरतक्षत। जागतं बह्वायपाठावक्षरसाम्याच्च जगत्याः पर्यायान्तरं वा, इदम् At.
११. जगति सर्वैर्गन्तव्य उद्गततमे वा तृतीयभूते द्युलोके Sy.
जगत्यां छन्दसि प्रतिपाद्यत्वेन हितम् At.
१२. य एव नराः Sy.
१३. तदिदं त्रिषु स्थानेषु त्रयाणामग्न्यादीनां पदाधानम् Sy. पदं पदनीयं गम्यफलरूपम् At.
१४. जानन्ति Sy. एवं तावद् गायत्रत्रैष्टुभजागतसञ्ज्ञाभिर्ब्रह्मविषयास्त्रयः पक्षा उपन्यस्तास्तत्प्रयोजनमुत्तरत्र वदन्दीर्घतमाः स्वमतं तावदाह। य इत्तु ये तु तद् ब्रह्मच्छन्दोभिरनुपहितं निर्गुणं तत्त्वमस्यादिवाक्यलक्ष्यं निःसञ्ज्ञकं विदुरनुभवन्ति At.
१५. ०त्वोमृ० P. अमरणरूपं पदम् Sy.
तेऽमृतत्वमिहैव मोक्षम् At.
१६. आप्नुवन्ति। इत्यधिलोकम् Sy. अश्नुवते, यद्वाऽमृतत्वं मुक्तरूपत्वमानशुर्भुञ्जतेऽनुभवन्ति At.
१७. ०त्रं त्रै० P.

वहन्ति तदानीं जगदिति साम्नो विशेषणादुपपन्नं लिङ्गमिति ।

**गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम् ।**
**वाकेन वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्त वाणीः ॥२४॥**

गायत्रेण । प्रसङ्गादक्षरप्रशंसा क्रियते, ऋक्संहितायां कियन्तो मन्त्रा इति जिज्ञासमानो

---

१. अथाधियज्ञम् । गायत्रे प्रातः सवनेऽधि, उपरि गायत्रं छन्दः पदमाहितमिति यत् । तथा त्रैष्टुभान्माध्यन्दिनात्सवनात्त्रैष्टुभं छन्दो निरतक्षत तत्राहितमिति यत् । वा किम्वेत्यर्थः । जगति तृतीयसवने जगज्जागतं पदमाहितमिति यत् । तत्तादृशं सवनत्रयेषु छन्दस्त्रयसंस्थानं ये नरा विदुर्यजमाना विदुर्जानन्ति तेऽमृतत्वं ज्ञानानुष्ठानद्वारेण मोक्षमानशुराप्नुवन्ति । अथवा गायत्रे प्रातःसवने त्रिषु सवनेषु छन्दस्त्रयपरिमाणात्सवनान्यपि तत्तच्छन्दश्शब्देनोच्यन्ते । 'गायत्रं प्रातः सवनं, त्रैष्टुभं माध्यन्दिनं सवनं, जागतं तृतीयसवनम्' (TS. 2.2.9.5-6) इति श्रुतेः । तादृशे प्रातःसवनेऽधि, उपरि गायत्रमष्टाक्षरात्मकमाहावप्रतिगररूपं गायत्रं पदमाहितम् । तद्यथा होता 'शोंसावोम्' इति त्र्यक्षरेण तथा 'शंसामोदैवोम्' इति पञ्चाक्षरेणाध्वर्युः प्रतिगृणाति, तन्मिलित्वाऽष्टाक्षरं सम्पद्यते । तच्चाष्टाक्षरं गायत्रीसदृशं, तस्या अपि पादस्याष्टाक्षरत्वात् । इदमेकं प्रातःसवनरूपे गायत्रपदप्रतिष्ठापनम् । तथा सवनान्तेऽपि शंसनानन्तरम् 'उक्थं वाचि' इति चतुरक्षरमाह (होता) । 'ओमुक्थशाः' इति चतुरक्षरमध्वर्युः । तदष्टाक्षरं सम्पद्यते । एतदेकं परं गायत्रे गायत्रस्थापनम् । तथा त्रैष्टुभान्माध्यन्दिनसवनात्त्रैष्टुभमाहावप्रतिगररूपं पदं निरतक्षत ऋत्विजः । तद्यथा माध्यन्दिनसवने होता 'अध्वर्यो शोंसावोम्' इत्याह्वयते षडक्षरेणाध्वर्युश्च 'शंसामोदैवोम्' इति पञ्चाक्षरेण प्रतिगृणाति । तन्मिलित्वैकादशाक्षरं सम्पद्यते । इदमेकं माध्यन्दिनसवनादौ त्रैष्टुभे त्रैष्टुभाधानम् । तथा सवनान्तेऽपि शंसनानन्तरम् 'उक्थं वाचि इन्द्राय' इति सप्ताक्षरमाह (होता) । अध्वर्युश्च 'ओमुक्थशाः' इति चतुरक्षरेण प्रतिगृणाति । तन्मिलित्वैकादशाक्षरं सम्पद्यते । इदमपरं त्रैष्टुभे त्रैष्टुभस्थापनम् । तथा तृतीयसवने होता 'अध्वर्यो शोंशोंसावोम्' इति सप्ताक्षरेणाह्वयते 'शंसामोदैवोम्' इति पञ्चाक्षरेणाध्वर्युः प्रतिगृणाति । द्वादशाक्षरं भवति । तदिदं प्रथमं जागते जागतोत्पादनम् । तथा पश्चादपि शंसनानन्तरमाह (होता) । 'उक्थं वाचि इन्द्राय देवेभ्यः' इत्येतदेवैकादशाक्षरं भवति । अध्वर्युश्च 'ओम्' इत्येकाक्षरेण प्रतिगृणाति । तदुभयं मिलित्वा द्वादशाक्षरं भवति । तदिदमपरं जागते जागतपदस्थापनम् । एवं त्रिषु छन्दःसु त्रिषु गायत्र्यादिसवनेषु गायत्रादिच्छन्दस्त्रयपदप्रतिष्ठापनम् । एतत्सर्वमैतरेयब्राह्मणे 'देवविशः कल्पयितव्याः' (AB.3.12.) इति खण्डे विस्पष्टमाम्नातम् । तत्तादृशं छन्दसि च्छन्दस्थापनं य इत्तद्विदुर्ये च जानन्ति त एवामृतत्वमानशुः प्राप्नुवन्त्यनुष्ठानद्वारा । एवमजानन्तोऽनुष्ठानेनापि फलं न प्राप्नुवन्तीत्यर्थः । तस्य साकल्याभावादिति भावः Sy.

गायत्रेण[1] पादेन। मन्त्रम्[2]। परिच्छिन्नत्वाद्[3] बहूनि हि गायत्राणि[4] पदान्युष्णिक्ककुभोरनुष्टुभि पङ्क्त्यां च सम्भवात्[5]। साम्नः[6] परिच्छेदः। अर्केण[7] भवति संस्थितायामृचि साम च संस्थितं भवति। अथ कियन्ति च्छन्दांसीति जिज्ञासुस्त्रैष्टुभं[8] छन्दः प्रथमं प्रतिपद्येत। बहूनि त्रैष्टुभानि वाक्यानि[9] भवन्ति। ततोऽवशिष्टं[10] परिच्छिन्नत्वात्। अथ सूक्तं[11] परिच्छेत्तुकामः। द्विपदा[12] त्रिपदा। चतुष्पदा[13] वर्चा परिच्छिद्य[14]

---

१. गायत्रच्छन्दसा Sy. अत्र ... गायत्र्यादिभिर्गुणैः सगुणे ब्रह्मण्यहङ्ग्रहेणोपास्यमाने फलविशेषः प्रतिप्रदर्श्यते। गायत्रेण गायत्रसञ्ज्ञकेनोपासितेन ब्रह्मणा At.

२. अर्चनसाधनं मन्त्रम् Sy. सूर्यम् At. अर्को मन्त्रो भवति यदनेनार्चन्ति N.5.4.

३. प्रत्येकं परिच्छिनत्ति ... प्रतिमन्त्रं गायत्रेणच्छन्दसोपनिबद्धं करोति। उपलक्षणमेतदन्येषां छन्दसाम्। यद्वा। इतरेषां छन्दसामस्त्येव चतुश्चतुरक्षराधिक्येन तत्तच्छन्दोभिः प्रतिमिमीत इत्यर्थः। यद्वा प्रतिशब्दः समित्येतस्मिन्नर्थे, छन्दोभिर्मन्त्रान्सम्मितं (सम्मितान्) करोतीत्यर्थः Sy. गच्छति। धातूनामनेकार्थत्वात् At.

४. यत्राग्नि M. ५. पदान्युन्युष्णिग्भोरनुष्टुबिव ... संभावात् M.

६. गायत्ररथन्तरसञ्ज्ञकं साम प्रतिमिमीते। ननु 'एकं साम तृचे क्रियते' इति तिसृष्वेकं साम विहितमतोऽर्कैः सामेति वक्तव्यं कथमुच्यतेऽर्केणेति? न। वस्तुत एकं साम, एकस्यामृच्याम्नातम्। पश्चादन्योन्यां तदुत्तरयोर्गायति, इत्यतिदेशतः प्राप्तं तिसृषु गानम्। अत एकवचनमविरुद्धम् Sy. सामाभिमानिनीं देवतां सालोक्येन गच्छति At. ७. उक्तलक्षणेन मन्त्रेण Sy. तदनन्तरमर्केण प्रयोजकेन At.

८. अत्र त्रिष्टुबुपादानमितरच्छन्दःप्रदर्शनार्थम्। अथवाऽनादेशे सर्वत्र त्रिष्टुभो ग्रहणात्प्राचुर्याभिप्रायेणेदमुक्तम्। त्रैष्टुभेन द्विवारत्रिवारावृत्तेन Sy. त्रैष्टुभसञ्ज्ञकेनोपासितेन ब्रह्मणा At.

९. द्वृचतृचरूपं वाकं वक्तव्यमेकैकं छन्दः प्रतिमिमीते Sy. वाकं वागभिमानिनीं देवतां प्रतिमिमीते At.

१०. ०विशि० D.

११. वाकं सूक्तम्। एतावद्भिस्त्रिष्टुब्भिरुपनिबद्धमिदं सूक्तमिति तादृशेन वाकेन वाकं वर्गमनुवाकं वा मिमीते Sy. वाकेन प्रयोजकेन वाकं महावाक्यमुपनिषदभिमानिनीं देवतां प्रति मिमीते At.

१२. कीदृशेन वाकेनेति स विशेष्यते। ... पादद्वयबद्धविराडादिच्छन्दोनिबद्धमन्त्ररूपेण Sy. अथ क्रमप्राप्तं जागतं ब्रह्म त्यक्त्वा त्रैष्टुभब्रह्मणा तुल्यफलत्वात्प्रासङ्गिकविद्यात्रयमेकफलमाह। द्विपदा द्विपदा मन्त्रेण प्रतिपाद्यं ब्रह्म। द्विपदा त्वेषा द्विपदी ब्रह्मविद्या। द्विपदा ब्रह्मणोपासितेन वाकं प्राप्य तेन प्रयोजकेन वाकमुपनयद्देवतां प्रतिमिमीते At.

१३. चतुष्पदा पादचतुष्टयोपेतेनानुष्टुबादिमन्त्ररूपेणेति। इयतीभिर्द्विपदाभिर्वर्ग इयतीभिश्चतुष्पदाभिरुपेतो वर्गः। इयद्भिर्द्विपदरूपैर्वाकैरियच्चतुष्पदरूपैर्वाकैश्च परिमितोऽनुवाक इति। सूक्तपक्षे, एतावद्भिः सूक्तैरयमनुवाक इति Sy. चतुष्पदाऽनुष्टुभा बृहत्या च प्रतिपाद्यं ब्रह्म सामान्यसञ्ज्ञया चतुष्पात्। विशेषसञ्ज्ञयाऽनुष्टुभं बार्हतं चोच्यते। एषा चतुष्पदी ब्रह्मविद्याऽनुष्टुभी बार्हती चोच्यते। चतुष्पदा ब्रह्मणोपासितेन वाकं प्रतिमिमीत उपासकः At.

१४. परिच्छिन्द्य P.

द्वयं तच्च चतुर्ऋचमिति[1] ब्रूयाद्, अथ किमियं गायत्री, उतोष्णिगिति परिच्छेत्तुमुपक्रान्ताः[2]। सप्त[3]। छन्दांसि[4]। अक्षरेण[5]। मिमते[6]=परिच्छिन्दन्ति[7], अष्टावक्षराणि भवन्ति तस्मादियं गायत्रीति।

**जगता सिन्धुं दिव्यस्तभायद्रथंतरे सूर्यं पर्यपश्यत् ।**
**गायत्रस्य समिधस्तिस्र आहुस्ततो मह्ना प्र रिरिचे महित्वा ॥२५॥**

जगता सिन्धुम्। गायत्रं प्रशंसति[8] गायत्र[9] प्रवृद्धाक्षरं भूत्वा। अन्तरिक्ष आदित्ये वा[10]। उदकम्[11]। अस्तभायत्[12]। रथन्तरे[13] च। सूर्यम्[14]। पर्यपश्यद्[15]यथा सूर्यो[16] रथन्तरे तिष्ठति तथाऽकरोज्जागतं सामोदकं धारयति रथन्तरमादित्यमिति। गायत्रस्य[17] साम्नः। समेधिकाः[18]।

---

१. ०तुः ऋ० P. ०तू र० र+ऋ D. ०तू ऋ० M.　२. ०मुक्रा० P.
३. सप्तसङ्ख्याताः At.
४. वागधिष्ठितानि सप्तच्छन्दांसि Sy. छन्दोरूपवागभिमानिनीर्देवताः At.
५. अक्षरेणैव Sy. गायत्र्यादिषु सगुणब्रह्मप्रतिपादकेषु महावाक्येष्वनुगतो यः प्रणवस्तमाश्रित्यापरास्ति ब्रह्मविद्येति ब्रह्मविद्याप्रसक्तानुप्रसक्त्या तामप्याह। अक्षरेणेति। अक्षरमिति यत्तत्प्रतिपाद्यब्रह्माप्यक्षरमुच्यते। अक्षरसञ्ज्ञकेनोपासितेन ब्रह्मणा At.　६. मिमीते D.
७. निर्माणं कुर्वन्ति। अष्टाक्षरा गायत्री। एकादशाक्षरा त्रिष्टुप् द्वादशाक्षरा जगतीति। अक्षरैः पादाः परिमीयन्ते परिमितैः पादैश्छन्दांसि। ततः पादानां छन्दसामक्षरं मूलमिति। तथा ऋग्वर्गसूक्तानुवाकादीनां चाक्षरं मूलमित्यक्षरप्रशंसा Sy. गच्छति At.
८. प्रशंसितं D. प्रशं P. प्रकृतमवशिष्टं जागतं ब्रह्माधिकृत्योच्यते At.
९. Omitted by P. जगतीच्छन्दस्कायामृच्युत्पन्नं साम जगत् तेन ब्रह्मा सृष्टिकाले Sy. जागतेनोपासितेन ब्रह्मणा At.
१०. द्युलोके Sy. स्वर्लोके At.
११. स्यन्दनशीलमुदकस्य स्यन्दकं वाऽऽदित्यम् Sy. समुद्राभिमानिनीं देवताम् At.
१२. स्तम्भितवान्। 'जागतो वा एष य एष तपति' इति श्रुतिः Sy. वशीकरोति At.
१३. एतन्नामके साम्नि Sy. प्रस्थानप्रसङ्गाद्विद्यान्तरमाह—रथन्तरे रथन्तरसामप्रतिपाद्यं यद् ब्रह्म तद्, रथन्तरसामप्रतिपाद्यत्वं सामाभिव्यङ्ग्यत्वमात्रम्। साम्नां वर्णपदवाक्यात्मकत्वाभावात्। रथन्तरे ब्रह्मण्युपासिते सति At.
१४. स्तम्भितं सूर्यम् Sy. सूर्यं वशीकृतम् At.
१५. परिदृष्टवान्प्रजापतिः। तदाधारभूतायामृचि 'स्वर्दृशम्' (RV.VII.32.22.) इति सूर्यप्रतिपादकशब्ददर्शनात्। 'असौ वाव स्वर्दृक्' (AB.4.10.) इति हि श्रुतिः। अत एव तत्र सूर्यदर्शनं विधीयते रथन्तरे 'प्रस्तूयमाने सम्मीलयेत् स्वर्दृशं प्रति वीक्षेत' (TMB.7.7.15.) इति सामब्राह्मणेन Sy. परितः पश्यति At.
१६. सूर्यं P. D.
१७. गायत्र्यामुत्पन्नस्य साम्नः Sy. अथ गायत्र्यादीनां रथन्तरान्तानां विद्यानां फलमाह। गायत्रस्याजहल्लक्षणया गायत्रादेः सप्तकस्य गणस्य गायत्रत्रैष्टुभजागतद्वैपदानुष्टुभबार्हतरथन्तराख्यानां विद्यानाम् At.　१८. ०धिताः D. समिन्धनाः Sy. फलाभिव्यञ्जकाः At.

तिस्रः[1]। आहुर्गायत्रीं त्रिष्टुभं जगतीमिति। ततः। तस्यैव[2] महत्त्वम्[3]। प्रकर्षेण रिरिचे[4], चतुर्थं छन्दःसु[5] त्रीणि गायत्रीं[6] समेवयन्ति, तां त्रिष्टुप् त्रिभिरक्षरैरूर्ध्वं[7] सैकादशाक्षरा भूत्वा प्राजायत[8] तां[9] जगत्येकेनाक्षरेणोर्ध्वं[10] सा द्वादशाक्षरेत्यनुष्टुब्[11] गायत्रीमेव त्रिपदां सती चतुर्थेन पादेनानुष्टोभतीति[12][13]।

**उप॑ ह्वये सु॒दुघां॑ धे॒नुमे॒तां सु॒हस्तो॑ गो॒धुगु॒त दो॑हदेनाम् ।**
**श्रेष्ठं॑ स॒वं स॑वि॒ता सा॑विषन्नो॒ऽभी॑द्धो घ॒र्मस्तदु॒ षु प्र वो॑चम् ॥२६॥**

उपह्वये। माध्यमिका वाग् गोरूपा भवति[14] तां स्तौति—उपह्वये[15]। सुदोहाम्[16]। धेनुम्[17]।

---

१. तिस्रो विभक्तीराहुः पादत्रयमाहुरित्यर्थः। अथवा तिस्र ऋच आहुः Sy. तिस्रो मूर्तयो भवन्ति। अयमर्थः—गायत्र्याद्युपासकान् ब्रह्मा वा विष्णुर्वा शिवो वाऽवान्तरफलभोगानन्तरमार्चिरादिमार्गेण स्वकाँल्लोकान्नयन्ति। तत्र ते तदुपासकानां तारतम्येन तेभ्यः फलविशेषान्ददति। ब्रह्मादयस्त्रयोऽपि सगुणं ब्रह्मेत्युच्यते। तेषां लोको ब्रह्मलोक इत्येवोच्यते At.

२. ततो हेतोः Sy. ततो ब्रह्मलोकभोगानन्तरम् At.

३. मह्ना बलेन महित्वा महत्त्वेन Sy. मह्ना महता विष्ण्वादिना सगुणेन ब्रह्मणा सह तदुपदिष्टसगुणोपासनं श्रुत्वा क्षणमवधार्य ... महित्वा महत्त्वेन मुक्तत्वेन हेतुना At.

४. प्ररिच्यते। अन्यानि सामानि पृथक् पृथङ् निर्मितवान्। यद्वा गायत्रशब्दश्छन्दोवाची तस्य तिस्रो मूर्तीराहुः क्रमेणाष्टाक्षरैकादशाक्षरद्वादशाक्षरैर्गायत्रीत्रिष्टुब्जगत्यात्मिकाः। यस्मादेवं ततस्तस्माद् गायत्री छन्दसां कनिष्ठा सती मह्ना बलेन महत्त्वेन प्ररिरिचे सर्वाणि छन्दांस्यतिक्रामति येनैव बलेन सोममाहृतवती तादृशेनैव भवति Sy. प्रकर्षेण प्रपञ्चात् पृथग्भवन्ति At.

५. ०न्दः M.

६. ०यन्ती त्रीं M.

७. ०ष्टुतिभि० M.

८. प्रजा० P.D.

९. तारं M.

१०. ०र्णो M.

११. स द्वादशाक्षरः सुरेत्यनुष्टुप् च M.

१२. पदेन पदेनानुष्टुभो भवतीति M. ०ष्टाभ० P.

१३. VM. ignores मह्ना

१४. ०न्ति M.

१५. अहं होता ... उपेत्याह्वयामि Sy. उपग्राह्यत्वेन ह्वये स्वीकरोमि At. अहं तावदुपह्वये SKN. उपगम्य मनसा ह्वय आह्वयेऽहं स्तुतिभिः Dur.

१६. सुष्ठु दोग्ध्रीम् Sy. सुष्ठु दोहिकां शुभकर्मभिर्व्यासादिभिः सूत्रप्रणयनेन दुह्यमानत्वात् At.
सुदोहनाम् SKN.
कल्याणमुदकं या दुग्धे ताम् Dur.

१७. क्षीरेण प्रीणयित्रीं गां प्रवर्ग्यार्थाम् Sy. कामधेनुस्थानीयां, धिनोति प्रीणयतीति धेनुस्ताम् At.
उक्तनिर्वचनाम् SKN.
तर्पयित्रीं सर्वलोकस्य Dur.

एताम्[1]। कल्याणहस्तः[2]। गोधुक्[3]। अपि च[4]। दोग्धि[5]। एनाम्[6]। श्रेष्ठम्[7]। सवम्[8]। सविता[9] ।
प्रसौतु[10] नः—प्रेरयतु[11]। अस्मान्[12]। अभीद्धः[13]। अयं घर्मः[14]। ततोऽहमित्थम्[15]। सुप्रब्रवीमि[16]

---

१. आगच्छन्तीम् Sy. एतां प्रसिद्धां प्रकृतां चाध्यात्मपरां श्रुतिम् At. माध्यमिकां वाचं घर्मदुहं वा SKN. माध्यमिकां वाचम् Dur.

२. शोभनहस्तो दोहनकुशलः Sy. सुखहस्तः सुखकरः शङ्कराचार्यः स गोधुक् सूत्रवाचां तात्पर्यज्ञो भाष्यकारो व्यासादिसूत्रव्याख्यानद्वारा यथा गां श्रुतिं दोग्धि तथैव तदर्थो नान्यार्थ इत्यर्थः । यद्वा । उत एव स एव दोहद्दोग्धा, एतामुपनिषदम् At. शोभनहस्तः कुशल इत्यर्थः SKN.

३. ०धुक् M. गोदोग्धाऽध्वर्युः Sy. व्याससूत्राणां भाष्यकरणद्वारा सूत्रवाचां दोग्धा At.
गोर्माध्यमिकाया दोग्धा, इन्द्रो घर्मदुहो वाऽध्वर्युः SKN.

४. तथा At. उतशब्दोऽप्यर्थे SKN. अपि च मर्येतामुपहूताम् Dur.

५. दोग्धि यस्मादेवं तस्मादुपह्वय इत्यर्थः Sy. सूत्रवाक्यतात्पर्यविवेचक एव श्रुतिं दोग्धि, तात्पर्यकथनेन श्रुत्यर्थसारं कथयति At. दोग्धु क्षारयतु SKN. प्रक्षारयतूदकानि Dur.

६. दोग्धेनां M. उक्तलक्षणां गाम् Sy. ननु श्रुतिव्याख्यानरूपाणामपि दुर्बोधत्वात् सूत्रव्याख्यातश्रुत्यर्थो दुर्बोध एव तत्राह. . एनां प्रकृतां श्रुतिं . . . दोग्धि At.

७. श्रेष्ठं प्रशस्यम् Sy. नच शङ्कराचार्यो मर्त्यमात्रमित्यत आह श्रेष्ठमज्ञानलक्षणस्यान्तस्तमसो हन्ता At. किं दोग्धु ? श्रेष्ठमतिशयेन प्रशस्यम् SKN. अमुना प्रकारेण . . . अतिशयेन प्रशस्यमेतम् Dur.

८. वसवं M. सोमयागं क्षीरं वा Sy. जन्म At. सूयतेऽभ्यनुज्ञायत इति सव उदकलक्षणः पयोलक्षणो वा तमभ्यनुज्ञात इत्यर्थः SKN. उदकम् Dur.

९. सर्वस्यानुज्ञाता परमेश्वरः Sy. आदित्यो यजमानो वा SKN.

१०. प्रसौ० P. ०सो० D.

११. अनुजानातु Sy.
आसादितवान् At.
सुवतु । अभ्यनुजानातु SKN. नित्यं ददातु Dur.

१२. अस्मदीयम् Sy. अस्मदर्थाम् । नुशब्दसम्बुद्धिरेव इति केचित् At. अस्माकम् SKN.

१३. तत्तादृशोऽभीद्धोऽभिदीप्तः Sy. तत्र सवितापि जीवमात्रमित्यत आह . . . अध्यात्मप्रकाशितः At. कस्मात् । (यस्माद्) . . . अतिदीप्तः SKN.

१४. तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यद्यस्माद् घर्मः प्रवर्ग्यः । 'यद् घ्रो इत्यपतत्तद् घर्मस्य घर्मत्वम्' (TA. 5.1.5.) इति तैत्तिरीयकम् Sy.
'घृ क्षरणदीप्त्योः' विगलिताविद्यः परमात्मैवात्र सूर्यपदेन विवक्षितो महापुरुष इति At.
ग्रीष्मसन्तापो महावीरो वा SKN.
मध्यस्थानो विद्युदाख्यः Dur.

१५. तदुशब्द एवकारार्थः । तस्मादेव कारणात् Sy. तद्वाच्यं ब्रह्मैव At. ततस्तस्मादहम् । उकारः पादपूरणः SKN.

१६. ०मिमि M. सुष्ठु ब्रवीमि, उपह्वय इति Sy. सुष्ठु, असंशयं प्रकर्षेणाविपर्ययेणाबोधमुक्तवानस्मि At.
सुष्ठु ब्रवीमि SKN.
इति तं सुष्ठु प्रब्रूमः Dur.

दोहा[1]र्थम्[2] ।

**हि॒ङ्कृ॒ण्व॒ती व॑सु॒पत्नी॒ वसू॑नां व॒त्समि॒च्छन्ती॒ मन॑सा॒भ्यागा॑त् ।**
**दु॒हाम॒श्विभ्यां॒ पयो॑ अ॒घ्न्येयं सा व॑र्धतां मह॒ते सौभ॑गाय ॥२७॥**

हिङ्कृण्वती[3] । वत्ससन्दर्शनाद्धिङ्कृण्वती[4] । वसूनां पालयित्री[5] । वत्सम्[6] । मनसा[7] । इच्छ-

---

१. दोहाय M. यद्वा । एतां पुरतो दृश्यमानां धेनुं वृष्ट्या प्रीणयित्रीं मेघलक्षणां धेनुमुपह्वय आह्वयामि वयंदोहाय। किञ्चैनां धेनुं सुहस्तः शोभनदोहनकुशलहस्तोपेतो गोधुक्, गोदोग्धाऽऽदित्यो वा वायुर्वा दोहद् दोग्धि तदधीनत्वाद्वर्षणस्य । किञ्च तदर्थं सविता प्रेरकः परमेश्वरोऽस्मदर्थमस्मदुपभोगादृष्टमपेक्ष्य सावित्रमनुजानातु। प्रतिबन्धं मा करोत्वित्यर्थः । किमितीदमुच्यते, घर्मो ग्रीष्मोऽवर्षणजनितः सस्यशोषोऽभीद्धः प्रवृद्धः । तदु षु प्रवोचं तस्मादेव कारणाद् ब्रवीमि Sy. घर्मधुक्पक्षे—धेनुरेव धेनुस्तामुपह्वये । सुदुघां सुदोह्यां धेनुमेतामस्मिन्कर्मण्यङ्गभावमुपागताम्। होता ब्रवीति-मया चैवमुपहूतां सुहस्तो गोधुगध्वर्युरपि च दोग्ध्वेनां श्रेष्ठमतिशयेन प्रशस्यमेतं सवमेतद्युष्मत्यथः सावित्रस्सुनोतु, अभ्यनुजानातु सविता । यद्धि सवित्रा प्रसूतं क्रियते तदेव साधु भवति । अभीद्ध एष घर्मो रुचितो महावीरः । तमधिकृत्य प्रश्नः Dur. धेनुर्धयतेर्वा, धिनोतेर्वा ।...तस्या एषा भवति । ... उपह्वये । सुदोहनां धेनुमेतां कल्याणहस्तो गोधुगपि च दोग्ध्वेनां श्रेष्ठं सवं सविता सुनोतु न इत्येष हि श्रेष्ठः सर्वेषां सवानां यदुदकं यद्वा पयो यजुष्मदभीद्धो घर्मस्तं सु प्रब्रवीमि । वागेषा माध्यमिका । घर्मधुगिति याज्ञिकाः N. 11.43; SKN. IV. 89.

२. VM. ignores उ

३. ०ति P. Omitted by M. श्रीशङ्कराचार्यव्याख्या ब्रह्मविद्यैव निष्कृष्यत इत्याह At.

४. ०गां M. यथाऽऽहूता गौः ... वत्सं प्रति हिङ्कारं कुर्वती Sy. 'हि गतौ वृद्धौ च' हि प्रसिद्धं गतमनुभवसिद्धं च देशकालानवच्छिन्नं सर्वशास्त्रप्रसिद्धं च हिङ्, ज्ञानं यस्य तद् ब्रह्म हिङ् । "पञ्चमा ज्ञानवाचकाः" इत्येकाक्षरनिघण्टुः । 'ब्रह्मैव हिङ्कारः' इति श्रुतिः । तं वत्सं हिङ्कृण्वती ब्रह्म कुर्वती ब्रह्मभावं नयन्ती At. हिङ्ङित्येवं रूपं स्तनयित्नुलक्षणं कुर्वती SKN. हिङ्ङित्येवं प्रकारं शब्दं स्तनयित्नुं कुर्वती Dur.

५. वसुपत्नी क्षीरदध्याज्यादिवसुधनानां सर्वदा पालयित्री । वृत्तवृत्तिभ्यां वसुनः पालयितृत्वं तस्यैवाधिक्यं च प्रतिपाद्यते Sy. ब्रह्मविद्या, वसू देवौ जीवपरमात्मानौ वसनौ छादनशीलौ पती ईशौ विषयत्वेन पतनीयौ ज्ञापनीयौ यस्याः सा वसुपत्नी जीवपरयोरेकत्वेन प्रकाशयन्ती At. वसु धनं वृष्ट्युदकाख्यं तस्याधिपतिभूता, वसूनां वसव आदित्यरश्मयो मरुतो वा तेषाम् SKN. वसूनामुदकानामीश्वरी वसूनां वाऽऽदित्यरश्मीनां मरुतां वा Dur.

६. पुनः कीदृशी ? वसूनां वत्समिच्छन्ती । वसुरिति रश्मिनाम देवतानाम च । वामदेवादीनामंशानां देवतात्वेन भावितात्मनां ब्रह्मविद्याचार्याणां वत्सं पुत्रं भावितं शिष्यमिच्छन्ती, At. रसहरणाद् वत्सं वत्सभूतमादित्यम् SKN. वत्स आदित्यो मध्यस्थानो वा रसहरणाद् वत्सस्तम् Dur.

७. 'मनो निर्वचनकर्मा' मननेन गुरुवचनेन At.

न्ती[1]। अभ्यागात्[2]। दुग्धाम्[3]। अश्विभ्याम्[4]। पयः[5]। अहन्त्या गौः[6]। इयम्[7]। सेयमस्माकम्[8]।
महते[9]। सौभाग्याय[10]। वर्धताम्[11][12]।

---

१. ममायमस्त्विति काङ्क्षन्ती At.

२. ०ति P. ईदृशी सा ... अभ्यागमत् Sy. अभि, आगादागच्छति। अत्यादरादेव निश्चितार्था भवतीति शिष्यस्यात्मसाद्भवति। श्रद्धया हृदि स्थिरा भवति At. अभ्यागच्छति SKN. या माध्यमिका वाङ् नित्यमभ्यागात् Dur.

३. दुह्यते।... द्विकर्मको दुहिः। कर्मणि प्रत्ययः। द्वितीयाच्छान्दसी At. दोग्धि वेत्यर्थः SKN. वर्षाय ... प्रक्षरताम् Dur.

४. ताभ्यामर्थाय Sy. इन्द्रियाश्विभ्यां गुरुशिष्याभ्याम् At. तादर्थ्ये चतुर्थी। अश्विनावत्र द्यावापृथिव्यौ सूर्याचन्द्रमसौ वोच्येते। कुत एतत्? कावश्विनाविति प्रकृत्यैवमाद्यर्थप्रदर्शनात्। तयोरश्विनोरर्थायेत्यर्थः SKN. द्यावापृथिवीभ्यां सूर्याचन्द्राभ्यां वा Dur.

५. फलम् P. क्षीरम् Sy. परमानन्दाख्यं पयः।... पयो ब्रह्मामृतं क्षीरञ्च At. उदकं वृष्टिलक्षणम् SKN. उदकम् Dur.

६. आह तस्या P. गोनामैतत्। अहननीया गौः Sy. गौश्चात्र श्रुतिः। अघं नयन्त्यहन्तव्या स्वनित्या, पापहन्त्री At. माध्यमिका वाक् SKN.

७. आगता Sy. उपनिषल्लक्षणा महावाक्यलक्षणा सा At. पश्चात्सा वर्धतामिति तच्छब्दश्रुतेर्यदध्याहारः, या SKN.

८. तादृशी Sy. ९. प्रवृद्धाय Sy. तत्प्रवृत्त्योदकजन्याय महते SKN.

१०. सौभाग्याय Sy. महानन्दाय, महानन्दमनुसर्तुं, यावदानन्दाविर्भावस्तावदित्यर्थः At. सुभगत्वायास्माकमित्यर्थः SKN. यथा महत्सौभाग्यं धनवत्त्वं स्यात्तथा Dur.

११. प्रवृद्धा भवतु Sy. दीर्घा भवतात्। असकृदावर्तमाना। दीर्घकालमनुवर्तते At. रूपेण विद्योतनालक्षणेन वृष्ट्युदकेन वर्धताम् SKN. अमुना प्रकारेण प्रतिसंवत्सरं वर्धताम् Dur.

१२. यद्वा। अस्मै सौभगाय क्षीरं वर्धयताम्। अत्रापि वृष्टिपरत्वेन यथायोगं योज्यम्। हिङ्कृण्वती वर्षणाय शब्दयन्ती, वसूनां गोसस्यादिधनानां बहूनां वसुपत्नी तेषामेव पालयित्री, वत्सं लोकं वत्सवत्पोषणीयं, मनसा, इच्छन्ती प्रीणयितुमभ्यागादभिगच्छति मेघरूपा। सा चाघ्न्याऽहन्तव्या। प्रस्तुत्येत्यर्थः। पय उदकमश्विभ्यां व्याप्ताभ्यां स्थावरजङ्गमाभ्यामर्थाय। यद्वा। अश्विनौ वाय्वादित्यौ ताभ्यां सकाशाद् दुहां दुग्धाम्। तौ हि वृष्टेर्मोचयितारौ। शिष्टमविशिष्टम् Sy. इतरपक्षे–अघ्न्या घर्मधुक् सा हीत्येवं रूपं शब्दं कुर्वती, वसुपत्नी पय आदेर्धनस्याधिपतिभूता, वसूनां वसवो हविर्भिः स्तुतिभिर्वा देवानामाच्छादयितार ऋत्विग्यजमाना इहाभिमतास्तेषाम्। षष्ठीश्रुतेः स्वभूतं वत्समात्मीयमिच्छन्ती मनसाभिगच्छन्ती दोग्धि च प्रवर्ग्येऽश्विनामश्विभ्यो वार्थाय। किं दोग्धि? पयः। अघ्न्या घर्मधुक्। इयं गौः सर्वकर्मण्यध्वर्युणा दोहार्थमाहूयमाना पयसा वर्धताम्। महते सौभगाय सुभगत्वायास्माकमिति SKN.

VM. ignores वसूनाम्।

This stanza occurs in N. 11. 45; SKN. IV. 90

गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ ।
सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥२८॥

गौरमीमेत् । मिषन्तम्[1] । वत्सम्[2] । प्रति[3] । गौः[4] । शब्दं[5] करोति[6] ।

१. भिषन्तं P. रिषन्तं D. निमीलिताक्षम् Sy. 'मिष दर्शने' पश्यन्तम् । सर्वदा ज्ञानमारूढम् At. पश्यन्तं जगत्सर्वम् SKN. अव्यवहितदर्शनं सर्वदा Dur.

२. पुत्रभावमापन्नं शिष्यं ब्रह्मविद्ययामुपदिष्टम् At. रसहरणसामान्यादात्मनो वत्सं वत्सभूतमादित्यम् SKN. पुत्रम् । ...आदित्यं, स हि तस्या रसहरणाद् वत्सः Dur.

३. अनु प्राप्य Sy. अनु, उपलक्ष्य । अनेनारूढभावं प्रतिपन्ने शिष्ये प्रवृत्तिर्दर्शिता At.

४. धेनुः Sy. श्रुतिः At. मध्यस्थाना वाक् SKN. माध्यमिका वाक् Dur.

५. मीमयतिश्शब्दकर्मा । यद्वा । उक्तं वत्समन्वात्मानं प्रक्षिपति Sy. पलायते At. मीयतिः शब्दकर्मा ... स्तनयित्नुलक्षणेन शब्देनानुशब्दयति SKN. अनुशब्दयति महद्भिः स्तनयित्नुशब्दैः Dur.

६. किञ्च तस्य वत्सस्य मूर्धानं मातवै मातुं निर्मातुं लेहनेन शोधयितुम् । उशब्दोऽवधारणे । हिङ्ङकृणोद् हिङ्कारमकरोत्करोति । किञ्च सृक्वाणं वत्सस्य शब्दवदनप्रान्तं फेनस्य स्रष्टारं, घर्मं क्षीरस्य क्षरणशीलं वत्समभि, अभिलक्ष्य वावशाना भृशं कामयमाना, मायुं शब्दं, मिमाति निर्माति करोति । तादृशी सती पयोभिः प्रभूतैः क्षीरैः, पयते प्यायत आप्यायनं करोति वत्सम् । अत्रापि मेघपरतया योजनीयम् । एवमाहूता मेघरूपा गौर्धेनुर्मिषन्तं वृष्टिरूपक्षीराभावेन निमीलिताक्षं लोकाख्यं पुत्रमनु, अनुसृत्यामीमेद् गर्जनशब्दं वर्षणचिह्नरूपं करोति । मूर्धस्थानीयां भूमिं मातवा उ निर्मातुमेव सस्यादियुक्तां कर्तुं हिङ्ङकृणोद् हिङ्काररूपं शब्दमकरोत् । प्रतिपादनभेदादपुनरुक्तिः । किञ्च सृक्वाणं फलस्य स्रष्टारं घर्मं दीप्तं पुत्रमभि वावशानाऽभिमुख्येन कामयमाना पयोभिरुदकैः पयते प्यायत आप्यायनं करोति Sy. अथ तदपरमनुभाविनं प्रत्याह—हिङ् ब्रह्मेवमुक्तं पूर्वमन्त्रे । मातवा उ ... अन्तर्भावितोऽत्र ण्यर्थः । मापयितुं ज्ञापयितुमेव पूर्वोक्तं वत्सं मूर्धानं मुख्यं प्रवर्तकं श्रुतौ स्मृतौ चोपदेष्टारमज्ञानहिंसकमकृणोत् करोति । ... अनुभवी तु लोकहितकर्ताऽऽत्मानं परं च संसारादुद्धरति । स हि ब्रह्म तत्त्वमसीति बोधयति शिष्यम् । अथ तदपरमभ्यासिनं प्रत्याह । सृक्वाणम् ... सृक्वा वदनैकदेशश्चर्वणाद्वार इति भट्टभास्करमिश्र आह । लेलिहान इत्यपरे । सृक्वाणं प्रयतमानमित्यर्थः । अभ्यस्यन्तमभ्यासिनमभि लक्षयित्वा वावशाना स्निह्यती हितकारिणी श्रुतिरभ्यासकालवर्जं मिमाति प्रतिपादयति धर्मज्ञं धर्मं नित्यनैमित्तिकात्मकम् । अथ तदपरं मुमुक्षुं प्रत्याह— मां प्रमां प्रमितिमात्मन इच्छन्तं वत्सं जिज्ञासुं मुमुक्षुं पयते । 'अय पय गतौ' गत्यर्था ज्ञानार्थाः । अन्तर्भावितण्यर्थः । बोधयति पयोभिर्गमकैर्हेतुभिर्विचारैः At. मूर्धानं चास्य रश्म्याख्यं मध्यमस्थानमागतं प्राप्येति शेषः । हिङ्ङकृणोद् हिङ्करोति । मातवा उ उकारः पदपूरणः । मातवै मातुं मन्तुं वा ज्ञातुम् । ज्ञानायोद-

अ॒यं स शि॑ङ्क्ते॒ येन॒ गौर॒भीवृ॑ता॒ मिमा॑ति मा॒युं ध्व॒सना॒वधि॑ श्रि॒ता ।
सा चि॒त्तिभि॒र्नि हि च॒कार॒ मर्त्यं॑ वि॒द्युद्भव॑न्ती॒ प्रति॑ व॒व्रिमौ॑हत ॥२९॥

अयं[१] सः[२]:—

---

कस्येत्यर्थः। न च सकृदनुशब्दयति किन्तर्हि? सृक्वाणं सर्त्तेरेतद्रूपं, घर्मं हरतेरेतद्रूपम्। हर्तारं च रसानामादित्यम्। अभि वाव-शानाऽस्यर्थमभिशब्दयन्ती मिमाति पुनः पुनर्मीयते। मायुं स्तनयित्नुलक्षणं शब्दम्। पयते, प्यायतेर्वृद्ध्यर्थस्यैवं रूपं प्रप्यायते प्रवर्धयते च। केन, पयोभिः स्वेन वत्सेरु-दकैः। गौरन्वमीमेद् वत्सं मिषन्तमा-दित्यमिति पाठः। अनिमिषन्तमित्यप-पाठः। प्रप्यायते पयोभिः। वागेषा माध्यमिकेति नैरुक्ताः। घर्मधुगिति याज्ञिकाः। अतस्तदभिप्रायेणान्यथा मन्त्रस्य योजना। गौर्घर्मधुक् साऽनुशब्द-यति वत्सं मिषन्तं तामेव मातरं निरीक्ष-माणम्। मूर्धानं चास्य जिघ्रतीति शेषः। हिङ्करोति मातवै मानायात्मनः। स एवायं मदीय उतान्य इति। सृक्वाण-मित्यादि समानयोजनम्। पयते प्यायते वर्धयते च। पयोभिः प्रस्नुतपीवरस्तनी बहुक्षीरा भवन्तीत्यर्थः SKN. अपि च मूर्धानं शिरो रश्मीनस्य मध्यस्थानप्राप्तं प्राप्य... हिङ्कारेणोपशब्दयति। मातवै सर्वलोकमानाय। उदकानां सृक्वाणं सरणमनवस्थायिनमादित्यं, घर्मं हरणं रसानाम्। अभि वावशाना पुनः पुनर्वाद्य-माना, वाशन्ती प्रतिसंवत्सरमेव मिमाति मायुं शब्दं करोति। पयते प्रप्यायते च प्रकर्षेण वर्धते पयोभिरुदकैः। घर्मधुक्पक्षे—गौरेव गौरन्वमीमेदनुशब्दयति वत्समेव ... मिषन्तं तमेवोन्मुखं पश्यन्तम्। अपि च प्राप्य मूर्धानमस्योपाघ्राय हिङ्ङि-त्येवं शब्दं करोति। स हि गोः स्वभावः। मातवै कथं नामायं मां जानीयान्ममेव-मिति। सृक्वाणं तामेव प्रत्यभिमुखं सरणं घर्मं हरणं पयसाम्। अभि वावशाना पुनः पुनर्वाद्यमाना प्रत्यहमेव शब्दं करोति। प्रप्यायते च पयोभिर्वत्समस्मांश्च या वर्धयति सा नित्यमेवमस्त्विति Dur. गौरन्वमीमेद् वत्सं निमिषन्तमनिमिषन्त-मादित्यमिति वा। मूर्धानमस्याभि हिङ्-ङकरोन्मननाय। सृक्वाणं सरणम्। घर्मं हरणम्। अभि वावशाना मिमाति मायुं प्रप्यायते पयोभिर्मायुमिवादित्यमिति वा। वागेषा माध्यमिका। घर्मधुगिति याज्ञिकाः N. 11.42; SKN. IV. 88.

७. VM. ignores मूर्धानमित्यादि

१. वत्सः Sy. विचारप्रवृत्तिरपि स्वप्रज्ञा-कारिता नैव हिताय, किन्त्वाचार्य-प्रवर्तितैवेति वक्तुमाचार्योपदेश उच्यते—अयं जीव एव At.
माध्यमिका वागत्र देवता सा चैश्वर्य-योगाच्छरीरैर्णवोभयलिङ्गा। एतस्या-मुच्युभयलिङ्गैः शब्दैराविश्यमानत्वात्। आह—... इयं सा ... या माध्यमि-काया वाचोऽधिष्ठात्री देवता। ... अथवा 'अयं सः' इति नैव माध्यमिका वाङ् निर्दिश्यते। किन्तर्हि? मेघः। तत्स्थायां च माध्यमिकायां वाचि शिञ्जानायां स एव शिङ्क्त इत्युच्यते। यथा मञ्चस्थेषु मनुष्येषु क्रोशत्सु 'मञ्चाः क्रोशन्ति' इति। अयं स मेघः शब्दं करोति SKN.
अयं स मेघः Dur.

२. स्वस्य परोक्षब्रह्म प्रतिपन्नः At.

शिङ्क्ते[१]। येन[२]। माध्यमिका वाग्[३] देवी। परिवृता[४]। शब्दम्[५]। करोति[६]। ध्वंसने=मेघे[७]। अधिश्रिता[८]। सा[९]। कर्मभिः[१०]।

---

१. अव्यक्तध्वनिं करोति Sy. एकान्त उपविशति। 'शिजि अव्यक्ते शब्दे' At. स्तनयित्नुलक्षणं शब्दं करोति SKN. शब्दमिव करोति। न च तावदसौ शब्दं करोति। अयं च तावन्माध्यमिकायां वाचि तस्यायां शब्दं कुर्वत्यां तत्साहचर्याद्विज्ञायते स एव मेघः शब्दं करोतीति Dur.

२. वत्सेन Sy. शिञ्जनकर्त्राऽऽचार्येण At. यया SKN.
येन मेघेन Dur.

३. गौर्माता Sy. श्रुतिः At.
वाङ्नामैतद् वाङ् माध्यमिका SKN., Dur.

४. आगत्याभितो वेष्टिता भवति Sy. अनुप्रयोगादन्वर्था कृता At.
अभिव्याप्ता, अधिष्ठितेत्यर्थः। . . . येन मेघेन माध्यमिका वागभीवृता, अभिव्याप्ता। अभीत्येव परीत्येतस्य स्थाने परिवृता SKN.
अभिप्रच्छादिता सती Dur.

५. किं च सा गौः . . . शब्दम् Sy. मायुं प्रमितिमात्मन इच्छन्तं मायावन्तं वा। मतुपो लोपः 'मायुर्वचसि मायायाम्' इति निघण्टुः At. मायुरिति वाङ्नाम, वाचं स्तनयित्नुलक्षणाम्। अथवा मायुरादित्य उच्यते। स हि मिनोति प्रक्षिपति सर्वत्र स्वं ज्योतिरतो मायुरादित्यः। लुप्तोपमश्चात्र द्रष्टव्यः। मायुसदृशम् SKN. 'मायुः काकुत्' (Ngh. 1.11.) इति च वाङ्नामसु पठितम्। . . . अथवा मायुरादित्यो भवति। सर्वभूतनिर्माता। तमिवात्मानम् Dur.

६. निर्मिमाति Sy. अध्यधिकं यथा तथा मिमाति बोधयति At.
निर्मिमीते, करोति। . . . यादृश आदित्यस्तादृशं तेजस्विनं निर्मिमीत इत्यर्थः। कम्? सामर्थ्यादात्मानम् SKN. निर्मिमीते Dur.

७. ध्वसनस्थाने गवां निवासाश्रयेऽधिष्ठिता Sy. अन्यत्र ध्वंसने शब्दे तद्देशे नाशाये च वर्तते यद्यपि तथापि प्रकृतानुपयोगादन्यार्थता। धुरिति मनुष्यनाम। अस्यति प्रेरयतीत्यसनः परः। द्वन्द्वसमासः। ध्वसनौ जीवपरो At. उदकध्वंसने तस्मिन्नेव मेघे SKN. उदकध्वंसन उदकस्रंसने मेघे Dur.

८. अधिष्ठिता Sy.
विषयीकुर्वती At.
आश्रिता SKN. अयं तावदर्धर्चो मेघान्तर्वर्तिन्या वाचोऽनभिव्यक्तविद्युद्रूपाया अभिधायकः। मेघरूपत्वात्पुरुषत्वाभिप्रायः Dur.

९. सा तादृशी Sy. सा गौः At. यैवंलक्षणा वाक् कर्मस्वरूपा मेघशरीरा वा सा Dur.

१०. ज्ञानैस्तत्पूर्वकैः कर्मभिर्वा Sy. चिन्तनाभिर्विवर्तिनीभिर्युक्तिभिर्विद्युदपरोक्षरूपा भवतीति। प्रमाणजनितज्ञानस्यैवाविद्यानिवर्तकत्वादेवमुक्तम्। कार्यकारणयोर्भेदोपचारः। श्रुतिरेव प्रमाणमस्माकम्। श्रुतिजनितं ज्ञानमेव मननादिहीयमानसंशयादिदोषमपरोक्षं ज्ञानं भवति At.
स्वैश्चिचत्तिभिः। अपठितमपि सामर्थ्यात्कर्मनामैतत्। कर्मभिर्वृष्टिलक्षणैः SKN. कर्मभिः स्वैश्चटचटाशब्दकर्मभिः Dur.

नि[1] करोति। मर्त्यम्[2]। विद्युत्[3]। भवन्ती[4]। प्रत्यूहते[5] च। स्वम् रूपं[6] तिरोभव[7]-

---

१. नी॰ M. नीचैः करोति। ज्ञानविशिष्टा मनुष्या यथा बालकस्यावनस्तनपानादिस्नेहं कुर्वन्ति ततोऽप्यतिशयमियं करोतीत्यर्थः Sy. निराकरोत्। निकरो न्यक्कारः। अपरोक्षज्ञानेन मिथ्यात्वबोधनात्रं क्रियते न विनाशः। तेन वृशिव्यवहारो न लुप्यते At. हिशब्दः पदपूरणः। नियमेन करोति। उत्पादयतीत्यर्थः।...अथवा चित्तिभिर्दारुणरूपैश्चटचटाशब्दैर्भयङ्करैः कर्मभिर्विद्योतनलक्षणैर्नि चकार नीचैः करोति मर्त्यं मनुष्यम्। सर्वो हि मनुष्यो विद्युति विद्योतमानायां भीतो नीचैर्नमति तदभिप्रेत्यैतदुच्यते नि चकार मर्त्यमिति SKN. नीचैः करोति।...सर्वो हि बिभ्यतस्या आसीदत्यवनमति च Dur.

२. मर्त्या P. अनित्यप्रपञ्चम् At. मरणधर्माणं कृत्स्नं स्थावरजङ्गमम् SKN. मनुष्यम् Dur.

३. वि P. बहुक्षीरतया विद्योतमाना Sy. नन्वपरोक्षज्ञानाश्रितः प्रपञ्चः कथं तेन शिष्यजनकर्त्राऽऽचार्येण दृश्यते व्यवह्रियते च तत्राह विद्युद्भवन्ती सा गौः At. किं पुनः कुर्वती मिमाति मायुं नि चकार मर्त्यम्? इत्युच्यते।...विद्युद्रूपमापद्यमाना SKN. विद्युदात्मना रूप्याख्येनाभिनिर्वर्तमाना। तदा हि दारुणश्चटचटाशब्दो भवतीति विशेषेण भयङ्करो न तथा विद्युद्रहितः। सैवमात्मानमाविष्कृत्य विद्युद्रूपेण विक्षिप्य सर्वासु दिक्ष्वात्मानं वर्षेण प्रच्छाद्य पृथिवीं ततो वर्षव्युपरमे Dur.

४. भवन्ति P.

५. ॰हेत P. प्रकाशयति। यद्वा वत्सस्नेहातिशयस्वरूपं विद्युद्भवन्ती विद्युदिव शीघ्रदर्शना, औहत। अयमेकोऽर्थः Sy. प्रत्यूहो विघ्नो व्यूहन्यत स्वयमेवोपरमति At. ऊहतिरत्र सामर्थ्यादुपसंहारार्थः प्रत्युपसंहरति SKN. अदृश्यं करोतीत्यर्थः Dur.

६. स्वकीयं रूपम्। वव्रिरिति रूपनाम Sy. निवर्तकज्ञानस्य रूपम् At. रूपमुदकलक्षणम्। रसांश्च रश्मिभिः प्रत्यादत्त इत्यर्थः SKN. रूपमात्मीयम् Dur.

७. ॰वन्ती॰ P. अर्थान्तरं च। शाकपूणिर्नाम निरुक्ताचार्यः सकलमन्त्रदेवता जानामीत्यभिमानितवान्। दुर्ज्ञेयस्य तत्त्वस्य स्वरूपमसौ जानाति किलैनं व्यामोहयामीति मनसि कृत्वा सन्दिग्धोभयलिङ्गा देवता प्रादुरासीदस्य तस्य पुरतः। स च तां न बुबुधे। बुभुत्सया च तां स्वरूपं प्रदर्शयेति पप्रच्छ। सा च, 'अयं स शिङ्क्ते' इत्येषा मद्देवता तत्र प्रतीयमानं मत्स्वरूपमित्युपदिदेश (N. 2.8.) कथमत्रोभयलिङ्गत्वं, वस्तुत उभयलिङ्गत्वे कथं वैवर्तरूपमित्युच्यते। अत्रोभयलिङ्गत्वमुभयथा सम्भवति स्त्रीपुंल्लिङ्गद्वयेन मध्यमोत्तमलिङ्गद्वयेन च। तत्कथम्। 'अयं स येन' इति पुंल्लिङ्गवाचिना शब्दत्रयेण मेघः प्रतीयते 'अधिश्रिता सा' इत्यादिना स्त्रीलिङ्गवाचकेन माध्यमिका वाक्। अत उभयलिङ्गत्वम्। तथा 'विद्युद्भवन्ती' इत्यन्तं मध्यमलिङ्गं तत्र मेघस्तनितयोर्माध्यमिकयोः प्रतीतेः। तथा सति 'वव्रिमौहत' इत्यत्र वर्षेण पृथिवीं प्रच्छाद्य तस्या रसं प्रत्यादत्त इत्ययमर्थो विवक्षितः। स चादित्यव्यापार इत्युत्तमलिङ्गत्वम्। तर्हि वस्तुत उभयलिङ्गत्वप्रतीतेरुभे अपि देवते 'यल्लिङ्गं सा

तीति।[1]

देवता' (KSA. 1.139.) इति स्यात्। अतः कथमेकदेवतासिद्धिरिति। 'अयं स येन' इत्येतेषां व्यत्ययाश्रयणेन सर्वदेवतानामधिष्ठात्मिकाया एकत्वाश्रयणेन वा सर्वफलदात्रात्मन एकत्वाश्रयणेन वा देवतैक्योपपत्तेः। अनेन मध्यमोत्तमभेदेनोभयलिङ्गत्वपक्षेऽपि देवतैक्यमुक्तं भवति। अतः 'एकैव वा महानात्मा देवता' इत्युक्तत्वाद् वस्तुतो देवतैक्यमधिष्ठात्रधिष्ठानभेदेन भेदश्च न विरुध्यते। अयं स शिङ्क्ते। इयं सा माध्यमिकाया वाचोऽधिष्ठात्री देवता शिङ्क्तेऽव्यक्तध्वनिं करोति। येन गौरभीवृता। गौरिति वाङ्नाम। माध्यमिका वाग् ययाभिवृताऽभितो व्याप्ता, अधिष्ठितेत्यर्थः। सेयं शिङ्क्ते। अथवा 'अयं स शिङ्क्ते' इति नैव माध्यमिका वाङ् निर्दिश्यतेऽपि तु मेघः। तस्यां वाचि शिञ्जानायां स एव शिङ्क्त इत्युपचर्यते 'मञ्चाः क्रोशन्ति' इतिवत्। अयं स मेघः शब्दं करोति येन माध्यमिका वागभिव्याप्ता। शब्दने प्रकार एवोच्यते। मिमाति मायुं स्तनितलक्षणं शब्दं करोति। अथवेयं लुप्तोपमा। मिनोति स्वतेजः सर्वत्र प्रक्षिपतीति मायुरादित्यः। तमिवातिदीप्तं करोतीत्यर्थः। अथवा सामर्थ्यादात्मानमादित्यसदृशं निर्मिमीते। कुत्र स्थिता ध्वसनावधि श्रिता। ध्वंसने मेघेऽधि श्रिता। सा, ईदृशी चित्तिभिः कर्मनामैतत्। स्वकर्मभिर्वृष्टिरूपैर्मर्त्यं मरणधर्माणं स्थावरजङ्गमरूपं कृत्स्नं जगन्नि हि चकार नीचैः करोति। मनुष्यान्प्रणतान्करोति। ओषध्यादिकं फलेनावनतं करोति। अथवा चित्तिभिर्द्योतनलक्षणैः कर्मभिः। विद्युति विद्योतमापद्यमाना (सा) प्रतिवव्रिमौहत। वव्रिरिति रूपनाम। ऊहतिरत्र सामर्थ्यादुपसंहारवाची प्रत्युपसंहरति। उदकलक्षणं रूपं पुनरावर्त्ते। रश्मिद्वारा वृष्टमुदकं पुनर्घर्मकाल आवर्त्ते। एकस्यैव ज्योतिषस्त्रेधाकरणाद् विद्युतः सूर्यरश्मिभाव उपपद्यते।...स्तनितस्य विद्युद्रूपत्वं मेघविद्युत्स्तनितानामभेदाभिप्रायेण Sy. यस्मिंस्तु पक्षे, मध्यस्थानलिङ्गा द्युस्थानलिङ्गा चेति तस्मिन्पक्षे मेघरूपत्वमविवक्षितमेव। वाचो विद्युद्रूपत्वं च। किन्त्वेतावद्विवक्षितं, मेघाश्रया शब्दवती भूत्वा माध्यमिका वाग् विद्युतात्मना स्थित्वा वर्षेण प्रच्छाद्य पृथिवीं तद्वर्षमुदकरूपभूतं जलाशयेभ्यश्चादित्यात्मना स्थित्वा तत्पुनरावर्त्ते। विद्युदात्मना मध्यस्थाने स्थित्वा वर्षति। आदित्यात्मना द्युस्थाने स्थित्वा पुनरादत्त इत्यभिप्रायः।... सेयमेकैव देवता मध्यस्थाना विद्युद्रूपा, द्युस्थाना वाऽऽदित्यरूपा। इत्ययमेवंलक्षणो देवतातत्त्वसन्देह उपेक्षितव्यो मन्त्रदर्शनाच्च निर्वक्तव्य इत्ययं मन्त्रसङ्क्षेपार्थः Dur. अयं स शब्दायते। येन गौरभिप्रवृत्ता मिमाति। मायुं शब्दं करोति। मायुमिवादित्यमिति वा। वागेषा माध्यमिका। ध्वंसने मेघेऽधि श्रिता। सा चित्तिभिः(कर्मभिर्नीचैः)नि करोति मर्त्यम्। विद्युद्भवन्ती प्रत्यूहते वव्रिम्। वव्रिरिति रूपनाम। वृणोतीति सतः। वर्षेण प्रच्छाद्य पृथिवीं तत्पुनरावर्त्ते N. 2.9; SKN. II. 66.

१. VM. ignores अयम्। सः। शिङ्क्ते and हि

**अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानाम् ।**
**जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥३०॥**

अनच्छये । यत् प्राणिति[1] । जीवति च[2] । तूर्णंगमनं[3] भूत्वा । रात्रिषु शेते[4] । तथा यदेजति[5] तत् । गृहाणाम्[6] । मध्ये । आगच्छति[7] । जीवः[8] । रात्रिषु[9] मृतस्य[10] पुरुषस्य । दिवाभुक्तैरन्नैः[11] । धार्यमाणो[12] वर्तते[13] । अमरणधर्मा[14] । मरणधर्मणा[15] । समानस्थानः[16] शरीरेणेति रात्रिं स्तौति ।[17]

**अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।**
**स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥३१॥**

अपश्यं गोपाम् । तथा रात्र्यां वर्तमानायामुदितं सूर्यं स्तौति । अत्र वाजसनेयकम्—

---

१. प्राणनं कुर्वत् Sy. 'अन प्राणने' प्राणधारणक्रियायोगात् At.
२. जीवनवत् Sy. ब्रह्मैव जीव उच्यते At.
३. स्वव्यापाराय तूर्णगमनं सत् Sy. स्वप्ने तुरेण त्वरावता केवलेन मनसैव गमनशीलम् । ततो जागरे विषयवायुविक्षिप्तप्रायम् At.
४. वर्तते Sy. शिष्ये ।...सुषुप्तावज्ञानमात्रोपाधिकम् At.
५. सर्वतः कम्पते । वृद्धमेकरूपमप्यनाद्यविद्याया ईशाश्रिताया अंशो जीवज्ञानं कारणदेहस्थितं ब्रह्म जीवः सुप्तिवदिव भवति । ततः कारणदेहकार्ये लिङ्गे स्थितं जीवान्तरं स्वप्नवदिव भवति । ततो लिङ्गकार्यस्थूलदेहे स्थितं ब्रह्म जागरवदिव भवति जीवतमः । एवं ब्रह्मैव जीवः सदाऽनादिस्थसहधर्माभिश्चरति स एव देहादिगुणवानिव At.
६. पश्चात्प्राणापगमनान्तरमुक्तविलक्षणं सद् ध्रुवमविचलितं सत् पस्त्यानां गृहाणां मध्ये Sy. ननु किमयं जीवः पराङ्मुखो नेत्याह ।...त्रयाणाम् ...कारणलिङ्गस्थूलानां देहानां मध्ये वर्तमानं ध्रुवमचलं नित्यम् At.
७. आशेते च स्थाणुवत्तिष्ठति । आकारः पूरणो वा Sy.
८. मृतस्य शरीरस्य सम्बन्धी जीवः Sy. अङ्गीकृतजीवभाव आत्मा At.
९. ०ति किं चासौ जीव...रा० M.
१०. नष्टस्य पूर्वपूर्वदेहस्य सम्बन्धिभिः At.
११. उक्तस्वभावो जीवः स्वधाभिः...पुत्रकृतैः स्वधाकारपूर्वकदत्तैरन्नैः Sy. 'अन्ननामैतत्' (Ngh. 2.7.) उत्तरदेहभोगसाधनैः स्वधाभिरात्मीयं भोगं दधद्भिर्वा धर्माधर्मसंस्कारैः At.
१२. धारय० P.
१३. विषयानुपभुङ्क्ते At.
१४. अमरणस्वभावः 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' (Cha. U. 6.11.3) इति श्रुतेः Sy. देहधर्मैरपरामृष्टः At.
१५. मरण P.D. मरणधर्मकेण शरीरेण Sy. मरणादिधर्मवता देहेन्द्रियादिना सयोनिः At.
१६. पूर्वं समानोत्पत्तिस्थानः । यद्यपि जीवस्य न जन्मास्ति तथापि वपुषस्तत्सद्भावात्तत्सम्बन्धेनोपचर्यते Sy. सजन्मा, देहादिजन्मादीन्यात्मनि मन्यमानः At.
१७. VM. ignores ध्रुवम्

"अपश्यं[1] गोपामनिपद्यमानम्[2]," इत्येष[3] वै गोपा देवानां य एष तपति। एष हीदं सर्वं गोपायति। अथो न निपद्यते[4] तस्मादाह 'अपश्यं[5] गोपामनिपद्यमानमा[6] च परा च पथिभिश्चरन्तम्' इति। आ[7]। च। ह्येष[8]:। परा[9]। च। दिव्यैः पथिभिः[10]। चरति[11]। 'स[12] सध्रीचीः[13] स विषूचीर्[14]वसानः[15]' इति। सध्रीचीश्च। ह्येषः[16]।

---

१. अपश्यं M. आदित्यरूपं पश्यामि Mah. याथात्म्येन पश्येयम् Sy. पश्यामि At. आदित्यात्मना घर्मस्तुतिः। यमहमपश्यम् U.
२. निपद्य० P.
३. ०न इ० M.
४. निपद्य० P.
५. कीदृशम्? गोपां गोपायतीति गोपास्तम् Mah. सर्वस्य लोकस्य वृष्टिप्रकाशादिना गोपायितारम् Sy.
गोप्तारमीशम् At.
गोप्तारम् U. 'एष वै गोपा एष हीदं सर्वं गोपायति' (SB. 14.1.4.9.) 'अपश्यं गोपामित्याह असौ वा आदित्यो गोपा स हीमाः प्रजा गोपायति' (TA. 5.6.4.)
६. ०निपद्य० P. निपद्यते पततीति निपद्यमानो न निपद्यमानोऽनिपद्यमानस्तम्। अन्तरिक्षे गच्छन्तमपि नाधः पतन्तम् Mah. कदाचिदप्यविषण्णम् Sy. पदनं संसारस्तदाख्यायां निशब्दस्ततो निवृत्तस्तमपद्यम् At. अनालम्बनेऽन्तरिक्षे गच्छन्नासौ पतति U.
७. आचरन्तमागच्छन्तम् Mah., U. उदयप्रभृत्या मध्याह्नमागच्छन्तम् Sy. अथ जीव आचरन्तं धर्मं कुर्वाणम् At.
८. आचष्टे M.
९. परागच्छन्तं च गमनागमने कुर्वाणम् Mah. मध्याह्नप्रभृत्यासायं पराङ्मुखं गच्छन्तमेवं महानुभावमादित्यमपश्यम् Sy.
पराचरन्तमधर्मं कुर्वाणम्। चकाराचन्योन्यमिश्रधर्मार्थौ। यद्वा मर्त्यलोकमागच्छन्तं परलोकं च गच्छन्तं चकारादागच्छन्तं च At.
१०. देवमार्गैः Mah. चित्रैर्मार्गैरन्तरिक्षरूपैः Sy. पुराणाद्युक्तमार्गैः। यद्वा। देवयानः पितृयानः, जायस्व म्रियस्वेत्येव तृतीयं स्थानमिति च तृतीयः पन्थास्तैः। 'आपथयः' (RV. V. 52. 10.) इत्याद्युक्तैर्वा At. देवैः सह U.
११. चरति is omitted by D.
१२. स घर्मः Mah. स आदित्यः Sy. अथान्तर्यामी स एव परमात्मा At.
स एव U.
१३. सह, अञ्चन्तीति सध्रीच्यः... सहाञ्चना दिशो रश्मीन्वा Mah. सहाञ्चन्तीः Sy. सन्ध्याक्रियादौ देवताभिः सहाञ्चिताः पूजिता दिशः At. सहाञ्चना दिशो रश्मीन्वा सहत्वम् U.
१४. विषुनिपातो नानार्थः। विषु, अञ्चन्तीति विषूच्यस्ता नानाञ्चना दिशो रश्मीन्वा ...एकः सशब्दः पादपूरणः Mah.
विष्वगञ्चन्ती रात्रावपि चन्द्रभौमादित्यानां प्रकाशयित्रीस्त्विषः Sy.
स एव विषूचीर्विगतगतीः कोणगतावान्तरदिशश्च At. विषु, इति निपातो नानावचनः।... नानाञ्चना दिशो नानाञ्चनान्वा रश्मीन् U.
१५. ०ची व० D. आच्छादयन् Mah, Sy, U. नियच्छन्नन्तर्यामीत्युच्यते। यस्तु वस्त्राणि वस्ते आच्छादयत्यन्यस्मा अवश्यं नियमयतीति दृष्टम्। दिगुक्त्या हि जीवा नियम्या अभिप्रेताः At.
१६. ०ह्याप्येव P. M. adds स before ह्येव।

विषूचीरन्व। विषो वस्तेऽथो रश्मीन्। 'आ वरीवर्ति भुवनेष्वन्तः' इति। पुनः पुनरत्रैव एषु लोकेषु। परिवर्त्यमानश्चरति" इति।

**य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात्।**
**स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमा विवेश ॥३२॥**

य ईं चकार। यः। एतच्छरीरम्। पिता चकार। न। सः। अमुम्। वेत्ति जीवं, कुतोऽयमागच्छति कीदृश इति। यश्च। एतत्। पश्यति सङ्ख्यादि?। तस्मात्।

---

१. ०ब्दिमन् P. २. आपरिवर्ति P. M. पुनः पुनरावर्तते Mah., U. उदयास्तमयं कुर्वन्पुनः पुनरावर्तते। तमपययमित्यर्थः Sy. अथ साक्षी... आवृणोत्यतिशयेन At.

३. भुवनेषु त्रिलोकेषु Mah. भुवनैकदेशेषु लङ्कादिप्रदेशेषु Sy. जगत्सु At. त्रिषु लोकेषु U.

४. मध्ये व्यवस्थितः Mah. U., अन्तर्मध्ये Sy. अन्तर्मध्ये यद्यत्तत्सर्वमावरणं चैतन्याविति तत्प्रकाशकः साक्षी, उक्तः। तथास्त्येव यत्साक्षिणाऽप्रकाशितम्। सर्वं हि वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव। सर्वोपाधिविशिष्टेष्वशेषितमुपलक्षितं चैतन्यं साक्षीत्याहुः At.

५. परी० D.

६. This stanza=YV. 37. 17.

७. अत्र गर्भवासक्लेशपूर्वकजननप्रतिपादनेन तत्परिहारायात्मा ज्ञातव्य इत्यर्थात्प्रतिपाद्यते Sy. प्राक् प्रतिपादितात्मज्ञानादेव मोक्षो न कर्मणा नापि समुच्चयेनेति कर्मसमुच्चयनिराकरणम् At.

८. पुमान्पुत्रार्थी Sy. कामार्तः पुत्रार्थी वा SKN. ९. एनं गर्भम् Sy. इदं कर्म At. ईमिति पदपूरणः। एवं गर्भम् SKN. गर्भम् Dur.

१०. चका P. करोति विक्षिपति वा तत्कारणभूतस्य विक्षेपद्वारेण Sy. करोति At. करोतेः किरतेर्वा लिट्, करोति विक्षिपति वा तत्कारणभूतरेतोविक्षेपद्वारेण SKN. करोति Dur.

११. पुमान् Sy.

१२. सोमं for सः। अमुम M. नमुं for न। सः। अमुम् P. अस्य तत्त्वम्...कर्मणि षष्ठी वा, एनं गर्भम् Sy. अस्येममात्मानम् At. अस्य तत्त्वमिति शेषः। द्वितीयार्थे वा षष्ठी। एनं गर्भम् SKN. गर्भस्य तत्त्वम् Dur.

१३. जानाति। कथम्भूतः कथं वा केन प्रयोजनेनेति सर्वात्मना न जानातीत्यर्थः Sy. वेत्ति At. कुतो वा कथं वा केन वा प्रयोजनेनेत्येवमध्यात्मदृष्ट्या यदज्ञानं तदभिप्रायमिदं न वेदेति वचनम् SKN. केवलं त्वसौ कामार्तः पुत्रार्थी वा करोत्येव गर्भम् Dur.

१४. कुततो० P. १५. ०गतः M.

१६. मातुरुदरस्थम् Sy. इममात्मानम् At. एनं मातुरुदरस्थमुदरवृद्ध्याऽर्थापत्त्याऽनुमानेन वा जातं सन्तम् SKN. एनम् Dur.

१७. उदरवृद्ध्यन्यथानुपपत्त्याऽनुमानेन वा दर्शयति Sy. प्रत्यक्षेण दर्शयति SKN.

१८. सख्या० M.

अपि।[1] अयमन्तर्हितः।[2] एव[3] भवति। सोऽयं[4] जीवः। अन्तः।[5] मातुः।[6] योनौ।[7] जरायुपरिवृतः।[8] अनेकजननः।[9] कृच्छ्रम्।[10] आपद्यते।[11] यथेनं

---

१. द्रष्टुः सकाशात् Sy. स पुरुषस्त-स्मात्कर्मकर्तुः सकाशात् At. तस्यैवंच गर्भो याथात्म्यतः प्रत्यक्षो भवत्यध्यात्म-शास्त्रदृष्ट्या, नेतरस्य गर्भकर्तुः Dur.

२. हिरुगित्यन्तर्हितनाम।...नु निश्चये, अत्यन्तमन्तर्हित एव खलु। यद्वा यः संसारावस्थायामीम्, एनं कृषिवाणिज्य-वेदाध्ययनादिकं चकार सोऽस्य, एतन्न वेद लोकान्तरे जन्मान्तरे वा। तथा य ईमिनं ददर्श गिरिनदीसमुद्रवन्ध्यादिकं ददर्श जीवनसमये तस्माद् दृष्टाद् हिरुगिन्नु पृथगेव। अत्रानुभूतं सर्वं न लोकान्तरे जन्मान्तरे वाऽनुभवतीत्यर्थः Sy. पृथगेव। कर्तृकरणबुद्ध्योर्युगपदेक-कर्तरि विरोधात् At.

अन्तर्हितनामैतत्। अन्तर्हितो यो गर्भ-स्तस्मादपि। सोऽप्येनमध्यात्मज्ञानाभा-वान्नैव जानातीत्यर्थः SKN.

अन्तर्हितमेतस्मिञ्जठर एतस्मिञ्छरीरे वा ई नु जन्तुम् Dur.

३. इच्छब्द एवकारार्थः Sy.

४. स तादृशः Sy. यस्त्वेते न्यायादिविरुद्धे ज्ञानकर्मणी मोक्षसमुच्चिते मन्यते स उभयभ्रष्टः At. अजानंश्च सः SKN. स पुनरेव गर्भः Dur.

५. अन्तश्चाविद्यादिना परिवीतः At. मध्ये SKN. उदरे पुष्यति स मातुरशितपीत-लीढभक्षितेन चतुर्विधाहारपरिणामेन Dur.

६. जनन्याः Sy. स्वस्या मातुः SKN.

७. गर्भे स्यात् At.
योनौ स्थितः SKN.
गर्भाशयस्थाने Dur.

८. उल्बजरायुभ्यां परितो वेष्टितः सन् Sy. सर्वंगतोऽपि परिवीतो वस्त्रादिना At. जराय्वादिभिर्व्याप्त इत्यर्थः। यथा कालं जायते SKN. जरायुणा परिवे-ष्टितो यथाकालं जायते Dur.

९. ०जनः M. बहुजन्मभाक्। अथवोत्पन्नः सन् स्वयमप्यपत्योत्पादनेन बहुप्रजाः Sy. बहूनां प्रजाः पुत्रत्वेनानेकजन्म-वान् At. बहुप्रजननः। आत्मज्ञानाभा-वान्मोक्षमप्राप्नुवन्संसारे पुनः पुनर्जाय-मान इत्यर्थः। अथवा पुत्रः प्रजा अप-त्यानि। बहुपत्यश्च प्रथमं मातुर्योनौ स्थितो जातश्च बहुपत्यतामापन्नः सन्नि-त्यर्थः SKN.

बहुशः प्रजायमानः स गर्भकर्ता गर्भतत्त्व-मजानानः Dur.

१०. एवं गर्भदुःखमनुभवन् निर्ऋत्यभिधानं प्रदुःखम् Sy. मृत्युम् At.

गर्भवासकृतमपत्यपोषणकृतञ्च निर्ऋत्य-भिधानं प्रलयं दुःखम् SKN.

कश्चिद् बहुप्रजा बह्वपत्यो दरिद्रः पुरुषः स दुष्पोषत्वादपत्यानां व्यापन्नत्वा-त्कृच्छ्रं दुःखमापद्यते। सा या तस्य कृच्छ्रापत्तिः सैवैतस्यामुचि निर्ऋतिशब्दे-नोच्यते Dur.

११. अनुभवति यावत्स्वरूपभूतात्मज्ञानम्। अतस्तत्परिहारायात्मा ज्ञातव्य इत्युक्तं भवति। एवमात्मविदामभिप्रेतोऽर्थः Sy. आविशति At. प्राप्नोतीत्यर्थः। एष परिव्राजकानामात्मविदां दर्शने चास्या ऋचोऽर्थः SKN. आविशतीत्यर्थः। एवं गर्भतत्त्वापरिज्ञानाद्यो गर्भं करोति स दुःखमापद्यते। यस्त्वध्यात्मदृष्ट्या गर्भतत्त्वं वेद स गर्भकर्मणो निवर्तते न निर्ऋतिमापद्यते Dur.

जानाति[1] ततो मुच्यत इति।

---

१. ०न्ति P.D.M. नैरुक्तानां तु मते—य ईम् चकार मध्यस्थानो वायुर्मेघो वा, एतद्वृष्ट्युदकं करोति सोऽस्य तत्त्वमिति शेषः। अथवैतत्कर्म न जानाति। तयोरचेतनत्वादिति भावः। यस्त्वीमेतद् ददर्श पश्यति तस्मादपि हिरुगन्तर्हितः। प्राणिकर्मवशेन काले वर्षिता परमेश्वर आदित्यात्मनि गूढ इत्यर्थः। य ईं हिरुगन्तर्हितं, ईमेतद्ददर्श पश्यति स वृष्टिलक्षणः पुत्रो मातुर्निर्मातुरन्तरिक्षस्य योनौ योनिवदुत्पत्त्याधारभूतेऽन्तरिक्षे। उभयोरप्यन्तरिक्षनामत्वात्सामान्यविशेषभावो द्रष्टव्यः। अन्तरिक्षैकदेशे योन्यामन्तर्मध्ये बहुप्रजा बहुप्रजातात्मो बहुप्राण्युपकारी। अथवा जनिरत्रान्तर्भावितण्यर्थः। बहूनां धाराणां सस्यनिष्पादनद्वारेण प्राणिनां वा प्रजनयिता सन्निर्ऋतिं निरमणसाधनां भूमिमा विवेश प्रविशति प्राप्नोतीत्यर्थः Sy. नैरुक्तानान्तु—य एनं वर्षलक्षणमुदकसंस्त्यायं पूर्ववत्करोति किरति वा। न सोऽस्य वेद (वर्षस्य तत्त्वं न वेद, कुतोऽप्येतदुदकमभ्यागच्छति, यन्मया विसृज्यते, किञ्चोदकस्य तत्त्वमिति, केवलं त्वसौ विसृजत एवोदकम्) कः पुनरसौ? मध्यमो वायुर्मेघो वा। मेघोऽपि हि मध्येभवत्वाद् भवति मध्यमः। यस्त्वेनं ददर्श, यदासावादित्यो न्यङ् रश्मिभिरावर्तते तदादित्येनोपहितं मेघस्योदरे स्थितमुदकसङ्घातं, हिरुगन्तर्हितमपि सन्तं, तस्मात्प्रथमार्धे पञ्चम्येषा। ददर्शेत्येतच्चानुवक्तव्यम्। य एनं मेघहननसमये प्रत्यक्षं पश्यति, अन्तर्हितमपि स पश्यतीत्यर्थः। कः पुनरसौ? इन्द्रः, स हि मेघहननकाले तत्स्थमुदकसंस्त्यायं प्रत्यक्षानुमानाभ्यामुभयथा पश्यति। किञ्च य उदकसंस्त्यायः पूर्वं सर्वभूतानां निर्मातुरन्तरिक्षस्यावयवभूते योनावन्तः, योनिस्थानं तस्य मध्ये परिवीतः परिगतो वायुना व्याप्तः। बहुप्रजा बहुप्रजननोऽपर्यन्तधारात्मना व्यवस्थित इत्यर्थः। अथवा जनिरन्तर्णीतण्यर्थः। बहूनां धाराणां सस्यानां वा, सस्यनिष्पादनद्वारेण प्राणिनां प्रजनयिता। निर्ऋतिं भूमिमाविवेश। आविशतीत्यर्थः SKN. अन्ये तु ब्रुवते—यः करोति गर्भं स गर्भभूतो जन्मान्तरेषु बहु प्रजायमानो जन्ममरणसन्तानानुबद्धां निर्ऋतिमाविशति। यद् रेतः सिञ्चति तद् भूयो भूयो जन्मान्तरेषु बहुशः प्रजायमानो जन्ममरणसन्तानाननुभवतीत्युक्तम्। 'वर्षकर्मेति नैरुक्ताः' (N.2.8.)—वर्षकर्मैतदुच्यते। निर्ऋतिश्चात्र भूमिरुच्यते। एवं नैरुक्ता मन्यन्ते। य ईं चकारेति यः करोति वर्षं, यो वा किरति क्षिपति। कः पुनरसौ? मेघः। स हि वर्षस्य कर्ता विक्षेप्ता वा। मेघाद्धि वर्षं प्रवर्तते। किं तस्य, न सोऽस्य वर्षस्य ... तत्त्वं वेद कुतोऽप्येतदुदकमभ्यागच्छति यन्मया विसृज्यते। किं चोदकस्य तत्त्वमिति केवलं त्वसौ विसृजत एवोदकम्। य ईं ददर्श य एव पश्यत्येतद्वर्षं हिरुग्, ईं नु तस्मादन्तर्हितमन्तरिक्षलोके तस्मात्तस्येत्यर्थः। तस्यैव प्रत्यक्षम्। तद्यथाऽऽत्मनो वर्षं नेतरस्य घनस्य मध्यस्थानस्य। स एव ह्यस्य वर्षस्य ... तत्त्वं वेद यो ददर्श यः पश्यति। आदित्योपहितमादित्यस्य रश्म्यन्तर्गतं वर्षमनभिव्यक्तम्। कश्चासावन्तर्गतः? इन्द्रः। असावपि मध्यम एव।

द्यौर्मे॑ पि॒ता ज॑नि॒ता नाभि॒रत्र॒ बन्धु॑र्मे मा॒ता पृ॑थि॒वी म॒हीय॑म् ।
उ॒त्ता॒नयो॑श्च॒म्वो॒३॑र्योनि॑र॒न्तरत्रा॑ पि॒ता दु॑हि॒तुर्गर्भ॒माधा॑त् ॥३३॥

द्यौर्मे पिता[१]। द्यौः[२]। मे[३]। पिता[४]। जनयिता[५]। वर्षणान्मम सन्नहनकृत्[६]। शुक्रस्य तेजो[७] दिवि भवति पार्थिवैर्धातुभिः शरीरं बध्यते। ततश्च महती[८]। इयम्। पृथिवी[९]। मम।

---

तत इदमुक्तम् 'न सोऽस्य वेद मध्यमः' मेघः। 'स एवास्य वेद मध्यमः' इन्द्र इति। स एव महानुदकसंस्त्याय इन्द्रः प्रत्यक्षो मध्यमो मातुरन्तरिक्षलोकस्योदकाभिव्यक्त्याशयस्थाने परिवीतः परिवेष्टितः सौर्येण रश्मिजालेन वायुना च मेघोदरान्तर्गतः प्रावृट्काले वर्षभावेनाभिव्यक्तो बहुप्रजा बहुशः प्रजायमानो निर्ऋतिं भूमिमा विशतीति समस्तार्थः Dur. 'तत्र निर्ऋतिर्निरमणाद् ऋच्छतेः कृच्छ्रापत्तिरितरा। सा पृथिव्या सन्दिह्यते। तयोर्विभागः।...तस्या एषा भवति। ... बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः। वर्षकर्मेति नैरुक्ताः। य ईं चकारेति करोतिकिरती सन्दिग्धौ वर्षकर्मणा। 'न सोऽस्य वेद' मध्यमः। स एवास्य वेद मध्यमो यो ददर्शादित्योपहितम्। 'स मातुर्योनौ' मातान्तरिक्षम्। निर्मीयन्तेऽस्मिन्भूतानि। योनिरन्तरिक्षं महानवयवः परिवीतो वायुना। अयमपीतरो योनिरेतस्मादेव, परियुतो भवति। बहुप्रजा भूमिमापद्यते वर्षकर्मणा N.2.8; SKN. II.61.

१. दीर्घतमा ब्रवीति Sy. सगुणब्रह्मविद्यायां तु ज्ञानकर्मसमुच्चयो युक्त एवेति वक्तुं काञ्चन सगुणविद्यामाह At. दीर्घतमा आह SKN.

२. द्युलोकः Sy. या द्यौः सैव At. उपरि स्थिता द्युलोकाख्या Dur.

३. मम Sy., At., SKN., Dur.

४. द्यौः। मे। पिता। omitted by D.



पालकः Sy. एषैव मम पिता। 'द्यौरहम्' इत्येवं वैवाहिके कर्मणि द्युलोकभावेन पित्राऽऽत्मानमभिसम्बद्यमानं दृष्ट्वैवमाह मन्त्रदृग् 'द्यौर्मे पिता' इति Dur.

५. न केवलं पालकत्वमात्रमपि तु जनिता जनयितोत्पादयिता Sy. जनं कश्यपमिता जनिता। ...जनो हि कश्यपो यदजीजनज्जगत्।...यद्वा जनं कश्यपमेतीति। कर्तरि निष्ठा At.
जनयिता SKN.
उत्पादयितेत्यर्थः Dur.

६. नाभिभूतो भौमो रसोऽत्र तिष्ठतीति शेषः। ततश्चान्नं जायते, अन्नाद्रेतो रेतसो मनुष्य इत्येवं पारम्पर्येण जननसम्बन्धिनो हेतो रसस्यात्र सद्भावात्। अनेनैवाभिप्रायेण जनितेत्युच्यते Sy. सैव मम नाभिः सहोदरा स्वसा At. नाभिभूतो भौमो रसः। अत्र तिष्ठतीति शेषः। ततश्चान्नं जायते। अन्नाद्रेतः। रेतसो मनुष्याः। एवं पारम्पर्येण जननहेतो रसस्याधारभावाद् द्यौर्जनयिता ततश्च मम पिता SKN. नहनमेव नाभिः। अत्रैतस्मिन्द्युलोकलक्षणे पितर्युदकदानेनानुग्रहीतरि सति सन्तानोत्पत्त्यनुग्रहक्रमेणैव शुक्रात्मनोत्पत्तिरुपपद्यते Dur.

७. तो P.D.

८. मही, इयं (दं) गोर्नाम। 'या मही कामधेनुरधिदैवं सैव मम गृहे इयं गौः' (TA. 2. 6. 2.) At.

९. या पृथिवी सैव मम माता At.

बन्धुः[1]। माता[2] भवति। उत्तानयोः[3]। द्यावापृथिव्योः[4]। मध्ये। अवकाशरूपमन्तरिक्षं[5] भवति[6]। तत्र[7]। दुहितुः[8]=अद्भ्यः पृथिवी जातेति पर्जन्यस्य दुहिता पृथिवी भवति। स[9] तस्याः। गर्भम्[10]।

---

१. बन्धिका Sy. अत्र जगति यो बन्धुर्भ्रातादिर्वा सोमो वा स एव ममापि बन्धुर्भ्राता At. शरीरस्य बन्धनकशरीरात्मना परिणमयित्रीत्यर्थः।...अथवा बन्धुशब्दोऽत्र जातिवचनः सज्ञातिर्म(र्मा) तेस्यनेन विशेष्यते SKN. अङ्गुतम्बन्धकारणाद् बन्धुः Dur.

२. मातृत्वानीया। स्वोद्भूतौषध्यादिनिर्मात्रीत्यर्थः Sy. मातृभूता SKN. मातुर्मन्त्रेण पृथिवीत्वं सम्पद्यमानं वृष्ट्वैवमाह बन्धुर्मे माता पृथिवी महीयमिति Dur.

३. ऊर्ध्वतानयोः Sy. अन्योन्याभिमुखयोः ... अध्यात्मपक्षे—ऊर्ध्वाधोदेहभागयोः। अधिदेवतापक्षे तु—ब्रह्माण्डस्योर्ध्वाधोभागयोः At. ऊर्ध्वमेव ह्येनयोरन्तरा च प्रतिधारणीयोऽन्तः प्राणस्तत इत्युत्ताने द्यावापृथिव्यौ, प्राणेन हीमे वायुना सूत्रभूतेन विधृते तिष्ठतः Dur.

४. सर्वस्यात्मयोर्भोगसाधनयोर्द्यावापृथिव्योः Sy. उदकं हि द्युलोकात्पतितं पार्थिवेन धातुना सम्पृक्तमोषधिभावमापद्य शरीरभावेनावतिष्ठत इत्येतदपेक्ष्य सर्वभूतानां द्यावापृथिव्यौ मातापितरावुच्येते तत्र तत्र।...तत्कृतस्य ह्युपकारस्याभावे सतीतरौ मातापितरावकिञ्चित्करावेव भवतः। तस्मादुपपद्यते द्यावापृथिव्योर्मातृपितृभावः।...किमेते द्यावापृथिव्यावन्यत्किञ्चिदनपेक्ष्यैव सर्वभूतानां मातृपितृभावं बिभृत उतान्यदपि किञ्चिदपेक्षेते इत्युच्यते, अनयोः...द्यावापृथिव्योः Dur.

५. ०क्षम् D.

६. अन्तर्मध्ये योनिः सर्वभूतनिर्माणाश्रयमन्तरिक्षं वर्तत इति शेषः Sy. जगद्वीजभूतरोऽस्ति।...अध्यात्मपक्षे तु हृदुपास्यो जगद्धेतुर्देहेन्द्रियादिप्रवर्तक ईशोऽस्ति। अधिदैवपक्षे तु क्षीरसागरशायी नारायणो जगद्योनिः प्रसिद्धोऽस्ति At. स्थानमन्तरिक्षाख्यातम् SKN. एतयोर्द्यावापृथिव्योरुत्तानयोर्य एषोऽन्तरिक्षाख्यः Dur.

७. अस्मिन्नन्तरिक्षे Sy. जगद्योनावीश्वरे नारायणे At. स्थित इति शेषः SKN. एतस्मिन्नवकाशदानोपकारप्रवृत्ते सति Dur.

८. दूरे निहितायाः भूम्याः Sy. स्व दुहितुः सरस्वत्या योनावन्तः At. दूरे निहितायाः पृथिव्याः SKN. अत्र पृथिव्येव दुहितृशब्देनोक्ता। सा हि द्युलोकाद् दूरे निहिता। अथवा सा हि द्युलोकं दोग्धीति दुहिता। सा हि द्युलोकात्पतितमुदकमुपजीवत्येवादूरे निहिता दोग्धि वा Dur.

९. पिता द्युलोकः। अधिष्ठात्रधिष्ठानयोरभेदेनादित्यो द्यौरुच्यते। स स्वरश्मिभिः। अथवेन्द्रः पर्जन्यो वा Sy. बहिर्निर्गतरूपो जगत्पिता चतुर्मुखाख्यो ब्रह्मा जातः स च At. पिता पालयिता पर्जन्यः।...अथवा सस्यवत्साया जनयितृत्वात्पितैव पर्जन्यः पृथिव्याः पृथिवी चास्य दुहिता SKN. द्युलोकाख्यः। द्यौरेव हि रसान्प्रार्जयति तस्मात्सैवात्र पर्जन्यशब्देन भाष्यकारेणोक्ता Dur.

१०. सर्वोत्पादनसमर्थं वृष्ट्युदकलक्षणम् Sy. वीर्यम् At. स तस्या वृष्टिप्रदानद्वारेण सस्यनिष्पत्तिफलं गर्भम् SKN. सर्वभूतगर्भोत्पत्तिहेतुभूतोदकम् Dur.

दधाति[1] ततः शुक्र[2]शोणितसंसर्गाज्जीवः प्रादुर्भ[3]वतीति।[4]

पृच्छामिं त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवंनस्य नाभिंः ।
पृच्छामिं त्वा वृष्णो अश्वंस्य रेतंः पृच्छामिं वाचः पंरमं व्योंम ॥३४॥

पृच्छामि त्वा। द्यौर्मे पि[5]तेति प्रसङ्गात् पृथि[6]व्या अयं प्रश्नः। परमः[7]। अन्तः[8]। क्वास्याः[9] पृथिव्या[10] भवति य[11]त्रेयं सन्तिष्ठते। सर्वस्य जगतः[12]। धारकः[13]। यत्र

---

१. सर्वतः करोति Sy. आहितवान्। तस्माद्वीर्यात्सर्गविशेष इति। 'प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्' (AB. 3.33.) इत्यत्र खण्डेऽर्थः स्पष्ट उक्तः At. आधत्ते SKN. आदधाति। दधातीत्यर्थः।...एवं द्यावापृथिवीभ्यामन्तरिक्षेण चावकाशदानेनानुगृह्यमाणान्येतान्यस्मदादीनि भूतान्युत्पद्यन्त इत्येतदनेन मन्त्रेण मन्त्रदृशा ख्यापितम् Dur.

२. ०क्त० D. M.

३. The passage beginning with पार्थिवैर्धातुभिः and ending with प्रादुर्भवतीति is omitted by P. अध्यात्मपक्षे तु—अत्र हृदयस्थे देहादिप्रापके जगद्योनावीश्वरे बहिर्निर्गतरूपादिभिर्निर्गतश्चतुर्मुखस्थानीयः पिता तृतीयजन्मदातृत्वेन ममायं पितेति शिष्यैर्भावितो ब्रह्मविद्याचार्यो ब्रह्मा, अनुरूपमन्तस्तत्त्वं गर्भमधात्। अन्तर्भावितोऽत्र ण्यर्थः। आधापितवानधारयत्। अस्खलितमचीकरद्वा। आरोपितवान्वा।...अनेन पिण्डब्रह्माण्डयोर्जीवपरयोश्चैक्यं सूचितम्। देहोऽपि ब्रह्माण्डः At. द्यौर्मे पिता पाता वा पालयिता वा जनयिता वा। नाभिरत्र बन्धुर्मे माता पृथिवी महतीयम्। बन्धुः सम्बन्धनात्। नाभिः सन्नहनात्। नाभ्या सन्नद्धा गर्भा जायन्त इत्याहुः। एतस्मादेव ज्ञातीन् सनाभय इत्याचक्षते। सम्बन्धव इति च। ज्ञातिः सञ्ज्ञानात्। उत्तानयोश्चम्वोर्योनिरन्तः। उत्तान उत्ततानः। ऊर्ध्वंतानो वा। तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः N.4.21; SKN. II. 260

४. VM. ignores आ and also अत्र if दिवि and तत्र are not taken as its explanation.

५. The passage beginning with पृच्छामि and ending with पितेति is omitted by P.

६. यजमानोऽध्वर्युं पृच्छति Mah. अध्वर्युं यजमानः पृच्छति U. ७. हे अध्वर्यो ! पृथिव्याः...अवधिभूतम् Mah. उत्कृष्टाम् Sy. परमात्मरूपमीशम् At.

८. पर्यन्तम् Mah. काष्ठाम् Sy. निवर्तकम् At. ९. ०स्यां M.

१०. पृथिव्या देव्या महत्या मायायाः At.

११. यस्मिन्स्थले Mah. यत्र सर्वा पृथिवी समाप्यते तत्पृच्छामि Sy. परमात्यन्तिकं तथा पृच्छामि यत्र कारणे सति At. यत्र सर्वा पृथिवी समाप्ता BB.

१२. भूतजातस्य Mah., Sy. प्रपञ्चस्य At.

१३. नाभिः कारणं तदपि पृच्छामि Mah. सन्नाहो बन्धनम् Sy. वाहनं बन्धनमविशेषेण तत्कारणं पृच्छामि At. नहनम् U. यत्र प्रतिबद्धं सर्वं जीवति स नाभिः। 'नहो भश्च' U. 571-570. [ णहो भश्च U. 4.125. Ujjvaladatta; नहो भ च 4.137. Nārāyaṇa; नहो नभ च 4.135. Śvetavanavāsin. ] इतीङ्प्रत्ययः BB.

विद्यत[1] इति द्वितीयः प्रश्नः। पृच्छामि[2]। त्वा[3]। वृषितुः[4]। कालाश्वस्य[5]। किं[6] रेत[7] इति। पृच्छामि। वाचः[8]। परमम्[9]। व्योम[10], क्वेमं सर्वा वाग् वर्तत इति।

**इ॒यं वेदि॒ः परो॒ अन्तः॑ पृथि॒व्या अ॒यं य॒ज्ञो भुव॑नस्य॒ नाभिः॑ ।**
**अ॒यं सोमो॒ वृष्णो॒ अश्व॑स्य॒ रेतो॑ ब्र॒ह्मायं वा॒चः प॑र॒मं व्यो॑म ॥३५॥**

इयं[11] वेदिः[12]। यद्यपि क्व संस्थिता भवति पृथिवी न स देशो दर्शयितुं शक्यते, मन्त्रेण[13]

---

१. यत्र सर्वं सन्नद्धं भवति तमित्यर्थः Sy. महामायायाः साधारण्याज्जगद्वैचित्र्यजनकमसाधारणं कारणं पृच्छामीत्यर्थः At. अथ तत्र प्रतिष्ठितां भुवनस्य नाभिं पृच्छामि BB.
२. अहं पृच्छामि। द्विकर्मकः Mah. हे यजमान!...प्रश्नं करोमि Sy. जीवरूपेण परमात्मदृष्टिरहं त्वा...पृच्छामि At. हे ब्रह्मंस्त्वां पृच्छामि BB.
३. त्वाम् Mah., Sy., At. भवन्तम् U. त्वाम् BB. ४. सेक्तुः Mah., U. वर्षकस्य Sy. देहेन्द्रियादिस्वामिनो जीवस्य At. वृष्णो वर्षितुः BB.
५. व्याप्तस्यादित्यस्य। 'असौ वादित्यो वृषाश्वः' (TA.5.3.5.) इति तैत्तिरीयकम् Sy. अश्व इन्द्रियम्। 'इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्' (Kath. U. 3.4.) इति श्रुतेः, तच्चेहान्तरं मनः सर्वेन्द्रियाण्यश्नुते व्याप्नोति। बलवत्त्वाच्च वेगवत्त्वाच्च। तस्याश्वस्य मनसः At. व्यापकस्य BB. ६. क P.
७. वीर्यम् Mah. तस्य रेतो रेतोवत्कारणं तत्किमिति Sy. रमणम्।...उदकनामैतत् (Ngh.1.12.) आप्यायकमवद्यं स्वमनसश्चेष्टकं चेतनं पृच्छामीत्यर्थः At. हेतुं च पृच्छामि तस्य... कि रेतो यतः सर्वं जायते BB.
८. वाग्व्यात्मत्रयीलक्षणायाः Mah. सर्वस्य वाग्जातस्य Sy. वेदात् At. अथ तस्य पृच्छामि वाचो वेदात्मिकाया ऋगादेस्तस्य रेतसो विद्याख्याः BB.
९. उत्कृष्टम् Mah. निरतिशयम् Sy. परमं दूरं परं ब्रह्मेति केचित् At. प्रकृष्टम् BB.
१०. स्थानं त्वां पृच्छामि Mah. स्थानं सर्वस्य वचसः कारणमेतत्प्रश्नचतुष्टयं पृच्छामि Sy. विशेषेणावितृ रक्षकं पृच्छामि। अवितृ चेत्कथं वाचः परमं निर्गुणं, वाचः परमं निर्गुणं चेत्कथमवितृ।... यतो निर्गुणशंसनं संसारापनेतृ (अतः) पृच्छामि At. व्यवनं स्थानम् U. रक्षास्थानं सर्गप्रतिसर्गनिबन्धनं व्योमेति। विपूर्वादवतेर्मन्प्रत्ययः। 'ज्वरत्वरस्रिव्यविमवामु॰' (pā. 6.4.20.) इत्यादिनोठि गुणः BB. This stanza=YV. 23.61; TS. 7.4.18.2.
११. अध्वर्युर्यजमानं प्रत्याह। इयम् Mah. इयं ब्रह्मवित्सु प्रसिद्धा At.
१२. उत्तरवेदिः पृथिव्याः परोऽन्तोऽवधिः। वेदेः सर्वपृथिवीरूपत्वादित्यर्थः Mah. पृथिव्याः प्रथनवत्या भूम्याः परोऽन्तः... पर्यवसानमियं वेदिः। नहि वेद्यतिरिक्ता भूमिरस्ति। 'एतावती वै पृथिवी यावती वेदिः' (TS.2.6.4.) इति श्रुतेः Sy. वेदिर्ब्रह्मानुभूतिः पर आत्यन्तिकोऽन्तो निवर्तको हेतुः पृथिव्या मायायाः At. इयं वेदिः परोऽन्तः पृथिव्याः। वेदिर्हि सर्वा पृथिवीरूपा भवति U. १३. स्त्रैण P.

परिगृहीतायां वेद्यां सन्निधानात् तत्र सर्वा सन्तिष्ठते। अयं यज्ञ इति।

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति मैत्रायणीब्राह्मणं भवति। क्व देवदत्तो भवतीति पृच्छतोऽयं देवदत्त इत्यप्युत्तरं सङ्गच्छते। अन्ये तु पठन्ति 'पृच्छामि त्वा भुवनस्य नाभिम्' इति। 'ब्रह्मायं वाचः परमं व्योम' इत्यादित्वं सर्वस्या एव वाचः स्थानमाह।

**सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि।**
**ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥३६॥**

सप्तार्धगर्भाः[9]। सप्त[10], आदित्यरश्मयः[11]। अधप्रदेशेषु[12] भुवनस्य[13]।

---

१. भुवनस्य नाभिः कारणम्। अयं यज्ञोऽश्वमेधो भुवनस्य प्राणिजातस्य नाभिः कारणम्। 'यज्ञाद्वै प्रजाः प्रजायन्ते' (SB. 4.4.2.9.) इति श्रुतेः Mah. अयं यज्ञो भुवनस्य भूतजातस्य नाभिः सन्नहनम्। तत्रैव वृष्ट्यादिसर्वफलोत्पत्तेः सर्वप्राणिनां बन्धकत्वात् Sy. तथाऽयं सर्ववादिप्रसिद्धो यज्ञोऽजहल्लक्षणया धर्माधर्मसंस्कारात्मकपुण्यपापराशिर्भुवनस्य प्रपञ्चस्याऽविश्लेषकारकोऽसाधारणो हेतुः At. अयं च यज्ञो भुवनस्य नाभिर्नहनम् U.
२. Maitr. U. 6.37., Manu. III. 76.
३. अयं is omitted by P.D. वृष्णोऽश्वस्य रेतोऽयं सोमः सोमलताऽश्वस्य वीर्याज्जातेत्यर्थः Mah. अथ वृष्णो वर्षकस्यादित्यस्य रेतोऽयं सोमो रसात्मकः। अग्नौ हुतः सोमरस आदित्यं प्राप्य वृष्ट्यादिफलं जनयति Sy. तथायं प्रसिद्धः सोमो जगदीश्वरो जीवमनःप्रेरको वृष्णो जीवस्य योऽश्वो मनस्तस्य रेतः प्रेरकः At. अयं च सोमश्चन्द्रमा लता सोमो वा वृष्णः सेक्तुरश्वस्य रेतः U. ४. अपि is omitted by P.D. ५. Omitted by M.
६. TS. 7.4.18.2.
७. ब्राह्मयं P. अयं ब्रह्मा ऋत्विग् वाचस्त्रयीरूपायाः परमं व्योम स्थानम्। ब्रह्मण्यस्त्रिवेदसंयोगादित्यर्थः Mah. अयं ब्रह्मा प्रजापतिरेव वाचो मन्त्रादिरूपायाः परमं व्योम, उत्कृष्टं रक्षकं स्थानम्। तत्रैवोत्पत्तेस्तत्रैव पर्यवसानाच्च Sy. ब्रह्मा ब्रह्मीभूतश्चतुर्मुखो विष्णुर्वा 'आचार्यो ब्रह्मणो मूर्तिः' (Manu. 2. 226) इति श्रुतेः (स्मृतेः)। भृगुशप्तत्वाद् ब्रह्मणो विष्णुशिववत्साक्षात्पूज्यत्वाभावाद् गुरुरूपेण पूज्यत्वाच्चायं प्राकृतो ब्रह्मा ब्रह्मविद्यागुरुरेव वाचो वेदात्परमं दूरं व्योम परमस्तब्रह्म परमार्थतः। शिष्यभाग्यवशाच्च विशेषेणावित् संसारापनेतृ च At. अयं च ब्रह्मा ऋत्विग् वाचः परमं व्योम व्यवनं स्थानं त्रिवेदयोगात् U. ८. This stanza = YV. 23.62. VM. ignores भुवनस्य। नाभिः। अयम्। सोमः।
९. °र्भा P.D.M. १०. सर्पणस्वभावाः सप्तसङ्ख्या वा रश्मयः Sy. सप्त ... अर्धकार्या अर्धकारणरूपाः At.
११. प्रकृतयो विकृतयश्चेत्यर्थः At.
१२. गूहप्र० M. १३. लोकस्य Sy. षोडशकस्य विकारस्य At.

कारणमुदकम्[1]। गर्भिताः[2]। विष्णोः—आदित्यस्य[3]। तिष्ठन्ति[4]। योजनेन[5]। विविधे[6] कर्मणि[7]। ते[8]। कर्मभिः पुरुषं संयोजयन्ति[9]। मनसा च[10]। प्राज्ञाः[11]। परितो भवनशीलाः[12]। सर्वत एव[13]। भवन्ति[14]।

**न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा चरामि ।**
**यदा मागन्प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ॥३७॥**

न वि जानामि[15]। न। विजानामि[16]। यद्यप्यहम्[17]। इदम्[18]।

---

१. ०णभूतम्० M. रेतः सारं, वृष्टिप्रदत्वेन रेतोभूतास्तादृशा रश्मयः Sy. रेतः कारणम् At.

२. संवत्सरस्यार्थे गर्भं गर्भस्थानीयमुदकं धारयमाणाः। यद्वा ब्रह्माण्डस्यार्थे मध्येऽन्तरिक्षे गर्भवद् वर्तमानाः Sy.

३. व्यापकस्यादित्यस्य Sy. प्रकृतिविकारस्य पुरुषस्य....विष्णाति स्नुह्यति, स्निह्यति, विष्नोत्यज्ञानलक्षणं विषं नुदतीति, वेवेष्टीति, नोदनाद्विशतीत्यादिधातुभ्यो विष्णुशब्दः At.

४. वर्तन्ते Sy. प्रवर्तन्ते। चेतनाऽसहायजडानां प्रवृत्त्यनुपपत्तेः At. ५. प्रदेशेन Sy. श्राजयैव At. ६. जगद्धारणव्यापारे Sy. विरुद्धधर्मवत्याम् At.

७. उक्ताश्चतुर्विंशतितत्त्वात्मकाः पदार्थाः At. ८. प्रज्ञाभिः Sy. धीयमानैरतिनश्वरैर्धर्माधर्मसंस्कारैः At.

९. जगदुपकारः कर्तव्य इति बुद्ध्या च Sy. ते त्वया मनसा चेतसा च युक्ताः At.

१०. प्र० M. यस्मादेवं तस्मात्... त एव विपश्चितो बुद्धियुक्ताः Sy. विपश्चितोऽपि पुरुषान् At. ११. सर्वत्र व्याप्ताश्च Sy. परिभवनधर्माः At.

१२. सर्वतः। द्वितीयार्थे तसिः। विश्वम् Sy. विश्वतः, ल्यब्लोपे पञ्चमीयम्। सर्वशास्त्राणि (अधिगम्य) विज्ञापयन् (तः)

१३. परितो भावयन्ति। कृत्स्नं जगद्व्याप्नुवन्तीत्यर्थः Sy. परिभवन्ति संसारयन्ति At.

१४. यद्वा सप्तार्धगर्भाः। सप्त महदहङ्कारौ, पञ्च तन्मात्राणीति मिलित्वा सप्तसङ्ख्यानि तत्त्वानि। अर्धगर्भा अविकृतिरूपाः। विकाराश्रयाया मूलप्रकृतेः प्रकृतिविकृतेरुदासीनस्यात्मनश्चोत्पन्नत्वादर्धांशेन प्रपञ्चाकारेण परिणामादर्धगर्भाः। पुरुषांशस्याविक्रियत्वादित्यभिप्रायः। अत एव तेषां प्रकृतिविकृतित्वम्। यस्मादेवं तस्माद् भुवनस्य रेतः कारणम्। कारणभूतानि तान्येव विष्णोर्व्याप्तस्य पुरुषस्य विधर्मणि प्रदिशा प्रदेशेन तिष्ठन्ति। इतरत्समानम् Sy. VM. ignores ते। परि

१५. कीदृशः परिभवः कथं च तन्निवृत्तिरित्यत्रोच्यते। महाभाग्ययोगाद्दीर्घतमा एव तत्त्वज्ञ एव भूत्वाऽऽह At. संसारे परिवर्तमानस्य गर्भवासजन्मजराव्याधिमरणदुःखाभिभवनिमित्तस्यानुज्ञानाभावमोक्षमप्राप्तवतो दीर्घतमसः परिदेवना SKN. दीर्घतमस आर्षम् Dur.

१६. विविच्य नानात्वेयम् Sy. जानन्नपि विशेषेण न वेद्मि At. नैतदहं विस्पष्टं जानामि Dur. अथापि परिदेवना कस्माच्चिन्नूयावात् ... न विजानामि यदिवेदमस्मि N.7.3.

१७. यदपि Sy. यदीये सत्त्वचित्त्वे गृहीत्वा यदि वा चिदिवावभाति At. यदि वेति विकल्पश्रुतेः। यदिवाऽऽत्मो व्यतिरिक्त इति शेषः SNK. अथवा Dur.

१८. इदं विश्वम् Sy. इदं जगत् At. इदं शरीरमात्रकमेव। ... अथवेदमिति करणनिर्देशः। यदिवा विकाररूपम् SKN. कारणं परं ब्रह्मारूपम्। अथवेदं तत्कार्यं द्वैतमस्मीति Dur.

अस्मि[1] प्रकृतेः परः। विषयपरेण मनसा[2]। सम्यग्बद्धः[3]। अन्तर्हितः[4]। चरामि[5]। यदा[6] पुनः। सर्वस्य सत्यभूतस्य[7]। प्रथमं जनयिता[8] जगतः स्रष्टाऽऽदित्यः। मां प्रति।

---

१. कृत्स्नः प्रपञ्चोऽप्यहमेवास्मि। नामरूपांशमपरमार्थं त्यक्त्वा सर्वत्रानुगतोऽस्ति भाति प्रियमिति योऽयं सच्चिदानन्दाकारोऽस्ति सोऽहमस्मीति न विजानामि।.. .परं शास्त्रजनितमिदमहमस्मीति ज्ञानं जातम्। अविवेक्यहमित्यर्थः। कार्यकारणयोरभेदात् कृत्स्नप्रपञ्चस्यापि ब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपञ्चजातमपि स्वस्वरूपमेव भवति। 'इदं सर्वं यदयमात्मा' Nṛs. U. 5. 'ब्रह्मैवेदं सर्वम्', Nṛs. U. 4. 'आत्मैवेदं सर्वम्', Chhā. U. 7.25.2. 'स ऐक्षत बहु स्यां प्रजायेय' Chhā. U. 6.2.3. इत्यादिश्रुतिभ्य एकविज्ञानेन सर्वविज्ञानस्य प्रतिज्ञानात्। 'तदनन्यत्वमारम्भणशब्दादिभ्यः'(Ved. S.2.1.14.) इत्याद्युपपत्तिभिश्च प्रपञ्चस्य ब्रह्मानन्यत्वं सिद्धम्। यद्वा। इवशब्द उपमार्थः। यदिव यदापरोक्षज्ञानं सर्वैकात्म्यरूपमानुभविकमस्ति तदिव तद्वदेवाहमस्मि। इदं सर्वमहमस्मीति ज्ञानं मे जातम्। अपि त्वेतद्दार्ष्टान्तिकभूतम्। आनुभविकं सार्वात्म्यं यदस्ति तन्न विजानामि न प्राप्तोऽस्मि। शास्त्रजनितं सार्वात्म्यं जातं न त्वानुभविकमित्यर्थः Sy. अहं च यदिवास्मि तन्न विजानामि At.

२. मनसा युक्तो भावनासहिष्णुना बहिर्मुखेन विक्षिप्तेन चेतसा युक्तः Sy. मनसा सङ्कल्पविकल्पात्मना पुण्यपापसंस्कारहेतुना At. अविद्यायोगिना मनसा SKN. अनेकैः सन्देहग्रन्थिभिर्मनसा, उभे अपि द्वैताद्वैते Dur.

३. अविद्याकामकर्मभिः सम्यग्बद्धो वेष्टितः Sy. सम्यग्बद्धः At. अज्ञानेन सम्यग्बद्धः SKN. अविद्यया सन्नद्धश्च Dur.

४. यतोऽहं निण्यः। अन्तर्हितनामैतत्। अन्तर्हितो मूढचित्तः। चित्तप्रत्ययप्रवणताभावेन परिच्छिन्न इत्यर्थः Sy. श्रुत्यादिभिर्निर्णीतोऽप्यविद्ययाऽऽच्छादितत्वादन्तर्हितोऽहम्। 'निण्यं ... निर्णीतान्तर्हितनामधेयानि' (Ngh. 3.25.) At. अन्तर्हितः SKN. अनयोः कार्यकारणयोर्द्वैताद्वैतयोरन्तरा वर्तमानो निण्योऽन्तर्हितः Dur.

५. ०तश्चास्मि M. सञ्चरामि संसारे। अथवा मनसा सन्नद्धश्चरामि। इन्द्रियपरवश एव सन् संसारे दुःखमनुभवामि। न सार्वात्म्यं जानामीति परिदेवते।... बहिर्मुखचेतसः स्वरूपापरिज्ञानजनितं दुःखमन्यत्र श्रूयते, 'पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्' (Kaṭh. U. 2.4.1.) इति Sy. ततश्चराम्यूर्ध्वाधोमध्ये चरामि। विषयानुपभुञ्जे वा At. चरामि संसारे SKN. गच्छामीत्यर्थः Dur.

६. यदा काले At. यस्मिन्काले SKN. एवं सति यदा Dur.

७. परमार्थस्य परस्य ब्रह्मणः Sy. ब्रह्मणः सम्बन्धिन्याः At. सत्यस्य, सर्वत्र वा गतस्यागतस्यात्मनः। षष्ठीश्रुतेः सम्बन्धिनी ग्रहीतृ(त्री)इत्यर्थः SKN. भगवत आदित्यस्य स्वभूता, तस्य हि प्रकृष्टा बुद्धिः प्रहीणसर्वसंशया तया सर्वमिदमसंशयं परिज्ञाय किमहं कारणसतत्त्व उत द्वैतसतत्त्व इति Dur.

८. प्रथमोत्पन्नः। प्रथमोत्पन्नश्चित्तप्रत्ययकप्रवणजनितोऽनुभवः Sy. ब्राह्मणाः सनकादिसमाश्च At. तत्त्वोत्पत्तौ प्रथमजातत्वात्प्रथमजा बुद्धिः सा SKN. बुद्धिः, सा हि सर्वेन्द्रियेभ्यः प्रथमं जायते Dur.

आजगाम। ततोऽनन्तरम्। एव। अस्याः सर्वस्याः। वाचः। भजनीयं ब्रह्म। अश्नुवे इति ज्ञातात्मस्वरूप आहेति।

**अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः।**
**ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यम् ॥३८॥**

अपाङ् प्राङ्। अमरणधर्मा। मरणधर्मणा। समानस्थानो जीवः। अन्नेन सह। धार्यमाणः।

---

१. यदा मागन्, आगमिष्यति तदा ... स यदा मा मां प्राप्नोति Sy. मां प्रति ... आगच्छन्तः At.
मा माम्, आगन्, आगमिष्यति समोत्पद्यत इत्यर्थः SKN.
मामागच्छेत् Dur.

२. ०नन्तर० P. अव्यवधानेन Sy. तदनन्तरमेव At.
आदित् पदपूरणः SKN.

३. ऐकात्म्यप्रतिपादिकायाः Sy. प्रकृताया ब्रह्मविद्यारूपिण्याः At. कृत्स्नप्राकृतायाः Dur.

४. उपनिषद्वाचो यदिवेदमस्मीत्युक्ताया वा Sy. श्रुतेः At.
यदेतिश्रुतेस्तदेत्यध्याहार्यम्। तदा वाच ऋग्यजुःसामलक्षणायाः SKN.

५. भजनीयं शब्दब्रह्मणा व्याप्तव्यं परं ब्रह्मपदम् Sy.
उपनिषल्लक्षणं भागं भजनीयं परमात्मनः SKN.

६. अव D. प्राप्नोमि। चित्तस्य बहिर्मुखतां परित्यज्यान्तर्मुखतैव दुःसम्पादा। सा यदा स्यात्तदानीमेव स्वरूपं द्रष्टुं सुशकं भवति पश्चाद्विलम्बाभावात्। यथा गिरिशिखरात्पतत्पाषाणोऽविलम्बेन पतति तद्वत् Sy.
प्राप्तवानस्मि At.
प्राप्स्यामि, मोक्षं वा यास्यामीत्यभिप्रायः SKN.
अहम् ... अश्नुयाम्। यदिदं कृत्स्ना वागभिवदति तत्सर्वमहमाप्नुयामित्यर्थः Dur.

७. आहेति M. N. 7.3; SKN. III. 19.

८. अवाङ् P. तत्राह जीवन्मुक्तलक्षणम् At.

९. अमरणधर्माऽयमात्मा Sy. स्वयं न म्रियते कारणदेहच्छेदेपि विशीर्यमाणे लिङ्गदेहेऽपि स्थूलदेहानुवृत्तेः At.

१०. ०र्म P.D. मरणधर्मणा भूतात्मना देहेन Sy. स्थूलदेहेन At.

११. यत्र परिच्छेदको देहोऽस्ति तत्र सर्वत्र सोऽयमपि तिष्ठन्नित्यर्थः। यद्वा समानोत्पत्तिः। सहवासेन स्वस्मिन्नप्युत्पत्तिरुपचर्यते। एवम्भूतः सन् Sy. ससंस्कारः संस्कारोऽपि कारणत्वाद्योनिरुक्तः। यद्वा सयोनिरिव कदाचिद् गृहस्थाश्रमसहित इव। उपलक्षणत्वाद्वर्णाश्रमधर्मवानिव At.

१२. अन्नोपलक्षिततद्भोगेन Sy. स्वधया ब्रह्मविद्यया। न ब्रह्मविद्यावतः पुण्यपापसम्बन्धः। स्वधया ब्रह्मविद्यया धीयते, अथवा स्वं दधातीति स्वधः परमात्मा तं याति प्रापयति At.

१३. यद्वा स्वधाशब्देनान्नमयं शरीरं लक्ष्यते तेन गृहीतः सन् Sy.
सम्बद्धः At.

अपाङ्[1]। प्राङ्[2] च। गच्छति, आदित्यो भूत्वा दिवि प्राङ् जीवो भूत्वा पुरुषेऽपाङ्[3]। ताविमौ[4]। नित्यौ[5]। विष्वगन्तनौ। विविधं च देवमनुष्यादिषु गच्छन्तौ[6] भवतः। तयोरन्यमादित्यम्। सर्वे निश्चिन्वन्ति[11] प्रत्यक्षं पश्यन्तः। न। निचिक्युः[12]। अन्यं प्रकृतिसंसृष्टं घृतमिव पयसि निगूढमिति।

**ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः।**
**यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥३९॥**

ऋचो अक्षरे। अथादित्यस्य यद् वाचकमक्षरं तत् स्तौति[13]

---

१. अपाङ् P. अशुक्लं कर्म कृत्वाऽधो गच्छति Sy. अप निकृष्टमञ्चतीति, क्वचिदपकृष्टमधर्मशील इव लक्ष्यते At.

२. ऊर्ध्वं स्वर्गादिलोकं प्राप्नोति। परमात्मैव सूक्ष्मशरीरोपाधिकः सज्ञानाविधकर्म कृत्वा, तद्भोगाय जीवसञ्ज्ञां लब्ध्वा शरीरत्रयेण सम्बद्धो लोकान्तरेषु सञ्चरति स्थूलसूक्ष्मोभयशरीरपरिग्रहेण लोके गुणत्रयान्वितः सन् परिभ्रमति। तथा च श्रूयते 'गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता। स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः सञ्चरति स्वकर्मभिः' (Svc. U. 5.7.) इति Sy. क्वचित् प्रकृष्टं धर्ममाचरन्निव लक्ष्यते At.

३. तथाप्यस्य न पुण्यपापसम्बन्ध एत्यपगच्छति AT.

४. ०मौ० P.D.

५. ०वाङ् P.

६. तौ भूतात्मकर्त्रात्मानौ Sy. ननु जीवन्मुक्तस्थितिरुक्ता न जीवन्मुक्तलक्षणम्। तत्राह तानि प्रसिद्धानि At.

७. अविभागेन सर्वदा वर्तमानौ। यद्वा सूक्ष्मशरीरपक्षे सर्वदा सहवास उपपद्यते स्थूलशरीरपक्षेऽपि सात्त्विकजातेस्तत्कारणानां भूतसूक्ष्माणां सद्भावात्तत्र शरीरसम्बन्ध उपपद्यते Sy.
पुनः पुनर्भवामि (नि?) छन्दसि शरीराणि At.

८. ०ञ्ज० M. इह लोके सर्वत्र गमनौ Sy. लोकगतिना At.

९. तत्तत्फलोपभोगाय सर्वत्र लोकान्तरेषु गच्छन्तौ वर्तेते Sy.
विशिष्टात्मज्ञानेन च्छेत्ता . . . एव जीवन्मुक्तः At.

१०. तत्र नरा अन्यं भूतात्मानम् Sy. कञ्चन जीवन्मुक्तम् At.

११. नितरां विशेषेण पश्यन्ति जानन्ति Sy. जना लिङ्गैर्निचिक्युरजानन् At.

१२. अपरं देहवच्छायातिरिक्तं न निचिक्युर्न जानन्ति। केचन पामरा देहव्यतिरिक्तं न जानन्ति। केचन विवेकिनः कर्तृत्वभोक्तृत्वोपेतो देहातिरिक्तः कश्चिदस्तीत्यनुमिमते। न केऽपि देहत्रयव्यतिरिक्तमात्मानं जानन्ति। अतो दुर्लभमात्मज्ञानमित्यर्थः Sy. अन्यं न निचिक्युर्नाजानन् At.

१३. स्तौमि M. पूर्वमन्त्रे देहात्मजीवात्मानावुक्तौ। तयोरन्यस्य जीवात्मनः पारमार्थिकं रूपमस्ति तदत्रोच्यते Sy. किं तद्विशिष्टमात्मज्ञानं तत्रोत्तरम् At.

यस्मादक्षर[1]णस्वभावात् सर्वा ऋचो[2] विनिर्गताः।

---

१. अक्षरेऽदृश्यादिगुणके क्षरणरहितेऽनश्वरे नित्ये सर्वत्र व्याप्ते ब्रह्मणि। अक्षरशब्दस्य ब्रह्मवाचकत्वम् 'एतद्वै तदक्षरस्य प्रशासने गार्गि' (Bṛh.U.3.8.) 'यया तदक्षरमधिगम्यते' (Mu. U. 1.1.5.) 'येनाक्षरं पुरुषं वेद सत्यम्' (Mu. U. 1.2.13.) इत्यादिश्रुतिषु प्रसिद्धम्। ऋगक्षरयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः। सर्वैर्वेदैः खलु ब्रह्माधिगम्यते। 'तं त्वौपनिषदं पुरुषं पृच्छामि' (Bṛh.U.3.9.26.) इत्यादिश्रुतेः। ननूपनिषद्भागानां तथास्तु, इतरेषां तु कथं ब्रह्मविषयत्वमित्युच्यते। यद्यपीतरभागानां यागादिविषयत्वं तथापि बुद्धिशुद्ध्युत्पादनद्वारा वेदनसाधनत्वेन ब्रह्मविषयत्वं भविष्यति। 'वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (Bṛh.U.4.4.22.) इत्यादिश्रुतेः। तदेव विशेष्यते। परम उत्कृष्टे निरतिशये, व्योमन् व्योमनि व्योमसदृशे। अलेपत्वनीरूपत्वव्यापित्वादिसादृश्येन व्योमेत्युक्तम्। यद्वा विशेषेण सर्वस्य रक्षके। निरधिष्ठा न कस्यचिदस्ति ? स्वाध्यस्तस्य सर्वस्याधिष्ठानत्वेन रक्षकत्वात्। तादृशे तत्त्वे सर्वमध्यस्तमित्यर्थः Sy.

अश्नुते व्याप्नोति विषयानित्यक्षरं, तस्मिन्नक्षरे जीवात्मनि। परमीयत इति परमं तस्मिंस्तत्पदार्थे। व्योमन् व्यापके। वाक्यार्थे ब्रह्मात्मैक्ये, वाक्यार्थे व्यापके, असिपदार्थे इत्येके। एवं त्रिधैव वेदा इति। कर्मकाण्डविषया वेदास्त्वंपदार्थविषयाः। सगुणेशविषया वेदास्तत्पदार्थविषयाः। वेदान्तास्तु ब्रह्मात्मैक्यपरा एव। सर्वेऽपि वेदा ब्रह्मात्मैक्यविषया इति ज्ञात्वा ब्रह्मात्मैक्यावधारणं विशिष्टात्मज्ञानम् At.

एतदक्षरं, परमं चेदं व्योम स्थानम्। अग्न्यादिनानादेवतानां मन्त्राणां सर्वस्याश्च त्रय्या विद्यायास्तदध्ययनस्य चोङ्कारपूर्वकत्वात्। अथवा परमेदतः (परमेतज्जगतः)। कथम्। वि... मोतत्वात् (विविधं जगतामोतत्वात्)। इदं प्रणवाख्यं ब्रह्म जगतः कारणमित्युपनिषत्सु वर्णितम्। तस्य किलोमित्येतस्य ब्रह्मणः प्रथमायां मात्रायां पृथिव्यग्निर्ऋग्वेदः पृथिवीनिवासिनो जना इत्येतत्। द्वितीयायां मात्रायामन्तरिक्षं वायुर्यजूंषि, अन्तरिक्षनिवासिनो जना इत्येतत्। तृतीयायां द्यौरादित्यः सामानि द्युनिवासिनो जना इत्येतत्। तेनेदं जगतः परं व्योम। अथवा परमं व्योम मृत्योर्बिभ्यतां देवानां, तदेतत्परस्मिन् पादे वक्ष्यते। तस्मिन्नेवंरूपे परमे व्योमन्, लुक् सप्तम्याः SKN.

विविधमस्मिञ्छब्दजातमोतमिति व्योम तस्मिन्। तिसृषु मात्रासु, अकारोकारमकारलक्षणासूपशान्तासु यदवशिष्यते तदक्षरं परमं व्योम। अपरमाकाशमपेक्ष्य तत्परं व्योम। शब्दसामान्यमभिव्यक्तमित्यभिप्रायः Dur.

२. अत्र ऋक्शब्देन ऋक्प्रधानभूताः साङ्गापरविद्यात्मकाश्चत्वारो वेदा उच्यन्ते। ऋगादीनामपरविद्यात्वं मुण्डके श्रूयते। 'द्वे विद्ये वेदितव्ये' इति प्रतिज्ञाय 'तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदः' (Mu.U. 1.1.5.) इत्यादिना। तस्याः सम्बन्धिनि Sy. अजहल्लक्षणयाऽत्र ऋग्वेदादयो वेदाः At. अस्यामृचि शाकपूणेस्तावन्मतेनोङ्कारं कृत्वा, ऋचामध्ययनप्रारम्भाच्छास्त्रानुवचनादिष्वृगन्ते प्रणवस्य योगादृचः सम्बन्धि SKN. ओङ्कारमृते नह्यर्चयन्ति, तस्याः Dur.

यस्मिन्[1] च । सर्वे एव । देवाः[2] ऋचा दृश्यमाना मन्ये च । वर्तन्ते[3] । यः[4] । तदक्षरम्[5] । न । वेत्ति[6] सः[7] । किम्[8] । ऋचा[9] । करिष्यति[10] । ये[11] । एव । तद्[12] । विदुः[13] । ते । इमे[14] । नक्षत्ररूपेण दिवि, आसते[15]

---

१. पुनस्तदेव विशेष्यते । यस्मिन्परमात्मनि Sy. यस्मिंस्त्रेधा स्थित आत्मनि At.
२. सर्वे देवाः Sy. देवा इन्द्रियदेवाः । ईशज्ञप्त्याऽधिकारिका अन्तरिक्षादिस्था नगा देवाश्च । वैराजादिचिन्मया देवाश्च At.
३. निषीदन्ति । आश्रित्य तिष्ठन्ति तस्मिन् । यद्वा । उक्तलक्षणे वस्तुन्युपलक्षिताः सर्वे साङ्गा वेदाः पर्यवसिता इत्यर्थः Sy. अपि, उपर्युपरि विशिष्टाः सर्वेऽपि निषण्णा अन्तर्भूता इति काण्डत्रयविषया वेदा ब्रह्मविषया एव At. तत्र छन्दोगानामुपनिषदीतिहासः पठ्यते । 'देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिराच्छादयंस्तच्छन्दसाम्छन्दस्त्वम् । तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि । ते नु विदित्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् । यदा वा ऋचमाप्नोति, ओमित्येव स्वरत्येवं सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभवन्' (Chhā.U.1.4.4.) इति । तदेतदिहोच्यते यस्मिन्देवाः सर्वे मृत्योर्बिभ्यतोऽधिनिषण्णाः प्रविष्टा इत्यर्थः । अथवा ऋगादीनामपि, अध्ययनमोङ्कारपूर्वकत्वादृगादयः सर्वे मन्त्रा अत्र निषण्णाः । तेन च तेषां या देवतास्ता अपि तद्द्वारेणात्र निषण्णा इत्येतदभिप्रेत्यैतदुच्यते SKN. ऋगादिषु ये देवास्ते मन्त्रद्वारेणाक्षरेनिषण्णाः । तस्य शब्दकारणत्वात् Dur. ४. यो मर्त्यः Sy. यस्तु पुरुषः At. ५. तादृशं देवादीनां स्वरूपलाभास्पदं कृत्स्नवेदतात्पर्यप्रतिपाद्यं यद्वस्तु Sy. तद्ब्रह्म At. देवरूपमक्षरम् SKN. अनया विभूत्याक्षरम् Dur.
६. न जानाति Sy. ७. स मर्त्यः Sy. सः, ताद्रूप्याप्राप्तेः SKN. ८. किम् P.
९. पूर्वोक्तेन ऋगादिशब्दजालेन Sy. ऋगादिवेदैः At. ऋगादिभिर्मन्त्रैः Dur.
१०. वेदनसाधनेन वेदेन वेद्यमविदित्वा किं साधयतीत्यर्थः । प्रयोजनाभावात्सर्वस्यापि वेदस्य नैष्फल्यादिति भावः । अथवा योऽक्षरमविदित्वा कर्मणां कर्ता भवति यागादीननुतिष्ठति तेन किञ्चिदपि कर्म कृतं न भवतीत्यर्थः Sy. केनोपायेनात्मानं संसारादुद्धरिष्यति At. यस्तत्राक्षरात्मना पश्यति Dur. ११. इच्छब्दस्तु शब्दस्यार्थे, ये तु SKN. १२. तत्त्वम् Sy. तद् ब्रह्म At. १३. जानन्ति Sy. विदन्ति At. य एतदेवं विद्वानक्षरं प्रणौति । एतदेवाक्षरं स्वरममृतमभयं प्रविशति SKN. १४. त एवेमे ज्ञातारः Sy. त इमे दृश्यमाना जीवन्त एव At. ते हि Dur.
१५. सम्यक्तिष्ठन्ति । अपुनरावृत्त्या स्वरूपेऽवस्थानं समासनम् । यद्वा ये विदुरिद् ये जानन्त्येव नानुतिष्ठन्ति । इच्छब्दोऽवधारणे । त इमे त एव समासते । गवामयनादिसहस्रसंवत्सरसत्रपर्यन्तानि सहोपयन्ति । सहार्थे संशब्दः । सत्रादधिकानां यागानामभावात्तेषामपि फलमेतज्ज्ञानेनैव प्राप्तं भवतीत्यर्थः । कर्तॄणां बहुत्वाद् बहुवचननिर्देशः Sy. सम्यगासते । समासनं मुक्तिः At. तत्प्रविश्य 'यदमृतास्तदमृतो भवति' (Cf. Chhā. U. 1.4.5. यदमृता देवास्तदमृतो भवति) इति पूर्वस्येतिहासस्योपसंहारश्रुतेस्ताद्रूप्यापत्त्या प्रणवविग्रहात्मानमनुप्रविश्य ब्रह्मणः साम्यमापन्ना विद्वांस इमे समासते । समित्येकीभावे, तेन सहैकीभूता आसते SKN.
तत्परिज्ञानात्ताद्रूप्यमुपगताः प्रणवविग्रहमात्मानमनुप्रविश्य समीकृता निर्वान्ति शान्तार्चिष इवानला इति Dur.

ओमिति प्रतिपद्यते(न्ते)। "एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत् परममक्षरम्।" तदेतद् ऋचाऽभ्युक्तम् 'ऋचो अक्षरे परमे व्योमन्' " इति ब्राह्मणम्।

---

१. ग्रामि० D. २. ०स्त्रिवं P. D.
३. ०वा P. ४. TA. 2.11.1.
५. ०युक्तम् P. ६. ०चोक्ष० D.
७. TA.2.11.1. अन्ये त्वन्यथा वर्णयन्ति। ऋचः, ऋगर्चनीयमादित्यमण्डलमृगादिमयं वा। 'ऋग्भिः पूर्वाह्णे दिवि देवः', (TB.3.12.9.1.) 'आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचः' (Mahānār. U.12.2.) इत्यादिश्रुतेः। तस्य सम्बन्धिन्यक्षरे परमे व्योमन्नित्युक्तलक्षणे ब्रह्मणि 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (Chhā. U.1.6.6.) इत्यादिश्रुत्युक्तस्वरूपे यस्मिन् सर्वे देवा द्योतमाना रश्मयो निषेदुर्वर्तन्ते। य एतन्न वेद स केवलया ऋचा किं करिष्यति। ये जानन्ति भावयन्ति त एव विद्वांसः समासते। भूम्यां सुखेन रोगादिरहिता भोगिनः सन्तश्चिरकालं जीवन्ति। अपरे प्रकारान्तरेण प्रतिपादयन्ति। ऋचोऽक्षरे, ऋगुपलक्षितसर्ववेदसम्बन्धिन्यक्षरे प्रणवस्य ओङ्कारेऽविनाशिनि सर्ववेदेषु व्याप्ते वा। प्रणवस्य सर्ववेदसारत्वं ब्राह्मणे श्रूयते—"तान्वेदानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत्तदेतदोमिति' (AB.5.32.) इति। परमे निरतिशये। नहि प्रणवादधिकं किञ्चिन्मन्त्रजातमस्ति, त्रिकालातीतस्य ब्रह्मणः प्रतिपादकत्वात्। 'यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव' (Mā.U.1.) 'ओमिति ब्रह्म' (TA.7.8.) इत्यादिश्रुतेः। वेदानां प्रणवस्य स्थानप्रतिनिधिभावः सम्बन्धः। 'य ऋचोऽधीते' इत्याद्युपक्रम्य 'यः प्रणवमधीते स सर्वमधीत ओमिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरम्' (TA.2.11.4.) इत्यादिश्रुतेः। यस्मिन् विश्वे सर्वे देवा अधि निषेदुः। प्रणवस्य सर्वमन्त्रात्मकत्वान्मन्त्रेषु सर्वदेवतानां निवासात्सर्वदेवनिवासत्वम्। ब्रह्माधिष्ठानत्वाद्वा ब्रह्मणि सर्वदेवानां निवासात्। शिष्टमविशिष्टम्।...अपरे त्वपरथा वर्णयन्ति। ऋचः। ऋगर्चनीयो जीवः। तस्य सम्बन्धिन्यक्षरेऽविनाशे व्याप्ते वा परमात्मनीत्यर्थः। अत एव जीवापेक्षया परम उत्कृष्टे निरुपाधिके व्योमन् विशेषेण सर्वाधिष्ठानत्वेन रक्षके व्योमसदृशे वा। यस्मिन्परमात्मनि देवा गमनवन्तो व्यवहरन्तो वेन्द्रियसञ्ज्ञका विश्वे सर्वेऽपि, अधिनिषेदुर्निषीदन्ति, आश्रित्य वर्तन्ते। यस्तन्न वेद न जानात्युपाध्यंशपरित्यागे तदेव स्वरूपमिति न पश्यति स्थूलो जनः किमृचा करिष्यति। केवलेन जीवेन जीवभावेन किं फलं प्राप्स्यति। जननमरणादिक्लेशस्यात्यागादिति भावः। ये तत्तत्त्वं विदुस्त इत्यादि सिद्धम् Sy. 'ऋचोऽक्षरे परमे व्यवने। यस्मिन् देवा अधिनिषण्णाः सर्वे। यस्तन्न वेद किं स ऋचा करिष्यति। य इत् तद्विदुः। त इमे समासते। इति विदुष उपदिशति। कतमत्तदेतदक्षरम्। ओमित्येषा वागिति शाकपूणिः। ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते नानादेवतेषु च मन्त्रेषु। 'एतद्ध वा एतदक्षरं यत्सर्वां त्रयीं विद्यां प्रतिप्रति' इति च ब्राह्मणम् N.13.10; SKN. IV. 153.
८. VM. ignores परमे। व्योमन्

सू॒य॒व॒साद्भग॑वती॒ हि भू॒या अथो॑ व॒यं भग॑वन्तः स्याम ।
अ॒द्धि तृण॑मघ्न्ये वि॒श्वदानीं॒ पिब॑ शु॒द्धमु॑द॒कमा॒चर॑न्ती ॥४०॥

सूयवसात्[1]। अथ सर्वस्या एव वाचः स्तुतिः, गौण्या हि वागित्युक्तम्। शोभनस्य यवस्यात्त्री[2]। भगवती[3]। हि[4]। अभवः[5]। अथ = इदानीम्[6]। वयम्[7]। भगवन्तः[8]। स्याम[9]। अद्धि[10]। तृणम्[11]। अहन्तव्ये[12]! सर्वदा[13]। पिब[14] च। शुद्धम्[15]।

१. ०सात् P.

२. शोभनयवसस्य तृणादिकस्यात्त्री सती Sy. साधु यवसं सत्कर्माभिविषयीकरोतीति सुयवसत् At. शोभनं यवसं सुयवसम्। सांहितिको दीर्घः। किं तत्? रश्म्युपहृतमुदकं, तस्यात्त्री सुयवसादिनी SKN. शोभनं यवसमुदकमध्यात्मीकृत्य सूर्यात् Dur.

३. भग इति धननाम। सर्वभजनीयप्रभूतक्षीरादिधनवती Sy. ततो भगवत्येव भविष्यति। ईश्वरार्पितं कर्म स्यादित्यर्थः At. भगं धनं तेनैव रश्म्युपहृतेनोदकाख्येन धनेन धनवती SKN. तेन, उदकेनोदकवती Dur.

४. हिः पूरणः प्रसिद्धौ वा। लोके यवसादिभक्षणेन क्षीरादिसमृद्धिः प्रसिद्धा Sy. हिशब्दः पदपूरणः SKN.

५. भव Sy., SKN. भो वृद्धे! अतिक्लेशात्मकतुच्छफलत्वेनात्युग्रत्वाच्च कर्म त्याज्यम्। यथा पातित्यं न भवति तथा। कर्म त्यक्तुं न शक्नोषि चेत्तत्कर्मविषयिणी भूयाः At.

६. अनन्तरमेव Sy., At., SKN. पुनरिदानीम् Dur.
The *Padapāṭha* reads अथो as a single word and does not analyse it into अथ and उ. VM. merely paraphrases it by अथ. This means VM. takes अथो as a combination of अथ and उ.

७. यजमाना अपि Sy. तेनैव त्वत्प्रवृत्तेन धनेन वयमपि SKN. त्वयि भगवत्यां वयमपि त्वदुत्सृष्टेनोदकेन Dur.

८. ०न्त P.D.M. प्रभूतेन धनेन तद्वन्तः Sy. शुद्धान्तःकरणाः At. धनवन्तः SKN., Dur.  ९. भवेम SKN.

१०. द्वि P. भक्षय Sy. ईश्वररूपत्वेनाद्धि विषयीकुरु At. भक्षय च सञ्चूर्णय वादेत्यर्थः SKN. सञ्चूर्णय Dur.

११. तृणपर्यन्तं जगत् At. किम्? तूर्णं तर्दनीयं मेघम् SKN. मेघं, तृद्यतेऽसाविति तृणस्तम् Dur.

१२. गोनामैतत्। अहननीये हे गौः Sy. भो अघहन्त्रि, अहन्तव्ये At. माध्यमिके वाक् SKN. माध्यमिका वागुच्यते Dur.

१३. अथैकवारं पूर्वमुक्तमिदानीं सर्वदा कर्तव्यमिति प्रार्थ्यते।... विश्वकालं सर्वदा Sy. यज्ञेभ्यो रात्रौ दीयमाना सांसारिकप्रकृतिका दानी भवति तत्स्थानीयां विश्वखण्डनीयाम् At. छान्दसत्वाद्विश्वशब्दादपि दानीम्। सर्वदा SKN. यथाकालम् Dur.

१४. आस्वादय At.

१५. निर्मलम् Sy. निरवद्यमुद्गतानन्दं ब्रह्मरसम् At. अकलुषम् SKN., Dur.

उदकम्[१]। इतस्ततः[२] आचरन्तीति[३]।[४]

**गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी।**
**अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥४१॥**

गौरीर्मिमाय[५]। गौरीः[६]। निर्मिमाय[७]। उदकानि[८]। कुर्वती[९]। सा। क्वचिदेकपदी[१०] भवति

१. 'उदकमिति सुखनाम' इति शाकपूणिः। यद्वा कं सुखमकं दुःखम्। उद्गतमकं यस्मात्तदुदकं सुखरूपं ब्रह्म। ... यद्वा काद् दुःखादुद्गतमुदकम् At. रश्म्युपहृतम्...हे अघ्न्ये घर्मधुग् विश्वदानीं सर्वदा पिब च शुद्धमकलुषितमुदकम् SKN. सूर्यरश्म्युपहृतम् Dur.

२. सर्वतो निर्गच्छन्ती Sy.
नश्यन्ती At.
आभिमुख्येन मर्यादया वा चरन्ती गच्छन्ती SKN.
आसेवन्ती ...सर्वतो मध्यस्थाने चरन्ती Dur.

३. यद्यप्यनयर्चा वाद्यमानायै होमधेनवे यवसं दीयते तथाप्यध्यात्मव्याख्यायां न सा रीतिरादर्तव्येत्यवोचाम। तद्विनियोगदशायामेव तथाविधस्योक्तत्वात् At. 'सुयवसादिनी भगवती हि भव। अथेदानीं वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये, सर्वदा पिब च शुद्धमुदकमाचरन्ती N. 11.44; SKN. IV. 90.

४. VM. ignores उ

५. नन्वनेकेषां ब्रह्मवादिनामनेकधा प्रतिपादनप्रकाराः सन्ति तत्र कीदृशः प्रामाणिकः प्रकारः कीदृशो न? इत्युच्यते। अद्वैतपर्यवसायी स सर्वोऽपि प्रामाणिक एवेत्यभिप्रेत्याह At.

६. ०री DM. गरणशीला माध्यमिका वाक् Sy. गौरं शुद्धं ब्रह्म तत्परा श्रुतिर्गौरी At. मध्यमस्थाना SKN.

७. शब्दयति Sy. प्रतिपादयति At. निर्मिमीत इत्यर्थः। किम्? सामर्थ्याज्जगत् SKN.
सर्वमिदं निर्मिमीते Dur.

८. किं कुर्वती? सलिलानि वृष्ट्युदकानि Sy. बहुनामैतत्, (Ngh.3.1.) बहूनि वस्तूनि। यद्वा सलिलानि स्वयं प्रतिपादितान्यपि सन्ति लीलानि सम्यग्ज्ञाननिवर्त्यानि। यद्वा सत्तत्पदार्थौ, लिस्त्वम्पदार्थौ, लम्, असिपदार्थः, तान्युदकानि तत्त्वानि At.
किं कुर्वती? उच्यते, वृष्टिलक्षणानि सलिलानि SKN.

९. ०र्वती P.D. सम्यक् सम्पादयित्री Sy. तत्कुर्वती। एकं तत्त्वं प्रमिनयन्त्येकस्मिंस्तत्त्वे विलापयन्ती सती At.
करोतिकर्मार्थं, कुर्वती ददतीत्यर्थः SKN.
कुर्वती, उदकपूर्वकत्वात्सर्वनिर्माणस्य Dur.

१०. एकपादोपेता, एकाधिष्ठाना मेघे वर्तमाना गमनसाधनेन वायुनैकपदी वा Sy. पद्यते ज्ञायत इति पादो विषयः। ... एकः पादो विषयः प्रतिपाद्यो यस्याः। एकमेव ब्रह्म प्रतिपादयन्तीत्यर्थः At.
पवमाख्यो वृष्टिकर्मणि सहकारिकारणम्। एकं पवनाख्यः सहकारिकारणमस्याः सा। केनैकेन? मध्यमेनैकपदीत्युच्यते SKN.
माध्यमेन सहैकत्वमापन्ना Dur.

लोके। द्विपदी[1] त्रिपदी[2]। चतुष्पदी[3] च। अन्ततो नवपदी[4]। सेयं[5] बह्वक्षरा[6]। भवन्ती[7]। स्वस्मिन्[8]। स्थाने[9] वर्तमाना। यास्कस्त्वाह—"एकपदी मध्यमेन। द्विपदी मध्यमेन चादित्येन च[10]। चतुष्पदी दिग्भिः। अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च। नवपदी ताभिरादित्येन[11] च बहूदका[12] परमे

---

१. मेघान्तरिक्षाख्यद्वयधिष्ठाना । आदित्यो वा द्वितीयः Sy. तत्त्वंपदार्थविषयत्वेन द्विपदीत्यपरे ।...इहारभ्य वक्ष्यमाणाः पक्षाः पूर्वपूर्वपक्षाशक्तविषयाः। एकपदी द्विपदीत्यन्ये At.
द्वाभ्यां सहकारिकारणाभ्यां मध्यमेन चादित्येन द्विपदी SKN.

२. त्रिपदीत्यन्ये। तत्त्वमसिपदार्थविषयत्वात् At.

३. पादचतुष्टयोपेता। दिक्चतुष्टयाधिष्ठाना Sy. सा गौरी चतुष्पदीत्यपरे। विश्वतैजसप्राज्ञतुरीयविषयत्वात् । एकपदीति चतुष्पदीति पञ्चपदीत्यन्ये। विश्वतैजसप्राज्ञतुरीयेश्वरविषयत्वात्। द्विपदी चतुष्पदी षट्पदीत्यन्ये धातुषट्कसमीक्षणात्। एकपदी द्विपदी चतुष्पदी सप्तपदीति केचित्। धातुपञ्चकजीवेश्वरविषयत्वात् At. चतसृभिर्दिग्भिः। दिशोऽप्यवकाशदानेन सहकारिकारणत्वं प्रपद्यन्ते SKN. चतुष्पदी दिग्भिरनपेक्ष्येन्द्रादित्यौ Dur.

४. अथाष्टापदी, विदिगपेक्षयाऽष्टपादोपेताऽष्टाधिष्ठाना, नवपदी, उपरिदिगपेक्षया सूर्येण वा नवदिगधिष्ठाना Sy. अष्टापदी, अष्टमूर्त्तिविषयत्वात् । नवपदी, अष्टमूर्तिनिर्गुणविषयत्वात् At. अष्टापदी दिग्भिश्च । नवपदी, आदित्यमध्यमयोरन्यतरेण SKN.

५. गौरी At.

६. अपरिमितवचनोऽयम् । अपरिमितव्याप्तियुक्ता बहुव्यापनशीलोदकवतीत्यर्थः Sy. अनेन क्रमेण सहस्राक्षरा, सहस्रमर्थानां प्रतिपादकान्यक्षराणि पदानि यस्याः सा तथोक्ता, एवम्भूता श्रुतिः At.
सहस्रमिति बहुनाम, अक्षरमित्युदकनाम। बहूदकेत्यर्थः SKN.

७. ०ती M. ति P.D. एवम्भूता Sy. एवमनेकधा बभूवुषी भवति At.
एकपद्यात्मना भवन्ती। यद्वद् वृष्टिकर्मणि सहकारिकारणं यदधीनं वृष्टिकर्म यत्र वा तत्सर्वमाश्रयन्तीत्यर्थः SKN.

८. उदकाश्रयत्वेनोत्कृष्टे Sy. आत्मनि At. उत्कृष्टे SKN.

९. अन्तरिक्षे Sy. व्यापके । विशेषेणाविद्याया ओतर्यपनेतरि विशेषेण रक्षके वा ब्रह्मण्येकस्मिन्नेव तात्पर्यवती कर्तव्या At. अन्तरिक्षनाम। लुक् सप्तम्याः। व्योमन्यन्तरिक्षे । सप्तमीभूतेः स्थितेति शेषः SKN. विभक्तानां भूतानां यत्परममवनमेकम् । सर्वभावानामविभक्त एक आत्मा । यस्तदात्मनैव भूतानां सलिलनिर्माणद्वारेण सर्वमिदं निर्मिमीते Dur.

१०. Omitted by P.M.

११. दिग्भिश्चावान्तरदिग्भिश्चादित्येन N. 11. 40.

१२. N. adds सहस्राक्षरा before बहूदका

स्थाने[1]" इति।[2]

तस्याः समुद्रा अधि वि चरन्ति तेन जीवन्ति प्रदिशश्चतस्रः ।
ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥४२॥

तस्याः समुद्राः[3]। तस्या वाचः[4]। उदकानि[5]। अधिविक्षरन्ति[6]। तेन[7] वृष्टेनोदकेन।

---

१. व्यवने N.
केचिदेवमाहुः। गौरीर्गरणशीला शब्दब्रह्मात्मिका वाङ् मिमाय माति। प्रसिद्धार्थे धातुः। प्रतिष्ठितानि घटादिद्रव्याणि तक्षती तत्तद्वाचकत्वेन निष्पादयन्ती। एकपदी, अव्याकृतत्वेनैकप्रतिष्ठाना, एकरूपा वाऽऽत्मना। द्विपदी सुप्तिङ्भेदेन पादद्वयवती। चतुष्पदी नामाख्यातोपसर्गनिपातभेदेन। अष्टापदी, आमन्त्रितसहिताष्टभेदेनाष्टपदी। नवपदी, बभूवुषी साव्ययैश्चतैरष्टभिर्नवपदी। अथवा सनाभिकेयूरःकण्ठादिषु नवसु पदेषु भवन्ती, पश्चाद् बहुविधाभिव्यक्तिमुपेयुषी परमे व्योमन्नुत्कृष्टे हृदयाकाशे मूलाधारे सहस्राक्षराऽनेकाकारेण व्याप्ताऽनेकध्वनिप्रकारा भवतीत्यर्थः Sy. गौरीर्निर्मिमाय। सलिलानि तक्षती कुर्वती। एकपदी मध्यमेन। द्विपदी मध्यमेन चादित्येन च। चतुष्पदी दिग्भिः। अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च। नवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन च। सहस्राक्षरा बहूदका। परमे व्यवने N.11.40; SKN. IV. 86

२. VM. ignores अष्टापदी

३. ननु सर्वासां श्रुतीनां ब्रह्मपरत्वे पुण्यपापविषयश्रुत्यभावेन पुण्यपापाभावः स्यात्। पुण्यपापाभावे तन्मूलकसंस्कारबन्धमोक्षाभावः स्यात्तत्रेदमुत्तरम् At.

४. ०चं M. उक्ताया गोः सकाशात् Sy. ब्रह्मविषयाया गौर्याः सम्बन्धिन्याः At. तस्या गौर्याः। अधि, उपरि SKN. अलिङ्गो मन्त्र इति चेत्? तस्या इत्येतदेव लिङ्गमन्वादिश्यते सम्बन्धादृचोऽस्त्स्मान्नालिङ्गः Dur.

५. वृष्ट्युदकसमुन्दनाधिकरणभूता मेघाः Sy. समुद्रा अवान्तरवाचः।...'तस्याः समुद्रा इति वाचः समुद्राः' इत्यनुक्रमणिका (KSA. I. 164.: 11. 8.) समुद्रा इति वाच इत्यर्थः। तस्या अक्षरमित्यापः। सा प्रस्तारपङ्क्तिः। तस्याः समुद्रा इति ऋगेव। समुद्रवन्त्यर्थानिति च समुद्राः। समुद्रवन्त्याप एभ्य इति च। इति वाचः। तथा मुदमानन्दं राति ददातीति मुद्रा ब्रह्मविद्येति च, तत्सहितास्तदेकवाक्यतां गता अवान्तरवाचः समुद्राः। ब्रह्मविद्यायां महातात्पर्यवती गौरी At. समुद्रेत्यन्तरिक्षनाम। तात्स्थ्याच्च ताच्छब्द्यम्। समुद्रस्थाः समुन्दनकारिणो वा मेघाः SKN. अधि सकाशात् समुद्रा मेघाः Dur.

६. ०गवि P. अधि, अधिकं प्रभूतमुदकं विक्षरन्ति विविधं क्षरन्ति Sy. ता वाचोऽपि, अधिकं धर्माधर्मात्मकं वस्तु, विधया विधिप्रतिषेधात्मकरीत्या क्षरन्त्युपलक्षयन्ति बोधयन्ति। यथा हि वत्सपायने तात्पर्यवत्योऽपि धेनवः प्रसङ्गात्स्वामिभ्योऽपि क्षीरं समर्पयन्ति तथेत्यर्थः At. विविधं क्षरन्त्युदकम् SKN. वर्षन्ति Dur.

७. उदकेन Sy. श्रुत्युपक्षिप्तधर्मादिना At. क्षरितेन SKN.

सर्वाः[1]। दिशः[2]। जीवन्ति[3]। तदेवाह—ततः[4]। क्षरति[5]। उदकम्। तत्[6]। सर्वाणि भूतानि[7]। उपजीवन्तीति[8]।

## शकमयं धूममारादपश्यं विषूवता पर एनावरेण।
## उक्षाणं पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यासन् ॥४३॥

शकमयम्। आदित्यः पशुरासीत् तेनायजंस्तदानीं तस्य पशोः पाकार्थमग्निं शकैर्देवाः प्राज्वालयंस्तस्याग्नेः शकमयम्[10]। धूमम्। समीपे[11]। अपश्यन्[12] मेघभूतम्। शौनकः[13]—"वाचः समुद्रा

१. ब्राह्मणादयश्चतस्रो जातयः। जातिमतामिह लक्षणा At.
२. प्रशब्दो वीत्यर्थः। विदिशश्चतस्रो दिशश्च। अथवा प्रकृष्टा दिशो मुख्याश्चतस्रः। तत्स्थेषु ताच्छब्द्यम्। तत्स्थाः पुरुषाः Sy.
प्रदेशितस्य विधिप्रतिषेधाद्यात्मकरीत्या शास्त्रस्य योग्याः At.
प्रकृष्टा दिशश्चतस्रः। दिङ्निवासिषु च भूतेषु जीवत्सु दिशः SKN.
दिक्प्रतिदिङ्निवासीनि भूतानि Dur.
३. जीवीभूय प्रयतन्ते। जीवा इवाचरन्ति। परमार्थतो मिथ्यात्वात् At.
जीवन्तीत्युच्यते, तेन चैतत् सकृदेव भवति SKN.
तेन जीवन्ति Dur.
४. ततः पश्चात् Sy. ब्राह्मणाद्याचरितधर्मादेः At. पुनः पुनः प्रतिसंवत्सरं तत एव Dur.
५. ०न्ति D.M. सस्यादिकमुत्पादयतीत्यर्थः Sy.
वर्षासु पतति At.
क्षरति प्रतिवर्षम् SKN.
क्षरत्युदकं मेघद्वारेण Dur.
६. सस्यादिकम् Sy.
७. विश्वं जगत् Sy.
स्थावरजङ्गमात्मकं जगत् At.
सर्वं जगत् SKN.
भूतजातम् Dur.
८. उपेत्य स्वीकृत्य जीवति निर्वहति। अतो जगद्धात्री भवतीत्यर्थः At. एवं सैव सर्वोदकेशाना गौरीत्यभिप्रायः Dur.
९. तस्याः समुद्रा अधिविक्षरन्ति। वर्षन्ति मेघाः। तेन जीवन्ति दिगाश्रयाणि भूतानि। ततः क्षरत्यक्षरमुदकम्। तत्सर्वाणि भूतान्युपजीवन्ति N.11.41; SKN. IV. 87
१०. शकृन्मयं शुष्कगोमयसम्भूतम् Sy.
नानाशक्तिमयं धूमं धूमसदृशमावरकाज्ञानमंश्वरम् At.
११. नातिदूरे Sy. दूरतो गतं तद्विषये कुण्ठितशक्तिकम् At.
१२. दृष्टवानस्मि। दिवा धूमस्य दूरे दृश्यमानत्वात् स एव दर्शनविषयतयोक्तः Sy.
पश्यामि। अत्रेयं वेदान्तसम्प्रदायस्थितिः। ईशमाया, एका नित्यानादिर्व्यापिका च। तच्छाया जीवमूलाख्या माया अनादयोऽनन्ताश्च। ज्ञाननाश्यत्वाज्ज्ञाने सति ज्ञानिनं प्रतीशमाया कुण्ठितशक्तिर्भवति न नश्यति। सर्वमुक्तिप्रसङ्गात्तूर्यत्समीपरात्र्यभावबद्रज्जुसमीपस्थसर्पाभाववच्च मुक्तं प्रति सर्वमायानामभावः At.
१३. शोभनको P.D.

अधि वि क्षरन्ति[1], आपोऽज्ञारं[2] मेघ एवात्र धूमः" इति। स च धूम उभयोः पार्श्वयोर्ज्वालायुक्तस्य[3]। अवमस्य[4]। अग्नेः। परस्ताद्[5] भवति। तस्मिन्नग्नावुक्षाणम्[6]। पृश्निम्[7]। अपचन्त[8]। देवाः[9]। तानि[10]। पूर्वयुगजातानि[11]। धर्माणीति[12,13]।

**त्र॒यः के॒शिन॑ ऋतु॒था वि च॑क्षते संवत्स॒रे व॑पत॒ एक॑ एषाम् ।**
**विश्व॒मेको॑ अ॒भि च॑ष्टे॒ शची॑भि॒र्ध्राजि॒रेक॑स्य ददृशे॒ न रू॒पम् ॥४४॥**

त्रयः[14] केशिनः। त्रयः। रश्मियुक्ताः[15]। काले काले[16]। अभिविपश्यन्ति[17] धूमेनाग्निः केशी

---

१. ०न्त्या M. २. ०क्षं P.D.
३. ०योर्ज्वा० P. व्याप्तिमता Sy. सर्वत्र प्रसृतेन ब्रह्मणा At.
४. एना अनेनावरेण निकृष्टेन धूमेन Sy. एना प्रत्यक्षादिप्रमाणसिद्धेनानेनावरेण जीवराशिना सह स्थितं धूमं महावाक्यार्थधिया At.
५. तत्कारणभूतमग्निमपश्यम्। अहं यजमान इत्यर्थः Sy. परो विगलिताविद्योऽहम् At. ६. फलस्य सेक्तारम् Sy. गोपयसोक्षमाणं सिच्यमानम् At.
७. शुक्लवर्णम्। प्राश्नुतेऽनेन फलमिति, स्वयं प्राश्नुत इति वा पृश्निर्वल्लीरूपः सोमस्तम् Sy. श्रीप्साविषयं सगुणरूपं कर्म च।...अजहल्लक्षणयाऽत्र पशुपुरोडाशादेरपि ग्रहः। 'पृश्नि स्वर्गनामैतत्' (Ngh. 1. 4.) साधने साध्योपचारः। ...पृश्नि स्वर्गादिहेतुं काम्यसोमादिकम् At.
८. अत्र धात्वर्थानादरेण तिङ्प्रत्ययः करोत्यर्थः। स च क्रियासामान्यवचनोऽर्थौचित्यात्। अभिषवेण सम्पादितवन्त इत्यर्थः Sy. धातूनामनेकार्थत्वात् संस्कुर्वन्ति At. ९. विविधैरङ्गकुशला ऋत्विजः Sy. वैदिका ऋग्वेदादीन्, विशेषेण ... ईरयन्ति, पठन्ति At.
१०. तत्साधनानि Sy. अत्यन्तोत्कृष्टानि। यच्छब्दाभावान्नित्यनैमित्तिकरूपाणि At.
११. देवास्मानि पूर्व युग० P. प्रथमानि प्रतमानि प्रकृष्टानि फलपर्यवसायीनि Sy. ज्ञानस्य पूर्वसाधनानि साधारणानि At.
१२. अनुष्ठानानि . . . आसन्सम्पादितान्यभवन्। यद्वा सोम उक्षाभवत् पूर्वं तं देवाः शकृतापचन्। यज्ञार्थं तद्भूवो धूमो मेघ आसीत्तदुच्यते। तत्परत्वेन वा मन्त्रो व्याख्येयो विचक्षणैः Sy. पूर्वोक्तानि सोमादीनि धर्मसाधनानि ... चासन् भवन्ति At.
१३. VM. ignores एना। आसन्
१४. अग्न्यादित्यवायवः Sy. त्रयो देवा अग्निर्वायुः सूर्यश्च At. य एते त्रयः... अग्निवायुसूर्याः Dur.
१५. केशस्थानीयप्रकृष्टरश्मियुक्ताः Sy. दीप्तयः। तत्स्थानस्था देवता वा केशास्तद्वन्तो भूम्यन्तरिक्षस्वर्गस्थाः, पार्थिवाः सर्वे देवा अग्नावन्तर्भवन्तीत्यग्निरित्युच्यते। एवमन्तरिक्षस्था देवा वायौ। एवं स्वर्गस्था देवाः सूर्ये। एवमग्निवायुसूर्याः At.
१६. काले, कालनिमित्तम्।...यदा नाम च, एकैषामृतावृतौ क्रियमाणत्वाद्वा ऋतवो यज्ञाः। ऋतुथा यज्ञनिमित्तम् At. ऋतुशब्दः कालवचनः। थाशब्दो वीप्सायाम्। ऋतावृतौ स्वस्मिन्स्वस्मिन्काले स्वेन स्वेनोपकारेण SKN. यथाकालम् Dur. १७. विविधलक्षणां भूमिं पश्यन्ति Sy. दीप्यन्ते स्वकार्यं कुर्वन्ति At. जगद् वि चक्षतेऽभिपश्यन्त्यनुगृह्णन्तीत्यर्थः SKN. स्वकर्माधिकारयुक्तेनानुग्रहेण लोकमनुगृह्णन्ति Dur.

रजसा वायुः। संवत्सरे[1]। वपते[2]। एकः[3]। एषामित्यग्निः[4] पृथिवीं दहति। सर्वम्[5]। एकः[6]। विपश्यति[7]। कर्मभिरादित्यः[8]। गतिः[9]। एकस्य[10]। दृश्यते[11]। न। रूपं[12] मध्यमस्येति[13]।

---

१. संवत्सरेऽतीते सति Sy. अग्निर्ऋतुः संवत्सर इत्युक्तं संवत्सरमध्ये... ऋतुद्वयमृतुद्वयमिति च विश्लिष्टोक्तिः At. ग्रीष्मकाले पृथिव्या रोमस्थानीयानि तृणानि SKN.

२. पचते M. दाहेन केशस्थानीयौषधिवनस्पत्यादिकच्छेदनं नापितकार्यं करोति Sy. वसन्तग्रीष्मयोर्दहत्युपरि पतितं तृणादिकम्। तृणदाहदग्धा भूमिरधिकमोषध्यादिकं जनयति At. दाहेन वपते दहतीत्यर्थः। अग्नेश्च वपनं मन्त्रान्तरेऽपि प्रसिद्धम् SKN. दहतीत्यर्थः। तथा हि सा कर्मण्या सम्पद्यते Dur.

३. अग्निः Sy., At.
दावरूपोऽग्निः SKN.
पृथिवीस्थानोऽग्निः Dur.

४. एषां मध्ये Sy.
एषां त्रयाणां मध्ये At.
तेषामेषाम् SKN.

५. सम् M. सर्वं जगत् Sy. विश्वं जलात्मकम् At.

६. अन्य आदित्यः Sy. सूर्यः At. आदित्यः SKN.

७. सर्वतः पश्यति Sy. अभि, अभ्यात्ममन्तररूपं प्रकाशते। अध्यात्मपरवाक्याभ्यासेन फलाभिवपन्।... अथ महावाक्यस्याकर्षणेन चाष्टे दर्शयति। हेमन्तशिशिरयोस्तदानीमेवौषध्यादिपरिपाकदर्शनादूष्माधिक्यापाताच्च At. अभिविपश्यत्यनुगृह्णाति SKN., Dur.

८. स्वकीयैः, प्रकाशवृष्ट्यादिकर्मभिः Sy. स्वव्यापारैः स्वप्रज्ञाभिर्वा देवत्रयान्वितमेतत्पदम् At. केन? शचीभिः। कर्मनामैदं, प्रकाशनरसादानादिभिः कर्मभिरित्यर्थः SKN. स्वाधिकारयुक्तैः कर्मभिः Dur.

९. प्रावृट्शरदोस्तु आजिरवाश्च एव At.

१०. वायोः Sy., At., SKN.

११. दृश्यते सर्वैः Sy.　　न दृश्यते At.
तृणपर्णधूल्यादिचालनेनानुमानेनार्थापत्त्या वा . . . दृश्यत उपलभ्यते SKN.
रजसोद्धूतेन पार्थिवेनोदकेन वा दृश्यते Dur.

१२. न रूपमप्रत्यक्षत्वात्। स्पर्शशब्दधृतिकम्पलिङ्गैर्गम्यत इति हि न्यायविदो वदन्ति Sy.
नैव रूपमस्य दृश्यते At.

१३. त्रयः केशिन ऋतुथा विचक्षते। काले कालेऽभिविपश्यन्ति। संवत्सरे वपत एक एषाम्। इत्यग्निः पृथिवीं दहति। सर्वमेकोऽभिविपश्यति कर्मभिरादित्यः। गतिरेकस्य दृश्यते न रूपं मध्यमस्य N.12. 27; SKN. IV. 125

च॒त्वारि॑ वाक्परि॑मिता प॒दानि॒ तानि॑ विदुर्ब्राह्म॒णा ये म॑नी॒षिणः॑ ।
गुहा॒ त्रीणि॒ निहि॑ता॒ नेङ्ग॑यन्ति तु॒रीयं॑ वा॒चो म॑नु॒ष्या॑ वदन्ति ॥४५॥

चत्वारि वाक्[1]। चत्वारि। वाचः[2]। परिमितानि[3]। पदानि[4] चतुर्धा बुद्ध्या[5] विभागात्[6] पदशब्दः। तानि[7] सर्वाण्येव पदानि[8]। जानन्ति। ब्राह्मणाः[9]। ये। विद्वांसो[10] त्रेदविदः। ततश्च गुहायाम्[11]। निहितानि[12]। त्रीणि पदानि[13]। न चाल-यन्त्यात्मानं[14], न प्रयुज्यन्ते[15] लौकिकैरमनीषिभिः। तुरीयमेव[16] पदम्[17]। मनुष्याः[18]।

१. नन्वेवं देवतासद्भावे सत्युपासितप्रसत्तीकृतदैवतस्याधीतवेदस्य, श्रुतव्याकरणमीमांसाद्यव्युत्पन्नपदपदार्थस्याचार्यं विनापि ब्रह्मज्ञानमुत्पत्स्यत इत्याचार्येणालं, तत्राह At. दीर्घतमा वाचस्तत्त्वमाह SKN.

२. वाचः कृत्स्नायाः Sy. वाचो वेदस्य At.

३. ०ता M. लोके या वागस्ति सा चतुर्विधा विभक्तेत्यर्थः Sy. गणितानि At. अव्यक्तपरिमाणानि SKN.

४. पद्यन्त इति पदानि विषयाः At. इयती वाक्। तदेतद्भेदेन हि चत्वारि वाचः परिमितानि पदानि न पञ्चमम्। कतमानि तानि? ओङ्कारमहाव्याहृतयश्चेत्यादीनि SKN. न पञ्चमं पदमस्ति Dur.

५. बुध्या P. D.

६. ०त् P.

७. पदानि Sy. तानि सर्वाणि At., SKN.

८. कात्स्न्येन . . . विदन्ति At.

९. वेदविदः Sy. वेदज्ञाः At.

१०. मनस ईषिणो मेधाविनः Sy. न सर्वे ब्राह्मणाः किन्तु ये मनीषिणो, ये गुरुप्रसादजनितज्ञानवन्तः At. मेधाविनः SKN. किं सर्वे? ये . . . मेधाविनः Dur.

११. गुरुरहितानान्तु गुहा गुहायां महापुरुषबुद्धौ At. लुप्तसप्तम्याः। सामर्थ्याल्लुप्तोपमं चेदम्। गुहायामिव SKN.

१२. निहितस्तवानीं P. स्थापितानि Sy. निलीनानि गुप्तानि At.

१३. तेषां मध्ये त्रीणि Sy. यस्मात्तेषां चतुर्णां पदानाम् . . . त्रीणि SKN. तेषां च पुनः पदानाम् . . . त्रीणि Dur.

१४. चल० P. न चेष्टन्ते प्रकाशन्त इत्यर्थः Sy. नात्मानं प्रकाशयन्ति, नैव वा प्रकाशन्ते At. इङ्गिर्गत्यर्थः। न गमयन्तीत्यर्थः SKN. न प्रख्यापयन्ति Dur.

१५. प्रयुंजन्ते P. प्रयुञ्जते M.

१६. चतुर्थम् SKN. तद्धि त्वरितमिव निर्गतं भवति त्रिभ्यः Dur.

१७. पादं M. पदम् Sy. भागम् At. भागम्। एकपदम् Dur.

१८. अज्ञास्तज्ज्ञाश्च Sy. गुरुरहिताः At.

वद॑न्ति ।

१. व्यक्तमुच्चारयन्ति व्यवहरन्ति Sy. प्रतिपादयन्ति। अयं भावः। तुरीयप्राज्ञतैजसविश्वाः प्रत्येकं मनसा चतुर्भागीकरणीयाः। तानि गुरुमन्तः कात्स्न्र्येन विदन्ति गुरुरहिताः प्राज्ञा अपि भागत्रयं न विदन्त्येव। तेषां स तत्र चतुर्भागमात्रं प्रकाशतेऽतो गुरुमन्त एव वेदतात्पर्यज्ञाः। अन्यस्त्वाह। तुरीयं प्राज्ञतैजसान्यं चतुर्थं मनुष्या वदन्तीति। अपर आह। परा, पश्यन्ती, मध्यमा, वैखरीति। मनुष्या वैखरीमेव वदन्तीति। नामाख्यातोपसर्गनिपातेषु चतुर्थं भागं वदन्तीत्यपरे। एवं धर्मार्थकाममोक्षेष्वित्यन्ये At. परिज्ञानार्थं वदन्ति Dur.

२. कानि तानि चत्वारीत्यत्र बहवः स्वस्वमतानुरोधेन बहुधा वर्णयन्ति, सर्ववैदिकवाग्जालस्य सङ्ग्रहरूपा भूरादयस्तिस्रो व्याहृतयः प्रणव एक इति वेदत्रयसारत्वात्तासां व्याहृतीनामेव सारसङ्ग्रहभूतत्वादकाराद्यात्मकस्य प्रणवस्येति सप्रणवासु व्याहृतिषु सर्वा वाक् परिमितेति केचन वेदवादिनो वदन्ति। अपरे व्याकरणमतानुसारिणो नामाख्यातोपसर्गनिपातभेदेन। क्रियाप्रधानमाख्यातम्। द्रव्यप्रधानं नाम। प्रागुपसृज्यत आख्यातपदस्येत्युपसर्गः प्रादिः। उच्चावचेष्वर्थेषु निपतनान्निपातः, अपि तु चेत्यादिः। एतेष्वेव सर्वा वाक् परिमितेत्यखण्डायाः कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वात्। 'वाग्वै पराच्यव्याकृतावदत् तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते' (TS.6.4.7.3.) इति श्रुतेः। अन्ये तु याज्ञिका मन्त्रः कल्पो ब्राह्मणं, चतुर्थी लौकिकीति। याज्ञिकैः समाख्यातोऽनुष्ठेयार्थप्रकाशको वेदभागो मन्त्रः। मन्त्रविधानप्रतिपादको वेदभागः 'इति मन्त्राः कल्पोऽत ऊर्ध्वम्' (TA.1.31.2.) इत्यादिनोक्तः कल्पः। मन्त्रतात्पर्यार्थप्रकाशको वेदभागो ब्राह्मणम्। भोगविषया, गामानयेत्यादिरूपा व्यावहारिकी। एष्वेव सर्वा वाङ् नियमितेति याज्ञिकाः। ऋग्यजुःसामानि, चतुर्थी व्यावहारिकीति नैरुक्ताः। सर्पाणां वाग्वयसां क्षुद्रसरीसृपस्य च चतुर्थी व्यावहारिकीत्यैतिहासिकाः। पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मवादिनः। अपरे मातृकाः प्रकारान्तरेण प्रतिपादयन्ति। परा, पश्यन्ती, मध्यमा, वैखरीति चत्वारीति। एकैव नादात्मिका वाङ् मूलाधारादुदिता सती परेत्युच्यते। नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात्। सैव हृदयगामिनी पश्यन्तीत्युच्यते। योगिभिर्द्रष्टुं शक्यत्वात्। सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमेत्युच्यते। मध्ये हृदयाख्य उदीयमानत्वान्मध्यमायाः। अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते। एवं चत्वारि वाचः पदानि परिमितानि। मनीषिणो मनसःस्वामिनः स्वाधीनमनस्का ब्राह्मणा ब्राह्मणस्य शब्दब्रह्मणोऽधिगन्तारो योगिनः परादिचत्वारि पदानि विजानन्ति। तेषु मध्ये त्रीणि परादीनि गुहा निहितानि हृदयान्तर्वर्तित्वात्। तुरीयं तु पदं वैखरीसञ्ज्ञकं मनुष्याः सर्वे वदन्ति। व्याकरणप्रसिद्धनामाख्यातादिपक्षे मनीषिणो ब्राह्मणाः प्रकृतिप्रत्ययादिविभागज्ञा वाग्योगविदस्तानि पदानि जानन्ति। अवाग्योगविदः पामरा वाचो ब्राह्म-

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥४६॥

इन्द्रं मित्रम्। अथापि ब्राह्मणं भवति "अग्निः सर्वा देवताः।"[1] इति। तस्योत्तरा[2] भूयसे निर्वचनाय। इन्द्रादीँश्च[3]। अग्निम्[4]। आहुः[5]। अथो[6]। दिव्यः[7]। सः[8]। सुपतनः[9]।

---

यस्य तुरीयं चतुर्थं भागं वदन्ति व्यवहरन्ति। अर्थप्रकाशनाय प्रयुञ्जते Sy. 'चत्वारि वाचः परिमितानि पदानि। तानि विदुर्ब्राह्मणा ये मेधाविनः। गुहायां त्रीणि निहितानि नार्थं वेदयन्ते। गुहा गूहतेः। तुरीयं त्वरतेः। कतमानि तानि चत्वारि पदानि। ओङ्कारो महाव्याहृतयश्चेत्यार्षम्। नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः। मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः। ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः। सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके। पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः। अथापि ब्राह्मणं भवति 'सा वै वाक् सृष्टा चतुर्धा व्यभवत्। एष्वेव लोकेषु त्रीणि पशुषु तुरीयम्। या पृथिव्यां साग्नौ सा रथन्तरे। यान्तरिक्षे सा वायौ सा वामदेव्ये। या दिवि साऽऽदित्ये सा बृहति सा स्तनयित्नौ। अथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुः। तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम्' इति N.13.9; SKN. IV. 151. VM. ignores वाचः

१. AB. 2.3; TB. 1.4.4.10.

२. तस्येदं D.M.

३. इन्द्राग्नींश्च M. अमुमादित्यमैश्वर्यविशिष्टमिन्द्रमाहुः। तथा मित्रं प्रमीतेस्त्रारणात् त्रातारमहरभिमानिनमेतन्नामकं देवं तमाहुः। वरुणं पापस्य निवारकं राज्यभिमानिनं देवमाहुः Sy. तर्हि द्वैतापत्तिरित्याशङ्क्याह एकैव देवता परमात्मा सर्वदेवता। एकस्यैव नानानामग्रहणीत्युच्यते . . . इन्दतीतीन्द्रः 'इदि परमैश्वर्ये' मितो हिंसायास्त्रायत इति मित्रः। एवं वृणुत इति वरुणः At. इन्द्रं मित्रं वरुणं च SKN. इत्येतैरभिधानैः Dur.

४. अङ्गनादिगुणविशिष्टमेतन्नामकमाहुः Sy. अग्निं परेशमाहुः। अग्निशब्दोऽत्र नेत्राग्निमतो रुद्रस्य वाचकः . . . अग्रं नयतीत्यग्निः। 'अगि गतौ' 'णीञ् प्रापणे' गत्यर्था ज्ञानार्थाः At. अग्निमाहुः SKN.

५. अग्निशब्देन ब्रुवन्तीत्यर्थः SKN. आहुस्तत्त्वविदः Dur.

६. अपि चायम् Sy. तथा At. अथशब्दश्चार्थे SKN. अपि च योऽयम् Dur.

७. दिवि भवः Sy. दिव्यः सूर्यः . . . दिवि महापुरुषबुद्धौ द्योतनवत्यां भवो दिव्यः At. परस्तात्तच्छब्दश्रुतेर्यच्छब्दाध्याहारः . . . यश्चायं दिव्यो दिवि भवः SKN. दिवि जायते Dur.

८. Omitted by P.D. सोऽप्ययमेव Sy. स परेशः At. द्वितीयार्थे तु प्रथमा। तं चाग्निमाहुरिति सम्बन्धः SKN. अयमपि स एवाग्निरित्याहुः Dur.

९. शोभनो मोक्षपक्षः सुपर्णः At. रश्मिनामैतत्। अन्तर्णीतमत्वर्थः। सुपर्णवानित्यर्थः। शोभनं वा पतनं गमनं यस्य स सुपतनः सुपर्ण आदित्यः SKN.

गरुत्मानादित्यश्च[1]। एकम्[2]एव। सन्तम्अग्निम्। बहुशरीरपरिग्रहाद्[3] बहुधा[4]। वदन्ति[5]। अग्निम्[6]एव। यमम्[7]। मातरिश्वानम्[8]च[9]। आहुः[10]।

कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ॥४७॥

कृष्णं नियानम्। कृष्णम्[11]।

---

१. पक्षवान्वा। एतन्नामको यः पक्ष्यस्ति Sy. संसारमोक्षाभ्यां गरुद्भ्यां गरुत्मान् At. गरुद् गरणं, भौमानां रसानां रश्मिभिर्गरणेन तद्वान् ... गरितेत्यर्थः। अथवा गुर्वात्मा सन् गरुत्मान् SKN. स्तुतिभिस्तद्वान्। रसानां वा गरिताऽऽदित्यः Dur.

२. कथमेकस्य नानात्वमित्युच्यते। अमुमेवादित्यमेकमेव वस्तुतः सन्तम् Sy. एकं सद् ब्रह्म At. परेऽर्धर्चे भिन्नं वाक्यम्। किन्त्वेकं सत् कारणमात्माख्यं वस्तु SKN. किं बहुना, इममेवाग्निमेकम् ... अनन्यत्वेन पश्यन्तः Dur.

३. बहुशरीर is omitted by P.

४. विप्रा मेधाविनो देवतातत्त्वविदो बहुधा Sy. ब्राह्मणत्वाद्यभिमानिनो यज्ञादिसिद्धये बहुधाभिधानेन At. विप्रा मेधाविनो बहुधा बहुभिः प्रकारैः SKN. आत्मविदो बहुधा Dur.

५. तत्तत्कार्यकरणेनेन्द्राद्यात्मानं वदन्ति। 'एकैव वा महानात्मा देवता स सूर्य इत्याचक्षते' इत्युक्तत्वात् Sy. इन्द्रादिरूपेणाहुः। योजनान्तरे तु विप्रा मेधाविनस्तत्त्वविदस्त्विन्द्रादिरूपे बहुधा सद् ब्रह्मैकमाहुः At. वदन्ति। अग्निं यमं मातरिश्वानमाहुरिति प्रदर्शनमात्रं चेदम्। सर्वैर्हि शब्दैस्तेन विकारात्मनाऽवस्थितः कारणात्मैवोच्यते। एवमस्या ऋचः पूर्वार्धर्चे इन्द्रादयोऽग्निशब्देनोच्यन्त इत्येतदाह SKN.

६. तमेव वृष्ट्यादिकारणं वैद्युताग्निम् Sy. रोदयतीति रुद्रः, स 'एवाग्रणीत्वादग्निः At.

७. यं M.

नियन्तारम् Sy. यमयतीति यमः At.

८. अन्तरिक्षे श्वसन्तं वायुमाहुः Sy. येन स्रष्टेन मातरि मायायां क्षिप्तो जीवः श्वेव भवति स मातरिश्वा At. एवमादैश्चाभिधानैः Dur.

९. सूर्यस्य ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तं भवति। अत्र ये केचित्'अग्निः सर्वा देवताः' (AB. 2.3.) इत्यादिश्रुतितोऽयमेवाग्निरुत्तरे अपि ज्योतिषी इति मत्वाऽग्नेरेव सार्वात्म्यप्रतिपादकोऽयं मन्त्र इति वदन्ति। तत्पक्षे प्रथमोऽग्निशब्द उद्देश्यः। तमग्निमुद्दिश्येन्द्राद्यात्मकत्वकथनम् Sy. इममेवाग्निं महान्तमात्मानं बहुधा मेधाविनो वदन्ति। इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम्। दिव्यो दिविजः। गरुत्मान् गरणवान्। गुर्वात्मा महात्मेति वा N.7.18; SKN. III. 80.

१०. VM. ignores विप्राः

११. कृष्णवर्णम् Sy. भक्तस्वरूपादिकमाह कृष्णं विष्णुं सगुणं ब्रह्म At. कृष्णवर्णं देवतानां रात्रित्वेन स्मरणान्मेघनीलत्वाच्च SKN.

नियमनं[1] रात्रिः। आदित्यस्य हरयः सुपर्णाः=हरणा[2] आदित्यरश्मयः[3] 'यदा खलु वा असावादित्यो न्यङ्[4] रश्मिभिः पर्यावर्ततेऽथ वर्षति'[5], इति ब्राह्मणम्। ततस्त्वादित्यस्यात्मनो[6] विविधं[7] नियमनं नीचैर्गमनं वा दक्षिणायने भवतीति[8], दक्षिणायनं कृष्णं नियानमुच्यते[9] तस्य च कार्ष्ण्यं मेघान्धकारावृतत्वात्तं प्रत्यादित्यरश्मयः। अपः[10]। वसाना[11] आत्मन्यासञ्जयन्तः[12][13]। दिवम्[14]। उत्पतन्ति[15]।

---

१. नियमेन गच्छन्तं मेघम् Sy. नियमेन भवर्तयातव्यम् At. नियमेन यानं प्रापणमस्मिन्सर्वप्राणिनामिति यानशब्दो नियमनवचनः। स दक्षिणायने द्रष्टव्यो विशेषणसम्बन्धेन कृष्णत्वेन सम्बन्धात्। प्रथमा द्वितीया वा सप्तम्यर्थे द्रष्टव्या। कृष्णेऽयने दक्षिणायन इत्यर्थः। त आववृत्रन्नित्येतेन वाऽस्य सम्बन्धः SKN. किं पुनस्तत्कृष्णम्।...निर्गतिः (नियन्ति) निर्गच्छन्त्येतदिति नियानं वर्त्म पन्थाः। तच्च पुनरेतत्...द्वे ह्यस्यायने, शुक्लं चोत्तरं, कृष्णं च दक्षिणं, सा हि दैवी रात्रिरभिप्रेता, ततो ब्रवीति रात्रिरादित्यस्य ज्योतिषः। स एष भगवानादित्यो यदा जगदनुग्रहाय गर्भमुदकमात्मन्याधित्सुरुत्तरायणं प्रतिपद्यते तदेते Dur.

२. उदकस्य हर्तारः Sy. हर्तारो रसानाम् SKN. रसहरणाः Dur.

३. शोभनपतना रश्मयः Sy. सुपर्णं गरुडसमानजातिकमारूढाः सुपर्णमारोहन्तीति At. रश्मयः SKN. तस्य रश्मयः Dur.

४. ०स्योऽन्यङ् M.

५. TS. 2.4.10; cf. KS. 11.10; N. 7.24.

६. तथा चादित्येस्या० D. ०दित्येस्या० M.

७. विधा D.M.

८. P. adds दक्षिणायने भवतीति after भवतीति

९. नियामन० M.

१०. उदकानि . . . अन्तर्भावितण्यर्थत्वाद् द्विकर्मकत्वम्। यद्वा कृष्णं नियानं नियमनं रात्रिः। देवानां हि रात्रिर्दक्षिणायनं, तत्प्रति। तस्मिन्वर्षकाल इत्यर्थः Sy. आप इत्यन्तरिक्षनाम (Ngh.1.3.) अन्तरिक्षसमं सूक्ष्मवस्त्रम् At. अपो वस्त्रस्थानीयाः SKN.

११. ०श्मयो वोऽव० M. वसनाः P.वासयन्तो मेघेषु। अद्भिर्मेघान्पूरयन्त इत्यर्थः Sy. परिदधानाः At. आत्मन्यासजन्तः SKN. सर्वस्मादस्माल्लोकात् ... आत्मन्याच्छादयन्त आददानाः Dur.

१२. ०नात्म० D.

१३. ०संज० D.

१४. एवं कुर्वन्तो दिवं द्युलोकं तदाश्रितमादित्यं वोद्दिश्य Sy. स्वर्गम् At. द्योतनवन्तमेतमादित्यं प्रति Dur.

१५. उत्प० P. ऊर्ध्वं गच्छन्ति Sy. त उन्मुच्य त्यक्त्वा पतन्ति पृथिवीं प्राप्नुवन्ति At. उत्पतन्ति परस्तात्तच्छब्दश्रुतेर्यच्छब्दाध्याहारः। ये SKN. तदुदकं निषिक्तसमानास्तस्मिन् गर्भत्वेन स एष आदित्य उत्तरायणं मासैः षड्भिराहितोदकगर्भः सम्पद्यते Dur.

अत्र यास्कः—'ते[1] यदामुतोऽर्वाञ्चः[2][6] पर्यावर्तन्ते[3][7] सहस्थानात्[4]। उदकस्यादित्यात्[5]। अथ। घृतेनोदकेन। पृथिवी। व्युद्यते' इति।

द्वाद॑श प्र॒धय॑श्च॒क्रमेकं॒ त्रीणि॒ नभ्या॑नि॒ क उ॒ तच्चि॑केत ।
तस्मि॑न्त्सा॒कं त्रि॑श॒ता न श॒ङ्कवो॑ऽर्पि॒ताः ष॒ष्टिर्न च॑लाच॒लासः॑ ॥४८॥

द्वादश प्रधयः। तस्मिंश्चक्रे[8] द्वादश[9]। प्रधयो[10] भवन्ति मासाः[11]। त्रीणि[12]। नभ्यफलकान्यृतवः[13][14]।

---

१. रश्मयः Sy., Dur. विष्णवो भूत्वा सारूप्यादिना समानतां प्राप्ताः सुपर्णास्ते विष्ण्वादिलोकं प्राप्ताः At.

२. आवर्तन्ते, अर्वाञ्च आगच्छन्ति Sy. आवर्तन्ते At.
ते कृष्णनियाने . . . आववर्तन्ते (आवर्तन्ते) SKN. स एव परिषिक्तोदकगर्भो दक्षिणं वर्त्म प्रतिपद्यमानो नभस्यान्मासात्प्रभृति प्रसूयते। तदिदमुच्यते त आववृत्रन् Dur.

३. सदनादुदकस्य स्थानात् Sy. लोकात् At. स्थानात् SKN.

४. आदित्यमण्डलात् Sy. तस्य ऋतस्य विष्ण्वादेः सगुणब्रह्मणः At. उदकस्य, आदित्यमण्डलादित्यर्थः SKN. अमुष्मादादित्यात् Dur.

५. अनन्तरमेव यदार्वाग् गच्छन्ति तदानीमेव Sy.
आगमनसमकालमेव At.
आच्छन्दोऽत्येत्यस्यार्थे, इच्चेति, अनन्तरं च SKN.
तदावृत्तिसमनन्तरमेव Dur.

६. विद्युते P. विविधं क्लिद्यते Sy. विशेषेणोद्यत आर्द्रीक्रियते। 'उन्दी क्लेदने' परस्माल्लोकाद् भुवमागच्छन्ति। मेघीभूयोदकीभूय वृष्टिरूपेण भुवमार्द्रयित्वौषधिवनस्पत्यादिरूपं प्राप्य तद्रूपेण पुरुषं प्राप्य स्त्रियो जठराज्जायन्ते At. स्विद्यत इत्यर्थः SKN. विविधमुद्यते Dur.

७. कृष्णं नियानं रात्रिः। आदित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मयः। ते यदामुतोऽर्वाञ्चः पर्यावर्त्तन्ते। सहस्थानादुदकस्यादित्यात्। अथ घृतेनोदकेन पृथिवी व्युद्यते। घृतमित्युदकनाम। जिघर्तेः सिञ्चतिकर्मणः N.7.24; SKN. III. 98. VM. ignores इत्

८. कस्मि० M. एकमद्वितीयं, चक्रं क्रमणस्वभावं संवत्सराख्यं चक्रमाश्रिताः Sy. कालचक्रं वर्णयन्ति . . . तैरारब्धमेकं संवत्सरात्मकं कालचक्रम् At.

९. एतत्सङ्ख्याकाः Sy.

१०. प्रध० P. परिधयः प्रहिता वर्तन्ते Sy. प्रधीयन्त इत्यरा मासात्मकाः At.

११. मास M. तत्स्थानीया द्वादश मासाः Sy.

१२. त्रिसङ्ख्याकानि Sy. तस्य च . . . तिस्रः At.

१३. नह्य० M. नाभ्य० P. नाभ्याश्रयाणि फलकानि तत्स्थानीयानि Sy.
नाभयः। ऋतुद्वन्द्वेन नाभिः। 'षड्वा ऋतवः संवत्सरः' (SB. 1.2.5.12.) इति श्रुतेः At.

१४. ग्रीष्मवर्षाहेमन्ताख्यान्याश्रितानि। यथा सूर्यरथचक्रस्य द्वादश परिधयो नाभ्यर्हाणि त्रीणि फलकानि सन्ति तद्वत् कालचक्रस्यापि Sy.

तच्चक्रम्[1]। कः[2]। वेद[3] तस्य लक्षणम्। तस्मिन्[4]। त्रीणि शतानि[5]। षष्टिः। च[6]। प्रतिक्रमणस्वभावाः[7]। शङ्कवः[8]। अर्पिता[9] इत्यहोरात्राभिप्रायम्[10]। समुच्चयार्थीयो[11] नकारः[12][13]।

यस्ते॒ स्तनः॑ शश॒यो यो म॑यो॒भूर्येन॒ विश्वा॑ पुष्य॑सि॒ वार्या॑णि।
यो र॑त्न॒धा व॑सु॒विद्यः सु॒दत्रः॒ सर॑स्वति॒ तमि॒ह धात॑वे कः ॥४९॥

यस्ते स्तनः। पुनश्च वाचं स्तौति—

---

१. तत्कालचक्रम् At.

२. कोऽपि महान् Sy. को ब्रह्मा को वा पुरुषः At.

३. जानाति Sy., At.

४. तस्मिश्चक्रे साकं सह शङ्कवो न शङ्कव इव ... तस्मिन्नपि संवत्सरचक्रे Sy. तस्मिन् कालचक्रे, साकं सहभवा अन्योन्यानुबद्धाः At.

५. त्रिशता, एतत्सङ्ख्याकाः Sy.

६. नशब्दश्चार्थे। षष्टिश्च Sy. त्रिशताः षष्टिश्चेत्येवं सङ्ख्याताः At.

७. ०णस्वभा० M. एकवचलशब्दो द्विर्भावप्राप्तः। चलाः। चलनस्वभावानी-त्यर्थः Sy.
न चला अव्यभिचारिणः At.

८. अरा अरस्थानीयान्यहानि ... 'षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहानि' (SB. 9.1.1.43.) Sy.
सूक्ष्मा अराः शङ्कवः कीलाः At.

९. अर्पितानि Sy. अर्पिताः, कीलक इव चक्रे निखचिताः। अनेन त्रिविधं भूत-पञ्चकमित्युक्तम्। माससंवत्सरकर्तुरूपं कालचक्रं प्रवर्तकत्वात्तदात्मकमित्युक्तम्। अधिभूतमेतद् भवति At.

१०. ०रात्र्यभि० M.

११. समुच्चीयो M. अत्र पुरस्तादुपचारोऽपि नशब्दः सामर्थ्यादुपमार्थीयः Sy.

१२. अधिदैवम्—मासा एव प्रधयः। संव-त्सरश्चक्रम्। ऋतवो नाभयः। षष्ट्य-धिकं त्रिशतं सूक्ष्मा अरास्तु दिवसा रात्रयो वा। तत्सन्धयः पूर्वे वा परे वा। अध्यात्मन्तु–प्रधीयन्ते प्रधानानि स्वीक्रियन्त इति प्रधयो मनोबुद्धि-सहितानीन्द्रियाणि द्वादशारस्थानानि। तैरारब्धं चक्रं प्राणान्तःकरणात्मकमेकं लिङ्गशरीरं, सर्वयोनिषु भेदाभावादे-कांशस्य चक्रसदृशत्वाच्चक्रम्। तस्य तिस्रो नाभयोऽवस्थाः। अवस्थात्रयं स्वप्ना(दयः)इत्युक्ताः। नचैतच्चक्रं भ्रमणादुपरमतीत्याह। क उ तद् ब्रह्म चिकेत वेत्ति क एव पुमान्। नच ब्रह्मज्ञानादृते तन्निवृत्तिः। ब्रह्मज्ञानं तु दुर्लभम्। तस्मिँल्लिङ्गशरीर आश्रितं साकं सहभावि स्थूलशरीरम्। तत्र च स्थूलदेहे त्रीणि शतानि षष्टिश्च शङ्कव इव स्थिता अरा अस्थिरूपा अर्पिता अन्तर्निहिता आधारस्तम्भसमानाः। तेन चञ्चला न। अतिदृढाः। अन्ये तु त्रिशतं षष्टिमंज्जान इत्याहुः। परेऽस्थि-सन्धय इत्याहुः At. इति मासानाम्। मासा मानात्। प्रधिः प्रहितो भवति N.4.27.

१३. VM. ignores एकम्। उ। साकम्। न

यः। ते[1]। उरसि शिश्यानः[2]। स्तनः[3]। यः। सुखं[4] भावयति। येन[5] च। विश्वान्येव। वरणीयानि धनानि[6]। पुष्यसि[7]। यः। वसूनि लम्भयन्[8]। रत्नान्यपि प्रयच्छति[9]।

---

१. तव Mah. तव सम्बन्धी Sy. भो वाग्रूपिणि सरस्वति वेदविद्ये तव At., U.

२. शिश्या न M. शेते इति शशयः। ... सुप्त इवास्तेऽन्यैरनुपभुक्तत्वात् Mah., U. शयानस्तव देहे वर्तमानः Sy. शयानोऽविश्रान्तो जीवः। तत्प्रधानं वाक्यमपि लक्षणया शशय इत्युच्यते At.

३. जातावेकवचनमित्यर्थः। ... स्तन इव स्तनः Mah. स्तनवच्छिशुस्थानीयानां प्राणिनामाप्यायनकारी लौकिकवैदिकसुशब्दरूपः स्तनः Sy. कुचोऽमृतस्रावकः ... शब्दात्मकः ... यत्र परमात्मानुवादेन प्रत्यगात्मैवोच्यते तद्वाक्यं सरस्वत्याः स्तनस्थानीयम् At.

४. मयः सुखं भावयति प्रापयति सर्वभूतानामिति मयोभूः Mah. रसास्वादिनां सुखस्य भावयिता Sy. यश्च तृतीयः स्तनो मयोभूः सुखरूपः परमात्मा तत्प्रधानं वाक्यमपि लक्षणया मयोभूः। यत्र जीवात्मानुवादेन परमात्मोच्यते तद्वाक्यं देवरूपं सरस्वत्या द्वितीयस्तनस्थानीयम् At. मयः सुखं भावयति सर्वभूतानाम् U.

५. स्तनेन Mah., Sy. ग्रथ नदीरूपिणी सरस्वती। भो नदीरूपिणि सरस्वति, ते तव सम्बन्धिना स्तनेनामृतस्रावकेण येन At.

६. वरणीयानि वस्तूनि Mah. ग्रभिमतरूपाणि धनानि Sy. वारि भवानि व्रीह्यादिधान्यानीति At.

७. त्वं पुष्यसि पुष्णासि Mah. पुष्यसि भोक्तृभ्यः Sy. पोषयसि, ... प्राणिधान्याद्युत्पत्तिहेतुः स प्रवाहो नदीरूपः सरस्वत्याः स्तनस्थानीयस्तं स्तनं धातवे धातुं ममात्मानं पालयितुं कुरु सम्पादय। एवं सरस्वत्युदकसाध्यसस्यादिसमृद्धिर्याचिता At.

८. वसु धनं विन्दति वेत्ति वा वसुवित् Mah. वसूनां वासयितॄणां धनानां वेत्ता लब्धा वेदयिता वा Sy. भो देवतारूपिणि सर्वदेवमपि सरस्वति प्रसीद।... वसु वसनाच्छादनकर्तारौ जीवेश्वरौ वेदयति ज्ञापयति, ग्रन्तर्भावितोऽत्र ण्यर्थः। विदितब्रह्मविद्याचार्यो हि देवतारूपिण्याः सर्वदेवतारूपायाः सरस्वत्याः स्तनस्थानीयः, कः परमानन्दरूपः। भो सरस्वति तं तव स्तनमिह धातवे सम्पादय At. यश्च वसु विन्दति U.

९. रत्नानि दधाति रत्नधा रमणीयानां धनानां धारयिता Mah. बहुविधरमणीयरत्नानां धारयिता Sy. तथा यश्च द्वितीयस्तनो रत्नधा रत्नानामुत्पादकः पालकश्च यः सरस्वत्याः प्रवाहविशेषः समुद्रप्रविष्टः समुद्रोदकेन संसृज्यमानस्तज्जलं प्राप्य प्रसूतः। शशयो वेदगुहाशयः तद्गम्यफलभूत इति यावत् मयोभू रत्नप्रभवः। मय इत्यश्वनाम। सर्वप्राणिभृदिति यावत्। येन विश्वा सर्वाणि वार्याणि वरणीयानि ब्रह्मादीनि पुष्यसि पालयसि। भो रत्नानि जनयति तं ते तव स्तनं धातवे सम्पादय At.

शोभनधनः। तं मेधाख्यं स्तनम्। इह। सरस्वति! पानाय।

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥५०॥

यज्ञेन यज्ञम्। 'अग्निः पशुरासीत् तमालभन्त तेनायजन्त' इति ब्राह्मणम्।

---

१. सुष्ठु ददातीति सुदत्रो दाता। धनवानन्यो दातुं न शक्नोति, स्वस्तनस्तु धनवान् दाता चेत्यन्येभ्य आधिक्यम् Mah. यः स्तनः सुदत्रः शोभनदानः। ...अत्रा-सकृद्यच्छब्दश्रवणं स्तनस्यातिप्रशस्तत्व-ज्ञापनार्थम् Sy. सुखं ददातीति सुदद्धर्मो धर्मवान्। मतुपोऽलुक्। सुदत्तस्त्रायत इति सुदत्र ईश्वरः At. कल्याणदानः। धनवानपि सन् कश्चिन्नोत्सहते दातुमत एव भिद्यते U. सुदत्रः कल्याणदानः N.6.14. २. मात्व्यं P. तं स्तनम् Mah., At., U. तं तादृशं सर्वप्राण्युपकारकं सूक्तमयं स्तनम् Sy.

३. अस्मिन्स्थाने Mah. अस्मिन्कर्मणीदानीं वा Sy. इह जीवात्मनि देशे काले च At. ४. ०ती P.D.

५. पानार्थमकः कुरु। मम पानाय प्रयच्छे-त्यर्थः Mah. अस्माभिर्धातुं पातुं पानाय कः कुरु Sy. अस्मत्पोषणाय कः कुरु सम्पादय At. पानाय, अकः कुरु U.

६. VM. ignores कः

The third pāda of this stanza occurs as the second and the second as the third in the YV. 38.5. Further in the YV., the words उर्वन्तरिक्षमन्वेमि are added to the stanza of the RV.

७. देवाः प्रजापतिप्राणरूपाः, यज्ञेन यथो-क्तेन मानसेन सङ्कल्पेन Mah. देवा अव-यहर्तारो यजमाना यज्ञेन निर्मन्थ्या-ग्निना Sy. काम्यकर्मणा At. यथेन्द्रा-दयो देवा यज्ञेन ज्योतिष्टोमाख्येन U. यज्ञसाधनत्वान्निर्मन्थ्योऽग्निरुच्यते। यज्ञ-साधनभूतेन निर्मन्थ्येन ...अथवा यज्ञेनेति यज्ञसाधनत्वात्पशुभूतोऽग्नि-रुच्यते, तथा चाग्नेः पशुत्वे ब्राह्मण-वादो दर्शितः...तेन यज्ञेन यज्ञसाधन-भूतपश्वग्निना SKN. इज्यत इति यज्ञोऽग्निः। 'यजयाच०'(Pa.3.3.90) इति नङ्प्रत्ययः। तेन...देवा ऋत्विजः BB. स्थावरजङ्गमभावमापन्नेन हविर्भू-तेन...देवा देवभाविनः Dur.

८. यज्ञस्वरूपं प्रजापतिम् Mah. होमसाध-नमाहवनीयम् Sy. यष्टव्यमीश्वरम् At. यज्ञपुरुषं वासुदेवम् U. यज्ञसाधनभूत-मेवाग्निमाहवनीयम् ... यज्ञसाधन-मेवाग्निं देवताभूतमयजन्त, इष्टवन्तः SKN. इतरमग्निम् BB. अग्निमेव सर्वदेवताभूतमादित्यादिप्रनादिकया महा-न्तमात्मानम् Dur.

९. तमाय० D. पूजितवन्तः Mah. अनु-ष्ठानाय संयोजितवन्त इत्यर्थः। 'अग्नि मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियते (TS. 6.2.1.7.) इति हि तैत्तिरीयकम् Sy. यजन्ति ते देवा भवन्ति स्वर्गे देदीप्यमानाः At. विधिनाऽयजन्त U. निर्मन्थ्यमग्निमाह-वनीये हुतवन्त इत्यर्थः SKN. यजन्ते BB.

तानि[1] । धर्माणि[2] । पूर्वयुगीयानि[3] । आसन्[4] । ते[5] । ह । नाकम्[6] । महिमानः[7] । सेवन्ते[8] । यस्मिन् नाके[9] । पूर्वे[10] ।

---

१. तस्मात्पूजनात् तानि प्रसिद्धानि Mah.
तानि निष्कामत्वेनात्यन्तोत्कृष्टानि, यच्छन्दरहितस्तच्छब्दोऽत्यन्तोत्कृष्टवाची At. यतस्तानि यजनरूपाणि U.

२. जगद्रूपविकाराणां धारकाणि Mah.
अग्निसाधनानि कर्माणि Sy.
धर्मसाधनानि यज्ञादीनि At.
कर्माणि SKN., BB.
कर्माणि तथाविधज्ञानयुक्तानि Dur.

३. मुख्यानि भूतानि Mah. प्रथम इति मुख्यनाम । प्रतमानि प्रकृष्टतमानि Sy.
ज्ञानस्य यज्ञस्य प्रथमानि पूर्वसाधनानि At. चिरन्तनानि SKN.
मुख्यानि BB., Dur.

४. आह् P. एतावता सृष्टिप्रतिपादकसूक्तभागार्थ उक्तः Mah. फलप्रसवसमर्थान्यभवन्नित्यर्थः Sy.
भवन्ति At.
आसन् । न केनचिदिदानीमेव प्रवर्तितानि SKN. हिंसारहितान्यभावयन् । 'बहुलमन्यत्रापि०' (U. 2.25) इति णिलुक् BB.
महदात्मभावापत्तये तैरपि क्रियन्त इत्यर्थः Dur.

५. अथोपासनतत्फलानुवादभागार्थः सङ्गृह्यते Mah. ते च यजमानाः Sy.
ब्रह्मविद्यापि द्विधा सगुणा निर्गुणा च । अत्र निर्गुणायाः फलमिदम् । तेऽत्यन्तोत्कृष्टा ह एव At.
के ? देवा दातारो हविषां यजमानाः . .
. . हशब्दश्चार्थे, ते च SKN.
ये त्वेवं कुर्वन्ति त एव BB.

६. नकं D. तं नाकं विराट्प्राप्तिरूपं स्वर्गं ह एव Mah. नास्मिन्नकमस्तीति नाकः स्वर्गस्तम् Sy.
नाकं सुखम् । अकं दुःखम् । अत्र द्वौ नञावतिशायिनं प्रकृतमर्थमाहुरिति नाकमानन्दरूपम् At.
स्वर्गम् U. नाकमिति साधारणनाम, दिवश्चादित्यस्य च, तेन नाकं दिवमादित्यं चेत्यर्थः SKN. तमेव नाकं महान्तमात्मानमेकान्तसुखम् Dur.

७. तदुपासका महात्मानः Mah. माहात्म्ययुक्ताः Sy.
महान्तः, उपदिष्टमहावाक्यो महच्छब्देन कथ्यत इति वचनादुपदिष्टमहावाक्या-ज्जीवन्मुक्ताः सन्तः At.
महाभाग्ययुक्ताः U. महिमा महत्त्वम् । लुप्तमत्वर्थश्चायम् । महत्त्ववन्तो महान्त इत्यर्थः SKN. महिमवन्तः । मत्वर्थीयो लुप्यते BB. तानि कृत्वा नियमेनैवानन्यभावित्वात्तत्फलस्य महिमानस्तदानुपूर्व्येण जातमहदात्मभावाः सन्तः Dur.

८. समवयन्ति प्राप्नुवन्ति Mah. सङ्गताः Sy. तेषां समवाये समवयन्ति । परमानन्दात्मका भवन्तीत्यर्थः At.
सेवितवन्तः प्राप्तवन्त इत्यर्थः SKN.
तस्माद्वयमप्येतेन कर्मणा तद्वनं सचेमहीति BB. तद्भावमेव त आपेदिरे Dur.

९. यस्मिन्विराट्प्राप्तिरूपे नाके Mah.
यस्मिन् नाके Sy.
सगुणब्रह्मविद्याफलम् । यत्र ब्रह्मलोके At. यत्र यस्मिन् नाके SKN.
किं त एव ? नेत्युच्यते . . . शब्दार्थोपदेशनित्यत्वाद्यत्र Dur.

१०. पुरातनाः Mah. पूर्वतनाः Sy.
पूर्वे ब्रह्मादयः सन्ति At.
प्रथमे U. पूर्वे सर्वतः प्रथमे SKN.
पूर्वे च पूर्वतरे च Dur.

साध्याः। भवन्ति। देवाः।

**समानमेतदुदकमुच्चैत्यव चाहभिः।**
**भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥५१॥**

समानमेतत्। एकमेव। इदम्। उदकं पयओषध्यात्मना परिणतमस्माल्लोकादमुं लोकम्।

---

१. विराडुपाधितापकाः Mah. साधना यज्ञादिसाधनवन्तः कर्मदेवा इत्यर्थः। ते Sy. तत्र साध्या आध्यात्मसगुणध्यानेन सह वर्तमानाः सगुणब्रह्मज्ञाः At. सुराः U. नैरुक्तानां साध्या रश्मय उच्यन्ते, तदाह द्युस्थानो रश्मिर्देवगणः SKN. साधका यजमानाः। साधयतेः 'अचो यत्' (Pa. 3.9.97.) इति कर्तरि यत्, णिलोपः BB. ज्ञानकर्मसमुच्चयकारिणः Dur.
This stanza=YV. 31. 16.= TS. 3.5.11.5.

२. तिष्ठन्ति Mah. निवसन्ति तं सचन्त। तस्मादिदानीमपि मनुष्यैरेवं कर्तव्यमित्यर्थः Sy. भवन्त्यपुनरावृत्ताः At. विद्यन्ते U. इदानीमपि तत्र विद्यन्ते BB. सन्ति, जज्ञुरित्यर्थः Dur.

३. तेजसा देदीप्यमानाः U. देवीभूताः BB.

४. यज्ञा देवा इदानीं देवभागमापन्नाः पूर्वं यज्ञेनाग्निना पशुभूतेन यज्ञं यष्टव्यमग्निमयजन्त पूजितवन्तः। अग्नेरेव मूर्तिभेदेन देवत्वं च पशुत्वं च द्रष्टव्यम्। 'अग्निः पशुरासीत्तमालभन्त तेनायजन्त' इति श्रुतेः। शिष्टं पूर्ववत्। यत्र यस्मिन् स्वर्गे निमित्तभूते सति पूर्वे पूर्वतनाः साध्या देवाः साधनाश्छन्दोऽभिमानिनः। आदित्या अङ्गिरसश्च साध्या देवा उच्यन्ते। 'छन्दांसि वै साध्या देवास्तेऽग्रेऽग्निनाग्निमयजन्त ते स्वर्गं लोकमायन्नादित्याश्चैवेहास अङ्गिरसश्च तेऽग्रेऽग्निनाग्निमयजन्त ते स्वर्गं लोकमायन्' (AB. 1.16.) इति ब्राह्मणम्। एते देवाः स्वर्गे सन्ति भवन्ति स्वर्गप्राप्ता इत्यर्थः। यज्ञा यज्ञेन ज्ञानादियज्ञेन यज्ञं विष्णुमयजन्त पूजयन्ति। ते नाकं विष्णुलोकं महानुभावाः सचन्त सङ्गच्छन्ते यत्र पूर्वे साध्यादयो देवाः सन्ति तत्स्थानम् Sy. एवं योगिनोऽपि। दीपनाद् देवा यज्ञेन समाधिना नारायणाख्यं ज्ञानरूपमयजन्त। यतस्तानि समाधिरूपाणि धर्माणि प्रथमान्यासंस्ते तु नाकं सनकादीनां स्थानं गच्छन्ति। ये तु योगिनो महिमानो जन्मान्तरैर्निर्धूतगुणाश्शुद्धास्ते नारायणाख्यं पुरुषमाविशन्ति मुक्तिं गच्छन्तीत्यर्थः U. ऐतिहासिकाः पूर्वं देवयुगमिति। पूर्वोक्तदेवसमूह इत्यर्थः। तदा च ऋगेवं व्याख्येया। मानुषावस्थायां यज्ञेन यज्ञमयजन्त देवत्वाय साध्याः, ते ह नाकं प्रपेदिर इत्यर्थः। यत्र तेभ्यः पूर्वं प्राप्ता अन्ये साध्या देवा इति SKN. 'यज्ञेन यज्ञमयजन्त देवाः,। अग्निनाऽग्निमयजन्त देवाः। 'अग्निः पशुरासीत् तमालभन्त तेनायजन्त' इति च ब्राह्मणम्। 'तानि धर्माणि प्रथमान्यासन्' 'ते ह नाकं महिमानः' समसेवन्त। 'यत्र पूर्वे साध्याः सन्ति देवाः' साधनाः। द्युस्थानो देवगण इति नैरुक्ताः। पूर्वं देवयुगमित्याख्यानम् N.12.41; SKN. IV. 141

५. एकरूपमित्यर्थः Sy. देशकालादौ समानमपि At. समानमेव SKN.

६. प्रसिद्धम् Sy. एतद् ब्रह्म At.

७. उदकाद् द्युस्थादुद्गतमपि At. उदकत्वेनाविशिष्टम् Dur. ८. पयओष० M.

उत्[1] । च । गच्छति[2] । तत इह[3] स्वस्थेन गच्छति । अहोरात्रैरेतदेवोक्तम्[4] । भूमिं[5] प्रत्यक्षेणोदकेन । पराभवसतवसो[6] विद्युन्महस[7] इत्याद्याः ? सप्त पर्जन्याः[8] । प्रीणयन्ति[9] । दिवम्[10] । जिन्वन्ति[11] । अग्नयः[12] परोक्षेण हविष्ट्वमापन्नेनेति[13] ।

---

१. ऊर्ध्वम् Sy., SKN., Dur. देवताविस्तम् At. २. अनुभवति At.

३. अवाङ्मुखं च गच्छति ... रश्मिनाड्यैव भूमिं प्राप्नोति Sy. नीचैरपि मर्त्यं मनुष्यादिरूपमनुभवति च At. अव च शब्दावधोभावे। अव एति, पततीत्यर्थः SKN. पुनस्त्वाहोभिरेवावाङेति। दक्षिणोत्तरायणयोर्व्यावृत्तिभिः प्रतिसंवत्सरमहान्यभिप्रेतानि। तदेतदेकमेवोदकं पर्यायेणोत्तरायणदक्षिणायनयोर्जगद्यात्रासिद्धये तदुदेति चावैति वर्षकर्मभावेन Dur.

४. कैश्चिदहोभिर्ग्रीष्मकालीनैः Sy. अहीयमानैर्धर्मसंस्कारैरिन्द्रियैः प्राणैश्चोपहितजीवभूतं सत् At. अहभिश्छान्दसत्वाद् वर्णलोपः। तृतीया च सप्तम्यर्थे, अहस्सु। उदगयने यान्यहानि तेषूर्ध्वं गच्छति दक्षिणायने यानि तेष्ववः SKN. अहोभिर्निमित्तभूतैः Dur.

५. उदकसंस्त्यायेन सस्याद्युत्पादनद्वारा भूमिष्ठान् Sy. एवमनुभाव्य जीवो यदा मनुष्यतां प्राप्तस्तदा कर्माधिकारी जगद्यात्रां प्रवर्तयेत्। अन्यथा जगज्जननदोषः स्यादित्याह भूमिं मनुष्यादिसहिताम् At. अत्रोत्तरेणार्धर्चेन सहैकवाक्यतायै योग्यविभक्तियुक्तौ यत्तदावध्याहार्यौ। येनोदकेन वृष्टिरूपतामापन्नेन भूमिं भूलोकम् SKN.

६. पराह्वस्वतवसो M. पराभवततवसो P.

७. ०न्मयस P.D.

८. प्रीणयितारो मेघाः Sy. हविषा जुष्टा इन्द्रसूर्यादयश्च ये देवास्ते At. प्रार्जयितारो रसानां माध्यमिका देवगणाः SKN. प्रार्जयितारो रसानां माध्यमिका देवगणा वर्षामितो मुञ्चन्तः Dur.

९. प्रीणयन्ति वृष्ट्यादिना At. प्रीणयन्तीत्यर्थः SKN. तर्पयन्त्योषध्युत्पत्तये, एवं तावदवाङेति Dur.

१०. द्युलोकस्थान्देवान् Sy. देवादिसहितं द्युलोकम् At. द्युलोकम् SKN. अथ पुनरूर्ध्वं कथमेति ? इत्यत आह...परमं सूक्ष्मं देवोपभोगयोग्यं द्यां प्रति Dur.

११. प्रीणयन्ति Sy. हविर्दानेन स्वर्गस्थान्देवांस्तर्पयन्तीत्यर्थः At. तत्परिणामत्वात्तद्रूपतामापन्नेन तेनैवोदकेन ... जिन्वन्ति प्रीणयन्त्यग्नयः। 'इतः प्रदानं देवा उपजिन्वन्त्यमुतो मनुष्याः' इति श्रुतेः SKN. यथैवामुतो वर्षेणेमां पर्जन्या जिन्वन्ति, तथैवाहुतिप्रभवेण वर्षेण दिवं जिन्वन्त्यग्नयः। आहुतयो ह्यग्नौ प्रक्षिप्तास्तेन दग्धास्ताः स्वार्चिर्भिः कृत्वोदकभावमापाद्य ... वर्षभावेणोत्क्षीयन्ते तद् (द्यु) लोकनिवासिनां तृप्तये। ततस्त इह पुनर्वर्षं प्रकल्पयन्ति Dur. जिन्वतिः प्रीतिकर्मा N. 7. 23.

१२. आहवनीयाद्याः स्वे हुत आहुत्या Sy. यजमानेन भूस्थेन समर्चिता भूस्था अग्न्यादयः At. एवं च सुतरामयमपि च वर्षवान्। आहुतिमूलत्वात्सर्वस्य वर्षस्य। ...तत्र यदभूद्वर्षकर्मभावान्मध्यम इति तदेतदवैशेषिकं मध्यमस्य वैश्वानरत्वेन लक्षणम् Dur.

१३. N. 7. 23.; SKN. III. 96.

दि॒व्यं सु॑प॒र्णं वा॑य॒सं बृ॒हन्त॑म॒पां गर्भं॑ दर्श॒तमोष॑धीनाम् ।
अ॒भी॒प॒तो वृ॒ष्टिभि॑स्त॒र्पय॑न्तं॒ सर॑स्वन्त॒मव॑से जोहवीमि ॥५२॥

दिव्यं सुपर्णम्। अन्ते चादित्यं स्तौति—दिवि भवम्[1]। सुपतनम्[2]। आपो यत्र वसन्ति सोऽपां गर्भस्तम्[3]। दर्शयितारम्[4]। ओषधीनाम्[5]। अभिपततः सर्वानिव[6]। वृष्टिभिः[7]। प्रीणयन्तम्[8]। तं सरस्वन्तम्[9]। रक्षणाय। जोहवीमि[10], यद्वेयं[11] सरस्वतः स्तुतिर्माध्यमिका सरस्वती सूक्ते स्तुता[12] सरस्वांश्च स्तूयत इति[13]।

## I.165.

कया॑ शु॒भा सव॑यसः॒ सनी॑ळाः समा॒न्या म॒रुतः॒ सं मि॑मिक्षुः ।
कया॑ म॒ती कुत॒ एता॑स ए॒तेऽर्च॑न्ति॒ शुष्मं॒ वृष॑णो वसू॒या ॥१॥

कया शुभा। अगस्त्यस्येन्द्रमरुतां (च) संवादः[14]।

---

१. स्वर्गिणं कर्मफलभोक्तारम् At.

२. शोभनगमनम्। वायसं गमनशीलम्। बृहन्तं महान्तम् Sy. सुपर्णमारोहयतीति, णिजर्थो। सुपर्णवाहनाविरुद्धविष्ण्वादिलोकार्थं सगुणोपासकं स्वर्गिणं च कर्मविद्याभ्यां भ्रष्टं, नीचकर्मकरणेन च वायसयोनिं प्राप्तं तथा बृहन्तं ब्रह्मरूपिणमात्मानं च At.

३. ०र्भस्वं P.D. वृष्टयुदकानां गर्भवदुत्पादकम् Sy. अप्प्रमुखसूक्ष्मभूतेन्द्रियाणामापगानां गर्भं कार्यं लिङ्गदेहिनम् At.

४. दर्शनाय। दर्शयन्तमित्यर्थः। यद्वा। ओषधीनां गर्भं दर्शतमिति पृथग् विशेषणम् Sy. दर्शनं ज्ञानं च At.

५. ओषधीः Sy. इमाः स्वामिन्यः पोषिका यस्यास्तां स्थूलां तनुं च At.

६. आनुकूल्येन Sy. सर्वत आपो यत्र गच्छन्ति सोऽभीपः समुद्रान्तःस्थितभूप्रदेशः... समीप इवाचरन्तीति क्विप्। संसाराधित्वादभीप इवाचरतोऽप्यतिसंसारिणो जीवान् At.

७. ज्ञानामृतरसवृष्टिभिः At.

८. जगत्प्रीणयन्तम्। यद्वा। अभीपतोऽभिगमनवतः सलिलाधारांस्तडाकादींस्तर्पयन्तमथवा, अभिगन्ताहम् Sy. तर्पयन्ति At.

९. उदकवन्तम्। सर इत्युदकनाम। देवं सूर्यं वा Sy. ज्ञानवन्तं गुरुम् At.

१०. पुनः पुनराह्वयामि Sy. प्रोक्तवानस्मि ...दिव्यादयोऽत्र सूक्ते मयोक्ता इति At.

११. यद्येयं M.

१२. स्तुत P.

१३. VM. ignores वायसम्। बृहन्तम् Ms. D. puts the figure ॥१६४॥ here to indicate the end of one hundred and sixtyfourth hymn. No Such number is given in p. and M.

१४. ०दने P. अत्रेन्द्रमरुत्संवादरूपे सर्वत्र प्राणजीवात्मपरत्वापि योजनीयम् Sy.

समागच्छन्मरुद्भिस्तु चरन् व्योम्नि शतक्रतुः ।[1]
दृष्ट्वा तुष्टाव तानिन्द्रस्ते चैनं मरुतोऽब्रुवन् ॥
तेषामगस्त्यः संवादं तपसा वेद तत्त्वतः ।
स तानभिजगामाशु निरुप्यैन्द्रं हविस्तदा ॥[2]
मरुतश्चापि तुष्टाव सूक्तैस्तस्त्विति नु त्रिभिः ॥[3] इति शौनकः ॥[4]

केन[5]। शोभनेन[6]। समानवयस्काः[7]। सनीडाः=एकस्मिन्नन्तरिक्षे प्रादुर्भवन्तः[8]। साधारणेन। मरुतः। सम्भूय[9]। मेहन्ति[10] कथं यजमानैः स्तुता[11] वर्षं[12] कुर्वन्तीत्यर्थः। तदेवाह—कया[13]। स्तुत्या[14]। कुतश्च[15]। प्रादुर्भूताः[16]। इमे[17]। स्वकीयं बलम्[18]। पूजयन्ति[19]। वर्षितारः। यजमानानां धनेच्छयेति[20]।

**कस्य॒ ब्रह्मा॑णि जुजुषु॒र्युवा॑नः॒ को अ॑ध्व॒रे म॒रुत॒ आ व॑वर्त ।**
**श्ये॒नाँ इ॑व॒ ध्रज॑तो अ॒न्तरि॑क्षे॒ केन॑ म॒हा मन॑सा रीरमाम ॥२॥**

कस्य ब्रह्माणि। कस्य[21]। स्तोत्राणि[22]। सेवन्ते। तरुणाः[23]। को वा[24]। एतान्। अध्वरे[25]। आव-[26]

---

१. ०च्छ...मरुद्भिश्चरन् M.
२. ० ०रूं० P. D.
३. ०स्तविति P.D.M.
४. Cf. BD. IV. 46cd, 47, 48.
५. इन्द्रवाक्यम्। केनापि Sy.
६. दुर्ज्ञेयया शोभया...यद्वा शुचिरित्युदकनाम। उदकरूपया शुभा, उदकेन Sy.
७. ०स्काः P. ०स्ता M. समानस्थाना एते Sy.
८. सर्वेषामेकरूपया महत्या युक्ताः Sy.
९. सम्यक् Sy.
१०. लोकम्...सिञ्चन्ति। मिहिसमानार्थो मिमिक्षतिधातुः। यद्वा मां युद्धादिषु प्रवर्तमानं सम्मिमिक्षुः Sy.
११. यजमानैः स्तुताः is missing in M.
१२. वर्षिकं P.
१३. अनिश्चेयया Sy.
१४. मत्या Sy.
१५. कुतो देशात् Sy.
१६. आगताः Sy.
१७. तदर्थमेते मरुतः Sy.
१८. बलं वृष्टिप्रदानजनितम् Sy.
१९. जगति कुर्वन्ति। यद्वा मम बलं वर्धयन्तीत्यर्थः। 'मरुतो हैनं नाजहुः' (AB.3.20.) इति श्रुतेः Sy.
२०. ०च्छतेति M. वसूयया...धनेच्छया। यद्वा वसवो वासयितारो वा Sy.
२१. महाभागस्य Sy.
२२. परिवृढानि हवींषि Sy.
२३. नित्यतरुणा महानुभावा मरुतः Sy.
२४. कश्च महान् Sy.
२५. स्वकीये यागे Sy.
२६. यागान्तरेभ्यो निवर्तयति Sy.

तेयति। श्येनानिव[1][2] शीघ्रम्। अन्तरिक्षेण। गच्छतः। केन[3]। महता। मनसा[4]। वयमेतान्[5]मरुतो रमयामः[6]।

**कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था ।**
**सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे ॥३॥**

कुतस्त्वम्। इत्थमिन्द्रेणोक्ता मरुत[7] ऊचुः—कुतो देवात्[8]। त्वम्। इन्द्र! महान्[9]। सन्। एक एव[10]। गच्छसि[11]। सतां पते[12]! किम्[13]। तव। इत्थमस्माभिर्विधेयम्[14]। त्वमस्माभिः सङ्गच्छमानः[15]। शोभनैर्वाक्यैः[16]। सम्पृच्छसे[17]। तत्र ब्रूहि[18]। हरिवः[19]! अस्माकम्[20]। तत्[21]। यत्[22]। तव[23]। अस्मासु[24] कार्यम्[25]।

---

१. बुनिर्ग्रहत्वे दृष्टान्तमाह...शंसनीयगमनानेतत्रामकान् पक्षिणः Sy.
२. ०वि P.
३. तत्प्रीतिसाधनेन Sy.
४. मननवता स्तोत्रेण Sy.
५. य...यमेनां M. ०मेनं P.
६. रमेमहि Sy.
७. इन्द्रं प्रति मरुद्वाक्यम् Mah. इन्द्रमरुत्संवादे मरुतामेतद्वाक्यम् U.
८. दे P. क्व Mah. कुतः कारणात् Sy. कस्माद्धेतोः U.
९. कीदृशस्त्वम्?...महितः पूज्यः।...यद्वा मह उत्सवोऽस्यास्तीति मही, एव माहिनः। स्वार्थेऽण् Mah. महनीयः पूजनीयः Sy. महनीयः सर्वस्य पूज्यः सन् U.
१०. असहायः Mah. असहायः सन् Sy., U.
११. यद्वा कुत्र यासि Sy. शत्रून्...यासि U.
१२. श्रुतिस्मृत्युक्ताचाररताः सन्तस्तेषां पते Mah. सतां पालक Sy. श्रुतिस्मृत्यनुष्ठानरतानां पालयितः U.
१३. गमने को हेतुः किं प्रयोजनम् Mah. किं त्वमेवमेव, किं न कोऽप्यनुचरोऽस्ति Sy. किं च ते तव...प्रयोजनमस्ति येनैकाकी यासि U.
१४. इत्थम्भूतम् U.
१५. सम्यग् गच्छन् सन् Mah. अस्माभिः सङ्गच्छमानः Sy.
१६. शोभनैर्वचनैः...शोभन्ते तानि शुभानानि Mah. शोभमानैर्वचनैः Sy. शोभनैर्वचोभिः U.
१७. कतमः पन्था इति लोकान्पृच्छस्येकाकित्वात् Mah. समीचीनं पृच्छसि Sy. सम्पृच्छसे कतमः पन्था इति U.
१८. ब्रूयाः U.
१९. हरयोऽश्वा अस्य सन्तीति हरिवान्...इन्द्र! Mah. हरिभ्यां तद्वन्निन्द्र! Sy. हरिवन् U.
२०. अस्मभ्यम् Sy.
२१. एकाकिगमनकारणम् Mah. तत्कारणम् U.
२२. यतो हेतोः Mah. यद् वक्तुमिष्टतममस्ति Sy. यद् व्यावृत्तिकारणम् U.
२३. त्वदीया वयमिति हेतोर्वक्तव्यमित्यर्थः Mah.
२४. वयम् Mah. अस्मासु वर्तते U.
२५. In the YV., the words महाँ इन्द्रो य ओजसा कदाचन स्तरीरसि क्वा चन प्रयुच्छसि are added to the stanza of the RV.

ब्रह्मा॑णि मे म॒तय॒ः शं सु॒तास॒ः शुष्म॑ इयर्ति॒ प्रभृ॑तो मे॒ अद्रि॑ः ।
आ शा॑सते॒ प्रति॑ हर्यन्त्यु॒क्थेमा हरी॑ वहत॒स्ता नो॒ अच्छ॑ ॥४॥

ब्रह्माणि । न किञ्चिन्ममान्येन[1] विधेयमस्तीत्यभिप्रायेणेन्द्र आह—स्तोत्रशस्त्राणि[2] । मम[3] । पूजकानि[4] । सुखकराः[5] । सोमाः[6] । मया[7] । विसृष्टः[8] । वज्रः[9] । शोषको भूत्वा[10] । गच्छति[11] । तथा मत्तः[12] सर्वेऽपेक्षितं[13] प्रार्थयन्ते[14] । कामयन्ते च माम्[15] । उक्थानि[16] । हरी च[17] । इमौ[18] । तान्युक्थानि[19] । प्रति[20] ।

---

१. ०न्येन न P. इन्द्रो मरुतः सहचरानाह Mah. अथैवं तैः पृष्टोऽनया चतुर्थ्येन्द्रः प्रत्याह Sy. इन्द्रमरुत्संवाद इन्द्रस्य द्वैतवाक्यम् U.

२. मन्त्रवाक्यात्मकानि स्तुतिवचांसि, हवींषि वा सोमाज्यादीनि Mah. सर्वाणि कर्माणि हवींषि वा Sy. स्तुतयो हवींषि वा U.

३. मम स्वभूतानि । चोदनावाक्येऽग्न्यादिदेवतान्तरसम्बन्धेन प्रतीयमानान्यपि सर्वदेवताप्राणात्मनो ममेन्द्रस्यैव तानीति भावः Mah. मम स्वभूतानि Sy.

४. मननयुक्ताः स्तुतयोऽपि Mah. स्तुतयश्च ... यद्वा मे मतयो बुद्धयस्तेष्वेव वर्तन्त इति शेषः Sy. मतीः U.

५. मम सुखोत्पादिका अतो यज्ञो गन्तव्यमिति भावः Mah. सुखकारिणः Sy. शं सुखम् U.

६. अभिषुताः सोमाः Sy., U.

७. मदीया मदर्था एवातो यज्ञं प्रति गन्तव्यमित्यर्थः Sy. मम U.

८. प्रकर्षेण धृतः Mah. प्रभृतः सन् Sy. प्रहृतः सोमाभिषवनिमित्तम् U.

९. अत्ति भक्षयति रिपूनित्यद्रिः Mah. शत्रूणां भक्षको वज्रः Sy. अद्रिर्ग्रावा U.

१०. शोषयति शत्रूनिति शुष्मः । अत एव गमने राक्षसाद्युपद्रवो नास्तीत्यर्थः Mah. मध्ये राक्षसादिबाधपरिहाराय ... बलनामैतत् । बलवान् Sy. बलमियर्ति U.

११. गच्छत्येव लक्ष्यं प्रति । न प्रतिहन्यत इत्यर्थः Mah. गच्छत्येव लक्ष्यं प्रति नच निवर्तते Sy. अर्पयति । उद्गमयति U.

१२. मामेव Sy. मदीयमागमनम् U.

१३. यजमानाः Mah., Sy., U.

१४. न केवलं हविरादीनां मदीयत्वेन गन्तव्यमपि तु ... प्रार्थयन्ते Mah. न केवलं हविरादीनां मदीयत्वमेवापि तु ... प्रार्थयन्ते Sy. इच्छन्ति U.

१५. Omitted by P. 'हर्यतिः प्रेप्साकर्मा' (N.7.17) इति यास्कः Mah. मामेव शंसन्तीत्यर्थः Sy. प्रतिकामयन्ते U.

१६. मत्ताम् P.

१७. यानि ... स्तोत्रशस्त्राणि Mah. शस्त्राणि Sy. इमानीन्द्रः शृणोत्विति U.

१८. नोऽस्माकम् ... अश्वौ Mah. नोऽस्मदीयौ ... इमावश्वौ Sy.

१९. तानि गन्तव्यानि हविरादीनि Sy. तानि स्थानानि U.

२०. ०स्थानि M.

२१. यज्ञाभिमुखम् Mah. अभिप्राप्तुम् Sy. नोऽस्मान् ... आभिमुख्येन U.

मा। वहतः।

अतो वयमन्तमेभिर्युजानाः स्वक्षत्रेभिस्तन्वः शुम्भमानाः।
महोभिरेताँ उप युज्महे न्विन्द्र स्वधामनु हि नो बभूथ ॥५॥

अतो वयम्। अस्मादेव कारणात्। वयम्। अन्तिकतमैः। संयुञ्जानाः। शत्रुभिः स्वब-लैश्च। आत्मशरीराणि। अलङ्कुर्वाणाः। बलैः। एतान्छत्रून्। संयोजयामः। क्षिप्रम्। यस्मात्। त्वमिन्द्र! अस्माकम्। बलम्। अनुभवसि बलवतामस्माकं साहाय्यं करोषीति।

क्व स्या वो मरुतः स्वधासीद्यन्मामेकं समधत्ताहिहत्ये।
अहं ह्युग्रस्तविषस्तुविष्मान्विश्वस्य शत्रोरनमं वधस्नैः ॥६॥

क्व स्या वः। अमृष्यमाण इन्द्र आह—

यदा यूयम्। माम्। एकमेव। अहिहनने। समधत्त। तदानीं युष्माकम्। मरुतः! तत्। वीर्यम्। क्व। आसीन्न इदानीं दृष्टम्। अहमेव। हि। उद्गूर्णः। महान्। बलवान्।

---

१. माम् Mah., Sy., U.

२. प्रापयतः। अत एवास्माभिर्गन्तव्यमिति भावः। यद्वार्थान्तरम्—ब्रह्माणि मतयः सुताः सोमाः, प्रहुतोऽद्रिः सोमाभिषवग्रावा, शुष्मः सुलक्ष्य एतत्सर्वं मम शं सुखमियर्ति। अर्पयति। उद्गमयति। मिजन्तर्भूतः। समानमन्यत् Mah. अभिमतदेशं प्रापयतः। अत एव शीघ्रं गच्छामि। युष्माभिरपि तत्प्राप्तुं गन्तव्यमित्यर्थः। अतोऽसहाय इति मन्तव्यमिति भावः Sy. प्रापयतः U.

३. एवमुक्ता मरुतस्तमेवं ब्रुवते Sy.

४. त्वं यस्मादेवं करोष्यतः कारणात् Sy.

५. वयमपि Sy. ६. युक्ताः सन्तः Sy.

७. अश्वैः Sy. ८. कीदृशैः ?... स्वा-यत्तबलैः Sy. ९. ०भि...भ्रा० M.

१०. दीपयन्तः। हर्षं प्राप्नुवाना इत्यर्थः Sy.

११. तेजोभिः।...यद्वा महोभिः स्वमहत्त्वेन युक्ता वयम् Sy.

१२. गन्तून् (गन्तून्) Sy.

१३. तव (त्वया) साकं हविरादि स्वीकुर्महे इत्यर्थः Sy. १४. इन्द्राद् P. हे इन्द्र त्वमपि Sy. १५. अस्मत्सम्बन्धि Sy.

१६. उदकं बलं वा Sy.

१७. अस्मत्सृष्टोदकजन्यं हविरनुभवसि खलु। हिशब्दः परस्परोपकार्योपकारिभावप्रसिद्धिद्योतनार्थः Sy.

१८. साहाय्यं M.

१९. या स्वधा Sy. २०. असहायम् Sy.

२१. वृष्टयर्थं मेघहननकर्मणि वृत्रवधे वा Sy.

२२. सहितमभूत्। समासीदिति सम्बन्धः Sy.

२३. बानीं M. सा स्वधा Sy.

२४. युष्माकं सम्बन्धि Sy.

२५. तदुदकं बलं वा Sy.

२६. नैवासीदित्यर्थः। अस्माकमुदकं त्वमनुभवसीति ब्रूथ Sy.

२७. असहायस्य कथमिति मतं सेत्स्यतीत्यत आह। अहम्...खलु Sy.

२८. उद्गूर्णबलः Sy.

२९. महत्त्वोपेतोऽस्मि Sy.

विश्वम्[1]। शत्रुम्[2]। प्रहारैः[3]। अनामयम्[4]।

**भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः ।**
**भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥७॥**

भूरि चकर्थ । अनया मरुत[5] इन्द्रेण साम्यमापादयन्ति—बहूनि[6] कर्माणि । कृतवानसि[7] । सहायभूतैः[8] । अस्माभिः[9] । साधारणैः[10] । वृषभ[11] ! वीर्यैः[12] । वयं च बहूनि[13] । कुर्मः[14] । बलवत्तम[15] ! इन्द्र ! कर्मणा[16] । यदि[17] । कामयामहे[18] । मरुतो वयम्[19][20] ।

---

१. यस्मादतिबलोऽहं तस्माद्विश्वस्य कृत्स्नस्य Sy. २. शत्रोर्मेघस्य । शत्रुरेवायम् । कर्मणि षष्ठी । सर्वं शत्रुसङ्घम् Sy.
३. वधस्यैःशोषणैः । वधकौशलैरित्यर्थः । यद्वा वध इति वज्रनाम । ...वज्रस्यास्तनैः क्षेपणप्रकारैः Sy.
४. अनामयम् । अन्तर्भावितण्यर्थोऽयम् । वशीकरोमीत्यर्थः Sy.
५. अथैवमुक्ता इन्द्रं पुनराहुः Sy. इन्द्रमरुत्संवाद इन्द्रं मरुत आहुः SKN. इन्द्रमरुत्संवादे मरुतामार्षम् Dur. ।
६. प्रभूतम् Sy. बहु वृत्रवधादिकर्म SKN. बहु कर्म तस्मिंस्तस्मिन्सङ्ग्रामे Dur.
७. कृतवानसि सत्यमेव Sy. त्वम्...कृतवान् SKN.
८. अस्माभिर्युक्तैः Sy. तत्तु...युज्यमानत्वाद् युज्याः सहाया उच्यन्ते, युज्यैः सहायैः SKN. तत्पुनरस्माभिरेव संयुक्तः । नैकाकीत्यर्थः Dur.
९. अस्माकम् Sy. युज्येभिरित्यनेन सम्बन्धाद् 'अस्मे' इत्यस्य 'अस्माभिः' इति तृतीयया विपरिणाम उपपद्यते Dur. अस्माभिरित्यर्थः N. 6.7. १०. समानैः Sy. समानैस्त्वया...केन गुणेन समानैः ? उच्यते SKN. ११. वृषभ P. ०षभ M. वर्षितः Sy., SKN.
१२. पुंसः कर्मभिः सामर्थ्यैरेव चकर्थ । नत्वेक एवेत्यर्थः Sy. बलनामैतत् । बलैः समानबलैरस्माभिरित्यर्थः SKN.
१३. वयम्...त्वत्कृतावपि प्रभूतानि कर्माणि Sy. विनापि त्वया केवला एव बहूनि कर्माणि SKN. बहूनि कर्माणि Dur.
१४. कृतवन्तः स्म Sy. कृतवन्तः SKN.
१५. शव इति बलनाम Sy. हे अतिशयेन बलवन्निन्द्र SKN. हे बलिष्ठ Dur.
१६. क्रतुना कर्मणा Sy. कर्मणा न वाङ्मात्रेण SKN. न केवलं वाङ्मात्रेणैतद् ब्रूमः । किं तर्हि कर्मणैवैतत्सम्पादयामः Dur.
१७. यद् वृष्ट्यादिकम् Sy. व्यत्ययेनैकवचनं बहुवचनस्य स्थाने, यानि SKN. यद्यत् Dur. १८. तानि त्वत्तोऽप्यधिकानीत्यर्थः Sy. कामितवन्तो यानि नोऽरोचन्तेत्यर्थः SKN.
१९. यतो वयं मरुतः । छान्दसमनुदात्तत्वम् । एतेन स्वमहत्त्वं स्थापितं भवति ।... अथवेन्द्रस्येदं वाक्यम् । हे मरुतो यद् यस्यैव तत्तस्यैव भवतु । तर्ह्यहं च यूयं च सहैव क्रत्वा कर्मणा यद्वशाम यद् वृष्टिकर्म कामयामहे तस्मादुदकं समानमेवेत्यर्थः । एवं मरुत इति निघातस्वरस्य व्याख्यानम् Sy.; SKN. II. 412.
२०. VM. ignores हि ।
N. 6.7. quotes the second pāda only.

वधीं वृत्रं मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान् ।
अहमेता मनवे विश्वश्चन्द्राः सुगा अपश्चकर वज्रबाहुः ॥८॥

वधीं वृत्रम् । समानतामप्यसहमान[1] इन्द्र आह—

मरुतः! मदीयेनैवेन्द्रियेण भवतां[2] प्रत्यक्षमहमेव। वृत्रम्। हतवानस्मि। स्वेन। क्रोधेन[3]। महान्[4]। भूतः[5]। तथा वृत्रं हत्वा, अहम्। एताः[6]। मनुष्येभ्यः[7]। सर्वस्य ह्लादयित्रीः[8]। अपः[9]। शोभनगमनाः[10]। कृतवानस्मि[11]। वज्रबाहुः[12]।

अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥९॥

अनुत्तम्। मरुतः सम्प्रतिपद्यन्ते—

मघवन्[13]! तव। अनुन्नं[14] शत्रुजातम्। न किञ्चिदस्ति[15]। आकार[16] आश्चर्ये। न। त्वत्सदृशः[17]। कश्चिदस्ति। देवतासु[18]। ज्ञायमानः[19]। नच। जायमानः[20]। जातो[21] वा।

---

१. समानकामव्यस० M. इदानीमिन्द्र आह Sy.
२. ०ता P.
३. कोपेन Sy.
४. बलवान् Sy.
५. सम्पन्नः Sy.
६. अतः P. D.
७. मनोरर्थाय Sy.
८. सर्वाह्लादकाः Sy.
९. अपो वृष्ट्युदकानि Sy.
१०. सुगमनाः। सर्वत्र नद्यादिषु गमनशीलाः Sy.
११. चकार Sy.
१२. हुम् M. यतोऽहं वज्रबाहुः। अनेन सहायनैरपेक्ष्यमुक्तं भवति Sy.
१३. एवमिन्द्रेणोक्ता मरुतः प्रत्याहुः...हे मघवन्धनवन्निन्द्र Mah. इदानीं ते मरुतो हर्षेण प्रत्याहुः...हे मघवन् Sy. धनवन् U.
१४. तमानु० P. D. M. न केनापि नुत्तं नाशितं महाभाग्यमिति शेषः Mah. त्वया...अप्रेरितम् Sy. 'णुद् प्रेरणे'...अप्रच्युतस्वभावं महाभाग्यम् U.
१५. नु निश्चये। नकिर्न कोऽपि त्वन्महाभाग्यनाश इति शेषः Mah. नैवास्ति। नु निश्चये। त्वया यदुक्तं तत्सत्यमित्यर्थः Sy. न वा कश्चित्प्रच्यावको महाभागस्य U.
१६. ०रं M. आ इति स्मरणे, स्मृतवन्तो वयम् Mah., Sy. आ आस्ते U.
१७. न केवलं तवैश्वर्यमात्रं किन्तु सर्वज्ञत्वमपीत्याह न त्वेति, वतुरत्र सादृश्ये Mah. त्वावांस्त्वत्सदृशः Sy. मतुप् सादृश्यार्थे। न त्वत्सदृशोऽस्ति U.
१८. देवो नास्ति। स्वार्थे तल् Mah. अयोपायवेदिता...देवो नास्ति Sy. देवः U.
१९. विद्वान्...विदेः शानच् । नित्वादाद्युदात्तः Mah. विद्वान्, व्यत्ययेन शानच् Sy. सर्वज्ञ इत्यर्थः U.
२०. तानि कर्माणि जायमानो वर्तमानः Mah. न जायमानो नशते U.
२१. जाये P. भूतपूर्वश्च देवमनुष्येषु कश्चित् Mah. जातो वा कश्चिद्देवो मर्त्यो वा Sy. न च जातस्तानि करिष्यति U.

व्याप्नोति[1]। यानि[2]। कार्याणि[3]। कुरुषे[4] त्वम्। प्रवृद्धः[5][6]।

एकस्य चिन्मे विभ्व१स्त्वोजो या नु दधृष्वान्कृणवै मनीषा ।
अहं ह्यु१ग्रो मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् ॥१०॥

एकस्य चित्। एकस्य चित्=असहायस्य, एव[7]। मम। अप्रतिहतम्[8]। अस्तु। वीर्यम्[9]। यानि कार्याणि[10]। क्षिप्रम्। धृष्टोऽहम्[11]। प्रज्ञया[12]। कर्तुमिच्छामि[13]। तेषु, अहम्। उद्गूर्णः[14]। मरुतः! सर्वस्य वेदिता[15]। यानि वसूनि। प्रतिगच्छामि[16]। इन्द्रोऽहम्[17]। एव। तेषाम्[18]। ईश्वरो[19] भवामि[20]।

अमन्दन्मा मरुतः स्तोमो अत्र यन्मे नरः श्रुत्यं ब्रह्म चक्र ।
इन्द्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे तनूभिः ॥११॥

अमन्दन्मा। मरुतः[21]! भवदीयोऽयं स्तोमः[22]। माम्[23]। अमन्दत्[24]। अस्मिन्संक्रमे[25]। यत्।

---

१. न नशते न व्याप्नोति। न करोतीत्यर्थः। नशतिर्व्याप्तिकर्मा Mah. तानि ... न व्याप्नोति। ...नान्यस्त्वच्चेष्टितानुकार्येवेत्यर्थः Sy. नशिर्व्याप्त्यर्थश्छन्दसि। व्याप्नोति U.
२. कर्माणि वृत्रवधादीनि Mah. वृत्रवधादीनि Sy.
३. न च करिष्यति। उत्पत्स्यमान इति शेषः। ....कालत्रये त्वादृशो नास्तीत्यर्थः। अतो यशेशस्त्वम् Mah. कर्तव्यानि Sy.
४. करोषि व्यत्ययेन लोट् Mah. करोषीति लकारव्यत्ययः U.
५. As the word प्रवृद्ध, in the vedic stanza, is in the voc., the reading प्रवृद्ध is suggested for प्रवृद्धः। प्रकर्षेण वृद्ध, पुराणपुरुष Mah. अतिबल! हे प्रवृद्ध U.
६. VM. ignores नु। न
This stanza=VS. 33.79.
७. इदानीमिन्द्र आह ...एकस्यैव Sy.
८. सर्वत्र गमनशीलम् Sy.
९. बलमस्तु। यद्वा बलमेकस्यैवास्तु Sy.
१०. कर्माणि Sy.
११. धर्षितवानहम् Sy.
१२. मनीषया मनस ईषया Sy.
१३. कर्तुं शक्नुयानि ? (शक्नवानि) Sy.
१४. अहं खलु, उग्र उद्गूर्णबलः Sy.
१५. वेदनावान् Sy.
१६. अवगच्छामि Sy.
१७. अहमेव ...ईश्वर एव सन् Sy.
१८. ०हमेते० M.
१९. अथवा विदानोऽहं यानि च्यवं यान्युद्दिश्य गच्छेयमेषामीशे। यतोऽहमिन्द्रोऽतः शक्त इत्यर्थः Sy.
२०. VM. ignores हि
२१. इदमपीन्द्रवाक्यम् Sy.
२२. ०म P. स्तोत्रम् Sy.
२३. Omitted by P.D.
२४. मन्दद् P. मादयति मोदयते वा Sy.
२५. अस्मिन्नुदकोत्पादनविषये Sy.

मे[1]। स्तोत्रम्[2]। श्रोतव्यम्[3]। नेतारः! यूयं कृतवन्तः[4]। इन्द्राय[5]। वृण्वे[6]। शोभनयज्ञाय[7]। मह्यम्[8]। सख्ये[9]। सखायः[10]। शरीरभूताय[11]। शरीरैः[12]।

एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः।
संचक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे छदयाथा च नूनम् ॥१२॥

एवेदेते। एवम्। एव। एते[13]। माम्। प्रति। दीव्यन्तः[14]। अनिन्दनीयम्[15]। यशः[16]। अन्नानि[17]। च[18]। धारयन्तः[19]। सम्यङ् मां दृष्ट्वा[20]। मरुतः! दीप्तवर्णाः[21]। पूर्वमपि मां यज्ञे प्रविष्टम्। छादितवन्तः[22]। सम्प्रति। च। आच्छादयत[23] मां परिवार्य तिष्ठत[24]।

को न्वत्र मरुतो मामहे वः प्र यातन सखीँरच्छा सखायः।
मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम् ॥१३॥

को न्वत्र। अगस्त्यवचनम्[25]—

---

१. मम Sy.
२. परिवृढमेधधारणादिरूपम् ... स्वप्रभूतं स्तोत्रं वा। 'अनुत्तमा ते' (RV. I. 165.9ᵃ.) इत्यादिकम् Sy.
३. ०श्रो P. सर्वैः श्रोतव्यम् Sy.
४. कृतवन्तः Sy.
५. परमैश्वर्यगुणकाय Sy.
६. अभिमतवर्धिने Sy.
७. शोभनयागाय Sy.
८. मम Sy.
९. युष्माभिः समानख्यानाय Sy.
१०. ०य P.D.
११. ०रं भू० M. मदीयशरीरपोषाय भवतु। यद्वा तनूभिरस्मच्छरीरभूतैर्युष्माभिः कृतं मह्यमेवास्त्वित्यर्थः Sy.
१२. अनेकशरीरैरुपेताय Sy.
१३. ०त P. यूयम् Sy.
१४. मद्विषये सम्प्रीयमाणा मां रुचयन्तो वा Sy.
१५. अनन्तिकत्वम् Sy.
१६. कीर्तिम् Sy.
१७. अनानि P.
१८. आ इति चार्थे Sy.
१९. यद्वा, अनेद्य इति प्रशस्यनाम। प्रशस्यं यशोऽस्मत्तो दधाना अस्माभिर्वा धार्यमाणाः Sy.
२०. सम्यक् प्रकाश्य Sy.
२१. चन्द्रमिति हिरण्यनाम। सुवर्णवर्णा यूयम् Sy.
२२. नूनं निश्चयम्...यशोभिराच्छादितवन्तः Sy.
२३. आच्छादयथ च। मां प्रति सर्वदा रोचमाना मय्येव कीर्तिमन्नं च दधाना मत्कृतं कर्मभिममिव स्तुतेत्यर्थः Sy.
२४. ०तः M.
२५. अगस्त्यस्येन्द्रमरुतां संवादे सूक्ते कयाशुभीयेऽगस्त्यस्यार्षम् SKN. इन्द्रागस्त्यमरुतां संवादः। तत्रैव (द) मगस्त्यस्यार्षम् Dur.

क:[1] । नु[2] । अस्मिंल्लोके[3] । मरुत: ! व:[4] । पूजयितुं[5] समर्थ: । प्रतिगच्छत[6] । सखीन्[7] । प्रति[8] । सखाय:[9] । धनानि[10] । प्रतिगमयन्त:[11] । चित्रा यूयम्[12] । एषाम् । मदीयानाम्[13] । स्तोत्राणाम्[14] । ज्ञातार:[15] । भवत ।

**आ यद्दुवस्याद्दुवसे न कारुरस्माञ्चक्रे मान्यस्य मेधा ।**
**ओ षु वर्त्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत् ॥१४॥**

आ यद्दुवस्यात्[16] । योऽयमगस्त्य:[17] । दुव[18] आभिमुख्येन कर्तुमिच्छति । स्वामिपूजनाय[19] ।

---

१. मर्त्य: Sy., SKN. अन्य: Dur.
२. खलु Sy. नु इति पादपूरण: SKN.
३. अत्र लोके Sy. काल आगते SKN. एतस्मिञ्जगति Dur.
४. युष्मान् Sy., SKN.
५. पूजयति Sy. 'मह पूजायाम्' अस्यार्थं पूजयति … न कश्चिदपीत्यभिप्राय: SKN. पुन: पुन: पूजयति यथार्हम् । न कश्चिदित्यभिप्राय: Dur.
६. ०थ: M. गच्छत Sy. एतज्ज्ञात्वा … प्रेत्येव उपेत्येतस्य स्थान उपयातास्मानेव SKN. आयात Dur.
७. हविष्प्रदानेन सखिभूतान्यजमानान् Sy. सखीन् SKN., Dur.
८. आभिमुख्येन प्राप्तुम् Sy. आप्तुम् SKN. आभिमुख्येन Dur.
९. सर्वस्य सखिवत्प्रियकारिण: सन्त: Sy. मम स्तुत्येत्यर्थ: SKN. यत एवमतो मरुतो ब्रवीमि । हे सखाय: ! Dur.
१०. मननीयानि धनानि Sy. उपगम्य च … मन्यतेरर्चतिकर्मण एतद्रूपम् । मननानि स्तोत्राणि SKN. मननानि स्वानि चेतांसि Dur.
११. सम्पूर्णं प्रापयन्त: Sy. अपि धात्वर्थानुवादी, धातयतिश्च गमयतेरर्थे, गमयन्त आत्मानं प्रतिपादयन्त: स्तूयमाना अस्माभिरिति शेष: SKN. अस्मान्प्रति निगमयन्त: Dur.
१२. चायनीया यूयम् Sy. चायनीया: SKN. चित्राणि Dur.
१३. मम स्वभूतानाम् SKN.
१४. अवितथानाम् Sy. यज्ञानाम् SKN. एषां यज्ञानाम् Dur.
१५. ०रो M. के ? उच्यते । नवेदा व्यत्ययेनाथैकवचनं, नवेदस: । नवेदा इत्येतच्च मेधाविनामान्यत्र । इह त्वेषां भूतेत्यस्य के भवाम ? इत्येवमाकाङ्क्षत्वात्प्रत्यक्षकृतत्वाच्च मन्त्रस्य मेधाविनाम्न: सतोऽस्यामन्त्रितत्वप्रसङ्गादामन्त्रितस्य च सतो निघातप्रसङ्गान्न मेधाविनामेदम् । किं तर्हि ? तद् न, न वेत्ति वेत्त्येवेत्येतस्मिन्नर्थे वर्तते । कुत एतत् ? निपातनात् । वैयाकरणा हि … नवेदाशब्दं न न वेत्ति, वेत्त्येवेत्येतस्मिन्नर्थे निपातयन्तीति । द्वौ प्रतिषेधौ प्रकृतं गमयत: । न न वेत्ति कारणम् । वेदना चानुभव: । एषां भवतामनुभवितार इत्यर्थ: SKN. प्रापयितार: … मेधाविन इत्यर्थ: Dur. N. 4.7.; SKN. II. 215.
१६. युष्मत्परिचरणार्हात् स्तोत्रात्, तेन स्तोत्रेण Sy.
१७. ययम० M. येयम० P. D.
१८. दुप P.
१९. परिचरणाय पर्याप्ता Sy.

दासादिः कारुः[1]। इव। यदा वाऽस्य मानभवस्य[2] कुम्भयोनेरगस्त्यस्य। मेधा[3]। अस्मान्[4]। आचक्र[5] इति बुद्धिर्भवति तदानीमेव। सुष्ठु। आवर्तत[6]। हे मरुतः! मेधाविनमेनम्[7]। प्रति[8]। इमानि। स्तोत्राणि[9]। युष्माकम्[10]। स्तोता[11]। उच्चारयति[12]।

**एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः।**
**एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥१५॥**

एष वः। एतत्[13]। वः[14]। स्तोत्रम्। इयं च। गीरित्युक्थमाह[15]। मन्दारो मदनात्, मन्दनकुशलः, मान्दार्यस्य[16]। मानभवस्य[17]। स्तोतुः[18]। ते यूयमागच्छत[19]। शरीराय[20]। अन्नेन[21] सह। कान्तिम्।

---

१. कर्त्री स्तुतिकुशला Sy.

२. माननीयस्य विदुषः Sy.

३. बुद्धिः Sy.

४. न इति सम्प्रत्यर्थे। इदानीन्तनान् Sy.

५. आभिमुख्येन करोति प्राप्नोतीत्यर्थः। यद्वा षष्ठीबहुवचन इदं रूपम्। दुवस्यानां परिचरणार्हाणां दुवसे परिचरणायेत्यर्थः Sy.

६. आो इति निपातद्वयसमुदायरूप एको निपातः। आङित्याभिमुख्येन। उकारोऽवधारणे। आवर्तध्वमेव Sy.

७. यजमानं मामगस्त्यम् Sy.

८. आभिमुख्येन प्राप्तुम् Sy.

९. परिवृढानि कर्माण्युद्दिश्य Sy.

१०. युष्मान् Sy.

११. अर्चति। यस्मादेवं तस्मादावर्तध्वमित्यर्थः Sy.

१२. VM. ignores उ

१३. एषः Mah., U. इदानीं क्रियमाणप्रकारम् Sy.

१४. वं M. युष्मभ्यम्। युष्मदर्थं वर्तत इति शेषः Mah. युष्मदर्थं युष्मत्प्रीणनाय भवत्वित्यर्थः Sy. युष्माकम् U.

१५. सत्या च प्रिया च Mah. स्तुतिरूपा वाग्पि वो युष्मदर्थाय Sy. सत्या च U.

१६. मन्दार्यमानस्य D. किंभूतस्य कारोः ?... मां ममेति स्वस्वामिसम्बन्धं दारयतीति मान्दार्यस्तस्य वीतरागस्येत्यर्थः। यद्वा मां दारयतीत्येवं यः शत्रूणां प्रत्ययमादधाति स मान्दार्यः। यद्वा मन्दारः कल्पवृक्षस्तत्तुल्यो मान्दार्यस्तस्य। अथ कामपूरस्येत्यर्थः Mah. यस्मादेवं तस्मान्मान्दार्यस्य स्तुतिविशेषैर्मन्दयितुः स्तुतिभिर्मदस्य प्रेरयितुर्वा Sy. मम मान्दार्यस्यर्थेर्ममेति स्वस्वामिसम्बन्धं दृणातीति मान्दार्यः। यद्वा मां दारयति मां दृतीत्येवं यः सपत्नानां प्रत्ययमादधाति स मान्दार्यस्तस्य मम च U.

१७. मानार्हस्य Mah. वरप्रदानादिना माननीयस्य Sy. मानार्हस्य U.

१८. कर्तुर्यजमानस्य Mah. स्तोतुः Sy. कर्तुस्तं स्तोमं तां च गिरमुपश्रुत्य U.

१९. आगमयत M. यासीरत्रिति वचनव्यत्ययः U.

२०. सर्वदा शरीरस्थित्यर्थमित्यर्थः। अस्मच्छरीरं दृढीकर्तुमिति भावः Mah. शरीराय, तत्पोषायेत्यर्थः Sy. सशरीरस्थित्यर्थम् U.

२१. अन्नेन निमित्तेन Mah. इच्छया Sy. अन्नेन निमित्तभूतेनाहूयमानाः U.

आयुर्वा[1]। लभेमहि[2] वयम्। अन्नम्। बलं च। क्षिप्रदानमिति[3]।

अष्टकस्य द्वितीयस्य तृतीयं व्याकरोदिति।

अध्यायं वेङ्कटार्यस्य तनयो माधवाह्वयः[4]॥

## ॥ अथ द्वितीयेऽष्टके चतुर्थोऽध्यायः[5] ॥

अध्यायं "तनु वोचाम"[6] व्याचिख्यासति माधवः।

प्रदर्शयँल्लिङो वृत्तिं बहुष्वर्थेषु लिङ्[6] स्मृतः ॥१॥

कर्तव्यताप्रतीतिस्तु सर्वेष्वर्थेषु विद्यते।

विध्यादयः काकुभेदात् षड् भवन्तीति पण्डिताः ॥२॥

"न दुरुक्ताय स्पृहयेत्"[7] "पृणीयात्"[8] इति चापरम्।

विधावुदाहरन्त्येतौ[9] प्रेषणं विधिरुच्यते ॥३॥

निमन्त्रणामन्त्रणयोर्भेदमाह पतञ्जलिः।

एवं तर्हि नियोगतः कर्तव्यं तन्निमन्त्रणम्[10] ॥४॥

---

१. किमर्थम्। वयां वयसाम्। आमि टिलोप आर्षः। बाल्ययौवनस्थाविराणां वयसां सम्बन्धिन्यै Mah. वयमपि Sy. वयो वृद्धीकर्तुम् U.

२. जीवितदातृ बलमन्नं च वयं प्राप्नुयामेति प्रार्थना Mah. एतत्सर्वं विद्याम। युष्मा-स्वागतेषु यज्ञसम्पूर्त्यर्थेष्टचादिद्वारा लभे-महि Sy. विद्यां लभेमहि U.

३. जीवयतीति जीरदानुस्तम् Mah. जय-शीलदानम् Sy.
जीवितदातृकर्म च U.
This stanza=VS. 34. 48.

४. Ms. D. puts the figure ॥१६५॥ here to indicate the end of one hundred and sixtyfifth hymn. No such number is given in P. and M.

५. Omitted by P. D.

६. D. repeats लिङ् लिङ्।

७. ०यै P. D. RV. I. 41. 9ᶜ.

८. पृणी० P. D. M. RV. X. 117.5ᵃ.

९. विदावु M.

१०. तत् is omitted by P. D.

आमन्त्रणं[1] कामचारस्तत्र नाकुर्वतो[2] भयम्[3] ।
अर्थीष्टं नाम सत्कारपूर्वां[4] व्यापारणां[5] विदुः ॥५॥

दृश्यन्ते बह्वोऽस्माभिः[6] प्रार्थनाविषया लिङः ।
"तयोरिद्वंसा वयम्"[7] "संयुंज्यात्[8] सनिभ्य[9] आ"[10] ॥६॥

"विद्युमें[11] अस्य देवा इन्द्रो' विद्यात् सह ऋषिभिः"[12] ।
"अवैनं राजा वरुणो"[13] "अन्तर्निहिताः केतवः स्युः"[14] ॥७॥

विधीयते चाशिषि लिङ्[15]काशीर्धर्मः[16] प्रयोक्तरि ।
"मयोभुवो सुप्रणीती"[17] "भूयाम वाजदाव्नाम्"[18] ॥८॥

हेतुहेतुमतोर्लिङ् स्याद्[19] "यदिन्द्राहं यथे"[20]ति सः ।
अभीष्टस्योदाहरणम् "उतो[21] न उत्पुंपूर्याः"[22] ॥९॥

"अद्या मुरीय"[23] लिङ्[24]द्वयं विध्यादिषु न कश्चन ।
"अप्सू[25] नु पत्नीः"[26] इति च[27] दृश्यतेऽन्या विधा[28] तथा ॥१०॥

---

१. ०णे R. omitted by P.
२. ना is missing in M.
३. भवम् M. R.
४. पूर्व्यां M.
५. ०णं M.
६. ०स्माकं M.
७. RV. I.17.6a.
८. Omitted by P.
९. नसिभ्य M.
१०. Omitted by M. RV. VIII. 62.11b.
११. मावियुन्मे M. वियुन्मे D.
१२. ०हृषि० M. RV. I.23.24c-d.
१३. RV. I.24.13c.
१४. RV. I.24.7d. I have separated the two quotations. This separation gives one syllable in the 4th pāda too many.
१५. ०ङ्का० D. M. ०ङ् आ० P.
१६. ०मः M. ०र्धर्मप्रयोक्तरि is suggested for ०र्धर्मः प्रयोक्तरि
१७. ०ति P. D. RV. V.42.18b.
१८. ०म्नाम् M. RV. I.17.4c.
१९. ०ङ स्यत् P.
२०. RV. VIII.14.1a.
२१. ०णं मतो M.
२२. RV. V.6.9c. उत्पू० P.
२३. RV. VII.104.15a.
२४. ०ङ्० M. ०ङ् द्वयं P. D.
२५. माव्यू M.
२६. वतीः P. RV. I.179.1d.
२७. Omitted by P. D.
२८. ०न्याविधः R.

एवम्प्रकारा बहवो लिङ्गोऽस्माभिः प्रदर्शिताः[1]।
सन्ति चान्येऽपि बहवः पश्येत्तांश्चापि पण्डितः[2] ॥ ११ ॥

I.166.

तन्नु वोचाम रभसाय जन्मने पूर्वं महित्वं वृषभस्य केतवे ।
ऐधेव यामन्मरुतस्तुविष्वणो युधेव शक्रास्तविषाणि कर्तन ॥१॥

तन्नु वोचाम। मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा वासतीवरे कुम्भे[3] रेतोऽपतत् ततोऽगस्त्यवसिष्ठावजायेताम्[4]। अथागस्त्यार्षम्[5]। तत्[6]। क्षिप्रम्। वोचाम[7]। वेगवते[8]। मनुष्येषु जाताय[9]। प्रत्नम्[10]। महत्त्वम्[11]। मेघस्य[12]। लिङ्गाय[13] मारुताय गणाय[14]। वर्धनेनेव[15]। हे मरुतः[16]! गमने[17]। बहुस्वनाः[18]! युद्धेनेव[19]। शक्ता योद्धारः[20]। बलानि[21]। कुरुथ[22]।

नित्यं न सूनुं मधु बिभ्रत उप क्रीळन्ति क्रीळा विदथेषु घृष्वयः।
नक्षन्ति रुद्रा अवसा नमस्विनं न मर्धन्ति स्वतवसो हविष्कृतम् ॥२॥

नित्यं न सूनुम्। औरसम्[23]। इव। पुत्रम्[24]। उदकम्[25]। धारयन्तः[26]। उपक्रीडन्ति[27]।

---

१. ०शि० P.
२. ०ता: D.
३. ०रीकु० M.
४. ०ष्ठा म(व)जा० M. ०ता D.
५. अथ is omitted by P. D.
६. तादृशं प्रसिद्धम् Sy.
७. ब्रूमः Sy.
८. वेगते P. रामस्ययुक्ताय Sy.
९. वेषां प्रादुर्भावाय वेषां सन्निधानायेत्यर्थः Sy.
१०. पूर्वं पूरकं पूर्वतनं वा Sy.
११. माहात्म्यम् Sy.
१२. फलस्य वर्षितुर्यज्ञस्य Sy.
१३. प्रज्ञानाय। वायुप्रेरणेन मेघागमनं प्रसिद्धम् Sy.
१४. म० D.
१५. Omitted by P. D.
१६. ऐधानि, एधःसम्बन्धीनि तेजांसीव Sy.
१७. हे गमने मरुतः P. यामनि यागगमने प्रस्तुते सति Sy.
१८. गमनसंरम्भेण प्रभूतध्वनियुक्ताः Sy.
१९. तत्र दृष्टान्तः।...युद्धेन तत्तद्युद्धनिमित्तं यथा तविषाणि कुरुथ तद्वत् Sy.
२०. सर्वमपि कर्तुं शक्ता यूयम् Sy.
२१. सामर्थ्यानि Sy.
२२. ०थः D. कुरुत, तत्स्तुम इत्यर्थः Sy.
२३. प्रियम् Sy.
२४. पुत्रम् Sy.
२५. ०त्रं मदकं M. मधुरं हविः Sy.
२६. ध० D. ०न्तं P. धारयन्तो मरुतः Sy.
२७. उपेत्य क्रीडन्ति विहरन्ति Sy.

क्रीडनशीलाः। यज्ञेषु[१]। वृक्षादीनां घर्षणशीलाः[२]। व्याप्नुवन्ति[३]। रुद्रपुत्राः[४]। रक्षणेन[५]। हविष्मन्तम्[६]। न। हिंसन्ति[७]। स्वभूतबलाः[८]। यजमानम्[९]।

**यस्मा ऊमासो अमृता अरासत रायस्पोषं च हविषा ददाशुषे ।**
**उक्षन्त्यस्मै मरुतो हिताइव पुरू रजांसि पयसा मयोभुवः ॥३॥**

यस्मा ऊमासः। यस्मै[१०]। रक्षितारः[११]। अमृताः[१२]। धनस्य। पोषम्[१३]। प्रायच्छन्[१४]। हविषा[१५]। दानं कुर्वते[१६]। तस्मा एतच्च कुर्वन्तीति चकारस्यान्वयः[१७]। सिञ्चन्ति[१८]। अस्मै[१९]। मरुतः। मित्राणीव[२०]। बहूनि[२१]। उदकानि[२२]। उदकेन[२३]। सुखस्य भावयितारः।

**आ ये रजांसि तविषीभिरव्यत प्र व एवासः स्वयतासो अध्रजन् ।**
**भयन्ते विश्वा भुवनानि हर्म्या चित्रो वो यामः प्रयतास्वृष्टिषु ॥४॥**

आ ये रजांसि। ये[२४]। लोकान्। स्वबलैः[२५]। समगमयन्[२६]। हे मरुतः! वः[२७]। ते गमनशीलाः[२८] प्रत्यक्षा मरुतः[२९]। युष्माभिर्नियताः[३०]। अन्तरिक्षे प्राध्रजन्[३१]=गन्तुं प्रवृत्ता आसन्[३२]। ततो[३३][३४] बिभ्यति[३५]।

१. यागेषु Sy.
२. रक्षःप्रभृतीनाम् Sy.
३. घर्षकाः सन्तः Sy.
४. रुद्रपुत्रा मरुतोऽपि रुद्रा उच्यन्ते जन्यजनकयोरभेदात्। मरुतां रुद्रपुत्रत्वं पुराणेषु तपसा तुष्टौ पार्वतीपरमेश्वरौ मरुतः पुत्रत्वेन स्वीचक्रतुरिति प्रसिद्धम् Sy.
५. तर्पणेन वा निमित्तभूतेन Sy.
६. नमस्कारोपलक्षितस्तोत्रोपेतम् Sy.
७. न सङ्ग्रामयन्ति न क्लेशयन्तीत्यर्थः Sy.
८. स्वायत्तबला मरुतः Sy.
९. ०नः M. हविषः कर्तारं प्रदातारं यजमानम् Sy.
१०. यजमानाय Sy. ११. अवितारः Sy.
१२. अमरणधर्माणः Sy.
१३. पुष्टिम्। चशब्दात्पश्वादिपुष्टिम् Sy.
१४. रासतिर्दानार्थः Sy.
१५. हविषा प्रीताः Sy.
१६. सोमादिहविर्वर्तते Sy.
१७. ०स्याद्वयः M.
१८. सस्याद्युत्पत्त्यर्थम् ... सिञ्चन्ति Sy.
१९. यजमानाय Sy.
२०. हिताचरणाः सखाय इव सन्तः Sy.
२१. प्रभूतं यथा भवति तथा Sy.
२२. लोकान् Sy.
२३. उदकेन P.
२४. हे मरुतो युष्मत्सम्बन्धिनो य एवास एवा अश्वविशेषाः Sy.
२५. ०लैः D. स्वकीयैर्बलैर्वृष्टिप्रदानादिरूपैः Sy. २६. सर्वत आवृण्वन्ति Sy.
२७. यन्ते P. ते वो युष्माकम् Sy.
२८. एवासोऽश्वाः Sy.
२९. ०क्षपा० M.
३०. स्वयमेव सारथिना विनैव युक्ताः Sy.
३१. प्राध्र० P. प्राध्रजन् M.
३२. प्रकर्षेण गच्छन्ति व्याप्नुवन्ति Sy.
३३. आसते M. ३४. आ M.
३५. बिभ्यति पतनात् Sy.

सर्वाणि । भूतानि । गृहाणि च । चित्ररूपम् । भवताम् । आगमनम् । उद्यतेषु । भवतामायुधेषु ।

यत्त्वेषयामा नदयन्त पर्वतान्दिवो वा पृष्ठं नर्या अचुच्यवुः ।
विश्वो वो अज्मन्भयते वनस्पती रथीयन्तीव प्र जिहीत ओषधिः ॥५॥

यत् त्वेषयामाः । यदा । दीप्तगमनाः । शब्दयन्ति । शिलोच्चयान्मेघान् वा यदा । वा । दिवः । पृष्ठभूतं मेघम् । मनुष्यहिताः । प्राच्यावयन् । तदा । युष्माकम् । गमने । सर्वः । वनस्पतिः । बिभेति । गच्छन्तं रथं गच्छन्तीव । प्रगच्छति । ओषधिर्यथा गच्छता रथेन विचिकिला भवन्ति ।

यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्तन ।
यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा ॥६॥

यूयं न उग्राः । यूयम् । अस्माकम् । उद्गूर्णाः ! सुमत्या । अक्षतगणाः । अस्मदीयां

---

१. भूतजातानि Sy.
२. च is omitted by P. सर्वाणि हर्म्याणि च Sy.
३. चायनीय आश्चर्यभूत इत्यर्थः Sy.
४. युष्मदागमनात् Sy.
५. प्रकर्षेणोद्यतासु सतीषु । अथवा भीतो दृष्टान्तः । ऋष्टिषु प्रयतासु सतीषु । लुप्तोपमेयम् । आयुधेषूद्यतेषु यथा जना बिभ्यति तद्वद्युष्मदागमनाद् बिभ्यतीत्यर्थः Sy.
६. युद्धस्यासु हेतिषु Sy.
७. य P. D. M.
८. प्रदीप्तगमनाः Sy.
९. नादयन्ति Sy.
१०. पर्वतो गिरेर्गह्वराणि Sy.
११. पूरकान्मेघान्वा Sy.
१२. अथवा Sy.
१३. विद्योतनात्मकस्यान्तरिक्षस्य Sy.
१४. पृष्ठभू० P. उपरिभागम् Sy.
१५. ०हितां M. नरेभ्यो हिताः Sy.
१६. ०यं M. गच्छन्ति तदा Sy.
१७. युष्मत्सम्बन्धिनि Sy.
१८. गमने निमित्तभूते सति Sy.
१९. वनस्य पालयिता वृक्षसमूहः Sy.
२०. ०न्ति व P. ०ति इव M.
२१. ०न्ति M. प्रकर्षेण गच्छति । स्वस्थानादितस्ततश्चलतीत्यर्थः Sy.
२२. ०धीर्य० P. प्रियङ्गुव्रीह्यादिः Sy.
२३. रथे P. D.
२४. तत्र दृष्टान्तः । . . . रथमात्मन इच्छन्ती स्त्री । रथारूढेत्यर्थः । तादृशी स्त्रीव । सा यथा चलति तद्वत् Sy. भवति is suggested for भवन्ति
२५. उद्गूर्णबला मरुतो यूयम् Sy. अप्रसह्याः क्रूरा वा शत्रुषु मरुतः SKN. II. 495.
२६. शोभनचेतसा Sy. शोभनेन चित्तेनानुग्रहपरेण SKN. शोभनेन प्रज्ञानेन Dur.
२७. अहिंसितसङ्घाः सन्तः Sy. ग्रामाः सङ्घाता उच्यन्ते, वणिग्ग्रामादिदर्शनाद्धे अहिंसितसङ्घाताः SKN. अनुपहिंसितसङ्घाताः Dur.

भोगनिमग्यां सुमतिम्[1]। पूरयत[2]। यदा[3]। युष्माकम्[4]। आयुधम्[5]। ककचाकारम्[6]। मेघान्[7] विलिखति[8]। यथा[9] हिंसासाधनभूता। स्वधितिः[10]। पशून्[11]। हिनस्त्येव[12] रुदन्तीति[13]।

**प्र स्कुम्भदे॑ष्णा अनवभ्ररा॑धसोऽलातृणासो॑ विदथे॑षु सुष्टु॑ताः।**
**अर्च॑न्त्यर्कं॑ मंदिरस्य॑ पीतये॑ विदुर्वी॒रस्य॑ प्रथमानि॒ पौंस्या॑ ॥७॥**

प्र स्कम्भदेष्णाः[14]। प्रार्चयन्ति[15]। अदृधते[16] धारकदानाः[17]। अविभ्रंशितयजमानधनाः[18]। अल-[19]

---

१. शोभनबुद्धिम् Sy. शोभनां बुद्धिम्। मन्यतेर्वाऽर्चतिकर्मणो मतिः स्तुतिस्ताम् SKN. शोभनां मतिम् Dur.

२. पालयत पूरयत वा SKN. प्रीणयत वा Dur.

३. यत्र यस्मिन्काले Sy. केन? उच्यते। यत्र, निमित्तार्थ एषा सप्तमी, प्रयोजनस्य च निमित्तत्वेन विवक्षा। यस्मिन्निमित्ते यदर्थमित्यर्थः SKN. केन पुनः पूरयत कुतो वा पूरयतेति, यत्र यस्मिन्मेघे Dur.

४. युष्मत्सम्बन्धिनी Sy. युष्माकं स्वभूता SKN.

५. हेतिः Sy. वज्रनामैवम्। वज्रनाम्नामायुधमात्रवचनत्वादिह शतघ्न्यां वर्तते, शतघ्नी SKN. आयुधं क्षिप्तम् ... एवमत्रार्थाविरोधादायुधं क्रिविर्दतीशब्देनोच्यत इत्युपपद्यते Dur.

६. ककचारं P. D. विक्षेपणशीलदन्ती Sy. विकर्तनदन्ती SKN. विकर्तनसमर्थैर्दन्तैर्या रदति Dur. क्रिविर्दती विकर्तनदन्ती N.6.30.

७. मेघान् is suggested for मेषान्। SNP मेघसंस्त्यायम् Sy. कम्? साम- र्थ्यान्मेघम् SNK. तमेव मेघम् Dur.

८. लिखति SKN. विलिखति विदारयति वा यर्थार्थम् Dur. ९. तथा M.

१०. हिंसायां दृष्टान्तः। सुधिता सुहिता सुष्ठु प्रेरिता, बर्हणा हतिस्तत्साधना हेतिर्वा यथा रिणाति तद्वत् Sy. कथमिव? ... सुधितिरिव क्षुधिता क्षुरिका वाऽन्यायसेनेत्यर्थः। बर्हणा महता वधेनेति शेषः। केन निमित्तेन रदति। तेनोदकेन SKN. स्वधित्या बर्हणा परिवृद्धया हिंसया Dur.

११. कथं पुनर्या रदति? यथा पशोरङ्गानि स्वधित्या बर्हणा पृथक् करोति Dur.

१२. रेषति हिनस्ति। वायौ वाति सति पशवः शीर्यन्त इति प्रसिद्धम् Sy. रिणातिर्गतिकर्माऽयं गच्छति च तमनुप्रविशतीत्यर्थः SKN. निरिणाति पृथक्करोति Dur.

१३. एवं यस्मिन्मेघे विद्युत्स्था रदति, ततः प्रभ्रष्टेनोदकेन सुमतिमस्माकं पिपर्तनेति Dur. रदतीति is suggested for रुदन्तीति। N. 6. 30. quotes the third pāda only.

१४. स्तंभ० P.

१५. ०ष्णा D. M.

१६. प्रायच्छन्ति P. पूजयन्ति। स्तुत्यादिना सम्भावयन्तीत्यर्थः Sy.

१७. प्रकर्षेण स्तम्भितदानाः। अविरलदाना इत्यर्थः Sy. धारितदानाः is suggested

१८. अविभ्रं० D. अभ्रष्टहविरादिधनाः। राध इति धननाम Sy.

१९. अवमा० P.

मातर्दनाः=शत्रूणामतिशयेन हिंसितारः[1]। यज्ञेषु[2]। सुष्टुताः[3]। स्तोत्रम्। सोमपानाय[4]। वीरस्य[5]। पुरातनानि[6]। वीर्याणि[7]। जानन्ति।

**शतभुजिभिस्तमभिह्रुतेरघात्पूर्भी रक्षता मरुतो यमावत।**
**जनं यमुग्रास्तवसो विरप्शिनः पाथना शंसात्तनयस्य पुष्टिषु ॥८॥**

शतभुजिभिः। शतगुणैः[8]। भवतां शरीरैः[9]। तं यजमानम्। अभिहिंसकात्[10]। दारिद्र्यात्[11]। रक्षत[12]। मरुतः[13]! यम्। रक्षतेति[14]?। यम्। जनम्। उद्गूर्णाः[15]! बलवन्तः[16]! महान्तः[17]! रक्षथ[18]। पुत्रस्य[19]। पुष्टिनिमित्तम्[20]। स्तुतेस्तमिति[21]।

**विश्वानि भद्रा मरुतो रथेषु वो मिथस्पृध्येव तविषाण्याहिता।**
**अंसेष्वा वः प्रपथेषु खादयोऽक्षो वश्चक्रा समया वि वावृते ॥९॥**

विश्वानि भद्रा[22]। सर्वाणि। भद्राणि[23]। मरुतः! रथेषु[24]। युष्माकं दृश्यन्ते।

---

१. ०ता M. M. adds अतः after हिंसितारः। नकारस्य स्थाने तकारः। अनातृणास आतर्दनरहिताः। अथवा। अलं पर्याप्तमातर्दनाद्दशत्रूणाम्। यद्वा। अलमत्यर्थं दातारः फलानामेवंरूपाः Sy.

२. यागेषु Sy.

३. अर्चनीयमिन्द्रं स्वसखीभूतम् Sy.

४. मादनसाधनस्य सोमस्य पीतये पानाय Sy.

५. M. adds चेन्द्रस्य after वीरस्य। तस्येन्द्रस्य महत्त्वं कथं जानन्तीत्यत आह। ते मरुतो वीरस्य विविधं शत्रूणामीरकस्येन्द्रस्य Sy.

६. प्रतमानि मुख्यानि Sy.

७. पुंस्त्वानि वृत्रवधादिरूपाणि Sy.

८. शतमित्यपरिमितनाम। असङ्ख्यातभोगवद्भिः Sy.

९. पालनैर्जेतव्यैश्शत्रूणां नगरैर्वा Sy.

१०. ०का P. अभिभवकारणात्कुटिलस्वभावात् Sy. ११. पापात् Sy.

१२. पालयत Sy.

४७

१३. Omitted by P. D. यूयम् Sy.

१४. P. reads रक्षथ तं for रक्षत। मरुतः! यम्। यं जनम्...अरक्षत Sy. अरक्षत is suggested for रक्षतेति?

१५. उद्गूर्णतेजसः Sy.

१६. वेगवन्तो वा Sy.

१७. महन्नामैतत्। महान्तः। रपणीयाश्शब्दा रपाः। ते येषां ते रप्शिनः। विविधा रप्शिनः स्तोतारो येषां ते तथोक्ता हे तादृशा यूयम् Sy.

१८. पाथ रक्षथ Sy.

१९. तनयस्य। उपलक्षणमेतत् पुत्रादीनाम् Sy.

२०. पोषेषु निमित्तभूतेषु Sy.

२१. अभिशंसनात्। यमेवं कुरुथ तं रक्षतेति शेषः। पाप-क्षयाद्यनिष्टपरिहारेण पुत्रादिपोषकेष्टप्राप्त्या च रक्षथेत्यर्थः Sy.

२२. द्रा P.

२३. कल्याणानि भोगयोग्यानि द्रव्याणि, अस्मभ्यं प्रदेयानि फलानि वाञ्छितानि Sy.

२४. युष्मत्सम्बन्धिरथेषु रंहणसाधनेषु Sy.

परस्परस्पर्धयैव[1] भवद्भिः। बलानि[2] च। आहितानि। यथा[3] अंसेषु[4] भवन्ति[5]। ये केचित् ते च सामर्थ्यात्, ऋष्टयः। प्रगतः पन्था यैस्तेषु[6] पत्सु[7]। चक्राकाराण्यायुधानि निहितानि। युष्माकम्[8]। रथः। चक्राणि[9]। यजमानानां समीपे[10]। वर्तयति[11][12]।

**भूरी॑णि भ॒द्रा नर्ये॑षु बा॒हुषु॒ वक्षः॑सु रु॒क्मा र॑भ॒सासो॑ अ॒ञ्जयः॑ ।**
**अंसे॒ष्वेताः॑ प॒विषु॑ क्षु॒रा अधि॒ वयो॒ न प॒क्षान्व्यनु॒ श्रियो॑ धिरे ॥१०॥**

भूरीणि भद्रा। बहूनि[13]। कल्याणानि[14]। नृहितेषु[15]। बाहुषु[16] भवतामायुधानि। वक्षस्सु[17] च। रुक्ममया[18] दीप्तत्वात्। वेगवत्य[19] इव। अञ्जयः[20]=कवचानि[21]। तथा शोधकेषु[22]। अंसेषु[23]। अधि[24]। एताः[25]। तीक्ष्णाग्रा[26] ऋष्टयो भवन्ति। पक्षिणः। इव[27]। पक्षान्। एवंविधाः[28] श्रियः[29]। मरुतो विधार[30]-यन्ति[31]।

---

१. ०यै P. M. बलाधिक्यात्परस्परस्पर्धा-विषयाणि Sy.
२. अंसेषूक्तलक्षणान्यायुधानि वाऽऽहितानि Sy.
३. तथा M.
४. तदुपलक्षितभुजेष्वपि। आकारोऽप्यर्थे Sy.
५. भवति P.
६. प्रगताः पन्थानो येषु विश्रामस्थानेषु तानि प्रपथानि तेषु Sy.
७. खादानि भक्ष्याण्याहितानि। यद्वा प्रगतः पन्था यैस्तेषु पादाग्रेषु खादयः स्थिरा आभरणविशेषा आहिताः Sy.
८. युष्मत्सम्बन्धी Sy.
९. तत्रोपनिबद्धानि चक्राणि Sy.
१०. तेषां परिसरे Sy.
११. विशेषेण वर्तते। न कदाचिदपि चक्रेषु संलग्नो भवतीत्यर्थः। यस्मादेवं देवयजन-गमनसाधनानि सन्ति तस्माच्छीघ्रमा-गच्छध्वम्? (त) इत्यभिप्रायः Sy.
१२. V. M. ignores आ। वि
१३. प्रभूतानि Sy.
१४. धनानि स्तोतृभ्यो दातुम् Sy.
१५. नरेभ्यो हितेषु Sy.
१६. भुजेषु Sy.
१७. उरःस्थलेषु Sy.
१८. रुक्ममयाः P. सुवर्णरत्नादिविनिर्मितान्या-भरणानि Sy.
१९. राभस्ययुक्तानि कान्तिमन्ति वा Sy.
२०. अजयः M.
२१. व्यक्तानि Sy.
२२. वज्रसदृशेष्वायुधेषु Sy.
२३. असेषु M. भुजमूलेषु Sy.
२४. अमधि P. अधि सप्तम्यर्थानुवादी Sy.
२५. शुक्लवर्णा मालाः Sy.
२६. क्षुरधाराः Sy.
२७. इति M.
२८. एवमेते मरुतः Sy.
२९. सर्वाङ्गेषु श्रियो लक्ष्मीरनुक्रमेण Sy.
३०. विविधं धारयन्ति Sy.
३१. V. M. ignores अनु

महान्तो मह्ना विभ्वो३ विभूतयो दूरेदृशो ये दिव्या इव स्तृभिः ।
मन्द्राः सुजिह्वाः स्वरितार आसभिः संमिश्ला इन्द्रे मरुतः परिष्टुभः ॥११॥

महान्तः। महत्त्वेन[1]। महान्तः[2]। विभोरपि[3]। विभवः[4]। तथा दूरेदृशः[5]। तथा[6] ये[7]। दिवि भवाः[8] सूर्यादयः। इव। आच्छादकैस्तेजोभिः[9]। ते मरुतः। मदनशीलाः[10]। शोभनवाचः[11]। शब्दयितारः[12]। आस्यैः। इन्द्रे च। आत्मानं संयोजयन्तः[13]। परितः[14] शब्दस्य कर्तारः[15]।

तद्वः सुजाता मरुतो महित्वनं दीर्घं वो दात्रमदितेरिव व्रतम् ।
इन्द्रश्चन त्यजसा वि ह्रुणाति तज्जनाय यस्मै सुकृते अराध्वम् ॥१२॥

तद्वः सुजाताः। तत्[16]। वः[17]। शोभनजननाः[18]! मरुतः! महत्त्वम्। अविच्छिन्नम्[19]। युष्माकम्। दानम्[20]। भूमेरिव च[21]। धारणव्रतम्[22]। इन्द्रः[23]। न[24]। क्रोधेन[25]। विरुणद्धि[26]। तत्। यजमानाय।

---

१. प्रभावातिशयेन Sy.
२. माहात्म्योपेताः Sy.
३. विभवो व्याप्ताः Sy.
४. विविधैश्वर्यवन्तः Sy.
५. दूरे दृश्यमानाः प्रकाशमानाः Sy.
६. ०शस्या P.
७. ये मरुतः Sy.
८. दूरदर्शने दृष्टान्तः। ... दिवि भवा देवाः Sy.
९. स्तृ, इति नक्षत्रनाम। ... स्तृभिः स्वपुण्यकभूतैस्तेजपुञ्जैर्नक्षत्रैर्यथा दूरे दृश्यमाना भवन्ति तद्वत् Sy. ऋक्षाः स्तृभिरिति नक्षत्राणाम् N.3.20.
१०. मादनाः Sy.
११. शोभनजिह्वाः Sy.
१२. प्रियवचना इत्यर्थः। अत एव सुजिह्वा इत्युक्तम् Sy.
१३. सम्यङ् मिश्रयितारः। इन्द्रसहायिन इत्यर्थः। 'मरुतो हैनं नाजहुः, (AB. 3.20) इति श्रुतेः Sy.
१४. परिः P. परितः परितः M.
१५. परिस्तोभयुक्ताः स्तुतिभिर्युक्ताः। एवं महाभागा ये मरुतः सन्ति तेऽस्मद्यज्ञमागच्छन्तीति शेषः Sy.
१६. तादृक् खलु Sy.
१७. युष्मदीयम् Sy.
१८. ननानां D.
१९. अत्यायतमविच्छिन्नम्। प्रकृष्टोपकारीत्यर्थः Sy.
२०. वृष्ट्यादिरूपम् Sy.
२१. दीर्घत्वे दृष्टान्तः। ... अदीनाया देवमातुर्भूम्या वा Sy.
२२. व्रतमिति कर्मनाम। तद्यथा दीर्घमतिविस्तृतं तद्वत् Sy.
२३. इन्द्रोऽपि Sy.
२४. चनेत्ययं यद्यपि निपातद्वयसमुदायरूप एको निपातस्तथाप्यवयवविभागेन चशब्दः समुच्चये नशब्दो निषेधेऽभिगन्तव्यः Sy.　　२५. त्यागेन Sy.
२६. न विह्वरति कौटिल्यं न करोति ... युष्मद्दानादित्यागमिन्द्रस्यागोऽपि नातिकामतीत्यर्थः। यद्वा यस्मै तद्दानमराध्वं तमिन्द्रोऽपि न कुटिलयति। न निषेधयति। किन्त्वनुमोदयतीत्यर्थः Sy.

यस्मै। शोभनकृते। यूयं धनं प्रयच्छथ।

तद्वो जामित्वं मरुतः परे युगे पुरू यच्छंसममृतास आवत ।
अया धिया मनवे श्रुष्टिमाव्या साकं नरो दंसनैरा चिकित्रिरे ॥१३॥

तद्वो जामित्वम्। तत्। युष्माकम्। ज्ञातेयम्। मरुतः! पूर्वस्मिन्। काले। यद्यूयम्। बहु। आशंसनं यजमानानाम्। हे अमृताः! रक्षः। अनेन। कर्मणा। मनुष्याय। क्षिप्रत्वं समेत्य। क्षेपणादिभिः कर्मभिः। सह। नेतारो मरुतः। आभिमुख्येन। ज्ञायन्ते=प्रादुर्भवन्ति शीघ्रम्।

येन दीर्घं मरुतः शूशवाम युष्माकेन परीणसा तुरासः ।
आ यत्ततनन्वृजने जनास एभिर्यज्ञेभिस्तदभीष्टिमश्याम् ॥१४॥

येन दीर्घम्। येन। चिरकालम्। हे मरुतः! वर्धेमहि। युष्मद्दत्तेन। बहुना धनेन। हे

---

१. Omitted by P. D.

२. शोभनयागादिकर्त्रे यजमानाय Sy.

३. हे मरुतः!

४. यदभिमतं धनम् Sy.

५. ० च्छत P.

६. ०त्वां P.

७. तत्खलु प्रसिद्धमित्यर्थः Sy.

८. ज्ञातेऽयं M. बन्धुत्वमस्मद्विषयप्रेमाधिक्यम् Sy.

९. उत्कृष्टे महति Sy.

१०. युगशब्दः कालोपलक्षकः। ... कालेऽतीतेऽपि वर्तत इति शेषः Sy.

११. यस्मात् Sy.

१२. बाहु P. प्रभूतं यथा भवति तथा आवत रक्षथ तस्माद्युष्मत्कृतं जामित्वमविनाशीत्यर्थः Sy.

१३. अस्माभिः क्रियमाणां स्तुतिम् Sy.

१४. अमरणधर्माणः Sy.

१५. रक्षेन M.
रक्षथ is suggested for रक्षः

१६. अनयाऽनुग्रहात्मिकया Sy.

१७. बुद्ध्या Sy.

१८. स्तोत्रे यष्ट्रे वाऽस्मदादये Sy.

१९. ०प्रं त्वं D.

२०. कीर्तिं स्तुतिं वा रक्षित्वा Sy.

२१. सम्भूय Sy.

२२. नेतारः सन्तः Sy.

२३. सर्वतो जानीथ Sy.

२४. येन दीर्घम् is omitted by P. D.

२५. आयतं सत्त्रादिरूपं कर्म Sy.

२६. प्रवर्धयामः Sy.

२७. युष्मत्सम्बन्धिना Sy.

२८. यद्यप्येतद्बहुनामसु पठितं तथापि यद् बहु तन्महदपि भवतीत्यत्र महदित्यर्थो गृह्यते। महता युष्मदभिगमनेनैषणेन वा Sy.

क्षिप्राः![1] यत्त्व[2]। युद्धे[3] समुपस्थिते। तदीया[4] जनाः। आतन्वन्ति[5]। तत्। एतैः[6]। यज्ञैः[7]। अभिमतम्[8]। प्राप्तवानिति[9]।

एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥१५॥

एष[10] वः[11]।

## I.167.

सहस्रं त इन्द्रोतयो नः सहस्रमिषो हरिवो गूर्ततमाः।
सहस्रं रायो मादयध्यै सहस्रिण उप नो यन्तु वाजाः ॥१॥

सहस्रम्। इन्द्र! अस्मद्विषयाणि[12]। त्वदीयानि[13]। सहस्रम्[14]। रक्षणानि[15]। सहस्रं[16] च।

---

१. वेगवन्तः! Sy.

२. येन चाभिगमनेनैषणेन वा Sy.

३. सङ्ग्रामे Sy. ४. अस्मदीयाः Sy.

५. सर्वतो विस्तारयन्ति। स्वसामर्थ्यैः सङ्ग्रामं जयन्तीत्यर्थः Sy.

६. इदानीं क्रियमाणैः Sy.

७. स्तोत्रादिरूपैः पूजनैः Sy.

८. एषणं गमनम् Sy.

९. ०वा... M. आभिमुख्येनाद्यां व्याप्नुयाम् Sy. प्राप्नुयामि० is suggested for प्राप्तवानि०

१०. अयं मन्त्रस्तृतीयाध्यायान्ते व्याख्यातः। सूक्तोपक्रमप्रभृति क्रियमाणां स्तुतिं मरुद्भ्यः समर्प्य स्वाभीष्टमाशास्ते। हे मरुतः! एष स्तोम इदानीं कृतं स्तोत्रं, वो युष्माकं युष्मदर्थमित्यर्थः। तथेयं गीः स्तुतिरूपा वागपि वो युष्माकम्। कस्य सम्बन्धीदमिति तदुच्यते। मान्दार्यस्य मन्दतेरीयतेश्च मान्दार्यः स्तुतिं प्रेरयतः। मान्यस्य माननार्हस्य। कारोः स्तोतुर्नामैतत्। स्तोतुः सम्बन्धि। यद्वा। एतत्पदत्रयमुत्तरत्र सम्बध्यते। उक्तलक्षणस्तोतुः। इषा, इच्छया कामनया। तन्वे युष्मच्छरीरवृद्ध्यर्थं, स्तुत्या हि शरीरं वर्धते। आयासीष्ट, अभिगच्छतु स्तुतिः। वयां वयं च, इषमन्नं, वृजनं बलं, जीरदानुं चिरकालजीवनं च विद्याम लभेमहि Sy.

११. This stanza is identical with RV. I. 165.15. and has already been explained by VM. Ms. D. puts the figure ॥१६६॥ here to indicate the end of one hundred and sixtysixth hymn. No such number is given in P. and M.

१२. ०यानि P.D. अस्मभ्यम्। उपयन्त्विति सर्वत्र योज्यम् Sy. १३. तव Sy.

१४. M. reads न्द्रास्मद्विषयाणि त्वदीयानि सहस्रम् for सहस्रम्। इन्द्र! अस्मद्विषयाणि। त्वदीयानि।
सहस्रम्। अपरिमिता इत्यर्थः Sy.

१५. रक्षाप्रकाराः Sy.

१६. बहूनि त्वदीयानि Sy.

अश्वानि[१]। हरिवः[२]! उद्गूर्णतमानि[३]। सहस्रम्[४]। धनानि[५] च। अस्मान् मादयितुम्[६]। सहस्रसङ्ख्याकानि। वस्तानि[७]। अस्मान्। उपगच्छन्तु[८]। आर्चीन्द्री।

आ नोऽवोभिर्मरुतो यान्त्वच्छा ज्येष्ठेभिर्वा बृहद्दिवैः सुमायाः ।
अध यदेषां नियुतः परमाः समुद्रस्य चिद्धनयन्त पारे ॥२॥

आ नोऽवोभिः। आयान्तु[९]। अस्मान्। अभिरक्षणैः[१०] सह। मरुतः[११]। श्रेष्ठतमैः[१२]। महादीप्तिभिः[१३]। च धनैः[१४]। सुप्रज्ञाः[१५]। अथ[१६]। यत्[१७]। एषाम्[१८]। अश्वाः[१९]। उत्तमाः[२०]। अन्तरिक्षस्य[२१]। पर्यन्ते[२२]। रमन्ते[२३] ताश्चायान्त्विति[२४][२५]।

मिम्यक्ष येषु सुधिता घृताची हिरण्यनिर्णिगुपरा न ऋष्टिः ।
गुहा चरन्ती मनुषो न योषा सभावती विदथ्येव सं वाक् ॥३॥

मिम्यक्ष[२६]। सङ्गता[२७]। येषु। तीक्ष्णधारत्वात् सुष्ठु निधानयोग्या[२८]। उदकमञ्चन्ती[२९]। हिरण्य-[३०]

---

१. इव एषणीयाः Sy.
२. हरी इन्द्रस्याश्वौ, ताभ्यां तद्वन्निन्द्र! Sy.
३. अत्यन्तं गूर्णानि Sy.
४. ०र्ण ... स० M.
अपरिमितानि Sy.
५. मणिमुक्तादीनि Sy.
६. अस्मान्मादयितुं यानि सन्ति तानि Sy.
७. गमनवन्तश्चतुष्पाद्रूपाः पशवोऽपि Sy.
८. समीपं प्राप्नुवन्तु Sy.
९. ०यन्तु P.
आगच्छन्तु Sy.
१०. अच्छ, आभिमुख्येन ... रक्षणैः सहिताः Sy.
११. ०तं M.
१२. प्रशस्यतमैः Sy.
१३. मणिमुक्तादिधनैश्च सहिताः Sy.
१४. वाशब्दः समुच्चये Sy.
१५. मायेति प्रज्ञानाम । शोभनप्रज्ञा एव मरुतः Sy.
१६. अघ P. आगमने कथमेषां सामर्थ्यमित्यत आह । ... अथ Sy.
१७. यस्मात् Sy. याः is suggested for यत्
१८. मरुताम् Sy.
१९. नियुत एतन्नामकाः ... अश्वाः Sy.
२०. उत्कृष्टाः Sy.
२१. चिच्छब्दोऽप्यर्थे । समुद्रस्यापि Sy.
२२. परस्मिंस्तीरे Sy.
२३. धनधारणं वहनं कुर्वन्ति Sy.
२४. तस्माद्रक्षणैर्धनैश्चायान्त्वित्यर्थः Sy.
२५. VM. ignores अच्छा। चित्
२६. म्यक्षतिर्गतिकर्मा । सङ्गताऽभूत् । मेघपङ्क्तिविद्युतावुभे अपि सङ्गते इत्यर्थः Sy.
२७. मरुत्सु Sy.
२८. सुष्ठु निहिता सुष्ठु हिता वा लोके Sy.
२९. ०ञ्चति M. ०ञ्चती P. D. घृतं क्षरणशीलमुदकमञ्चन्ती Sy.
३०. हितरमणीयरूपा । निर्णिगिति रूपनाम Sy.

स्या। दृषदुपलयोः उपला[1]। इव[2]। दीर्घा ऋष्टिः[3] सेयम्। अपवरकादौ[4] च। चरन्ती। मनुष्यस्य[5]। इव[6]। स्त्री[7] दुर्धर्षा भवति। पर्वयुक्ता[8]। यज्ञभवा[9]। वाक्। यथा[10]। यज्ञेन सङ्गता तद्वद्वृष्टिमेघैर्मरुद्भिः सङ्गतेति।

परा॑ शु॒भ्रा अ॒यासो॑ य॒व्या सा॑धार॒ण्येव॑ म॒रुतो॑ मिमिक्षुः ।
न रो॑द॒सी अप॑ नुदन्त घो॒रा जु॒षन्त॒ वृधं॑ स॒ख्याय॑ दे॒वाः ॥४॥

परा शुभ्राः। परमया[11]। शोभमानाः[12]। गमनस्वभावाः[13]। युवत्या वाचा[14]। मरुतः। सङ्गच्छन्ते[15] बहवः। यथा साधारण्या[16] कयाचन स्त्रिया धूर्ताः[17]। घोरा[18] अप्येते। न। द्यावापृथिव्यौ[19]। कदाचिदप्यपनुदन्ति[20]। वर्धयन्तं[21] यजमानम्। सख्याय[22]। सेवन्ते[23]। देवाः[24]।

---

१. मेघमाला Sy.

२. इ P.

३. एवंरूपा ऋष्टिर्विद्युदाख्यायुधविशेषो वा Sy.

४. उप० D. मेघपङ्क्तिर्विद्युच्चोभे दृष्टान्तेन विशेष्येते। गुहा निगूढा गुहायां वाऽन्तरिक्षे Sy.

५. तत्र दृष्टान्तः। ... मनुष्यस्य परिवृढादेः Sy.

६. महिषीवत्। सा यथा सुवेषाऽन्तःपुर एव मध्ये चरति तद्वत् Sy.

७. दुर्धा M.

८. वर्ष० M. सभा जनसङ्घस्तद्वती। वर्षकाल आविर्भवन्तीत्यर्थः Sy.

९. तत्र दृष्टान्तः। ... विदथो यज्ञः। तदर्हतीति विदथ्या प्रैषस्तोत्रादिरूपा वाक्। सा यथा यज्ञसभां प्राप्याविर्भवति तद्वत्। यद्वा विदथ्या वेदनार्हा विवदमानयोर्वाक्। सा यथा सभावती तद्वत्। सैवंरूपा येषु मिम्यक्ष ते मरुतो देवयजनमागच्छन्तीत्यर्थः Sy.

१०. यता P.

११. प्रकर्षेण Sy.

१२. शोभनालङ्काराः Sy.

१३. अभिगन्तारः Sy.

१४. मिश्रणशीलया विद्युता Sy.

१५. सिञ्चन्त्युदकसंस्त्यायम् Sy.

१६. ०णा D. यथा लोके साधारण्या स्त्रिया Sy.

१७. सङ्गता युवानो रेतो मुञ्चन्ति तद्वत् Sy.

१८. घुरा M. एवं कुर्वन्तो घोरा अतिवृष्टिप्रदानेन भयङ्करास्ते Sy.

१९. द्यावापृथिवीवचनो रोदसीशब्दः सर्वत्राद्युदात्तः। अत्र तु व्यत्ययेनान्तोदात्तत्वमिति द्रष्टव्यम्। यद्वा रोदसा शब्देन रोदनस्वभावो रुद्रः। तस्य स्त्री रोदसीति केचिदाहुः। अपरे तु मरुतां स्त्रियो रोदसीति नामधेयमित्याहुः। अयमेव पक्षो युक्त उत्तरत्रैवं व्यवहारात्। तत्पक्षे रोदसी रोदस्याम् ... तस्यां प्रियं धनं मुञ्चन्ति Sy.

२०. अपनोदनं वर्षणरूपं तिरस्कारं न कुर्वन्ति Sy.

२१. वर्धयन्तं P. D. वृद्धिम् Sy.

२२. सं० P. सखायं च M.

२३. द्यावापृथिवीपक्षे सख्याय जगतां सखिभावाय तयोर्वृद्धिं कुर्वन्तीत्यर्थः Sy.

२४. मोदयितारो मादयितारो वा मरुतः Sy.

जोषुद्यदीमसुर्यां सचध्यै विषितस्तुका रोदसी नृमणाः ।
आ सूर्येव विधतो रथं गात्त्वेषप्रतीका नभसो नेत्या ॥५॥

जोषद्यदीम्। सेवते[1]। यदा[2]। एनं मरुद्गणम्[3]। असुराणां हन्त्री[4]। सचितुम्[5]। विश्लिष्ट-जघना[6]। रुद्रपत्नी[7]=वाङ् माध्यमिका[8]। यस्या[9] नृषु[10] मनोऽनुकम्प्येषु सा। तदानीं सूर्येव[11]। विधतः[12] सोमस्य मरुद्गणस्य। रथम्। आजगाम[13]। दीप्तावयवा[14]। आदित्यस्य[15]। इव[16]। अभिगन्त्र्या[17] दीप्तिः।

आस्थापयन्त युवतिं युवानः शुभे निमिश्लां विदथेषु पज्राम् ।
अर्को यद्वो मरुतो हविष्मान्गायद्गाथं सुतसोमो दुवस्यन् ॥६॥

आस्थापयन्त[18]। अथ तां युवतिं[19] वाचम्[20]। युवानो मरुतः[21]। आस्थापयन्त[22]। यज्ञेषु[23]। पज्रकु-[24]

---

१. ०न्ते P. D.
२. यत् P.
३. मरुत्सङ्घम् Sy.
४. Omitted by P. D. कीदृशी सा? ... असुराः क्षेप्तारो मरुतस्तेषां स्वभूता Sy.
५. सेवितुं M. किमर्थम्? ... सङ्गमनार्थम् Sy.
६. विष्ट० P. पिष्ट० D. विशिष्टकेशसङ्घा विप्रकीर्णकेशसङ्घा वा सम्भोगवशेन Sy.
७. मरुत्पत्नी विद्युद्रूपमामिकेयमपि Sy.
८. वाक् मध्यमिका वाङ् मध्यमिका P. वाक् माध्यमिका वाङ् माध्यमिका D.
९. यस्य P. D.
१०. नृषु नेतृषु मरुत्सु मननवती मनुष्येषु वा वृष्टिप्रदानमनोयुक्ता Sy.
११. सूर्ये व P. केव? विधतः सूर्यस्य रथं त्वेषप्रतीका ... सूर्यपत्नीव। यद्वा सूर्यस्य दुहिताऽश्विनो रथमिव सा यथाऽऽरोहति तद्वत् Sy.
१२. परिचरतो मरुत्सङ्घस्य Sy.
१३. आगच्छति व्याप्नोति। यागदेशं गन्तुं रथमारुह्य वा यज्ञमागच्छति Sy.
१४. दीप्तोपक्रमा दीप्तावयवा। ईदृशी देवी Sy.
१५. आगमने दृष्टान्तः। ... अन्तरिक्षादित्ययोः साधारणोऽयं नभश्शब्दः। 'नभ इति षट् साधारणानि' (Ngh.1.4.) इत्युक्तत्वात्। अत्रादित्यवचनस्तस्य Sy.
१६. एव M.
१७. ०त्र्य M. गतिरिव। सा यथा शीघ्रा तद्वत् Sy.
१८. आस्थापयन्ते P.
१९. ०तीं D. मिश्रयन्तीं नित्यतरुणीं वा विद्युद्रूपां रोदस्यां स्त्रियम् Sy.
२०. Omitted by P. D.
२१. मिश्रयन्तो नित्यतरुणा वा Sy.
२२. आस्थापयन्ति। देवतात्वेन रथे धारयन्ति Sy.
२३. यज्ञे P. D. यागेषु निमित्तभूतेषु Sy.
२४. पच० P. M. पज्रकु० D. पज्रो बलं तद्वतीम् Sy.

लजाताम्। उदके[१]। नियमेन[२] मिश्रिताम्। अथ प्रत्यक्षः—होता[३]। यत्[४]। वः[५]। मरुतः! हविष्मान्[६]। गायत्रम्[७]। गायति[८]। सुतसोमः[९]। परिचरंस्तस्मिन्नाग्निमारुते शस्त्रे तत्र हि पावीरवी[१०] शस्यते।

प्र तं विवक्मि वक्म्यो य एषां मरुतां महिमा सत्यो अस्ति।
सचा यदीं वृषमणा अहंयुः स्थिरा चिज्जनीर्वहते सुभागाः ॥७॥

प्र तं विवक्मि[११]। प्रब्रवीमि[१२]। तं महिमानम्। यः। एषाम्। मरुताम्। स्तोतृभिः प्रवाच्यः[१३]। महिमा[१४]। सत्यभूतः[१५]। विद्यते। सचा। यत्[१६]। एनान्[१७]। रेतोविर्षणपरमनाः[१८]। अहंयुर्भवेत्[१९], अहमस्मीति मानादहंयुरित्युच्यते[२०] सः। स्थिराणि[२१] धनानि। सुभगाः[२२]। च[२३]। जायाः[२४]। मरुतां प्रसादात् वहते[२५] येन महिम्ना तमिति[२६]।

पान्ति मित्रावरुणावद्याच्चयत ईमर्यमो अप्रशस्तान्।
उत च्यवन्ते अच्युता ध्रुवाणि वावृध ईं मरुतो दातिवारः ॥८॥

पान्ति मित्रावरुणौ। रक्षन्ति मरुतः। मित्रावरुणौ[२७]। अवद्यादवद्यात्[२८] अहोरात्रयोर्बाधा न भवति

---

१. D. adds तां before उदके। शोभते दीप्यत इति शुवुवकम्। वृष्ट्युदकार्थं, शुभे रथ इति वा योज्यम् Sy.
२. नियमेन मिश्रयन्तीम् Sy.
३. मत्वर्थो लुप्यते। अर्चनसाधनमन्त्रोपेतः स्तोता वा Sy.
४. यदा Sy.
५. युष्मान् Sy.
६. प्रदेयाभ्यां हविर्भ्यां युक्तः Sy.
७. गातव्यं स्तोत्रम् Sy.
८. गायति। स्तवेत्यर्थः Sy.
९. होमायाभिषुतसोमोऽयं यजमानः Sy.
१०. प॰ P.
११. विवक्षि P.
१२. प्रवक्ष्मि, वर्णयामि Sy.
१३. सर्वैः स्तुत्यः Sy.
१४. महत्त्वातिशयः Sy.
१५. अबाध्योऽमोघः Sy.
१६. कथमेषां महिमा प्राप्त इत्युच्यते... यस्मात् Sy.
१७. एतेषां सम्बन्धिनी रोदसी Sy.
१८. वृष्ट्यादिवर्षणमनस्का Sy.
१९. ॰यु भ॰ P. ॰युवभ॰ D. M. अहङ्कारवती। जगदुपकारकर्त्री न कदाचिदस्तीत्यहङ्कारः Sy.
२०. माना॰ P. D. मानद॰ M.
२१. अत्यन्तमविनश्वरेवृशी देवी Sy.
२२. शोभनभाग्योपेताः Sy.
२३. चिदिति पूजायाम् Sy.
२४. जननशीलाः प्रजा वृष्ट्युत्पत्तीर्वा Sy.
२५. यह॰ P. धारयति। वृष्टौ सत्यां सर्वे प्राणिन उत्पद्यन्ते। यस्मादेवं तस्मान्महिमाऽस्ति Sy.
२६. तं महिमानं स्तौमीत्यर्थः Sy.
२७. हे मरुतो युष्मत्सम्बन्धिनो देवा मित्रावरुणावहोरात्राभिमानिदेवौ Sy.
२८. अवात् P. गर्ह्याद्विपयानुष्ठानाज्जगत्यवो व्यवहारप्रतिबन्धरूपात् Sy.

तथा कुर्वन्ति। मरुद्भिः प्रहितो[1]ऽर्यमा[2] प्रातः। इमान्[3]। राक्षसान्[4]। बाधते[5]। अपि च[6]। च्यवन्ते[7]। स्थिराणि[8]। उदकान्यन्तरिक्षात्[9]। मरुतः! यो[10] वो[11] दत्तवर्णोधनः[12]। सः[13]। वर्धते[14]।

**नही नु वो मरुतो अन्त्यस्मे आरात्ताच्चिच्छवसो अन्तमापुः।**
**ते धृष्णुना शवसा शूशुवांसोऽर्णो न द्वेषो धृषता परि ष्ठुः ॥९॥**

नही[15] नु वः। हे मरुतो। ये अस्माकम्[16]। अन्तिके दृश्यन्ते। ये वा दूराद्[17] वर्तन्त उभयेऽपि[18]। भवताम्[19]। न। बलस्य। अन्तम्[20]। अपि। गच्छन्ति[21]। तेऽमी[22]। धर्षकेण। बलेन। वर्धमानाः[23]। उदकम्[24]। इव। द्वेष्टॄञ्छत्रूनपि। तेन धृषता[25] बलेन। परितिष्ठन्ति[26][27]।

**वयमद्येन्द्रस्य प्रेष्ठा वयं श्वो वोचेमहि समर्ये।**
**वयं पुरा महि च नो अनु द्यून्तन्न ऋभुक्षा नरामनु ष्यात् ॥१०॥**

वयमद्य। व्यवहारार्थं तिष्ठन्तस्तं यन्तमादित्यमनयोपतिष्ठेतेत्युक्तम्[28]—वयम्[29]। अद्य[30]।

---

१. प्रहितः P.
२. अर्यमा उ इति निपातसमुदायात्मकमेकं पदम्...अर्यमापि। एते त्रयोऽपि Sy.
३. अमुं लोकं यज्ञं वा Sy.
४. एतेषामप्रशस्तान्क्षीणानपि पदार्थान् Sy.
५. ॰ते M. घातयन्ति नाशयन्ति Sy.
६. उशब्दोऽपिशब्दार्थः Sy.
७. च्यावयन्ति वैते 'अहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति' इति श्रुतेः। यद्वा। अच्युतानि ध्रुवाणि धनानि च्यवन्ते Sy.
८. एतैः प्रेरितानि...अच्युतान्यक्षयाण्यत एव ध्रुवाण्यविचलानि Sy.
९. मेघस्योदकानि Sy.
१०. अयं कालः Sy. ११. युष्मदीयः Sy.
१२. प्रदेयजलः खण्डितमेघो वा Sy.
१३. सं D.
१४. यदा वपुषे वर्धते तदा मित्रादयो देवा युष्मदनुकूलव्यापारेण जगद्रक्षन्तीत्यर्थः। यद्वा दातिवारो दत्तवरणीयहविर्लक्षणधनो यजमानो हे मरुत ईमेनान्युष्मान्वृधे वर्धयति यदा तदेत्यर्थः Sy.
१५. हि P.
१६. हे...स्मा॰ M. अस्मासु मध्ये Sy.
१७. दूरादपि। यद्वा। चिदिति कुत्सायाम्। अत्यन्तदूरात् Sy.
१८. एकेऽपि Sy.
१९. युष्माकं सम्बन्धिनः Sy.
२०. अवसानम् Sy.
२१. नैव खलु प्राप्नुवन्ति। सन्निधावसन्निधौ च न प्राप्नुवन्तीत्यर्थः Sy.
२२. अथ परोक्षं प्राप्तबलत्वमाह। ते खलु मरुतः Sy. २३. ॰न P.
२४. तत्र दृष्टान्तः ... यथोदकं स्वविरोधि रजआदिकमभिभवति तद्वत्। यस्मादेवं तस्माच्छवसोऽन्तं नापुः Sy.
२५. अत एव...पराभिभावकेन सामर्थ्येन Sy.
२६. परिभवन्ति। वशीकुर्वन्ति Sy.
२७. VM. ignores नु
२८. ॰ष्ठेते॰ P. M. ॰परिति॰ D.
२९. यष्टारः Sy.
३०. अस्मिन्दिने Sy.

इन्द्रस्य[1]। प्रियतमाः[2]। स्पर्धमाने[3] मनुष्य उत्तरमुक्तवन्तः[4]। तथा द्यवस्व[5]। वोचेमहि[6]। वयम्। पुरा[7] चोक्तवन्तः। सर्वेषु[8] दिवसेषु[9]। महत्त्वम्[10]। एव। अस्माकमस्तु[11]। तद्[12] वचनम्। नेतृणाम्[13]। अस्माकम्[14]। महानिन्द्रः[15]। अनुभवतु[16] मरुतां प्रसादादिति।

एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥११॥

एष वः स्तोमः[17]।

## I.168.

यज्ञायज्ञा वः समना तुतुर्वणिर्धियंधियं वो देवया उ दधिध्वे।
आ वोऽर्वाचः सुविताय रोदस्योर्महे ववृत्यामवसे सुवृक्तिभिः ॥१॥

यज्ञायज्ञा[18] वः[19]। यज्ञे यज्ञे। युष्माकम्। समानाकारा[20] भवति। त्वरणा[21], छान्दसो भूः[22] स्वः ? ।

---

१. देवस्य Sy.
२. प्रियतमा भवेम। यद्वा प्रियतमा वयमिन्द्रस्य महत्त्वम् Sy.
३. सह मर्या मर्त्या ऋत्विजो यस्मिन्स समर्यो यज्ञस्तस्मिन्। सङ्ग्रामे वा Sy.
४. ०मुक्तमुचः P.
५. द्यवस्व M. परस्मिन्नपि दिने Sy.
६. स्तोतुं समर्था भूयास्म Sy.
७. पूर्वस्मिन्नतीते कालेऽपि Sy.
८. M. adds. च after सर्वेषु।
९. दिवसान्, अनु प्रतिदिवसमित्यर्थः। अतीत आगामिनि च दिवसे सर्वदा वोचेमहि Sy.
१०. महद् बलम् Sy.
११. अस्मदर्थम् Sy.
१२. तस्मात् Sy. १३. मनुष्याणां मध्ये Sy.
१४. अस्मान् Sy.
१५. महत्नामैतत्। 'ऋभुक्षा उक्षा' (Ngh. 3.3.) इति तन्नामसु पाठान्महानिन्द्रः Sy.
१६. अनु is omitted by P.D. अनुकूलमभिमतप्रदो वा भवतु Sy.
१७. एष वः स्तोमः गतम् M. एकादशी व्याख्याता Sy.
This stanza is identical with RV. I. 165.15; 166.15; and has already been explained by VM. Ms. D. puts the figure ॥१६७॥ here to indicate the end of one hundred and sixtyseventh hymn. No such number is given in P. and M.
१८. Omitted by M.
१९. सर्वेष्वपि यज्ञेषु Sy.
२०. समीकृतिर्न्यूनाधिकाभावलक्षणा Sy.
२१. ०णात् M. त्वरमाणा सम्भजमाना भवति।...तत्तद्यागावसर आगत्य हविः स्वीकृत्य वैकल्यपरिहारेण समं कुरुथेत्यर्थः Sy. 'तुर्वणिस्तूर्णवनिः' N.6.14.
२२. भू P.D.

सर्वाणि कर्माणि[१]। धारय[२]। यूयम्। देवकामाः[३]। युष्मान्[४]। स्तोमुखान्[५]। द्यावापृथिव्योः सका-शात्। अभ्युदयार्थम्[६]। आवर्तयामि। महते। रक्षणाय[७]। स्तोत्रैः[८][९]।

**वव्रासो न ये स्वजाः स्वतवस इषं स्वरभिजायन्त धूतयः।**
**सहस्रियासो अपां नोर्मय आसा गावो वन्द्यासो नोक्षणः ॥२॥**

[१०]वव्रासो न। कूपाः[११]। इव। ये। स्वस्मादेव[१२] जायमाना[१३] भवन्तः। सर्वम्[१४]। अन्नम्[१५]। अभ्य-जायन्त[१६]। सवृक्षयः वृक्षादीनां कम्पयितारः[१७]। कूपसाम्यं वर्षणान्ते[१८]। सहस्रसङ्ख्याः[१९]। अपाम्[२०]। ऊर्मयः। इव। श्रेणिशः आगच्छन्ति। ते[२१], आस्येन[२२]। वन्द्याः। बहुक्षीरा[२३] गावः[२४]। इव[२५]। सेक्तार[२६] उदकानाम्।

**सोमासो न ये सुतास्तृप्तांशवो हृत्सु पीतासो दुवसो नासते।**
**ऐषामंसेषु रम्भिणीव रारभे हस्तेषु खादिश्च कृतिश्च सं दधे ॥३॥**

सोमासः[२७]। सोमाः। इव। ये[२८] मरुतः[२९]। सुताः[३०]। सम्पूर्णलताः सुखा[३१] भवन्ति[३२]। हृत्सु[३३]। पीताः[३४]।

---

१. Omitted by P.D. युष्मत्सम्बन्धि-वृष्टिप्रदानादिरूपं सर्वं कर्म Sy.
२. धारयत धारयध्वे वा। देवार्थहविराद्युत्पादनाय वृष्टिं कुरुध्वेत्यर्थः Sy. धारयत is suggested for धारय
३. देवतामाः M. देवान्प्रापयितार एव सन्तः Sy.
४. यस्मादेवं कुरुथ तस्माद्वो युष्मान् Sy.
५. ०मुख्यां M. अस्मदभिमुखान् Sy.
६. सुष्ठु व्याप्ताय Sy.
७. रक्षणाय प्रीणनाय वा Sy.
८. कैः साधनैः ?...शोभनावर्जनैः स्तोत्रैः Sy.
९. VM. ignores उ
१०. वव्रास: D. वब्रासः P.
११. वव्रिरिति रूपनाम। रूपवन्त इव। ते यथा प्रहृष्टा लक्ष्यन्ते तद्वत्। यद्वा। अरूपा अपि सरूपा इव Sy.
१२. स्वयमेव स्वस्माद्वा जायमानाः। अनन्यहेतुका इत्यर्थः Sy. १३. यजमानोदका M.
१४. स्वर्गं च Sy. १५. अन्नं हविर्लक्षणमन्न-साधनं सस्यादिकं वा Sy.
१६. अभिलक्ष्य प्रादुर्भवन्ति Sy.
१७. कम्पनशीलाः सन्ति ते Sy.
१८. वर्षाणां ते D.M. १९. सहस्रसम्मिताः Sy. २०. ते दृष्टान्तमुखेन श्रूयन्ते ... उदकानाम् Sy. २१. Omitted dy P. २२. समीप एव Sy.
२३. ०र P. बहुक्षीरादिप्रदत्वेन स्तुत्याः Sy.
२४. ०व P. २५. Omitted by P.
२६. वृष्टयुदकस्य सेक्तारः। तादृशा मरुतः प्रादुर्भवन्तीत्यन्वयः Sy.
२७. ० मासः P.D. यथा वल्लीरूपाः सोमा अभिषवात्पूर्वमाप्यायनेन तृप्तावयवाः सन्तः पश्चात्सुता अभिषुता रसभूताः Sy.
२८. तै P.D. २९. Omitted by P.D.
३०. अभिषुताः Sy. ३१. ०ता P. D. तर्पितावयवाः Sy. ३२. ०ति M.
३३. पातृणां हृदयेषु Sy. ३४. पीताः सन्तः Sy.

सुराः[1]। इव च। आसते[2]। अंसेषु। एषाम्। संरम्भिणी[3] सकामा स्त्रीव। ऋष्टिरारब्धाऽऽसीत्[4][5]। हस्तेषु[6]। खादयायुधम्[7]। स्रजः[8]। च[9]। सह[10]। निहिताविति[11][12]।

**अव स्वयुक्ता दिव आ वृथा ययुरमर्त्याः कशया चोदत त्मना।**
**अरेणवस्तुविजाता अचुच्यवुर्दृळ्हानि चिन्मरुतो भ्राजदृष्टयः ॥४॥**

अव स्वयुक्ताः। दिवसेनैव[13] युक्ता[14] मरुतः। अनायासेन। अधस्तात्[15]। आगताः[16]। हे अमर्त्याः! भवताम्[17], अश्वाजन्या। आत्मनैव[18]। अश्वांस्तोदयत[19][20]। रेणुवर्जिताः[21]। बहुजननाः[22]। च्यावयन्ति[23]। दृढानि[24]। अपि। मरुतः। दीप्तायुधाः[25]।

**को वोऽन्तर्मरुत ऋष्टिविद्युतो रेजति त्मना हन्वेव जिह्वया।**
**धन्वच्युत इषां न यामनि पुरुप्रैषा अहन्यो३ नैतशः ॥५॥**

को वोऽन्तः[26]। कः[27]। युष्माकम्[28]। मध्ये। मरुतः! ऋष्ट्या[29] विद्योतमानाः! हन्वोरिव। जिह्वेतिच्छन्दोऽनुविधानार्थमन्यत्रापि विभक्तिव्यत्यय ऋगन्तेषु दृष्टो यथा—

"उदूपथुरश्विना वन्दनाय"[30]

---

१. सुताः P. परिचरन्त इव Sy.
२. यद्वा प्राणादिरूपेण शरीरे स्थिता युवतः परिचरन्त इव गमनादिचेष्टाः कुर्वन्त आसते Sy.
३. युवतमांसालम्बिनी योषिदिव Sy.
४. ऋषिः M. अवलम्बने सामर्थ्याच्छ्रक्त्याख्यायुधविशेषो भुजलक्ष्मीर्वा Sy.
५. आरेभ आश्लिष्यति Sy.
६. हयु P.
७. हस्तत्राणकः Sy.
८. कर्तनी च स्रुङ्गलता च Sy.
९. परस्परसमुच्चयार्थाश्चकाराः Sy.
१०. Omitted by P. D.
११. सन्धीयते, सम्यग्धृता भवति ।...ये मरुत उक्तरूपास्त आविर्भवन्तीत्यर्थः Sy.
१२. VM. ignores च
१३. द्युलोकात् Sy.
१४. स्वैर्युक्ताः परस्परं संयुक्ताः स्वेन अनेन वा युक्ताः सन्तः Sy.
१५. अवाङ्मुखम् Sy.
१६. आगच्छन्ति Sy.
१७. यूयम् Sy.
१८. वाङ्नामैतत्। वाचा स्तुतिरूपया Sy.
१९. स्वयमेव Sy.
२०. प्रेरयत। स्तोतुमिति शेषः Sy.
२१. ते च... अपापाः Sy.
२२. बहुयत्नेषु प्रादुर्भूताः Sy.
२३. चालयन्ति Sy.
२४. दृढान्यपि पर्वतानि Sy.
२५. दीप्ता एवम्भूताः सन्तः Sy.
२६. पुमान् Sy.
२७. युष्मासु Sy.
२८. मध्ये स्थित्वा Sy.
२९. मेघभेदनायुधविशेषेण विद्योतमानाः Sy.
३०. उदूह॰ D.M. उमूह॰ P. RV. I. 117. 5.[d]

यथा हन्वो[1]र्मध्ये जिह्वा वि[2]चलति तद्वच्चल[3]ति स नूनमिन्द्रः। अन्तरिक्षे[4] च्यवमानाः! अभ्रानाम्[5]। इव। गमना[6]र्थं गच्छत यस्मादागमनानन्तरमभ्राणि प्रादुर्भवन्तीति। बहुप्रसवाः[7]! अहनि भवः[8]। इव। श्वे[9]तवर्ण आदित्यः।

**क्वं स्विदुस्य रजसो मुहस्परुं क्वावरं मरुतो यस्मिन्नायुय ।**
**यच्च्यावर्यंथ विथुरेव संहितुं व्यद्रिंणा पतथ त्वेषमंर्णुवम् ॥६॥**

कः स्विदस्य। यस्मिन्नन्तरिक्षे[10]। यूयं गच्छथ[11]। तत्र[12] वाऽसहायानीव तृणानि[13]। अनायासेन संहतं[14] वृक्षादिकम्[15]। च्यावयथ[16]। तत्र दीप्तम्। उदकवन्तं मेघम्। वज्रेण। पातयथ। तस्यास्य भवतां विषयस्य[17]। अन्तरिक्षस्य। महतः। क्व[18]। परस्पारम्[19]। क्व वा[20]। अवरम्[21]। हे मरुतः![22]

**सातिर्न वोऽमंवती स्वर्वती त्वेषा विपाका मरुतः पिपिंष्वती ।**
**भुद्रा वौं रातिः पृंणतो न दक्षिंणा पृथुज्रयीं असुर्येंव जञ्जती ॥७॥**

सातिर्न वः। दानम्[23]। न[24]। युष्माकम्[25]। रोगयुक्तम्[26]। अभ्युदययुक्तम्[27]। दीप्तम्[28]। विशि-

---

१. चालने दृष्टान्तः।... द्विवचनस्याकारः। हनू इव, तौ यथा रसनया चाल्येते तद्वत् Sy. २. वि is omitted by P.
३. चालयति प्रेरयति Sy.
४. धन्वञ्छब्दोऽन्तरिक्षस्य वचनः। तेन तत्स्थमुदकं लक्ष्यते। उदकत्राविणो मेघा इव ते यथाऽऽकाङ्क्ष्यन्ते तथा युष्मानन्नादिप्राप्तये Sy.
५. यद्यप्येवं तथापि... अन्नानां तत्साधनानां सस्यानाम् Sy.
६. प्राप्तौ समृद्ध्यर्थम् Sy.
७. बहुविधं फलमिच्छन्तयजमानः स्तोत्रैर्बहुप्रकारमाकारयतीत्यर्थः Sy.
८. अह्नि भवः Sy.
९. वत्स इव। स यथा शिक्षकेण नानाप्रकारं प्राप्यते तद्वत् Sy.
१०. उदके निमित्तभूते सति Sy.
११. आगच्छत Sy.
१२. च M. यत्र is suggested for तत्र
१३. विथुराणि शिथिलानि तृणानीव Sy.
१४. एकीभूतम् Sy.
१५. Missing in M. उदकम् Sy.
१६. च्याव० M. स्वस्थानाच्चालयथ तदा Sy.
१७. दृष्टयुदकस्य लोकस्य वा Sy.
१८. कुत्रास्तीति। नास्तीत्यर्थः Sy.
१९. परावरं P. अन्तम् Sy.
२०. आद्यन्तं न कोऽपि जानातीत्यर्थः Sy.
२१. अपरम् M. अवाङ्भाग आदिश्च Sy.
२२. VM. ignores स्वित् and वि
२३. सम्भक्तिः...युष्मत्सम्भजनं यथा प्रशस्तगुणं तद्वद् वो रातिर्वृष्ट्यादिविषया Sy.
२४. इव Sy. २५. युष्माकं सम्बन्धिनी Sy.
२६. अमात्यवती, इन्द्रादिसहायवती। यथा 'राजेवामवान्' (RV. IV. 4.1.) इत्यत्रामशब्दोऽमात्यवचनस्तद्वत्। यद्वा वः सातिः संविभक्तिर्नामवती रोगवती न भवति किन्तु Sy.
२७. सुखवती Sy.　　२८. दीप्ता Sy.

प्दोदनम्[1]। मरुतः! भूयो भूयः प्रादुर्भावात्पेषणवत्[2]। तदेवाह—भद्रम्[3]। वः। दानम्। प्रयन्तुः[4] उदारस्य। इव। दक्षिणा[5]। पृथुवेगा[6] च। असुराणां स्वभूता[7]। सेनेव[8], जजिर्योधनकर्मा[9]।

प्रतिं ष्टोभन्ति सिन्धवः पुविभ्यो यदुभ्रियां वाचमुदीरयन्ति ।
अवं स्मयन्त विद्युतः पृथिव्यां यदीं घृतं मुरुतः प्रुष्णुवन्ति ॥८॥

प्रति ष्टोभन्ति[10]। युष्माकमायुधेभ्यः[11]। प्रतिचलन्ति[12]। आपः[13]। यदा। अभ्र्याम्[14]। वाचम्[15]। उदीरयन्ति[16]। पृथिवीं लक्षीकृत्य[17]। विद्युतस्तत्र[18]। अवस्मयन्त[19]—हसन्ति[20]। यदि[21]। उदकम्[22]। मरुतः। सिञ्चन्ति[23]।

असूत पृश्निर्महते रणाय त्वेषमयासां मरुतामनीकम् ।
ते सप्सरासोऽजनयन्ताभ्वमादित्स्वधामिषिरां पर्यपश्यन् ॥९॥

असूत[24] पृश्निः[25]। मरुतां माता पृश्निः[26]। महते। रणाय[27]। दीप्तम्। गमनशीलानाम्[28]। मरु-

---

१. परिपक्वफला Sy.
२. पो० P. वेष० M. पेषणवती कृषीवलैः कर्षणवती। वृष्टौ सत्यां कर्षन्तीति प्रसिद्धम्। स्वविरोधिपेषणवती वा Sy.
३. भन्दनीया स्तुत्या Sy.
४. ०तु D. अप्र० M. दातुर्धनिकस्य Sy.
५. दक्षिणेव तद्वत्समृद्धिकरी Sy.
६. पृथुजवा शीघ्रगामिनी Sy.
७. असुरस्य स्वभूता Sy.
८. सर्वानभिभवन्ती शक्तिरिव। सा यथान्येभ्योऽपहृत्यान्यस्मै दातुं समर्था तद्वदियमपि मेघस्थमुदकमपहृत्य जगतो दातुं शक्तेत्यर्थः। ईदृशी रातिरस्मभ्यमस्त्विति भावः Sy. ९. विजिर्यो० M.
१०. प्रतिष्टो भवन्ति M.
११. मरुत्सम्बन्धिवज्रेभ्यः Sy.
१२. ०चवन्ति P.
१३. स्यन्दनशीला आपः Sy.
१४. अभ्यां M. अभ्रभवाम् Sy.
१५. शब्दं स्तनितलक्षणम् Sy.
१६. उच्चारयन्ति वज्राणि Sy.
१७. पृथिव्यामन्तरिक्षे। पृथिवीत्यन्तरिक्षनाम। 'पृथिवी भूः' (Ngh. I.3.) इति तन्नामसूक्तत्वात्...पृथिव्यामित्येतदुत्तरत्र वा योज्यम्।...पृथिव्यां भूम्याम् Sy.
१८. ०द्य० D. विद्योतमानास्तडितः Sy.
१९. अरव P. अवाङ्मुखम् Sy.
२०. स्मयन्ते...प्रकाशन्ते Sy.
२१. यदा Sy.
२२. क्षरदुदकम् Sy.
२३. प्रुष्णन्ति सिञ्चन्ति। प्रुषेः क्र्यादिकस्य व्यत्ययेन श्नुः। यदैवं तदेत्यर्थः Sy.
२४. ०ति P. २५. ०श्नि P.
२६. मरुन्माता नानावर्णा। 'पृश्नियै वै पयसो मरुतो जाताः' (TS.2.2.11.4.) 'पृश्नेः पुत्रा उपमासः' (RV.V.58.5.) इत्यादिश्रुतेः। तामेवान्तरिक्षदेवतां केचिदाहुः सा देवी Sy.
२७. सङ्ग्रामाय मेघजयायेत्यर्थः Sy.
२८. गन्तॄणाम् Sy.

ताम्। सङ्घम्।[1] प्रसूत।[2] ते।[3] समानरूपाः, हिंसाकर्मा[4] वा स्पृणोतिः।[5] उदकम्।[6] जनयन्ति।[7] तदनन्तरम्। एव।[8] मनुष्याः सर्वैरेषणीयमन्नम्।[9][10] पृथिव्याः[11] परितः[12] पश्यन्ति।[13]

एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥१०॥

[एष वः स्तोमः।][14]

## I.169.

महश्चित्त्वमिन्द्र यत एतान्महश्चिदसि त्यजसो वरूता ।
स नो वेधो मरुतां चिकित्वान्त्सुम्ना वनुष्व तव हि प्रेष्ठा ॥१॥

महश्चित्। इन्द्र! महतो[15] मरुतः। एतान्।[16] त्वं नियच्छसि।[17] महतः। असि। त्यागस्य।[18] सम्भक्ता।[19] सः।[20] अस्मभ्यम्। विधातः।[21] मरुताम्। प्राज्ञस्त्वम्।[22] सुखानि।[23][24] मे देहि

---

1. समूहमेकोनपञ्चाशत्सङ्ख्याकम् Sy.
2. उत्पादितवतो Sy.
3. ते च मरुतः Sy. 4. समानशीलाः P.
5. पा M. हिंसका वा मेघानाम् Sy.
6. मेघम् Sy. 7. उत्पादितवन्तः Sy.
8. सर्वे जनाः Sy. 9. सर्वैरिष्टव्याम् Sy.
10. अन्नं सस्यादिसमृद्धिलक्षणम् Sy.
11. ॰व्यां D. पृथिवीं is suggested as acc. should be used with परितः
12. परिपश्यन्ति Sy.
13. Ms. D. puts the figure ॥१६८॥ here to indicate the end of one hundred and sixtyeighth hymn. No such number is given in P. and M.
14. दशमी व्याख्याता Sy. This stanza is identical with RV. I. 165. 15; 166. 15; 167. 11. and is explained by VM. on P. 362. The mss. do not write the *pratika* of this stanza here and omit it altogether as it has already occurred thrice.
15. यतः कारणात् ... महतोऽपि सामर्थ्यातिशयवत्त्वात् Sy.
16. ॰तां M. मरुतः Sy.
17. निरपेक्षेणापि स्नेहान्न त्यजसीति शेषः Sy.
18. अतः कारणान्महश्चिदसि। चिदिति पादपूरणः। महतोऽपि ...त्यागात्। यद्वा। एतत् क्रोधनाम। क्रोधाद्वा Sy.
19. वरिता रक्षिता...यद्वा मरुतोऽपि त्यागाद् वृष्ट्यादिविषयाद् वारयितासि Sy.
20. स तादृशस्त्वम् Sy.
21. ॰ तं M.
22. ॰ त्राः P. चेतनावान्। अस्मदनुग्रहविषयज्ञानोपेतः सन् Sy.
23. मरुदायत्तानि वृष्ट्यादिरूपाणि Sy.
24. Omitted by P.

सन्ति हि। तव। प्रियतमानि सुखानि।

अयुंज्रन्त इन्द्र विश्वकृष्टीर्विदानासो निष्षिधो मर्त्यत्रा।
मरुतां पृत्सुतिर्हासमाना स्वर्मीळ्हस्य प्रधनस्य सातौ ॥२॥

अयुञ्जन् ते। युक्ता आसन्। मरुतः। इन्द्र! परिपूर्णकर्मणाः। ज्ञातारः। त्यजन्तो धनानि। मर्त्येषु। मरुतामेषाम्। सेना। दीप्यमाना। सर्वसेचनस्य। युद्धस्य। भजने।

अम्यक्सा तं इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति।
अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि ॥३॥

अम्यक् सा ते। अम्यक्। तत्। तव। आयुधम्। अस्मदर्थं त्वयि ततश्च तत्साहाय्यात्।

---

१. सन्तु।...हिशब्दः...प्रसिद्धयर्थः Sy.
२. VM. ignores चित्। चित्।
३. आ० M. पूर्वमन्त्रे मरुतामिन्द्रसाहाय्यमुक्तम्। अत्रेन्द्रस्य मरुत्साहाय्यमुच्यते Sy.
४. युज्यन्ते। त्वया युक्ता भवन्तीत्यर्थः Sy.
५. ०र्णकर्मणा P. कोवृशास्ते।...विश्वकृष्टयो रक्षपत्वेन सर्वजनयन्तः Sy.
६. जानानाः Sy.
७. निश्शेषेणोदकस्य सेक्तुन्मेघान् Sy.
८. ० नी P.
९. मान्येषु P. मर्त्यार्थम् Sy.
१०. हासं कुर्वती हर्षयुक्ता भवति Sy.
११. सुखसेक्तुः Sy.
१२. प्रकृष्टधनवतो वृत्रादिसङ्ग्रामस्य...यद्वा सुखेन मिह्यते जलं यस्मिंस्तादृशस्य प्रधनस्य प्रकृष्टोदकाख्यधनसाधनस्य सङ्ग्रामस्य सातौ। मेघभेदनायेति यावत् Sy.
१३. लाभे जये निमित्तभूते सति Sy.
१४. येषामीदृशी सेनास्ति ते मरुतोऽयुञ्जन्निति सम्बन्धः Sy.
१५. अमक् P.
१६. प्राप्नोति मेघसमीपे Sy. तच्छब्दश्रुतेर्यच्छब्दोऽध्यगित्येतत्सम्बन्धी, अध्याहार्यः। यां क्षिप्तां सतीम्...यां प्रतीयं गता यां प्रतीत्येवं सर्वत्र शत्रवो मन्यन्ते। या वा नित्यं शत्रूप्रत्यभिगता सहभूता वा SKN. आभिमुख्येन मेघमञ्चिता त्वया क्षिप्ता भवति Dur. 'अमाक्तेति वा। अभ्यक्तेति' N. 6.15. quotes first pāda only.
१७. सा प्रसिद्धा Sy.
१८. तव स्वभूता SKN. आत्मनस्तव या स्वभूता Dur.
१९. वज्राख्यायुधविशेषः Sy. शक्तिकाऽऽयुधविशेषः SKN. एवंलक्षणां शक्तिम् Dur.
२०. अस्मद्वृष्टयर्थम् Sy. अस्मान् प्रति SKN.
२१. ततश्च D. एवं च सति Sy. अथ तदा Dur.
२२. तत् is omitted by P. तदनु विसृतयैव Dur.

मरुतः। पुराणम्। उदकम्। प्रेरयन्ति। अग्निः। इव। अतसे। शुशुक्वान् ज्वालाः। आपः। इव सर्वे मनुष्याः। धारयन्ति। अन्नानि।

त्वं तू न इन्द्र तं रयिं दा ओजिष्ठया दक्षिणयेव रातिम्।
स्तुतश्च यास्ते चकनन्त वायोः स्तनं न मध्वः पीपयन्त वाजैः ॥४॥

त्वं तू नः। त्वं हि। क्षिप्रम्। इन्द्र! अस्मभ्यम्। त्वदीयम्। रयिम्। देहि। यथा

---

१. मरुतोऽपि Sy. मरुतश्च SKN.
२. 'सनेम्यह्वाय' (Ngh. 3.27.) इति यद् पुराणनामानीत्युक्तत्वात्सनेमीति पुराणनाम। पुराणं चिरकालं सङ्गृहीतम् Sy. पुराणनामैतत् SKN. चिरन्तनम् Dur.
३. अन्वमित्युदकनाम। वृष्ट्युदकम् SKN. बहूदकम् Dur.
४. क्षिपन्ति वर्षन्तीत्यर्थः Sy. 'जुन गतौ' सामर्थ्याच्चान्तर्णीतण्यर्थो द्रष्टव्यः। गमयन्ति SKN. इह पातव्यमिति स्वान्यायुधानि मेघविदारणाय गमयन्ति Dur.
५. वृष्ट्या सस्यादिसमृद्धौ सत्याम् .... हि स्म, इति पूरणे। अग्निरपि Sy. हिस्मौ पादपूरणौ ... यथाऽग्निः ... दीप्यते SKN.
६. चिदुपमायाम् SKN.
७. सन्तते कर्मणि निमित्तभूते सति Sy. शुष्के काष्ठे SKN. काष्ठे Dur.
८. ०क्वा P. D. M. दीप्यमानो वर्तते Sy. तद्वत् त्वं शुशुक्वान् वैद्युतात्मना दीप्यसे इत्यर्थः SKN. सर्वेषामेवायुधानां मध्ये भावत्कैव शक्तिरग्निरिव काष्ठे वेदीप्यमान एतस्मिन्नेव आस्ते Dur.
९. आपः D. M. आप इव यथा च नावेया आपः SKN. यथा च नावेया आपः Dur.
१०. द्विपाश्वस्योदकवान्पर्वताद्विर्द्वीपः। तं यथाऽऽपो धारयन्ति तद्वत्। यद्वा। आयुधमेवोच्यते। वज्राख्यायुधविशेषोऽतसे काष्ठसमूहे, शुशुक्वान्दीपयन्नग्निरिवचित्। चिच्छब्द उपमार्थे। 'दधि चिदित्युपमार्थे' (N. 1.4.) इति यास्केनोपमार्थस्योक्तत्वात्। काष्ठे ज्वलन्नग्निरिव तद्वद्दीप्तो वर्तते। एतदेव दीप्तत्वमपेक्ष्य सेत्युक्तम्। एवं च सत्यापो द्वीपमिव वृष्ट्युदकानि प्रयांसि सस्याद्यन्नानि दधति धारयन्ति। एतत्सर्वं महानुभावस्येन्द्रस्य स्रष्टेः सामर्थ्यमितीन्द्रस्य स्तुतिः Sy. द्वीपं मध्यस्थस्थलम् SKN. द्वीपं परिवार्यात्मानं धारयन्ति Dur.
११. दधति वा यजमानाः Sy. एवं सर्वतस्त्वां परिवार्य दधति धारयन्ति SKN. एवमेतानि मेघ्यानि ... महत्त्वादृष्टेस्तानि मज्जयितुमशक्नुवन्ति द्वीपमिव परिवार्य धारयन्ति Dur.
१२. चरुपुरोडाशादीनि हवींषि Sy. उदकनामैतद्, उदकानि मेघहननकाले SKN. उदकानि Dur.; SKN. II. 440
१३. VM. ignores इन्द्र। हि। स्म। द्वीपम्
१४. नू P. १५. तुरवधारणे, त्वमेव Sy.
१६. त्वद्दानयोग्यम् Sy.
१७. गवादिधनम् Sy.
१८. यस्मादितरेभ्योऽपि त्वमेव बहुप्रदोऽतोऽतिमहद्धनं देहीत्यर्थः Sy.

यजमाना बलवत्तमया[1]। दक्षिणया[2] सह। धनं[3] प्रयच्छन्ति[4]। याः[5]। स्तुतयः[6]। त्वाम्[7]। अकामयन्त[8]। गन्तारम्[9]। ताः[10] स्तोतारं पयसा[11]। स्तनम्[12]। इव। अन्नैः[13]। पूरयन्ति[14]।[15]

**त्वे रायं इन्द्र तोशतमाः प्रणेतारः कस्यं चिदृतायोः ।**
**ते षु णो मरुतो मृळयन्तु ये स्मा पुरा गातूयन्तीव देवाः ॥५॥**

त्वे रायः। त्वयि[16] स्थितानि। धनानि[17]। अयजमानस्य बाधकानि[18] भवन्ति। प्रणेतारश्च[19]। कस्य। चित्[20]। यज्ञमिच्छतस्तव[21] स्वभूताः। ते। मरुतः। अस्मान्। सुष्ठु। सुखयन्तु। ये। स्म[22]। देवाः[23]। शीघ्रम्। यजमानेषु गमनमिच्छन्तीव[24] कामान्प्रदातुम्।[25]

---

१. वयं तु ... ओजस्वितमया परिक्रमणार्हया Sy.
२. समृद्धिसाधनया गवादिलक्षणया ऋत्विजमिव Sy.
३. दातारं त्वाम् Sy.
४. प्रीणयाम इति शेषः। यद्वा दक्षिणाशब्दो देयद्रव्यसामान्यवचनः। रातिशब्दो बन्धुवचनः। हिरण्यादिसारवद्द्रव्यप्रदानेन बन्धुं यथा वशीकुर्वन्ति तद्वत् त्वां वशीकुर्म इत्यर्थः Sy.
५. येऽस्मदीयाः Sy.
६. स्तोतारः Sy.
७. ते, कर्मणि षष्ठी ।...त्वाम् Sy.
८. कामयन्ते, अस्तुवन्। याः स्तुतयस्त्वामेवाकामयन्तेति वा योजना Sy.
९. ०तारः D. धीतयुवक्षेपिष्ठस्य शीघ्रवरप्रदस्य ... (कर्मणि षष्ठी) ...वायुन् Sy.
१०. तां P.
११. तत्र दृष्टान्तः। मधुरस्य स्तन्यस्य लाभाय। वाजैः सारवद्भिरन्नविशेषैः Sy.
१२. तं यथाऽऽप्याययन्ति तद्वत् Sy.
१३. ०न्नैं P. हविर्लक्षणैरन्नैः Sy.
१४. वयं त्वां बहुकृतप्रदानाय स्तुत्या हविषाऽऽप्याययामः। त्वं तु दातव्यत्वेन प्रसिद्धं धनं सर्वदा देहीत्यर्थः Sy.
१५. VM. ignores च
१६. तव Sy.
१७. धनविशेषाः Sy.
१८. अतिशयेन प्रीणयितारः। तुष्यतेस्तोषः। ...यद्वा रायो दातयो बन्धवो बन्धुभूताः सखिभूता मरुतस्तोशतमाः। तोशतिर्वधकर्मा। 'नितोशयति निबर्हयति' (Ngh. 2. 19.) इति तन्नामसु पाठात्। तोशतमा हिंसितृतमा अवर्षकाणां मेघानाम् Sy. १९. प्रकर्षेण निर्वोढारः Sy.
२०. अपि Sy.
२१. ऋतमिति यज्ञनाम ।...यज्ञेच्छोर्यजमानस्य Sy.
२२. खलु Sy.
२३. देव P. द्योतनशीला मरुतः Sy.
२४. पुरा पूर्वं ...यज्ञगमनमिच्छन्तीव त आगत्य मृळयन्तु Sy.
२५. VM. ignores इन्द्र

प्रति प्र याहीन्द्र मीळ्हुषो नॄन्महः पार्थिवे सदने यतस्व ।
अध यदेषां पृथुबुध्नास एतास्तीर्थे नार्यः पौंस्यानि तस्थुः ॥६॥

प्रति प्र याहि। कामैर्यजमानान् सेक्तॄन्[1]। मरुतः[2]। प्रति। इन्द्र। गच्छ[3]। अथ तैः सह महांस्त्वम्[4]। पार्थिवे[5]। लोके[6]। गच्छ[7]। यस्मात्[8]। तव गमनध्यानानन्तरमेव[9][10]। मरुताम्[11]। पृथुमूलावबद्धा[12] नियुतश्च। एताः[13]। तव गमनाय स्वबलानि[14]। अधितिष्ठन्ति[15]। यथा। स्वामी। युद्धे[16]। बलानि[17] तद्वदिति[18]।

प्रति घोराणामेतानामयासां मरुतां शृण्व आयतामुपब्दिः ।
ये मर्त्यं पृतनायन्तमूमैर्ऋणावानं न पतयन्त सर्गैः ॥७॥

प्रति घोराणाम्। घोररूपाणाम्[19]। एतवर्णानाम्[20]। गच्छताम्[21]। आगच्छतां च[22]। शब्दैः[23]।

---

१. उदकसेक्तॄन् Sy.

२. जगन्नेतॄन् नराकारान्वा ।...मेघानां वृत्ररूपेण नराकारत्वं युक्तम् Sy.

३. अभिगच्छ Sy.

४. महांस्त्वम् M.
महतो मेघान् Sy.

५. पृथिवीत्यन्तरिक्षनाम Sy.

६. तत्सम्बन्धिनि स्थाने Sy.

७. प्रयत्नं कुरु। तैः सह युद्धयस्वेत्यर्थः। यद्वा हविष्प्रदातॄन्कर्मनिर्वाहकान् महतो यजमानान्प्रति गच्छ, गत्वा च पार्थिवे सदने देवयजने यतस्व। यत्नं कुरु हविर्भोजनाय Sy.

८. यदा Sy.

९. ०नं ध्या० M.

१०. अध, अपि Sy.

११. एषां त्वत्साहाय्यकारिणां मरुतां सम्बन्धिनः Sy.

१२. ०बुद्धाः M. विस्तीर्णमूलाः Sy.

१३. ०श्वेताः P. D. M. पृषद्वर्णा गन्तारो वाऽश्वाः Sy.

१४. अरेवशत्रोः Sy.

१५. ०ला...ति० M. तिष्ठन्ति। मेघानाक्रमन्ते। यद्वा। एषां मरुतां पृथुबुध्नासो बृहन्मूला एताः कृष्णवर्णा मेघास्तिष्ठन्ति। तत्र दृष्टान्तः। अर्योऽरणीयस्य स्वामिनः पौंस्यानि बलानि तीर्थे न राजवीथ्यां यथा तिष्ठन्ति तद्वत् Sy.

१६. युद्धमार्गे Sy.

१७. स्वब० M.

१८. द्वदिति M.

१९. हे इन्द्र ते सम्बन्धिनां घोराणां भयानकानां शब्दायमानानां वा Sy.

२०. एतव० M.

२१. अयमानानां गमनशीलानाम् Sy.

२२. आगन्तॄणां मरुताम् Sy.

२३. उप गुर्वादिसमीपे गम्यते ज्ञायत उपपद्यत इति वोपाब्दिर्वाक् Sy.

प्रतिश्रूयते[1]। मरुताम्[2]। ये[3]। मारकमिन्द्रम्[4]। पृतनामिच्छन्तम्। रवणैः[5]। प्रभिगच्छन्ति[6]। ऋणिनम्[7]। इव। अर्थविसर्गः[8]।

त्वं मानेभ्य इन्द्र विश्वजन्या रदा मरुद्भिः शुरुधो गोअग्राः ।
स्तवानेभिः स्तवसे देव देवैर्विद्यामेषं वृजनं जीरदानुम् ॥८॥

त्वं मानेभ्यः। त्वम्। मानपुत्रेभ्यः[9]। इन्द्र! विश्वजनहितया[10]। विलिख[11] ऋष्ट्या[12]। मरुद्भिः सह। अपः[13]। पशुमुक्ताः[14]। स्तूयमानैः। मरुद्भिः[15]। त्वं स्तूयसे[16]। देवेति[17]।[18]

I.170.

न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् ।
अन्यस्य चित्तमभि संचरेण्यमुताधीतं वि नश्यति ॥१॥

न नूनमस्ति। 'अगस्त्य इन्द्राय हविर्निरूप्य मरुद्भ्यः सम्प्रदित्साञ्चकार स[19] इन्द्र एत्य परिदेवयाञ्चक्रे[20]।

---

१. श्रूयते। कर्मणि कर्तृप्रत्ययः Sy.

२. मरुतः Sy.

३. मारस्तह महांस्त्वं पार्थिवे लोके गच्छ यस्मात्तव गमनध्यानानन्तरमेव मरुतां प्रतिमूलावबद्धा नियुतश्वेतास्तव गमनाय स्वबलान्यधितिष्ठन्ति यथा स्वामी युद्धे बलानि तद्वदिति P. इन्द्रं रवणैः etc. is omitted by P. मरणधर्माणम् Sy.

४. पृतनामात्मन इच्छन्तं वैरिणं मेघं वा Sy.

५. स्वरवणैः, उदकानिय(नं)मनसाधनैर्वा Sy.

६. पातयन्ति। तेषामेव ध्वनिः श्रूयत इत्यर्थः Sy.

७. पातने दृष्टान्तः...अधमर्णमिव। तं यथा पीडयित्वा तदीयं धनमपहरन्ति तद्वत्। एवं महानुभावा मरुतस्तवानुगा इतीन्द्रस्य स्तुतिः Sy.

८. सृष्टैः स्वकीयप्रहारविशेषैः Sy.

९. मानार्थम्। चित्तेनेत्यर्थः। तादर्थ्ये चतुर्थी Sy.

१०. विश्वे प्राणिन उत्पादनीया यस्य तादृशस्त्वं सर्वजनहितशक्त्या वा Sy.

११. विदारय Sy.

१२. मष्टया M.

१३. अपा M. शोकस्य रोधयित्रीः शोधिकाः Sy.

१४. गर्जितमुदकं यासां पुरतो यासां ता मेघपङ्क्तीः Sy.

१५. अन्यैर्मरुद्भिस्त्वदीयैर्वा Sy.

१६. उभयत्र कर्मणि कर्तृप्रत्ययः Sy.

१७. द्योतमान त्वम्...विद्यामेत्ययं व्याख्यातः Sy.

१८. VM. ignores विद्याम etc
Ms. D. puts the figure ॥१६९॥ here to indicate the end of one hundred and sixtyninth hymn. No such number is given in P. and M.

१९. P. adds ह after सः।

२०. परिदेवनप्रकारः प्रतिपाद्यते। इन्द्र आह Sy. N. 1.5.

'नूनमिति[1] विचिकित्सितार्थः[2]'। 'न। नूनम्। अस्त्यद्यतनम्[3]। नो[4] एव[5]। श्वस्तनम्[6]। कः। तत्। जानाति। यत्[7]। अभूतम्=भविष्यत्[8], यद्वस्तस्त्यं भवति तदेव विश्वसनीयं[9] भवति। अन्यस्य[10]। चित्तम्[11]। अभिसञ्चारि[12]। अपिच[13]। आध्यातमपि[14]। विनश्यति[15][16]।

---

१. न्नूनमिति M. नूनमत्र विचिकित्सार्थे Sy. निश्चयेन SKN.

२. नूनमिति विचिकित्सार्थीयो भाषायाम्। N. 1.5.
अद्यतनं यदस्ति तत्।...अत्र, अद्येति यद्यपि नास्ति तथाप्युत्तरवाक्ये श्व इति दर्शनादत्र, अद्येति गम्यते Sy.

३. तो P. नास्ति, अद्य मम हविरिति वाक्यशेषः SKN. विचार्यम्... ममैतत्तावदद्यतनं हविर्मम नास्तीति। नकारं दृष्ट्वाऽद्यतनशब्दोऽध्याहृत आचार्येण। प्रतिषेधे हि सति प्रतिषेध्येनावश्यं भवितव्यमिति। एते च मन्त्रैकदेशा एव सन्तोऽध्याहाराः पदातिरेकादध्ययनकाले नाधीयन्ते। ते त्वर्थनिर्वचनकाले प्रकाशयितव्याः Dur.

४. ऊशब्दोऽवधारणे Sy. नापि SKN.

५. N. 1.6. श्वस्तनमपि नैव नास्ति। अद्य यथाऽस्मदर्थं निरुप्तमस्मभ्यं नास्ति किल श्वः कथं लप्स्यत इति भावः Sy. अथापि स्याच्छ्वस्तनं भविष्यति। नो श्वः। इदं तावदस्मदर्थमेव निरुप्तं सदस्मत्तो व्यापन्नमथ श्वस्तने का प्रत्याशा Dur.

६. यदस्ति Sy.

७. अन्यस्मै निरुप्यान्यस्मै दत्तमिति...वैपरीत्यं तत्...यद्वा यदद्भुतं भावि कार्यं यदस्ति तत्को वेद। अद्य श्वो वा लभ्यत इत्याशा न कार्येत्युक्तं भवति Sy. अभूतमिवासीदित्यर्थः SKN. को हि नाम तद्वेव जानाति यदद्भुतमनुत्पन्नं कस्य भविष्यतीति मम वाऽन्यस्य वेति Dur.

८. यद्वस्तस्त्यं M.

९. विश्वजनीयं P. D. विश्वजननीयं M.

१०. अस्य M. कस्मात्? उच्यते। यस्मादन्यस्य SKN. कस्मात्पुनर्न विज्ञायते। अतो यस्मादन्यस्य Dur.

११. मानसं जानातीति शेषः Sy.

१२. सर्वतः सञ्चारि Sy. अभिसञ्चरणस्वभावकं चलमित्यर्थः SKN. सञ्चरणशीलमनवस्थितमित्यभिप्रायः Dur.

१३. आपि P. अवि M. उत शब्दोऽप्यर्थे। अधीतशब्दाच्च परो द्रष्टव्यः SKN. उत, अपि, अथेतिच्छन्दसि समानार्थाः Dur.

१४. आध्यामतपि P. चिन्तितमपि न दृश्यं किमु सङ्कल्पमूतम् Sy. आध्यातमपि मयाऽद्यतनं हविः SKN. एतदद्यतनं हविराध्यातमभिप्रेतं तन्मया ममैवमित्येव Dur.

१५. 'वर्तमानसामीप्ये वर्तमानवद्वा' (Pa. 3.3.131.) इति भूते लट्। विनष्टं मह्यं न दत्तमित्यर्थः SKN. तथापि विनश्यत्येव। अन्यस्मै प्रदीयते। तत्रैवं सति श्वस्तनमस्माकं भविष्यतीति कुत एतदिति समस्तार्थः Dur.

१६. न नूनमस्त्यद्यतनम्। नो एव श्वस्तनम्। अद्यास्मिन्नपि। द्युरित्यह्नो नामधेयम्। द्योतत इति सतः। श्व उपाशंसनीयः कालः। ह्यो हीनः कालः। कस्तद्वेद यदद्भुतम्। कस्तद्वेद यदभूतम्। इदमपीतरदद्भुतमभूतमिव। अन्यस्य चित्तम्। अभिसञ्चरेण्यमभिसञ्चारि। अन्यो नानेयः। चित्तं चेततेः। उताधीतं विनश्यतीति। (अप्याध्यातं विनश्यति) आध्यातमभिप्रेतम् N. 1.6; SKN. I. 66

किं न॑ इन्द्र जिघांससि॒ भ्रात॑रो म॒रुत॒स्तव॑ ।
तेभि॑ः कल्पस्व साधु॒या मा नः॑ स॒मर॑णे वधीः ॥२॥

किं न इन्द्र। अगस्त्य[1] इन्द्रमाह—किम्। अस्मान्[2]। इन्द्र[3]! त्वं जिघांससि[4]। मरुतो-ऽमी। भ्रातरः[5]। तव भवन्ति। तैः[6]। त्वमेकीभव[7]। साधुना[8] मार्गेण। मा। अस्मान्। सङ्ग्रामेण[9]। हिंसीः[10]। शौनकः—

किं न इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव ॥
मरुद्भिः सम्प्रकल्पस्व वधीर्मा नः शतक्रतो[11][12]!

किं नो॑ भ्रातरगस्त्य॒ सखा॒ सन्नति॑ मन्यसे ।
वि॒द्मा हि ते॒ तथा॒ मनो॒ऽस्मभ्य॒मिन्न दि॑त्ससि ॥३॥

किं नो भ्रातः। इन्द्र प्राह[13] 'किं नः' इति निगदव्याख्यानम्[14]। 'किं नो भ्रातरिति त्वस्या-मिन्द्रो मान्यमुपालभत्[15]' इति शौनकः।

अरं॑ कृण्वन्तु॒ वेदिं॒ सम॒ग्निमि॑न्धतां पु॒रः। तत्रा॒मृत॑स्य॒ चेत॑नं य॒ज्ञं ते॑ तनवावहै ॥४॥

अरं कृण्वन्तु। शौनकः—"अगस्त्यस्[16]त्वरमित्यृ[17]ग्भ्यां क्रुद्धमिन्द्रं प्रशामयत्" इति।

---

१. ०स्त्यम् P. इदमगस्त्यवाक्यम् Sy.
२. अनपराधिनः Sy.
३. इन्द्रं P. ४. हन्तुमिच्छसि Sy.
५. कथमवध्यत्वमित्यत आह-मरुतस्तव भ्रातरः, त्वया भोगप्रदानेन भरणीया इत्यर्थः। अतो वयमवध्या इत्युक्तं भवति। मरुतामिन्द्रभ्रातृत्वमेकस्मिन्नेवादितिगर्भ उत्पन्नत्वात्। सा चोत्पत्तिः पुराणेषु प्रसिद्धा Sy.
६. सन्तु भ्रातरस्ततश्च किमित्यत आह... तैर्मरुद्भिः सह Sy.
७. कल्पय हविर्भागं तैः सह युद्धं वा Sy.
८. साधुत्वम् Sy. ९. सङ्ग्रामे Sy.
१०. यद्वा लुप्तो दृष्टान्तः। सङ्ग्रामे यथा विरोधिनं हंसि न तथास्मानिति Sy.
११. शतक्रो P.
१२. BD. IV. 51 cd; 52 ab.
१३. इदमिन्द्रवाक्यम्। हे भ्रातर्हे अगस्त्य! हविष्प्रदानवरप्रदानाभ्यां परस्परोपकार-कत्वाद् भ्रातृत्वम्। तादृशस्त्वं, सखा सन्नस्मद्धितकार्यपि सन्, नोऽस्मान् किम-तिमन्यसे कस्मादपराधादतिक्रम्य मनुषे। अपलपसि। नायमपलापः किन्तु तथ्यमे-वेति चेदुच्यते, मन्तव्यं ते तव, मनो मानसं, यथा यथावस्तु, विद्मो जानीमः। कथं जानीमेत्युच्यते, अस्मभ्यमिन्न दित्ससि, अस्मदर्थं निष्पन्नमस्मभ्यं दातुं नेच्छस्येव। इवेवार्थे Sy. १४. ०गतो व्या० P.
१५. BD. IV. 52 cd.
१६. इदमिन्द्रवाक्यम्। अपरेऽगस्त्यवाक्यमाहुः Sy. १७. ०स्त्वमि त्यृ० M. ०त्पस्यां सूक्त० BD. IV. 53 a–b

शीघ्रमृत्विजः[1]। वेदिम्। अलङ्कुर्वन्तु[2]। समिन्धतां[3] च। अग्निम्। आहवनीये[4] तस्मिन्[5]। हविषस्त[6]। प्रज्ञापनं[7] भवत्वासन्नस्य। यज्ञम्। तुभ्यम्[8]। तनवावहै[9][10]।

त्वमीशिषे वसुपते वसूनां त्वं मित्राणां मित्रपते धेष्ठः।
इन्द्र त्वं मरुद्भिः सं वदस्वाध प्राशान ऋतुथा हवींषि ॥५॥

त्वमीशिषे[11]। त्वम्। ईशिषे[12]। वसुपते[13]! वसूनाम्। त्वम्। मित्राणाम्[14]। मित्रपते[15]! धातृतमः[16]। इन्द्र! त्वमेव[17]। मरुद्भिः[18]। प्रथमं संवादं कुरु[19]। तदनन्तरम्[20]। काले[21]। हवींषि[22]। प्रकर्षेण भुङ्क्ष्वेति[23][24]।

I.171.1.

प्रति व एना नमसाहमेमि सूक्तेन भिक्षे सुमतिं तुराणाम्।
रराणता मरुतो वेद्याभिर्नि हेळो धत्त वि मुचध्वमश्वान् ॥१॥

प्रति व एना।

---

१. हे ऋत्विजो यूयमगस्त्योऽङ्गीकृतवांस्तस्मात् Sy.
२. सम्मार्जनपर्युक्षणादिना परिचरन्तु Sy.
३. समिद्धतं M. इध्मप्रक्षेपेण प्रज्वालयन्तु Sy. ४. पुरः पुरस्तादग्निमाहवनीयादिकम् Sy. ५. अग्नौ Sy.
६. अमरणलक्षणस्य देवत्वस्य Sy. च seems to be unnecessary.
७. प्रज्ञापकम् Sy.
८. ते त्वदीयं त्वं चाहं च Sy.
९. ०महै P.D. अगस्त्यवाक्यपक्षे शिष्टमविशिष्टम्। तत्र वेद्याममृतस्य तत्साधनस्य हविषो वा चेतनं प्रज्ञापनमासादनं कुरुत। आवां पत्नीयजमानावध्वर्युयजमानौ वा हे इन्द्र ते त्वदर्थं यज्ञं तनवावहै Sy.
१०. VM. ignores पुरः
११. इदमगस्त्यवाक्यम् Sy.
१२. त्वम्। ईशिषे is omitted by M. ईश्वरो भवसि सर्वस्य Sy.
१३. अतिप्रभूतानां पुरोडाशाज्यादिधनानां स्वामिन् हे इन्द्र।...वृत्त्यवृत्तिभ्यां बहुत्वं नित्यसम्बन्धश्च प्रतिपाद्यते। यद्वा हे वसुपते वसूनामीशिष इति योजना। द्वितीयो वसुशब्दोऽनुवादो वा Sy.
१४. इन्द्राणां P. १५. मित्रवते P.M. अस्मदादिमित्रस्य नित्यं पालकेन्द्र Sy.
१६. धातु P. सर्वस्यातिशयेन धारकोऽसि Sy.
१७. उक्तमहिमस्? (०मा)त्वम् Sy.
१८. तैः साकम् Sy.
१९. कुरुत D. सम्यक्कृतमिति वदस्व Sy.
२०. अपि च Sy. २१. ऋतावृतौ। उपलक्षणमेतत्कालस्य। तत्तद्यागकाले Sy.
२२. आज्यचर्वादीनि Sy.
२३. इति is omitted by M.
२४. Ms. D. puts the figure ॥१७०॥ here to indicate the end of one hundred and seventieth hymn. No such number is given in P. and M.

'आदात् संवननं कृत्वा तेभ्य एव च[1] तद्धविः ॥

सुते चकार शोभे च तानिन्द्रः[2][3] सोमपीथिनः[4] ।

तस्माद् विद्या[5] निपातेन ऐन्द्रेषु मरुतः स्तुतान् ॥

प्रीतात्मा पुनरेवर्षिस्तांस्तुष्टाव पुनः[6] पृथक् ।

मरुतः प्रति सूक्ताभ्यामिन्द्रं षड्भिः परैस्तु सः ॥[7]' इत्युक्तम् ।

प्रत्येमि[8] । युष्मान् । अहम् । अनेन । नमस्कारेण[9] । सुवचनेन[10] । याचे[11] । शोभमानां[12] मतिम् । शीघ्रगामिनाम्[13] । हे मरुतः ! रममाणेन[14] तदर्थम् । मदीयाभिः स्तुतिभिः[15] । युष्मदीयं क्रोधम्[16] । निधत्त त्यजत[17] । अथ गमनार्थं विमुञ्चध्वम्[18] । अश्वान् ।

**एष वः स्तोमो मरुतो नमस्वान्हृदा तष्टो मनसा धायि देवाः ।**
**उपेमा यात मनसा जुषाणा यूयं हि ष्ठा नमस इद्वृधासः ॥२॥**

एष वः । एषः[19] । युष्माकम्[20] । स्तोमः । अन्नवान्[21] । मया हृदयेन[22] । अन्यूनानतिरिक्तं कृतः[23] । मया मनसा[24] । धार्यते[25] । तथा सति इमं स्तोत्रम्[26] । उपागच्छत[27] । मनसा[28] । सेवमानाः । यूयम्[29] ।

---

१. Omitted by D. च BD.
२. तानीन्द्रः P. D.
३. ०न्द्र M.
४. ०पीथनः M.
५. विद्याम्नि० BD.
६. पृथक् BD.
७. BD. IV. $53^{c-d}$, 54, 55.
८. अभिगच्छामि Sy.
९. केन साधनेन ? नमसा नमस्कारेण हविषा वा । नम इत्यन्ननाम Sy.
१०. सव० D. शोभनवचनेन स्तुतिरूपेण Sy.
११. इन्द्रस्यैव पुनर्हविष्प्रदानादिदं याच्यते Sy.
१२. शोमानां P. शोभनमतिमनुग्रहबुद्धिम् Sy.
१३. त्वरमाणानां शत्रूणां हिंसकानां वा युष्माकम् Sy.
१४. रममाणेन मनसेत्थम्भूताः सन्तः Sy.
१५. ०ति (भिः) M. वेदितव्याभिः स्तुतिभिः Sy.
१६. क्रोधनामैतत् । क्रोधं युष्मदभिक्रमजनितम् Sy.
१७. निकृष्टं धारयत, त्यजतेत्यर्थः Sy.
१८. ०मना . . . वि० M. रथेभ्यो वियोजयत । क्रोधात्पुनर्गमनं मा कुरुतेत्यर्थः Sy.
१९. इदानीं क्रियमाणप्रकारः Sy.
२०. युष्मदर्थं इत्यर्थः Sy.
२१. कीदृशोऽयम् ? . . . नम इत्यन्ननाम । हविर्लक्षणान्नवान् । न केवलं स्तुतिमात्रं भक्षणाय हविरपि युष्माकमित्यर्थः Sy.
२२. युष्मन्निवेदनबुद्ध्या Sy.
२३. सम्पादितस्तादृशः स्तोमः Sy.
२४. मनसा, अस्मदनुग्रहवता चित्तेन Sy.
२५. धार्यताम् Sy.
२६. एनां स्तुतिं तद्धविश्च Sy.
२७. ०तं M. उपागच्छतैव । मा विलम्बं कुरुत Sy.
२८. आदरया बुद्ध्या Sy.
२९. ०यम M.

हि[1]। भवथ। अन्नस्य[2]। वर्धयितारः[3]।

स्तुतासो नो मरुतो मृळयन्तूत स्तुतो मघवा शंभविष्ठः।
ऊर्ध्वा नः सन्तु कोम्या वनान्यहानि विश्वा मरुतो जिगीषा ॥३॥

स्तुतासः[5]। स्तुताः[6]। मरुतः। अस्मान्। सुखयन्तु। अपि च। स्तुतः। मघवा[7]। सुखस्य[8] भावयितृतमः[9]। कमिपर्यायः[10] कुमिः, ऊर्ध्वानि[11]। सन्तु[12]। अस्माकम्। कमनीयानि[13]। अरण्यानि[14]। सर्वाण्यपि[15]। अहस्सु[16]। हे मरुतः! भवतां गमनेच्छास्तु[17]।

अस्मादहं तविषादीषमाण इन्द्राद्भिया मरुतो रेजमानः।
युष्मभ्यं हव्या निशितान्यासन्तान्यारे चकृमा मृळता नः ॥४॥

अस्मादहम्। अस्मात्[18]। प्रवृद्धात्[19]। इन्द्रात्[20]। अहम्। भयात्[21]। पलायमानः[22]। हे मरुतः[23]! कम्पमानः[24]। तथा सति युष्मभ्यम्। हव्यानि[25]। अथमं सुसंस्कृतानि[26]। आसन्। तानि[27] वयं भीत्या[28]। दूरे। कृतवन्तः। सुखयत। अस्मानस्वाधीनान्[29]।

---

१. खलु Sy.
२. अन्नस्य हवीरूपस्य Sy.
३. अतो गन्तव्यमेव। इत् पूरणः Sy.
४. VM. ignores मरुतः। वेवाः। इत्
५. Omitted by P. D.
६. स्तुताः सन्तः Sy.
७. मघमिति धननाम। अस्मद्दातव्यबहुधनेन तद्वानिन्द्रः Sy.
८. सुतस्य P.
९. सुखस्य भावयितृतमः सन्नस्मान् मृळयतु Sy.
१०. कमिवप० D.
११. उन्नतानि, उपर्युपरि श्रिया यशसा चोत्कृष्टानि Sy.
१२. जिगीषा जेतुमिष्टानि जेतव्यानि च सन्त्विति वा योज्यम्। एवं कृत्वा मरुत इन्द्रश्च सुखयन्त्वित्यर्थः Sy.
१३. काम्यानि स्पृहणीयानि Sy.
१४. सर्वैः सम्भजनीयानि Sy.
१५. सर्वाणि Sy.
१६. दिवसानि (साः) Sy.
१७. गम० M.
जिगातेर्गतिकर्मणो जिगीषा। जिगीषितव्यानि प्राप्तव्यानि, उत्तरत्रानुभूयमानानि Sy.
१८. प्रसिद्धात् Sy.
१९. बलवतः Sy.
२०. तत्सकाशात् Sy.
२१. भीत्या Sy.
२२. पुरतः स्थातुमशक्तः Sy.
२३. हे मरुतः शृणुत Sy.
२४. वेपमानश्चाभवम् Sy.
२५. यानि ... हवींषि Sy.
२६. संस्कृतानि Sy.
२७. तान्येव Sy.
२८. इन्द्रभयात् Sy.
२९. ०नात् P.M. अतो नोऽस्माननपराधिनः Sy.

येन॒ माना॑सश्चि॒तय॑न्त उ॒स्रा व्यु॑ष्टिषु॒ शव॑सा॒ शश्व॑तीनाम् ।
स नो॑ म॒रुद्भि॑र्वृषभ॒ श्रवो॑ धा उ॒ग्र उ॒ग्रेभि॒ः स्थवि॑रः सहो॒दाः ॥५॥

येन मानासः । येनेन्द्रेण । प्रज्ञापकाः[1] । रश्मयोऽर्थान्[2] । उषसाम्[3] । व्युष्टिषु[4] । वेगेन[5] । प्रज्ञापयन्ति[6] । स[7] त्वम् । अस्मभ्यम् । मरुद्भिः सह[8] । वर्धितः[9] ! अन्नम्[10] । देहि[11] । उद्गूर्णः[12] । उद्गूर्णः[13] । स्थविरः[14] । बलस्य[15] दाता ।

त्वं पा॑हीन्द्र॒ सही॑यसो॒ नॄन्भवा॑ म॒रुद्भि॒रव॑यातहेळाः ।
सु॒प्र॒के॒तेभि॑ः सास॒हिर्दधा॑नो वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥६॥

त्वं पाहीन्द्र । त्वम् । रक्ष । इन्द्र ! अभिभवितॄन्[16] । नेतॄन्मरुतः[17] । भव च । मरुद्भिः सह[18] । अपगतक्रोधः[19] । शोभनप्रज्ञानैः । अभिमतानि[20] प्रयच्छन्[21] । शत्रूणामभिभविता[22] ।

---

१. ०को P. D. M. मान्यास्त्वयाऽभिमानिता वा Sy.
२. ०थोत्थान् D.M.
३. नित्यानां बह्वीनामुषसाम् Sy.
४. प्रकाशेषु सत्सु Sy.
५. बलभूतेन त्वयाऽनुगृहीताः Sy.
६. चेतयन्ते । प्राणिनां स्वस्वव्यवहाराय प्रज्ञापयन्ति । ऐन्द्रयां दिशि तेनैवानुगृहीता उषसो रश्मय उद्गच्छन्तीति प्रसिद्धम् Sy.
७. तादृशः Sy.
८. सहितः Sy.
९. वर्धितस्त्विन्द्र ! Sy.
१०. ०तातोन्नं P. ०तारोन्नं D. ०तरं नं M. सर्वत्र श्रूयमाणमन्नम् Sy.
११. धेहि, स्थापय । देहीत्यर्थः Sy.
१२. उद्गूर्णबलः Sy.
१३. कीदृशैर्मरुद्भिः ।...क्रूरबलैः Sy.
१४. पुरातनः Sy.
१५. पराभिभवसामर्थ्यं बलं सहस्तस्य दाता ...एवम्महानुभावोऽन्नं देहि Sy.
१६. सहस्वितमांस्त्वदनुग्रहेणातिप्रवृद्धबलान् Sy.
१७. मनुष्यानस्मान् मरुतो वा Sy.
१८. साकम् Sy.
१९. अवग० D. आग० M. अपगतमन्युर्भव । मरुत्सु वा तथा भव Sy.
२०. अभिभवितानि P.D. अस्मदभिमतस्य Sy.
२१. धारयिता भवेति शेषः Sy.
२२. VM. ignores विद्याम etc. Ms. D. puts the figure ॥१७१॥ here to indicate the end of one hundred and seventyfirst hymn. No such number is given in P. and M.

I.172.

चित्रो वो॑ऽस्तु याम॑श्चित्र ऊती सु॑दानवः । मरु॑तो अहि॑भानवः ॥१॥

चित्रो वः। हे[1] सुदानाः! वः[2]। चित्रम्[3]। यानमिह[4]। अस्तु[5]। रक्षणार्थम्[6]। मरुतः! आहन्तृदीप्तयः[7]!

आरे सा वः सुदानवो मरु॑त ऋञ्जती शरुः । आरे अश्मा यमस्य॑थ ॥२॥

आरे सा वः। युष्मान्[8]। प्रलङ्कुर्वती[9]। हिंसित्री[10] ऋष्टिः। दूरे[11] भवतु। तथा, अश्मा[12] च। यम्। यूयं क्षिपथेति[13]।

तृणस्कन्दस्य नु विशः परि॑ वृङ्क्त सुदानवः ।
ऊर्ध्वान्नः कर्त जीवसे॑ ॥३॥

तृणस्कन्दस्य। तृणस्कन्दस्य[14] राज्ञः। विशोऽस्मच्छत्रुभूतान्[15]। बाधध्वम्[16]। सुदानाः[17]!

---

१. P. begins गायत्साम गायति साम हिंस ह। न केवलमागमनमेव चित्रं किन्तु हे सुदानवः शोभनदानाः Sy.

२. ०दान वः P. D. युष्माकम् Sy.

३. चायनीयः पूज्य आश्चर्यभूतो वा Sy.

४. अस्मद्यज्ञागमः Sy.

५. P. adds रक्षणास्तु after अस्तु भवतु Sy.

६. ऊत्यै रक्षणायेष्टतर्पणाय वा युक्तश्च भवतु। त्वदागमनं शीघ्रमस्तु। अभिमतप्रदं चास्त्वित्यर्थः Sy.

७. अहीयमानप्रकाशाः, युष्माकं सम्बन्धी चित्रः स आगमः Sy.

८. हे सुदानवः शोभनदाना मरुतो वो युष्माकं सम्बन्धिनी Sy.

९. ०न्ति P. प्रसाधयन्ती स्वतेजसा स्वात्मानमलङ्कुर्वती प्रसिद्धिं प्राप्नुवाना वा सा प्रसिद्धा Sy.

१०. हिंसिका Sy.

११. दूरनामैतत्। दूरे भवतु, मां न प्राप्नोतु। यद्वा। आरेशब्द आराच्छब्दपर्यायः। स च दूरे समीपे च वर्तते। अत्र समीपवचनः। यमस्मत्तोऽन्यमस्यथ तं वैरिणमस्माकमुपलोपमः कठिन आयुधविशेष आरे समीपं प्राप्नोतु Sy.

१२. ०स्मा (श्मा) M. व्यापक आयुधविशेषः Sy.

१३. VM. ignores सा। सुदानवः। मरुतः and explains आरे once only.

१४. Omitted by P. तृणवच्चलनस्वभावस्य शुष्यमाणस्य वा मम Sy.

१५. पुत्रभृत्यादिरूपाः प्रजाः Sy. ०च्छत्रुभूताः is suggested for ०च्छत्रुभूतान्

१६. ०धस्व M. नु क्षिप्रम्...परिवर्जयत। बाधापरिहारेण रक्षत। यद्वा। उक्तलक्षणकालस्यासुरविशेषस्य वा प्रजाः परिवर्जयत Sy.

१७. शोभनदानाः Sy.

ऊर्ध्वान्। अस्मान्। कुरुत। जीवनाय[1]।[2]

## I.173.

**गायत्साम नभन्यं१ यथा वेरर्चाम तद्वावृधानं स्वर्वत्।**
**गावो धेनवो बर्हिष्यदब्धा आ यत्सद्मानं दिव्यं विवासान् ॥१॥**

गायत् साम। गायति[3]। साम[4]। हिंसनसाधनम्[5]। 'साम वै रक्षोहा' इति[6] ब्राह्मणम्। यथा[7]। जानात्युद्गाता[8] वयं[9] च[10]। तदनुशंसने[11] नाम। वर्धमानम्। शोभनयुक्तम्[12]। गावः। प्रीणयित्र्यः[13]। यज्ञे[14]। अनुपहिंसिता[15] हविष्प्रदानेन। यदा। दिवि भवम्[16]। सधानमिन्द्रं[17], सीदन्ति यस्मिन्देवास्तम्[18]। परिचरन्ति[19] तदानीं गायन्तीति[20]।[21]

---

१. चिरजीवनाय Sy.

२. VM. ignores नु। परि
Ms. D. puts the figure ॥१७२॥ here to indicate the end of one hundred and seventysecond hymn. No such number is given in P. and M.

३. गायत्युद्गाता Sy.

४. गायत् साम। गायति। साम is omitted by P. तादृशं साम Sy.

५. नसा० P. नभन्यं नभस्यं नभति भवं नभोव्यापिनं, हिंसकं वा राक्षसादिकस्य। नभतिर्वधकर्मा। 'नभते, अर्दयति' (Ngh.2.19.) इति वधकर्मसु गणनात् Sy.

६. सामक्षणो वेति P. ०क्षोवेति D. TA. 5.9.4.

७. येन प्रकारेण Sy.

८. वेत्ति Sy.

९. जातात्युगतां P. जानात्यु० D.

१०. तथाऽर्चाम पूजयाम शंसामेत्यर्थः। स्तुतमनुशंसतीति न्यायात्। यद्वा तदुक्तलक्षणं साम वावृधानं सर्वत्र यथा भवति तथाऽर्चाम Sy.

११. वनु० P. तस्माद्यतः स्तौति ततः कारणात् Sy. ०शंसनम् is suggested for ०शंसने

१२. फलभूतेन स्वर्गेण तद्वच्छस्त्रम् Sy.

१३. दोग्ध्र्यः Sy.

१४. यजे P. यज्ञैः M.

१५. अपहिं० M. अहिंसिताः Sy.

१६. इन्द्रं त्वाम् Sy.

१७. सम्मानमि० P. D. समानमि० M.

१८. सीदन्तम् Sy.

१९. विवासतिः परिचरणकर्मा। आगत्य परिचरन्ति क्षीरं दुहन्ति तथाऽर्चाम Sy.

२०. गायती० is suggested for गायन्ती०

२१. VM. ignores अर्चाम। आ।

अर्च॒द्वृषा॒ वृष॑भिः॒ स्वेदु॑हव्यैर्मृ॒गो नाश्नो॒ अति॒ यज्जु॑गु॒र्यात् ।
प्र म॑न्द॒युर्म॒नां गू॑र्त॒ होता॒ भर॑ते॒ मर्यो॑ मिथु॒ना यज॑त्रः ॥२॥

अर्चद् वृषा।[1] अर्चति।[2] इन्द्रः।[3] मरुद्भिः।[4] स्वभूतसोमहविष्कैः।[5] मृगः।[6] इव।[7] अशनपरः।[8] यदि।[9] अत्यन्तम्।[10] उद्युक्तो भवेत्।[11] प्रभरते च।[12] मदयिता।[13] स्तुतीनाम्।[14] हे उद्गूर्ण![15] होता।[16] मिथुनानि[17] याज्यां[18] चानुवाक्यां च।[19] यजनकुशलः। मनुष्यः।

नक्ष॒द्धोता॒ परि॒ सद्म॑ मि॒ता यन्भर॒द्गर्भ॒मा श॒रदः॑ पृथि॒व्याः ।
क्रन्द॒दश्वो॒ नय॑मानो रु॒वद्गौर॒न्तर्दू॒तो न रोद॑सी चर॒द्वाक् ॥३॥

नक्षद्धोता। परितः।[20] व्याप्नोति। होता।[21] सम्मितानि।[22] देवयजनानि,[23] यत्र यत्र[24] कार्यं[25] तत्र गच्छन्। अथेन्द्रः शरदः।[26] गर्भमुदकम्।[27] पृथिव्याः।[28] आहरति।[29]

१. अर्चित P. अर्चन्ति D. अर्चयतीन्द्रम्। यद्वा वृषा फलस्य वर्षिताऽयमिन्द्र उक्तलक्षणैरध्वर्य्वादिभिरर्च्यते Sy.
२. हविषां वर्षिताऽयं यजमानः Sy.
३. वर्षकैर्हविष्प्रदातृभिरध्वर्य्वादिभिर्विशिष्टः सन् Sy.
४. ०कै P. स्वायत्तेद्धहविष्कैः। यद्वा स्वयम्प्राप्तेन्धकं हव्यं येषां तादृशैः Sy.
५. हरिणादिरिवायमिन्द्रोऽश्नोऽशनशीलः सन् Sy.
६. अशान० P. व्यापकः पानाद्यर्थं धावन् Sy.
७. यत् D. यस्मादेवं तस्मादर्चति। यद्वा। अयमिन्द्रो यद् यथाऽश्नो मृग इवाति जुगुर्याद् भक्षयेत्तथाऽर्चतीत्यर्थः Sy.
८. अत्यर्थम् Sy.
९. उद्युङ्क्ते हविर्भक्षणाय। यथा मृगः क्षुत्पिपासार्दितः शीघ्रमुद्युङ्क्ते तथाऽयमिन्द्रोऽपि Sy.
१०. प्रकर्षेण सम्पादयति, तस्मादर्चतीत्यर्थः Sy.
११. ०तैव M.
१२. स्तुतियुक्तः Sy.
१३. मननं स्तोत्रमिच्छतां देवानाम् Sy.
१४. हृ M.
१५. इद्गूर्ण M.
१६. एतन्नामक ऋत्विक् Sy.
१७. युग्मरूपाणि याज्यापुरोनुवाक्यादीनि मिथुनी वा जायापतिरूपः सन् Sy.
१८. यु० P.
१९. यागनिष्पादकः सन् Sy.
२०. परि यन् परितो गच्छन् Sy.
२१. होमनिष्पादकोऽयमग्निः Sy.
२२. ०ता P. परिमितानि Sy.
२३. ०यजमानानि M. सदनानि गार्हपत्यादिस्थानानि Sy.
२४. कार्यः D.
२५. P. adds तत्र कार्यं before तत्र।
२६. शदः P. व्याप्य च . . . संवत्सरसम्बन्धिनम् Sy.
२७. गर्भस्थानीयमन्नं हविर्लक्षणम् Sy.
२८. भूम्याश्च सम्बन्धिनम् Sy.
२९. स्वीकरोति। सम्भरति वा। संवत्सरपर्यन्तं वर्षितं भूम्यामुत्पन्नमित्यर्थः। यद्वा संवत्सरसम्बन्धिनं वसन्तादिकाले ज्योतिष्टोमादिषु दीयमानं पार्थिवं हविर्भरत्। 'वसन्ते वसन्ते ज्योतिषा यजेत' इति श्रुतेः Sy.

शब्दायन्[1]। अश्वः[2]। नीयमानः[3]। रुवन्निव च। गौरिन्द्रः[4] शब्दं कुर्वन् भवति[5]। तस्य वाक्[6]। द्यावापृथिव्योः[7]। अन्तः[8]। दूतः[9]। इव। चरति[10] गर्जितलक्षणा।

ता कर्माषतरास्मै प्र च्यौत्नानि देवयन्तो भरन्ते ।
जुजोषदिन्द्रो दस्मवर्चा नासत्येव सुग्म्यो रथेष्ठाः ॥४॥

ता कर्म[11]। तानि। कुर्मः[12]। अभिलषिततराणि[13]। इन्द्राय[14]। प्रभरन्ते[15]। बलकराणि[16]। ऋत्विजो[17] हवींषि[18]। सेवतामुभयान्यपि। इन्द्रः। दर्शनीयवर्चाः[19]। अश्विनाविव[20]। रथे तिष्ठन्[21]। सुखकरः[22]।

तमु ष्टुहीन्द्रं यो ह सत्वा यः शूरो मघवा यो रथेष्ठाः ।
प्रतीचश्चिद्योधीयान्वृषण्वान्ववव्रुषश्चित्तमसो विहन्ता ॥५॥

तमु ष्टुहि। तम्। एव। स्तुहि[23]। इन्द्रम्। यः। युद्धेषु[24] गच्छति। यश्च। शृणाति[25] शत्रुम्। धनवान्[26]। यश्च। रथे तिष्ठति[27]। यश्च, अभिमुखान्[28]। अपि। शत्रून्[29] अत्यन्तं युद्धयति(ते)[30]।

१. शब्दायमानः is suggested. लुप्तोपममेतत्। अश्व इव क्रन्दति हर्षातिशयात् Sy. २. इशः P.
३. नियः P. नयन्निन्द्राय हविर्भरम् Sy.
४. नीय...गौ॰ M. गन्ता, उद्वृत्तो वृष इव Sy.
५. रौति, शब्दायते Sy.
६. वाभ्या P. वा M. स्तूयमानः स्तुवन्वा देवान् Sy.
७. द्यावा॰ M. रोदस्योः Sy.
८. मध्ये, रोदस्योरन्तरा Sy.
९. वार्ताहरो दूत इव Sy.
१०. चरति गच्छति। हविःस्वीकाराय पृथिवीं तत्प्रापणाय द्युलोकं च परिभ्रमतीत्यर्थः Sy. ११. कर्मा P.
१२. सम्पादयामः Sy.
१३. अर्थतराणि व्याप्ततराणि वा हवींषि Sy.
१४. इन्द्रया P. इन्द्राय तदर्थम् Sy.
१५. प्रकर्षेण सम्पादयन्ति। तदुभयमपि सम्पादयाम इत्यर्थः Sy.
१६. च्यावयितॄणि दृढानि स्तोत्राणि कर्माणि स्वकीयानि सामर्थ्यानि वा Sy.
१७. ऋत्विजः P. देवानात्मन इच्छन्तो यजमानाः Sy.
१८. अस्मत्कृतं स्तोत्रादि कर्म Sy.
१९. ॰यमच्चा M. दर्शनीयतेजाः शत्रुक्षपणबलो वा Sy.
२०. नासत्याविव...तौ हि द्यावापृथिव्यात्मानौ, ताविव Sy.
२१. रथे वर्तमान एवम्भूतः सन् Sy.
२२. सुगम्यः सुखेन गन्तुं शक्यः Sy.
२३. हे होतः स्तुतिं कुरु Sy.
२४. यः खलु सत्वाऽतिप्रभूतबलः। यद्वा सत्वा सादकः शत्रूणाम् Sy.
२५. शौर्योपेतः Sy.
२६. बलवानप्रवान्वा Sy.
२७. रथे वर्तमानः Sy.
२८. प्रत्यभिमुखम् Sy.
२९. योद्धुरपि Sy.
३०. योद्धृतमः Sy.

वर्षणवान्[1]। वारकस्य[2]। अपि। तमसः[3]। वारयिता[4] [5]।

प्र यदित्था महिना नृभ्यो अस्त्यरं रोदसी कक्ष्ये नास्मै।
सं विव्य इन्द्रो वृजनं न भूमा भर्ति स्वधावाँ ओपशमिव द्याम् ॥६॥

प्र यदित्था। प्रकर्षेण[6]। विद्यते[7]। यत्। इत्थम्। महत्त्वेन[8]। मनुष्येभ्यस्तेजः[9]। तस्मै तेजसे[10]। द्यावापृथिवी[11]। सञ्चरणस्थाने[12]। न। प्रालम्बतः[13]? तेन तेजसेन्द्रः। भूमिम्[14]। आच्छादयति[15]। यथा। बलं सेनालक्षणं[16] निष्क्रान्तम्। बिभर्ति। अन्नवानिन्द्रः[17]। संदंशः? इव[18]। दिवम्, स्थूणा वोपमाः[19]।

समत्सु त्वा शूर सतामुराणं प्रपथिन्तमं परितंसयध्यै।
सजोषस इन्द्रं मदे क्षोणीः सूरिं चिद्ये अनुमदन्ति वाजैः ॥७॥

समत्सु त्वा। समत्सु[20]। त्वा[21]। शूर[22]! सताम्[23]। बहुकुर्वाणम्[24]। अतिशयेन प्रकृष्टमार्गे[25]

---

१. घर्ष० M. वृषाणो वर्षितारो वज्रादय-स्तद्वान्। 'वृषा ते वज्र उत ते वृषा रथः' (RV. II.16.6.) इति हि निगमः Sy.
२. आवरकस्यापि Sy.
३. मेघादेः Sy.
४. ०तः M. विशेषेण घातकः। यस्मादेवं महानुभावस्तस्मात्स्तुहि Sy.
५. VM. ignores ह।
६. प्रभवति। ईष्टे स्वर्गादिप्रदानेन रक्षितुम् Sy.
७. M. adds इदम् after यत्; य इन्द्रः Sy.
८. स्वैश्वर्येण Sy.
९. नेतृभ्यः कर्मनिर्वाहकेभ्यो यजमानेभ्यः Sy.
१०. अस्मै रक्षकायेन्द्राय Sy.
११. द्यावापृथिव्यौ Sy.
१२. कक्ष्यवते सती सञ्चाराय Sy.
१३. प्रलम्भवतः is suggested. नालं न पर्याप्ते। जगतोऽधीशस्येन्द्रस्य सञ्चारायाल्पत्वाद् द्यावापृथिव्यौ न पर्याप्ते इत्यर्थः। सृष्टादपि स्रष्टुर्महिम्नोऽधिकस्यादिति भावः Sy.
१४. भूमिं भूतानि वा Sy.
१५. तद्यथाऽऽवृणोति तथाऽयमपि स्वतेजसा सं विव्ये सम्यगावृणोति लोकत्रयम् Sy.
१६. लक्षणं is omitted by P. वृजेः वर्तनार्थस्येदं रूपम्। तदिव Sy.
१७. वृष्टिलक्षणोदकवान्वा Sy.
१८. संवशः D. ईषदुपशेत इत्योपशं शृङ्गं तद्वृषभ इव। यद्वा परस्परं समीपे वर्तमानं क्षित्यन्तरिक्षाख्यं लोकद्वयमोपशं तदिव द्यां बिभर्ति। लोकत्रयमपि बिभर्तीत्यर्थः Sy.
१९. ०णावोपमाः P.
२०. सङ्ग्रामेषु Sy.
२१. त्वामेवाश्रित्य वर्तमानानाम् Sy.
२२. शौर्योपेतेन्द्र! Sy.
२३. प्राणिनाम् Sy.
२४. उरूण्यतिप्रभूतानि बलादीनि कुर्वाणम् Sy.
२५. प्रकृष्टमार्गतमं सुकृतिनामुत्तममार्गभूतम् Sy.

जिगमिषुम्[1]। शत्रूणां परिहिंसनाय=परिपेषणाय[2]। सोमेन मदयितुम्[3]। ईश्वरम्। प्रजाः[4]। ऐक-मत्यं गता[5] भवन्ति। स एनम्। प्राज्ञम्[6]। अन्नैः[7]। च। तर्पयन्ति[8] तांश्चानुमन्यते[9]।

एवा हि ते शं सवना समुद्र आपो यत्त आसु मदन्ति देवीः ।
विश्वा ते अनु जोष्या भूद्गौः सूरींश्चिद्यदि धिषा वेषि जनान् ॥८॥

एवा[10] हि ते[11]। समुन्दने[12] सति। त्रीण्यपि सवनानि[13]। एवम्। प्रजानां[14] शङ्कराणि[15] भवन्ति। यत्[16]। त्वदीयाः। इमा[17] आपः। देव्यस्त्वया[18] विसृष्टाः। आसु नदीषु[19]। मदन्ति[20]। स त्वं यदि। प्राज्ञान्[21]। अस्मान्। प्रज्ञया[22]। गच्छसि[23]। ततः सर्वा। ते[24]। वाक्[25]। सेव्या[26]। अनन्तरमेव[27]। भवति[28]।

---

१. ०षुः P. इन्द्रं शत्रूणां वारकम् Sy.
२. परिवेष० P. परिषवणाय M. अवतंसी-कर्तुं भूषणीकर्तुम्। भूषयितुं वा निमित्ते-ऽर्थे Sy.
३. तव मदार्थं च Sy.
४. क्षोण्यो विशः परिजना मरुतः प्रयतन्ते Sy.
५. गता D. सह सेवमानाः समानप्रीतयो वा Sy.
६. प्रज्ञाम् M.
७. बलैः Sy.
८. अनुकूलं मादयन्ति सङ्ग्रामे मरुतस्त्वमेव स्वामिनं कृत्वा मादयन्ति हर्षयन्तीत्यर्थः। यद्वा ये यजमाना वार्हैर्हविर्भिर्मादयन्ति ते समानप्रीतियुक्तास्तव मनुष्यभूता ऋत्विजो यजमानभूताः प्रजाः समत्सु सहमादनस्थानेषु यागेषूक्तलक्षणविशिष्टं त्वामेव पूजयितुं तव मा (म) दाय च प्रयतन्ते Sy.
९. ०नुमन्यते P.
१०. एवं हि सति Sy.
११. तव सम्बन्धीनि Sy.
१२. उदकसमुद्रवणापादानभूतेऽन्तरिक्षे Sy.
१३. सूयते सोमोऽत्रेति सवनानि सोमयागाः Sy.
१४. प्रजा ० P.
१५. सुखकरा भवन्ति Sy.
१६. य D. यत्रि Sy.
१७. इव M.D.
१८. द्योतमानाः Sy.
१९. प्रजासु निमित्तभूतासु Sy.
२०. ते त्वां मदन्ति मादयन्ति। अन्तर्भावित-ण्यर्थोऽयम्। यद्वा प्राण्युपकारार्थं वर्ष-णाय त्वां प्रेरयन्ति वृष्ट्युदकानि तदा खलु तव सोमयागाः सुखकरा भवन्ति। यज्ञसाधनवृष्टिप्रदानेन यागाभिर्वर्तय-त्यर्थः Sy.
२१. स्तोत्रादिप्रेरयितॄन् स्तोतृजनानपि Sy.
२२. धिषणया प्रज्ञया वृष्टिप्रदानरूपेण कर्मणा वा Sy.
२३. कामयसे तदा सर्वापि स्तुतिस्त्वदर्था भवति Sy.
२४. त्वाम् Sy.
२५. वात् P. स्तोत्रशस्त्ररूपा वाक् Sy.
२६. जोषणार्हा प्रीणयित्री Sy.
२७. अनुक्रमेण Sy.
२८. VM. ignores हि। ते। चित्

असा॒म॒ यथा॑ सुष॒खाय॑ एन स्वभि॒ष्टयो॑ न॒रां न शंसैः॑ ।
अस॒द्यथा॑ न॒ इन्द्रो॑ वन्दने॒ष्ठास्तु॒रो न कर्म॒ नय॑मान उ॒क्था ॥९॥

असाम। अनेनेन्द्रेण[1] वयम्। यथा। शोभनसखायः[2]। भवेम[3]। यथा वा शोभनाभीष्टाः[4]। नराणाम्। इव। उदाराणां[5] स्तोत्रै[6]र्दरिद्राः[7]। यथा। भवेत्। इन्द्रः। अस्माकम्[8]। वन्दनेष्ठाः[9]। क्षिप्रकारीव[10] पुरुषः। लौकिकं कर्म। उक्थानि[11]। आपयन्नात्मानमुत्तरत्र[12] सम्बन्धः।

वि॒ष्प॒र्धसो॑ न॒रां न शंसै॑र॒स्माका॑स॒दिन्द्रो॒ वज्र॑हस्तः ।
मि॒त्रा॒युवो॒ न पू॒र्पतिं॒ सुशि॑ष्टौ मध्या॒युव॒ उप॑ शिक्षन्ति य॒ज्ञैः ॥१०॥

विष्पर्धसः। यथा। नराम्[13]। स्तुतिभिः। नरोऽन्यो विगतस्पर्धो[14] भवति। एवमस्माकं[15] विस्पर्धः[16]। भवतु[17]। इन्द्रः। वज्रहस्तः[18]। यथा। रक्षकं मित्रमिच्छन्तः[19]। पुरां पालयितारं राजा-[20]नम्। असाधूनां शासनार्थ[21]मिच्छन्ति[22]। एवं मध्यकामा[23] इन्द्रं प्रत्यात्मानम्। उपशिक्षन्ति वशी-कुर्वन्ति[24]। यज्ञैः[25]। मध्यो मदनाद् रक्षकमिच्छन्त इति।

---

१. इन, ईश्वर, इन्द्र ! Sy.
२. शोभनत्वद्रूपसहायवन्तः Sy.
३. भूयास्म Sy.
४. शोभनाभ्येषणाः Sy.
५. राजादीनाम् Sy.
६. शंसनैरिव। स्तुतिभिर्यथा मनुष्याः शोभना-भीष्टा भवन्ति तद्वत् Sy.
७. ०त्रैरिन्द्रः P.D.
८. इदानीं परोक्षेणाह। नोऽस्मभ्यम् Sy.
९. ०ष्टाः P.M. अस्मत्स्तुतौ वर्तमानः सन् Sy.
१०. त्वरमाण इव Sy.
११. उत्था० M. उक्थैः शस्त्रैः Sy.
१२. फलं प्रापयन्, स्तुत्या तुष्टः सन्नस्मदीयेन कर्मणा फलप्रापयिता ... हे ऋत्विजस्त-था कुरुतेति शेषः Sy.
१३. ०रा M. नेतॄणां मध्ये सस्पर्धान्नरान् Sy.
१४. यथा विस्पर्धसः कुर्वन्ति सखिभूतास्तद्वत् Sy.
१५. ०क P. सखायो वयं तं तथा कुर्मः Sy.
१६. विविस्पर्धा M. ०र्धा D. P. विस्पर्धम् Sy.
१७. अनुकूलो भवतु Sy.
१८. विरोधिशिक्षणाय सर्वदा वज्रधारी Sy.
१९. मित्रेच्छवो हितैषिण इव Sy.
२०. पुरः स्वामिनम् Sy.
२१. सुशासने वर्तमानम् Sy.
२२. यथाऽभिमतदानेन पूजयन्ति तथा Sy.
२३. अस्माकं श्रियां यशसां च मध्येऽवस्थितिं कामयमाना अध्वर्य्वादयः Sy.
२४. उपेत्य यजन्ते। शिक्षतिर्दानकर्मा Sy.
२५. यज्ञसाधनैर्हविःस्तोत्रादिभिः Sy.

यज्ञो हि ष्मेन्द्रं कश्चिदृन्धञ्जुहुराणश्चिन्मनसा परियन् ।
तीर्थे नाच्छा तातृषाणमोको दीर्घो न सिध्रमा कृणोत्यध्वा ॥११॥

यज्ञो हि। श्रद्धयाऽनुष्ठीयमानः कः। चित्। एव। यज्ञो[1] भवति। इन्द्रम्। वर्धयन्[2]। पुनः पुनराह्वयन्[3]। अपि। मनसा[4]। परिचरन्नपि[5] कश्चिदेव वर्धयतीन्द्रम्। तीर्थस्थितम्[6]। आत्मीयं गृहम्[7]। प्राप्तुम्[8]। ततृषाणं[9] दूरस्थम्। दीर्घः[10]। अध्वा[11]। यथा। न। आवृणोति। एवं साधयितार[12]-मिन्द्रं[13] न कश्चिदप्यभिमुखं[14] करोति यः कश्चिदेव भाग्ययुक्त[15] आकरोति यथा गमने प्रवृत्तो यः कश्चि-देव गृहं गच्छति तद्वदिति। तीर्थशब्दः[16] स्वावासवचनः। प्रथमो नकार उपमार्थीयः।[17]

मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः ।
महश्चिद्यस्य मीळ्हुषो यव्या हविष्मतो मरुतो वन्दते गीः ॥१२॥

मो[18] षु णः[20]। इन्द्र[19]। अस्माकम्[20]। एषु[21]। सङ्ग्रामेषु[22]। अन्यैर्देवैः[23]।

---

१. यज्ञवान्, यज्ञानुष्ठायी Sy.
२. इन्द्रं यज्ञेन वर्धयतीत्यर्थः Sy.
३. कुटिलगतिस्तु कश्चित् Sy.
४. मनसा केवलेन Sy.
५. परितो गच्छंल्लौकिकविषयादिकं ध्याय-न्वर्तते। यद्वा परि(:) वर्जनार्थः। वर्जयित्वा गच्छन्निदं प्राप्नोति Sy.
६. तत्र दृष्टान्तः। तीर्थे प्रसिद्धे मार्गे Sy.
७. पानीयादिकं सदनम् Sy.
८. आभिमुख्येन समीपे वर्तमानम् Sy.
९. ततृणां P. Missing in M. पिपासायुक्तं यथाऽविलम्बेन प्रीणाति स यथा तत्सदनमागच्छतीत्यर्थः। तद्वद्यज्ञेन कश्चित्पुमानिन्द्रमभिगच्छतीति Sy.
१०. कुटिलस्य दृष्टान्तः ।...वक्रत्वेनाति-दूरः Sy. ११. मार्ग इव। स यथा Sy.
१२. फलं पानीयादिरूपं फलार्थिनं वा पुरुषम् Sy. १३. ०न्द्र M.
१४. अर्वाक्करोति, नीचैः करोति। वर्जयती-त्यर्थः। तस्माद्यज्ञमार्गमजानानो वक्रो दूरे परिभ्रमति नेन्द्रं तर्पयति। तद्विलक्षण-स्तु वर्जयत्येव Sy.
१५. The Passage beginning with न कश्चिदप्यभिमुखं and ending with भाग्ययुक्तः is missing in M.
१६. ० शब्द P.
१७. VM. ignores स्म।
१८. मो इति निषेधार्थः Mah. मो इत्ययं निपातः प्रतिषेधार्थीयः पुरस्तादाख्यातस्य भवति। यस्यार्थं प्रतिषेधयति। नचाख्यातं विद्यते, अतः श्रुत्युक्तमध्याह्रियते U. मो इति प्रतिषेधे। निपातसमुदायो वा। सामर्थ्याल्लभ्या क्रिया; तस्या एव निषेध-सम्भवात्। अस्त्विति वक्ष्यमाणत्वाच्च BB. १९. देवनादिगुणक! BB.
२०. नोऽस्मान्, मे (मा) विनाशयेति शेषः Mah. अस्मान् Sy. अस्माकं प्रजाः U. अस्मान् BB. २१. एषूपस्थितेषु Sy.
२२. सङ्ग्रामेषु वर्तमानः Mah., U. वृष्टयर्थं मेघजयेषु Sy. सङ्ग्रामेषु प्रवृत्तिः BB.
२३. त्वया सह सख्यं प्राप्तैर्मरुन्नामकैर्देवैः सहि-तस्त्वम् Mah. मरुदादिभिः सह Sy. मरुद्भिः सहितः U.

शोभनम्[1]। मा[2] भूत्। अस्ति[3]। हि[4]। ते[5]। बलवन्[6]! शत्रूणामवयजनं[7] नाशनम्[8]। महतः[9]। मीढुषः[10]। यव्या[11]=मिश्रयित्री[12]। हविष्मतः[13]। मरुतश्च[14]। स्तौति[15]। अस्माकं[16] वाग्[17]इति[18]।

---

१. सुशब्दो विनाशभावस्य सौष्ठवं ब्रूते Mah. सू इत्यनर्थकः U. सु सुष्ठु समीचीनमेव। सुष्ठु मा भूदिति वा।... शोभनमेतदिति BB.

२. तथा सति विनाशलेशो मा भूदित्यर्थः सम्पद्यते Mah. मो षु मैव त्वावीरिति शेषः। मरुत्सहितो युध्यस्वेत्यर्थः Sy. मा विमन्थीः, मा हिंसीः U. धूत्सु मा कार्षीः।...'सुञः' इति सोष्यत्वम्। 'अन्येषामपि दृश्यते' इति दीर्घत्वम्। 'नश्च धातुस्थोरुषुभ्यः' इति नसो णत्वम् BB.

३. विद्यत एव Mah. क उपकार इति चेत्। उपकृत्य हि प्रत्युपकारः प्रार्थ्यते। अस्ति हि...स्मेत्यनर्थकः U. पादादित्वाद-स्तीति न निहन्यते BB.

४. खलु Mah., Sy. यस्मात् U.

५. तव Mah., Sy. तव विषये U. तव प्रसादात् BB.

६. 'शुष्ममिति बलनाम' (Ngh. 2. 9.) Mah., U., BB.

७. अपयानं P. अवयानं D. अवयुतो यागः पृथग्भागोऽस्ति।...अवपूर्वस्य यजतेरे-तद्रूपम् Mah. अवयुज्य पृथक्कृत्य यजनं हविर्भागोऽस्ति। मरुद्भ्यः पृथगप्यस्ति हविर्भागः। केवलं मरुद्भ्य एव दीयते नास्मभ्यमतः कथं योत्स्यामीति न मन्तव्य-मित्यर्थः Sy. अवयुतो यागः पृथग्भागस्त-द्योगी U. करम्भपात्रयागोऽस्तु। अवयज-नमवयाः। 'अवेयजः' इति ण्विः। छान्द-सोऽन्त्यविकारः। सोर्डा डादेशः BB.

८. यद्वा, अवयाः शत्रूणां वर्जनाय गन्ता यज्ञोऽस्ति ते Sy. वरुणपाशानामवयजनं विनाशहेतुरस्त्विति यावत् BB.

९. महदिचत् पूजा खलु। तस्य यथोक्तपूजो-पेतस्य तवास्मासु कृपालुत्वं युक्तमिति भावः Mah. महतोऽपि Sy. महतश्चित् U.

१०. 'मिह् सेचने' धातुः। वृष्टिप्रदत्वेन सेक्तुः Mah. हविष्प्रदातुः Sy. सेक्तुर्वरुणस्य वर्षयितुर्वा U. सेक्तुः सम्बन्धिनीय-मिष्टिः।...दाश्वानादौ मीढ्वानिति निपातितः BB.

११. यस्य M. यस्माद्यव्या यवमात्रसदृशी, अतिस्वल्पेति यावत्। शाखादित्वादिवार्थे यः BB.

१२. यवमयैः करम्भपात्रैर्निष्पन्ना होमक्रिया Mah. यस्य मम यव्या फलेनेन्द्रेण वा सह मिश्रयन्ती Sy. यद्वा इयमेवेष्टिस्तव प्रसादान्महती यव्या पावयित्री वरुण-पाशानां पृथक्करणसमर्थेति यावत्। छान्दसो यः BB.

१३. हविर्योग्यस्य तव Mah. प्रदेयहविर्युक्त-स्य Sy. यजमतो मम BB.

१४. भवतः सखीन् Mah. यद्वा, एतत्पदद्वयं मरुतां विशेषणम्।...मीढुषः सेक्तॄन् हविष्मतो दत्तहविषा तद्वतो मरुतः Sy. तव स्वभूताः सञ्जातास्त्वदनुग्रहात् U.

१५. नमस्करोति। नमो मरुद्भ्य इत्येवमाका-रायाः स्तुतेर्नमस्काररूपत्वात्। मरु-द्विषयनमस्कारेणापि तुष्टस्य तव कृपैव युक्तेत्यर्थः Mah. 'वदि अभिवादनस्तु-त्योः,' स्तौति U.

१६. अस्मदीया Mah..

१७. स्तुतिरूपा वाक् Mah. स्तुतिशस्त्रादि-रूपा वाक् Sy. वाक् स्तोतॄणाम् U.

१८. VM. ignores उ। स्म। चित्। यस्य
This stanza=YV. 3.46.
=TS. 1.8.3.1.

एष स्तोम॑ इन्द्र तुभ्य॑मुस्मे एतेन॑ गातुं ह॑रिवो विदो नः ।
आ नो॑ ववृत्याः सुवितार्य॑ देव विद्यामे॒षं वृजनं॑ जीरदा॑नुम् ॥१३॥

एष स्तोमः । एषः[1]। स्तोमः[2]। इन्द्र[3]! त्वत्प्रीत्यर्थम्[4]। अस्माभिः कृतः। एतेन स्तोत्रेण[5]। अस्मान्[6]। मार्गम्[7]। लम्भय[8]। आवर्तय[9]। अस्मान्। पुनः पुनरभ्युदयार्थम्[10,11]।

I.174.

त्वं रा॒जेन्द्र॒ ये च॑ दे॒वा रक्षा॒ नॄन्पा॒ह्य॑सुर॒ त्वम॒स्मान् ।
त्वं सत्प॑तिर्म॒घवा॑ न॒स्तरु॑त्र॒स्त्वं स॒त्यो वस॑वानः सहो॒दाः ॥१॥

त्वं राजेन्द्र । ये मनुष्याणामधिपतयः। देवाः[12]। तेषामपि त्वम्। इन्द्र! राजा[13] भवसि रक्ष[14]। मानुषान्[15]। अस्मांश्च[16]। पाहि[17]। बलवन्[18]! त्वम्। सतां पाता[19]। धनवान्। अस्माकम्। तारकः[20]। त्वम्। सत्यकर्मा[21]। आच्छादयिता तेजसा[22]। वीर्यस्य च दाता[23,24]।

---

१. इदानीङ्कारित्तप्रकारः Sy.
२. स्तोत्रविशेषः Sy.
३. हरिभ्यां तद्वन्निन्द्र ! Sy.
४. त्वदर्थम् Sy. ५. गमनेन वा Sy.
६. अस्मदीयम् Sy.
७. देवयजनमार्गम् Sy.
८. ०यत P. विदस्व Sy.
९. विदित्वा च . . . आवर्तस्व । अस्मद्यागं प्रत्यागच्छ Sy.
१०. सुहिताय शोभनगमनाय वा Sy.
११. VM. ignores हरिवः । देव । and विद्याम etc.
Ms. D. puts the figure ॥१७३॥ here to indicate the end of one hundred and seventythird hymn. No such number is given in P. and M.
१२. ये देवा मरुदादयः सन्ति तेषामपि विशेषेण Sy.
१३. अधिपतिः सर्वस्य जगतः Sy.
१४. पालय Sy. १५. मनुष्यान् M.
१६. कर्मनेतॄन् यजमानान् Sy.
१७. विशेषतोऽस्मानपि रक्ष Sy.
१८. शत्रूणां निरसिताः Sy.
१९. सतां सतः कर्मफलस्य वा पाता Sy.
२०. तारयिता पापात् Sy.
२१. सत्योऽबाध्यः सत्यफलो वा Sy.
२२. स्वतेजसा सर्वं छादयन्, वसूनि वा कुर्वन् स्तोतृभ्यः Sy.
२३. सहसो बलस्य दाता भवेति शेषः Sy.
२४. VM. ignores one त्वम्

दनो॒ विशं॑ इन्द्र मृ॒ध्रवा॑चः स॒प्त यत्पुरः॒ शर्म॒ शार॑दी॒र्दर्त्॑ ।
ऋ॒णोर॒पो अ॑नव॒द्यार्णा॒ यूने॑ वृ॒त्रं पु॑रु॒कुत्सा॑य रन्धीः ॥२॥

दनो विशः। शरन्नाम्नोऽसुरस्य[1]। यदा[2]। सप्त[3]। पुरः[4]। दारितवानसि[5]। जगतः शर्मणे[6]। तदानीं तदीयान्[7] मृध्रवाचः[8] परुषवचनान्[9]। मनुष्यान्[10]। दण्डितवानसि[11]। हे अनवद्य[12]! नदीः[13]। अपः[14]। त्वमृणोः[15]। यूने[16]। भवद्भक्ताय पुरुकुत्साय[17]। शत्रुम्[18]।

---

१. दशन्ना० P. शारदीः अत्यग्राः। यद्वा। एतत्संवत्सरलक्षणकम्। संवत्सरपर्यन्तं दृढीकृता अपि Sy. शरदि भवाः SKN. शरत्कालोत्थाः संवत्सरोत्था वा। संवत्सरोऽपि हि शरदित्युच्यते 'स जीव शरदः शतम्' इति लिङ्गात् Dur.

२. व्यत्ययेन नपुंसकं पुंलिङ्गस्थाने यस्मादर्थे वा यत्। यस्माद्वा SKN. यस्मात्त्वम् Dur.

३. एतत्सङ्ख्याकाः Sy. सप्तसङ्ख्याकामेवं, (का एवम्) SKN. सप्ताः Dur.

४. पुरीः Sy. मेघपुरः Dur.

५. अदारयः। पुरुषव्यत्ययः Sy. दृणातेश्छान्दसमेतद्रूपम्। दारितवानसि दारयसि वा SKN. त्वं दारयसि Dur.

६. सुखं यथा भवति तथा Sy. शर्म सुखं, (अ) श्लेषेन ये(या इ)त्यर्थः SKN. सुखमिच्छज्जनानाम् Dur.

७. ० या P. M. तदीयाः Sy.

८. मृध्रा० P. मृद्ध० M. हे इन्द्र त्वं वृत्रसम्बन्ध्यसुराणां पुरभेदनसमये ... मर्मणवचनाः Sy. मृध्रशब्दो मृदुवचनः। मृदुवचश्च मृदुवाग् वचनात् क्विबिति शेषः SKN. मृदुवाचः Dur.

९. पुरुषवचानान् P.

१०. प्रजाः Sy. अस्माकं विशो मनुष्यान् SKN.

११. अदमयः। दमेरिदं रूपम्। यद्वा वर्णव्यत्ययः। मदः। अनदोऽजाव्दयोऽसुरप्रजाः, अतिभयङ्करशब्दमकरोः Sy. दानमनसः सामर्थ्यादस्य भाष्यकारः, (उदा)जहार SKN. दानमनस एवंतानस्मभ्यम् Dur. 'दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु' N. 6.31.

१२. तथा कृत्वा हे अनवद्य कालरत्वानिन्दावन् हे इन्द्र Sy. अनवद्याः प्रशस्याः SKN. अनवद्यार्णा अनवद्योदकास्ताः पुरः Dur.

१३. नमीः P. अरणशीलाः Sy. अर्णा नदीनामैतत्। नदीं प्रति SKN.

१४. अजस्त्वम् P. M. तदीयदुर्गस्थानान्युदकाश्रयाणि तटाकादीन् Sy. वृष्टिलक्षणाः SKN.

१५. अगमयः प्रावर्तयः। भग्नान्यकरोः Sy. विदार्यंच ऋणोः, ऋणातेर्गतिकर्मणोऽर्थेर्वा रूपं गमयसि प्रापयसि SKN. अपगमितवानसीमं लोकं प्रति ।... स्वभाव एवैष तव लोकाननुग्रहीतुमित्यभिप्रायः Dur.

१६. नित्यतरुणाय, तदर्थम् Sy. 'यु मिश्रणे' मिश्रयित्रे च हविर्भिः स्तुतिभिश्च देवानाम् SKN. यौतिः स्तुत्यर्थः स्तोत्रे यजमानाय Dur.

१७. पुरुयकु० P. एवमुपहुत्य ... एतन्नाम्ने राज्ञे Sy. कर्ता स्तोमानां कुत्सम्बन्धः, (कुत्ससम्बन्धी) बह्वीनां स्तुतीनां कर्त्रे यजमानाय SKN. बहुस्तुतिकर्त्रे Dur.

१८. वृत्रमेतन्नामकमसुरम् Sy. धननामैदम् SKN. धनम् Dur.

वशमनयः[1]। "दान[2]मनसो[3] नो मनुष्यानिन्द्र मृदुवाचः कुर्वन्ति[4]" इति यास्कः[5]।

**अजा वृतं इन्द्र शूरपत्नीर्द्यां च येभिः पुरुहूत नूनम् ।**
**रक्षो अग्निमशुषं तूर्वयाणं सिंहो न दमे अपांसि वस्तोः ॥३॥**

अजा घृतः। गच्छ[6]। परिवृतः[7]। इन्द्र! दासपत्नीः=अपः[8]। द्याम्। च[9] गच्छ। येभिर्[10]गच्छद्भिर्मरुद्भिः सह[11]। पुरुहूत[12]! सम्प्रति। स त्वं वृष्ट्युत्पादनेन[13] रक्ष[14]। दवाग्निम्[15]। शोषरहितम्[16]। तूर्णगमनम्। यथा। सिंहस्तूर्णं[17] गच्छत्येवमग्निस्त्व। यजमानगृहे[18]। देवानां कर्माणि[19]। वासयितुम्[20]इति[21]।

---

१. असाधयः। अहनः। अवमैतिहासिकः पक्षः Sy. 'राध साध संसिद्धौ'। संराधयसि इवासीत्यर्थः SKN. सम्पादितवानसीत्यर्थः। यत एवमुपकारे प्रवृत्तो भवान् स्तोतृणामन्येषां च जनानां, तस्माद् ब्रूमोऽस्माकमप्येतान्मृदुवाचः कुरु मनुष्यानिति Dur.

२. निरुक्तरूढया तु हे इन्द्र मृध्रवाचो विशो मर्षणध्वनियुक्ता वृष्टिरूपाः प्रजा वनोऽनमयः। अशब्दयो वा। अवर्षय इत्यर्थः। कदा, यदा सप्त पुरः शारदीर्वृत् तर्पणस्वभावान्प्रत्ययान् वृष्ट्या जगत्पूरकान्मेघानदारयस्तदेत्यर्थः, तथा कृत्वा हे अनवद्य, अर्णा अरणस्वभावा अप ऋणोरगमयः प्रावर्तयः कुल्यादिरूपेण। अनन्तरं यूने पुरुकुत्साय वृत्रं मुख्यं मेघं रन्धीरसाधयोऽहनः Sy.

३. एवमत्र 'दनः' इत्यस्मिन्पदे दकारे 'दानमनसः' इत्येतान्यक्षराण्यध्याहृतानि भाष्यकारेण। 'न' कारश्चास्मद्योगे विभज्योदाहृतः। तथार्थोपपत्तिदर्शनात् Dur.

४. N. reads कुरु instead of कुर्वन्ति; SKN. II. 498.

५. VM. ignores इन्द्र

६. गच्छ जेतुम् Sy.

७. वर्तन्त आस्विति वृतोऽसुरपुरीः। यद्वा। शूरा यजमानास्तैः पालिता वृतो वेदिभूमीः Sy.

८. अप M. शूरं रक्षोभिः पालिताः Sy.

९. नूनमवश्यमज Sy.

१०. एभिः M. किं त्वमेक एव। न।...मरुदादिभिरनुगतोऽसि तैः सहितः सन् Sy.

११. सत्र M..

१२. बहुभिर्बहुधा वाऽऽहूतेन्द्र !

१३. ०त्पा० P. १४. रक्षस्वैव Sy.

१५. वैद्युतं होमाधारं वाऽग्निम् Sy.

१६. अशोषयितारमशान्तं वा Sy.

१७. रक्षणे दृष्टान्तः। सिंह इव, स यथा स्वाश्रयभूतं वनं गजाद्युपद्रवपरिहारेण रक्षति तद्वत्। असुरपुरभङ्गगमने वा दृष्टान्तः। सिंहो यथा निर्भयो विरोधिमृगान्हन्तुं धावति तद्वत् Sy.

१८. गृहे Sy.

१९. कर्माणि कुर्वन् Sy.

२०. वस्तुम्। यद्वा वासयितुं स्थापयितुं, कारयितुमित्यर्थः। यजद्विट्सु हतेष्वग्नौ सुस्थिरे सति यागाद्यनुष्ठानपरः स्यास्यामीत्यर्थः Sy.

२१. VM. ignores उ।

शेषन्नु त इन्द्र सस्मिन्योनौ प्रशस्तये पवीरवस्य मह्ना ।
सृजदर्णांस्यव यद्युधा गास्तिष्ठद्धरी धृषता मृष्ट वाजान् ॥४॥

शेषन्[1] नु। शेरताम्[2]। क्षिप्रम्। इन्द्र! स्वकीये[3]। स्थाने[4]। अभ्युदयार्थम्[5]। तव[6]। आयुधस्य[7]। महत्त्वेन[8]। अवासृजत्[9]। यत्[10]। अगन्तॄणि[11], उदकानि[12]। युद्धेनेन्द्रस्तदा[13]। अश्वौ[14]। अधितिष्ठति[15]। तथा[16] स्वबलेन[17] प्रगल्भेन[18]। शत्रुबलानि[19]। परिमार्ष्टि[20]।

वह कुत्समिन्द्र यस्मिञ्चाकन्त्स्यूमन्यू ऋज्रा वातस्याश्वा ।
प्र सूरश्चक्रं वृहतादभीकेऽभि स्पृधो यासिषद्वज्रबाहुः ॥५॥

वह कुत्सम्[21]। वह[22]। कुत्सं[23] प्रति[24]। इन्द्र! यस्मिन्[25]। कामयसे[26] गन्तुम्। सन्ततगमनमिच्छन्तौ[27]। ऋजु गच्छतः[28]?। तवाश्वौ[29]। सूर्यस्य[30]। रथचक्रम्[31]। प्रवृहतात्[32]। सङ्ग्रामे[33], इन्द्रः। अभियातु च

---

१. शेषं M. २. व्यत्ययेन परस्मैपदम् Sy.
३. सर्वस्मिन् समाने वा Sy.
४. स्वकीये स्थानेऽन्तरिक्षे वा। योनिरन्तरिक्षम् Sy.
५. किमर्थम्? ...प्रशंसनाय स्वत्स्तुतये। त्वन्महिमज्ञापनायेत्यर्थः Sy.
६. ते शत्रवः Sy.
७. किं सेवनादिसाधनेन, इत्याह।...कुलिशस्य कुलिशशब्दस्य वा Sy.
८. महिम्ना। त्वद्वज्रप्रहारेण हता मेघाः शत्रवो वा तत्रैव शेरते, निपातेन पलायन्त इत्यर्थः Sy.
९. अवासृजः। अवाङ्मुखमपातयः। पुरुषव्यत्ययः Sy. १०. यदा Sy.
११. गाः, गच्छति Sy.
१२. ०अगन्तृन्जृदकानि M.
१३. प्रहरणसाधनेनायुधेन युद्धेन वा Sy.
१४. तदर्थं हरी अश्वौ Sy.
१५. इधि० P. अध्यतिष्ठः। अत्रापि पुरुषव्यत्ययः। यद्वा। यदा हरी अधितिष्ठसि तदाऽवासृजः Sy. १६. यथा P.
१७. धर्षकेण सामर्थ्येन Sy.
१८. प्रगद्भेन P.D.
१९. अथैवं कृत्वा वाजानन्नानि सस्यादिलक्षणानि Sy.
२०. शोधय प्रवर्धयेत्यर्थः Sy.
२१. वह कुत्सम् is omitted by M.
२२. प्रस्थापय Sy.
२३. एतन्नामानमृषिं प्राप्तम् Sy.
२४. प्रति M.
२५. यस्मिन् हविषि निमित्तभूते सति Sy.
२६. कुत्सम्...तर्पयसे वा हविरादिकम् Sy.
२७. सन्ततगम० P. 'स्यूमकम्' (Ngh. 3.6.) इति सुखनाम, तदिच्छन्तौ सततगामिनौ वा Sy.
२८. ऋज्वे ग० P. ऋजू ग० D. ऋजुगामिनौ Sy. गच्छन्तौ is suggested for गच्छतः
२९. वातस्य वायोः समानवेगौ...तदीयावश्वौ Sy.
३०. तदर्थं सूरः प्रेरकः सूर्यः Sy.
३१. स्वमण्डलं स्वरथचक्रं वा Sy.
३२. वृहता P. ऊर्ध्वं गमयतु प्रकाशयतु Sy.
३३. आसन्ने देशे Sy.

शत्रून् स्पर्धमानान्[1]। इन्द्रो वज्रबाहुः[2][3]।

**जघन्वाँ इन्द्र मित्रेरूञ्चोदप्रवृद्धो हरिवो अदाशून् ।**
**प्र ये पश्यन्नर्यमणं सचायोस्त्वया शूर्ता वहमाना अपत्यम् ॥६॥**

जघन्वान्। हतवानसि। इन्द्र! आत्मनो मित्राणां प्रेरयितॄन्[4]। प्रवृद्धनोदनस्त्वम्[5][6]। हरिवः[7]! अदानशीलानयजमानान्[8]। ये। प्रपश्यन्ति[9]। पुत्रपौत्रैः सह। अन्नस्य[10]। प्रेरयितारम्[11]। त्वया[12]। धनाप्रदानेन हिंसिताः[13]। पुत्रपौत्रान्[14]। वहमानाः[15]। "यः खलु वै ददाति सोऽर्यमा" इति ब्राह्मणम्। एतदेव[16] तेषां हननम्[17]।

**रपत्कविरिन्द्रार्कसातौ क्षां दासायोपबर्हणीं कः ।**
**करत्तिस्रो मघवा दानुचित्रा नि दुर्योणे कुयवाचं मृधि श्रेत् ॥७॥**

रपत्[18] कविः। अस्तौत्[19] त्वाम्। उशनाः[20]। धनभजननिमित्तम्[21]। तस्मै क्षीणाय[22] त्वम्।

१. सङ्ग्रामं कुर्वतः शत्रून् Sy.
२. ०हुम् M.
अयमिन्द्रः Sy.
३. VM. ignores वातस्य
४. मित्राणां यजमानानामीरयितॄन्बाधकान्, तद्वैरिणां मित्रत्वं गच्छतो वा Sy.
५. चोदनैः स्तोत्रैः प्रवृद्धः सन् Sy.
६. M.adds प्रवृद्धनोदनः before त्वम्।
७. हरिभ्यां तद्वंस्त्वम् Sy.
८. अदन० D.
अदातॄन् Sy.
९. पश्यन्ति ते नराः Sy.
१०. अस्य P.D.
मनुष्यस्याध्वर्यविहिंविलक्षणान्नस्य वा Sy.
११. दातारं त्वाम् Sy.
१२. M. adds उवारं before त्वया।
१३. ०नेन...सिताः M. क्षिप्रा हविष्प्रदाने Sy.
१४. कुलस्यापातयितारं पुत्रम् Sy.
१५. ये सन्ति ते प्र पश्यन्। यद्वा। येऽर्यमणं त्वां पश्यन्ति त एवं भवन्ति। यद्वा। ये नरा अर्यमणं यं कञ्चिद्दातारं पश्यन् पश्यन्तस्त्वामयजन्त, आयोर्मनुष्यस्य सचा सहायभूतास्त्वया शूर्ताः क्षिप्ता वर्जिता अपत्यं पुत्रं वहमाना ये सन्ति तान्जघन्वान् भवेत्यर्थः Sy.
१६. एतत् is omitted by P.
१७. हनन P.
१८. रवत् P.
१९. रपत् कविः। अस्तौत् is omitted by M.
स्तौति। यद्वा। एतन्नामर्षी रपदस्तौदन्नार्थम्। तस्यातिप्रभूतमन्नं प्रादा इत्यर्थः Sy.
२०. क्रान्तदर्शी, अनूचानो वा होता Sy.
२१. अर्चनीयस्यान्नस्य लाभे निमित्तभूते सति Sy.
२२. प्राप्युपक्षयपित्रेऽसुराय Sy.

पृथिवीम्[1]। वर्धयित्रीम्[2]। कृतवानसि[3]। तथा तिस्रो भूमीः[4]। चित्रदानाः[5]। करोति[6]। तथा[7] दुर्योणाख्ये देशे[8]। कुयवाचनामानमसुरम्[9]। युद्धे[10]। हिंसितवान्[11]। इन्द्रः[12]।

**सना ता त इन्द्र नव्या आगुः सहो नभोऽविरणाय पूर्वीः ।**
**भिनत्पुरो न भिदो अदेवीर्ननमो वधरदेवस्य पीयोः ॥८॥**

सना ता ते। इन्द्र! ते[13]। सनातनानि[14]। तानि धनानि[15]। नूतनाः[16] स्तोतारः[17]। प्राप्नुवन्ति। सोढवानसि[18]। अविरणस्य[19]। बह्वीः[20]। हिंसाः, नभतिहिंसाकर्मा[21]। असुरपुराणि[22]। इव[23]। आसुरीः। हिंसाः[24]। भिन्नवान्[25]। तथा हिंसकस्य[26]। असुरस्य[27] वधार्थम्[28]। आत्मीयमायुधमत्यन्तं[29] नमितवानसि[30]।

---

१. भूमिम् Sy.
२. शय्याम् Sy.
३. अकरोः। हत्वा भूमावपातय इत्यर्थः Sy.
४. वार्शिकपाशुकसौमिकरूपा भूमीः क्षित्यन्तरिक्षद्युरूपा वा भूमीः Sy.
५. दानेन देवैर्यज्ञैर्वा चायनीयाः Sy.
६. यद्वा तिस्रोऽयोरजतहिरण्यमयाः पुरीर्वानुचित्राः खण्डनेन चित्रा अकरोत् Sy.
७. (त)था M.
८. युध्दयोनौ स्थाने। एतन्नामकस्य राज्ञः प्रीत्यर्थं वा Sy.
९. कुत्सितं शब्दायन्तमेतन्नामानमसुरम् Sy.
१०. सङ्ग्रामे Sy.
११. धनवानयमिन्द्रः Sy.
१२. VM. ignores इन्द्र
१३. तव सम्बन्धीनि Sy.
१४. सदातनानि नित्यानि Sy.
१५. शौर्याणि Sy.
१६. ०रं M. नवतरा इदानीन्तना ऋषयः Sy.
१७. आगच्छन्ति स्तुतिव्याजेन प्राप्नुवन्तीत्यर्थः Sy.
१८. अभ्यभवः Sy.
१९. अविगतरणाय सङ्ग्रामनाशनाय Sy.
२०. बह्वी M.
२१. नभेर्हिंसार्थात्क्विप्। तदन्तस्यैवं रूपम्। ता हिंसाः Sy.
२२. न भवति हि० M.
२३. तदर्थं भिदो भेतृर्घातिकाः, अदेवीरासुरीः पुरो न पुरीरपि Sy.
२४. नशब्दश्चार्थे Sy.
२५. ०री M.
२६. विदारितवानसि। पुरुषव्यत्ययः Sy.
२७. हिंसकस्यासुरस्य Sy.
२८. अस्तुत्यस्य Sy.
२९. वज्रम् Sy.
३०. अनुकूलमकरोः। यद्वा। हे इन्द्र सना नित्यं तत्तत्काले ते तव सम्बन्धिन्यस्ता तानि। लिङ्व्यत्ययः। ताः पूर्वीः पुरातन्य आपो नव्या नूत्नाः स्तुत्याः सत्य आगुरागच्छन्ति। किमर्थम्? अविरणाय, अविरमणाय प्राणिनामविनाशाय। तदर्थं नभो हिंसकान् बन्धकान्वा मेघान्सहः मर्षणमकरोः। किञ्चादेवीः पुरोऽवर्षणेनादेवनशीलानुदकपूटबन्धान् भिनद् भिन्नानकरोः। तथाऽदेवस्यादेवनशीलस्य पीयोः प्रतिकूलस्य वृत्रस्य वधर्वज्रं ननमोऽनमयः Sy.

त्वं धुनिरिन्द्र धुनिमतीर्ऋणोरपः सीरा न स्रवन्तीः
प्र यत्समुद्रमति शूर पर्षि पारया तुर्वशं यदुं स्वस्ति ॥९॥

त्वं धुनिः। त्वम्। कम्पयिता[1]। कम्पयित्रीः[2]। अपः। मेघेभ्यो विद्रवाननसि[3]। नद्यः[4]। इव। निर्गच्छन्तीः[5]। यदा त्वम्। तुर्वशम्। यदुं च समुद्रमध्यस्थौ[6]। समुद्रम्। प्रकर्षेण। अतिनयसि[7] तदा नौ[8]। अविनाशेन[9]। पारयेति[10]।[11]

त्वमस्माकमिन्द्र विश्वधं स्या अवृकतमो नरां नृपाता।
स नो विश्वासां स्पृधां सहोदा विद्यामेषं वृजनं जीरदानुम् ॥१०॥

त्वमस्माकम्। त्वम्। अस्माकम्। इन्द्र! सर्वकालम्[12]। अस्तेनतमः[13]। नृणां[14] च। पाता[15]। भव। स त्वम्। विश्वासाम्[16]। स्पर्धमानानां[17] सेनानाम्। बलस्य खण्डयिता[18] भव।[19]

---

१. कम्पयिता शत्रूणामसि Sy.

२. कम्पनोपेततरङ्गवतीः। अथवा धुनिर्नाम जलप्रतिरोधकार्यसुरः। स एव प्रतिबन्धकतया यासां तादृशीः Sy.

३. अगमयः। भूमावपातयः Sy.

४. तत्र दृष्टान्तः। ...नदीनामेतत्। सरणवतीर्नदीरिव तद्वत्सन्तता इत्यर्थः Sy. नदीः is suggested

५. ०च्छति P. ०च्छती D.
प्रवहन्तीः Sy.

६. ०स्थो P. उभावपि राजर्षी Sy.

७. अतिक्रम्य पुरःस्थमुदकं तवानीम् Sy.

८. तौ is suggested for नौ।

९. अविनाशम् Sy.

१०. वारयेति P. अपालयः सम्पूर्णजलवर्जनेन Sy.

११. VM. ignores इन्द्र। शूर

१२. विद्यास्मिन्नपि काले विश्वप्रकारैर्वा Sy.

१३. महा दातृतम इत्यर्थः Sy.

१४. नृ० P. अस्मदीयानां पुत्रभृत्यादिरूपाणां बहूनां मनुष्याणाम्।... अपरो नृशब्दोऽनुवादः Sy.

१५. वानां M.
सर्वदा रक्षको भव Sy.

१६. सर्वासाम् Sy.

१७. स्पर्धानिमित्तानामस्मत्सेनानाम् Sy.

१८. तासामर्थाय बलस्य दाता भव Sy.

१९. VM. ignores नः and विद्याम etc.
Ms. D. puts the figure ॥१७४॥ here to indicate the end of one hundred and seventyfourth hymn. No such number is given in P and M.

I.175.

**मत्स्यपा॑यि ते॒ महः॒ पात्र॑स्येव हरिवो मत्स॒रो मदः॑ ।**
**वृषा॑ ते॒ वृष्ण॒ इन्दु॑र्वा॒जी स॑हस्र॒सात॑मः ॥१॥**

मत्स्यपायि[1]। मादयस्व[2]। पीतः[3]। त्वया[4]। महान्[5]। मदः[6]=सोमः[7]। मधुपानपात्रस्य[8] सम्बन्धी[9]। हरिवः[10]! मत्सरः[11] सुरादिवरसः[12]?। पुमान्[13]। त्वया[14]। पुंसा[15]। सोमः[16]। बलवान्[17]। बहूनां वीराणा-मतिशयेन[18] सम्भक्ता[19]।

**आ नं॑स्ते गन्तु मत्स॒रो वृषा॒ मदो॒ वरे॑ण्यः ।**
**स॒हावाँ॑ इन्द्र सान॒सिः पृ॑तना॒षाळम॑र्त्यः ॥२॥**

आ नस्ते। अस्माकमयं[20] सोमः। तव[21]। आगच्छतु। तर्पयिता[22]। वर्षिता[23]। सोमः[24]। वरणीयः। शत्रूणां सहनवान्[25]। इन्द्र! सम्भजनशीलः[26]। सेनानां[27] सोढा। अमरणधर्मा[28]।

---

१. मत्सपायी P. मत्स्स्यपायी D.
२. माद्वस्व M. यतः पिबस्यतो मत्सि माद्यसि मादयस्व वा। पात्रे यथा सोमः पूर्यते तथा-ऽत्याधिकं पिब पीत्वा च मादयस्वेत्यर्थः Sy.
३. पीयते । आशंसाया विवक्षितत्वाद्भूतव-त्प्रयोगः Sy.
४. त्वयं M. तृतीयार्थे षष्ठी । यद्वा पात्रस्येव ते तव स्वभूतो महो महान्सोम इति वा योजना Sy.
५. महान् पूज्योऽयं सोमः Sy.
६. महान् (मदयिता वर्षिता सोमो वरणीयः शत्रूणां सहनवानिन्द्र संभजनशीलस्से-नानां सोढा मरणधर्मा) मदः P.
७. तर्पयिता Sy.
८. तत्पात्रेणेव सोमपात्रेण यथा धार्यते सोम-स्तत्सदृशेन Sy. ९. ०न्धि P.
१०. हरिभ्यां तद्वन्निन्द्र ! Sy.
११. ०राः M. मदसाधनः Sy.
१२. ०वसः P. सुदिरिवरसं M. सुरादिरसः is suggested.
१३. वर्षिता Sy.
१४. तुभ्यम् । चतुर्थ्यर्थे षष्ठी Sy.
१५. अभिमतवर्षित्रे Sy.
१६. क्लेदयिता, आह्लादकारीत्यर्थः Sy.
१७. अन्नवान् । अन्नवा (का)र्यतुप्तिसद्भावा-दन्नवानित्युच्यते Sy.
१८. ०क्ताः M. अपरिमितदातृतमः । सहस्र-पुरुषसम्भजनपर्याप्तिशक्त्यतिशयो वा, एवम्महानुभावः सोमः सम्पादितः । तं पिबेत्यर्थः Sy.
१९. VM. ignores इव
२०. अस्मदीयः Sy. २१. त्वाम् Sy.
२२. मर्षणसाधनः Sy. २३. कीदृशोऽयम्? वृषा वर्षकः Sy. २४. तर्पयिता Sy.
२५. सहायवान् सहसा बलेन तद्वान्वा Sy.
२६. सम्भजनीयः Sy.
२७. शत्रुसेनाया अभिभविता Sy.
२८. अविनाशी । ईदृशः सोमस्त्वामागच्छतु । यद्वा । उत्तरार्द्धं इन्द्रपरतया व्याख्येयः । हे इन्द्र सहावान्, अस्मद्दत्तसोमसहायवान् बलवान्वा । सानसिरस्माभिः सम्भज-नीयः पृतनाषाडमर्त्यश्च भवसि Sy.

त्वं हि शूरः सनिता चोदयो मनुषो रथम् ।
सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ॥३॥

त्वं हि शूरः। त्वम्। हि[1]। शूरः[2]। सङ्ग्रामं सम्भक्ता[3]। चोदितवानसि[4]। मनोः[5] पुरः। रथम्[6]। सङ्ग्रामे सहनवान्[7]। अयजमानम्[8]। तं स्वशत्रुम्[9]। दग्धवानसि[10]। आममिव। पात्रम्[11]। अग्निना[12]।

मुषाय सूर्यं कवे चक्रमीशान ओजसा। वह शुष्णाय वधं कुत्सं वातस्याश्वैः ॥४॥

मुषाय। द्विकर्मको मुष्णातिः[13], बलेन[14]। सूर्यं देवम्[15]। सर्वेश्वरस्त्वम्[16]। रथचक्रम्[17]। अमुष्णाः[18]। प्रापय[19]। शुष्णवधार्थम्[20]। आत्मीयं वज्रम्। तथा कुत्समृषिं प्रति[21]। वातसमैः[22]। अश्वैः[23] गच्छ[24]।

शुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतुः ।
वृत्रघ्ना वरिवोविदा मंसीष्ठा अश्वसातमः ॥५॥

शुष्मिन्तमः[25]। शत्रूणां शोषयितृतमः[26]। तव। मदः[27]। अतिशयेन[28] धनयुक्तम्[29]। च[30]। कर्म[31]।

---

१. खलु Sy. २. शौर्योपेतः Sy.
३. दातासि Sy.
४. मोदि० P. प्रेरय Sy.
५. अतो मनुषो मनुष्यस्य मे Sy.
६. रंहणं स्पन्दनं मनोरथं वा स्वर्गगमनसाधनं यज्ञाख्यं रथं वा Sy.
७. ०नवाद् M. सोमसहायवान् बलवान्वा भूत्वा Sy.
८. अकर्माणमननुष्ठायिनम् Sy.
९. उपक्षपयितारम् Sy.
१०. दह।...यागाधिकारी सन् यो न यजते तं दहेत्यर्थः Sy.
११. किमिव ? ...अग्निः...स्वाधारं पात्रविशेषमिव Sy.
१२. दीप्त्या ज्वालया Sy.
१३. ०ष्णतिः M. १४. हे कवे क्रान्तदर्शिन्निन्द्र...सामर्थ्यातिशयेन Sy.
१५. सूर्यस्य...षष्ठ्येकवचनस्य द्वितीयैकवचनादेशः। तत्सम्बन्धि Sy.
१६. समर्थः सन् Sy. १७. चक्रमेकम् Sy.
१८. पूर्वं सूर्यरथस्य चक्रद्वयमस्ति (मासीत्) एकमिन्द्रो मुमुष इतीतिहासः Sy.
१९. अवहः शुष्णं हन्तुं वज्रमधारयः। यद्वा शुष्णवधाय वज्रमवहः Sy.
२०. एतन्नामकायासुराय तद्वधार्थम्। द्वितीयार्थे वा चतुर्थी। शुष्णं हन्तुमित्यर्थः Sy.
२१. कर्तनसाधनम्।...कुत्सं महर्षिमगमः शुष्णासुरधनं कुत्सायादा इत्यर्थः...'त्वं कुत्सं शुष्णहत्येष्वाविथ' (RV.I.51.6.) 'कुत्साय शुष्णमशुषम्' (RV. IV. 16. 12.) इत्यादीति Sy.
२२. वायुवेगैरश्वैर्युक्तः सन्...तं च हत्वा तदीयैर्वायुवेगैः Sy.
२३. अश्वैस्तदुपलक्षितैस्तदीयैर्धनैः Sy.
२४. VM. ignores कवे
२५. ०न्तः P. २६. बलवत्तमः Sy.
२७. सोमपानजनितः Sy.
२८. मतोऽति० M. मतोदाति० P.
२९. अतिशयेनान्नवान्यशोवान्वा Sy.
३०. अपिच Sy. ३१. व्यापारोऽस्मदर्थः Sy.

ताविमौ, अवन्तेः[1] ? हन्तारौ[1]। धनस्य सम्भयितारौ[2]। पूजयेस्त्वम्[3]। अश्वयोः संभक्तु[4]तमः[5]।

**यथा पूर्वेभ्यो जरितृभ्यं इन्द्र मयंइवापो न तृष्यंते बभूथं।**
**तामनुं त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुम् ॥६॥**

यथा पूर्वेभ्यः। यथा। मधुच्छन्दःप्रभृतिभ्यः[6]। स्तोतृभ्यः। त्वमिन्द्र! तृष्यते[7] जनाय। सुखकरमन्नमिव[8]। उदकानि[9]। इव च। त्वं बभूविथ[10]। तादृशीं[11] मदीयाम्। वाचम्[12]। प्रति। त्वाम्[13]। अत्यन्तम्[14]आह्वयामि[15]।

## I.176.

**मत्सिं नो वस्यंइष्टय इन्द्रमिन्दो वृषा विश।**
**ऋघायमाण इन्वसि शत्रुमन्ति न विन्दसि ॥१॥**

मत्सि। माद्य[16]। अस्माकम्। अभ्युदयार्थमिन्द्र[17]! त्वं[18] च सोम[19]! इन्द्रम्। आविश।

---

१. वृत्रघातिनौ Sy. वृत्रस्य is suggested for अवन्तेः

२. धनस्य परिचरणस्य वा वेदयितारौ सम्भयितारौ तव मदकृत् Sy.

३. अनुज्ञातवानसि। शत्रुघातिनौ धनदातारौ च स्यातामित्यनुग्रहमकरोरित्यर्थः Sy.

४. अश्वोपलक्षितबहुधनदास्त्वम् Sy.

५. VM. ignores हि

६. पुरातनेभ्यः Sy.

७. तत्र दृष्टान्तः।...तृषार्तस्य Sy.

८. मयः सुखम्। सुखस्वरूपमिव Sy.

९. उदकानि यथा सुखकराणीति तद्वत् Sy.

१०. बहुथ P. बुभूथ M. अभवः। तद्वत् स्तोतृभ्योऽस्मभ्यं सुखो भव Sy.

११. तस्मात्ताम् Sy.

१२. त्वत्प्रीतिकरीं प्रसिद्धां स्तुतिम् Sy.

१३. तुभ्यम् Sy.

१४. पुनः पुनः करोमि। यद्वा। तां निविदमनु 'तृतीयार्थे' (P. 1.4.85.) इत्यनोः कर्मप्रवचनीयत्वम्। तया स्तुत्या त्वां जोहवीमि पुनः पुनराह्वयामि Sy.

१५. VM. ignores विद्याम etc. Ms. D. puts the figure ॥१७५॥ here to indicate the end of one hundred and seventyfifth hymn. No such number is given in P. and M.

१६. मादयस्व Sy.

१७. वसीयसो धनस्य प्राप्तये उक्तलक्षणाय यागाय वा Sy.

१८. तदर्थं त्वमेव...वृषा कामानां वर्षिता Sy.

१९. क्लेदयितः सोम! Sy.

सपत्नान्[१] बाधमानः[२]। गच्छसि[३]। शत्रुं[४] च। अन्तिके। न। लभसे[५] कञ्चन[६][७]।

**तस्मिन्ना वेशया गिरो य एकश्चर्षणीनाम् ।**
**अनु स्वधा यमुप्यते यवं न चर्कृषद्वृषा ॥२॥**

तस्मिन्ना वेशय। तस्मिन्[८]। स्तुतीः[९]। आवेशय[१०]। प्रधानः[११]। मनुष्याणाम्[१२]। यम्[१३]। लक्षीकृत्य[१४]। वर्षत्ययमिति[१५] बुद्ध्वा। अन्नम्[१६]। उप्यते[१७]। स यवम्[१८]। इव। पुनः[१९] पुनरकृषन्[२०]। बलीवर्दो[२१] भवति, बलीवर्दे हि सति बीजान्यावपन्ति[२२]।

**यस्य विश्वानि हस्तयोः पञ्च क्षितीनां वसु ।**
**स्पाशयस्व यो अस्मध्रुग्दिव्येवाशनिर्जहि ॥३॥**

यस्य विश्वानि। यस्य[२३]। विश्वानि[२४]। धनानि[२५]। हस्तयोर्निवसन्ति[२६]। पञ्चानाम्[२७]।

---

१. सोमेन्द्र...सप० M. अथ तथा पीतः सन् ...शत्रून् Sy.
२. हिंसयन् Sy. ३. व्याप्नोषि Sy.
४. शत्रून् P.
५. यतः शत्रवस्त्वत्सामर्थ्येन पलायिता अतो न विन्दसि। यद्वा, उत्तरार्धं इन्द्रपरतया व्याख्येयः। हे इन्द्र त्वं तं सोमं पीत्वा ऋघायमाणः सन्निन्वसि। अन्तिके शत्रुं न विन्दसि Sy.
६. कञ्चन is missing in M.
७. VM. ignores वृषा
८. हे अन्तरात्मन् होतर्वा तस्मिन्प्रसिद्ध इन्द्रे Sy. ९. स्तुतिरूपा वाचः Sy.
१०. स्थापय। तं स्तुहीत्यर्थः Sy.
११. The passage beginning with तस्मिन्नावेशय and ending with प्रधानः is missing in M. एक एव स्थानीयः Sy
१२. य इन्द्रः...ज्ञानवतां मनुष्याणाम् Sy.
१३. य M. १४. यमेवेन्द्रमनु Sy.
१५. स चेन्द्रो वृषा वर्षकः सन् Sy.
१६. हविर्लक्षणमन्नम् Sy.
१७. दीयत इत्यर्थः Sy.
१८. यवमिव पक्वं यवं यथा Sy.
१९. अन्नमपि...पुनः M.
२०. ०नरकृषन् M. पुनः कृषन् is suggested. कर्मेणावर्त्तते कर्षकास्त-द्वावर्त्ते। यद्वा। अनु स्वधाऽन्नसाधनं व्रीह्यादिकमुप्यते भूमौ। यस्येन्द्रस्य वृष्टिरूपमनुग्रहमपेक्ष्योप्यत इत्यर्थः। स च वृषा वृष्टेर्वर्षिता स इन्द्रो यवं न यवमिव सर्वबीजमपि चर्कृषत् पुनः पुनः करोत्यङ्कुरयति। हविःसाधनत्वप्राशस्त्य-मपेक्ष्य यवशब्दः प्रयुक्तः। एवम्महानु-भाव इन्द्रे गिर आ वेशयेति Sy.
२१. बलीवर्दो भवे P.
२२. VM. ignores यः
२३. इन्द्रस्य Sy.
२४. यस्य। विश्वानि is omitted by M. सर्वाणि Sy.
२५. वसूनि Sy. २६. धृतानि भवन्ति Sy.
२७. देवा मनुष्याः पितरः पशवः पक्षिणश्चेति पञ्चजनाः। चत्वारो वर्णा निषादपञ्च-माः पञ्चजना इत्यन्ये Sy.

क्षितीनाम्[1]अर्थाय स त्वम् । यः । अस्मभ्यं द्रोग्धा[2] । तं[3] बुध्यस्व[4] बुद्ध्वा[5] च । दिवि[6] भवा । अशनिरिव[7] । तं[8] जहि ।

**असुन्वन्तं समं जहि दूणाशं यो न ते मयः ।**
**अस्मभ्यमस्य वेदनं दद्धि सूरिश्चिदोहते ॥४॥**

असुन्वन्तम् । अयजमानम्[9] । सर्वं[10] जगत्[11] । नाशय । नाशयितुमशक्यम्[12] । यः[13] । न[14] । ते[15] । सुखं[16] करोति[17] । अस्मभ्यम् । अस्य । धनम् । देहि[18] । तव स्तोता । हि[19] । वहते[20] धनम् ।

**आवो यस्य द्विबर्हसोऽर्केषु सानुषगसत् ।**
**आजाविन्द्रस्येन्दो प्रावो वाजेषु वाजिनम् ॥५॥**

आवो[21] यस्य । यस्येन्द्रस्य[22] । द्विगुणबर्हणस्य[23] बलवतः । स्तोत्रेषु[24] । यः सानुषङ्गः[25] । भवति[26] तम्[27] । इन्दो[28] ! त्वं रक्षसि[29] । तथाऽस्येन्द्रस्य[30] । यो हविष्मान् भवति तम्[31] । युद्धे[32] । बलेषु[33] ।

---

१. क्षियन्ति निवसन्ति गच्छन्ति वा क्षितयो मनुष्याः पञ्चानां मनुष्याणां प्रीणयितृणि Sy.
२. द्रोग्धि M. द्रुह्यति Sy.
३. Omitted by M.
४. बाधस्व Sy.
५. बुध्वा P. D.
६. नदिवि M.
७. अशनिर्भूत्वा Sy.
८. अस्मद्द्वेष्टॄन् Sy.
९. सोमाभिषवमकुर्वाणम् । त्वामयजन्तमित्यर्थः Sy.
१०. अयं सर्वानुदात्तः सर्वशब्दपर्यायः । अयष्टॄन्सर्वान् । यद्वा । सममेकोद्योगेनाविशेषेण वा जहि Sy.
११. जनं M.
१२. दुःखेन नाशनीयम् Sy.
१३. ये P. D. M.
१४. न भवति Sy.
१५. तव सुखहेतुः Sy.
१६. मय इति सुखनाम Sy.
१७. यो होमेन स्तुत्या वा न प्रीणाति तं जहि Sy.
१८. 'दद् दाने' इत्यस्माद् व्यत्ययेन परस्मैपदम् । छान्दसः शपो लुक् Sy.
१९. चिदेवार्थे Sy.
२०. तवते P. प्राप्नोति Sy.
२१. आपो P.
२२. इन्दो सोम ! तव यस्य Sy.
२३. स्तोत्रहविर्लक्षणद्विविधपरिवृढकर्मवतो यजमानस्य Sy.
२४. मन्त्रेषु Sy.
२५. सातत्यम् Sy.
२६. भवेत् Sy.
२७. यजमानम् Sy.
२८. इन्द्रो M.
२९. तर्पयसि वा । यद्वा कर्मणि षष्ठी । यं द्वयोः स्थानयोः परिवृढं यमिन्द्रं हे इन्दो यदार्केषु सानुषगसद् भवेस्तदावोऽरक्षः, अतर्पयो वा Sy.
३०. तस्यैव Sy.
३१. तथाप्रवर्त्त तमिन्द्रम् Sy.
३२. सङ्ग्रामे Sy.
३३. अन्नेषु वा निमित्तभूतेषु Sy.

प्रकर्षेण रक्षसि[1]।

यथा पूर्वेभ्यो जरितृभ्य इन्द्र मयइवापो न तृष्यते बभूथ।
तामनु त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुम् ॥६॥[2]

I.177.

आ चर्षणिप्रा वृषभो जनानां राजा कृष्टीनां पुरुहूत इन्द्रः।
स्तुतः श्रवस्यन्नवसोप मद्रिग्युक्त्वा हरी वृषणा याह्यर्वाङ् ॥१॥

आ चर्षणिप्राः[3]। मनुष्याणां पूरयिता। वर्षिता[4] च। तेषाम्[5]। राजा[6] च। पुरुहूतः[7]। इन्द्रः[8]। स्तुतः सन्[9]। अन्नमिच्छन्[10]। अन्नेन सह[11]। मदभिमुखम्[12]। उपायाहि[13]। वृषणौ[14]। अश्वौ। स्वरथे युक्त्वा[15]। इतोमुखः[16]।

ये ते वृषणो वृषभास इन्द्र ब्रह्मयुजो वृषरथासो अत्याः।
ताँ आ तिष्ठ तेभिरा याह्यर्वाङ् हवामहे त्वा सुत इन्द्र सोमे ॥२॥

ये ते वृषणः। ये[18]। तव[19]। इन्द्र! वर्षितारः[20]। वर्षितुः[21]। मन्त्रेण[22] रथे[23] युज्यमानाः[24]। कामानां

---

१. प्रकर्षेणारक्षः। पानसमये तर्पयित्वा सङ्ग्रामसमये बलवर्धनेन जयप्राप्तशत्रुधनतर्पणेन वाऽरक्ष इत्यर्थः Sy.
Ms. D. puts the figure ॥१७६॥ here to indicate the end of one hundred and seventy-sixth hymn. No such number is given in P. and M.

२. This stanza is identical with RV. I. 175. 6. As it has already been explained, it is left uncommented here by VM.

३. अयमिन्द्रः... चर्षणयो मनुष्याः। तेषां धनादिना प्रीणयिता Sy.

४. Omitted by P. D. कामानां वर्षिता Sy. ५. जनानां सर्वेषाम्... तथा कृष्टीनाम्। मनुष्यनामैतत्। मनुष्याणाम् Sy. ६. स्वामी Sy.

७. बहुभिराहूतः Sy. ८. ईदृश इन्द्रोऽस्मानाजानास्वागच्छतु वा Sy.

९. उत्तरार्धः परोक्षवादः। हे इन्द्र स्तुतोऽस्माभिः Sy.

१०. हविर्लक्षणान्नमिच्छन् Sy.

११. अस्मद्रक्षणेन तर्पणेन वा युक्तः सन् Sy.

१२. मदमुख P. मदभिमुखमञ्चन् Sy.

१३. ०पया० D. आगच्छ Sy.

१४. वर्षकौ युवानौ Sy.

१५. योजयित्वा Sy.

१६. अस्मदभिमुखम् Sy.

१७. VM. ignores कृष्टीनाम्

१८. ये सन्ति Sy. १९. तव सम्बन्धिनः Sy.

२०. ०रौ M. वर्षका युवानो वर्षणवन्तो वा Sy. २१. ०तुं P. श्रेष्ठाः Sy.

२२. परिवृढेन मन्त्रेण Sy.

२३. रथेन P. रथैः M. २४. ०ना D.

वर्षितुरश्वाः[1]। प्रश्वाः[2]। शिष्टं स्पष्टम्[3]।

**आ तिष्ठ रथं वृषणं वृषा ते सुतः सोमः परिषिक्ता मधूनि ।**
**युक्त्वा वृषभ्यां वृषभ क्षितीनां हरिभ्यां याहि प्रवतोप मद्रिक् ॥३॥**

आ तिष्ठ[4]। परिषिक्तानि[5]। मधूनि मधुसदृशाः[6] सुतस्य सोमस्य ग्रहाः[7]। परितः पात्रेषु सिक्ता इति। प्रवान् मार्गः[8] प्रवणः[9], शिष्टं स्पष्टम्[10]।

**अयं यज्ञो देवया अयं मियेध इमा ब्रह्माण्ययमिन्द्र सोमः ।**
**स्तीर्णं बर्हिरा तु शक्र प्र याहि पिबा निषद्य वि मुचा हरी इह ॥४॥**

अयं यज्ञः। त्वदर्थं तायमानः[11]। यज्ञः। देवान् प्रति गच्छन्[12]। अयम्[13]। तथा[14] पशुः, एवमुत्तरत्रापि[15]। इदं[16] च विस्तीर्णमस्माभिः[17]।[18] बर्हिः[19]।

---

१. वर्षणरथवन्तः। तत्र नियुक्ता इत्यर्थः Sy.

२. ईदृशाः . . . प्रश्वाः Sy.

३. तानातिष्ठ, आश्रय, आरोह। तैभिस्तै-रर्वाङ् अस्मदभिमुखमायाहि, आगच्छ। वयं च हे इन्द्र सोमे सुते सति त्वा त्वां हवामहे आह्वयामः Sy.

४. हे इन्द्र त्वं रथमातिष्ठ, आश्रय यज्ञगमनार्थम्। कीदृशं रथम्? वृषणं वर्षकं कामानाम्। किमर्थमिति चेदुच्यते। ते त्वदर्थं वृषा वर्षकः सोमः सुतोऽभिषुतः Sy.

५. परितः सिक्तानि सम्पादितानि। यद्वा मधूनि मधुराः सोमरसाश्चमसेषु पूरिताः Sy. ६. मधुराणि घृतक्षीरादीनि Sy.

७. गृहाः M. संग्रहाः P. आगमनप्रकार उच्यते। हे वृषभ वर्षकेन्द्र! वृषभ्यां वर्षकाभ्यां हरिभ्यां युक्त्वा रथं योजयित्वा क्षितीनां कर्मसु निवसतां यजमानानामस्माकमनुग्रहाय। क्षितीनां वृषभेति वा योज्यम् Sy.

८. प्रवता वेगवता रथेन Sy.

९. ॰ण P. १०. मद्रिक् मदभिमुखमञ्चन्मदाभिमुख्येनोपयाहि Sy.

११. ताय॰ P.

१२. अहर्गणेषु मध्येष्वहस्सु हारियोजनग्रहस्य याज्या 'अग्निष्टोमोऽत्यग्निष्टोमः' इति खण्डे सूत्रितम्। 'अयं यज्ञो देवया अयं मियेध इतीतरेषु' (ASSS. 6.11.) इति। हे इन्द्र! अयं यज्ञो देवया देवान् गच्छन् भवति Sy.

१३. M. adds अयं after तथा।

१४. तथाऽयं यज्ञो मियेधः। मेधः पशुः। 'पशुर्वै मेधः' (AB. II.6.) इति हि श्रुतिः Sy.

१५. ॰रेव (शिष्टं स्पष्टं) मुत्तर॰ P. इमा, इमानि ब्रह्माणि मन्त्राः। अयं सुतः सोमः Sy. १६. आसनायास्तृताः Sy.

१७. दर्भाः। एते पदार्थास्त्वदुचिता एवं (च) सम्पादिताः Sy.

१८. हे शक्र, इन्द्र तु पुनः किमित्युक्ते, आ प्र याहि प्रकर्षेण शीघ्रमागच्छ। आगत्य च निषद्य बर्हिष्युपविश्य पिब सोमम्। तदर्थमिहास्मिन्देवयजने हरी अश्वौ विमुञ्च वियोजय। छान्दसो नुमभावः Sy.

१९. VM. ignores आ तु etc.

ओ सुष्टुत इन्द्र याह्यर्वाङुप ब्रह्माणि मान्यस्य कारोः ।
विद्याम वस्तोरवसा गृणन्तो विद्यामेषं वृजनं जीरदानुम् ॥५॥

ओ सुष्टुतः । इन्द्र! सुष्ठु मया स्तुतस्त्वम् । मान्यस्य । कारोः । इमानि ब्रह्माणि । उपयाहि रक्षणार्थम् । इन्द्रं स्तुवन्तो वयम् । वासम् । लभेमहि ।

I.178.

यद्ध स्या त इन्द्र श्रुष्टिरस्ति यया बभूथ जरितृभ्य ऊती ।
मा नः कामं महयन्तमा धग्विश्वा ते अश्यां पर्याप आयोः ॥१॥

यद्ध स्या । इन्द्र! यत् । खलु । ते । विप्रता । इयम् । विद्यते । यया । भवसि । स्तोतृभ्यः । रक्षायै । तस्मात् त्वम्, अस्माकम् । कामम् । वर्धमानम् । मा । आधाक्षीः । विश्वानि । त्वदीयानि । कर्माणि । पर्यश्यामहम् । गन्तुः, आप इति दीर्घश्छान्दसः ।

---

१. ०त त्व P. स्तत्र त्वम् M. अस्माभिः सम्यक् स्तुतः सन्नर्वाङस्मदभिमुखम् Sy.
२. मन्यस्य P. किमुद्दिश्य ... माननीयस्य Sy.
३. तारोरि०M. स्तोतुर्होतुः कर्तुर्यजमानस्य वा Sy.
४. मन्त्रान् Sy.
५. उपलक्ष्य Sy.
६. आयाहि, आगच्छैव । मा विलम्बय Sy.
७. स्तुवन्तोऽभिमतं शब्दयन्तो वा वयम् । अवसा त्वद्रक्षणेन रक्षिताः सन्तः Sy.
८. वस्तुं सुखेन संस्थातुमहनि वा सर्वेष्वहस्सु, अन्नाविकम् Sy.
९. VM. ignores ओ । अर्वाङ् । अवसा । विद्याम etc.
Ms. D. puts the figure ॥१७७॥ here to indicate the end of one hundred and seventyseventh hymn. No such number is given in P. and M.
१०. या Sy. या is suggested for यत्
११. प्रसिद्धा Sy.
१२. तव Sy.
१३. सर्वत्र श्रूयमाणा समृद्धिः Sy.
१४. असौ Sy.
१५. ययौ M.
१६. समर्थो भवसि Sy.
१७. ऊत्यै रक्षणाय Sy.
१८. तस्मा P.
१९. अभीष्टम् Sy.
२०. अस्मान्महतः कुर्वाणम् Sy.
२१. सर्वाणि भोगजातानि Sy.
२२. तव सम्बन्धीनि Sy.
२३. आप्तव्यानि । यद्वा विश्वाः सर्वा आप आप्ताः श्रुतयः Sy.
२४. पर्याम्य० D. परितो व्याप्नुयाम् Sy.
२५. मनुष्यस्योचिताः Sy.
२६. आव P.M.
२७. M. repeats दीर्घः दीर्घः ।

न घा राजेन्द्र आ दंभन्नो या नु स्वसारा कृणवन्त योनौं ।
आपंश्चिदस्मै सुतुका अवेषन्गमन्न इन्द्रः सख्या वयंश्च ॥२॥

न घा राजा[१]। राजा सन्। इन्द्रः। अस्माकं[२] तानि। न। आभिमुख्येन[३]। हिनस्तु[४] स्वस्या-नागमनेन। यानि कर्माणि[५]। द्यां[६] न पृथिवीं च। स्थाने[७]। कुर्वन्ति[८], कर्मभिर्हि[९] द्यावापृथिव्यो[१०]-र्धारणं भवति। वसतीवरीलक्षणा[११] आपः[१२]। च। अस्मै[१३] प्रीतये। शोभनसोमापत्याः[१४]। व्याप्नुवन्तु[१५]। सोऽयमिन्द्रः। अस्माकम्[१६]। सख्यानि। गच्छतु[१७]। हविर्लक्षणमन्नम्[१८]। च[१९]।

जेता नृभिरिन्द्रः पृत्सु शूरः श्रोता हवं नाधमानस्य कारोः ।
प्रभर्ता रथं दाशुषं उपाक उद्यन्ता गिरो यदि च त्मना भूत् ॥३॥

जेता। मरुद्भिः[२०] सह। इन्द्रः[२१]। शूरः[२२]। युद्धेषु[२३]। शत्रूञ्[२४]जयति[२५]। याचमानस्य[२६]। स्तोतुः। आह्वानं च। शृणोति[२७]। स रथम्। यजमानस्य[२८]। समीपे[२९]। प्रभरति[३०]। तस्य। स्तुतीश्च[३१]। उद्य-च्छति[३२]। यदि[३३]। चेदिन्द्रः[३४][३५]। स्वयमेव[३६]। इह भवति[३७]।

---

१. अयं राजा राजमान ईश्वरो वा Sy.
२. अस्मदीयानि कर्माणि Sy.
३. सर्वतः Sy. ४. हिंस्यात् Sy.
५. वृष्ट्यादिरूपाणि Sy.
६. परस्परं स्वसृभूते स्वयंसरणभूते अहोरात्रे। नुः पूरणः Sy.
७. स्वकीये स्थाने Sy.
८. द्विवचनस्थाने बहुवचनम्। कुरुतः 'कृवि हिंसाकरणयोश्च'।...तानीन्द्रोऽप्यनुजानात्वित्यर्थः। स्वसृभूतावध्वर्यु-यजमानौ वा कुरुतः। यद्वा स्वसारोऽङ्गुलयो योनौ फलोत्पादनस्थाने यज्ञे यानि कृतवन्तस्तानीति योज्यम् Sy.
९. ०भिर्वि M.
१०. द्यो P. ११. वसन्तीपरी० M.
१२. अप्कार्याणि हवींषि Sy.
१३. इन्द्राय Sy. अस्य प्रीतये or प्रीत्यै is suggested for अस्मै प्रीतयै
१४. शोभनबलहेतूनि Sy.
१५. व्याप्नुवन्ति Sy.
१६. अस्मभ्यम् Sy. १७. गमयतु Sy.
१८. प्रभूतमन्नं च Sy.
१९. VM. ignores घ। नु
२०. सङ्ग्रामनेतृभिर्मरुद्भिः सहितः सन् Sy.
२१. इन्द्र M. अयमिन्द्रः Sy.
२२. विक्रान्तः सन् Sy.
२३. सङ्ग्रामेषु Sy. २४. शत्रू M.
२५. जयशीलः शत्रूणाम् Sy.
२६. त्वदनुग्रहं याचमानस्य Sy.
२७. श्रोता भवति Sy.
२८. हविर्दत्तवतो यजमानस्य Sy.
२९. समीपनामैतत्। समीप एव यागदेशे Sy.
३०. सम्यक् प्रभरन् भवति...यदा स्तुतिं श्रोतुमिच्छति तदा स्वयमेव शीघ्रं रथं धावयित्वा यागं प्राप्नोतीत्यर्थः Sy.
३१. स्तुतिरूपाणि वचांसि स्तोतृभ्यः Sy.
३२. उद्यमयिता Sy. ३३. यदा Sy.
३४. च P. ३५. इन्द्र P.
३६. ०मेवह P. आत्मना, अनन्यप्रेरित एव Sy.
३७. भवेत् Sy.

**एवा नृभिरिन्द्रः सुश्रवस्या प्रखादः पृक्षो अभि मित्रिणो भूत् ।**
**समर्य इषः स्तवते विवाचि सत्राकरो यजमानस्य शंसः ॥४॥**

एवा नृभिः। एवम्[1]। मरुद्भिः[2] सह। इन्द्रः[3]। शोभनस्य यशस इच्छया[4]। सोमलक्षणस्यान्नस्य[5]। प्रकर्षेण खादिता। मैत्रीं[6] कुर्वतः शत्रून्[7]। अभिभवति[8]। विविधवाचि[9]। सङ्ग्रामे[10]। शत्रूणामेषणशीलः[11][12] सन्। वीरैः स्तूयते[13]। सत्यस्य कर्मणः कर्ता[14]। यजमानस्य। शंसनीयः[15]।

**त्वया वयं मघवन्निन्द्र शत्रूनभि ष्याम महतो मन्यमानान् ।**
**त्वं त्राता त्वमु नो वृधे भूर्विद्यामेषं वृजनं जीरदानुम् ॥५॥**

त्वा वयम्। त्वया[16]। वयम्[17]। मघवन्[18]! इन्द्र! शत्रून्[19]। महतः[20]। अभिमन्यमानान्[21]। अभिभवेम[22]। त्वं[23] रक्षकः[24]। त्वम्। एव। अस्माकम्। वर्धनाय[25]। भव।[26]

## I. 179.

**पूर्वीरहं शरदः शश्रमाणा दोषा वस्तोरुषसो जरयन्तीः ।**
**मिनाति श्रियं जरिमा तनूनामप्यू नु पत्नीर्वृषणो जगम्युः ॥१॥**

पूर्वीः। शौनकः—

---

१. M. adds अयं after एवम्। एवमेव पूर्वं यथा तथैव Sy.
२. कर्मनिर्वाहकैर्यजमानैर्दत्तम् Sy.
३. अयमिन्द्रः Sy.
४. शोभनान्नेच्छया, अन्नेच्छुर्वा Sy.
५. हविर्लक्षणमन्नम् Sy.
६. सहायवतोऽपि यजमानस्य शत्रून् Sy.
७. शत्रू P.
८. Omitted by P. यद्वा नृभिर्वृष्टिनेतृभिर्मरुद्भिः सहितोऽयमिन्द्रः सुश्रवस्या प्रखादः सन्नेवमेव मित्रिण ऋत्विग्रूपमित्रवतो यजमानस्यार्थं तदभिमतायाभि भूत्। अभीत्यनर्थकः। भवति। आभिमुख्येन वा भवति, तस्य हविः स्वीकृत्य तदभिमताय भवतीत्यर्थः Sy.
९. विविधवावाची P. अथ तथाभूतः सन् विवाचि विविधपरस्पराह्वानध्वनियुक्ते Sy.
१०. विविधस्तोत्रशस्त्रध्वनियुक्ते समर्ये मर्त्ययुक्ते यज्ञे वा तन्निमित्तम् Sy.
११. शत्रूणाम् M.
१२. हविर्लक्षणमन्नं च Sy.
१३. स्तौति Sy.
१४. फलानां सत्यकारी Sy.
१५. शंसकः सन् Sy.
१६. सहायेन Sy.
१७. यजमानाः Sy.
१८. धनवन्! Sy.
१९. शत्रू P.
२०. अतिबलान् Sy.
२१. अवध्यान् मन्यमानान् Sy.
२२. अभिभवितारो भवेम Sy.
२३. त्वमेव Sy.
२४. अस्माकं रक्षकः Sy.
२५. ०ना D. धनादिवर्धनाय Sy.
२६. VM. ignores विद्याम etc.

ऋतुस्नातामृषिर्भार्यां[1] लोपामुद्रां यशस्विनीम् ।
उपजल्पितुमारेभे[2] रहःसंयोगकाम्यया ॥
द्वाभ्यां सा त्वब्रवीद्[3]ऋग्भ्यां पूर्वीरिति चिकीर्षतः ।
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ॥
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः ।
उक्त्वैनः[4] कृतवानस्मि ब्रह्मचार्युत्तमे[5] जगौ ॥[6]

बह्वीः[7]। अहम्[8]। शरदः[9]। तपसा श्रममाणा[10]। रात्रीः। अहानि। उषसश्च[11]। गमयन्त्य[12]-भवम्[13]। तव हस्तपादादीनाम्[14]। शोभाम्[15]। जरिमा[16]। नाशयति[17]। अपि[18]। इदानीम्[19]। पत्नीः[20]। पुमांसः[21]। गच्छेरन्[22], इत्यृषिपत्न्या[23] विलपितम्[24]।

**ये चि॒द्धि पूर्व॑ ऋत॒साप॒ आस॑न्त्सा॒कं दे॒वेभि॒रव॑दन्नृ॒तानि॑ ।**
**ते चि॒दवा॑सु॒र्न॒ह्यन्त॑मा॒पुः सम॒ु नु पत्नी॒र्वृष॑भि॒र्जग॑म्युः ॥२॥**

ये चिद्धि। ये[25]। चित्[26]। हि[27]। पुरातनाः। तपःस्पृशः[28]। आसन्। साकम्[29]। देवैश्च प्रत्यक्ष-

---

१. ऋती BD.
२. उपजाल्पितुमा॰ D.
३. तु अ॰ M.
४. धुक्त्वैनः BD.
५. ॰ र्युक्तमे M. ॰र्यत्तमे P.
६. BD. IV. 57-59.
७. पुरातनान् Sy.
८. हे अगस्त्य ! अहं लोपामुद्रा Sy.
९. असङ्ख्यातान् संवत्सरान् Sy.
१०. अद्यतनकालपर्यन्तं बहुसंवत्सरं कार्त्स्न्येन त्वच्छुश्रूषया ... श्रान्ताभूवम् Sy.
११. उषःकालांश्च । सर्वत्रात्यन्तकालसंयोगे द्वितीया Sy.
१२. तथा देहं जरयन्तीः Sy.
१३. ॰वन् M.
१४. अङ्गानाम् Sy.
१५. शोभनां P. शोभा M. सौन्दर्यम् Sy.
१६. इदानींन्तु ... जरा Sy.
१७. नशयति P. D. नशपति M. हिनस्ति । एवमपि नानुगृह्णासीत्यर्थः Sy.
१८. अपि सम्भावनायाम् । उ इत्यवधारणे । नु इति वितर्के Sy.
१९. इवनीः P. इदानीमपि किं सम्भावनीयम् Sy.
२०. लोके हि ... स्त्रियः Sy.
२१. सेक्तारः पुरुषाः Sy.
२२. छेरन् P. गच्छरन् M. गच्छेयुः सम्भोगं कुर्युः। अतो मां किमित्यवमन्यसे। इदानीमपि वा सम्भावयेत्यर्थः Sy. गच्छेयुः is suggested for गच्छेरन्
२३. ॰षिः प॰ P. इत्यृषिरित्यृषिप॰ M.
२४. VM. ignores उ
२५. ये महत्तपो अजं वाऽनुतिष्ठन्ति ये च देववाक्यानि देवस्मृतिरूपाणि वदन्ति Sy.
२६. अपि Sy.
२७. तु Sy.
२८. तवस्पृ॰ M. सत्यस्यापयितारो व्याप्नुवाना महर्षयः Sy.
२९. साक P. सह Sy.

दृष्टैः। ब्रह्मवाद्यानि[1]। अवदन्[2]। ते। च[3]। अवसिताः[4]। नहि। अन्तम्[5]। गतास्तपसा[6]। तथा सति पत्न्यः[7]। पुम्भिः[8]। सङ्गच्छेरन्[9][10]।

**न मृषा श्रान्तं यदवन्ति देवा विश्वा इत्स्पृधो अभ्यश्नवाव ।**
**जयावेदत्र शतनीथमाजिं यत्सम्यञ्चा मिथुनावभ्यजाव ॥३॥**

न मृषा श्रान्तम्। न। व्यर्थम्[11]। तपः[12]। यस्मात्। रक्षन्ति। देवाः[13], आवां पुत्रानुत्पाद्य[14]। सर्वान्[15]। एव[16]। शत्रून्। अभिभवेव[17]। जयाव[18]। एव च। अस्मिंस्तपसि[19]। बहुतमप्रकारम्[20]। सङ्ग्रामम्[21]। यदा[22]। अभिमुखौ[23]। मिथुनीभूतौ[24]। स्वाभिमुख्येनाभ्यजाव[25]।

**नदस्य मा रुधतः काम आगन्नित आजातो अमुतः कुतश्चित् ।**
**लोपामुद्रा वृषणं नी रिणाति धीरमधीरा धयति श्वसन्तम् ॥४॥**

नदस्य मा। स्तोतुर्ऋषेः[26]। मम[27]। निरुन्धानस्येन्द्रियम्[28]। कामः। आगमत्। इतः[29]। आगतः[30]।

---

१. ब्रह्मवद्यानि is suggested for ब्रह्मवाद्यानि। सत्यवाक्यानि Sy.
२. वदन्ति Sy.
३. व P. D. चिदप्यर्थे Sy.
४. अवक्षिपन्ति रेतः। स्यतिरुपसृष्टो विमोचने वर्तते Sy.
५. ब्रह्मचर्यविरन्तम् Sy.
६. प्राप्नुवन्। ब्रह्मचर्यमतिपिद्धर्तुकालगमनमपि कुर्वन्तीत्यर्थः Sy.
७. पत्न्यश्च तपस्यमानाः (तपस्यन्त्यः) Sy.
८. भोगवर्षकैः पतिभिः सह Sy.
९. उ नु इति पूरणौ। सङ्गच्छेरन्। अतस्त्वं कथं मां नानुभवसीत्यर्थः Sy.
१०. VM. ignores उ। नु
११. भो पत्नि! त्वया मया च न मृषा श्रान्तं, व्यर्थं नैव Sy.
१२. तमः M. विभ्रमावाभ्याम् Sy.
१३. तपोभिः प्रीता देवाः Sy.
१४. ० मुत्पा० P.
१५. सर्वाः Sy.
१६. अपि P.
१७. ०भवाव M. अभितो व्याप्नुयाव Sy.
१८. यजाव M. जयलक्षणं सुरतसङ्ग्रामं वा जयाव Sy.
१९. अस्मिन्संसारे Sy.
२०. अपरिमितभोगप्राप्तिसाधनम् Sy.
२१. प्राप्ति परस्परम् Sy.
२२. यस्मात् Sy.
२३. सम्यक् परस्परं गच्छन्तौ प्रजयन्तौ वा Sy.
२४. मिथुनौ स्त्रीपुरुषरूपौ सन्तौ Sy.
२५. ०भ्यजाव M. त्वं चाहमपि परस्परमभिजयावेत्येवं तयोक्तं सम्भोगं सम्भावयामास Sy.
२६. स्तोतुः M. हे जाये नदस्य नदनस्य जपशब्दवितुर्जपाध्ययनकर्तुः Sy.
२७. उक्तलक्षणं माम् Sy.
२८. निरुन्धानमस्येन्द्रिय M. रेतोनिरोद्धुर्ब्रह्मचर्यमास्थितस्य। उभे कर्मणि षष्ठ्यौ Sy.
२९. त्वत्सङ्गमनिमित्तात् Sy.
३०. सर्वत उत्पन्नः। यद्वा। इत एतल्लोकजनितादमुतो लोकान्तरजनिताद्वा कुतश्चिन्निमित्तात्कामात् Sy.

अमुतो वा। अज्ञाताद् देशात्, इत इत्यात्मनो निर्देशः, अमुत इति पत्न्याः। लोपामुद्रा। भर्तारम्। आकर्षति। धृष्टम्। अधृष्टा। पिबति। श्वसन्तम्।

**इ॒मं नु सोम॒मन्ति॑तो हृ॒त्सु पी॒तमुप॑ ब्रुवे।**
**यत्सी॒माग॑श्चकृ॒मा तत्सु मृ॑ळतु पुलु॒कामो॒ हि मर्त्यः॑ ॥५॥**

इमं नु। इमम्। सोमम्। इदानीमान्तात्। यावदवकाशं जठरेषु। पीतम्। पररहस्यदर्शनप्रायश्चित्तार्थं स्तौमि। यत्। सर्वतो वयम्। पापम्। चक्रम। तत्र। अस्मान् पापविनाशनेन

१. वसन्तादिकालात् Sy.
२. कुतश्चित्कारणात् Sy.
३. दूरात् P.
४. आइ० M.
५. इयं लोपामुद्रा Sy.
६. रेतसः प्रवर्तकं माम् Sy.
७. ०न्ती P. नितरां गच्छतु Sy.
८. धीमन्तं नियमादविचलितम् Sy.
९. कातरैषा योषित् Sy.
१०. उपभुङ्क्ताम् Sy.
११. श्वस० M.
महाप्राणं महाबलम् Sy.
१२. ऋषिर्नदो भवति। नदतेः स्तुतिकर्मणः। ... नदनस्य मा रुधतः काम आगमत्। संरुद्धप्रजननस्य ब्रह्मचारिणः। इत्यृषिपुत्र्या विलपितं वेदयन्ते N.5.2. VM. ignores निः
१३. M. adds नु after इमम्। अहमन्तेवासी नु क्षिप्रमेतत्सम्भावणप्रणया (श्रवणा) नन्तरमेव Sy. अगस्त्यलोपामुद्राब्रह्मचारिसंवादे ब्रह्मचारिणः— इमं नु पदपूरण एवार्थे वा। इममेव सोमम् SKN. अगस्त्यलोपामुद्रासंवादेऽन्तेवासी ब्रह्मचारी, इमां सोमीं बृहतीमपश्यत्—इममहं सोमम् Dur.
१४. अन्तिके सन्निकृष्टे स्थितमिति शेषः SKN. अन्तिकेऽवस्थितम् Dur. अन्तिकात् is suggested for मान्तात्
१५. हृदयेषु, आत्मनी (स्मी) येषु Sy. कथमसावन्तिकस्य इत्याह ... हृदये SKN. स्व एव हृदयेऽवस्थितमुपब्रुवे Dur.
१६. स्वीकृतं सोमम् Sy.
पीतं सन्तम् SKN.
नच बहिरन्तिकेऽवस्थितमुपब्रुवे किन्तर्हि, पीतं सन्तम् Dur.
१७. ०त्तास्तम् P.
१८. उपेत्य मनसा प्राप्य प्रार्थयते (थये) Sy. उपगम्य मनसा ब्रवीमि SKN. उपगम्य चेतसा ब्रुवे Dur.
१९. किमुच्यते ? ... सर्वतः सर्वप्रकारम् SKN., Dur.
२०. गुर्वोः कामप्रलापश्रवणविषयपापम् Sy. पापम् SKN., Dur.
२१. कृतवन्तो वयम् Sy., Dur. कृतवन्तो वयं बुद्धिपूर्वमबुद्धिपूर्वं वा SKN.
२२. चकृतमत्रा० M. तस्मादागसः स सोमः Sy. तदयं सोमः Dur.

सोमः सुखयतु[1]। बहुकामः[2]। हि[3]। मनुष्यः[4] पररहस्यानि चाक्षः पश्यति[5]।

**अ॒गस्त्यः॒ खन॑मानः ख॒नित्रैः॑ प्र॒जाम॑प॒त्यं बल॑मि॒च्छमा॑नः ।**
**उ॒भौ वर्णा॒वृषि॑रु॒ग्रः पु॑पोष स॒त्या दे॒वेष्वा॒शिषो॑ जगाम ॥६॥**

अगस्त्यः। वानप्रस्थविधिनाऽगस्त्यो[6] मूलादानार्थम्[7]। खनित्रैः[8]। पृथिवीं खनमानो[9] गृहस्थवत्। प्रजादिकं[10] च। इच्छन्[11]। उभौ। इमावाकारौ[12]। अयमृषिः[13]। उग्रः[14]। पुपोष। आयुराशास्त इत्यादिकाश्चाऽऽशिषः[15]। देवेषु[16]। यथार्थाः। प्राप्तवान्[17]।

---

१. सु सम्यङ् मृळतु सुखयतु। पापजनितदुःखं मा करोत्वित्यर्थः Sy. 'मृळ सुखने' सुष्ठु सुखं करोतु, नाशयतु बन्धम्। विपाकं (पं) करोत्वित्यर्थः SKN. सुमृळतु सुष्ठु सुखविधिपरिणामं करोतु Dur.

२. बहुकामनावान्। अल्पेनैव कर्मणा बहुकामानाकलयति। यस्मादेवं तस्मात्परिहरेदित्यर्थः। यद्वा पापमवर्जनीयतया प्राप्यत इवेत्याह पुलुकामो हि खलु मर्त्यः कामहतः सन् कामेन निरुद्ध एव वर्तते। अतस्तयोरुत्सेकोऽयुक्तः। तच्छब्दश्रवणबोधोऽपि प्रामादिकः, अस्माकं प्राप्तेन सोमेन परिहर्तव्य इत्यर्थः। यद्वाऽयं मन्त्रश्चन्द्रपरो व्याख्येयो मनसोऽभिमानित्वाच्च तस्य पापस्यापि मनस्येव सम्भावितत्वात्। अस्मिन्पक्षे हृत्सु पीतं हृदयस्थितमित्यर्थः। शिष्टं स्पष्टम् Sy. यस्माद् बहुकामो मनुष्यः। तं च कामं पापेनावष्टब्धो न शक्नोति प्राप्तुमिति SKN. बहुकामो हि मर्त्यः Dur. पुलुकामः पुरुकामः N.6.4.

३. महत्पापमनुभुज्य(भूय)मानं प्रार्थनया कथं लुप्यत इत्यत आह हि यस्मात् Sy. तस्मादेवमुच्यते ... हिशब्दो यस्मादर्थे SKN. किं कारणम्? इतो यस्मात् Dur.

४. स बहुकामत्वान्मनुष्यस्वाभाव्यादवश्यमागः करोति। तदयं पीतः सोमः शमयत्वित्यभिप्रायः Dur.

५. VM. ignores नु। सु N.6.4.; SKN. II. 399.

६. अयमगस्त्यो मद्गुरुः Sy.

७. मूलानार्थं P.

८. फलस्योत्पादनसाधनैर्यज्ञस्तोत्रादिभिः Sy.

९. फलमभिमतमुत्पादयन् Sy.

१०. प्रजां प्रकर्षेण पुनः पुनर्जायमानमपत्यं कुलस्यापतनसाधनं पुत्रादिकं बलञ्च Sy.

११. ऐच्छन् D. इच्छमानः सन्। यद्वा प्रजां भृत्यादिरूपां चेच्छन् Sy.

१२. M. reads चेच्छन् भाविमावाकारौ for च। इच्छन्। उभाविमौ। आकारौ। वर्णनीयावाकारौ कामं च तपश्च Sy.

१३. अतीन्द्रियद्रष्टा महानुभावः Sy.

१४. उद्गूर्णः संसारे सञ्चरन्नपापः सन् Sy.

१५. ०स्त ... शिषे M.

१६. देवेभ्यः Sy. १७. यतोऽयं महानुभावस्तस्मादस्मान्पातीत्यर्थः Sy.

Ms. D. puts the figure ॥१७९॥ here to indicate the end of one hundred and seventyninth hymn. No such number is given in P. and M.

## I.180.

युवो रजांसि सुयमासो अश्वा रथो यद्वां पर्यर्णांसि दीयत् ।
हिरण्ययां वां पवयः प्रुषायन्मध्वः पिबन्ता उषसः सचेथे ॥१॥

युवो रजांसि। अश्विनौ[1] ! युवयोः। यदा। रथः[1]। उदकानि[2]। परितः। सञ्चरति[3]। तदानीं[4] तांस्तांल्लोकान्[5]। सुयमाः[6]। अश्वाश्च[7] सञ्चरन्ति। तथा हिरण्मयाः। पानसाधनभूताः[8] पात्र्यो[9] मधुपूर्णाः[10]। युवयोरथ[11]। उज्ज्वलन्ति[12]। युवां[13] मधुसदृशं[14] सोमम्[15]। पिबन्तौ[16]। उषसः[17]। सेवेथे[18][19]।

युवमत्यस्यावं नक्षथो यद्विपत्मनो नर्यस्य प्रयंज्योः ।
स्वसा यद्वां विश्वगूर्ती भराति वाजायेट्टे मधुपाविषे चं ॥२॥

युवमत्यस्य। युवम्[20]। अतनशीलस्यादित्यस्य[21]। अधस्तात्[22]। व्याप्नुथो[23] गच्छथः। विविध-पतनस्य[24]। नृहितस्य[25]। प्रकर्षेण यष्टव्यस्यादित्यस्य[26]। स्वसोषाः[27]। यदा। वाम्[28]। विश्वैराहूयमानौ[29]

---

१. The passage beginning with अश्विनौ and ending with रथः is missing in M.
२. अरणीयानभिमतदेशान् Sy.
३. परिगच्छेत् परितो गच्छति वा ।... दीयतिर्गतिकर्मा। 'दीयति तर्कति' (Ngh.2.14.) इति तत्कर्मसु पाठात् Sy.
४. तदेत्यर्थः Sy.
५. रञ्जकांल्लोकान् Sy.
६. शोभननियमनाः । लोकत्रयसञ्चारिण इत्यर्थः Sy.
७. रथवोढारः Sy.
८. वज्रा रथनेमयो वा Sy.
९. ०भूता...पा० M.
१०. यद्वा हिरण्मयानि पवयो मधुपात्राणि वां युवाभ्यामर्थाय Sy.
११. रथागमनकाले वां युवयोः Sy.
१२. उज्ज्व० P.D. प्रुष्णन्त्यभिमतम् Sy.
१३. यस्मादेवं तस्माद्युवाम् Sy.
१४. मधुनो मधुसदृशस्य Sy.
१५. सोमरसस्य । कर्मणि षष्ठी । रसमोसम् Sy.
१६. आस्वादयन्तौ Sy.
१७. उषःसम्बन्धिनि काले Sy.
१८. यज्ञं सङ्गच्छेथे । अत्र क्रमो न विवक्षितः । उषःकाल एवागत्य मधुरं सोमरसं पिबतमित्यर्थः Sy.
१९. VM. ignores वाम्
२०. युवाम् Sy.
२१. सततसञ्चारिणः Sy.
२२. अवस्तात्तदुदयात्पूर्वम् Sy.
२३. ०प्नुतो M. व्याप्नुथो देवयजनं गन्तुम् Sy.
२४. विविधगमनस्य विचित्रगमनस्य वा Sy.
२५. मनुष्याणां हितस्य Sy.
२६. प्रकर्षेण पूज्यस्य । एतानि कर्माणि षष्ठ्यन्तानि । उक्तरूपं रथम् Sy.
२७. स्वसृस्थानीया स्वयंसारिणी वोषाः Sy.
२८. युवयोः Sy.
२९. सर्वस्तुत्यौ सर्वदोद्गूर्णौ वा Sy.

पृथिवीं प्रति भरति[1]। यदा च वां बलाय[2] च। अन्नाय[3]। च। सोमपौ[4]! स्तौति[5]।[6]

**युवं पर्य उस्रियायामधत्तं पुक्वमामायामव पूर्व्यं गोः ।**
**अन्तर्यद्वनिनों वामृतप्सू ह्वारो न शुचिर्यजते हुविष्मान् ॥३॥**

युवं पयः। युवम्[7]। पयः। गवि[8]। अधत्तम्[9]। पक्वम्[10]। आमायाम्[11]। ऊधःप्रदेशे[12]। बहु[13]। गोः[14], पुरातनं वा तस्यास्[15]तदिदं शयवे कृतम्[16]। यदा[17]। हे सत्यरूपौ[18]! वाम्। वनिनः[19]=वृक्षस्य[20]। अन्तः =अरण्यमध्ये[21]। स्तेनः[22]। इव ह्वारः। शुचिः[23] वायुर्नामर्षिः। यजते[24] स्म[25]। हविष्मान्[26], अभिशस्यमानः स्तेनोऽरण्ये यजते।

**युवं हं घुर्मं मधुमन्तुमत्रयेऽपो न चोदोंऽवृणीतमेषे ।**
**तद्वां नरावश्विना पश्वइष्टी रथ्येव चुक्रा प्रति यन्ति मध्वः ॥४॥**

युवं हं[27]। युवम्[28]। खलु। दीप्तमग्निम्[29]। उदकवन्तम्[30]। अत्रयेऽसुरैरग्नौ[31] प्रक्षिप्ताय।

---

१. योषते(ति) त्वदागमनाय प्रभातं करोति Sy.
२. गमनाय वा Sy.
३. प्रभूतान्नाय Sy.
४. मधुरस्य सोमरसस्य पातारौ युवाम् Sy.
५. यजमानः....स्तौति तदा रथं प्राप्नुथ इत्यर्थः Sy.
६. VM. ignores यत्
७. हे अश्विनौ...युवाम् Sy.
८. गव्यं P. गोनामैतत्। भोगोत्पादिन्यां गवि Sy.
९. धत्तम् P. अधारयतं स्थापितवन्तौ Sy.
१०. परिपक्वं भोगयोग्यम् Sy.
११. अपक्वायाम् Sy.
१२. अवस्तादधारयतम्। गवि क्षीरमुत्पाद्य पुनर्भोगाय पृथक्कृतवन्तावित्यर्थः Sy.
१३. पूर्वभवं तत्रैवोत्पन्नम् Sy.
१४. गोः सम्बन्धि दुग्धम् Sy.
१५. तस्याः is omitted by P.
१६. कृत P. D.
१७. येदा P. D. यस्मात् Sy.
१८. सत्यस्वरूपौ यज्ञियहविर्भक्षयितारौ वा हे अश्विनौ Sy.
१९. ०नै P. D.
२०. उदकवत उदकोपलक्षितहविष्मतो यज्ञस्य Sy.
२१. मध्ये Sy.
२२. तत्र दृष्टान्तः। वनिनो वनसम्बन्धिवृक्षसमूहस्यान्तर्मध्ये ह्वारो न चोर इव। स यथा जागरूको वर्तते तथा यजमानोऽपीत्यर्थः Sy.
२३. शुद्धो यजमानः Sy.
२४. पूजयति युवां तस्मादेवमकुरुतम्। यद्वा यदैवं यजमानः करोति तदेत्यर्थः Sy.
२५. स्म P.D.
२६. प्रदेयहविषा तद्वान् Sy.
२७. अत्रेतिहासमाहुः। प्रवर्ग्येण प्रचरन्तमत्रिं राक्षसास्तप्ते घर्मेऽपातयन्। स च तप्यमानोऽश्विनौ तुष्टाव। तौ च स्तुत्या हृष्टमनसावरक्षतामिति। अपरे, अग्नौ क्षिप्तमपालयतामित्याहुरिति Sy.
२८. हे अश्विनौ...युवाम् Sy.
२९. दीप्तं प्रवर्ग्यम् Sy.
३०. पयोघृतरूपाभ्यां मधुभ्यां तद्वन्तम् Sy.
३१. अत्रये M. एतन्नाम्ने महर्षये Sy.

उदकानि । तटः[1] । इव । अवारयेथाम्[2] । वामिच्छन्तौ[3], अस्मिन्नाश्चर्ये[4] कृते सति । नेतारौ[5] ! अश्विनौ ! देवैर्वाम्[6] । पशोर्यागः[7] कल्पितः । तथा तदानीं रथ्यायाम्[8] । चक्राणि[9] । इव । सोमाश्च मधुसदृशाः[10] । प्रतियन्ति[11] ।

**आ वां दानाय ववृतीय दस्रा गोरोहेण तौग्र्यो न जिव्रिः ।**
**अपः क्षोणी संचते माहिना वां जूर्णो वामक्षुरंहसो यजत्रा ॥५॥**

आ वां दानाय । आवर्तयामि[12] । वाम्[13] । दानाय[14] । दर्शनीयौ[15] ! यथा । उदकस्य[16] । ओघेन[17] समुद्रमध्ये च[18] ध्रियमाणः । भुज्युर्वामाजुहाव[19] । जीर्णः[20] । अन्तरिक्षम्[21] । द्यावापृथिव्यौ[22] च ।

---

१. तटः P.D. क्षोदांसि क्षोदमानानि Sy.
२. अपारं यथा M. अवारयतम् । औष्ण्यं शैत्ययुक्तं कृतवन्तौ । तप्तघर्मसकाशाद् भ(र) क्षितवन्तावित्यर्थः । यद्वा । अत्रये क्षोदः । उदकनामैतत् । तत्स्थं शैत्यं लक्ष्यते । अपः क्षोदो न । अप इति षष्ठ्यर्थे द्वितीया । उदकानां शैत्यं यथा भवति तद्वत् । पक्षान्तरे तु घर्मं दीप्तमग्निं मधुमन्तं कृत्वाऽवृणीतं सुखयतमित्यर्थः । तथा च मन्त्रान्तरम्—'तप्तं घर्ममोम्यावन्तमत्रये' (RV. I. 112.7.) इति Sy. ३. सौख्यमिच्छन्ते Sy.
४. यस्मादेवं तस्मात् Sy. तस्मिन्ना० is suggested for अस्मिन्ना०
५. नराकारौ वा Sy.
६. ०वैर्वा P. युवाभ्याम् Sy.
७. पशुरित्यग्नेर्नाम । 'अग्निः पशुरासीत्' (TS.5.7.26.1.) इत्यादिश्रुतेः । यद्वा पशुप्रियत्वात्पशुरित्युच्यते । तस्याग्नेरिष्टिर्भवति । अग्नौ यागः सर्वो युष्मदर्थं प्रवर्तत इत्यर्थः । यद्वा । पशुसाध्यो यागो युवाभ्यां प्रवर्तत इति शेषः । 'आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासेत्' (TS.2.1.10.1.) इत्यादिनाप्यश्विभ्यां पशुर्विहितः Sy.
८. रथ्यानां P. ९. तत्र दृष्टान्तः । रथ्येव चक्रा रथसम्बन्धीनि चक्रा चक्राणीव । तानि यथा प्रवणदेशमभिगच्छन्ति तद्वत् Sy. १०. मधुसदृशाः सोमरसा अपि Sy.
११. युवाभ्याम् (युवाम्) प्रति यन्ति, अभिगच्छन्ति Sy. १२. आवर्तयामि यागदेशम् । वृतेरन्तर्भावितण्यर्थस्येदं रूपम् Sy.
१३. युवयोः Sy. १४. अस्मदभिमताय युवाभ्यां दापयितुम् Sy. १५. शत्रूणामुपक्षपयितारावश्विनौ Sy. १६. केन साधनेनेति तदुच्यते । गोः स्तुतिरूपाया वाचः Sy. १७. वहनेन साधनेन । यद्वा । आवर्तनकाल उच्यते । गोर्गन्त्र्या उषसो वहनेन Sy. १८. ०ध्येऽप्युह्य० M.
१९. तुग्राख्यस्य राज्ञः पुत्रो भुज्युरिव । स यथा शत्रुभिः सन्ताड्य समुद्रे पातितो युवां परितोष्य स्वोद्धाराय स्वसमीपमानयत तद्वदित्यर्थः । इयमाख्यायिका 'तुग्रो ह भुज्युम्' (RV. I. 116.3.), 'भुज्युमंहसः पिपृथः' (RV. X. 65.12.), 'नासत्या भुज्युम्' (RV. I. 116.4.) इत्यादिषु प्रसिद्धा च । किमाश्चर्यमहमावर्तयामीति Sy.
२०. जीर्णा M. जीर्णो जयशीलो वा Sy.
२१. अप इत्यन्तरिक्षनाम (Ngh. 1.3.)
२२. 'क्षोणीति पृथिवीनाम (Ngh.1.1.) द्यावापृथिव्यावपि Sy.

सेवते[1]। महत्त्वेन[2]। युवयो रथः। तथा यष्टव्यौ! वाम्। सम्भक्तुमिच्छन्[3]। प्रवर्तः[4]?। जीर्णो भवति[5]।

**नि यद्युवेथे नियुतः सुदानू उप स्वधाभिः सृजथः पुरंधिम् ।**
**प्रेषद्वेषद्वातो न सूरिरा महे ददे सुव्रतो न वाजम् ॥६॥**

नि यद्युवेथे। हे शोभनदानौ[6]! यदा वर्षार्थम्[7]। नियुतः=वायोरश्वाः[8]। युवां निमिश्रयथः[9]। तदानीमश्वैः[10][11]। उपसृजथः। पृथिवीं बहूनां दात्रीम्[12]। प्रीणयति[13] च। व्याप्नोति[14] च वाम्। वातः[15]। इव। स्तोत्रैः स्तोता[16]। अथ महत्त्वाय। आदत्ते[17] च। भवद्दत्तमन्नं चादत्ते। सुकर्मा[18]। इव कर्षकः।

**वयं चिद्धि वां जरितारः सत्या विपन्यामहे वि पणिर्हितावान् ।**
**अधा चिद्धि ष्माश्विनावनिन्द्या पाथो हि ष्मा वृषणावन्तिदेवम् ॥७॥**

वयं चिद्धि[19]। वयम्। अपि। वाम्। स्तोतारः[20]। सत्यवचनाः[21]। स्तुमः[22]। युवयोर्हि स्तोता[23]।

---

१. सेवते प्रत्येकम् । यद्वा वां माहिना यजमानो द्यावापृथिव्यौ सचते Sy.
२. माहात्म्येन युवयोः प्रसादेन सर्वोपकारिण्याविति ख्याति सर्वप्रदेशव्यापित्वं वा Sy.
३. ०क्तुच्छन् P. अयमुचिरकालव्याप्तो दीर्घजीवी भूयात्। यद्वा हे यजत्रा वां प्रसादाज्जूर्णो जीर्णो यजमानोऽंहसो दुरितस्य हन्त्रीरप उक्तलक्षणानि सोमरसरूपाण्युदकानि क्षोणी क्षोण्याम्। सप्तम्यर्थे प्रगृह्यम्। भूम्यां चिरकालमक्षुर्व्याप्तः सन् माहिना माहात्म्येन सचते। द्वितीयो वामित्ययमादरार्थः Sy.
४. प्रवर्ते P. प्रवर्त्ते M. अंहसः पापाज्जरालक्षणात्प्रमुच्य Sy.
५. (युवयोः) प्रसादादयमृषिर्जूर्णो जरया जीर्णाङ्गः सन् Sy.
६. अश्विनौ ! Sy.
७. ०र्थिव P.
८. अश्वान् Sy.
९. निमश्र० M. नियुञ्जाथे। नियोजयथः। ताभिरस्मद्यज्ञगमनाय संयुक्तौ भवथः Sy.
१०. तदा Sy.
११. तत्कारणैरश्वकैर्वा Sy.
१२. बहूनां धात्रीम् Sy.
१३. तर्पयतु Sy.
१४. व्याप्नोतु। कामयतां वा Sy.
१५. वायुरिव तद्वत्क्षिप्रम् Sy.
१६. एवं च सति सूरिः स्तोता, अयं यजमानः Sy.
१७. स्वीकरोति। . . . यद्वा . . . स्वीकृत्य स्वमहत्त्वाय युवामेव तर्पयत्वित्यर्थः Sy.
१८. अतिप्रशस्तोष्माविकर्मवानिव Sy.
१९. हि is omitted by M.
२०. तव स्तोतारः Sy.
२१. सत्यफलाः सन्तः Sy.
२२. विविधं स्तुमः Sy.
२३. पणाधारो द्रोणकलशः Sy.

हितयुक्तो[1] भवति। अथ[2]। अश्विनौ! अनिन्द्यौ[3]! रक्षथः[4]। वर्षितारौ[5]! अन्तिकस्थदेवं[6] स्तोतारम्[7]।

**युवां चिद्धि ष्माश्विनावनु द्यून्विरुद्रस्य प्रस्रवणस्य सातौ।**
**अगस्त्यो नरां नृषु प्रशस्तः काराधुनीव चितयत्सहस्रैः ॥८॥**

युवां चित्[8]। हे अश्विनौ! युवाम्। दिवसेषु[9]। अनन्या[10] दीप्तिरहितत्वाद् विगतरुद्रभावस्य[11]। वर्षस्य[12]। सम्भजनार्थम्[13]। अगस्त्यः[14]। मनुष्याणाम्[15]। नेतृषु देवेषु[16]। प्रशस्यमानः[17] स्तौति[18]। यथा। वादनस्य[19] ध्माता रीपुरांश[20] ऋषिः। स्तोत्रसहस्रैः[21]। अचेतयत् तद्वच्च चेतयति[22]।

**प्र यद्वहेथे महिना रथस्य प्र स्पन्द्रा याथो मनुषो न होता।**
**धत्तं सूरिभ्य उत वा स्वश्व्यं नासत्या रयिषाचः स्याम ॥९॥**

प्र यद्वहेथे। रथस्य[23]। महत्त्वेन। यदा[24]। युवां प्राप्नुथः[25]। तदा स्पन्दनशीलौ[26]! प्रयायश्च[27]।

---

१. स्थापितरसवानासीत्। यद्वा पणिर्वणिग्लुब्धकोऽयष्टा ह्रितयानियतधनो धनाढ्योऽप्ययष्टा वि वियुज्यताम्। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः Sy.
२. अपि च। चिद् हि स्म एते त्रयः पूरणाः Sy.
३. प्रशस्यनामैतत्। हे प्रशस्यौ! Sy.
४. सोमं पिबथः। यद्वा। अन्तिके वर्तमानं देवान्प्राप्नुवानं सोममिति योज्यम् Sy.
५. हे कामानां वर्षितारौ! युवाम् Sy.
६. ०कास्थ० M. देवानामन्तिके Sy.
७. VM. ignores हि। वि। चित्। हि। स्म। हि। स्म
८. M. adds हि after चित्।
९. चिद्धि स्म इति त्रयः पूरणाः। अनुद्यून् प्रतिदिनम् Sy. १०. अनन्या M.
११. विशिष्टोष्णरूपदुःखद्रावणस्य विविधरोरूयमाणद्रवणवतो वा Sy.
१२. वृष्टयुदकसंस्रावस्य Sy.
१३. लाभे निमित्तभूते सति Sy.
१४. एतन्नामा महर्षिः Sy.
१५. मनुष्यान् P. D. नेतृणां कर्मनिर्वाहकाणां मनुष्याणाम् Sy.
१६. येषु तादृशा मनुष्याः सन्ति तेषु Sy.
१७. प्रशस्ततरोऽयम् Sy.
१८. चेतयति। स्तुत्या प्रबोधयति Sy.
१९. तत्र दृष्टान्तः...काराशब्दः। तस्य धूनयितोत्पादयिता शङ्खादिः स इव। यद्वा। एतदप्यगस्त्यविशेषणम्। कारः शब्दयिता होत्रादिस्तस्य धुनिः कम्पयिता प्रेरक इव। इवेति सम्प्रत्यर्थे Sy. अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः N.7.31.
२०. पुरां M. २१. अपरिमितैः स्तोत्रैः Sy.
२२. VM. ignores चित्। हि। स्म
२३. गमनसाधनस्य Sy. २४. यस्मात् Sy.
२५. ०थ P. धारयथो यज्ञम्। यद्वा। रथस्य स्वर्गगमनसाधनस्य यागस्य धुरं वहथः Sy. २६. स्पन्दनशीलौ युवाम् Sy.
२७. प्रयात्यश्च P. प्रयात्यश्च D.M. गच्छथः स्वस्थानं यज्ञारम्भे आगच्छथो यज्ञसमाप्तौ पुनर्गच्छथश्च Sy.

यथा। मनुष्यस्य[1]। होता[2] यज्ञादावागतो यज्ञान्ते गच्छति। दत्तम्[3]। स्तोतृभ्यः[4]। अपि। च। शोभनाश्वसख्यम्[5]। नासत्यौ[6]! धनस्य सम्भक्तारः[7]। वयं स्याम[8][9]।

**तं वां रथं वयमद्या हुवेम स्तोमैरश्विना सुविताय नव्यम् ।**
**अरिष्टनेमिं परि द्यामियानं विद्यामेषं वृजनं जीरदानुम् ॥१०॥**

तं वां रथम्। तम्। युवयोः[10]। रथम्। वयम्[11]। इदानीम्[12]। आह्वयामः[13]। स्तोमैः[14]। अश्विनौ[15]! अभ्युदयाय[16]। स्तोतव्यम्[17]। अक्षतचक्रधारम्[18]। परिगच्छन्तम्[19]। द्याम्[20]।

## I.181.

**कदु प्रेष्ठाविषां रयीणामध्वर्यन्ता यदुन्निनीथो अपाम् ।**
**अयं वां यज्ञो अकृत प्रशस्तिं वसुधिती अवितारा जनानाम् ॥१॥**

कदु प्रेष्ठौ[21]। कदा[22]। खलु स कालो भवति। प्रियतमौ[23] युवाम्। अन्नानाम्[24]। रयीणां[25] चार्थम्। अध्वरमिच्छन्तौ[26]। यदा[27] युवाम्। अपामिति[28] कर्मणि षष्ठी, अपः[29]। उन्निनीथः[30]। अयम्[31]। युवयोः[32]।

---

१. ०ष्य M. तत्र दृष्टान्तः।...मनुष्यस्य यजमानस्य Sy.
२. यथा यज्ञप्रारम्भ आगच्छति कर्मणि निवृत्ते पुनरपगच्छति तद्वत् Sy.
३. दत्त P. धारयतं फलम् Sy.
४. आगमनसमये सूरिभ्यः स्तोतृभ्यः Sy.
५. ०संख्यम् P. ०नाश्च संख्यं D. ०नाश्चसख्यं M. शोभनाश्वसमूहं धत्तम् Sy.
६. सत्सु भवौ सत्यौ। न असत्यौ नासत्यौ हे तादृशौ! Sy.
७. त्वदनुग्रहात्...धनसमवायिनः Sy.
८. स्यामः M. भवेम Sy.
९. VM. ignores प्र
१०. युवयोः सम्बन्धिनं शीघ्रगमनेन स्तुत्यम् Sy. ११. अगस्त्याः Sy. १२. अस्मिन्नस्तुत्येऽहनि Sy. १३. आह्वयेम Sy.
१४. केन साधनेनेत्युच्यते...स्तोत्रैः Sy.
१५. किमर्थम्?...सुष्ठु प्राप्तये Sy.
१६. कीदृशम्? नव्यं स्तुत्यं नूतनं वा Sy.
१७. अहिंसितचक्रवलयम् Sy.
१८. परितो गच्छन्तम् Sy.
१९. दयात् M. द्युलोकस्य Sy.
२०. VM. ignores विद्याम etc. Ms. D. puts the figure ॥१८०॥ here to indicate the end of one hundred and eightieth hymn. No such number is given in P. and M.
२१. प्रेष्टा M.
२२. तदा M. कदा भविष्यति Sy.
२३. प्रियतमौ वां युवाम् Sy.
२४. इष्यमाणानामन्नानाम् Sy.
२५. धनानाम्। कर्मणि षष्ठयौ। अन्नानि धनानि च। उन्निनीथ ऊर्ध्वं प्रापयथः Sy.
२६. अध्वरं पारयितुमिच्छन्तौ युवाम् Sy.
२७. तदा M. २८. अपामपामिव M.
२९. वृष्टयुदकानां वृष्टयुदकानि च Sy.
३०. उत्कृष्टमधः प्रापयथः। इति यत्तत् कदा Sy. ३१. अस्माभिरनुष्ठीयमानः Sy.
३२. युवयोरेव Sy.

यज्ञः[1]। प्रशस्तिम्[2]। अकृत[3]। धनानां दातारौ[4]! रक्षितारौ[5]! जनानाम्।

आ वामश्वासः शुचयः पयस्पा वातरंहसो दिव्यासो अत्याः।
मनोजुवो वृषणो वीतपृष्ठा एह स्वराजो अश्विना वहन्तु ॥२॥

आ वामश्वासः। वाम्, एवंविधा[6] युवयोः[7]। अश्वाः। इह[8]। आवहन्तु[9]। उदकस्य[10] रक्षितारः[11]। वातवेगाः[12]। दिवि भवाः। अतनशीलाः[13]। मनोवेगाः[14]। वर्षितारः[15]। कान्तपृष्ठाः[16]। प्रभवः[17][18]।

आ वां रथोऽवनिर्न प्रवत्वान्त्सृप्रवंन्धुरः सुवितायं गम्याः।
वृष्णः स्थातारा मनसो जवीयानहंपूर्वो यजतो धिष्ण्या यः ॥३॥

आ वां रथः[19]। युवयोः। रथः। पृथिवी[20]। इव। विस्तीर्णविकासः[21]। प्रसृप्तफलकासङ्घाटः[22]। अभ्युदयाय[23]। गच्छतु[24]। हे मेघस्याधिष्ठातारौ[25]! मनसोऽपि। वेगवान्[27]। युवयोर्गमनावसरेऽहं पूर्व[28] इत्युपतिष्ठन्[29]। यष्टव्यः[30]। यो भवति[31]। स्तुत्यौ[32]![33]

---

1. यज्ञम् Sy.
2. प्रशंसां स्तुतिम् Sy.
3. करोति। यज्ञे शंसनीयानि शस्त्राणि युवामेव प्रशंसन्तीत्यर्थः Sy.
4. यस्मादेवं तस्माद् हे वसुविदौ वसुनो धनस्य धातारौ वस्तव्यकर्माणौ Sy.
5. हे जनानामवितारावुक्तलक्षणौ युवां कदाऽस्मानां धनानां च दातारौ भवथ इति Sy.
6. एवि० P.D. शोभनाश्वयुक्तौ वां युवां Sy.
7. युष्मदीयाः Sy.
8. अस्मिन्यज्ञे Sy.
9. प्रापयन्तु Sy.
10. अवशिष्टान्यश्वविशेषणानि। कीदृशास्ते शुचयः शुद्धाः दीप्ता वा। पयस्पा वृष्टयुदकस्य पातारः Sy.
11. ०री P.
12. वायुवेगाः Sy.
13. अनशीलाः P.
14. मनोजवाः Sy.
15. वर्षका युवान इत्यर्थः Sy.
16. वपुष्मन्त इत्यर्थः Sy.
17. स्वयमेव राजमानाः। ईदृशा भवन्तु Sy.
18. VM. ignores शुचयः। अश्विना।
19. पूर्वमन्त्रेऽश्वव्याजेनाश्विनोरागमनमुक्तम्। अनेन रथव्याजेनोच्यते Sy.
20. भूमिरिव Sy.
21. अत्यन्तविस्तारवान् Sy.
22. ०टे M. विस्तीर्णपुरोभागः Sy.
23. शोभनफलाय Sy.
24. अस्मद्यज्ञमागच्छतु। पुरुषव्यत्ययः Sy.
25. वर्षकस्याश्वस्य Sy.
26. रथस्याधिष्ठातौ! Sy.
27. मनोवेगवानित्यर्थः Sy.
28. अहङ्कारपूर्वो मनस्वी वाऽत्युदारः Sy.
29. ०तिन् P. D. उपतिष्ठमानः is suggested for उपतिष्ठन्
30. ईदृशो रथ आगच्छतु Sy.
31. अस्ति सः Sy.
32. उन्नतस्थानार्हौ Sy.
33. VM. ignores आ

इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः ।
जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ॥४॥

इहेह । अत्रात्र । प्रादुर्भूतौ । सह कामयेताम् । पापेनालिप्यमानया । तन्वा । नामभिश्च । स्वैः=दस्रा अश्विनावित्यादिभिः । जयशीलः ।

१. उभाभ्यामिहशब्दाभ्यां मध्यमोत्तमस्थाने उच्येते । तयोः Sy. इहेहेति वीप्साद्विर्वचनेनान्तरिक्षं द्यौश्च निर्दिश्यते । इह चान्तरिक्ष इह च दिवि SKN. इह च मध्यस्थान इह च द्युस्थाने Dur.
२. सम्भूतौ । चन्द्रसूर्यरूपेणेति यावत् Sy. जातौ भवन्तौ SKN. सूर्याचन्द्रमसावित्येके N.12.1.
३. सम्यग्वा Sy. सम्यगत्यर्थम् SKN.
४. वका० M. पुनः पुनः स्तूयेथे कामयेथां वा यज्ञम् । पुरुषव्यत्ययः Sy. पुनः पुनर्वावशीते (शस्येते) स्तूयेते इत्यर्थः SKN. संस्तूयेथे Dur. कामयेथाम् is suggested for कामयेताम्
५. अपापौ । आथर्वणस्य गुरोः शिरश्छेदनादिना पापलेपरहिताविति भावः Sy. रेपः पापम्, अपापया SKN. अपापया Dur.
६. शरीरेण शरीरसौन्दर्येण निमित्तेन Sy. अपापेन स्वेन शरीरेण SKN. यथासङ्कल्पं कृतया Dur.
७. स्वीयैर्माहात्म्यविशिष्टैः Sy. परमनाश्रित्य यानि स्वस्तुतिनिमित्तानि तैः Dur.
८. स्वगौ M.
९. दस्राविभिः M. अश्विनौ नासत्यावित्याविभिरपि । रमणीयशरीरवत्त्वान्महिमोपेतनामवत्त्वाच्च हेतोः संस्तूयेथे इत्यर्थः । यद्वा । अरेपसा तन्वेति योज्यम् । उक्तप्रकारेण गुरुशिरश्छेदादप्यपापेन शरीरेण तादृग्महत्त्वख्यापनेनेति यावत् Sy. अश्विनौ नासत्यौ दस्रावित्येवमादिभिश्च SKN.
१०. ०लौ M. किञ्च वां युवयोरन्य एको मध्यमस्यान्तरिक्षस्य पुत्रस्थानीयः सोमो जिष्णुर्जयशीलः सुमखस्य शोभनयज्ञस्य सूरिः प्रेरयिता सन्, ऊहे वहति विश्वं जगद्धारयति, चन्द्रात्मनस्तस्योदये सति ह्योषधिवनस्पत्यादयो वर्धन्ते । अन्योऽपर उत्तमस्थानो दिवो द्युलोकस्य पुत्रः पुत्रस्थानीय आदित्यः सुभगः शोभनरश्मिरूपधनः, ऊहे वहति । कृत्स्नमेवं पृथग् जगन्निर्वाहकौ महानुभावौ युवां सह स्तूयेथे Sy. जिष्णुर्जयशीलो वां युवयोरन्य एको मध्यमः सुमखस्य सुमहतोऽपि शत्रुबलस्य, सूरिः सुष्ठ्वीरयिता, दिवोऽन्यः ... अन्यस्तु सुभगः सुधन उत्तमः पुत्रः । ऊहे कर्मणि प्रथमपुरुषैकवचनस्य स्थाने व्यत्ययेन कर्तर्युत्तमैकवचनमेतत् । ऊह्यते विततैः साहचर्यात् । अथवा वहेरेतद्रूपम् । ऊह्यते रथेन स्वैरश्वैर्वायुना वीवयात्तमयाय SKN. नित्यमेव जेता युवयोरन्यः ... सुमहतो बलस्येरयिता शत्रुषु, स च नान्यो मध्यस्थानादिति मध्यमो मध्यस्थानः ... . सुभगः सुधनः, ऊह ऊह्यते वायुनाऽऽदित्यो नित्यम् । स च नान्यः सूर्यादित्येवमत्रापि मध्यमोत्तमाविति Dur. इह चेह च जातौ संस्तूयेथे । पापेनालिप्यमानया तन्वा । नामभिश्च स्वैः । जिष्णुर्वामन्यः । सुमहतो बलस्येरयिता मध्यमः । दिवोऽन्यः सुभगः पुत्र ऊह्यत आदित्यः N.12.3; SKN. IV. 99
११. VM. ignores वाम् । अन्यः etc.

प्र वां निचेरुः ककुहो वशाँ अनु पिशङ्गरूपः सदनानि गम्याः ।
हरी अन्यस्य पीपयन्त वाजैर्मथ्ना रजांस्यश्विना वि घोषैः ॥५॥

प्र वां निचेरुः । युवाम्[1]। लोकान्[2] व्यथितारौ[3] भवथः[4]। गर्जितशब्दैः[5]। वायुघोषैश्च[6]।[7]

प्र वां शरद्वान्वृषभो न निष्षाट् पूर्वीरिषश्चरति मध्व इष्णन् ।
एवैरन्यस्य पीपयन्त वाजैर्वेषन्तीरूर्ध्वा नद्यो न आगुः ॥६॥

प्र वां शरद्वान्। युवयोः[8]। विशरणवान्[9]। वृषभः[10]। इव। पर्वतादीनाम[11]भिभविता[12] वायुः। यज्ञमुखे स्थितानि[13]। अन्नानि[14]। प्रचरति[15]। मादकं सोमम्[16]। इच्छन्[17]। अथाऽऽदित्यस्य[18]।

---

१. हे अश्विना अश्विनौ वां युवयोर्मध्येऽन्यस्यैकस्य ककुहः श्रेष्ठः पिशङ्गरूपो हिरण्यरूपः पीतवर्णो वा बहुभिरश्वावयवैर्निरूप्यमाणो वा रथो वशान्, अनु कामाननुलक्ष्य यथाकामम् । अस्मद्यज्ञागमनेच्छयेत्यर्थः । यद्वा । वशान्स्वाधीनाः ककुहो दिशो दिगन्तरालानुक्रमेण नीचैरुच्चैश्चरन् स्वस्थानाद्देवयजनमुखं गच्छन् । सवनान्यस्मद्यागगृहाणि । प्र गम्याः प्रकर्षेण गच्छतु । पुरुषव्यत्ययः । अत्र यद्यप्यन्यस्येति नोक्तं तथाप्युत्तरवाक्ये तथोक्तत्वादत्रापि लभ्यते । अन्यस्य युवयोरन्यतमस्य, हरी अश्वौ Sy.

२. युवा (मन्त्रानां रथीणाञ्चार्थमध्वरमिच्छन्तौ) लोकान् P. रजांसि लोकाः । अत्र लोकशब्दो जनवाचकः । ते यजमानरूपा जना इत्यर्थः । ते च Sy.

३. ०यथिता० D. प्रमथनेनालोडनेन निष्पादितैः Sy.

४. भवेथः P.

५. अन्नैरामिक्षादिरूपैः Sy.

६. स्तुतिभिरथवाह्वानादिशब्दविशिष्टैर्वा पीपयन्त आप्याययन्ति Sy.

७. VM. ignores प्र । निचेरुः । etc.

८. हे अश्विनौ युवयोरन्यतमो मध्यमस्थानः Sy.

९. शरणवान् मेघवृक्षपर्णादीनां विशरणवान् । अथवा बहुसंवत्सरः पूर्वतनो नित्य इत्यर्थः Sy.

१०. वर्षितेवेन्द्रः स इव Sy.

११. शत्रूणाम् Sy.

१२. निस्सारयिता सन् Sy.

१३. ०मुखेऽस्ति तानि M. बह्वीः पुरातनीर्वा Sy.

१४. सस्यादीन्युद्दिश्य Sy.

१५. प्रकर्षेण गच्छति । मध्यमस्थानश्चन्द्र इति पक्षे शरद्वाञ्छरत्कालवान् । तस्मिन्नृतौ हि चन्द्रः प्रसन्नो भवति, तेन च तृणगुल्मौषध्यादीनि वर्धन्ते Sy.

१६. स किमर्थमेवं करोतीत्युच्यते । . . . मधुनो मधुसदृशस्य हविषः । कर्मणि षष्ठी Sy.

१७. हविरिच्छन् । तदर्थमेवं करोति Sy.

१८. उत्तमादित्यस्य Sy.

गमनशीलैः[1]। तत्प्रेरितैरश्वैः[2]। मनुष्या[3] वर्धन्ते[4]। प्राप्नुवन्त्यः[5]। दिवि स्थिताः[6]। नदनशीला[7] आपः। युवयोः प्रसादादस्मान्[8]। आगच्छन्तु[9]।

**असर्जि वां स्थविरा वेधसा गीर्बाळ्हे अश्विना त्रेधा क्षरन्ती ।**
**उपस्तुताववतं नाधमानं यामन्नयामञ्छृणुतं हवं मे ॥७॥**

असर्जि। सृष्टा[10]। युवयोः। वृद्धा[11]। स्तोत्रा मया[12]। स्तुतिः[13]। बाधे सञ्जाते[14]। अश्विनौ[15]! त्रेधा[16]। क्षरन्ती[17], उच्चनीचमध्यमैस्त्रिप्रकारत्वं त्रैस्वर्येण[18] क्षरन्ती[19]। मया, उपस्तुतौ युवाम्[20]। याचमानम्[21]। रक्षतम्[22]। गमने च[23]। अगमने[24] च[25]। शृणुतम्। स्तोत्रम्[26]। मे।

**उत स्या वां रुशतो वप्सो गीस्त्रिबर्हिषि सदसि पिन्वते नॄन् ।**
**वृषा वां मेघो वृषणा पीपाय गोर्न सेके मनुषो दशस्यन् ॥८॥**

उत स्या वाम्। अपि च। एषा। युवयोः। उज्ज्वलस्य[27]। रूपस्य[28]। स्तुतिः[29]। त्रिभिर्ब[30]-र्हिषो[31] धातुभिः स्तीर्णायाम्। वेद्याम्[32]। आप्याययति[33]। मनुष्यान्[34]। वर्षिता[35]। युवयोः सम्बन्धी[36]।

---

१. कार्मैर्गमनैर्वा निमित्तभूतैः Sy.
२. हविर्भिः Sy.
३. यजमानाः Sy.
४. आप्याययन्ति Sy.
५. तुष्टेन तेन प्रेरिता वेवन्तीर्व्याप्नुवन्तीः (न्त्यः) Sy.
६. उन्नता उत्तीराः Sy.
७. नदभशी० M. नद्यो न नदनशीला यथा Sy.
८. अस्मदर्थम् Sy.
९. आ is omitted by P. आगच्छन्ति Sy.
१०. सृज्यते Sy.
११. कीदृशी सा । स्थविरा, अत्यन्तस्थिरा नित्या वेदमयी Sy.
१२. वेधसा विधातारौ Sy.
१३. ०ति P. D. M. स्तुतिरूपा वाक् Sy.
१४. वृद्धे स्वैर्ये निमित्तभूते सति Sy.
१५. ०नै M.
१६. मन्त्रादिभेदेन त्रिप्रकारा Sy.
१७. ०न्ति M. युवां गच्छन्ती । ईदृशी स्तुतिः कृतेत्यर्थः Sy.
१८. ०र्य० P.
१९. रक्षन्ति P.
२०. ०वा P. उपस्तुतौ सन्तौ Sy.
२१. अभिमतफलं याचमानम् Sy.
२२. तर्पयतं वा Sy.
२३. वा M.
२४. ग० P.
२५. वा M.
२६. आह्वानम् Sy.
२७. उज्व० P. D. दीप्तस्य Sy.
२८. रूपस्यैव वपुषो वा व्यापयित्री Sy.
२९. ०ति P. स्तुतिवाक् Sy.
३०. त्रिधान्वास्तीर्णबर्हिष्के Sy.
३१. बघो P. D. ०र्हिषो M.
३२. यागसदने Sy.
३३. आयति P. D. आप्याययतु वोचितप्रवा-नादिना Sy.
३४. कर्मनेतॄनस्मान् Sy.
३५. वर्षकः सन् Sy.
३६. ०न्धि P. युवयोः स्वभूतः Sy.

मेघः[1]। हे वर्षितारौ[2]! प्याययति[3]। बहुक्षीरया गौः[4]। इवोधः। पृथिव्याः सेके। मनुष्यान्[5]। अन्नानि प्रयच्छन्[6]।

**युवां पूषेवाश्विना पुरंधिरग्निमुषां न जरते हविष्मान् ।**
**हुवे यद्वां वरिवस्या गृणानो विद्यामेषं वृजनं जीरदानुम् ॥६॥**

युवां पूषेव । विश्वस्य धर्ता[7]। पूषेव[8]। युवां भवथः[9]। तथा वां यजमानः[10]। अग्निम्[11]। उपसन्न । न । स्तौति[12]। यस्मात्[13]। अहमाह्वयामि । परिचर्यया सह[14]। स्तुवन्[15] भवामि । ततो[16] विद्यामेति[17][18]।

I.182.

**अभूदिदं वयुनमो षु भूषता रथो वृषण्वान्मदता मनीषिणः ।**
**धियंजिन्वा धिष्ण्या विश्पलावसू दिवो नपाता सुकृते शुचिव्रता ॥१॥**

अभूदिवम् । उपस्यपामभूत्[19][20]। इदम्[21]। प्रज्ञानम् । हे मनुष्या मत्समीपे सुष्ठु वा ।

---

१. सेक्ता जलदः प्रदानविशेषो वा Sy.
२. मेघः। हे वर्षितारौ is missing in M. वर्षितारौ कामानाम् Sy.
३. आप्याययति Sy.
४. आप्यायने दृष्टान्तः। गोर्न सेक उदकसेक इव शान्तनात् सेक उदकस्येव। तद्यथाऽऽप्याययति तद्वदित्यर्थः। यद्वा नेति सम्प्रत्यर्थे। गोरुदकस्य सेके निमित्तभूते सति पोषायेति सम्बन्धः Sy.
५. मनुष्येभ्यः is suggesed for मनुष्यान्
६. The passage beginning with ऊधः and ending with प्रयच्छन् is missing in M.
७. हे अश्विनौ युवां पुरन्धिर्बहुप्रज्ञः Sy.
८. The passage beginning with युवां and ending with पूषेव is omitted by M. पोषक इव Sy. ९. भवतः M.
१०. हविर्युक्तः Sy. ११. अग्निमुषसं च यथा तथा युवामपि। प्रातरनुवाकाश्विनशस्त्रयोराश्विनक्रतुवदाग्नेयोषस्ययोरपि सद्भावादिति भावः Sy.
१२. The passage beginning with यजमानः and ending with स्तौति is missing in M. यद्वा पुरन्धिर्बहूनां धारयित्री पूषेव पृथिवीव। द्वितीयार्थे प्रथमा। तां यथा स्तौति तद्वत् Sy. १३. यदा Sy.
१४. वरिवस्यया परिचर्यया युक्तः Sy.
१५. स्तोता स्तौति तदा यजमानोऽपि जरत इत्यर्थः Sy. १६. तो P. D.
१७. विद्येति P. D. १८. VM. ignores अश्विना। वाम्। विद्याम etc. Ms. D. puts the figure ॥१८१॥ here to indicate the end of one hundred and eightyfirst hymn. No such number is given in P. and M.
१९. कृष्णस्य वाम् M. ०स्यवाम् P.
२०. उत्पन्नम् Sy.
२१. अस्माकमिदम् Sy.

भवत।[१] अश्विनोरयं[२] चर्षणवान्।[३] रथ[४] आजगाम।[५] स्तुत।[६] हे मनीषिणः![७] कर्मणां[८] तर्पयितारौ। स्तोतव्यौ।[९] विश्पलाछिन्नजङ्घाक्षभ्यां[१०] वासिता ?[११] दिवः।[१२] पुत्रौ।[१३] शोभनकर्मणे।[१४] शोभनकर्माणौ।[१५]

**इन्द्र॑तमा॒ हि धिष्ण्या॑ म॒रुत्त॑मा द॒स्रा दंसि॑ष्ठा र॒थ्या॑ र॒थीत॑मा ।**
**पू॒र्णं रथं॑ वहेथे॒ मध्व॒ आचि॑तं॒ तेन॑ दा॒श्वांस॒मुप॑ याथो अश्विना ॥२॥**

इन्द्रतमा। ईश्वरतमौ।[१६] हि।[१७] स्तोतव्यौ।[१८] गन्तृतमौ।[१९] दर्शनीयौ।[२०] अतिशयेन[२१] रथे[२२] नेतारौ।[२३] मधुपूर्णम्।[२४] रथम्। वहेथे।[२५] मधुनः।[२६] आचितम्।[२७] शिष्टं स्पष्टम्।[२८]

---

१. तत्स्थावश्विनौ ... अो इति निपातद्वयसमुदायात्मक एको निपातः। सुष्ठ्वाभूयत, अभिमुखा भवत स्तोतुम् Sy.
२. अश्विनोः सम्बन्धी Sy.
३. अभिमतचर्षणवान् Sy.
४. गमनसाधनो रथः Sy.
५. आगत इति शेषः Sy.
६. अस्तु P. स्तु D. स्तुहे M. तादृशौ महानुभावावश्विनौ मदत। अन्तर्भावितण्यर्थोऽयम्। मदयत सम्भावयत Sy.
७. मनस्विनो मेधाविन ऋत्विजः Sy.
८. ०र्मणः M. अश्विनौ विशेष्येते। सुकृते सुष्ठु कृतवते मह्यम्...कर्मणो बुद्धेर्वा प्रीणयितारौ Sy.
९. धिषणार्हौ स्तुत्यौ Sy.
१०. विशां प्रजानामस्माकं पालयितृधनौ, विश्पलाख्यायाश्छिन्नजङ्घाया हिरण्मयजङ्घाप्रदानेन तथाभूतौ 'स॒द्यो जङ्घा॒मायसीं॑ वि॒श्पला॑यै' (RV. I. 116. 15.) इत्यादिनिगमः Sy.
११. विश्पलाहिनजङ्घाक्षभ्यां पासीता M.
१२. आदित्यस्य Sy.
१३. नप्तारौ नपातयितारौ वा Sy.
१४. Omitted by P.D. दीप्तकर्माणावीदृशावश्विनौ मदत Sy.
१५. VM. ignores ओ
१६. ०मौ M. हे अश्विनौ युवाम्...ईश्वरतमौ Sy.
१७. खलु। एवं प्रतिविशेषणं हिः सम्बन्ध्यः Sy.
१८. स्तुत्यर्हौ Sy.
१९. मरुद्वेगगामिनौ। मितरागिणौ मितराविणौ वा Sy.
२०. उपक्षपयितारौ शत्रूणाम् Sy.
२१. अतिशयकर्माणौ Sy.
२२. रथार्हौ रथवन्तौ। रथीतमा रथिनो नेतारस्तेषां श्रेष्ठौ, 'र॒थीर॑ध्व॒राणा॑म्' (RV. VIII. 11.2.) इति नेतृपरतया व्याख्यातत्वात्। ईदृशौ युवाम् Sy.
२३. ०थने० M.
२४. पूर्णं पूरितम् Sy.
२५. हवेथे P. नयथः। तेनोक्तगुणविशिष्टेन रथेन हे अश्विना अश्विनावुक्तगुणविशिष्टौ सन्तौ उप याथो यज्ञमभिप्राप्नुथः Sy.
२६. मधुसदृशस्योदकस्यामृतस्य वा Sy.
२७. सर्वतः सम्बद्धं रथम् Sy.
२८. VM. ignores दंसिष्ठा। रथ्या। तेन। दाश्वांसम्। etc.

**किमत्र॑ दस्रा कृणुथः॒ किमा॑साथे॒ जनो॒ यः कश्चि॒दह॑विर्म॒हीय॑ते ।**
**अति॑ क्रमिष्टं जु॒रतं॑ प॒णेर॒सुं ज्योति॒र्विप्रा॑य कृणुतं वच॒स्यवे॑ ॥३॥**

किमत्र दस्रा[1] । किम् । अस्मिन्नहोतरि[2] । कृणुथः[3] । किं च तस्मिन् । आसाथे[4] । जनः[5] । यः । कः । चित् । अहोता[6] । भवद्भ्यां गमनेन पूज्यते[7] । तस्मात् तम्[8] अतिक्रमिष्टम्[9] । हिंसतं[10] च । तस्यागुरस्य[11][12] । प्राणम्[13] । ज्योतिः[14] । विप्राय[15] । कृणुतम्[16] । स्तुतिमिच्छते[17] ।[18]

**जम्भय॑तम॒भितो॒ राय॑तः॒ शुनो॑ ह॒तं मृधो॑ वि॒दथु॒स्तान्य॑श्विना ।**
**वाचं॑वाचं जरि॒तू र॒त्निनीं॑ कृतमु॒भा शंसं॑ नासत्यावतं॒ मम॑ ॥४॥**

जम्भयतम् । अश्विनौ ! अभितः । शब्दयतः[19] । शुनः[20] । जम्भयोः[21] कुरुतम् । हतं[22] च । सङ्ग्रामस्य[23] कर्तॄन् हिंसकान् । एवञ्जातीयकानि[24] । कर्तुं जानीथः । स्तोतुः[25] । सर्वां वाचम्[26] । रत्नवतीम्[27] । कृतम्[28] । उभौ सहितौ । मम[29] । आशंसनम्[30] । रक्षतम्[31] ।

---

१. हे दस्रा उपक्षपयितारौ युवाम् Sy.
२. अस्मिन्मनुष्ये Sy.
३. कुरुथः । हविषोऽभावादिति भावः Sy.
४. आसायाथे P. आशाथे D.M. तत्रैव ... किं तिष्ठथः Sy.
५. जन्मवान् Sy.
६. यज्ञार्हहवीरहित॰ Sy.
७. पूज्यते स्वयं न युष्मान् पूजयति Sy.
८. जनम् Sy.
९. ०ष्टा P. पराभूय तिष्ठतम् Sy.
१०. अहिंसिष्टम् । अनीनशतम् Sy.
११. मस्य P.
१२. न केवलमतिक्रममात्रं किन्तु पणेर्वणिग्भूतस्य लुब्धकस्यायष्टुस्तस्य Sy.
१३. ०ण D.
१४. युष्मद्यजनविषयज्ञानम् Sy.
१५. विप्राय P. मेधाविने Sy.
१६. कुरुतम् Sy.
१७. वचसः स्तोत्ररूपस्य युवाभ्यामिच्छते मह्यम् Sy.
१८. VM. ignores दस्रा
१९. निन्दितं शब्दयतोऽस्मान्हन्तुमागच्छतो वा Sy.
२०. श्वसदृशान् Sy.
२१. ०योव M. नाशयतम् Sy.
२२. मारयतम् Sy.
२३. तेषां सङ्ग्रामान् सङ्ग्रामं कुर्वतो वा Sy.
२४. अभवञ्जाती ० M. तानि हननोपायान् Sy.
२५. युष्मान् स्तोतुः Sy.
२६. तां तां स्तुतिलक्षणां वाचम् Sy.
२७. सर्वामपि स्तुतिं रमणीयफलवतीम् Sy.
२८. कुरुतम् Sy.
२९. मवम् P. हे नासत्या सत्यभूतौ युवाम् ... मम मदीयाम् Sy.
३०. स्तुतिम् Sy.
३१. VM. ignores नासत्या

युवमेतं चक्रथुः सिन्धुषु प्लवमात्मन्वन्तं पक्षिणं तौग्र्याय कम् ।
येन देवत्रा मनसा निरूहथुः सुपप्तनी पेतथुः क्षोदसो महः ॥५॥

युवमेतम्[1]। युवाम्। एतम्[2]। कृतवन्तौ[3]। उदकेषु[4]। प्लवसाधनम्[5]। युष्मदीयम्[6]। पक्षयुक्तम्[7]। तुग्रपुत्राय[8]। येन प्लवेन[9]। देवान्[10] युवाम्। मनसा[11]। प्रत्युदूहथुः[12], युवामपि तेन प्लवेन। सुपतने[13]। महतः। उदकात्[14]। यज्ञम्प्रति[15][16] पेतथुः[17]।

अववि‍द्धं तौग्र्यमप्स्वन्तरनारम्भणे तमसि प्रविद्धम् ।
चतस्रो नावो जठलस्य जुष्टा उदश्विभ्यामिषिताः पारयन्ति ॥६॥

अवविद्धम्[18]। अपाम्। मध्ये। पित्राऽपविद्धम्[19]। तुग्रपुत्रम्[20]। अनालम्भने[21]। अन्धकारे। समुद्रमध्ये[22] प्रक्षिप्तम्[23]। चतस्रः। नावः। जठरस्य[24]। पर्याप्ता[25] विस्तीर्णोदराः। अश्विभ्याम्।

---

१. युवा० D. तौग्र्यो भुज्यू राजा समुद्रवर्ती ससेनः परचक्रं प्रमथितुं प्रस्थितः। तं प्रतीपबलान्यागत्यापातयन्। स च प्रसादफलकरावश्विनौ स्तुत्वा स्वात्मानं ररक्षेत्ययमितिहासो बहुधा पूर्वं प्रपञ्चितः Sy.

२. ०त P.

३. कं सुखकरं चक्रथुः। ...यद्वा कमिति पूरणः। तस्य जलसञ्चारिरथस्य सहायभूतान् बहून् रथादीनकुरुतमित्यर्थः Sy. अयमर्थस्तु 'तमूहथुर्नौभिः' (RV.I.116.3.), 'चतस्रो नावः' (RV.I.182.6.), 'त्रिभी रथैः' (RV.I.116.4.) इत्यादिमन्त्रान्तरेषु प्रसिद्धः

४. समुद्रोदकेषु Sy.

५. प्रसिद्धं प्लुतिसाधनं प्लवं नावम् Sy.

६. आत्मन्वन्तं बाहर्यवन्तम् Sy.

७. पक्षवद्गतिसाधनरथवन्तम् Sy.

८. तु उ० M. तुग्रनाम्नो राज्ञः पुत्राय भुज्युनाम्ने राज्ञे Sy.

९. प्लवने M. युष्मद्दत्तेन प्लवेन Sy.

१०. देवेषु मध्ये Sy.

११. M. adds प्रज्ञं after मनसा। अनुग्रहयुक्तया बुद्ध्या । येन मनसेति वा योज्यम् Sy.

१२. ०थु D. निर्गमनं कुरुथः Sy.

१३. शोभनपतनं यथा भवति सुपतनौ वा युवाम् Sy. सुपतनौ is suggested for सुपतने

१४. उदकनामैतत् Sy.

१५. यज्ञं P.

१६. पेदथुः P. तवथः पतथ उत्तरीतुम् Sy.

१७. VM. ignores कम्

१८. अपवि० P. D. M.

१९. अवपि शुद्धं M. अपस्तात्सह्युभिः पातितम् Sy.

२०. तु उप० M. भुज्युम् Sy.

२१. अनालम्बन आलम्बनरहिते Sy.

२२. तमोवत्तमः । दृष्टिव्यासादिप्रतिबन्धके जलमध्ये Sy.

२३. प्रकर्षेण पीडितम् Sy.

२४. जठरवत्युदकधारकस्य मध्ये Sy.

२५. जुष्टाः सेविताः । यद्वा । कर्मणि षष्ठी । जठरं प्राप्ताः । अन्तर्जलं प्रविष्टाः Sy.

प्रेषिता[1]। समुद्रमध्यादुत्पारयन्ति[2]।

**कः स्विद्वृक्षो निष्ठितो मध्ये अर्णसो यं तौग्र्यो नाधितः पर्यषस्वजत् ।**
**पर्णा मृगस्य पतरोरिवारभ उदश्विना ऊहथुः श्रोमताय कम् ॥७॥**

कः[3] स्विद् वृक्षः। उदकस्य। मध्ये। कः सः[4]। वृक्षः[5]। निष्ठितः[6]। यं वृक्षम्[7]। भुज्युः[8]। अश्विनौ स्तुवन्[9]। परिष्वक्तवानिति[10] नावमभिप्रेत्याह। अवसन्नः स भुज्युस्तदानीमेव यस्या नावः पर्णानि[11]। आरब्धवान्[12]। शीघ्रं गच्छतः[13]। मृगस्येव लोमानि[14]। तमथ, अश्विनौ! उदूहथुः[15]। श्रोमत-कुलजाताय[16] पित्रे[17]।

**तद्वां नरा नासत्यावनु ष्याद्यद्वां मानास उचथमवोचन् ।**
**अस्मादद्य सदसः सोम्यादा विद्यामेषं वृजनं जीरदानुम् ॥८॥**

तद्वां नरा। हे नेतारौ[18]! नासत्यौ[19]! तत्[20]। युवयोः[21]। सन्निधाने[22]। भवतु। यत्। स्तोत्रम्। वाम्[23]। कुम्भभवाः[24]। उक्तवन्तः[25]। यदद्य[26]। सोमार्हात्[27]। यज्ञादुत्थितं[28] तद्वा

---

१. ० ता D. अश्विभ्यामिषिताः Sy.
२. उत्पा० P. उत्तारयन्ति प्रापयन्ति Sy.
३. क P. D. M.
४. कश्चिदनुग्राहकः Sy.
५. वृक्षविकारो रथः। विकारे प्रकृतिशब्दः। यद्वा। संस्तवाभिप्रायमेतत्। स्तोत्राख्यो वृक्ष इत्यर्थः Sy.
६. कीदृशो रथः ? ... निश्चलं वर्तमानः Sy.
७. ०क्ष M.
८. तुग्रपुत्रो भुज्युः Sy.
९. स्तुम्वन् P. D. M. याचमानः Sy.
१०. परिष्वक्तमकरोत् Sy.
११. पर्णानीव, तानि यथाऽऽलम्बनाय प्रभवन्ति तद्वत् Sy.
१२. आलम्बनाय Sy.
१३. आलम्बने दृष्टान्तः। पतरोः पतनशीलस्य Sy.
१४. मार्जयितुः शोधयितुर्हितादेः Sy.
१५. ०थु P. उद् ऊहथुरूर्ध्वं प्रापयथः। स्तुतिपक्षे स्तोत्राख्यं वृक्षमाश्रितवन्तं तमूहथुरित्यर्थः Sy.
१६. श्रोत्रमथकूल० M. कीर्तिमत्त्वाय Sy.
१७. VM. ignores स्वित्। कम्
१८. नेतारौ कर्मणो नराकारौ वा Sy.
१९. असत्यरहितौ सत्यफलौ वा Sy.
२०. तादृशं स्तोत्रम् Sy.
२१. युवाम् Sy.
२२. अनुकूलं भवतु, अनुभवतु वा वाम् Sy.
२३. वां प्रति Sy.
२४. पूजावन्तोऽस्मदीया होत्रादयः Sy.
२५. अकुर्वंस्तद् वामनु ष्यात् Sy.
२६. हे अश्विनौ, अद्यास्मिन् प्रधानयागदिने Sy.
२७. ०र्हत् P. अस्माद्, अस्माभिः क्रियमाणात् ... सोमयागसम्पादकात् Sy.
२८. यज्ञानत् P. सदसः सम्बन्धिनः Sy.

मनुष्याविति[1][2]।

## I.183.

तं युञ्जाथां मनसो यो जवीयान् त्रिवन्धुरो वृषणा यस्त्रिचक्रः ।
येनोपयाथः सुकृतो दुरोणं त्रिधातुना पतथो विर्न पर्णैः ॥१॥

तं युञ्जाथाम्। तं[3] रथम्। युञ्जाथाम्[4]। मनसोऽपि[5]। यः[6]। जववान्[7]। त्रिफलकास्-द्युपाटः[8]। वर्षितारौ[9]! त्रिचक्रः[10]। येन[11]। उपगच्छथः। यजमानगृहम्[12]। तेन त्रिफलकेन[13]। यज्ञेषु पतथः[14]। पक्षी[15]। इव। पर्णैः[16]।[17]

सुवृद्रथो वर्तते यन्नभि क्षां यत्तिष्ठथः क्रतुमन्तानु पृक्षे ।
वपुर्वपुष्या सचतामियं गीर्दिवो दुहित्रोषसा सचेथे ॥२॥

सुवृद्रथः। सुवर्तनः[18]। रथः[19]। वर्तते[20]। गच्छन्। पृथिवीम्[21]। प्रति। यदा[22]। कर्मवन्तौ[23] युवाम्।

---

१. ०ष्याविं M. श्रा इत्यप्यर्थे। अस्माभिर्य-जमानैरश्च क्रियमाणादपि स्तोत्रात् प्रीण-यतमिति Sy.

२. VM. ignores अस्मात् and श्रा etc.
Ms. D. puts the figure ॥१८२॥ here to indicate the end of one hundred and eightysecond hymn. No such number is given in P. and M.

३. वक्ष्यमाणगुणविशिष्टम् Sy.

४. ०थाः M. योजयतम् Sy.

५. ०वि M.

६. रथः Sy. ७. जवत्तः M.

८. त्रिप्रकारसारथिस्थानः। बन्धुरं रथिनः स्थानमित्याहुः। 'श्रा याह्यर्वाङुप वन्धु-रेष्ठाः' (RV.3.43.1.) इत्यादिमन्त्रा-न्तरात् Sy.

९. वर्षकौ कामानां युवाम् Sy.

१०. चक्रत्रितयोपेतः Sy.

११. रथेन Sy.

१२. शोभनसोमाख्यकर्मवतो यजमानस्य दुरो-णम्, गृहनामैतत्। यागगृहम् Sy.

१३. त्रिप्रकारस्थानोपेतेन सुवर्णरजतताम्रधा-तुत्रयोपेतेन वा रथेन Sy.

१४. ०कोनयूपतमः M.
पतथो गच्छथः Sy.

१५. गमने दृष्टान्तः।...पक्षी पर्णैर्यथा शीघ्रमप्रयत्नेन गच्छति तद्वदुक्तलक्षणेन रथेन Sy.

१६. पर्णः D. वर्णः M.

१७. VM. ignores यः

१८. शोभनवर्तनः शोभनचक्रपरिभ्रमणः Sy.

१९. हे अश्विनौ युवयो रथः Sy.

२०. गच्छति Sy.

२१. देवयजनभूमिम् Sy.

२२. यं रथम् Sy.

२३. कर्मन्तौ M. सङ्कल्पवन्तौ कर्मवन्तौ वा Sy.

तमधितिष्ठथः[१]। अत्राय[२]। अनुलक्षणे[३]। युवयोर्वपुः[४]। वपुषे शोभ्या[५]। इयम्[६]। स्तुतिः[७]। सेवताम्। युवां दिवः[८]। दुहिता[९]। उषसा सह प्रादुर्भवन्त्या[१०]। सचेथे[११] यजमानम्।

**आ तिष्ठतं सुवृतं यो रथो वामनु व्रतानि वर्तते हविष्मान् ।**
**येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥३॥**

आ तिष्ठतम्। प्रातिष्ठतम्[१२]। शोभनावर्त तम्[१३]। यः[१४]। वाम्[१५]। रथः। कर्माणि[१६]। अनुवर्तते[१७]? यजमानदत्तैर्हविर्भिस्तद्वान्[१८]। येन[१९]। नासत्यौ[२०]! अन्नं कर्तुम्[२१]। मार्गम्[२२]। याथः[२३]। पुत्राय[२४]। पित्रे[२५]। च[२६]।

**मा वां वृको मा वृकीरा दधर्षीन्मा परि वर्क्तमुत माति धक्तम् ।**
**अयं वां भागो निहित इयं गीर्दस्राविमे वां निधयो मधूनाम् ॥४॥**

मा वां वृकः। मत्समीपं गच्छन्तौ वृको[२७] वृकी[२८] च, आदित्यस्तोयोगस्य[२९]। मा। अभूदथवा[३०]

---

१. आश्रयथः। तादृशो रथो देवयजनं प्रत्यागत इत्यर्थः Sy.
२. अन्ननामैतत्। हविषि निमित्तभूते सति Sy.
३. अनु अयीत्यर्थे Sy.
४. Omitted by P. D.
५. ०षो P. युष्मद्वपुषि हिता शरीरवर्धनी Sy.
६. इदानीं क्रियमाणप्रकारा Sy.
७. स्तुतिरूपा वाक् Sy.
८. द्युलोकस्याऽऽदित्यस्य वा Sy.
९. दुहितृस्थानीयया Sy.
१०. उषोदेवतया Sy.
११. सचेते M. यज्ञं सङ्गच्छेथे। उषस्याश्विनयोः समानकालत्वादिति भावः Sy.
१२. आश्रयतम् Sy.
१३. शोभनावत्तनम् M. शोभनवर्तनं रथम् Sy.
१४. ये P.D.
१५. युवाम् Sy.
१६. कर्मणि P.D.
१७. ०त्ते M.
१८. षष्ठयर्थे प्रथमा। हविष्मतो यजमानस्य। ...यद्वा यजमानाय दत्तहविषा तद्वान् Sy.
१९. रथेन Sy.
२०. हे नरा नेतारौ वा हे नासत्या असत्यरहितौ युवाम् Sy.
२१. यज्ञं प्राप्तुमिच्छतमिति शेषः Sy.
२२. मार्गा P. तेन रथेन वर्तिः गृहनामैतत्। यजमानस्य यज्ञगृहम् Sy.
२३. यथा M.
२४. पुत्रलाभाय Sy.
२५. आत्मन आत्महिताय च Sy.
२६. VM. ignores नरा
२७. ०को D. वां युवयोरनुग्रहाविति शेषः। वृको हिंसकोऽरण्यश्वादिः Sy.
२८. वृक्यो हिंसिका अन्या अपि Sy.
२९. ०या M.
३०. वचनव्यत्ययः। धर्षणं मा कार्षुः। युवामेव वा मा दधर्षीदिति वा योज्यम् Sy. अभिभूताम् is suggested for अभूत

लौकिकावेव वृकौ। तथा सति मा। अस्मान्[1] परिवर्जयतम्[2]। मा[3]। च। प्रतीत्य[4] अस्मान्, अन्यस्मै दत्तम्। अयम्। युवयोः[5]। भागः[6]। निहितः। इयं च। युवयोः स्तुतिः[7]। हे दर्शनीयौ[8]! इमे[9]। वाम्[10]। सोमानाम्[11]। पात्राणि[12][13]।

**युवां गोतमः पुरुमीळ्हो अत्रिर्दस्रा हवतेऽवसे हविष्मान्।**
**दिशं न दिष्टामृजूयेव यन्ता मे हवं नासत्योप यातम् ॥५॥**

युवां[14] गोतमः। हे दस्रौ! गोतमः। यजमानः। रक्षणार्थम्[15]। युवामेव। ह्वयते[16]। तथा पुरु[17]-मीळ्हः। अत्रिश्च[18]। तौ युवाम्, उपदिष्टाम्। दिशम्[19]। इव। अकुटिलेन[20] मार्गेण। सारथिः[21]। मदी[22]-यम्। आह्वानम्[23]। उपागच्छतम्[24][25]।

**अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि।**
**एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम् ॥६॥**

अतारिष्म। रात्रिकृतस्य। तमसः[26]। पारम्[27]। वयमतारिष्म[28], व्युष्टा रात्रिरित्यर्थः। तथा

---

१. माम् Sy.
२. परितो मा वर्जयतम् Sy.
३. अपि च Sy.
४. अतिक्रम्य Sy.
५. युवयोरर्थाय Sy.
६. भजनीयो हविरंशः Sy.
७. स्तुतिरूपा वागपि निहितेति शेषः Sy.
८. शत्रूणामुपक्षपयितारावश्विनौ! Sy.
९. इमानि is suggested for इमे। इमानि Sy.
१०. युवाभ्याम् Sy.
११. सोमरसानाम् Sy.
१२. निधानानि स्थापितानि Sy.
१३. VM. ignores वाम्
१४. ० वा P.
१५. रक्षणाय युष्मत्तर्पणाय वा Sy.
१६. आह्वयति। एवमहमप्याह्वयामि Sy.
१७. पुरुमी० P.
१८. महर्षयश्च, एतेष्वेकैको हविष्मान् सन् Sy.
१९. फलसाधनाह्वाने दृष्टान्तः... गन्तव्यामभिमतां दिशम्प्रति यथा तथा वामपि। यथाऽश्वगामी स्वगन्तव्यस्य शीघ्रगमनाय मार्गज्ञमृजुगामिनमाह्वयति तद्वत्। यद्वा। ऋजूयेव। इवशब्द एवार्थे। गन्ता ऋजुनैव मार्गेणेष्टां दिशमिव तथा युष्मत्प्रीणनेन मार्गेण स्वाभिमतं फलं प्राप्नोति Sy.
२०. कु० P.D. द्वितीयाया आकारः। ऋजुगामिनं मार्गज्ञम् Sy.
२१. ०थि P.M. उपगन्ता, उपगन्तुकामः Sy.
२२. मम Sy.
२३. ०नाम् P. आह्वानमालक्ष्य Sy.
२४. उपगच्छतम् Sy.
२५. VM. ignores नासत्या
२६. तमनहेतोः श्रेयःप्रतिबन्धकस्य दुःखस्य Sy.
२७. पर्यन्तभूमिम् Sy.
२८. ० षं करिष्म M. उत्तीर्णाः स्मः Sy.

युवयोः[1]। स्तोमः[2]। काले प्रत्यर्यायि[3]। ततः, आयातम्[4]। इह[5]। पथिभिः[6]। देवयानैः[7]।

व्याख्यातौत्रश्चिन्त्यत्रन्यास्तुरीयं माधवाह्वयः[8]।
अध्यायं वेङ्कटसुतो[10] द्वितीयाष्टकगोचरम्[11]॥

# अथ द्वितीयेऽष्टके पञ्चमोऽध्यायः[12]।

"ता वामद्य तावपरं"[13] व्याचिख्यासति माधवः।
लोटः प्रदर्शयन्[14] वृत्ति लेटश्च तदनन्तरम्[15]॥
लोड्लेटावपि[16] विध्यादौ स्मृतौ यत्र लिङा विधिः।
"आजीते[17] परि[18] वृङ्धि[19] नो" विधिराशीश्च[20] याचनम्॥
"नाहमतो निरया[21]" ति लोटः[22] सर्वे विधायकाः।
वचनव्यक्तिभेदस्तु वाक्यसंयोगतः कृतः॥
"समुच्चयेऽन्यतरस्याम"[23]स्योदाहरणं विदुः।
"प्रेह्यभीहि[24] धृष्णुहि"[25]ति शत्रुष्वित्थं करोति सः॥

---

१. युवयोः प्रसादात् Sy.
२. ० म M. स्तोत्रम् Sy.
३. अकारीत्यर्थः Sy.
४. युवाम्...आगच्छतम् Sy.
५. अस्मद्यज्ञे Sy. ६. मार्गैः Sy.
७. देवगन्तव्यैः Sy. VM. ignores अश्विना। विश्वाम etc.
८. व्याख्यातं पुत्र ० P.
९. ० श्चित ० P. १०. वं ० P.
११. Ms. D. puts the figure ॥१८३॥ here to indicate the end of one hundred and eightythird hymn. No such number is given in P. and M.
१२. Omitted by P. D.
१३. RV. I. 184.1ª.
१४. ० यद् P. १५. लोत्वतनं तमं P.
१६. लोड्लोटा ० P. लेड्लोटा ० M.
१७. ० जि ० M.
१८. वृद्धि D. वृद्धी M. वृन्धि R.
१९. RV. VI. 75.12ª.
२०. ० राद्य P.
२१. RV. IV. 18.2ª.
२२. लोकः D.M. लेटकः P.
२३. ० मस्योदा ० P. D. Pª. 5.4.5.
२४. प्रेह्यजिहि D. २५. सृष्णुही ० D. सृष्णुवीति P. RV. I. 80.3ª.

दृश्यन्ते बहवो लेटः प्रार्थनाविषया इह ।
"स देवाँ एह वंक्षति"[1] "यक्षंच्च प्रिप्रयंच्च नः"[2]

त्रिमूर्धानं सप्तरंश्मिम्"[3] अयं लेट् स्याद्विधायकः[4] ।
अथापि वर्तमानेर्थे "यो यजाति यजात इत्"[10] ॥

"अग्निनां र॒यिमंश्नवत्"[11] बहवः[12] सन्ति तादृशाः ।
"आ वां गमद्यदि श्रवत्"[13] हेतुहेतुमतोरिमौ ॥

वाक्यार्थानुगुणं लोटो लेटश्चार्थं प्रदर्शयेत् ।
व्युत्पत्त्यर्थमिमाः काश्चिदृचोऽस्माभिः प्रदर्शिताः ॥इति॥

## I.184.

**ता वा॒मु॒द्य ताव॑प॒रं हु॑वे॒मोच्छ॑न्त्यामु॒षसि॒ वह्नि॑रु॒क्थैः ।
नास॑त्या॒ कुह॑ चि॒त्सन्ता॑व॒र्यो दि॒वो नपा॑ता सु॒दास्त॑राय ॥१॥**

ता वामद्य । अगस्त्यः, तौ[14] । युवाम् । वयम्, अद्य[15] । आह्वयामः[16] । तावेव[17] । श्वदेव[18] । व्युच्छ-

१. ए D. P.
२. RV. I. 1.2[c].
३. यक्षम्य P. D.
४. विप्र ० M. ० यच्च P.
५. RV. VIII. 39.9[c].
६. RV. I. 146. 1[a].
७. ० रश्मयः ० रश्मय ....
८. स्यद् D.
९. लेट् स्याद् विधायकः is missing in M.
१०. यो यजा जात उत् M. RV. VIII. 31.1[a].
११. ०मश्नुवन् P. मश्नवत् D. RV.I.1.3[a].
१२. P. adds समन्वयो नासत्यौ before बहवः ।
१३. आपानमत्पति अ० D. The passage beginning with अग्निना and ending with श्रवत् is omitted by M. RV.I. 30.8[a].
१४. तौ रक्षकत्वेन प्रसिद्धौ Sy.
१५. अस्मिन् यागदिने Sy.
१६. आह्वयाम इत्याशीः Sy.
१७. तौ युवां हुवेम Sy.
१८. श्वदव P.M. अपरस्मिन्नपि दिने ।... अपरमित्येतदपरस्मिन्नित्यर्थे समभिव्याहारात् । 'अद्या च नो मृळयतापरं च' (RV. II. 29.2.) इत्यादिमन्त्रान्तरे तथा दर्शनाच्च । अपरयागं प्रत्यपीति वा Sy.

न्याम्[1]। उषसि[2]। भवतोः काले वोढा[3]। स्तोत्रैः[4], एकवचनबहुवचनयोः[5] पादभेदात्[6] समन्वयः। नासत्यौ[7]! क्व[8]। अपि गूढदेशे[9]। वर्तमानौ[10]। स्तोमानां स्वामी[11]। दिवः[12]। पुत्रौ[13]। शोभनदानाय[14] यजमानाय।

**अस्मे ऊ षु वृषणा मादयेथामुत्पणीँर्हतमूर्म्या मदन्ता ।**
**श्रुतं मे अच्छोक्तिभिर्मतीनामेष्टा नरा निचेतारा च कर्णैः ॥२॥**

अस्मे ऊ षु[15]। अस्मासु। एव। हे वृषणौ[16]! सुष्ठु। मादयेथाम्[17]। असुरांश्च[18]। उद्धतम्[19]। सोमोर्म्या[20]। माद्यन्तौ[21]। स्तोत्राणामभिमुखवचनैः[22]। मयाऽभिलषितम्[23]। शृणुतम्। हे नरौ[24]! युवाम्। स्तुतीनाम्[25]। एष्टारौ[26]। कर्मणश्च तासां निचेतारौ[27]। श्रुतकर्णौ[28][29]।

---

१. तमो विवासयन्त्यां सत्याम् Sy.
२. उषोदेवतायाम्। ... उषःकाले हि प्रातरनुवाकाश्विनशस्त्रे प्रयुज्येते। उक्ते काले Sy.
३. ०ह्वाः P.D.M. वह्निः स्तुतेर्वोढा Sy.
४. शस्त्रैर्हुवेमेति सम्बन्धः। अत्राख्यातं पदमेकवचनतया नेतव्यम्। बह्न्यर्थशब्दो वा बहुवचनत्वेन नेतव्यौ। अथवा वाक्यद्वयम्। यस्माद् वह्निरयो होता, उक्तगुणकौ युवां शंसति तस्मादयं यजमानास्तौ युवामाह्वयाम इति Sy.
५. ०नाय बहु० P.
६. पाठ० D. वाद M.
७. असत्यरहितौ Sy. ८. कुत्रचित् Sy.
९. वेशे Sy. १०. वर्तमानौ युवाम् Sy.
११. ईरयिता स्तुतेरीश्वरो वा, ईदृशोऽहं होता Sy. १२. द्युलोकस्य Sy.
१३. नपातयितारौ नप्तृस्थानीयौ वा Sy.
१४. अत्यर्थं शोभनहविर्दात्रे यजमानाय तदर्थं तौ युवाम् Sy. १५. अस्म D. अस्मा P.
१६. ०णा M. कामानां वर्षकावश्विनौ युवाम् Sy.
१७. तृप्यतम्। अस्मभ्यं तर्पयतमभिमतम् Sy.
१८. वणिजो लुब्धकानसुरान् Sy.
१९. उन्मूल्य हतं नाशयतम् Sy.
२०. ०म्या P. कीदृशौ युवाम्? ऊर्म्या, रात्रिनामैतत्। रात्रौ, मदन्ता माद्यन्तौ। यद्वा। ऊर्मिरिति सोमनाम। 'ऊर्मिर्यस्ते पवित्र आ' (RV. IX.64.11.) इत्यादिषु तथा प्रयोगात् Sy.
२१. माद्यंस्तौ P. मां M. अस्मदीयेन सोमेन मदन्तौ तादृशौ युवाम् Sy.
२२. ० नैं P. आभिमुख्यकरैर्निर्मलवेदवाक्यैरचिताः Sy.
२३. मुमाभि० P. मम Sy.
२४. नेतारौ युवां खलु Sy.
२५. कर्मणि षष्ठी। मननसाधनाः स्तुतीः Sy.
२६. ०ती रेष्टा० P. ०तीं रेष्टा D. अन्वेष्टारावस्मत्स्तुतीनाम् Sy.
२७. कर्णश्च तास्तास्निमेतारौ P. सख्यानां तासां सञ्चयकर्तारौ। निरित्येष समित्येतस्य स्थाने। यस्मादेवंविधौ तस्माच्छृणुतमिति Sy.
२८. The passage beginning with स्तोत्राणां and ending with श्रुतकर्णौ is omitted by M. कर्णैराकर्णनसाधनैः श्रोत्रैः Sy.
२९. VM. ignores च

श्रिये पू॑षन्निषुकृते॑व दे॒वा नास॑त्या वह॒तुं सू॒र्याया॑: ।
वु॒च्यन्ते॑ वां क॒कु॒हा अ॒प्सु जा॒ता यु॒गा जू॒र्णेव॒ वरु॑णस्य॒ भूरे॑: ॥३॥

श्रिये पूषन्[1]। पूर्णत्वया[2]। सूर्यायाः[3]। वहतुम्[4]। सोमं[5] राजानं प्रति श्रयितुम्[6]। इमौ देवौ[7]। इषुरिव[8] कृतौ शीघ्रगामिनाम्। उच्यन्ते[9]। वाम्[10]। स्तुतयः[11]। अन्तरिक्षविषये[12]। जाताः[13], तत्कार्यैर्हि कर्मभिरेतयोः स्तुतिर्भवति। युगानि=क्षणानि। जीर्णानीव[14]। रात्रेः[15]। भूरेः[16], व्युच्छति[17] न वेति हि सन्देहः[18], अश्विनोः[19] स्तुतिः[20]।

---

१. सविता सूर्यो दुहितरं सूर्याख्यां प्रदातुमना देवानाहूय सामर्थ्यसमीक्षणायाऽऽजिं परिकल्प्य य इमं जेष्यति स एतां कन्यकामृक्सहस्रक्लृप्तं स्तोत्रं च लभत इत्यकल्पयत् । तमग्निः प्रथममजयत् । तमनु, अश्विनावपि जित्वाऽग्निं प्रधृष्य ऋक्सहस्रं कन्यकां चालभेताम् । तत इन्द्र उषाश्चाजयताम् । तौ च तैरन्यादिभिः प्रार्थितौ स्वशस्त्रस्य कञ्चित् कञ्चिद्भागं तेभ्यः परिकल्प्य सूर्यां स्वरथेऽधारयतामित्ययमितिहासो ब्राह्मणे 'प्रजापतिर्वै सोमाय राज्ञे' (AB.4.7.) इत्यत्राम्नातोऽस्माभिः प्रथमाष्टके 'आ वां पतित्वं सख्याय' (RV.I.119.5.) इत्यत्र प्रपञ्चितः Sy.

२. हे पूषन् पोषक सूर्य । एतच्चन्द्रस्याप्युपलक्षणं सूर्याचन्द्रमसोरेवाश्विनत्वात् । 'सूर्याचन्द्रमसावित्येके' (N.12.1.) इति यास्केनोक्तत्वात् । अतः पूषन्नित्युक्ते हे पोषकावश्विनावित्युक्तं भवति । हे पोषकौ हे नासत्या असत्यरहितौ Sy.

३. एतन्नामिकायाः सवितुः पुत्र्याः । कर्मणि षष्ठी । सूर्याम् Sy.

४. The passage beginning with श्रिये and ending with वहतुं is omitted by M. रथे धारयितुम् । आजिमुदजयतामित्यर्थः Sy.

५. सोमां M.

६. श्रिये श्रेयसे शस्त्रस्य कन्यायाश्च लाभायेत्यर्थः Sy.

७. देवौ युवाम् Sy.

८. इष्वुरि० M. इवशब्द एवार्थे । आजिधावनाय, इषुवच्छीघ्रमृजुगामिनौ कृतावेव सन्तौ Sy.

९. वच्यन्ते होत्रादिभिः । युवामेव शस्त्रगतमन्त्रैर्यागकाले च स्तुवन्तीत्यर्थः Sy.

१०. वां प्रति Sy.

११. ककुहाः शस्त्ररूपाः स्तुतयः Sy.

१२. यस्मादेवं तस्मादप्सु ... कर्मसु Sy.

१३. सम्पादिताः Sy.

१४. जीर्णानि युगानीव । इवशब्दः सम्प्रत्यर्थः । पुरातना यागकाला यथा तद्वदद्यतना अपीत्यर्थः । पूर्वकाले यथा युवामेव स्तुवन्ति तद्वदिदानीमपीति तात्पर्यम् Sy.

१५. ०त्रे M. वरुणस्य फलप्रतिबन्धकपापनिवारकस्य यागस्य सिद्धयर्थं तत्सम्बन्धिन्यः Sy.

१६. दूरे D. अविच्छिन्नप्रवाहस्य Sy.

१७. व्युच्छति D.

१८. ०हे P. D.

१९. Omitted by D.

२०. VM. ignores नासत्या

अस्मे सा वां माध्वी रातिरस्तु स्तोमं हिनोतं मान्यस्य कारोः ।
अनु यद्वां श्रवस्या सुदानू सुवीर्याय चर्षणयो मदन्ति ॥४॥

अस्मे सा वाम्[1]। अस्मासु[2]। सा[3]। वाम्[4]। हे मदयितारौ[5]! रातिः=दानम्। अस्तु[6]। स्तोमं[7] प्रति। आगच्छतम्[8]। मान्यस्य[9]। स्तोतुः[10]। यस्मात्। वाम्[11]। अन्नेच्छया[12]। हे शोभनदानौ[13]! सुवीर्यार्थञ्च[14]। अमी मनुष्याः[15]। अनुमदन्ति[16]। स्पष्टोत्तरव्याख्या, अन्तिमा[17]।[18]

एष वां स्तोमो अश्विनावकारि मानेभिर्मघवाना सुवृक्ति ।
यातं वर्तिस्तनयाय त्मने चागस्त्ये नासत्या मदन्ता ॥५॥

एष वां स्तोमः[19]।

---

१. सेवां M.
२. अस्माकम् Sy.
३. अस्लिष्ठा Sy.
४. सेवां M. अस्मासु। सा। वाम् is omitted by P. युवयोः सम्बन्धिनी Sy.
५. मधुपूर्णपात्रयुक्तावश्विनौ ! Sy.
६. भवतु Sy.
७. स्तुतिम् Sy.
८. प्रीणयतम् Sy.
९. तदर्थं मान्यस्य माननीयस्य Sy.
१०. स्तोतुरगस्त्यस्य Sy.
११. युवाम् Sy.
१२. कीर्तेरन्नस्य वेच्छया Sy.
१३. शोभनफलदानौ ! Sy.
१४. यजमानाय शोभनबलाय वा Sy.
१५. ऋत्विग्रूपाः Sy.
१६. अनुक्रमेण माद्यन्ति युवाभ्यां सह स्वयं वा Sy.
१७. स्पष्टोन्तरव्याख्यान्तिमा D. स्पष्टा अन्तरव्याख्या अन्तिमा M.
१८. Ms. D. puts the figure ॥१८४॥ here to indicate the end of one hundred and eightyfourth hymn. No such number is given in P. and M.
१९. Stanza no. 5 has not been previously explained as it occurs here for the first time.
The remark of VM. स्पष्टोत्तरव्याख्या seems to refer to this stanza and shows that in his opinion it did not stand in need of any explanation.
हे अश्विनौ हे मघवाना हविर्लक्षणान्नवन्तौ । वां युवाभ्याम् । एष स्तोमः स्तोत्रम् । सुवृक्ति सुष्ठु पापवर्जनं यथा भवति तथा यद्वा सुसमाप्ति, अकारि कृतः । कीदृशोऽयम् ? मानेभिर्माननैर्हविष्प्रदानरूपैः सहितः, हे नासत्या असत्यरहितौ युवाम् । अगस्त्य एतन्नाम्नि महर्षौ मयि । मदन्ता माद्यन्तौ सन्तौ । वर्तिर्गृहं यज्ञसम्बन्धि यातं प्राप्नुतम् । किमर्थम् ? तनयाय पुत्रादिलाभाय त्मने, आत्मने च हिताय Sy.

अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम् ॥६॥

I.185.

कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद ।
विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥१॥

कतरा। कतरा[2]। पूर्वा[3]। कतरा। अपरा[4]। अनयोर्द्यावापृथिव्योः[5]। कथं वा[6]। जाते[7]। हे मेधाविनः[8]! एते जानाति[9]। सर्वम्[10]। आत्मनैव[11]। धारयतः[12]। यत्[13]। ह[14]। नाम[15] किञ्चिदस्ति[16]।

---

१. The stanza is identical with RV. I. 183.6. and has already been explained. See also VM.'s remark :—स्पष्टा ...अन्तिमा २. अगस्त्यस्यार्षम्। स हि पूर्वमेव संसाररूपे दृष्टवमवोचत् SKN. स्वयमेव तावद्वितर्कयन्नुत्पन्नसंशयो मन्त्रदृग् ब्रवीति Dur.

३. पूर्वमुत्पन्ना Sy. पूर्वकाला SKN.

४. पश्चाद्भाविनी। एवम्पौर्वापर्यप्रश्नः Sy. अपरकाला SKN.

५. अवरायो० P. एनयोर्द्यावापृथिव्योर्मध्ये ...उभयोरविनाभावेन सहैव वर्तमानत्वादिति भावः Sy. अनयोर्द्यावापृथिव्योर्मध्ये SKN. नहि पौर्वापर्यमनयोः स्फुटं लक्षयितुं शक्यते Dur.

६. केन हेतुना Sy. केन प्रकारेण Dur.

७. किमनयोरुत्पादनमित्यर्थः Sy. कथं वा जाते एवं महापरिमाणे SKN. एते जाते स्याताम्। किं पौर्वापर्येण, उत युगपद् भवेताम् Dur.

८. क्रान्तदर्शिनोऽतीन्द्रियज्ञाः। यूयं वदत Sy. मेधाविन ऋषयः SKN.

९. जानति M. को विवेद पौर्वापर्यं कारणं च विशेषेण विविच्य वा जानाति। न केनापि ज्ञायत इत्यर्थः Sy. क एतद्विवेद वेत्ति जानाति, अहं तावत्तं जानामीत्यभिप्रायः SKN. कश्चिदपि विस्पष्टं न जानाति। अहन्त्वेतावच्छक्नुयामागमाद् वक्तुम्—"तस्मादुद्भूतस्य हिरण्मयस्याण्डस्यैते शकले" इति। एवमाह "ते अण्डकपाले रजतं च सुवर्णं चाभवताम्। तद्यद् रजतं सेयं पृथिवी, यत्सुवर्णं सा द्यौः" (Chā. U. 3.19.1,2.) इति तेन ज्ञायते युगपदेवैते उत्पन्ने स्यातामिति Dur. १०. कृत्स्नमपि जगदविशेषेण Sy. सर्वं प्राणिजातम् SKN.

११. अन्यनैरपेक्ष्येणैव Sy. आत्मना SKN. आत्मनैव Dur.

१२. ०ते P. एते...धारयतः SKN.

१३. यस्मात्...हेतोः Sy. तावच्छब्दयाद्यन्तुच्यो लम्भवति पदपूरणः। यस्मै प्रयोजनायेति शेषः SKN. यदर्थम् Dur.

१४. खलु Sy. १५. प्रसिद्धम् Sy. एनयोर्नाम...उत्पत्तिः। यदर्थमेते उत्पन्ने इत्यर्थः SKN. अनयोर्नाम नमनम्। यस्माद् भूतग्रामधारणार्थमेते नते विपरिणामत्वेन, तत्सर्वमेते बिभृतः Dur.

१६. यद्वा। यद्ध नाम यत्किञ्चित्पदार्थजातमस्ति विश्वं तत्सर्वमात्मना बिभृतः। अनेन यत्कारणं ब्रूमस्तदप्याभ्यामेव ध्रियत इति कारणाभावः प्रतिपादितः Sy.

विवतते[1] वै, अनयोर्मध्ये[2]। अहोरात्रे[3]। चक्रयुक्ते[4]। इव[5]।

**भूरिं द्वे अचरन्ती चरन्तं पद्वन्तं गर्भमपदी दधाते ।**
**नित्यं न सूनुं पित्रोरुपस्थे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥२॥**

भूरि द्वे। पृथुम्[6]। द्यावापृथिवी[7]। स्वस्थाने[8] स्थिते। चरन्तम्। पादयुक्तम्। आदित्यम्[9]। स्वयमपदी[10]। धारयतः[11]। औरसम्[12]। इव। पुत्रम्[13]। पित्रोः[14]। उपस्थे[15] वर्तमानम्। द्यावापृथिवी[16]। अस्मान्[17]। महतो भयात्[18]। रक्षतम्[19]।

**अनेहो दात्रमदितेरनर्वं हुवे स्वर्वदवधं नमस्वत् ।**
**तद्रोदसी जनयतं जरित्रे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥३॥**

अनेहः। अनुपद्रवम्[20]। दानम्[21]। अदितेः[22]। अप्रस्खलितम्[23]। ह्वयामि[24]। सुखयुक्तम्[25]।

---

१. विविधं वर्तेते SKN. विपर्ययेण वर्तेते Dur. २. नयो॰ P. एतयोर्मध्य इति शेषः SKN. एनयोरेवान्तर्भूते Dur.
३. उत्तरेण पौर्वापर्याभाव उच्यते। अहनी एते द्यावापृथिव्यौ Sy.
४. ॰युक्त P. चक्रे इत्यर्थः। चक्रे च ते युक्ते च चक्रयुक्ते च। परिवर्तमानसामान्यादहोरात्रे उच्येते SKN. चक्रयुगलमिवावियोगेन संयुक्ते। सम्बद्धे इत्यर्थः Dur.
५. इ D. M. अनेन मन्त्रेण द्यावापृथिव्योर्महिमानं महाभाग्यं मन्त्रदृगाचष्टे Dur. कतरा पूर्वा कतरा परैनयोः। कथं जाते। कवयः क एने विजानाति। सर्वमात्मना बिभृतो यद्ध। एनयोः कर्म। विवर्तेते चैनयोः। अहनी अहोरात्रे। चक्रियेव चक्रयुक्ते इवेति। द्यावापृथिव्योर्महिमानमाचष्ट आचष्टे N.3.22; SKN. II.193. VM. ignores कः। वि
६. बहुतरम् Sy. ७. द्वे एवंते द्यावापृथिव्यौ Sy. ८. अविचले Sy.
९. गर्भवदाश्रितं कृत्स्नं प्राणिजातम् Sy.
१०. स्वयं पादरहिते Sy.
११. अनयोर्मध्ये खलु सर्वं जगत्क्षेमेण वर्तते Sy.
१२. धारणे दृष्टान्तः।...नित्यं ध्रुवमात्मजम् Sy. १३. पुत्रमिव यथा स्नेहेन वर्धयन्ती धारयन्ती मातापितरौ तद्वत् Sy.
१४. मातापित्रोः Sy.
१५. उत्सङ्गे वर्तमानम् Sy.
१६. अथ प्रत्यक्षेणाह। हे...द्यावापृथिव्यौ। इतरेतरापेक्षया द्वित्वमुभयोः Sy.
१७. अस्मा P. १८. भयहेतोः पापात्।...यद्वा। अभ्वात्, अभ्वं महत्। अत्यर्थमित्यर्थः। अभ्वेति महन्नाम Sy.
१९. पालयतम् Sy. २०. अपापं दुःखरहितं सुखात्मकम् Sy. २१. धनम् Sy.
२२. अभितेः M. एतदन्तरिक्षस्याप्युपलक्षणम्। अखण्डनीयायाः पृथिव्यास्ताद्वास्यान्तरिक्षस्य च सम्बन्धि Sy.
२३. अप्रस्तुतितम् P. अप्रस्तुलितम् D. अनरणम्। अक्षीणमित्यर्थः Sy.
२४. आह्वयामि स्पृहयामीत्यर्थः Sy.
२५. सर्वतः फलभूतेन स्वर्गेण तद्वत् Sy.

हिंसार्हितम्[1]। अप्रयुक्तम्[2]। तद्[3] दानम्[4]। द्यावापृथिव्यौ! स्तोत्रे[5]। प्रादुर्भावयतम्[6][7]।

**अतप्यमाने अवसावन्ती अनु ष्याम रोदसी देवपुत्रे।**
**उभे देवानामुभयेभिरह्नां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥४॥**

अतप्यमाने[8]। केनचिदप्यबध्यमाने। रक्षणेन[9]। सर्वान् रक्षन्त्यौ[10]। वयमनु स्याम[11]। द्यावापृथिव्यौ[12]। ययोः[13] सर्वे देवा एव[14] पुत्रास्ते[15] अपि। अह्नाम्[16]। उभे। उभयेभिरहोरात्रैः[17]। देवानां[18] भोगसाधने[19] भवत इति[20]।

**संगच्छमाने युवती समन्ते स्वसारा जामी पित्रोरुपस्थे।**
**अभिजिघ्रन्ती भुवनस्य नाभिं द्यावा रक्षतं पृथिवी नो अभ्वात् ॥५॥**

सङ्गच्छमाने। परस्परं सङ्गच्छमाने[21]।

---

१. अहिंसितम् Sy. २. अप्रयत्। ईदृशं धनं हुवे Sy. ३. Omitted by D.

४. अस्माभिः काङ्क्षितमुक्तलक्षणं धनम् Sy. ५. स्तोत्रे यजमानाय Sy.

६. ०र्भावयतम् M. उत्पादयतम् Sy.

७. VM. ignores द्यावा etc.

८. अमध्यमाने P. ०मान M. अतप्यमाने अनीश्वरे। तपेरैश्वर्यकर्मण इदं रूपम्। यद्वा, अतप्यमाने अन्यैरपीडयमाने Sy.

९. स्वतोऽधिकेन केनचित्कृतेनावनेन समृद्धया ... अवसा, अन्नेन Sy.

१०. तर्पयन्त्यौ Sy.

११. वयं मनुष्या मा P. ०वयं मनुष्याम D. तवयं पुत्रामनु स्याम, अनुभवेम Sy.

१२. आग्नुवातस्तु 'अतप्यमाने अवसावन्ती अनु ष्याम रोदसी देवपुत्रे' इत्यादौ सर्वत्र द्यावापृथिवीवचनः। अस्याद्युदात्तत्वाद् द्यावापृथिवीवचन एव न रुद्रपत्नीवचनः। तथा च पदकारेण द्विवचनत्वं प्रदर्शितमिति। कर्मणा वा दानेन प्रशस्यताऽस्य दर्शितेति। भाष्यकारस्तु देवपत्नीप्रकरणानुविधानेन पदकारमनवेक्ष्य रोदसीशब्दं रुद्रपत्नीवचनमुदाजहार N. 12. 46; SKN. IV. 146.

१३. यो यः P. D. १४. हि P.D.

१५. ०स्तो० P. देवा व्यवहर्तारो मनुष्याः पुत्रस्थानीया ययोस्तादृश्यौ। लोकद्वयस्था मनुष्याश्च देवाश्च तदुपजीव्यत्वात्पुत्रा इत्युच्यन्ते, ईदृश्यौ Sy. १६. ०स्तेम व्यह्नाम् M. एतद्रात्रेरप्युपलक्षणम्। ...अह्नां रात्रीणां च सम्बन्धिभिः Sy.

१७. येभि० D. उभयेतिर० M. उभयविधैः शीतोष्णादिरूपैर्विलक्षणैर्धर्मनिमित्तभूतैः, तेषां लाभायेत्यर्थः Sy.

१८. द्योतमानानाम् Sy. १९. भव P.

२०. VM. ignores द्यावा etc.

२१. परस्परमुपकारित्वेन सह युज्यमाने। वृष्टिहविर्भ्योश्च परस्परमुपकार्योपकारकभावः। यद्वा पूर्वं संसृष्टे एव सत्यौ पश्चाद्वियुज्य वृष्टिहविषी अकुर्वत्यौ पश्चान्मनुष्यैः प्रार्थितैर्देवैर्विवाहिते सत्यौ सङ्गते अभूतामित्याहुः। अयमर्थः 'द्यावापृथिवी सहास्ताम्' (TB. I. 1.3.2.) इत्यादिब्राह्मणे समाम्नातः Sy.

युवती। सङ्गतान्ते। मातापित्रोः। उत्सङ्गे वर्तमाने। स्वसारौ। कन्यके। भुवनस्य। नाभिमादित्यम्। अभिजिघ्रन्ती।

**उर्वी सद्मनी बृहती ऋतेन हुवे देवानामवसा जनित्री।**
**दधाते ये अमृतं सुप्रतीके द्यावा रक्षतं पृथिवी नो अभ्वात् ॥६॥**

उर्वी सद्मनी। विस्तीर्णे। स्थानभूते। उच्छ्रिते। स्तोत्रेण। ह्वये। देवानाम्। अन्नेन। जनयित्र्यौ। धारयतः। ये। उदकम्। शोभनाङ्गम्।

**उर्वी पृथ्वी बहुले दूरेअन्ते उप ब्रुवे नमसा यज्ञे अस्मिन्।**
**दधाते ये सुभगे सुप्रतूर्ती द्यावा रक्षतं पृथिवी नो अभ्वात् ॥७॥**

उर्वी पृथ्वी। महती। विस्तीर्णे। बहूनां पर्याप्ते। दूरे ययोः पर्यन्तस्ते। अहमुपस्तौमि।

---

१. ०ति P.D. नित्यतरुण्यौ मिश्रयन्त्यौ वा सर्वेषु भावेषु Sy.

२. ०तास्ते P.D.M. समानान्तिके समानपर्यन्ते वा Sy. ३. सर्वस्य पितृस्थानीययोः पालकयोस्तयोः Sy.

४. उपसंगे P. उत्सङ्गे स्थितम् Sy.

५. स्वरामौ P. परस्परं स्वसृभूते Sy.

६. जामी बन्धुभूते। प्रजापतेः सकाशात् सहोत्पन्नत्वात्परस्परं जामित्वम्। तथा च निगमौ–'दिवं च पृथिवीं चान्तरिक्षमथो स्वः' (RV. X.190.3.) 'यतो द्यावापृथिवी निष्टतक्षुः' (RV. X.31.7.) इति Sy.

७. भूतजातस्य Sy.

८. बन्धकमुदकम् Sy.

९. अभिजघ्नन्ती D.M. अभिजघ्नन्ति P. अभिघ्राणं कुर्वत्यौ स्पृशन्त्यौ। 'समानमेतदुदकम्' (RV. I.164.51.) इत्यादिमन्त्रवर्णादुभयोरुदकप्रदत्वं प्रसिद्धम्। ईदृश्यौ नो रक्षतम् Sy.

१०. VM. ignores द्यावा etc.

११. नि D.

१२. सदनाधारभूते Sy.

१३. ०त P.D.M. महत्यौ महानुभावे Sy.

१४. यज्ञेन च निमित्तभूतेन Sy.

१५. ज्रुवे P.D. आह्वयामि। देवानां हविर्यम्। अस्मद्यज्ञायेत्यर्थः Sy.

१६. उपलक्षणमेतत्। देवमनुष्यादीनाम् Sy.

१७. अन्ने P. अवसा प्रीत्या निमित्तेन... वृष्ट्यादेर्देवानामवसा तर्पणेन निमित्तेन Sy.

१८. वृष्टिसस्ययोर्जनित्र्यौ Sy.

१९. ते युवामाह्वयामि Sy.

२०. ०नांग P.D.M. शोभनरूपे Sy. शोभनाङ्गे is suggested for शोभनाङ्गम्

२१. VM. ignores द्यावा etc.

२२. महत्यौ Sy. महत्यौ is suggested for महती

२३. पृथिव्यौ Sy.

२४. अनेकप्रकारेण प्रथमाने, बह्वाकारे Sy.

२५. ०न्तस्थे P. विप्रकृष्टान्तदेशे अपारे इत्यर्थः Sy.

२६. उपेत्य ब्रवीमि स्तौमीत्यर्थः Sy.

हविषा[1]। अस्मिन्। यज्ञे। धारयेते[2]। ये मनुष्यान्। सुधने[3]। शोभनप्रतरणे[4][5]।

देवान्वा यच्चकृमा कच्चिदागः सखायं वा सदमिज्जास्पतिं वा ।
इयं धीर्भूया अवयानमेषां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥८॥

देवान् वा यत्। अज्ञानानुष्ठानादनृतवचनाच्च[6] देवान्[7]। वा[8]। यद् वयम्। कत्। चित्। आगः[9]। कृतवन्तः। सखायम्[10]। वा[11] मनुष्यम्। सदा[12]। एव। जामातरम्[13]। वा। एतत्[14]। स्तोत्रलक्षणं कर्मांहसाम[15]। एषाम्[16]। अवयानम्[17]। भवतु[18][19]।

उभा शंसा नर्या मामविष्टामुभे मामूती अवसा सचेताम् ।
भूरि चिदर्यः सुदास्तरायेषा मदन्त इषयेम देवाः ॥९॥

उभा शंसा[20]। मनुष्यभवौ[21]। प्रत्यक्षपरोक्षवासौ[22]। माम्। रक्षताम्[23]। उभयपक्षस्थौ। मार्गौ[24] च। माम्। अन्नेन[25]। सेवेताम्[26]। बहु। अपि[27] धनम्। उदारो[28] मह्यं प्रयच्छतु। अतिशयेन सुष्ठु हविः

---

१. नमःसाधनेन स्तोत्रेण Sy.
२. दधाते विश्वं जगत् ते युवामुप ब्रुवे स्तौमि Sy.
३. सुधाने M. शोभनभाग्ये Sy.
४. ०प्रकरणे P. शोभनदाने Sy.
५. VM. ignores द्यावा etc.
६. ०दनुष्ठानाननृत० P. M. ०दनुष्ठा० D अयागलक्षणम् Sy. ७. देवान्प्रति Sy.
८. वंपाद् P. वाद D. वया M.
९. अपराधं तत्तद्यागकाले Sy.
१०. प्रियं मित्रं वा प्रति Sy.
११. ०व वो P. १२. सर्वदा Sy.
१३. जाः पुत्र्यस्तासां पतिं जामातरं वा जायापतिं प्रति दोषारोपणकलहोत्पाद-नादिरूपं यत्सर्वदैव चकृम Sy.
१४. याह हि तत् P. D. युष्मत्स्तुतिरूपमिदं कर्म Sy. १५. ०णक० P.
१६. ०मेषाम् P. D. M. उक्तरूपाणां पापा-नामपगमं कर्तुम् Sy.
१७. अपयापनम् P.M. अवयावनम् D.
१८. भूयाद्, भवतु।...अत्र सर्वत्र प्रकारान्त-रेण...रक्षतं रक्षतमिति प्रार्थनं तयो-रक्षिन्याविषवनेन सम्भवादुचितमेव। तस्मात्स्वस्थान एव स्थिते अनुकूले भवतमित्येवं प्रार्थ्यते Sy.
१९. VM. ignores द्यावा etc.
२०. ०सौ P. २१. नरेभ्यो हितौ Sy.
२२. द्यावापृथिव्योरुभयोर्विषयौ, उभावपि शंसौ...ईदृश्यावुभयाध्ये स्तुती Sy.
२३. अविष्टां रक्षताम्...यद्वा द्यावापृथिव्य-भिमानिदेवयोरेव शंसशब्देनाभिधानात् पुंल्लिङ्गता Sy. २४. ऊती रक्षिके द्यावापृथिव्यौ Sy. २५. रक्षणेन Sy.
२६. सेवताम् P. यद्वा प्राणेभ्यो हितकरौ, उभावैहिकामुष्मिकविषयौ शंसौ माम-विष्टां प्राप्नुताम्। तथा, उभे अपि, ऊती तयोः सम्बन्धिन्योरभिमानिदेवतयोरवसा, अस्मत्तर्पणेन निमित्तेन सचेताम् Sy.
२७. चित् पूजायाम्। अभिपूजितम् Sy.
२८. स्तोतारो वयम् Sy.

प्रयच्छन्तो[1] वयम्। अन्नेन[2]। मदन्तः[3]। दरिद्राणामिषं कुर्वीमहि[4] द्यावापृथिव्योः प्रसादेन। देवाः[5]!

ऋतं दिवे तदवोचं पृथिव्या अभिश्रावाय प्रथमं सुमेधाः ।
पातामवद्याद्दुरितादभीके पिता माता च रक्षतामवोभिः ॥१०॥

ऋतं दिवे[6]। द्यावापृथिव्योः[7]। अभिश्रवणार्थम्[8]। तदिदम्[9][10]। सुमेधाः[11]। स्तोत्रम्। अवोचम्[12]। पूर्वमेव[13]। ते मां पाताम्[14]। अवद्यात्[15]। दुरितात्[16][17]च। सङ्ग्रामे[18]। पिता द्यौः[19]। माता। च[20] पृथिवी[21]। रक्षतां[22] माम्। रक्षणैः[23]।

इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवे वाम् ।
भूतं देवानामवमे अवोभिर्विद्यामेषं वृजनं जीरदानुम् ॥११॥

इदं द्यावापृथिवी। हे द्यावापृथिवी[24]! इदम्[25]। सत्यम्[26]। अस्तु[27]। पितः[28]! मातश्च[29]। यत्[30]। इह[31]। वाम्[32]। अहं याचे[33]। भवतं च। देवानाम्[34]। आसन्ने[35]। रक्षणैः[36][37]।

---

१. अतिशयेन शोभनदातृत्वाय।...यद्वा। अर्थं इति षष्ठ्या रूपम्। ईश्वराद्राजादेरपि सुदात्तरायेत्यर्थः Sy.
२. अन्नेन सोमलक्षणेन Sy.
३. मादयन्तः सन्तः Sy.
४. इच्छेम Sy.
५. द्यावापृथिव्योरन्तर्भूताः सर्वेऽपि देवाः Sy
६. ०वो M.
७. दिवे द्युदेवतायै, पृथिव्यै पृथिवीदेवतायै Sy.
८. अभितः सर्वतः श्रवणाय Sy.
९. तत्प्रीतिकरम् Sy.
१०. तदिनं P.
११. शोभनप्रज्ञोऽहम् Sy.
१२. ब्रवीमि Sy.
१३. प्रथमं, मुख्यनामैतत्। प्रतमं प्रकृष्टतमम् Sy.
१४. रक्षताम् Sy.
१५. ०द्या M. निन्दितात् दुःखप्रापकात् Sy.
१६. ०ता D.M. अंहसः सकाशात् Sy.
१७. Omitted by P. D.
१८. अन्तिकनामैतत्। समीप एव Sy.
१९. पालको द्युलोकः Sy.
२०. Omitted by P. D.
२१. सस्यादेर्निर्मात्री पृथिवी Sy.
२२. पालयताम् Sy.
२३. अभिमततर्पणैः Sy.
२४. द्यावापृथिव्यौ! Sy.
२५. अस्माभिः क्रियमाणं स्तोत्रम् Sy.
२६. अवितथम् Sy.
२७. भवतु। फलवद् भवत्वित्यर्थः Sy.
२८. द्यौः! Sy.
२९. हे मातः पृथिवि! Sy.
३०. स्तोत्रम् Sy.
३१. अस्मिन् यज्ञे Sy.
३२. युवां प्रति Sy.
३३. उपेत्य ब्रवीमि तत्सत्यमस्तु Sy.
३४. स्तोतॄणामस्माकम् Sy.
३५. ०न्ने P.D. अन्तिकनामैतत्। नित्यसन्निहिते युवाम् Sy.
३६. तर्पणैर्युक्ते Sy.
३७. VM. ignores विद्याम etc. Ms. D. puts the figure ॥१८५॥ here to indicate the end of one hundred and eighty-fifth hymn. No such number is given in P. and M.

I.186.

आ न॒ इळा॑भिर्वि॒दथे॑ सुश॒स्ति वि॒श्वान॑रः सवि॒ता दे॒व ए॑तु ।
अपि॒ यथा॑ युवानो॒ मत्स॑था नो॒ विश्वं॒ जग॑दभिपि॒त्वे म॑नी॒षा ॥१॥

आ[1] न[2] इळाभिः । आगच्छ[3] त्वम् । अस्मान्[4] । अन्नैः[5] । यज्ञे[6] । शोभनशंसनम्[7] । यथा विश्वे[8] यस्य प्रेष्या नरा विश्वान्[9] वा[10] यः प्रस्तुतः । सविता[11] । देवः । अपि च[12] । यथा[13] प्रेरयिता वैश्वानरः । हे युवानः[14] ! अस्मान्[15] । यूयं च मादयथ[16] । विश्वम्[17] । जगत्[18] । अभिप्राप्तौ[19] । प्रज्ञया[20] तथा गच्छथ[21] ।

---

१. न D.
२. इला० D. इडा० P.
३. आगच्छतु Mah., Sy. आ एतु U.
४. अस्माकम् Mah. अस्मदीये Sy.
५. P. adds च after अन्नैः । यथा सर्वे, इडां भक्षयन्ति तथा एत्वित्यर्थः Mah. प्रदेयै रत्नैः सह । यद्वा इडाभिः । तदा-श्रितेषु ताच्छब्द्यम् । भूमिस्थानाभिर्देव-ताभिः सह Sy.
इडाभिः करणभूताभिः U.
६. यज्ञगृहे Mah.
७. कथम् । इडाभिः सुशस्ति यथा स्यात्तथा, इडाभक्षणेन शोभना शस्तिः शंसनं प्र-शंसा यस्यां क्रियायां तथा . . . यद्वा सुशस्ति, विभक्तिलोपः । कीदृशे यज्ञगृहे सुशस्ति सुशस्तौ, इडाभिः शोभनप्रशंसा-युक्ते Mah. सुपो लुक् । सुशस्तिभिः शोभनशंसनैः स्तुतिभिः Sy. अविभक्ति-को निर्देशः । सुशस्तिभिश्च शोभनैः शंसनैश्च करणभूतैः U.
८. विश्वनरहितकारी Mah. सर्वप्राणि-हितकार्यग्निः Sy.
९. विविश्वान् P.
१०. च P. D.
११. प्रेरक आदित्यश्च देवः Sy. सविता च देवः U.
१२. अपि निश्चितम् Mah. अपिः सम्भाव-नायाम् । अपि अस्मान् Sy. अपि तथा तेन प्रकारेण मादयत यथेष्टम् U.
१३. येन प्रकारेण Mah., U.
१४. एवं सूर्यमुक्त्वा देवानाह हे युवानो जरा-रहिता देवाः ! Mah. नित्यतरुणा यज्ञस्य मिश्रयितारो वा यूयम् Sy. युवानः सर्व-कर्मक्षमा अविपरिणामिनो वा U.
१५. नोऽस्माकम् Mah. नोऽस्मान् Sy. अस्माकं गृहे U.
१६. 'मद तृप्तौ' तृप्यथ . . . मत्सथ । अन्तर्भू-तण्यर्थः । तर्पयथ । यथा भवद्भिस्तृप्तिः क्रियते तथाऽस्मत्प्रजास्तर्पणीया इत्यर्थः Mah. मादयथ Sy. माद्यथ तृप्यथ U.
१७. सर्वम् Mah.
१८. जगद् गन्तृ जङ्गमं पुत्रगवादिकम् Mah. जगत् । एतत्स्थावरस्याप्युपलक्षणम् । यद्वा कृत्स्नं प्रपञ्चं मत्सथ तथाऽस्मा-नपि । यद्वा जगच्छब्दो यजमानरूप-मनुष्यवाची । सर्वानपि यजमानान् यथा मत्सथ तथेत्यर्थः Sy. विश्वं जगद्बुद्धराम इति कृत्वा U.
१९. अभिपतन आगमनकाले Mah. अभि-पतनीयेऽस्मयज्ञे Sy. अभिपतनकाले प्राप्ते U.
२०. मनीषया बुद्ध्या Mah. मनस ईशितृत्वेन स्वेच्छयेत्यर्थः Sy. मनीषयेति विभक्ति-व्यत्ययः । मनस इच्छया U.
२१. गच्छते P. D.
This stanza=YV. 33.34.

आ नो॒ विश्व॒ आस्क्रा॑ गमन्तु दे॒वा मि॒त्रो अ॑र्य॒मा वरु॑णः स॒जोषा॑ः ।
भुव॒न्यथा॑ नो॒ विश्वे॑ वृ॒धास॒ः कर॑न्त्सु॒षाहा॑ वि॒थुरं॒ न शव॑ः ॥२॥

आ नो विश्वे । आगच्छन्तु । अस्मान्[1] । विश्वे[2] । देवाः । शत्रूणामास्कन्दितारः[3] । मित्रादयः[4] । सङ्गताः[5] । त इमे यथा । अस्माकम् । अभवन्[6] । विश्वे । वर्धयितारः । तथाऽस्माकं[7] शत्रूणां[8] बलम्[9] । असहायम्[10] । इव[11] । पराभूताः[12] । कुर्वन्तु[13] ।

प्रेष्ठं॑ वो॒ अति॑थिं गृणीषे॒ऽग्निं श॒स्तिभि॑स्तु॒र्वणि॑ः स॒जोषा॑ः ।
अस॒द्यथा॑ नो॒ वरु॑णः सुकी॒र्तिरिष॑श्च पर्षदरिगू॒र्तः सू॒रिः ॥३॥

प्रेष्ठं वः । प्रियतमम्[14] । त्वाम्[15] । अतिथिम् । स्तौमि[16] । अग्निम् । स्तुतिभिः[17] । तूर्णसम्भजनः[18] । पुत्रपौत्रयुक्तः[19] । भवति । यथा[20] । अस्माकम् । वरुणः[21] । शोभनकीर्तनः[22] । तथा च कुरु स्तुहि?[23] अन्नानि च । अस्मानतिनयति[24] । अरीणामाह्वाता[25] । वरुणः[26] प्राज्ञः[27] ।

---

१. अस्माकं यज्ञम् Sy.
२. सर्वे Sy.
३. अस्क० M. आक्रमितारो वा Sy.
४. मित्राय P. मित्रोऽर्यमा वरुणश्च त्रयोऽपि Sy.
५. स्वं गताः P. समानप्रीतयः सन्तः Sy.
६. अभवं P.D.M. भवेयुः Sy.
७. अस्मदीयम् Sy.
८. सुष्ठु शत्रूणामभिभवेन Sy.
९. अन्नम् Sy.
१०. हीनं यथा Sy.
११. ०कं ... मिव M.
१२. ०ता P.D. पराभूतं is suggested for पराभूताः ।
१३. यथा न कुर्युस्तथाऽऽगच्छन्तु Sy.
१४. सर्वेषामाह्वातृत्वाद्धविर्वहनाच्चाग्निर्देवानां प्रियतमस्तम् Sy.
१५. त्वम् D. वो युष्माकम् Sy.
१६. स्तौषि M.D. गृणे स्तौमि । व्यत्ययेन मध्यमः Sy.
१७. शंसनैः स्तुतिभिः Sy.
१८. प्रियतम ... भजनः M. शीघ्रं सम्भक्ता Sy.
१९. युष्माभिः सह प्रीयमाणः । यद्वा । एते अग्निविशेषणे । यस्तुर्वणिः शीघ्रं यज्ञस्य सम्भक्ता सजोषा युष्माभिः सह प्रीयमाणस्तमग्निं गृणीषे Sy.
२०. येन प्रकारेण Sy.
२१. एतन्नामको देवः Sy.
२२. शोभनकीर्तिमान् ।... 'सु॒की॒र्तिं भि॑क्षे॒ वरु॑णस्य॒ भूरे॑ः' (RV. II. 1. 28.) इत्यादिमन्त्रवर्णेषु वरुणात् सुकीर्तिरेवैषणीया Sy.
२३. कुरुतं च M. कुरुष्व P.D.
२४. पूरयेत् तथा तमपि स्तुम इत्यर्थः Sy.
२५. अरिष्वदातृषु तदा शक्तितः । अरीणां हननायोद्युक्तो वा Sy.
२६. अयं वरुणः Sy.
२७. प्रेरयिता Sy.

उप॑ व॒ एषे॒ नम॑सा जिगी॒षोषासा॒नक्ता॑ सु॒दुघे॑व धे॒नुः ।
स॒मा॒ने अह॑न्वि॒मिमा॑नो अ॒र्कं विषु॑रूपे॒ पय॑सि॒ सस्मि॒न्नूध॑न् ॥४॥

उप व एषे । हे देवा युष्मान् । शत्रुविजिगीषयाऽहम् । अन्नेन । उपगच्छामि । अहोरात्रे । शोभनदोहना । धेनुः । इव भवतः । एकस्मिन् । अहनि । विविधरूपम् । अन्नम् । उत्पादयन् । नानारूपे । उदके । समाने । ऊधनि मेघे देवस्तोत्रेणोत्पादयन् ।

उ॒त नोऽहि॑र्बु॒ध्न्यो॒३॒॑ मय॑स्कः॒ शिशुं॒ न पि॒प्युषी॑व वेति॒ सिन्धुः॑ ।
येन॒ नपा॑तम॒पां जु॒नाम॑ मनो॒जुवो॒ वृष॑णो॒ यं वह॑न्ति ॥५॥

उत नः । अपि च । अस्माकम् । अन्तरिक्षभवः । मेघः । सुखम् । करोतु । शिशुम् । इव । आप्याययन्ती माता । सरस्वती । अस्मानागच्छति । यस्माद् वयम् । अपाम् । नपातं देवम् ।

१. Omitted by P.
२. युष्माकम् Sy.
३. पापानां जिगीषया Sy.
४. हविषा नमस्कारेण वा Sy.
५. उप उपेत्य . . . एषे, इच्छामि । 'इष गतौ' इत्यस्य वा, ईषतेर्वा गत्यार्थस्य लिटि, उत्तमैकवचन इदं रूपम् । भजामि Sy.
६. अहनि रात्रौ च । यद्वा । अहोरात्रदेवते अपि अभिगच्छामि Sy.
७. ०हा M.
८. गतौ दृष्टान्तः । . . . सुदोग्ध्री धेनुर्यथा दोहाय दोग्धुर्गृहमागच्छति तद्वत् Sy.
९. षष्ठेऽहनि । एकस्मिन्नेवाहनि सर्वदैव वेत्यर्थः । एकस्मिन्नेवाहनि समान ऊधस्युत्पन्ने नानारूपे पयसि त्वदर्थं हविर्मिमान उपगच्छामीत्यर्थः । यद्वा सस्मिन् सर्वस्मिन्नूधनि फलाख्यक्षीरोत्पादके यज्ञे निमित्तभूते सति विषुरूपे पयसि नानारूपे सोमलक्षणोदकेऽर्कमप्रसाधनं स्तोत्रं विमिमानोऽहं युष्मानभिगच्छामि Sy.
१०. ०धं रू० P. D.
११. अर्चनीयमन्नं चरुपुरोडाशादिकम् Sy.
१२. उत्पा० P. विविधं मिमानः Sy.
१३. पयसि क्षीरघृतादिके Sy.
१४. ऊधस्युत्पन्ने Sy.
१५. ०णोत्पा० P.
१६. अथ P.
१७. स एव बुध्न्यः । बुध्नं बन्धकमन्तरिक्षम् । तदर्हतीति बुध्न्योऽन्तरिक्षचारी, एतन्नामको देवः Sy.
१८. अहिः, अन्तरिक्षगामी अहन्ता वाऽहीनो वा, अहन्यमानो वैतन्नामको देवः Sy.
१९. शिशिम् P.
२०. इवशब्द एवार्थः पूरणो वा Sy.
२१. ० प्यायन्ति P. ०प्याययन्ति D. तत्र दृष्टान्तः । यथा शिशुं प्याययन्ती गौर्गच्छति तद्वत् Sy.
२२. सिन्धुर्नाम नदी Sy.
२३. अस्मान् रसेनाऽऽप्याययन्ती Sy.
२४. आगच्छ M. आगच्छतु Sy.
२५. उदकानामपातयितारं वर्षकमेतन्नामकं यद्वा, उदकानां नप्तारं तृतीयं पुत्रम् । अद्भ्य ओषधिवनस्पतयस्तेभ्योऽग्निरिति नप्तृत्वम् । तादृशमग्निम् Sy.

अभिगच्छामः[1] । मनोवेगाः । अश्वाः[2] । यम्[3] । वहन्ति[4] ।

**उत नं ईं त्वष्टा गन्त्वच्छा स्मत्सूरिभिरभिपित्वे सजोषाः ।**
**आ वृत्रहेन्द्रश्चर्षणिप्रास्तुविष्टमो नरां न इह गम्याः ॥६॥**

उत न ईम्[5] । अपिच । अस्मान् । त्वष्टा[6] । अभ्यागच्छतु[7] । शोभनम्[8] । देवैः[9] । प्रातः[10] ? । सहितः[11] । वृत्रहा[12] । इन्द्रश्च । पूरयिता[13] मनुष्याणाम्[14] । वृद्धतमः[15] । नराम्[16] । अस्माकम् । इह[17] । आगच्छतु[18] [19] ।

**उत नं ईं मतयोऽश्वयोगाः शिशुं न गावस्तरुणं रिहन्ति ।**
**तमीं गिरो जनयो न पत्नीः सुरभिष्टमं नरां नसन्त ॥७॥**

उत न ईम्[20] । अपिच । अस्माकम् । स्तुतयः[21] । व्याप्तयोजनाः[22] । वत्सम्[23] । इव । गावः[24] । तरुणमिन्द्रम्[25] । लिहन्ति[26], आश्रयन्ते[27] । तम्[28] । एनम्[29] । स्तुतयः । जनयित्र्यः[30] । पत्न्यः[31] । इव पतीन्[32] । नेतॄणां[33] स्तुतयः । जिघ्रन्ति[34] । अन्तसुगन्धम्[35] [36] ।

---

१. स्तुतिभिः सङ्गच्छेम (हि) । जु इति सौत्रो धातुर्गत्यर्थः Sy. २. वर्षका मेघा अश्वाः Sy. ३. देवम् Sy.
४. वहन्ति स सुखं करोतु Sy.
५. Omitted by P. ईम्, इदानीमिमं यज्ञं वा Sy. ६. त्वष्टा देवोऽपि Sy.
७. ०च्छत M. अच्छ अभिप्राप्तुम्...आ गच्छतु Sy.
८. स्मत् सहार्थे प्राशस्त्ये वा वर्तते । अत्र प्रशंसायाम् । प्रशस्तं यथा तथा Sy.
९. स्तोतृभिर्ऋत्विग्भिः Sy.
१०. वृतः D. अभिगन्तव्ये यज्ञे निमित्तभूते सति Sy.
११. समानप्रीतिर्भवत्विति शेषः Sy.
१२. वृत्रघाती Sy.
१३. कार्मस्तेषां पूरकः Sy.
१४. चर्षणयो मनुष्या यजमानाः Sy.
१५. वहृतमो महत्तमः Sy.
१६. नरा(णा)म् M. नृणाम् Sy.
१७. अस्मिन्कर्मणि Sy.
१८. उक्तगुणोपेतः सन्...आगच्छतु Sy.
१९. VM. ignores ईम्
२०. ई P. ईम् एनम् Sy.
२१. अस्मद्बुद्धयः Sy.
२२. अश्वसमानप्राप्तयः Sy.
२३. तत्र दृष्टान्तः...शिशुं न शिशुमिव वत्समिव तं यथा लिहन्ति तद्वत् Sy.
२४. दोग्ध्र्यो धेनवः Sy.
२५. नित्ययुवानमिन्द्रम् Sy.
२६. आस्वादयन्ति Sy.
२७. स्तुवन्तीत्यर्थः Sy.
२८. तमेव Sy. २९. एन P.
३०. फलस्योत्पादयित्र्यः Sy.
३१. तत्र दृष्टान्तः । जनयो न, उत्पादयित्र्यः पत्नीः पत्न्यः पतिमिव Sy.
३२. पति M.
३३. नराणां यजमानानाम् Sy.
३४. व्याप्नुवन्ति । नसतिर्व्याप्तिकर्मा Sy.
३५. ०सुन्धम् P. अतिशयेन सुरभिम् Sy. अतिसुगन्धिम् is suggested for अन्तसुगन्धम्
३६. VM. ignores ईम्

उत न ईं मरुतो वृद्धसेनाः स्मद्रोदसी समनसः सदन्तु ।
पृषदश्वासोऽवनयो न रथा रिशादसो मित्रयुजो न देवाः ॥८॥

उत न ईम्[1] । अपि च । अस्माकम्[2] । मरुतः । प्रवृद्धसेनाः[3] । शोभनम्[4] । द्यावापृथिवी[5] । समनसः[6] सन्तः । अधितिष्ठन्तु[7] । पृषद्वर्णाश्वाः[8] । गन्तारः[9] । इव । रथाः[10] । हिंसितॄणामसितारः[11] । मित्रयुक्ताः[12] । इवेतरेतरं सङ्गमनात् । मरुतो[13] देवाः[14] ।

प्र नु यदेषां महिना चिकित्रे प्र युञ्जते प्रयुजस्ते सुवृक्ति ।
अध यदेषां सुदिने न शरुर्विश्वमेरिणं प्रुषायन्त सेनाः ॥९॥

प्र नु यदेषाम् । प्रज्ञायते[15] । यदा[16] । मरुताम् । महिमा[17] । क्षिप्रम्[18] । अथ[19] प्रयुञ्जते[20] । स्तुतीः[21] । शोभनप्रवृत्तीः[22] । यथा तदेनां ?[23] सुदिने[24] । इव । मेघः[25] । सर्वम्[26] पार्थिवम्, इरिणम्[27] । वर्षणेन, आदहन्ति[28]

---

१. ई P. इदानीम् । एनं यागं वा Sy.

२. अस्मदीयम् Sy. ३. प्रवृद्धबलाः Sy.

४. स्मत्, सह अपि Sy.

५. रोदस्योर्द्यावापृथिव्योः सकाशात् । यद्वा रोदस्यावपि गच्छताम् Sy.

६. समनः M. समानः P. समानमनस्का Sy.

७. अधियून्तु D. सन्तो धिष्ठन्तु P. सदन्तु गच्छन्तु Sy.

८. ० र्णा श्वा० P. D. 'पृषत्यो मरुताम्' (Ngh. 1.15.) इति यास्कः Sy.

९. यथैव नमनस्वभावाः Sy.

१०. रथा रंहणस्वभावा रथवन्तो वा । मत्वर्थो लुप्यते । यद्वा । अवनयो रक्षका रथा इव स्थिताः Sy.

११. रिशाः शत्रवस्तेषामत्तारः Sy.

१२. मैत्रीयुक्ताः Sy.

१३. व्यवहर्तारं ऋत्विज इव । यद्वा । मैत्रीयुक्ता अन्ये देवा यथा गच्छन्ति तद्वत् Sy.

१४. VM. ignores ईम्

१५. यद्वा । एषां महत्त्वेन युक्ता नराश्चिकित्रे ज्ञानस्यनुष्ठेयम् Sy.

१६. यस्मात् Sy.

१७. महिमा वृष्टिलक्षणः Sy.

१८. नु इति पूरणः Sy.

१९. ० प्र P. D.

२०. ततस्ते ज्ञातारः . . . प्रयुञ्जते Sy.

२१. ० क्ति P. D. प्रयोगान् Sy.

२२. त्भोप्र० D. सुवृक्ति, सुपो लुक् । सुवृक्तीनाम् Sy.

२३. यथायदेनां P. यथाय यथेनां M. अथ । यदा । एषाम् । suggested for यथातदेनां

२४. तत्र दृष्टान्तः । सुदिने मेघावरणादिरहिते दिने Sy.

२५. शरुः, अन्धकारहिंसकः प्रकाश इव । स यथा सर्वमावृणोति तथा मरुत्सेनाऽवृष्ट्या सर्वमूषरं करोति । यद्वा । मरुन्महिमा वृष्टिर्भवति । तदा सस्यादिसमृद्धौ सत्यां प्रयोगं कुर्वन्ति यदा यजन्ति तदा मरुत्सेनाः सर्वां महीमुन्दन्तीत्येवं महानुभावा मरुत इति तेषां स्तुतिः Sy.

२६. अथ, अथ प्रयोगानन्तरं, यद् यस्मात् . . . विश्वं सर्वं भुवनम् Sy.

२७. इवरीण D. इवरिण P. ऊषरप्रदेशम् Sy.

२८. यथा तथा सर्वतः . . . उत्पादयन्ति Sy.

सेनास्तदा[1] च प्रयुञ्जत इति[2] ।

प्रो अश्विनाववसे कृणुध्वं प्र पूषणं स्वतवसो हि सन्ति ।
अद्वेषो विष्णुर्वात ऋभुक्षा अच्छा सुम्नाय ववृतीय देवान् ॥१०॥

प्रो अश्विनौ[3] । मनुष्या यूयम्[4], अश्विनौ[5] । युष्माकं रक्षणाय[6] । प्रकृणुध्वम्[7] । प्र च । पूषणम्[8] । स्वबला[9] मरुतः । च । सन्ति तानपि[10] प्रकृणुध्वम्[11] । अद्वेषः[12] । विष्णुः[13] । वातः[14] । महानिन्द्रश्च[15] । तानिमान् सर्वान्[16] देवान् । सुखार्थम्[17] । आवर्तयामः[18] ।[19]

इयं सा वो अस्मे दीधितिर्यजत्रा अपिप्राणी च सदनी च भूयाः ।
नि या देवेषु यतते वसूयुर्विद्यामेषं वृजनं जीरदानुम् ॥११॥

इयं सा वः । हे यष्टव्या[20] देवाः ! युष्माकम्[21] । अस्मासु[22] । इदं[23] स्तुतिलक्षणं कर्म[24] । सा । इयम् । अपिपूरणी[25], अस्माकम् । भूयात्[26] । सादनी[27] । च । येयम्[28] । देवेषु । प्राभिमुख्येन[29] । गच्छति । वसूयुः[30][31] ।

---

१. वृष्टधुत्पादकाः Sy.
२. VM. ignores ते
३. ० ना P.D.
४. हे ऋत्विजः ! Sy.
५. एतन्नामकौ देवावुद्दिश्य Sy.
६. अस्मद्रक्षणाय Sy.
७. स्तुतिं प्रकर्षेण कृणुध्वम् Sy.
८. पोषकमेतन्नामकं देवमप्यवसे प्रकर्षेण स्तुतिं कृणुध्वम् Sy.
९. ०लान् P. स्वायत्तबलाः Sy.
१०. तावन्ति नपि P.D.
११. चकृ० D. चकृ० P.
१२. के ते ? अद्वेषो द्वेषरहितः ।... प्रथममनाहूतोऽपि न कुप्यतीति वक्तुमद्वेष इत्युक्तम् Sy
१३. व्याप्त एतन्नामको देवः Sy.
१४. सर्वत्र सञ्चारी वायुः Sy.
१५. पतिरिन्द्रश्च । एतानपि प्र कृणुध्वम् Sy.
१६. अतोऽहं स्वायत्तबलान् सर्वानपि Sy.
१७. सुखाय Sy.　१८. अच्छ, आभिमुख्येन ... स्तोत्रैरभिवर्तयेयम् Sy.
१९. VM. ignores च
२०. ० ष्य P. D.
२१. युष्मत्सम्बन्धिनी Sy.
२२. अस्माकम् Sy.
२३. अस्माविदं P. इयं प्रसिद्धा Sy.
२४. दीप्तिः Sy.
२५. कर्मपू० M. सर्वदा चेष्टयित्री Sy.
२६. भूयात् P. भवतु Sy.
२७. निवासवती Sy.
२८. या दीधितिः Sy.
२९. अभि० D. नियमेन प्रयत्नं करोति । तानपि प्रकाशयितुं सैव भूयात् Sy.
३०. ०यु P.D. वस्तूयुः M. वसुमती Sy.
३१. VM. ignores च and विद्याम etc.
Ms. D. puts the figure ॥१८६॥ here to indicate the end of one hundred and eightysixth hymn. No such number is given in P. and M.

## I.187.

**पि॒तुं नु स्तो॑षं म॒हो ध॒र्माणं॒ तवि॑षीम् ।**
**यस्य॑ त्रि॒तो व्योज॑सा वृ॒त्रं विप॑र्वम॒र्दय॑त् ॥१॥**

पितुं[1] नु[2]। अन्नस्तुतिः—अन्नम्[3]। स्तौमि[4]। महतः[5]। धारयितारम्[6]। बलस्य[7]। यस्य[8]। बलेन[9]। त्रितः[10]—त्रिस्थान इन्द्रः[11]। वृत्रम्[12]। विपर्वाणम्[13]। व्यावर्तयत्[14][15]।

---

१. पितुः D. धार० P.

२. क्षिप्रम् Sy., SKN. नुरनर्थकः U.

३. पालकमन्नम् Sy. परस्ताद्यच्छब्दश्रुतेस्तच्छब्दाध्याहारः। तं पितुमन्नम् SKN. अन्नमहम् Dur.

४. को हि नाम तन्न स्तूयाद्यस्मादृते त्रिलोकाधिपतिरपीन्द्रः किञ्चिदप्यशक्तः कर्तुमित्यभिप्रायः Dur.

५. महान्तम् Sy., SKN.

६. सर्वस्य धारकम्।...यद्वा महतो लोकस्य धारकम् Sy.

७. तविष्या बलस्य...तविषीति बलनाम। विभक्तिव्यत्ययः। अन्नेनैव बलोत्पत्तेः Mah. बलात्मकम् Sy. तवतेर्वृद्धिकर्मणः, बलस्य U. बलनामैतत्। षष्ठ्यर्थे द्वितीया...तवतेर्वृद्ध्यर्थस्य तवस्तविष इति महन्नामनी SKN. तद्धि सर्ववस्तुभ्यो ज्यायः Dur.

८. पितोः Mah. अन्नस्य Sy. यस्येत्यन्नस्यापदेशसम्बन्धलक्षणा च षष्ठी। यस्यान्नस्य सम्बन्धिना SKN.

९. सामर्थ्येन Sy.
बलेन यत्कृतेनेत्यर्थः SKN.
बलेन बलाधिपतिरपीन्द्रः Dur.

१०. ०तं D.

११. ०नं D. विस्तीर्णतमः प्रख्यातकीर्तिस्त्रिषु क्षित्यादिस्थानेषु तायमानोऽपीन्द्रः Sy. त्रिस्थानत्वं च वाय्वात्मना बलकृतिरूपेण वा सवनसम्बन्धेन वा SKN. त्रिषु स्थानेष्वप्रतिहतप्रभावः Dur.

१२. दैत्यम् Mah. शत्रुं मेघं वा SKN. मेघम् Dur.

१३. विपर्वाणम् M. गतसन्धिबन्धनं कृत्वा ...विगतानि पर्वाणि यस्य तम् Mah. विच्छिन्नसन्धिकम् Sy. विगतपर्वाणं विश्लिष्टावयवसम्बन्धिनं, कृत्वेति शेषः SKN. विगतसन्धिबन्धनं कृत्वा Dur.

१४. ०पर्तयत् P. व्यर्तयत् D. विविधमर्दितवान्। इन्द्रेण वृत्रोऽन्न बलेनैव हत इत्यर्थः Mah. हिंसितवान् Sy. विविधं मर्दितवान् U. पूर्वौ विशब्दोऽर्दयतिना वधकर्मणा सम्बध्यते...विविधं हतवान् हन्ति वा SKN. विविधमर्दयत्यपुनरावृत्तये Dur.

१५. पितुरित्यन्ननाम। पातेर्वा। पिबतेर्वा। प्यायतेर्वा। तस्यैवा भवति..तं पितुं स्तौमि महतो धारयितारं बलस्य। तविषीति बलनाम। तवतेः(वा) वृद्धिकर्मणः। यस्य त्रित ओजसा बलेन। त्रितस्त्रिस्थान इन्द्रो वृत्रं विपर्वाणं व्यर्दयति N.9.25; SKN.III.164. VM. ignores नु
This stanza=YV.34.7.

स्वादो पितो मधो पितो वयं त्वा ववृमहे । अस्माकमविता भव ॥२॥

स्वादो पितो[1] ।

उप नः पितवा चर शिवः शिवाभिरूतिभिः ।
मयोभुरद्विषेण्यः सखा सुशेवो अद्वयाः ॥३॥

उप नः पितो[2] । हे पितो[3]! अस्मान् । उपागच्छ[4] । शिवकरः[5] । कल्याणीः[6] । रक्षणैः । सुखस्य भावयिता । द्वेष्यजनवर्जितः[7] । सखा[8] । सुसुखः[9] । अमायावी[10] ।

तव त्ये पितो रसा रजांस्यनु विष्ठिताः । दिवि वाताइव श्रिताः ॥४॥

तव त्ये । तव[11] । ते[12] । अन्न ! रसान्[13] ?। अनु[14]तिष्ठन्ति[15] । यथा । अन्तरिक्षे[16] । वाताः[17] । तिष्ठन्ति व्याप्ताः[18] ।[19]

---

१. हे स्वादो, आस्वादनीय ! पितो पालक ! मधो माधुर्योपेत ! पितो हे पानसाधनान्न ! वयं त्वा त्वां ववृमहे सेवामहे । अत्र सर्वत्रानुदात्तानां पूर्वस्यासामान्यवचनत्वेनानिघातत्वम् । अनुदात्तानां तु विशेषवचनत्वान्निघातत्वम् । असकृत्पितुशब्दश्रवणं तस्य प्राशस्त्यज्ञापनार्थम् । हे पितो ! अस्माकमविता तर्पयिता भव Sy. This stanza is not commented on by VM. The commentary of Sy. is therefore added here in full for facility of interpretation.

२. ०तोः P. D. Omitted by M.

३. ०तः M.

४. आगच्छ Sy.

५. यतस्त्वं शिवो मङ्गलः Sy.

६. अतः शिवाभिर्मङ्गलयुक्ताभिः Sy.

७. अद्वेष्यरसः प्रियरस इत्यर्थः Sy.

८. सुखा D. सखिवत्प्रियकारी Sy.

९. अत एव सुष्ठु सुखकरः Sy.

१०. ०वी D. द्वयरहित उक्तगुण एव, नतु तद्विपरीतो भवेत्यर्थः । अथवा दृष्टान्तवादोऽयम् । सुशेवोऽद्वया मनःकर्मविसंवादरहितः सखा मयोभुरद्वेष्यश्च भवति तद्वत्त्वमपि भवेत्यर्थः Sy.

११. त्वत्सम्बन्धिनः Sy.

१२. ते स्वाद्वम्लादि षट् Sy.

१३. रजांसि लोकांल्लोकस्थानार्थान् Sy. रसाः । लोकान् is suggested for रसान्

१४. आनुकूल्येन Sy.

१५. विविधं स्थिताः Sy.

१६. विविधस्थितौ दृष्टान्तः । . . . द्युलोके Sy.

१७. पाताः D. वायवः Sy.

१८. ०प्तां D. प्ता P. ते यथा व्याप्तास्तद्वत् Sy.

१९. VM. ignores वि

तव॒ त्ये पि॑तो॒ दद॑त॒स्तव॑ स्वादिष्ठ॒ ते पि॑तो।
प्र स्वा॒द्मानो॒ रसा॑नां तुवि॒ग्रीवा॑इवेरते ॥५॥

तव त्ये पितो[1]। हे स्वादुतम ! अमी[2]। त्वाम्[3]। ददतो[4] भवन्ति, पूरणभूयिष्ठो द्वितीयः पादः। तथा रसानाम्[5]। स्वदितारः[6]। अनेककण्ठाः[7]। इव[8]। बह्वीर्वाचः प्रेरयन्त्येककण्ठा[9] अपि[10] च[11]।

त्वे पि॑तो म॒हानां॑ दे॒वानां॒ मनो॑ हि॒तम् ।
अका॑रि॒ चारु॑ के॒तुना॒ तवाहि॒मव॒सावधीत् ॥६॥

त्वे पितो[12]। हे पितो[13]! त्वयि। महतामपि[14]। देवानाम्[15]। मनः[16]। निहितम्[17]। अकारि[18]। चारु[19]। प्रज्ञानेन[20]। तव। रक्षणेन। इन्द्रस्त, अहिम्[21]। अवधीत्[22]।

---

१. ०तोः D. Omitted by M. हे पितो पालकान्न !

२. ते त्वदर्थिनो नरास्तव भोक्तारो भवन्तीति शेषः Sy.

३. तव त्वदनुग्रहात् ते त्वाम् (तुभ्यम्) Sy.

४. दतः M. प्रयच्छन्तो भवन्ति। यद्वा ते पितो इत्यादरार्थम्। अभ्यासे 'हि भूयां-समर्थं मन्यन्ते' Sy.

५. सनां P. D. M. स्वादुम्लादीनां षण्णाम् Sy.

६. स्वेदिता D. स्वेदितार P. स्वादयितारो भक्षयितार एव Sy.

७. तुवीति बहुनाम। प्रवृद्धग्रीवा एव Sy.

८. इवशब्द एवकारार्थः पूरणो वा Sy.

९. प्रकर्षेण गच्छन्ति सञ्चरन्ति ... भूलोके-ऽत्तार एव वृद्धाङ्गा भवन्तीति प्रसिद्धम्। अनशने हि ग्रीवा अधो लम्बन्ते। यद्वा तव रसानामत्तारोऽसङ्ख्यातग्रीवा इव भवन्ति रसानां बाहुल्यादिति भावः। एवं बहुरसोपेतमन्नमिति तस्य स्तुतिः Sy.

१०. अपि अपि च D.

११. VM. ignores तव। पितो

१२. ० तः M.

१३. ० तः M.

१४. पूज्यानां महतां वा Sy.

१५. इन्द्रादीनाम् Sy.

१६. अन्नः P. 'अन्नमयं हि सोम्य मनः' (Chā. U. 6.5.4.) इति श्रुतेः Sy.

१७. नितम् P.

१८. कृतम्। अमृतमपि विहाय त्वय्येव वर्तते Sy.

१९. समीचीनेन Sy.

२०. त्वत्कृतेन प्रज्ञानलक्षणेन ... अथवा त्वत्केतुना जगद्रक्षणेन निमित्तेनेति योज्यम् Sy.

२१. मेघं वृत्रं वा Sy.

२२. हतवानिन्द्रः। ... जगद्रक्षणार्थं हीन्द्रेणा-हिर्भिद्यते Sy.

**यद्दो पितो अजगन्विवस्व पर्वतानाम् ।**
**अत्रा चिन्नो मधो पितोऽरं भक्षाय गम्याः ॥७॥**

यदद: । हे पीयमान[1]सोमान्न[2] ! यद्यपि[3] । इदम्[4] । त्वमितो[5] गच्छसि[6] । यद्यपि च[7] पर्वतानाम् । विवासन[8]माच्छादनं करोषि तथापि[9] । अत्र । च । अस्माकम्[10] । मादयितः[11] ! भक्षणाय[12] । अलं[13] यथा । तथा गम्याः[14], सर्वेषं गन्तव्यमित्यर्थः[15] ।

**यदपामोषधीनां परिंशमारिशामहे । वातापे पीव इद्भव ॥८॥**

यदपाम् । अद्भ्यः । ओषधीभ्यश्च[16] । यः[17] सारः । परिशेते[18] तं[19]—त्वाम् । यदा वयमास्वादया[20]मः । तदा[21] हे अन्न[22] ! त्वमस्माकमाप्यायकम्[23] । एव । भव[24], असुरस्य वा भक्षितस्यान्नत्वकरण-मिल्वलभ्रातुः[25] ।

**यत्ते सोम गवाशिरो यवाशिरो भजामहे । वातापे पीव इद्भव ॥९॥**

यत् ते सोम[26] । हे[27] सोम ! यस्मात्[28] । तव । पयोमिश्रितं[29] वा तत् । भजामहे[30] ।[31]

---

१. वीय० M. हे पितो अन्न त्वाम् Sy.
२. सोमा न M. ३. यदा Sy.
४. प्रसिद्धं तदुदकम् Sy.
५. ०मिदः P. ६. अगमद् गच्छेत् Sy.
७. मेघानां सम्बन्धि Sy.
८. ०माप्नुनं P. विवस्व, सुपो लुक् । अन्त्य-लोपश्छान्दसः । विवासनवतां विद्युद्रूप-प्रकाशनवतां, विबोधनमुदकलक्षणम् । धनवतां वा Sy.
९. अस्मिन्काले Sy. १०. अस्मान् Sy.
११. ०ता P. माधुर्योपेतान्न !
१२. भक्षण P. D. M.
१३. त्वं नोऽस्मानरम्, अलं सम्पूर्णम् Sy.
१४. गच्छ सन्निहितो भव Sy.
१५. VM. ignores पितो
१६. अपामोषधीनां सम्बन्धि Sy.
१७. येन Sy.
१८. परिलेशं परितः सुखकरमन्नम् Sy.
१९. त्वा P. D. २०. भक्षयामः Sy.
२१. तेनाप्योदकसारेण Sy.
२२. हे वातापे ! वातेन प्राणेनाप्नोति स्वनि-र्वाहमिति वातेनाप्यायत इति वा वातापि शरीरम् । हे शरीर, त्वम् Sy.
२३. अप्य० D. आप्यायित एव Sy.
२४. अन्नोदकाभ्यां शरीरवृद्धिः प्रसिद्धा । यद्वा यद्यप्यपामोषधीनां परिशं लेशमास्वादया-मस्तथापि हे वातापे वातवत्सर्वव्यापक पितो त्वमल्पमपि पीवः पीवानेव भव Sy.
२५. ०मिललभ्रा० P. २६. ०मः P. D.
२७. ये M. पूर्वमन्त्रसामान्येन स्तुत्वेदानीं सोमलक्षणमन्नं स्तौति Sy.
२८. P. and D. read सोयमस्मात् for सोम यस्मात्, यमंशम् Sy.
२९. गोविकारक्षीराद्याश्रयणद्रव्यं, यवाशिरो यवविकाराश्रयणद्रव्यम् Sy.
३०. सेवामहे । तेन हे वातापे शरीर ! पीवो भव Sy. ३१. VM. ignores यवाशिरः । वातापे etc.

करम्भ ओषधे भव पीवो वृक्क उदारथिः । वातापे पीव इद्भव ॥१०॥

करम्भः । मन्थं संयुतं[1] करम्भ इत्याचक्षते । सः[2] त्वमोषधे ! भवास्माकमेवम्[3] । अस्थ्यन्तर्गतमज्जा[4] पीवः । पिण्डाकारो[5] वृक्कः[6] । उदारथिरवगन्तव्यः[7] ।

तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम ।
देवेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादम् ॥११॥

तं त्वा वयम् । तम्[8] । त्वा[9] । वयम् । अन्न[10] ! स्वादुतमैर्[11]वचोभिः[12] स्तुवन्तः । गावः[13] । इव । हव्यानि स्वादुतमानि स्तोत्राणि । प्रेरितवन्तः[14] । देवानां प्रीत्यर्थम्[15] । त्वाम् । तैः सह मादयन्तम्[16] । अस्मभ्यं[17] च । त्वा । सधमादम्[18] ।

I.188.

समिद्धो अद्य राजसि देवो देवैः सहस्रजित् । दूतो हव्या कविर्वह ॥१॥

समिद्धः[19] । स्पष्टम्[20] ।

---

१. मन्थसंयुतं M.
२. सा D. यः करम्भादिरूपः सक्तुपिण्डोऽस्ति तदात्मक हे ओषधे ! Sy.
३. ०स्मामेवम् P. ०स्मास्वेवम् D.
४. अस्थ्यन्तर्गता म० M. अस्थ्यन्तर्गं वा मजा P. अस्थ्यन्तर्गता मजा D. पीवः स्थौल्यवान् Sy.
५. व्याधेर्वर्जयिता Sy. ६. ऊर्ध्वंगमनसाधनः । इन्द्रियाणामुद्दीपयिता भव Sy.
७. VM. ignores वातापे etc.
८. तादृशं स्तुतम् Sy. ९. त्वां महानुभावम् Sy. १०. सोमरूप ! Sy.
११. स्व दुतं म्यैः P. १२. स्तुतिवाग्भिः Sy. १३. तत्र दृष्टान्तः । गावो न हव्या, गाव इव हवींष्युत्पादयन्ति तथा त्वत्सकाशात्सोमं सुषूदिम Sy.
१४. क्षारयामो रसान् Sy. १५. किमर्थं कीदृशं चेति चेदुच्यते । देवेभ्य इन्द्रादिभ्यस्तदर्थम् Sy. १६. तं स्व महाद्यन्तः P. तेषां (तैः) सह मादयितारम् Sy.
१७. तुभ्यं P. D. अस्मदर्थमपि Sy.
१८. न केवलं देवेभ्य एव किन्तु सधमादम्, अस्माभिः सह मादयितारं हुतशेषरूपम् Sy.
१९. P. adds अग्ने after समिद्धः । हे अग्ने ! देवैर्यष्टव्यैर्ऋत्विग्भिः समिद्धः सम्यग्दीपितो, देवोऽद्य एव देदीप्यमानः । समिद्धैर्वा देवैः सहितः समिद्धः सन्, अद्यास्मिन्यागदिने, राजसि, ईशिषे । हे सहस्रजित् सहस्रस्य धनस्यैतत्सङ्ख्याकानां शत्रूणां वा जेतः ! दूतो देवानां दूतस्त्वयज्ञादिवार्ताहर आह्वाता वा । 'अग्निर्देवानां दूत आसीत्' (TS.2.5.8.5.) इति श्रुतेः । कविः क्रान्तदर्शी । ईदृशस्त्वं, हव्या अस्मदीयानि हवींषि । वह देवेभ्यः प्रापय Sy. समिद्धो अद्य राजसि is quoted and described: (एषा ऋक् तनूनपाद्वती) वसिष्ठादिव्यतिरिक्तानां तनूनपाद्याजिनाम् । सर्वेषु प्रत्यृचमेता देवताः । तथा चाह 'सर्वत्र प्रथिताभ्यः स्वस्य' इत्यादि सिद्धम् SKN.III.142 २०. ०ष्टः D. P.

तनूनपादृतं यते मध्वा यज्ञः समंज्यते । दधंत्सहस्रिणीरिषः ॥२॥

तनूनपात् । हे तनूनपात्[1] ! यज्ञम्[2] । गच्छते[3] त्वया । आज्येन[4] । हविः[5] । समज्यते । प्रयच्छन्[6] । सहस्रसङ्ख्याकानि[7] । अन्नानि च त्वम्[8] ।

आजुह्वानो न ईड्यो देवाँ आ वंक्षि यज्ञियान् ।
अग्ने सहस्रसा असि ॥३॥

आजुह्वानः । आहूयमानः[9] । अस्माकम्[10] । स्तोतव्यः[11] । देवान् । आवह[12] । यज्ञार्हान्[13] । अग्ने[14] त्वम्[15] । सहस्राणां[16] दाता । भवसि ।

प्राचीनं बर्हिरोजसा सहस्रवीरमस्तृणन् । यत्रादित्या विराजथ ॥४॥

प्राचीनम् । प्रागग्रम्[17] । बर्हिः[18] । बलेनानेन[19] । तदेव[20] वीरयुक्तम्[21] । अस्तृणन्[22] । यस्मिन्[23] । देवा[24] यूयम् । विराजथ[25] ।

विराट् सम्राड्विभ्वीः प्रभ्वीर्बह्वीश्च भूयसीश्च याः । दुरो घृतान्यंक्षरन् ॥५॥

विराट्[26] । नानाजातीयमनुष्यपरिवृतानि[27] द्वाराणि भवन्ति तत्र क्वचित् विराडुच्यते[28] ।

---

१. यज्ञशरीरस्य नपातयिता । यद्वा । आपोऽत्र तन्व उच्यन्त इत्युक्तत्वादपां नपातयिता तासां नप्ता वा । अद्भ्य ओषधय ओषधीभ्योऽग्निरिति नप्तृत्वम् Sy.
२. ऋतं यज्ञम् Sy.
३. अनुतिष्ठते यजमानाय तदभिमतार्थम् Sy.
४. अज्यन P. अज्ज्येन D. मधुरेणाज्यसोमादिद्रव्येण Sy.
५. यज्ञः पूज्यः । यज्ञनिर्वाहकत्वाद्वा यज्ञ ईदृशोऽग्निः Sy.
६. यजमानेभ्यो धारयन् Sy.
७. सहस्रसहस्रसं॰ M. एतत्सङ्ख्याकान् Sy.
८. क्षतम् M.
९. अस्माभिराहूयमानः सन् Sy.
१०. अस्मदर्थम् Sy.
११. अस्माभिः स्तुत्य इध्मनामकस्त्वम् Sy.
१२. ॰र्णां वह M.
१३. यज्ञार्हं P. D. यज्ञभाजः Sy.
१४. त्वने P. येन D.
१५. त्व P.
१६. अपरिमितधनस्य दातासि Sy.
१७. प्रागह् P.
१८. बर्हिः D.
१९. मन्त्रलक्षणबलेनोपेता ऋत्विजः Sy.
२०. ॰नानेकदेव M.
२१. सहस्रसङ्ख्याका वीराः शत्रूणां विशेषेणेरयितारो देवा यस्य तत्तादृक् । यद्वा । अपरिमितवीराः पुत्रादयो येन तादृक् Sy.
२२. आच्छादयन् Sy.
२३. यस्मिन्बर्हिषि Sy.
२४. अदितेः पुत्रा यूयम् Sy.
२५. विविधं राजथ्वे तद् बर्हिरस्तृणन् Sy.
२६. वीरा D. विरा P.
२७. ॰जातियमनुष्य॰ P.
२८. विशेषेण राजन्त इति व्यत्ययेनैकवचनम् Sy.

सम्राडुच्यते[१] राजद्वारम्। एवं बह्वीरित्यादिष्वपि द्रष्टव्यम्। बह्वीः[२]। भूयसीरिति[३] मनुष्यपरिवृता उच्यन्ते। एवंविधा द्वारः[४]। अस्माकमुदकानि[५]। क्षरन्तु[६]।

**सुरुक्मे हि सुपेशसाधि श्रिया विराजतः। उपासावेह सीदताम् ॥६॥**

सुरुक्मे[७]। शोभनरुक्माभरणे[८]। हि[९]। मांसले[१०]। उपासानक्ते[११]। शोभया[१२]। अधि[१३]विराजतः[१४]। ते[१५] इह[१६]। आसीदताम्[१७]।

**प्रथमा हि सुवाचसा होतारा दैव्या कवी। यज्ञं नो यक्षतामिमम् ॥७॥**

प्रथमा[१८]। पूर्वौ[१९]। हि[२०]। सुवचसौ[२१]। दैव्यौ[२२]। होतारौ[२३]। कवी[२४] भवतः[२५]। तथा सति, इमम्[२६]। यज्ञम्। यक्षताम्[२७]।[२८]

**भारतीळे सरस्वति या वः सर्वा उपब्रुवे। ता नश्चोदयत श्रिये ॥८॥**

भारती[२९]। उत्तरा निगदसिद्धा।

---

१. सम्यगिति पूज्यतरं राजमानाः। अत्रापि व्यत्ययेनैकवचनम् Sy.
२. विभ्व्यो विविधं भवित्र्यः। प्रभ्वीः प्रभ्व्यः प्रकर्षेण भवित्र्यः बह्वीर्बह्व्यः Sy.
३. लोकप्रसिद्धसङ्ख्याभिश्च भूयस्यश्च Sy.
४. द्वुरः P.D. यज्ञगृहद्वारः सन्ति ताः Sy.
५. Omitted by P. D. ०धा... मुदकानि M. ...प्राण्युपकारार्थम् Sy.
६. रक्षन्तु P. D. क्षरन्ति। यद्वा। बह्वीर्भूयसीरित्येते सङ्ख्यावचने। शिष्टानि तासां नामधेयानि Sy. ७. ०क्म P.
८. ०रुक्मा० D. शोभनदीप्ताभरणे प्रसिद्धे Sy. ९. हियोगादनिघातः Sy.
१०. मांस P. शोभनरूपे ईदृश्यावहोरात्रदेवते Sy ११ तादृश्यावुषसौ, एतद्रात्रेरप्युपलक्षणम्। उषःशब्दो दिवसस्योपलक्षकः Sy. १२. सौन्दर्येण Sy.
१३. शोभयसि वि० M. अधिकम् Sy.
१४. विशेषेण दीप्येते Sy.
१५. M. reads ततश्च ते उपासानक्ते for ते। रात्रिश्चाश्चोभे Sy.
१६. त इ० P. D. अस्मिन्दिने Sy.
१७. आगत्य तिष्ठतामागच्छतां वा Sy.
१८. प्रथमः P. प्रथमाः D. M. adds हि after प्रथमा।
१९. मुख्यनामैतत्। प्रतमौ प्रकृष्टतमौ Sy.
२०. हिः प्रसिद्धौ Sy. २१. प्रियवचनौ Sy.
२२. देवार्हौ Sy. २३. देवानामाह्वातारौ होमनिष्पादकौ वा Sy. २४. मेधाविनावेतौ Sy. २५. भतः D. २६. नोऽस्मदीयमिमम् Sy. २७. यजतां गच्छतां वा Sy. २८. VM. ignores नः
२९. हे भारति! भरत आदित्यः। तस्य सम्बन्धिनी भारती तादृशि द्युलोकदेवते हे इळे भूदेवि। हे सरस्वति, सरो वायुरुदकं वा तद्वति, अन्तरिक्षदेवते तादृशि देवि! एताः क्षित्यादिदेवताः। एतास्तिस्र आदित्यप्रभावविशेषरूपा इत्याहुः। यास्तिस्रः सर्वा वो युष्मानुपब्रुव उपेत्य स्तौमि। ता यूयं नोऽस्मान् श्रिये सम्पदे चोदयत प्रेरयत Sy.

त्वष्टा॑ रू॒पाणि॒ हि प्र॒भुः प॒शून्विश्वा॑न्त्समान॒जे । तेषां॑ नः स्फा॒तिमा य॑ज ॥९॥

त्वष्टा रूपाणि । त्वष्टा[1] । रूपाणि[2] । हि[3] । प्रभुः[4] । द्विपदश्चतुष्पदश्च[5] । पशून्[6] सर्वान्[7] अति । संयोजयति[7] । त्वष्टः[8] ! तेषां[9] पशूनाम् । वृद्धिम्[10] । अस्मभ्यम् । देहि[11] ।

उप॒ त्मन्या॑ वनस्पते॒ पाथो॑ दे॒वेभ्यः॑ सृज । अ॒ग्निर्ह॒व्यानि॑ सिष्वदत् ॥१०॥

उप त्मन्या । उपसृज[12] । वनस्पते[13] ! त्वमात्मनैव । अन्नम्[14] । देवेभ्यः[15] । अग्निः । हव्यानि[16] । स्वादूनि कृतवान्[17] ।

पु॒रो॒गा अ॒ग्निर्दे॒वानां॑ गाय॒त्रेण॒ सम॑ज्यते । स्वाहा॑कृतीषु रोचते ॥११॥

पुरोगाः । पुरो गन्ता[18] । अग्निः[19] । देवानाम् । गायत्रसाम्ना[20] । आच्छाद्यते[21] । स्वाहाकृतीषु[22] । रोचते[23] ।

---

१. यज्ञसाधनपात्राभिमानी देवः Sy.
२. योनौ सृष्टानि रेतांसि रूपाणि कर्तुम् Sy.
३. हिशब्दः श्रुत्यन्तरप्रसिद्धिद्योतनार्थः । 'यो वच्छ्रो वै रेतसः सिक्तस्य', 'त्वष्टा रूपाणि विकरोति' (TS. 1. 5. 9. 1-2.) इति श्रुतेः Sy.
४. ०भु D. स देवः Sy.
५. ०दश्चतु० D. सर्वानपि Sy.
६. अस्मदीयान् गवादिकान् Sy.
७. सम्यगनक्ति व्यक्तीकरोति Sy.
८. ०ष्टा P. D.
९. अथ प्रत्यक्षः । तेषामक्तानाम् Sy.
१०. अस्मदर्थम् Sy.
११. सर्वतः पूजय कुर्वित्यर्थः Sy. VM. ignores आ
१२. उत्पादय । यूपाभावे पशुनियोजनाभावेन हविषोऽभावात् Sy.
१३. यूपाभिमानिदेव ! Sy.
१४. पशुरूपमन्नम् Sy
१५. आन्यादिभ्यः Sy.
१६. त्वयि, एवं कृतवति सति . . . हवींषि Sy.
१७. स्वदयतु स्वादूकरोतु Sy.
१८. असुरयुद्धं प्रति पुरोगामी । यद्वा देवानां मध्ये यज्ञम्प्रति, अग्निरेव पुरोगामी । अत एवाग्रणीत्वादेवाग्निशब्दो निष्पन्नः Sy. 'अग्निः कस्मात् । अग्रणीर्भवति N. 7. 14.
१९. तादृशोऽयम् Sy.
२०. एतदुपलक्षितेन मन्त्रेण Sy.
२१. ०ज्यां च्छा० P. सम्यग् लक्ष्यते Sy.
२२. ० ति० D. स्वाहाकारेषु सत्सु हविष्षु दीयमानेषु Sy.
२३. अत्यर्थं दीप्यते । एताः प्रयाजदेवता यज्ञावयवाभिमानिन्यः । तद्द्वारा यज्ञ एव स्तूयत इति केषाञ्चिन्मतम् । अग्नेरेव नामान्तरमित्यन्ये Sy.
Ms. D. puts the figure ॥१८८॥ here to indicate the end of one hundred and eightyeighth hymn. No such number is given in P. and M.

I.189.

अग्ने॒ नयं॑ सु॒पथा॑ रा॒ये अ॒स्मान्विश्वा॑नि देव व॒युना॑नि वि॒द्वान् ।
यु॒यो॒ध्य१॒॑स्मज्जु॑हुरा॒णमेनो॒ भूयि॑ष्ठां ते॒ नम॑उक्तिं विधेम ॥१॥

अग्ने नय। अग्ने[1]! नय[2]। शोभनेन[3] मार्गेण। धनाय[4]। अस्मान्[5]। विश्वानि[6]। देव[7]! प्रज्ञानानि[8]। जानन्[9]। पृथक् कुरु[10]। अस्मत्तः[11]। कुटिलत्वमाचत्[12]। एनः[13]। भूयिष्ठम्[14]। नमोवचनम्[15]।

---

१. अङ्गनादिगुणविशिष्ट ! Sy. हे भगवन्नग्ने ! U. २. अग्ने। नय is omitted by P. प्रापय Mah., U.

३. शोभमानेन मार्गेण Mah., U. शास्त्राविरुद्धेन। 'पराविशछन्दसि' इत्युत्तरपदाद्युदात्तत्वं 'आद्युदात्तं द्व्यच्छन्दसि' इति तु न भवति। अन्तोदात्तत्वात्पथिञ्छब्दस्य। कृत्वादिर्वा द्रष्टव्यः। 'न पूजनात्' इति समासान्तप्रतिषेधः। ईदृशेन मार्गेणास्मान्नय BB.

४. यज्ञफलाय Mah., U. गन्तव्याय स्वर्गादिधनाय। द्वितीयार्थे वा चतुर्थी। प्रापणीयं रयिं प्रति Sy. हविर्लक्षणाय। तदीयहविस्सम्पादनयोग्या यथा वयं भवामस्तथा कुर्वित्यर्थः BB.

५. अनुष्ठातॄन् Mah. यतो विद्वानतस्त्वमस्मान् Sy.

६. सर्वाणि Mah., Sy., U.

७. द्योतमान ! Sy. दानादिगुणयुक्त U.

८. मार्गान् ज्ञानानि वा Mah. प्रज्ञानानि। अनेनैतदनुष्ठितमिदं प्रापणीयम् Sy. प्रकृष्टज्ञानानि U. ज्ञानान्यभिप्रायान्। 'अर्तिपृवपियजितनिधनितपिभ्यो नित्' इत्यजेरुनन्प्रत्ययः। 'अजेर्व्यघञपोः' इति वीभावश्च BB.

९. जानानस्त्वम् Mah. यदेतज्ज्ञानमस्ति तद्विद्वानित्यर्थः Sy. नहि ते विज्ञानशक्तीनां प्रमाणमस्तीत्यभिप्रायः U.

१०. पृथक् कुर्वन् P. पृथु कुर्वन् D. 'यु मिश्रणामिश्रणयोः' Mah. 'यु पृथग्भावे' U. अपनय। यौतिः पृथग्भावे। लोटि 'बहुलं छन्दसि' इति शपः श्लुः। 'वा छन्दसि' इत्यपित्त्वाभावेनाङित्त्वात् 'अङितश्च' इति हिभावः BB.

११. अनुष्ठातृभ्यः Mah. मत्तः U.

१२. हूर्च्छितुं कुटिलीकर्तुमिच्छतीति जुहुराणम्। अभिलषितक्रियाप्रतिबन्धकमित्यर्थः Mah. कुटिलकारि Sy. हूर्च्छितुमिच्छति U. कुटिलस्वभावम्। 'हुर्च्छा कौटिल्ये' इत्यस्मात् 'हुर्च्छेस्सनो लुक् छलोपश्च' इत्यानच्प्रत्ययः। हूर्च्छितुमिच्छति जुहुराणम्। यद्वा 'हु प्रसह्यकरणे' जुहोत्यादिकः, तस्मात्ताच्छीलिके चानशि शपः श्लुः। 'बहुलं छन्दसि' इत्युत्वम् BB. ०माचरत् is suggested for ०माचत्

१३. आचतेनः M. पापम् Mah. पापं फलप्रतिबन्धकम् Sy. अभिलषितक्रियाप्रतिबन्धि यत्पापम् U. पापं दर्शपूर्णमासातिपत्तिलक्षणम् BB.

१४. बहुलतमाम् Mah. अतिप्रवृद्धाम् Sy. बहुतमाम् U. १५. हविषां वचनं, याज्यापुरोनुवाक्यालक्षणाम्...नम इत्यन्नाम। यद्वा। नमस्कारविषयामुक्तिं सम्पादयाम Mah. नमस्कारोक्तिं स्तुतिम् Sy. 'वच परिभाषणे' अस्य स्त्रियां क्तिन्। उक्तिर्भणनम्। नमसा हविर्लक्षणेन। पुरोनुवाक्यायाज्यावचनं नमउक्तिस्तां नमउक्तिम् U. नमस्कारोक्तिम्। नमस आद्युदात्तत्वम् BB.

तव[1]। कुर्मः[2]।

**अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा।**
**पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥२॥**

अग्ने त्वम्। अग्ने ! त्वम्[3]। पारय[4]। स्तुत्यः[5]। अस्मान्[6]। कल्याणैः[7]। दुर्गाणि[8]। अतिपारय[9]। सर्वाणि[10]। त्वमेवास्माकम्[11]। विस्तीर्णम्[12]। पुरम्[13]। भव[14]। विस्तीर्णा[15]। च[16]। पृथिवी भव[17] च[18]। पुत्राय[19]

---

१. तुभ्यम् BB.

२. करवाम Mah. परिचरेम, कुर्मः Sy. दधातिः करोत्यर्थः। करवाम U. क्रियास्म। 'विध विधाने' BB.
This stanza=YV. 5.36.; TS. 1.1.14.3.

३. अग्ने। त्वम् is omitted by P.

४. कर्म समापय्यातिपारय, अतिक्रामय Sy. 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् BB.

५. स्तुत्यः is suggested for स्तुतयः। नव्यो नवतरः स्तुत्यो वा त्वम् Sy. नव एव नव्यः 'यस्वपलोककविक्षेमवचोनिष्केवलोक्थजनपूर्वनवसूरमर्त्यविष्ठेभ्यश्छन्दसि स्वार्थे यद्वक्तव्यः' इति स्वार्थे यत्प्रत्ययः। 'यतो नाव' इत्याद्युदात्तत्वम्। नव्यो अस्मानिति 'प्रकृत्यान्तःपादमव्यपरे' इति प्रकृतिभावः BB.

६. यागानुष्ठातृन् Sy.

७. केन साधनेन। स्वस्तिभिः, अस्तिरभिपूजितः। सुशब्दः शोभनवचनः। अत्यन्तं पूजितैर्यज्ञादिसाधनैः Sy. शोभनैर्मार्गैः, दुर्गातिक्रमणोपायभूतैः। 'अस गतौ' 'क्तिच्क्तौ च सञ्ज्ञायाम्' इति क्तिच्। 'तितुत्र०' इतीट्प्रतिषेधः। कृदुत्तरपदप्रकृतिस्वरत्वम् BB.

८. दुर्गमनानि पापानि। अनतिक्रमणीयानि दुरिताख्यानि Sy. दुःखेन गच्छन्ति येषु तानि दुर्गाणि, विघ्नपराधलक्षणानि पापानि। 'सुदुरोरधिकरणे' इति गमेर्डः, कृदुत्तरपदप्रकृतिस्वरत्वम् BB.

९. तान्यतिक्रम्यास्मान्पारय।...'पार तीर कर्मसमाप्तौ'। अविकलकर्मणः कुरु BB.

१०. विश्वानि। 'शेश्छन्दसि बहुलम्' इति लोपः BB.

११. अस्माकं तत्र वसताम् Sy.

१२. पृथुतरा Sy. विस्तीर्णा महावकाशा, अविकलकर्मफलोपभोगयोग्या भवत्विति शेषः। पृथुशब्दः कुप्रत्ययान्तत्वादन्तोदात्तः। 'वोतो गुणवचनात्' इति ङीष्, 'उदात्तयणो हल्पूर्वात्' इति नद्या उदात्तत्वम् BB.

१३. पुरी अपि।...पूरिति जात्येकवचनम् Sy. नगरी निवासस्थानम् BB.

१४. भवत्विति शेषः।...पुराण्यपि भवन्त्वित्यर्थः Sy.

१५. बहुतरा भवतु Sy. बहुला भवतु, बहुभिर्धनधान्यपश्वादिभिस्तद्वती भवतु। सिध्मादिलक्षणो लच्। यद्वा बहूनामर्थानां लात्री, आदात्री, उत्पादयित्री भवतु, लातेः 'आतोऽनुपसर्गे कः' इति कः BB.

१६. चशब्दो वक्ष्यमाणेन सह समुच्चयार्थः Sy.

१७. पृथ्वी, अपि Sy. मेदिनी। स एव स्वरः BB.

१८. च is unnecessary.

१९. तोकायापत्याय।...तोकशब्दोऽपत्यसामान्यवचनः Sy.
अस्मदीयायापत्याय BB.

च। तनूजाय[1] च। शं[2] च। योश्च[3]।

**अ॒ग्ने॒ त्वम॒स्मद्यु॑यो॒ध्यमी॑वा॒ अन॑ग्नित्रा अ॒भ्यम॑न्त कृ॒ष्टीः ।**
**पुन॑र॒स्मभ्यं॑ सुवि॒ताय॑ दे॒व॒ क्षां विश्वे॑भिर॒मृते॑भिर्यजत्र ॥३॥**

अग्ने त्वमस्मत्[4]। अग्ने। त्वम्। अस्मत्तः। रोगान्। पृथक्[5] कुरु रक्षसो वा। येऽग्निना[6][7] मनुष्या[8] न रक्ष्यन्ते[9]। ते रोगैः अभिभूता[10] भवन्ति। पुनरपि[11] मुमूर्षुभ्यः[12]। अस्मभ्यम्[13]। अभ्युदयाय[14]। देव[15]! सर्वैः। देवैः[16] सह। इमां पृथिवीम्[17]। कुरु[18]। यष्टव्य[19]!

**पा॒हि नो॑ अग्ने पा॒युभि॒रज॑स्रैरु॒त प्रि॒ये सद॑न॒ आ शु॑शु॒क्वान् ।**
**मा ते॑ भ॒यं ज॑रि॒तारं॑ यविष्ठ नू॒नं वि॑द॒न्माप॒रं स॑हस्वः ॥४॥**

पाहि नः। रक्ष[20]। अस्मान्। अग्ने! तेजोभिः[21]। अजस्रैः[22]। अपि च। प्रियायाम्[23]। उत्तर[24]-

---

१. तनयाय पुत्राय ।...तनयशब्दः पुत्रवचनः Sy. तस्यापत्यायास्मत्पौत्राय BB

२. शं सुखम् Sy. शमयिता रोगाणां भव। शमेर्ण्यन्तात्क्विप्। मितां ह्रस्वः, 'णेरनिटि' इति णिलोपः BB.

३. योश्चं D. योः, मिश्रयिता भव। यद्वा रोगाणां शमनं भयानां यावनं च भव कुर्वित्यर्थः Sy. यापयिता पृथक्कर्ताऽगामिनां भयानामस्मदीयजनसकाशादपनेता च भव। यौतेः 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। 'ओतो णित्' इति बहुलवचनान्न भवति। 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति वा 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति वा चतुर्थ्यौ। तोकं तनयं च रक्षितुं शं योश्च भव। 'द्व्यचोऽतस्तिङः' इति संहितायामस्य दीर्घत्वम् BB.
This stanza=TS.1.1.14.4.

४. ०स्मन् D.

५. व्यावर्तय Sy.

६. वाः Sy.

७. येग्निना D.

८. प्रजाः Sy.

९. क्षन्ते P. D. प्रबाधिताः Sy.

१०. अभिभिमतेऽस्मान्। यच्छब्दाध्याहारादनिघातः। ता युयोधि। यद्वा ता अनग्नित्राः पापिन्यः कृष्टयः प्रजा अभ्यमन्त। त्वयाऽभ्यमितुमभितो रोगैः प्रापयितुमर्हन्ति। वयन्तु न तादृशा अतोऽस्मत्तो वियोजयेत्यर्थः Sy.

११. न केवलं वियोगमात्रमपि तु पुनः पुनरिदं कर्तव्यम् Sy.

१२. मुमूर्षुभ्यां P.

१३. अस्मदर्थम् Sy.

१४. शोभनफलाय Sy.

१५. द्योतमानाग्ने! Sy.

१६. अमरणधर्मभिरन्यैर्यष्टव्यैर्देवैः सह Sy.

१७. देवयजनलक्षणाम् Sy.

१८. आगच्छेति शेषः Sy.

१९. ०व्यः P. D. ०व्य M.

२०. पालय Sy.

२१. पालनप्रकारैः Sy.

२२. अनवरतैरविच्छिन्नैः Sy.

२३. प्रियाम् P.D. M. तव प्रियभूते Sy.

२४. यागगृहे Sy.

वेद्याम्। दीप्तः[1]। तव। स्तोतारम्। युक्तम। मा। भयम्। गच्छतु[2]। सद्य च। श्वश्च[3]। बलवन्[4]![5]

**मा नो॑ अग्नेऽव॑ सृजो अ॒घाया॑वि॒ष्यवे॑ रि॒पवे॑ दु॒च्छुना॑यै।**
**मा द॒त्वते॒ दश॑ते॒ माद॑ते नो॒ मा रीष॑ते सहसाव॒न्परा॑ दाः ॥५॥**

मा नो अग्ने। मा। अस्मान्। अग्ने! प्रयच्छ[6]। आहन्त्रे[7]। योऽध्वन्यागतानपि[8] न मुञ्चति[9] सोऽविष्युः, विलेपनाद् रिपुः, दुर्बुद्धिर्दुच्छुना, तस्मै। दन्तयुक्ताय[10]। दशनं[11] कुर्वते। मा[12]। परा दाः[13]। मा च। भक्षणं[14] कुर्वते। हिंसित्रे[15] च। बलवन्[16]![17]

**वि घ॒ त्वावाँ॑ ऋतजात यंसद्गृणा॒नो अ॑ग्ने त॒न्वे॒३॒॑ वरू॑थम्।**
**विश्वा॑द्रिरि॒क्षोरु॒त वा॑ निनि॒त्सोर॑भि॒ह्रुता॒मसि॒ हि दे॑व वि॒ष्पट् ॥६॥**

वि घ त्वावान्[18]।

---

१. आ सर्वतः शुशुक्वान् दीप्यमानो भवेति शेषः Sy.

२. मा लभतां, माऽऽप्नोतु Sy.

३. श्वश्च D. अपरस्मिन्काले।...अपरं भवन्यं वा मा विदत् Sy.

४. बलवान् P.M.

५. VM. ignores आ। मा

६. प्रेच्छय M. मा त्याक्षीः। तदधीनं मा कुर्वित्यर्थः Sy.

७. हिंसकाय Sy.

८. ०ध्वान्यागतानपि P.

९. सा विष्टपुविलेपनाद्रिपुर्दुर्बुद्धिर्दुश्चना तस्मा D. सो विष्टपुविलेपन .... बुद्धिर्दुच्छुना तस्मात् M. अविष्यवे, अविष्यतिरत्तिकर्मा। अत्तेच्छवे। दुच्छुनायै, शुनं सुखम्। दुष्टसुखकारिणे, दुःखकारिण इत्यर्थः। तस्मै रिपवे Sy.

१०. दत्त P. D. तथा नोऽस्मान्...दन्तवते Sy.

११. खादते सर्पादये माऽवसृजः Sy.

१२. चि P.

१३. पराभूतं मा देहि सर्वथा न देहीत्यर्थः Sy.

१४. क्षणं P.D. अदन्तकाय शृङ्गादिभिर्घातिने Sy.

१५. रिषते हिंसकाय तस्कर राक्षसादये Sy.

१६. ०वान् P. सहस्विन् Sy.

१७. VM. ignores नः

१८. VM. does not comment on this stanza, although it has not been explained before. हे ऋतजात यज्ञार्थमुत्पन्नाग्ने! वरूथं वरणीयं त्वां, तन्वे शरीरपोषाय गृणानः स्तुवन्। त्वावान्, त्वया देवतया तद्वान् जनो वि घ यंसत् विमुञ्चति खल्वात्मानम्। कस्मात्सकाशात्? रिरिक्षोर्हिंसितुमिच्छोश्चोरादेः सकाशात्। उत वाऽथवा निनित्सोर्निन्दितुमिच्छतः। हे देव! अभिह्रुतामाभिमुख्येन कुटिलं कुर्वतां द्विषां, विष्पट् विशेषेण बाधकोऽसि हि। अतस्त्वदनुग्रहादयं जनो वि यंसत् Sy.

त्वं ताँ अग्न उभयान्वि विद्वान्वेषि प्रपित्वे मनुषो यजत्र ।
अभिपित्वे मनवे शास्यो भूर्ममृजेन्य उशिग्भिर्नाक्रः ॥७॥

त्वं तान्[1]। मायाविनोऽमायाविनश्च[2]। जानन्। विविच्य। अभिगच्छसि[3]। प्राप्तौ[4]। यष्टव्ये[5]! यजमानस्य[6]। तथा त्वम्, अभिप्राप्तौ[7]। यजमानाय[8]। हविर्वहनायानुशासनीयः[9][10]। भवसि[11]। परिचरणीयः[12]। ऋत्विग्भिरसुरैश्च[13][14]। न[15]। आक्रान्तः[16]।

अवोचाम निवचनान्यस्मिन्मानस्य सूनुः सहसाने अग्नौ ।
वयं सहस्रमृषिभिः सनेम विद्यामेषं वृजनं जीरदानुम् ॥८॥

अवोचाम। अग्नेराभिमुख्यानि[17] वक्तव्यानि[18] स्तोत्रवचनानि। वयमवोचाम[19]। अग्नौ[20]। कुम्भसूनुः[21]। शत्रुषु[22] सहस्कुर्वति[23]। अग्नौ स्तोत्रमुवाच। वयम्, दृश्यमानैर्मन्त्रैः[24][25]। धनसहस्रम्[26]। लभेमहि[27], अग्नेर्वा[28] तेजोभिः[29]।

---

१. तान् यष्टॄन् Sy.
२. P. and D. read मायाविनश्च for मायाविनोऽमायाविनश्च। अयष्टॄंश्च Sy.
३. कामयसे यष्टॄन् Sy.
४. सन्निहित एव काले Sy.
५. ० व्यं M. ० व्या D.
६. मनुष्यान् Sy.
७. अभिप्राप्तकालेऽभिगमनवति यज्ञे वा Sy.
८. मनवे, षष्ठ्यर्थे चतुर्थी। मनुष्यस्य यजमानस्य Sy.
९. ० नाय D.M. हुहविर्वहनाय P.
१०. शिक्षणीयः Sy.
११. भव। इदं कुरु, इदं कुर्विति विधेयो भव Sy.
१२. ०णीयः D.M. शोधयिता यजमानः Sy.
१३. कामयमानैर्ऋत्विग्भिः Sy.
१४. इव Sy.
१५. आक्रमिता त्वम् Sy.
१६. VM. ignores त्वम्। तान्। अग्ने
१७. ०रभि० P.
१८. नियमपूर्वकाणि वचांसि स्तोत्ररूपाणि Sy.
१९. ब्रूमः Sy.
२०. अनाग्नौ P.
२१. कुंभ० D. मीयत इति मानो मन्त्रः। तस्य सूनुरग्निः मन्त्रेणोत्पाद्यमानत्वात्। सप्तम्यर्थे प्रथमा। मानस्य सूनौ Sy.
२२. शत्रु० D.
२३. शत्रूणामभिभवतरि Sy.
२४. एभिः Sy.
२५. अतीन्द्रियार्थप्रकाशकैर्मन्त्रैः साधनैः Sy.
२६. अपरिमितं धनम् Sy.
२७. सम्भजेमहि Sy.
२८. ०महाद्धनमित्येवमध्वर्यूणां हविष उत्पत्तिमनुजानाति होतश्च श्लोकं यच्छति स्नेर्वा M.
२९. VM. ignores विद्याम etc. Ms. D. puts the figure ॥१८९॥ here to indicate the end of one hundred and eightyninth hymn. No such number is given in P. and M.

I.190.

अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः ।
गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्ताः ॥१॥

अनर्वाणम् । अप्रत्यृतम्[1] । वृषभम्[2] । मोदनजिह्वम्[3] । बृहस्पतिम्[4] । वर्धय[5] । स्तुत्यम्[6] । मन्त्रैः[7] ।
सुरुचः[8] । यस्य बृहस्पतेः[9] । देवाः[10] । गाथानां[11] प्रेरयितुः कारोः[12] । मनुष्याश्च[13] । आशृण्वन्ति[14] । स्तूयमानस्य[15],

---

१. अगन्तारम् । स्तोतुरधीनमित्यर्थः Sy. अगतमन्यं प्रत्याश्रिततयाऽपराश्रयमित्यर्थः SKN. स्वेन महिम्ना युक्तम् । अप्रतिगतं कञ्चिदन्यं प्रत्यधीनत्वेन Dur.

२. ०भ M. अपां फलानां वर्षितारम् Sy. वर्षितारम् SKN., Dur.

३. ०ह्व M. मादकवाचम् Sy. मन्द्रयतिरर्चतिकर्मा । जिह्वेति वाङ्नाम । मन्द्रा जिह्वा वागस्य स मन्द्रजिह्वस्तं स्तुत्यवाचमित्यर्थः । मोदनवाचं वा । सर्वे हि बृहस्पतेः स्तनयित्नुलक्षणां वाचमुपश्रुत्य मोदयन्ते SKN. हर्षकरो हि तस्य जनानां स्तनयित्नुघोषः । 'जिह्वा घोषः' (Ngh. 1.11.) इति हि वाङ्नामसु पठितम् Dur.

४. मन्त्रस्य पालयितारमेतन्नामकं देवम् Sy. अत एवंगुणं बृहस्पतिम् SKN.

५. अवर्ध० P. D. प्रवृद्धं कुरु Sy. स्तुहि, अन्तरात्मन् SKN.

६. स्तुभ्यं P. D. शुभ्यं M. नवतरं स्तुत्यं वा तम् Sy. कीदृशं बृहस्पतिम् ? ... नवनीयं स्तुत्यम् SKN.

७. अर्चनसाधनैर्मन्त्रैः Sy. स्तुतिरूपैः SKN.

८. सुरोच P. शोभनदीप्तेः Sy. विद्युद्रूपतया सुदीप्तः SKN. सुदीप्तिमन्तः Dur.

९. ०ते P. कर्मणि षष्ठ्यः । रोचमानं स्तूयमानम् Sy.

१०. व्यवहर्तारः Sy.

११. गाथाना P. D. गाझानां M. गाथेति वाङ्नाम । स्तुतिवचसो नेतारः Sy. अस्य बृहस्पतेः किमुच्यते । ... गाथेति वाङ्नाम सा चार्थसामर्थ्यात् स्तनयित्नुलक्षणा, तां वर्षयति प्रेरयति गाथान्यः स्तनित इत्यर्थः ... अथवा गाथाः स्तुतयस्तासां नेता बृहस्पतिर्गाथानीः कुत एतत् ? पुरोहितत्वात् । 'बृहस्पतिर्हि (०र्हि वै AB.) देवानां पुरोहित (AB. does not read आसीत्) आसीत्' (AB. 8.26.) इति श्रुतेः । तस्य गाथान्यः SKN.
स्तुतिप्रापणार्हाः Dur.

१२. कारो P. D. करो M.

१३. मनुष्या होत्रादयः । यद्वा नवमानस्य स्तुवानस्य यजमानस्य सम्बन्धिनस्ते ... पुरा तं बृहस्पतिं वर्धय Sy. नच केवलं मनुष्या देवा मनुष्याश्च SKN.

१४. आश्रावयन्ति Sy. आभिमुख्येनाकर्णयन्ति SKN. आभिमुख्येन स्थित्वा शृण्वन्त्यादरेण Dur.

१५. कर्मणि कर्तृप्रत्ययः Sy. नवतेः शब्दकर्मणश्छान्दसमेतद्रूपम् । स्तनयित्नुलक्षणं शब्दं कुर्वतः । ... नवमानस्य स्तुवत इत्येवमितिहासदर्शनेन व्याख्येयम् SKN. नवो हि मानस्तस्य, अहन्यहन्यनया स्तुत्या स्तुत्यस्य भवति तेनासौ नवमानस्तस्य । अथवा नवमानस्य प्रशास्त इत्यर्थः Dur.

अन्येषु तु[1] देवेषु स्तूयमानेषु न देवाः शृण्वन्ति[2]।

तमृत्विया उप वाचः सचन्ते सर्गो न यो देवयतामसर्जि ।
बृहस्पतिः स ह्यञ्जो वरांसि विभ्वाभवत्समृते मातरिश्वा ॥२॥

तमृत्विया[3]। बृहस्पतिरुद्गातॄणाम् ।

उपस्तुतिं नमस उद्यतिं च श्लोकं यंसत्सवितेव प्र बाहू ।
अस्य क्रत्वाहन्यो३ यो अस्ति मृगो न भीमो अरक्षसस्तुविष्मान् ॥३॥

उपस्तुतिम्[4]। प्रयच्छति स्तुध्वमित्येनमध्वर्यूणाम्[5]। हविषः[6]। उद्यतिमनुजानाति[7]। होतुश्च[8]।

---

१. Omitted by P.

२. अथवाऽयमन्यो मन्त्रार्थः स्यादैतिहासिकपक्षेण—मन्द्रजिह्वः, हर्षकरी हि जिह्वा तस्य स्तुतिः। गाथानीः स एव पौरोहित्येन गाथाः स्तुतीर्नयति देवान्प्रति। स एव च सुरोचनः। तस्यैव च नवमानस्य स्तुवतो देवा आशृण्वन्ति मत्तस्त्वDur. अनर्वमप्रत्युतमन्यस्मिन्। वृषभं मन्द्रजिह्वं मन्दनजिह्वं मोदनजिह्वमिति वा। बृहस्पतिं वर्धय नव्यमर्कैरर्चनीयैः स्तोमैः N. 6.23; SKN. II. 474.

३. VM. does not comment on this stanza although it has not been explained before. तं बृहस्पतिमृत्विया वर्षर्तुसम्बन्धिन्यो वाचो माध्यमिका उपसचन्ते समीपे सेवन्ते। यः सर्गो न उदकस्य स्रष्टापि। नशब्दोऽप्यर्थे। देवयतां देवानिच्छतां यजमानानामसर्जि फलम्। यद्वा देवं तमिच्छतां मनुष्याणामसर्जि सृष्टवान्वृष्ट्युदकम्। यद्वा, ऋत्वियाः प्राप्तकालीना वाचो होत्रादिप्रेरिता वाच उपसचन्ते तं यः सर्गो न उदकसृष्टिरिव। सः, स एव बृहस्पतिः। अञ्जो हि व्यञ्जकः खलु। तस्मिन्वर्षति सर्वे व्यक्ता भवन्ति। अत एव विभ्वा विभुर्व्याप्तो मातरिश्वा वृष्टिनिर्मातर्यन्तरिक्षे चेष्टमानो वायुसदृशो वा। वरांसि वरणीयानि वृष्ट्यादिफलानि सम्पादयत्। ऋते, उदके निमित्तभूते सति समभवत् सम्भूतः। अथवा। अञ्जो यज्ञियानां पदार्थानां व्यञ्जको मातरिश्वा फलस्य निर्मातरि यज्ञे श्वसिता वर्तमानः स बृहस्पतिरृते यज्ञे निमित्तभूते सति वरांसि वरणीयानि हवींष्यिच्छन् विभ्वा विभुः समभवत् Sy.

४. प्रयच्छ is suggested for प्रयच्छति

५. स्तुध्वमि० P. स्तुध्वमि० D.

६. ०षा P. अयं बृहस्पतिरुपस्तुतिं यजमानेनोपेत्य क्रियमाणां स्तुतिं, नमसो हविर्लक्षणस्यान्नस्य Sy.

७. उद्यतम् P. उद्धारं च Sy.

८. होतश्च P.

श्लोकम्[१]। यच्छति[२]। सवितेव[३] चोद्यन्[४] प्रसवाय। बाहू[५]। प्रेरयति। योऽस्मिंल्लोके[६,७]। शत्रूणामहन्तव्यः[८]। भवति सः। अस्य[९]। प्रज्ञानेन[१०] तथा भवति, सोऽयम्[११]। मृगः। इव[१२]। भयङ्करः[१३]। राक्षसवर्जितः। बुद्धिमान्[१४]।

**अस्य श्लोको॑ दि॒वीय॑ते पृथि॒व्यामत्यो॒ न यं॑सद्यज्ञ॒भृद्विचे॑ताः ।**
**मृ॒गाणां॒ न हे॒तयो॒ यन्ति॑ चे॒मा बृह॒स्पते॒रहिं॑मायाँ अ॒भि द्यून् ॥४॥**

अस्य श्लोकः। अस्य[१५]। स्तोत्रम्[१६]। देवेषु[१७]। वर्तते[१८]। पृथिव्यां च। सोऽयम्, अश्वः[१९]। इव। भ्रातृव्यं प्रयच्छति[२०]। आवाया? भर्ता[२१] स्तोतारं बिभर्तीति वा। विविधप्रज्ञानः[२२]। मृगाणां हननाय। व्याधानाम्[२३], इव। आयुधानि[२४]। यस्येमा[२५] वाचः[२६]। बृहस्पतेः। अहन्तव्यमायान्[२७]। द्योतमानान्[२८] राक्षसान्। अभियन्ति[२९,३०]।

---

१. अन्यो यो मन्त्रविशेषोऽस्ति तं च Sy.
२. प्रकर्षेण यतते स्वीकर्तुम्। यजमानो वा तत्सर्वं प्रयच्छत्यस्मै Sy.
३. तत्र दृष्टान्तः। सवितेव सूर्य इव, स यथा स्तोत्रादिकं स्वीकरोति तद्वत्। यजमानप्रदानपक्षे सविता सर्वस्य प्रसविता सूर्य इव। स यथा बाहुभ्यः प्रकाशादि प्रयच्छति तद्वत् Sy.
४. ०द्यत् D. M.
५. वा बाहू P. बाहुभ्यां यजमानोऽपीत्यर्थः Sy.
६. या P. यः सूर्यः Sy.
७. अस्ति D. M.
८. अह्नि साधुः Sy.
९. बृहस्पतेः Sy.
१०. कर्मणा सामर्थ्येन Sy.
११. मृग इव . . . सिंहादिरिव Sy.
१२. भयजनकः . . . भीमो भयहेतुः Sy.
१३. स्वविरोधिरक्षोरहितस्य Sy.
१४. बलवान् परिभ्रमतीति शेषः। यस्य माहात्म्येन मन्त्राभिमानिनो बृहस्पतेः सामर्थ्यान्मन्देहाद्यसुराभिजित्वाऽतितेजस्वी भवति। तादृशो महानुभावो यजमानदत्तं हविरादिकं स्वीकरोतीत्यर्थः Sy.
१५. बृहस्पतेः Sy.
१६. स्तुत्यात्मिका कीर्तिर्गर्जितवाग्वा Sy.
१७. द्योतमाने द्युलोके Sy.
१८. गच्छति व्याप्नोति Sy.
१९. सोमयश्च P. यो बृहस्पतिरत्यो न, अतनशील आदित्य इव Sy.
२०. नियच्छति फलम् Sy.
२१. पूजितं हविरादिकं दधानः Sy.
२२. चिवसः प्रज्ञानः P. वाविध० M. विविधं चेतयिता प्राणिनां विशिष्टप्रज्ञायुक्तो वा Sy.
२३. मृगाणां हन्तुमन्विष्यताम् Sy.
२४. आयुधानीव Sy.
२५. P. D. read येमाः for यस्य। इमाः।
२६. हिंसाण्यायुधानि यन्ति गच्छन्ति च Sy.
२७. ० मानान् P. आगत्य हन्त्र्योऽन्तरिक्षचारिण्यो वा माया येषां वृत्रादीनां तानसुरान् Sy.
२८. दिवसान् Sy.
२९. तान्यायुधानि, अभिलक्ष्यन्ति च। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः Sy.
३०. VM. ignores च

ये त्वा॑ दे॒वोस्रि॒कं मन्य॑मानाः पा॒पा भ॒द्रमु॑प॒जीव॑न्ति प॒ज्राः ।
न दू॒ढ्ये॒॑ अनु॑ ददासि वा॒मं बृह॑स्पते॒ चय॑स॒ इत्पिया॑रुम् ॥५॥

ये त्वा । ये । त्वा । देव ! अजवालमिव । मन्यमानाः । साधुम् । पापाः । जनमुपजीवन्ति । बलिनः । न । दुर्बुद्धिभ्यस्तेभ्यः । धनं तत् । अनुक्रमेण । ददासि । किन्तु तं हिंसकम् । चयसे । एव,

---

१. यजमानाः Dur.
२. त्वां M. त्वाम् Sy., Dur.
३. Omitted by P. बृहस्पते ! Sy. दानादिगुणयुक्त ! Dur.
४. अजपाल० D. अजपाल० is suggested for अजवाल० उस्रियेति गोनाम । कुत्सितामल्पक्षीरोत्पादिनीं गां जीर्णमनड्वाहं वा Sy. उस्राविणं भोगानाम् । ...अथवा ... उस्रियाशब्दो गोनाम । छान्दसोऽयं यकारस्य ककारादेशः । गौणश्चायमत्र गौर्वाहीक इति यथा । उस्रिकं गां गोसदृशं मूर्ख मन्यमाना इत्यर्थः SKN.
५. ऋजुरयं वराको न मुर्धव भोगान्वदातीत्येवं मन्यमाना इत्यर्थः SKN. दातैव केवलं भोगानामयमार्जवेन, न प्रत्युपकारार्थीत्येवं मन्यमानाः Dur.
६. कल्याणम् Sy. भन्दनीयं स्तुत्यम् Dur.
७. वाचा P. पापबुद्धयोऽल्पाः Sy. अप्रत्युपचिकीर्षवः Dur. ८. धनम् P. D.
९. उपेत्य प्राणन्ति, अल्पं याचन्त इत्यर्थः Sy. उपजीवन्त्येव केवलं न यजन्ते न स्तुतिं वदन्ति च SKN. उपजीवन्त्येव केवलं न क्रियया प्रत्युपकारं कुर्वन्ति Dur.
१०. हविर्लक्षणान्नवन्तः पापेन जीर्णा वा नराः Sy. प्रार्जितधना ईश्वराः सन्त इत्यर्थः SKN. प्रार्जितधनाः सन्तो न दरिद्राः Dur. ११. दुर्धिये । वचनव्यत्ययः । दुर्बुद्धिभ्यः Sy. व्यत्ययेनात्रैकवचनम् । पापबुद्धिभ्यः SKN. दुर्धीभ्यः पापबुद्धिभ्यः स्वार्थप्रधानेभ्यः Dur.
१२. ०द्भ्यः P. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तेभ्यः SKN. तेभ्य एवंलक्षणेभ्यः Dur. १३. वामं वननीयं धनम् Sy. प्रशस्यं धनम् SKN., Dur.
१४. अनुकूलम् Sy. आनुपूर्व्येण SKN.
१५. न वितरसि Sy. ददासि त्वम् SKN.
१६. कियन्तु P. त्रि (कि)न्तु M. किं तर्हि SKN. किं तर्हि यस्तादृशो जनः Dur.
१७. सोमपानशीलं सोमेन यष्टारं महाफललिप्सुम् Sy. पीयतिर्हिंसतिकर्मा । अत्रापि व्यत्ययेनैकवचनम् । पियारुं देवानां हिंसकान् हिंस्यान्वा । पीयतिर्हिंसार्थः 'पीय॑ति त्वो॒ अनु॑ त्वो गृणाति' (RV. I.147.2.) इति यथा SKN. देवहिंसिता स्वभोगप्रधानो न यष्टा देवानां तम् Dur.
१८. चसे P. गच्छस्येवानुगृहीतुम् । 'चय गतौ' इत्यस्यैवं रूपम् । यद्वा । हे बृहस्पते पियारुं हिंसकम् । पीयतेर्हिंसाकर्मण इदं रूपम् । तं प्राणिहिंसकं चयस इत् । हंस्येव Sy. घातयसि त्वं तान् SKN. नाशयसि । य एव श्रद्दधानो यष्टा, तस्मै देवान्यजतेऽनुददासि वामं, यस्मात्त्वमेवं करोषि, तस्मात्र ते पापबुद्धयस्त्वां सम्यक् पश्यन्तीत्यभिप्रायः । यो हि दुर्बुद्धिरेवंपियारुस्तस्य किमन्यच्चयातनादृते स्यात् । चास्य एवासौ । तस्मात् 'चयसे' इत्येष शब्दः 'चातयतिर्नाशने' इत्येवमवस्थापिते नाशनार्थो भवतीत्युपपद्यते । ... लोकेऽपि च प्रसिद्धं देशादुच्चातित इति Dur.
१९. इदिति पूरणः SKN.

चयतिर्वधकर्मा[1]।[2]

**सुप्रैतुः सूयवसो न पन्थां दुर्नियन्तुः परिप्रीतो न मित्रः ।**
**अनर्वाणो अभि ये चक्षते नोऽपीवृता अपोर्णुवन्तो अस्थुः ॥६॥**

सुप्रैतुः[3]। सुष्ठु प्रकर्षेण गन्तव्यः[4]। शोभनयवसः[5]। इव। मार्गः[6]। दुर्नियमश्च[7] शत्रूणाम्। त्यक्तप्रीतिः[8]। इव[9]। मित्रः[10]। बृहस्पते! ये[11]। अस्मान्। अभिपश्यन्ति[12] ते नश्वा[13] ? तिष्ठन्तु, अवरुद्धाः[14]। तथा, अवकुण्ठिताश्चेत्[15] ?[16]। अपोर्णुवन्तस्तिष्ठन्तु[17][18]। 'क्रीते[19] सोमे पौर्णः[20]' इत्यादि ब्राह्मणम्।

**सं यं स्तुभोऽवनयो न यन्ति समुद्रं न स्रवतो रोधचक्राः ।**
**स विद्वाँ उभयं चष्टे अन्तर्बृहस्पतिस्तर आपश्च गृध्रः ॥७॥**

संयम्[21]। यम्[22]। स्तुतयः[23]। ग्राममिव[24]। मार्गाः[25]। संयन्ति[26]। समुद्रम्। इव च। स्रवन्त्यः।

---

१. चरति व० P.D.M. बृहस्पते यच्चातयसि देवपीयुम् । चोयतिहिंसाकर्मा N. 4.25; SKN. II. 271
२. VM. ignores बृहस्पते
३. ०तु P. D.
४. हन्तव्यः P. D. सुष्ठु गन्तुर्मनुष्यस्य Sy.
५. शोभनान्नस्य Sy.
६. सुष्ठु यज्ञमार्गगामिनः सूयवसः पन्था इव सुखकारी भवेत्यर्थः Sy.
७. दुःखेन नियमितृ राज्ञः Sy.
८. सर्वप्रकारेण सन्तुष्टो द्वेषाविरहितः Sy.
९. एव M.
१०. सुहृन्मन्त्रीव । स यथा दुर्नयान्निवर्तयति तद्वत् त्वमपि तथाऽस्मभ्यं कुर्वित्यर्थः । सखिवदमार्गान्निवर्त्य मार्गे यज्ञादिरूपे योजयित्वा तत्रापि फलप्रदो भवेत्यर्थः Sy.
११. नराः Sy.
१२. आभिमुख्येन चक्षते बोधयन्ति ते Sy.
१३. तेनश्वा M. केनश्वा P. ऽनश्वाः is suggested for नश्वा
१४. अनर्वाणोऽश्वाः Sy.
१५. अवगुण्ठिता० is suggested for अवकुण्ठिता० अज्ञानेनावृता अपि Sy.
१६. अकुठिताश्चेत् P. ०ताश्चत् D.
१७. एवोर्णवेन्तः P. अपोर्णवन्तः D. अपोऽर्णवन्तः M. अपगतावरणवन्तो ज्ञानवन्तः Sy.
१८. यद्वा । अनर्वाणस्त्वामप्राप्नुवन्तो येऽस्मद्विरोधिनो नोऽस्मानभि चक्षतेऽभिवदन्ति निन्दन्ति तेऽपीवृता आच्छादिता रक्षिता अपि, अपोर्णुवन्तोऽपगतरक्षणा भवन्ति Sy.
१९. पीते P.
२०. पोर्णं M. सोमे राजनि क्रीते AB. 1.27; 6.3.
२१. व P. D.
२२. व P. D. बृहस्पतिम् Sy.
२३. ०ये M. स्तोत्राणि Sy.
२४. यथा स्वामिनं कर्म प्रति वा Sy.
२५. सर्वा अवनयो भूमयो मनुष्याः Sy.
२६. सङ्गच्छन्ति(न्ते) तद्वत् Sy.

नद्यः । सः । प्राज्ञः । द्यावापृथिव्योरन्तर्वर्तमानः । उभयम् । पश्यति । बृहस्पतिः । तरति । च । उदकानि । काङ्क्षिता शत्रुधनानाम् ।

**एवा महस्तुविजातस्तुविष्मान्बृहस्पतिर्वृषभो धायि देवः ।**
**स नः स्तुतो वीरवद्धातु गोमद्विद्यामेषं वृजनं जीरदानुम् ॥८॥**

एवा महः । एवम् । महान् । बहुजननः । वृद्धिमान् । बृहस्पतिः । वृषभः । अन्तरिक्षे निहितः । देवः । सः । नः । स्तुतः । वीरवत् । गोमच्च धनम् । प्रयच्छतु ।

I.191.

**कङ्कतो न कङ्कतोऽथो सतीनकङ्कतः ।**
**द्वाविति प्लुषी इति न्यदृष्टा अलिप्सत ॥१॥**

कङ्कतः । शौनकः—

बृहस्पतेरनर्वाणं कङ्कतोपनिषत्परम् ।
अपां तृणानां सूर्यस्य केचिदेतां स्तुतिं विदुः ॥

१. रोधश्चक्रा नदीनामेतत् । रोधनशीलानि चक्राणि यासु तास्तावृश्यः कूलं क्रममाणा वा, स्रवतः स्रवन्त्यो नद्यो यथा यन्ति तद्वत् सर्वा अपि स्तुतयो यमेव प्राप्नुवन्ति Sy.
२. बृहस्पतिः Sy.
३. वक्ष्यमाणाभिज्ञः Sy.
४. मध्ये स्थित्वा Sy.
५. ० नम् P.D.
६. करोतीत्यर्थः Sy.
७. तरणं जलाभिवृद्धिम् Sy.
८. गर्जनशीलो वृष्टिमाकाङ्क्षमाणः Sy.
९. एव P.D.
१०. महा P.D.
११. एवं स्तुतिप्रकारेण Sy.
१२. महत् P.
१३. बहुधर्मसुतात्मः Sy.
१४. बलवान् Sy.
१५. ०ति P.
१६. वृद्धि ... वृ० M. अपां वर्षिता Sy.
१७. ०ते P. धीयते स्तूयत इत्यर्थः Sy.
१८. अस्माकम् Sy.
१९. पुत्राद्युपेतम् Sy.
२०. गोभिर्युक्तं फलम् Sy.
२१. गोमच्च धन P.
२२. करोत्वित्यर्थः Sy.
२३. VM. ignores विद्याम etc. Ms. D. puts the figure ॥१९०॥ here to indicate the end of one hundred and nintieth hymn. No such number is given in P. and M.
२४. ०रपर्वाणं D. ०रर्वाणं M.
२५. तृणां P. तृ० D.
२६. Missing in M.

ददर्श तदगस्त्यो हि विषघ्नं[1] विषशङ्कया ।

अदृष्टाख्यो नष्टरूपः सूक्तस्यास्त्योऽत्र[2] तु[3] द्वृचः[4] ॥

कङ्कतशब्दो 'यत्सीमन्तं कङ्कतस्ते'[5] इति दर्शनाद् विलेखकवचनः, किं[6] कङ्कतः[7]। उताहो[8] न[9]। कङ्कतः[10]। अपिवा। उदकजः[11] कश्चन कङ्कतसर्पोऽपि[12] कङ्कतो भवति विलेखनात्। कृतस्ते[13]? द्वौ[14]। इमौ दन्तौ भवतः शरीरस्थौ। मम दाहकौ[15] च तौ। ततश्च[16] मामदृष्टाः[17] प्रच्छन्नचारिणः सर्पा एव[18]। न्यलिप्सत[19], नतु पुनः कण्टकेन[20] कृत्तोऽहमिति[21]।

**अदृष्टान्हन्त्यायत्यथो हन्ति परायती ।**
**अथो अवघ्नती हन्त्यथो पिनष्टि पिंषती ॥२॥**

अदृष्टान्[22]। सर्पान्[23]। हन्ति[24]। काचिदागच्छन्ती[25], ओषधिर्वीर्यवत्तमा[26]। अथापरा[27]। दष्टशरीरे परागच्छन्ती[28] मध्यमा। अथो[29]। अल्पवीर्याऽहन्यमाना[30][31]। हन्ति[32]। दृषदुपलयोः[33], अथापरा।

---

१. विघ्न P. २. ऽत्र तु P.D.M.
३. तृचः M. ४. BD. IV. 93, 64.
५. कृतस्त M. TB. 2.7.13.7.
६. M. adds श्रयं after किम्।
७. अल्पविषः कश्चित् Sy.
८. इहाते M. ९. Omitted by M.
१०. तद्विपरीतोऽनल्पविषो महोरगादिः। तकतेर्गत्यर्थस्य वर्णव्यत्ययेन कङ्कत इति सरन् भवति Sy.
११. ०कज्जः P. सतीनमित्युदकनाम। 'सतीनं गहनम्' (Ngh.1.12.) इति तन्नामसु पाठात्। उदकचारी, अल्पविषवान् कश्चिद् डुण्डुभादिः Sy.
१२. कंकतः सर्वोऽपि P. M.
१३. कृतं ते P. M. १४. अल्पविषमहाविषभेदेन जलस्थलभेदेन वा द्विप्रकाराविति Sy. १५. ०तोषणाविति। प्रकारद्वैविध्यदाहकत्वयोः प्रतिपादनाय, इतिकारद्वयम् Sy. १६. ततश्च M.
१७. अदृश्यमानरूपा एतत्सञ्ज्ञकाश्च केचिद्विषधरा एवमुक्तप्रकारा ये सन्ति ते नूनम् Sy. १८. एवा P.
१९. न्यालिस्पत P. माम्...विशेषेण लिम्पन्ति। सर्वाण्यङ्गानि विषमावृणोति। केनैवं कृतमिति न ज्ञायत इति भावः Sy.
२०. कण्ठके D. कण्टके P.
२१. ०त्तो हरति M. ०त्तो भवति P.
२२. अनेन विषघ्न्योषधिः स्तूयते Sy.
२३. अदृश्यमानान् विषधरान् Sy.
२४. हिनस्ति Sy. २५. विषदष्टस्य सकाशमागच्छन्ती विषनिर्हरणसाधनौषधिः Sy.
२६. एषधीः D. ०षिवी० M. काश्चिदागत्यस्तोषासीर्वी० P.
२७. वाचा० P. अपि च Sy.
२८. ०न्ति P. सम्मार्जनसमयेऽर्वाक् प्रवृत्ता। हन्ति नाशयति जलचरविषधरान् Sy.
२९. अपिच Sy. ३०. ०र्वा: P. D.
३१. अवहन्यमाना is suggested for अहन्यमाना। कर्मणि कर्तृप्रत्ययः, अवहन्यमानौषधिः स्वगन्धेन Sy.
३२. हन्ति बहुविषयान्। यद्वा काचिदोषधिर्वंशकाम्मारयत्येव Sy. ३३. ०पयोः P.

शरीरं पिष्यमाणा[1]। विषं[2] पिनष्टि[3] ।[4]

**श॒रासः॒ कुश॑रासो द॒र्भासः॑ सै॒र्या॑ उ॒त ।**
**मौ॒ञ्जा अ॒दृष्टा॑ वैरि॒णाः सर्वे॑ सा॒कं न्य॑लिप्सत ॥३॥**

शरासः[5]। शरादयस्तीक्ष्णपत्रा[6] ओषधिविशेषाः[7]। अदृष्टाः[8] सर्पाः। तं[9] इमे सर्वे[10]। सह[11]। मा न्यलिप्सतेति[12] दाहातिशयादाह[13] ।

**नि गावो॑ गो॒ष्ठे अ॑सद॒न्नि मृ॒गासो॑ अविक्षत ।**
**नि के॒तवो॒ जना॑नां॒ न्य१॒॑दृष्टा॑ अलिप्सत ॥४॥**

नि गावः[14]। प्रदोषवेलायां स्वापार्थं गावः। गोष्ठे। न्यषदन्[15]। तथा मृगाश्च। न्यविक्षत[16]। तथा सुषुप्सूनां[17] जनानाम्[18]। प्रज्ञानानि चोपरमन्ति[19]। अस्यां वेलायां[20] सर्पाः[21]। बिलादुत्थाय[22] विषेण मामलिम्पन्[23] ।

---

१. पेषणकर्त्री वृषलिपिष्यमाणा वौषधिः Sy.
२. पिषम् P.
३. चूर्णीकरोत्यल्पविषान् । अथवा सर्वेषु वाक्येष्वविशेषेण सर्वविषकारिणां नाश उक्तः Sy.
४. VM. ignores हन्ति
५. अन्यांश्च विषहेतूनाह—शरासः शरा वेणुवत्कसदृशा अन्तश्छिद्रास्तृणविशेषाः। कुशरासः कुत्सितशरा अन्तश्छिद्राः शरसदृशास्तृणविशेषाः। दर्भासो दर्भाः कुशाः। सैर्यास्तटाकादिप्रान्तोद्भवास्तृणविशेषा अश्ववाला इति प्रसिद्धाः। मौञ्जा मुञ्जाः प्रसिद्धाः। वैरिणा वीरणप्रकाराः। एतेषु वर्तमानाः Sy.
६. तीक्ष्णवर्तीक्षणपत्राः P. ०पात्रा M.
७. आष० D.
८. उक्तरूपाः Sy.
९. सर्वान्त M.
१०. विषधराः Sy.
११. साकं मिलित्वा Sy.
१२. निलिम्पन्ति स्म Sy.
१३. न्यलप्सन्त कि दाहातिशयाबाहः P. ० शयाः यवाह् D. ० प्सतेति शया वाह् M.
१४. गाहः P.
१५. निषीदन्ति Sy.
१६. निविष्टाः। स्वस्वस्थान उपरताः Sy.
१७. सुषुप्सूनां M.
१८. प्राणिनाम् Sy.
१९. उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। नीचा-न्यभवन् Sy.
२०. एतेऽस्मिन्समये Sy.
२१. अदृश्यमानरूपाः सन्तः Sy.
२२. बलादु० D.
२३. निलिम्पन्ति विशेषेण Sy.

एत उ त्ये प्रत्यंदृश्रन्प्रदोषं तस्कंराइव ।
अदृंष्टा विश्वंदृष्टाः प्रतिंबुद्धा अभूतन ॥५॥

एत उ[1] त्ये । अपिच । अमी[2] । रात्रिमुखं[3] प्रति । दृश्यन्ते[4] । चोरा[5] इव । तेऽमी । सर्वैरदृष्टाः[6] । स्वयं सूक्ष्मेण चक्षुषा दृष्टविश्वजना[7] यूयं[8] प्रतिबुद्धाः । स्थ[9] ।

द्यौर्वः पिता पृंथिवी माता सोमो भ्रातादिंतिः स्वसां ।
अदृंष्टा विश्वंदृष्टास्तिष्ठंतेलयंता सु कंम् ॥६॥

द्यौर्वः[10] । 'ये वामी रोचने[11] दिवो ये वा सूर्यस्य रश्मिषु । तेभ्यः सर्पेभ्यो[12] नमः'[13] इति मन्त्रः । यूयमेवंविधा[14]भिजनाः[15] । यथासुखम्[16] । तिष्ठथ[17] । सञ्चरत[18] च[19] । शोभनम् ।

---

१. इ M.
२. अमि D.
   एते ते सर्पाः Sy.
३. रात्रिषु मुख्यं D.
   रात्रिमुख्यं P.
४. प्रतिदृश्यन्ते रात्रौ श्वासादिलिङ्गेन । यद्वा । ते रात्रौ हन्तारो दिवा एते प्रतिदृश्यन्ते Sy.
५. तत्र दृष्टान्तः । . . . रात्रिर्दोषा । रात्रिं प्रति तमसाभिभूतासु रात्रिषु तस्करा इव हिंसकाश्चोरा दृश्यन्ते यथा तद्वत् Sy.
६. कीदृशास्ते ? अदृष्टा अपरिदृश्यमानाः Sy.
७. विश्वं दृष्टं यैस्ते तादृशाः प्रतिदृश्यन्ते Sy.
८. अतो हे नराः I Sy.
९. स्थः P. D. भवत Sy.
१०. Omitted by P. अतः परं विषचिकित्सा Sy.
११. ये वा रो० P. य वा रो० D. यो वो राच० M.
१२. सर्वेभ्यो D.
१३. VS.13.6.
१४. तत्र तावद् हे सर्पा वो युष्माकं द्यौः पिता, पृथिवी माता, सोमो भ्राता, अदितिर्देवमाता स्वसा । एवम्महानुभावा महोरगा अदृष्टा अन्यैरदृश्यरूपाः, स्वयन्तु विश्वदृष्टाः सर्वस्य द्रष्टारो यूयम् Sy.
१५. ० भिजं ० M.
१६. सु सुतरां कं सुखं यथा तथा Sy.
१७. तिष्ठत स्वस्वस्थाने । मां प्रति मा गच्छत Sy. तिष्ठत is suggested for तिष्ठथ
१८. सञ्चत P. D. ईरयत गच्छत । सोमशब्देन सोमाधारो द्युलोक उच्यते । पृथिव्यन्तरिक्षद्युस्थानस्थाः सर्पाः स्वस्वस्थानं प्राप्नुत । अस्मद्बाधां मा कुरुतेत्यर्थः Sy.
१९. Omitted by P. D.

ये अंस्या ये अङ्ग्याः सूचीका ये प्रकङ्कताः ।
अदृष्टाः किं चुनेह वः सर्वे साकं नि जंस्यत ॥७॥

ये अंस्याः[1]। ये। अंसेन प्रहरन्ति[2]। ये च। अङ्गैः[3]। ये वा। पुच्छाग्रैः[4]। ये वा। दन्तैः[5] प्रक्रन्तन्ति[6]। तेषां सर्वेषां किम्[7]। अस्मिन् मनुष्ये कार्यम्[8]। शीघ्रमस्मात्[9]। साकम्[10]। नितराम्[11]। उपक्षीणा भवत[12]।

उत्पुरस्तात्सूर्यं एति विश्वदृष्टो अदृष्टहा ।
अदृष्टान्त्सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥८॥

उत्पुरस्तात्[13]। एभिर्मन्त्रैर्विभीषिका[14] क्रियते[15]—हे सर्पाः ! असौ सूर्यः। पुरस्तात्[16]। उदेति। दुष्टसर्वजनः[17]। सर्पाणां[18] हन्ता। सर्वानेव। सर्पान्[19]। विनाशयन्[20]। सर्वाः। च। रात्रौ वर्तमाना हिंसानिलयभूता[21] यातुधानजातीः[22]।

---

१. अंसौ D.
२. वहन्ति P. अंस्या अंसार्हा अंसगा अंसे भवा अंसाभ्यां व्यावन्तो वा Sy.
३. अन्तौ P. अङ्गना अङ्गेन शरीरेण हन्तारो वा लूतिकाद्यः Sy.
४. ग्रैः M.
५. सूचीसदृशपुच्छरोमाणो वृश्चिकाद्याः Sy.
६. दन्त्रैः P. M.
७. प्रकृन्ति P .D.M. प्रकृष्टविषाः प्रकृष्टगामिनो वा महोरगाः। अदृष्टा अदृश्यमानाः Sy.
८. यत्किञ्चित्सर्पजातमस्ति Sy.
९. अस्मिन् समीपे Sy.
१०. युष्माकं किमस्ति Sy.
११. अतो यूयं सर्वे साकं सह Sy
१२. नितरोमुपक्षीणा P. मुञ्चतास्मान् । 'जसु मोक्षणे' दैवादिकः Sy.
१३. VM. ignores अदृष्टाः। वन। सर्वे
१४. एवं P.D.
१५. ०वित P. ०क्राः D.
१६. पूर्वस्यां दिशि Sy.
१७. ०जन M. कीदृशः सः ? ... विश्वे द्रष्टव्या यस्य स तादृशः Sy.
१८. अदृष्टा विषविशेषा विषधरविशेषा वा तेषां हन्ता। यद्वा। अदृष्टमदर्शनमज्ञानमन्धकारस्तस्य हन्ता। सूर्ये उदिते सर्वे विषधरा विषाणि वा पलायन्ते Sy.
१९. सर्वान् P. किं कुर्वन्नुदेतीति चेदुच्यते, सर्वान्...अद्रष्टव्यान्विषराक्षसादीन् Sy.
२०. हिंसयन् Sy.
२१. ०निय० D.
२२. यतुधन० P. यातवो यातनास्तीव्रवेदनास्तासां धात्रीस्तत्पादयित्रीर्महोरगी राक्षसीर्वा जम्भयन्पुरस्तादुदेति। अतोऽस्मत्तो नि जस्यतेति सम्बन्धः Sy.

उदंपप्तदुसौ सूर्यः पुरु विश्वानि जूर्वन् ।
आदित्यः पर्वतेभ्यो विश्वदृष्टो अदृष्टहा ॥९॥

उदपप्तत्[1] । उत्पपात[2] । असौ[3] । सूर्यः[4] । पुरूणि[5] । व्याप्तानि रक्षांसि[6] । हिंसन् । आदित्यः[7] । उदयपर्वतेभ्यः[8] ।[9]

सूर्ये विषमा संजामि दृतिं सुरावतो गृहे ।
सो चिन्नु न मराति नो वयं मरामारे
अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥१०॥

सूर्ये विषम्[10] ।[11] सूर्येऽहम्[12] । एतद्[13] विषम्[14] । आसजामि[15] । यथा सुरार्थी[16] दृतिम्[17] । सुराकारगृहे प्रातरेवासजति[18] ।[19] स च[20] सूर्यः । कदाचित्[21] । अपि विषलिप्तोऽपि । न । म्रियते । तथैव[22] वयमपि । न[23] । म्रियेमहि । दूरे[24] । विषस्य । योजनम्[25] । इन्द्रः[26] करोतु । मधुरा[27] सूर्ये दीप्तिः सुषुम्णाख्या च[28]

---

१. उवचप्तन् D. २. ऊर्ध्वं गच्छति । पततेर्लुङि पुमागमे रूपम् Sy.
३. पुरस्ताद् दृश्यमानः Sy.
४. सर्वस्य प्रेरक आदित्यः Sy.
५. प्रभूतम् Sy.
६. बहूनि विषाणि Sy.
७. विषोदकादीनामदनशीलः । विश्वदृष्टो विश्वं दृष्टं येन तादृशः । अदृष्टहा, अदृष्टानां विषविशेषाणां हन्ता । एवम्महानुभावः सूर्य ऊर्ध्वमारोहति । अतो विषशङ्का न कार्या Sy.
८. ०यसर्वतेभ्यः P. पर्वतद्रूपः प्राणिभ्यस्तेषामुपकाराय Sy.
९. VM. ignores विश्वदृष्टः । अदृष्टहा
१०. 'आदित्यमण्डले चतुर्थेनाङ्गुलिना विषमादाय मधुकृत्य योजयित्वा निर्विषो भवेत्' इति यदेतद्विषविद्यायामुक्तं तदिदमत्रोच्यते Sy. ११. सर्वस्य प्रेरयितरि मधुविद्यारूपे सूर्यमण्डले Sy.
१२. विषावृतोऽगस्त्यः Sy.
१३. सूर्ये तमेतद् P.
१४. विषयम् M. आवृत्य वर्तमानम् Sy.
१५. सूर्ये . . . आसक्तं करोमि Sy.
१६. तत्र दृष्टान्तः । . . . चर्ममयं सुरापात्रमिव । यथा तत्कर्तुर्न दोषाय भवति तद्वद्विषमादित्यस्य न बाधकमित्यर्थः Sy.
१७. सुरार्थीदृतिमसुराकारग्रहे P. सुरा त्वीदतिमसुराकारग्रहे D. सुरानिर्मातृसदने Sy. १८. ०तदेव P.
१९. पूज्यः स सूर्यः खलु Sy.
२०. म्यः P. २१. चित् पूजायाम् । नुः प्रसिद्धौ Sy. २२. तथैपि P.
२३ तदनुग्रहात्तत्रैव विषस्य योजितत्वाद् वयमपि न म्रियामहे Sy
२४. दूर P. D. २५. प्रापणं चकार Sy.
२६. उभयोरमरणे कारणमाह—हरिष्ठाः । हरयोऽश्वाः । तेषु स्थित आदित्यः Sy.
२७. मधुना P. D. एषैव मधुला मधुदात्री निर्विषीकर्त्री मधुविद्या । यदेतदादित्यस्य विषयोजनं तेन चामृतीकरणं यदस्ति, एषा मधुविद्या Sy.
२८. Omitted by P. D.

चन्द्रमसमाप्याययन्ती । विष ! त्वा[1] । मधु । करोतु[2] ।

**इ॒य॒त्ति॒का श॑कुन्ति॒का स॒का ज॑घास ते वि॒षम् ।**
**सो चि॒न्नु न म॑राति॒ नो व॒यं म॑रामा॒रे**
**अ॒स्य योज॑नं हरि॒ष्ठा मधु॑ त्वा मधु॒ला च॑कार ॥११॥**

इयत्तिका[3] । इयतत्येषा[4] भवतीति । प्रादेशमात्रपरिमाणां शकुन्तिकां[5] निर्दिशति[6] पिण्डमात्रं वा ताम्रवर्णां[7] सर्पघातिनीम् । हत्वा सा[8] । तव[9] । सर्पविषम् । भक्षयति[10] ।[11]

**त्रिः स॒प्त वि॑ष्पुलिङ्ग॒का वि॒षस्य॒ पुष्य॑मक्षन् ।**
**ता॒श्चि॒न्नु न म॑रन्ति॒ नो व॒यं म॑रामा॒रे**
**अ॒स्य योज॑नं हरि॒ष्ठा मधु॑ त्वा मधु॒ला च॑कार ॥१२॥**

त्रिः सप्त । अयं तान्त्रिकाणां भणितिप्रकारः[12], विषचटिका[13] विष्पुलिङ्गकाः[14] सङ्घीभूत्वा[15] सर्पानिति[16]तिष्ठन्ति[17], एकविंशतिविष्पुलिङ्गकाः[18] । विषस्य[19] । अग्रम्[20] । अश्नन्ति[21] ।[22]

---

१. त्वाम् Sy. २. अमृतं चकार । विषस्य विषभावं दूरेऽपनोद्यामृतीचकारेति Sy.
३. इत्तिका P.
४. त seems to be unnecessary in इयतत्येषा । इयत्तां कुर्वाणा, इयत्तावती वा । बालेत्यर्थः Sy.
५. शशकु० M. शकुन्तः शकुनस्तस्य स्त्री, तां कपिञ्जलीमाहुः Sy.
६. ०न्ति M. निर्मिशति P. ७. ०वर्णा P.
८. ता P. सा विषहन्त्रीति प्रसिद्धा Sy.
९. सव P. If सर्प is construed in the voc., the meaning will be improved—'O serpent! thy poison,' instead of 'thy serpent poison'
१०. भक्षति M. भक्षितवती । . . . सो चित् । सा उ इति निपातसमुदाय एकं पदम् । सापि शकुन्तिका न म्रियते नित्यप्रतिपक्षत्वाद्विषस्य । शिष्टं व्याख्यातचरम् । अनेन विद्यायां यद्देहावृतं विषं तस्य शकुनेभ्य आदित्याय च प्रदानमस्तीत्युक्तं भवति Sy.
११. VM. ignores सो । चित् etc.
१२. वणितिप्र० P. १३. विषचभिकाः M.
१४. हविःष्फुलि० M. विष्फुलि० P.D. विविधा विष्पुलिङ्गकाः Sy.
१५. संघटिभूताः P. संघटीभूता D. ०भूताः is suggested for ०भूत्वा
१६. न D. १७. अतिष्ठन्ति P.
१८. एविंशतिविष्फुलि० P. ओविंशतिविष्फुलि० D. ०ष्फुलि० M. त्रिगुणिताः सप्तसङ्ख्याकाः । . . . सप्तसु जिह्वासु लोहितशुक्लकृष्णभेदेनैकविंशतिर्यासां ताः । यद्वा त्रिः सप्त, एकविंशतिभेदा विष्पुलिङ्गकाः सूक्ष्मचटकिका विषप्रतिपक्षभूताः Sy. १९. अस्मदावरकस्य Sy.
२०. विषं प्राप्तं P. विषस्याग्राम् D. विषस्याग्रम् M. पुष्यं पोषम् Sy.
२१. अदन्तु नाशयन्तु । ताश्च न मरन्ति न वयमपि । शिष्टमविशिष्टम् Sy.
२२. VM. ignores ताः etc.

न॒वा॒नां नव॑ती॒नां वि॒षस्य॒ रोपु॑षीणाम् ।
सर्वा॑सामग्र॒भं नामा॒रे अ॑स्य॒ योज॑नं हरि॒ष्ठा मधु॑ त्वा मधु॒ला च॑कार ॥१३॥

नवानाम्[१] । ओषधीनामेकोनशतम्[२] । विषघ्नं[३] भवति, रुपिच्छेदनकर्मा[४] । तासां सर्वासामेवाहम्[५] । नाम[६] । अग्रभम्, इयमेवंनाम्नीति[७][८] ।

त्रिः स॒प्त म॑यू॒र्यः स॒प्त स्वसा॑रो अ॒ग्रुवः॑ ।
तास्ते॑ वि॒षं वि ज॑भ्रिर उद॒कं कु॒म्भिनी॑रिव ॥१४॥

त्रिः सप्त[९] । एकविंशतिः । मयूर्यः[१०] । सप्त च । स्वयं सरन्त्यः[११] । गङ्गाद्या[१२] नद्यः[१३][१४] । ताः । ते[१५] । सर्पविषम् । विविषम्[१६] । हरन्ति । यथा । उदकम्[१७] । कुम्भवत्यः स्त्रियः[१८] ।

इ॒य॒त्त॒कः कु॑षुम्भ॒कस्त॒कं भि॑न॒द्म्यश्म॑ना ।
ततो॑ वि॒षं प्र वा॑वृते॒ परा॑ची॒रनु॑ सं॒वतः॑ ॥१५॥

इयत्तकः[१९] । इयत्प्रमाणः[२०] । नकुलः, स वेदानीं यदि तव विषं हन्ति ततः[२१] । तकम्[२२]=अयुक्त-

---

१. न्नावानां P.

२. ०नं ग्र० M. नवाधिकानां नवतिसङ्ख्याकानां नदीनाम् Sy.

३. पुनः कीदृशीनाम्? विषस्यास्मद्व्यापकस्य सर्वस्य विषस्य रोपुषीणां लोपयित्रीणां छेत्रीणाम् Sy.

४. रुचि० M. रुचिच्छे० P. रुपिच्छे० D.

५. उक्तानां गङ्गादिनदीनाम् Sy.

६. गृह्णामि सङ्कीर्तयामि Sy.

७. ०वनाम्निति P. ० नम्नी० D. इयमेव नाम्नि भवति इयमेव नाम्नीति M.

८. VM. ignores आरे etc.

९. एकविंशतिसङ्ख्याकाः Sy.

१०. मयूरस्त्रियः। ता विषकारिसर्पद्वेषिण्य इति प्रसिद्धाः, नागद्वेषिगरुडपक्षतुल्यत्वात् Sy.

११. एतत्सङ्ख्याकाः सर्पणस्वभावाः Sy.

१२. सरस्वत्यो P. D. M. स्वयमेव सरण्यः Sy.

१३. ञ्ङ्गाद्या M. नदीनामेतत् । सुरगङ्गाद्याः प्रसिद्धाः सप्त नद्यः सन्ति ताः Sy.

१४. अभ्यः D. Omitted by P.

१५. हे देह तव Sy.

१६. विशेषेण हरन्तु Sy.

१७. तत्र दृष्टान्तः । . . . कुम्भिन्यः कुम्भवत्यः कुम्भेन जलहारिण्य इव । ता यथा तद्धरन्ति तद्वद्यो मयूर्यस्त्वातिप्रभूतं हरन्तु Sy.

१८. ० त्य स्त्रियः P.

१९. इय० P. कुत्सितेयत्तोऽल्पप्रमाण इत्यर्थः Sy.

२०. कुं पृथ्वीं सुम्भति विलिखतीति सर्पाणां कुत्सितं सुम्भयिता निग्रहीता वा कुषुम्भको नकुलः । स ते विषं हरत्विति शेषः Sy.

२१. यदि न तथा स करोति Sy.

२२. तं (कं?)म् D.

कारिणम्[1] । अहम्, अश्मना । भिनद्मि[2] ततश्च[3] भीतः स इहाऽऽगच्छति[4] । ततश्च । विषं हन्तुम् । उद्युक्तो[5] भवति । दूरस्थाः[6] । भूमीः[7] । प्रति[8] ।

**कुषुम्भकस्तदब्रवीद् गिरेः प्रवर्तमानकः ।**
**वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषम् ॥१६॥**

कुषुम्भकः[9] । गिरेः[10] । चरणार्थं प्रवर्तमानः[11] । नकुलः । तदिदं वचनम्[12] । अब्रवीत्[13] । वृश्चिकस्य । विषम्[14] । अरसं[15] भवति । अरसम् । वृश्चिक[16] ! ते । विषमिति ।

---

१. कुत्सितं तं नकुलम् Sy.
२. विदारयामि । विषनिर्हरणप्रयोगे यावद्विषापगमं तं पाषाणानुघातमनुतिष्ठन्ति तद्विदः । तदिदमत्रोक्तम् Sy.
३. एवं प्रयोगे सति Sy.
४. ग० P. D. विषावृताद्देहाद्विषं प्रवर्तते निर्गच्छतु Sy.
५. ०क्तं P. D. M.
६. मूर० P.D. काः प्रति ? उच्यते। पराचीः परागञ्चनवतीरतिदूरगाः Sy.
७. भूमिः P.D.M. संविभागवतीर्दिशः Sy.
८. अनु लक्षीकृत्य दिगन्तं प्रति गच्छतु न मां प्रति गच्छत्वित्यर्थः Sy.
९. कुष्ठकंभकः D. P. एवं महानुभावेनागस्त्यमहर्षिणा, उच्यमाने सति Sy.
१०. गिरेः सकाशात् Sy.
११. प्रवृत्त० D. अतिशीघ्रमभिगच्छन् Sy.
१२. वचनम् is omitted by M. तद्वाक्यम् Sy.
१३. प्राचख्यौ Sy.
१४. विम् P. D. एतद्विषम् Sy.
१५. असारं, बाधकं न भवतीत्यर्थः । तथा लोकेऽपि सर्पदष्टमपि कुम्भादिदंशनमेव, अतो न बाध इति हि वदन्ति । एवमभिवचनेन सोऽपि निर्विषोऽभवत् Sy.
१६. ० कस्य D. ० कि P. अथ तं वृश्चिकम्प्रति नकुल आह । हे वृश्चिक ! ते विषमरसम्, अतस्त्वमपि किं करिष्यति तस्मात्परिहरेति । एवंवमवादीत्तदाप्रभृति वृश्चिकविषमसारमभवत् Sy.
Ms. D. puts the figure ॥१९१॥ here to indicate the end of one hundred and nintyfirst hymn. No such number is given in P. and M.

## APPENDIX I

The commentary of the Śatapatha-Brāhmaṇa on such stanzas of the first *maṇḍala* of the Ṛgveda as occur in the Śuklayajurveda.

RV. १.१.७=YV. ३.२२=ŚB. २.३.४.२८

अथ गार्हपत्यमभ्यैति । स गार्हपत्यमुपतिष्ठतऽउप त्वाग्ने दिवे-दिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसीति नम एवास्माऽएतत्करोति यथैनं न हिꣳस्यात् ।

RV. १.१.८; ४५.४=YV. ३.२३=ŚB. २.३.४.२९

राजन्तमध्वराणाम् । गोपामृतस्य दीदिवम् । वर्धमानꣳस्वे दमऽइति स्वं वै तऽइदं यन्मम तन्नो भूयो-भूय एव कुर्वित्येवैतदाह ॥

RV. १.१.९=YV. ३.२४=ŚB. २.३.४.३०

स नः पितेव सूनवे । अग्ने सूपायनो भव । सचस्वा नः स्वस्तयऽइति यथा पिता पुत्राय सूपचरो नैवैनं केन चन हिनस्त्येवं नः सूपचर एधि मैव त्वा केन चन हिꣳसिष्मेत्येवैतदाह ॥

RV. १.२.४=YV. ७.८=ŚB. ४.१.३.१९

अथापगृह्य पुनरानयति । इन्द्रवायूऽइमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि । उपयामगृहीतोऽसि वायवऽइन्द्रवायुभ्यां त्वैष ते योनिः सजोषोभ्यां त्वेति सादयति स यदाह सजोषोभ्यां त्वेति यो वै वायुः स इन्द्रो य इन्द्रः स वायुस्तस्मादाहैष ते योनिः सजोषोभ्यां त्वेति ।

RV. १.३.७=YV. ७.३३; ३३.४७=ŚB. ४.३.१.२७

अथातो गृह्णात्येव । ओमासश्चर्षणीधृतो विश्वे देवास आगत । दाश्वाꣳसो दाशुषः सुतम् । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति ।

RV. १.६.१.=YV. २३.५=SB. १३.२.६.१

युञ्जन्ति ब्रध्नमरुषं चरन्तमिति । असौ वाऽआदित्यो ब्रध्नोऽरुषोऽमुमेवास्माऽआदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै ॥

RV. १.१०.३=YV. ८.३४=SB. ४.५.३.१०

अनया वा । युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिनऽएष ते योनिरिन्द्राय त्वा षोडशिनऽइति ॥

RV. १.१०.१२=YV. ५.२९=SB. ३.६.१.२४

तत्परिश्रयन्ति । परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयऽइतीन्द्रो वै गिर्वा विशो गिरो विशैवैतत्क्षत्रं परिबृꣳहति तदिदं क्षत्रमुभयतो विशा परिबृढम् ॥

RV. १.११.१=YV. १२.५६; १५.६१; १७.६१=SB. ८.७.३.७; ६.२.३.२०

इन्द्रं विश्वा अवीवृधन्निति । इन्द्रꣳहि सर्वाणि भूतानि वर्धयन्ति समुद्रव्यचसं गिर इति महिमानमस्यैतदाह रथीतमꣳ रथीनामिति रथितमो ह्येष रथिनां वाजानाꣳ सत्पतिं पतिमित्यन्नं वै वाजा अन्नानाꣳ सत्पतिं पतिमित्येतदैन्द्र्यानुष्टुभा निवपत्यैन्द्रꣳहि पुरीषं तदेतदर्धमग्नेर्यत्पुरीषमर्धमैष्टकम् ।

अथोपायन्ति । इन्द्रं विश्वा अवीवृधन्निति तस्योक्तो बन्धुर्देवन्हूर्यज्ञ आ च वक्षत्सुम्नन्हूर्यज्ञ आ च वक्षदिति देवन्हूश्चैव यज्ञः सुम्नन्हूश्च यक्षदग्निर्देवो देवाँ २॥ऽआ च वक्षदिति यक्षच्चैवाग्निर्देवो देवाना च वहत्वित्येतत् ।

RV. १.१२.१०=YV. १७.९=SB. ६.१.२.३०

अभ्यात्मं पक्षपुच्छानि विकर्षति । अभ्यात्ममेव तच्छान्तिं धत्ते परस्तादर्वाक्परस्तादेव तदर्वाचीꣳ शान्तिं धत्तेऽग्ने पावक रोचिषेति दक्षिणं पक्षꣳ स नः पावक दीदिव इति पुच्छं पावकया यश्चितयन्त्या कृपेत्युत्तरं पावकं पावकमिति यद्वै शिवꣳ शान्तं तत्पावकꣳ शमयत्येवैनमेतत् ।

RV. १.१८.१,२,३=YV. ३.२८,२९,३०=SB. २.३.४.३५

अथान्तरेणाहवनीयं च गार्हपत्यं च। प्राङ्तिष्ठन्नग्निमीक्षमाणो जपति सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजः ॥ यो रेवान्योऽअमीवहा वसुवित्पुष्टिवर्धनः। स नः सिषक्तु यस्तुरः ॥ मा नः शꣳसोऽअररुषो धूर्तिः प्रणङ्मर्त्यस्य। रक्षा णो ब्रह्मणस्पतऽइति।

RV. १. २२.३=YV. ७.११=SB. ४.१.५.१७

अथातो गृह्णात्येव। या वां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतम्। उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वेति सादयति तं वै मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति तद्यन्मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति।

RV. १.२२.७=YV. ३०.४=SB. १०.२.६.६

तदेतदृचाभ्युक्तम्। विभक्तारꣳ हवामहे वसोश्चित्रस्य राधसः सवितारं नृचक्षसमिति तदेतत्सर्वमायुर्दीर्घमनन्तꣳ हि तद्यदिदमाहुर्दीर्घं तऽआयुरस्तु सर्वमायुरिहीत्येष ते लोक एतत्तेऽस्त्विति हैवैतत्।

RV. १.२२.१३=YV. ८.३२; १३.३२=SB. ४.५.२.१८; ७.५.१.१०

अथाङ्गारैरभिसमूहति। मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिरिति ॥

मही द्यौः पृथिवी च न इति। महती द्यौः पृथिवी च न इत्येतदिमं यज्ञं मिमिक्षतामितीमं यज्ञमवतामित्येतत्पिपृतां नो भरीमभिरिति बिभृतां नो भरीमभिरित्येतद्द्यावापृथिव्ययोत्तमयोपदधाति द्यावापृथिव्यो हि कूर्मः ॥

RV. १.२२.१७=YV. ५.१५=SB. ३.५.३.१३; १२.४.१.४;५

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा। उपनिष्क्रामति दक्षिणया द्वारा पत्नीं निष्क्रामयन्ति स दक्षिणस्य हविर्धानस्य दक्षिणायां वर्तन्याꣳ हिरण्यं निधाय जुहोतीदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाꣳसुरे स्वाहेति सꣳस्रवं पत्न्यै पाणावानयति साक्षस्य संतापमुपानक्ति देवश्रुतौ देवेष्वाघोषतमिति प्रयच्छति प्रतिप्रस्थात्रे स्रुचं चाज्यविलापनीं च पर्याणयन्ति पत्नीमुभौ जघनेनाग्नी ॥

त्रयो ह त्वाव पशवोऽमेध्याः । दुर्वराह ऐडकः श्वा तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित्संचरेत्किं तत्र कर्म का प्रायश्चित्तिरिति तद्धैके गार्हपत्याद्भस्मोपहृत्याहवनीयान्निवपन्तो यन्तीदं विष्णुर्विचक्रमऽइत्येतयर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसंतन्मो भस्मनास्य पदमपिवपाम इति वदन्तस्तदु तथा न कुर्याद्यो हैनं तत्र ब्रूयादासान्त्वाऽअयं यजमानस्यावाप्सीत्क्षिप्रे परमासानावप्स्यते ज्येष्ठगृह्यꣳ रोत्स्यतीतीश्वरो ह तथैव स्यात् ।

इत्थमेव कुर्यात् । उदस्थालीं चैवोदकमण्डलुं वादाय गार्हपत्यादग्रऽआहवनीयान्निनयन्नियादिदं विष्णुर्विचक्रमऽइत्येतयैवर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसंतनोति यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयत्येतदेव तत्र कर्म ॥

RV. १.२२.१९=YV. ६.४; १३.३३=SB. ३.७.१.१७; ७.५.१.२५

अथैवमभिपद्य वाचयति । विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखेति वज्रं वाऽएष प्राहार्षीद्यो यूपमुदशिश्रियद्विष्णोर्विजितिं पश्यतेत्येवैतदाह यदाह विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखेतीन्द्रो वै यज्ञस्य देवता वैष्णवो यूपस्तꣳ सेन्द्रं करोति तस्मादाहेन्द्रस्य युज्यः सखेति ॥

विष्णोः कर्माणि पश्यतेति । वीर्यं वै कर्म विष्णोर्वीर्याणि पश्यतेत्येतद्यतो व्रतानि पस्पशऽइत्यन्नं वै व्रतं यतोऽन्नꣳ स्पाशयांचक्रऽइत्येतदिन्द्रस्य युज्यः सखेतीन्द्रस्य ह्येष युज्यः सखा द्विदेवत्ययोपदधाति द्वे ह्युलूखलमुसले सकृत्सादयति समानं तत्करोति समानꣳ ह्येतदन्नमेव सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ।

RV. १.२२.२०=YV. ६.५.=SB. ३.७.१.१८

अथ चषालमुदीक्षते । तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततमिति वज्रं वाऽएष प्राहार्षीद्यो यूपमुदशिश्रियत्तां विष्णोर्विजितिं पश्यतेत्येवैतदाह यदाह तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततमिति ॥

RV. १.२३.१९=YV. ९.६.=SB. ५.१.४.६

सोऽभ्युक्षति । अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिन इत्यनेनापि देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायं वाजꣳ सेदित्यन्नं वै वाजस्तेनायमन्नमुज्जयत्वित्येवैतदाह ।

RV. १.२४.८=YV. ८.२३=SB. ४.४.५.४

अथ वाचयति । उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवाऽउऽइति यथायमुरुरभयोऽनाष्ट्रः सूर्याय पन्था एवं मेऽयमुरुरभयोऽनाष्ट्रः पन्था अस्त्वित्येवैतदाह ॥

RV. १.२४.११=YV. १८.४९; २१.२=SB. ९.४.२.१७

तत्त्वा यामि ब्रह्मणा वन्दमान इति । तत्त्वा याचे ब्रह्मणा वन्दमान इत्येतत्तदाशास्ते यजमानो हविर्भिरिति तदयमाशास्ते यजमानो हविर्भिरित्येतदहेडमानो वरुणेह बोधीत्यक्रुध्यन्नो वरुणेह बोधीत्येतदुरुशꣳस मा न आयुः प्रमोषीरित्यात्मनः परिदां वदते ॥

RV. १.२४.१५=YV. १२.१२=SB. ६.७.३.८

अथ शिक्यपाशं च रुक्मपाशं चोन्मुञ्चते । वारुणो वै पाशो वरुणपाशादेव तत्प्रमुच्यते वारुण्यर्चा स्वेनैव तदात्मना स्वया देवतया वरुणपाशात्प्रमुच्यतऽउदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथायेति यथैव यजुस्तथा बन्धुरथा वयमादित्य व्रते तवानागसोऽअदितये स्यामेतीयं वाऽअदितिरनागसस्तुभ्यं चास्यै च स्यामेत्येतत् ॥

RV. १.२५.१०=YV. १०.२७; २०.२=SB. ५.४.४.५; १२.८.३.१०

अथान्तराꣳसेऽभिमृश्य जपति । निषसाद धृतव्रत इति धृतव्रतो वै राजा न वाऽएष सर्वस्माऽइव वदनाय न सर्वस्माऽइव कर्मणे यदेव साधु वदेद्यत्साधु कुर्यात्तस्मै वाऽएष च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्येषु धृतव्रतौ तस्मादाह निषसाद धृतव्रत इति वरुणः पस्त्यास्वेति विशो वै पस्त्या विक्ष्वेत्येवैतदाह साम्राज्याय सुक्रतुरिति राज्यायेत्येवैतदाह यदाह साम्राज्याय सुक्रतुरिति ॥

अथाधिरोहति। वारुण्यर्चा वरुणो वै देवानाᳪ राजा स्वयैवैनमेतद्देवतयाभिषिञ्चति निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुरिति ॥

RV. १.२७.७=YV. ६.२६=SB. ३.६.३.३२

स यद्यग्निष्टोमः स्यात्। यदि प्रचरण्याᳪ सᳪस्रवः परिशिष्टोऽलᳪ होमाय स्यात्तं जुहुयाद्यद्यु नालᳪ होमाय स्यादपरं चतुर्गृहीतमाज्यं गृहीत्वा जुहोति यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः। स यन्ता शश्वतीरिषः स्वाहेत्याग्नेय्या जुहोत्यग्निर्वाऽअग्निष्टोमस्तदग्नावग्निष्टोमं प्रतिष्ठापयति मर्तवत्या पुरुषसंमितो वाऽअग्निष्टोम एवं जुहुयाद्यद्यग्निष्टोमः स्यात्।

RV. १.३०.७=YV. ११.१४.=SB. ६.३.२.४

अथाजम्। योगे-योगे तवस्तरं वाजे-वाजे हवामहऽइत्यन्नं वै वाजः कर्मणि-कर्मणि तवस्तरमन्नेऽन्ने हवामहऽइत्येतत्सखाय इन्द्रमूतयऽइतीन्द्रियवन्तमूतयऽइत्येतत्तदजे वीर्यं दधाति।

RV. १.३६.६=YV. ११.३७=SB. ६.४.२.६; १४.१.३.१५

सᳪसीदस्व महां २॥ ऽअसीति। इदमेवैतद्रेतः सिक्तᳪ सᳪसादयति तस्माद्योनौ रेतः सिक्तᳪ सᳪसीदति शोचस्व देववीतम इति दीप्यस्व देववीतम इत्येतद्वि धूममग्नेऽअरुषं मियेध्य सृज प्रशस्त दर्शतमिति यदा वाऽएष समिध्यतऽथैष धूममरुषं विसृजते दर्शतमिति ददृशऽइव ह्येषः।

स यत्रैताᳪ होतान्वाह। सᳪसीदस्व महां २॥ ऽअसीति तदुभयतः आदीप्ता मौञ्जाः प्रलवा भवन्ति तानुपास्य तेषु प्रवृणक्ति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एता ओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति।

RV. १.३६.१३=YV. ११.४२=SB. ६.४.३.१०

अथैनमित ऊर्ध्वं प्राञ्चं प्रगृह्णाति। असौ वाऽआदित्य एषोऽग्निरमुं तदादित्यमित ऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्य इत ऊर्ध्वः प्राङ् धीयतऽऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सवितेति यथैव यजुस्तथा बन्धुरूर्ध्वो वाजस्य सनितेत्यूर्ध्वो वाऽएष तिष्ठन् वाजमन्नᳪ सनोति यदञ्जिभिर्वाघद्भिर्विह्वयामहऽइति रश्मयो वाऽएतस्याञ्जयो वाघतस्तानेतदाह परोबाहु प्रगृह्णाति परोबाहु ह्येष इतोऽथैनमुपावहरति तमुपावहृत्योपरिनाभि धारयति तस्योपरि बन्धुः॥

RV. १.४०.३=YV. ३३.८९=SB. १४.१.२.१५; १४.२.२.१

अथोत्तरतः परिश्रितं भवति । तदभिप्रयन्तो जपन्ति प्रैतु ब्रह्मणस्पतिरित्येष वै ब्रह्मणस्पतिर्य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह प्रैतु ब्रह्मणस्पतिरिति प्र देव्येतु सूनृतेति देवी ह्येषा सूनृताच्छा वीरं नर्यं पङ्क्तिराधसमित्युपस्तौत्येवैनमेतन्महयत्येव देवा यज्ञं नयन्तु न इति सर्वानेवास्मा एतद्देवानभिगोप्तॄन्करोति ।

स यत्रैताꣳ होतान्वाह । प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृतेति तदध्वर्युः प्राङुदायन्वातनामानि जुहोत्येतद्वै देवा अबिभयुर्यद्वै न इममन्तरा रक्षाꣳसि नाष्ट्रा न हन्युरिति तमेतत्पुरैवाहवनीयात्स्वाहाकारेणाजुहवुस्तꣳ हुतमेव सन्तमग्नावजुहवुस्तथो एवैनमेष एतत्पुरैवाहवनीयात्स्वाहाकारेण जुहोति तꣳ हुतमेव सन्तमग्नौ जुहोति ।

RV. १.५०.१=YV. ७.४१; ८.४१; ३३.३१=SB. ४.३.४.९; ४.६.२.२

स जुहोति । उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यꣳ स्वाहेत्येतया गायत्र्या गायत्री वा इयं पृथिवी सेयं प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ।

अथातो गृह्णात्येव । उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजायेति ।

RV. १.५०.३=YV. ८.४०=SB. ४.५.४.११

[1](अथातो गृह्णात्येव ।) अदृश्रमस्य केतवः । वि रश्मयो जनाꣳ॥ अनु । भ्राजन्तो अग्नयो यथा । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजायेति ॥

---

[1] The sentence within brackets occurs in the beginning of the ninth *mantra*, after which two *mantras*, i.e., the tenth and the eleventh, are continuously cited, without a break. Thus this sentence seems to have a connection with the eleventh *mantra* also.

RV. १.५०.१०=YV. २०.२१; २७.१०; ३५.१४; ३८.२४=SB. १२.९.२.८; १३.८.४.७; १४.३.१.२८

उद्वयं तमसस्परीति। पाप्मा वै तमः पाप्मानमेव तमोऽपहते स्वः पश्यन्त उत्तरमित्ययं वै लोकोऽद्भ्य उत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमꣳ स्वर्गऽएव लोकेऽन्ततः प्रतितिष्ठत्यनपेक्षमेत्याहवनीयमुपतिष्ठते।

उद्वयं तमसस्परीति। एतामृचं जपन्तो यन्ति तत्तमसः पितृलोकादादित्यं ज्योतिरभ्यायन्ति तेभ्य आगतेभ्य आञ्जनाभ्यञ्जने प्रयच्छन्त्येष ह मानुषोऽलङ्कारस्तेनैव तं मृत्युमन्तर्दधते।

अथ प्राङिवोदङ्ङुत्क्रामति। उद्वयं तमसस्परीति पाप्मा वै तमः पाप्मानमेव तमोऽपहते स्वः पश्यन्त उत्तरमित्ययं वै लोकोऽद्भ्य उत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमꣳ स्वर्गऽएव लोकेऽन्ततः प्रतितिष्ठत्यनपेक्षमेत्याहवनीये समिधमभ्यादधाति समिदसि तेजोऽसि तेजो मयि धेहीत्याशिषमेवैतदाशास्ते॥

RV. १.७४.१=YV. ३.११=SB. २.३.४.१०

स आह। उपप्रयन्तोऽअध्वरमित्यध्वरो वै यज्ञ उपप्रयन्तो यज्ञमित्येवैतदाह मन्त्रं वोचेमाग्नयऽइति मन्त्रमु ह्यस्माऽएतद्वक्ष्यन्भवत्यारेऽअस्मे च शृण्वतऽइति यद्यप्यस्मदारकादस्यथ न एतच्छृण्वन्वेवमेवैतन्मन्यस्वेत्येवैतदाह॥

RV. १.८२.२,३=YV. ३.५१,५२=SB. २.६.१.३८

ऐन्द्रीभ्यामाहवनीयमुपतिष्ठन्ते। इन्द्रो ह्याहवनीयोऽक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी॥ सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि। प्र नूनं पूर्णबन्धुर स्तुतो यासि वशाँ२॥ऽअनु योजा न्विन्द्र ते हरीऽइति।

RV. १.८४.३=YV. ८. ३३=SB. ४.५. ३.६

अथातो गृह्णात्येव । आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिनऽएष ते योनिरिन्द्राय त्वा षोडशिनऽइति ।

RV. १.८४.१६=YV. ६.३७=SB. ३.६.४.२४

तत्रैतामपि वाचमुवाद । त्वमङ्ग प्रशꣳसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वच इति मर्त्यो हैवैतद्ब्रुवन्नुवाच त्वमेवेतो जनयितासि नान्यस्त्वदिति ॥

RV. १.८६.१=YV. ८.३१.=SB. ४.५.२.१७

स हुत्वैव समिष्टयजूꣳषि । प्रथमावग्रान्तेष्वङ्गारेष्वेतꣳ सोष्णीषं गर्भमादत्ते तं प्राङ् तिष्ठन्जुहोति मारुत्यऽर्चा मरुतो यस्य हि क्षये पाथा दिवो विमहसः स सुगोपातमो जन इति न स्वाहाकरोत्यहुतादो वै देवानां मरुतो विडहुतमिवैतद्यदस्वाहाकृतं देवानां वै मरुतस्तदेनं मरुत्स्वेव प्रतिष्ठापयति ।

RV. १.८९.९=YV. २५.२२=SB. २.३.३.६

तस्मादेतदृषिणाभ्यनूक्तꣳ शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोरिति पुत्रो ह्येष सन्त्स पुनः पिता भवत्येतन्नु तद्यस्मादग्नीऽआदधीत ॥

RV. १.९०.६=YV. १३.२७=SB. ७.५.१.४; १४. ६.३.११

मधु वाता ऋतायतऽइति । यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सऽर्क्सो देवता तद्यजुस्तद्वैतन्मध्वेवैष त्रिचो रसो वै मधु रसमेवास्मिन्नेतद्दधाति गायत्रीभिस्तिसृभिस्तस्योक्तो बन्धुः ॥

अथैनमाचामति । तत्सवितुर्वरेण्यम् । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीनः सन्त्वोषधीः भूः स्वाहा ॥

RV. १.९०.७=YV. १३.२८=SB. १४.९.३.१२

भर्गो देवस्य धीमहि । मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः मधु द्यौरस्तु नः पिता भुवः स्वाहा ।

RV. १.६०.८=YV. १३.२६=SB. १४.६.३.१३

धियो यो नः प्रचोदयात् । मधुमान्नो वनस्पतिर्मधुमाँ२॥ ऽअस्तु सूर्यः माध्वीर्गावो भवन्तु नः स्वः स्वाहेति सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीः सर्वाश्च व्याहृतीरहमेवेदꣳ सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य प्रक्षाल्य पाणी जघनेनाग्निं प्राक्शिराः संविशति ।

RV. १.६१.१६,१८; ६.३१.४=YV. १२.११२,११३.=SB. ७.३.१.४६

आप्यायस्व समेतु ते । विश्वतः सोम वृष्ण्यमिति रेतो वै वृष्ण्यमाप्यायस्व समेतु ते सर्वतः सोम रेत इत्येतद्भवा वाजस्य संगथऽइत्यन्नं वै वाजो भवान्नस्य संगथऽइत्येतत्सं ते पयाꣳसि समु यन्ति वाजा इति रसो वै पयोऽन्नं वाजाः सं ते रसाः समु यन्त्वन्नानीत्येतत्सं वृष्ण्यान्यभिमातिषाह इति सꣳरेताꣳसि पाप्मसह इत्येतदाप्यायमानोऽअमृताय सोमेति प्रजात्यां तदमृतं दधाति तस्मात्प्रजातिरमृता दिवि श्रवाꣳस्युत्तमानि धिष्वेति चन्द्रमा वाऽअस्य दिवि श्रव उत्तमꣳ स ह्येनममुष्मिँल्लोके श्रावयति द्वाभ्यामाप्याययति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ।

RV. १.६१.१६=YV. ४.३७=SB. ३.३.४.३०

अथैनꣳ शालां प्रपादयति । स प्रपादयन्वाचयति या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यानिति गृहा वै दुर्या गृहान्नः शिवः शान्तोऽपापकृत्प्रचरेत्येवैतदाह ॥

RV. १.६८.२=YV. १८.७३.=SB. ६.५.२.६.

वैश्वानरो न ऊतये । पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यामिति वैश्वानरीभ्यां वृतीयाभ्यामेतद्वै देवा वैश्वानरेण पाप्मानं दग्ध्वापहतपाप्मान एतत्कर्माकुर्वत तथैवैतद्यजमानो वैश्वानरेण पाप्मानं दग्ध्वापहतपाप्मैतत्कर्म कुरुते ।

RV. १.१०७.१=YV. ८.४; ३३.६८=SB. ४.३.५.१५

स गृह्णाति । यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासदादित्येभ्यस्त्वेति ।

RV. १.११२.२४=YV. ३४.२६=SB. १४.१.३.३३

स यत्रैताᳬं होतान्वाह । अप्नस्वतीमश्विना वाचमस्मेऽइति तदध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्म इति स यदि रुचितः स्याच्छ्रेयान्यजमानो भविष्यतीति विद्यादथ यद्यरुचितः पापीयान्भविष्यतीति विद्यादथ यदि नैव रुचितो नारुचितो नैव श्रेयान्न पापीयान्भविष्यतीति विद्याद्यथा न्वेव रुचितः स्यात्तथा भवितव्यः ॥

RV. १.११५.१=YV. ७.४२; १३.४६=SB. ४.३.४.१०; ७.५.२.२७

अथ द्वितीयां जुहोति । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवीऽअन्तरिक्षᳬं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहेत्येतया त्रिष्टुभा लोकमेवैतयोपप्रैति ।

RV. १.१३९.११=YV. ७.१९=SB. ४.२.२.९

अथातो गृह्णात्येव । ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ।

RV. १.१४७.२=YV. १२. ४२=SB. ६.८.२.९

बोधा मेऽअस्य वचसो यविष्ठेति । बोध मेऽस्य वचसो यविष्ठेत्येतन्मᳬंहिष्ठस्य प्रभृतस्य स्वधाव इति भूयिष्ठस्य प्रभृतस्य स्वधाव इत्येतत्पीयति त्वोऽअनु त्वो गृणातीति पीयत्येकोऽन्वेको गृणाति वन्दारुष्टे तन्वं वन्देऽअग्नऽइति वन्दिता तेऽहं तन्वं वन्देऽग्नऽइत्येतत्

RV. १.१५४.१=YV. ५.१८=SB. ३.५.३.२१

अथोत्तरेण पर्येत्याध्वर्युः । दक्षिणᳬं हविर्धानमुपस्तभ्नाति विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाᳬंसि । योऽअस्कभायदुत्तरᳬं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वेति मेथीमुपनिहन्तीतरुतस्ततो यद्ध च मानुषे ॥

RV. १.१५४.२=YV. ५.२०=SB. ३.५.३.२३

अथ मध्यम छदिरुपस्पृश्य वाचयति । प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि

विश्वेतीदꣳ हैवास्यैतच्छीर्षकपालं यदिदमुपरिष्टादधीव ह्येतच्चियन्त्यन्यानि शीर्षकपालानि तस्मादाहाधिचियन्तीति ॥

RV. १.१६२.१,१८=YV. २५.२४,४१=SB. १३.५.१.१८

[1]एतेऽउद्धृत्य । मा नो मित्रो वरुणो अर्यमायुरित्येतत्सूक्तमध्रिगावावपति चतुस्त्रिंशद्वाजिनो देवबन्धोरित्यु हैकऽएतां वङ्क्रीणां पुरस्ताद्दधति नेदनायतने प्रणवं दधामेत्यथो नेदेकवचनेन बहुवचनं व्यवायामेति न तथा कुर्यात्सार्धमेष सूक्तमावपेदुप प्रागाच्छसनं वाज्यर्वोप प्रागात्परमं यत्सधस्थमिति ॥

RV. १.१६२.२१=YV. २५.४४.[2]=SB. १३.२.७.१२

न वाऽउऽएतन्म्रियसे न रिष्यसीति । प्रश्वासयत्येवैनं तद्देवाँ२॥ऽइदेपि पथिभिः सुगेभिरिति देवयानानेवैनं पथो दर्शयति यत्रासते सुकृतो यत्र ते ययुरिति सुकृद्भिरेवैनꣳ सलोकं करोति तत्र त्वा देवः सविता दधात्विति सवितैवैनꣳ स्वर्गे लोके दधाति प्रजापतये त्वा जुष्टं प्रोक्षामीत्युपाꣳश्वथोपगृह्णाति ॥

RV. १.१६३.१=YV. २९.१२=SB. १३.५.१.१७

यदक्रन्दः प्रथमं जायमान इति । त्रिः प्रथमया त्रिरुत्तमया ताः पञ्चदश सम्पद्यन्ते पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते तद्वै यजमानायैव वज्रः प्रदीयते योऽस्य स्तृत्यस्तꣳ स्तर्वऽउप प्रागाच्छसनं वाज्यर्वोप प्रागात्परमं यत्सधस्थमिति ॥

RV. १.१६३.१२,१३[3]=YV. २९.२३,२४=SB. १३.५.१.१७; १८

---

[1] This is the explanation of four stanzas, i.e. YV. २५.२४,४१; २९.२३,२४.

[2] The first hemistich of this stanza occurs twice in the YV., i.e., 25.16; 25.44. In the ŚB., the stanza 25.16. *in toto* is explained.

[3] The commentary of the Śatapatha-Brāhmaṇa on these two stanzas of the Ṛgveda has already been quoted above, on this page, Lines 16-19, and 4-8 respectively.

## APPENDIX II

Extracts from the commentaries of Uvaṭa and Mahīdhara on such stanzas of the first one hundred and twenty-one hymns of the first *Maṇḍala* of the RV. as occur in the *Mādhyandinī* recension of the *Śuklayajurveda.*

[1] RV.1.1.7=YV.3.22

उपेत्ययमुपसर्ग एमसीत्यनेनाख्यातपदेन सह सम्बध्यते। इमसीति सिद्धे छन्दसि वर्तमानार्थे मस्। लिटि 'इदन्तोमसि' (पा० ७।१।४६) इति रूपम्। उपेम उपेयाम उपगच्छामः त्वाम्। हे अग्ने! अहन्यहनि। हे दोषा-वस्तः! दोषेति रात्रिनाम। 'वस निवासे' रात्र्यां वसनशीलो दोषावस्ता तस्य सम्बोधनं हे दोषावस्तः! 'अग्नौ ह वै देवाः' इत्युपक्रम्य 'तौ सङ्गृह्य रात्रिं प्रविवेश' इति यदनेनेतिहासेनोच्यते तदयं मन्त्रो दृष्ट्वाह दोषावस्तरिति। बुद्ध्या प्रोक्तम्। यतमनस्काः श्रद्दधाना वयम्। नमोभरन्तः। नम इत्यन्न-नाम। अन्नं बिभ्रतः उप आ इमसीत्याख्यातपदं व्याख्यातमेव। U.

'गार्हपत्यं गत्वोपतिष्ठत उप त्वेतीति' (का० ४।१२।७) तिस्रो गायत्र्य आग्नेय्यो मधुमच्छन्दोदृष्टाः। हे दोषावस्तः! हे अग्ने! दोषा रात्रिस्तस्यामपि वसति अजस्रं धार्यमाणत्वान्नोपशाम्यतीति दोषावस्ता। यद्वा अग्नौ ह देवाः! इत्युपक्रम्य तैः सङ्गृह्य रात्रिं प्रविवेशेतीतिहासेन अग्ने रात्रौ प्रवेश उक्तस्तमयं मन्त्र आह। हे दोषावस्तः! रात्रौ वसनशील! गार्हपत्य! प्रतिदिनं वयं यजमानाः, त्वां प्रत्यागच्छामः। इदन्तोमसि (पा० ७।१।४६)। किम्भूता वयम्? श्रद्धायुक्तया बुद्ध्या नमस्कारं सम्पादयन्तः। यद्वा नम इत्यन्ननाम (निघ० २।७।२१)। अन्नं हविर्बिभ्रतः। Mah.

---

[1] Yajurveda adds the words संᳬहितासि विश्वरूप्यूर्जामाविश गौपत्येन in the beginning, to the stanza of the RV.

RV.1.1.8; 45.4=YV.3.23

अस्मिन्मन्त्रे आख्यातं नाम्नातमतोऽधस्तनमन्त्रे यदाख्यातं तदनुवर्तते। दीप्यमानम्। यज्ञानां गोप्तारम्। सत्यस्य दीपयितारम्। अग्निसमीपे व्रतं गृहीत्वा सत्यं वदति तदभिप्रायमेतत्। वर्धमानं चातुर्मास्यपशुसोमैः। स्वकीये यज्ञगृहे। दम इति गृहनाम। दाम्यन्ति हि गृहस्थाः। उप आ इमसीत्यनुवर्तते। U.

क्रियापदमनुवर्तते। वयमीदृशमग्निमुपैमः। कीदृशम्? दीप्यमानम्। अध्वराणां गोपां गोपायतीति गोपास्तं यज्ञानां गोप्तारम्। सत्यवचनलक्षणस्य व्रतस्य दीपयितारम्। अग्निसमीपे व्रतं गृहीत्वा सत्यं वदतीत्याशयः। अस्मदीये गृहे वर्धमानं चातुर्मास्यसोमपश्वादिभिरभिवृद्धिं गच्छन्तम्। दाम्यन्ति गृहस्था यत्रेति दमो गृहम्। दिवेः क्विप्रत्ययो बाहुलकात्। लिड्वद्भावाद् द्वित्वम्। 'तुजादीनां दीर्घोऽभ्यासस्य' (पा० ६।१।७) इत्यभ्यासदीर्घः। देवयतीति दीदिविः। Mah.

RV.1.1.9=YV.3.24

यस्त्वमुक्तगुणः सोऽस्माकं पिता इव पुत्राय हे भगवन्नग्ने! सुखोपगमनो भव। किञ्च सेवस्व अस्मान् स्वस्तये अविनाशाय। U.

हे अग्ने! गार्हपत्य! स पूर्वोक्तगुणयुक्तस्त्वम्, अस्माकं सूपायनो भव। सुखेनोपैतुं शक्यः सूपायनः। सुष्ठुप्राप्तुं शक्यो भव। तत्र दृष्टान्तः। यथा पुत्राय पिता भयं विना सुखेन प्राप्तुं शक्यः। किञ्च नोऽस्माकं क्षेमाय अनेन कर्मणा समवेतो भव। 'षच समवाये' इति धातुः। यद्वा सेवस्व। 'षच सेवने'। Mah.

[1] RV.1.2.4=YV.7.8.; 33.56

द्वितीया पुरोरुक्। इन्द्रवायू। वायवी गायत्री। हे इन्द्रवायू! इमे अभिषुताः सोमा अतः कारणात् उप प्रयोभिरागतम्। उपेत्ययमुपसर्ग आगतमित्यनेन सम्बध्यते। उपगच्छतम्। प्रयःशब्दः 'इण् गतौ' इत्यस्य

---

[1] The YV. adds in both places उपयाम गृहीतोसि वायवे इन्द्रवायुभ्यां त्वा। एष ते योनिः सजोषोभ्यां त्वा। to the stanza of the RV.

धातोः शतृप्रत्ययान्तस्य रूपम्। 'इणो यण्' (पा० ६।४।८१) इति यणादेशः। भिस्। ततस्तकारस्य छान्दसः सकारः। ततो रुत्वादि, ततः प्रपूर्वस्य प्रयोभिरिति सिध्यति। प्रयद्भिरश्वैः शीघ्रैरागच्छतम्। किञ्च। इन्दवो वामुशन्ति हि। हिशब्दो यस्मादर्थे। यस्मात्सोमा युवाम् उशन्ति। 'वश कान्तौ'। कामयन्ते। U.

'अपगृह्य पुनरिन्द्रवायू इतीति' (का० ९।६।६) एकवारमर्धमादाय पृथक्कृत्य पुनरैन्द्रवायवं गृह्णाति। ऐन्द्रवायवी गायत्री मधुच्छन्दोदृष्टा। उपयामेति यजुःसहितो मन्त्रः। हे इन्द्रवायू! युष्मदर्थं इमे सोमा अभिषुताः। प्रय इत्यन्ननाम। प्रयोभिः एतैः सोमरसरूपैरन्नैर्निमित्तैरुप समीपे युवामागच्छतम्। यद्वा प्रयःशब्द 'इण् गतौ' इति धातोः शतृप्रत्ययान्तस्य रूपम्। प्रैतीति प्रयन्। 'इणो यण्' (पा० ६।४।८१) तस्य भिसि परे तकारस्य छान्दसः सकारः, तस्य रुत्वादौ प्रयोभिरिति सिध्यति। प्रयोभिः प्रयद्भिः शीघ्रैरश्वैरागच्छतम्। हि यस्मादिन्दवः सोमा युवां कामयन्ते तस्मादागच्छतम् इत्यर्थः। Mah.

RV.1.2.7=YV.33.57

द्वे गायत्र्यौ मित्रमाह्वयामि। पूतस्य शुद्धस्य प्राणिन उद्धरणे दक्षं सोमम्। वरुणञ्च। हिंसकादिविनाशने शक्तिं कुर्वाणं हुवे। कीदृशः? धियं कर्म। घृताचीं येन कर्मणा घृतमच्यते हूयते तत्कर्म। साधयन्तौ। नहि देवतामन्तरेण कर्मसिद्धिः। U.

द्वे मधुच्छन्दोदृष्टे गायत्र्यौ, आद्या लिङ्गोक्तदेवत्या। मित्रं वरुणं चाहम्, आह्वयामि। कीदृशम्? पूतदक्षं पूतं पवित्रं सदाचारं दक्षयति धनपुत्रादिभिर्वर्धयति तम्। 'दक्ष वृद्धौ शीघ्रार्थे च धातुपाठः) इत्यस्माण्णिजन्तात्कर्मण्यण्। रिशादसम्। रिशन्ति हिंसन्ति रिशा दुष्टाः तान् समन्तादसति नाशयति तम्। 'रिश हिंसायाम्' 'दस उपक्षये'। द्वयोर्विशेषणे। कीदृशावुभौ? धियं कर्म साधयन्तौ। कीदृशीं धियम्? घृताचीम् घृतमच्यते हूयते यत्र ताम्। Mah.

[1]RV.1.3.3=YV.33.58

द्वयोरश्विनोरेकस्य दस्र इति नाम अपरस्य नासत्य इति। तत्रायं

---

[1] The YV. adds तं प्रत्नथायं वेनः at the end, to the stanza of the RV.

विभक्त्यर्थे आकारो विरूपैकशेषे वर्तते। 'गुणो यङ्लुकोः' ( पा० ७।४।८२ ) इति च पाणिनिर्दर्शयति। हे दस्रौ! दर्शनीयौ! हे नासत्यौ! न असत्यौ सत्यावेव! 'न आण्नपात्' ( पा० ६।३।७५ ) इति प्रकृतिभावः। युवाकवः युवां कामयमानाः अहमहमिकया मां पिबतं मां पिबतमिति। सुता अभिपुताः। प्रस्तीर्णबर्हिषः। यतः अतो ब्रवीमि आगच्छतम्। हे रुद्रवर्तनी! रुद्रस्येव वर्तनिर्ययोस्तौ तथोक्तौ रुद्रपन्थानौ। U.

आश्विनौ द्वयोरश्विनोरेकस्य दस्र इति नामापरस्य नासत्य इति। हे दस्रौ! दर्शनीयौ! हे नासत्यौ! न असत्यौ!। सत्यवादिनावित्यर्थः। युवामागच्छतम्। यतः अभिषुताः सोमा इति शेषः। कीदृशाः सोमाः? युवां कामयन्ते ते युवाकवः मां पिबतमितीच्छन्तः। यद्वा युवन्ति अश्नौ मिश्रीभवन्ति युवाकवः 'कटिकुषिभ्यां काकुः' (उणा० ३।७६) इति बहुलग्रहणात्काकुप्रत्ययः। वृक्तबर्हिषः वृक्तं बर्हिर्यत्र ते। कीदृशौ युवाम्? रुद्रस्येव वर्तनिः पन्था ययोस्तौ रुद्रवद्गमनशीलौ। Mah.

RV.1.3.4=YV.20.87

हे इन्द्र! आगच्छ, हे चित्रदीप्ते! किं कारणम्? अभिषुताः इमे सोमाः। त्वायवः त्वां कामयमानाः। 'सुप आत्मनः क्यच्' ( पा० ३।१।८ ) 'क्याच्छन्दसि' ( पा० ३।२।१७० ) इति त्वायव इति सिद्धम्। न चाभिषुता एव केवलम्। किन्तर्हि? अण्वीभिः स्तना पूतासः। अण्व्य इत्यङ्गुलिनाम। अङ्गुलीभिः तना च धनदानेन च पूताः पवित्रीकृताः। यद्वा तनाशब्देन दशापवित्रमभिधाय अङ्गुलीभिर्दशापवित्रेण च पूता इत्यर्थः। U.

मधुच्छन्दोदृष्टा इन्द्रदेवत्यास्तिस्रो गायत्र्यः। चित्रा नानाविधा भानवो दीप्तयो यस्य स चित्रभानुः। हे चित्रभानो! इन्द्र! त्वमायाहि आगच्छ। किमिति? इमे सोमा अभिषुताः। कीदृशा इमे? त्वां कामयन्ते त्वायवः। 'सुप आत्मनः क्यच्' (पा० ३।१।८) 'क्याच्छन्दसि' (पा० ३।२।१७०) इत्युप्रत्ययः। तथा अण्वीभिः अण्वीत्यङ्गुलिनाम। अङ्गुलीभिःतना दशापवित्रेण च पूतासः पूताः शोधिताः। तनाशब्दो दशापवित्रवाची। तृतीयैकवचनस्य पूर्वसवर्णः। शोधिताः सोमा इन्द्रोऽस्मान् पिबत्विति कामयन्ते। अतोऽत्रायाहीत्यर्थः। Mah.

RV.1.3.5=YV.20.88

हे इन्द्र ! आगच्छ । स्वकीयया बुद्ध्या प्रेषितः । अनन्यप्रेषित इत्यभिप्रायः । विप्रजूतः जूतिर्ग्रन्थिः प्रीतिर्वा । मेधाव्यनुगतः । अभिषुतवतो यजमानस्य यज्ञम् । किमित्यागन्तव्यमिति चेत् ? उप समीपे ब्रह्माणि हवींषि वर्तन्ते । उपपुरोडाशानृत्विजो वर्तन्त इत्यर्थः । वाघत इति ऋत्विङ्नामसु पठितम् । U.

हे इन्द्र ! स्वबुद्ध्या प्रेरितः सन्नायाहि । अनन्यप्रेरित आगच्छेत्यर्थः । कीदृशस्त्वम् ? विप्रजूतः । 'जु गतौ' विप्रैर्मेधाविभिरनुगतः सेवितः । किमित्यागन्तव्यमिति चेत् ? सुतावतः । छान्दसो दीर्घः । सोममभिषुतवतो यजमानस्य ब्रह्माणि हवींषि उप हविषां समीपे वाघतः ऋत्विजो वर्तन्त इति शेषः । वाघत इति ऋत्विङ्नामसु पठितम् । ऋत्विजो हविरादाय स्थिता वर्तन्त इत्यायाहीत्यर्थः । Mah.

RV.1.3.6=YV.20.89

हे इन्द्र ! आगच्छ । तूतुजानः । तूतुजान इति क्षिप्रनाम । क्षिप्रं त्वरमाणः । कुत्र आगच्छ इति ? उपब्रह्माणि हवींषि । हे हरिवः ! हरी अश्वौ तद्वन् इन्द्र ! 'मतुवसो रुःसम्बुद्धौ' ( पा० ८।३।१ ) इति रुत्वम् । एत्य च अभिषुते सोमे उदरेण धारयस्व । अस्माकं स्वभूतं चनः अन्नलक्षणम् । U.

हरी अश्वौ विद्येते यस्य स हरिवान् । 'मतुवसो रुःसम्बुद्धौ छन्दसि' ( पा० ८।३।१ ) इति रुत्वम् । हे हरिवः ! अश्ववन् ! हे इन्द्र ! तूतुजानः त्वरमाणः सन् त्वं हवींषि प्रति आयाहि । तूतुजान इति क्षिप्रनाम । आगत्य सोमे अभिषुते सति अस्माकम् अन्नं सोमरूपं हविः उदरे धारय । 'धि धारणे' व्यत्ययेन शपो लुकि द्वित्वं जुहोत्यादित्वादभ्यासस्यात्वं छान्दसम् । चन इत्यन्ननाम । Mah.

[1] RV.1.3.7=YV.7.33; 33.47

वैश्वदेवं गृह्णाति । ओमासः वैश्वदेवी गायत्री । हे ओमासः ! अवितारः !

---

[1] In 7.33. YV. adds उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः । at the end, to the stanza of the RV. A fragment ओमासश्चर्षणीधृतो of the Ṛgvedic stanza is borrowed by YV. 33.47.

तर्पयितारः ! तर्पणीयाः ! वा । चर्षणीधृतःचर्षणयो मनुष्यास्तान् धारयन्ति तैर्वा ध्रियन्ते चर्षणीधृतः । विश्वेदेवास आगत । हे विश्वेदेवाः ! ये यूयम् । ओमासः अवितारो रक्षितारः । चर्षणीनां मनुष्याणाम् । तेनोपकारेणावनीया वा तर्पणार्हा धारयितारश्च संवित्तिकर्तारः ते यूयम् । चेतसा दत्तवन्तः कृतसंकल्पा भूत्वा इदं नामास्माभिरस्मै देयमिति ततोऽस्य दाशुषः दत्तवतो यजमानस्यैतमभिषुतं सोमं पातुमागच्छत इत्येवमाशास्महे । हे विश्वेदेवाः ! इहागच्छत । कथम्भूताः ? दाश्वांसः, 'दाशृ दाने' दाश्वानिति निपात्यते । दत्तवन्तो यजमानस्य कामान् । किमर्थं पुरस्कृत्यागच्छत ? दाशुषः सुतं हवींपि दत्तवतो यजमानस्याभिषुतं सोमं पातुम् । U.

'वैश्वदेवं गृह्णाति शुक्रपात्रेण द्रोणकलशादन्वारब्धेवौमास इति (का० ६।१४।१ ) अध्वर्यौ यज्वना स्पृष्टेऽस्पृष्टे वा सति द्रोणकलशाच्छुक्रपात्रेण वैश्वदेवं ग्रहं गृह्णीयात् । वैश्वदेवी गायत्री मधुच्छन्दोदृष्टा । हे विश्वेदेवाः ! यूयमागच्छत । किम्भूता यूयम् ? ओमाः 'अवन्तीत्योमा रक्षितारः अवितारो वावनीया वा' (नि० १२।४०) इति यास्कोक्तेः । तर्पयितारस्तर्पणीया वा । अवतेर्मन्प्रत्ययः सम्प्रसारणञ्च । तथा चर्षणयो मनुष्यास्तान् धरन्ति पुष्णन्ति तैर्वा ध्रियन्ते ते चर्षणीधृतः । चर्षणिशब्दस्य संहितायां दीर्घः । अनिष्टनिरसनं रक्षणम् इष्टप्रापणं पोषणम् इत्यवनधरणयोर्भेदः । तथाभिषुतं सोमं दत्तवतो यजमानस्य फलं दत्तवन्तः । कामान् पूरयन्त इत्यर्थः । यद्वा सुतं सोमं पातुमिति शेषः । 'दाश्वान्'–(पा० ६।१।१२) इत्यादिना निपातः । Mah.

RV.1.3.10=YV.20.84

पावयित्री । सरस्वती । अन्नैः । अन्नवती । सास्माकं यज्ञं कामयताम् । यो हि यदिच्छति स तत्प्रति गच्छति । धिया वसु धनं यस्याः सा धियावसुः । U.

मधुच्छन्दोदृष्टाः सरस्वतीदेवत्यास्तिस्रो गायत्र्यः । सरस्वती अस्माकं यज्ञं कामयताम् । 'वश कान्तौ' यो हि यदिच्छति स तत्प्रति गच्छति । अस्मद्यज्ञं प्रत्यागच्छत्वित्यर्थः । कीदृशी सरस्वती ? पावका पावयित्री । पवनं पावः शोधनं घञ् पावं कायति कथयति पावका 'आतोऽनुपसर्गे कः' (पा० ३।२।३) । वाजेभिरन्नैः । वाजा अन्नानि विद्यन्ते यस्यां सा वाजिनी यज्ञक्रिया, वाजिनी विद्यते यस्याः सा वाजिनीवती यज्ञक्रियाधिष्ठात्री । धिया कर्मणा वसु धनं यस्याः सा धियावसुः । छान्दसस्तृतीयाया अलुक् । Mah.

RV.1.3.11=YV.20.85

प्रेरयित्री। शोभनानामृतां वचसाम्। त्रयीलक्षणस्य वाग्विभवस्य चोदयित्रीत्यर्थः। चेतयमाना शोभनमतीनाम्। यज्ञं धारयति सरस्वती। U.

सरस्वती यज्ञं धारयति। कीदृशी? प्रियं सत्यं सूनृतम्। प्रियसत्यवचनानां वेदत्रयीशब्दानां प्रेरयित्री। 'चुद प्रेरणे' णिजन्तात्तृच् ततो ङीप्। शोभनानां बुद्धीनां चेतयन्ती प्रकटयन्ती। सुमतिदात्रीत्यर्थः। 'छन्दस्युभयथा' (पा० ३।४।११७) इति शपोऽप्यार्धधातुकत्वाण्णिचो लोपः। Mah.

RV.1.3.12=YV.20.86

या महत् अर्णः महान्तमुदकमित्यर्थः। सरस्वती प्रज्ञापयति। केन हेतुना? कर्मणा प्रज्ञया वा। मध्यस्थाना नदी वा। धियो बुद्धीः। सर्वाः सर्वप्राणिष्ववस्थिताः। विराजति। राजतिर्दीप्त्यर्थः, अन्तर्भावितण्यर्थश्च द्रष्टव्यः। विविधं दीपयति प्रकाशयति। तां वयं स्तुम इति शेषः। U.

सरस्वती कर्मणा प्रज्ञया वा महदुदकं प्रज्ञापयति प्रेरयति। सर्वस्यां भूमौ वृष्टिं कारयतीत्यर्थः। किञ्च सर्वाः धियः सर्वप्राणिस्थाः बुद्धीः। विराजयति दीपयति। सर्वजन्तुबुद्धीः प्रकाशयति तां स्तुमः। Mah.

RV.1.6.1=YV.23.5

अश्वं युनक्ति। युञ्जन्ति ब्रध्नम्। अश्वोऽत्रादित्यवत् स्तूयते उत्तरोऽर्धर्चः प्रथमं व्याख्यायते। यस्य भासा रोचन्ते देदीप्यन्ते रोचनाः रोचनानि दीप्तानि चन्द्रग्रहतारकादीनि। दिवि द्युलोके। तं रथे बध्नन्ति। कथम्भूतम्? ब्रध्नम् परिवृढम् आदित्यम्। अरोषणम्। गच्छन्तं वैदिककर्मसिद्ध्यर्थम्। के युञ्जन्ति? परितस्थुषः सर्वतः स्थिता ऋत्विग्यजमानाः। U.

'युनक्त्येनं युञ्जन्ति ब्रध्नमिति' (का० २०।५।११) अश्वं रथे युनक्ति। मधुच्छन्दोदृष्टा आदित्यदेवत्या गायत्री। तस्थुषः। विभक्तेर्व्यत्ययः। तस्थिवांसः कर्मार्थं स्थिता ऋत्विजः ब्रध्नमादित्यं रथे योजयन्ति। अश्व आदित्यत्वेन स्तूयते। 'असौ वा आदित्यो ब्रध्नोऽरुषोऽमुमेवास्मा आदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै' (१३।२।६।१) इति श्रुतेः। किम्भूतं ब्रध्नम्? अरुषम् रोषति क्रुध्यति रुषः 'इगुपध-' (पा० ३।१।१३५) इति कः। न रुषः अरुषः तं क्रोधरहितम्। परिचरन्तं वैदिककर्मसिद्ध्यर्थं सर्वत्र गच्छन्तम्। यस्य

नभस्य रोचना। विभक्तिलोपः। दीप्तयो दिवि आकाशे रोचन्ते प्रकाशन्ते। यद्वा रोचनानि दीप्तानि चन्द्रग्रहतारकादीनि नभस्य भासा रोचन्ते 'तेजसां गोलकः सूर्यो नक्षत्राण्यम्बुगोलकाः' इति ज्योतिःशास्त्रोक्तेः। Mah.

RV.1.6.2=YV.23.6

इतराश्वं युनक्ति। गायत्री। युञ्जन्ति रथे अस्याश्वमेधिकस्याश्वस्य काम्यौ कामसम्पादिनौ। न ह्येको रथं वोढुं शक्तः। हरी हरितवर्णावश्वौ हरिणौ वा वेगवन्तौ। विविधाः पक्षसः पक्षा ययोस्तौ विविधपक्षावस्थितौ। यद्वा विरिति शकुनिनाम वेतेर्गतिकर्मणः। वेः शकुनेरिव पक्षौ ययोस्तौ। शोणौ। शोणशब्दोऽत्र वर्णवचनः। रक्तो वर्णो धूम्रभासः शोण इत्युच्यते। प्रसहनौ। नृणां मनुष्याणां वोढारौ। U.

'इतरांश्च युञ्जन्त्यस्येति' ( का० २०।५।११ ) इतरान् त्रीन् अश्वान् रथे युनक्ति। गायत्री अश्वस्तुतिः। ऋत्विजो हरी अश्वौ रथे युञ्जन्ति। कीदृशौ ? अस्याश्वमेधिकाश्वस्य काम्यौ काम्येते तौ काम्यौ कामसम्पादिनौ न त्वेको वोढुं शक्त इति तौ काम्यौ। विपक्षसा-'पक्ष परिग्रहे' असुन्प्रत्ययः। पक्षयन्ति शरीरं गृह्णन्ति पक्षसः पक्षा विविधाः पक्षसः पक्षा ययोस्तौ विपक्षसौ। यद्वा विरिति शकुनिनाम "वेतेर्गतिकर्मणः" ( निरु० २।६ ) इति यास्कः। वेः पक्षिण इव पक्षसो ययोस्तौ। शोणौ रक्तौ। धृष्णू प्रगल्भौ 'ञिधृषा प्रागल्भ्ये' क्नुप्रत्ययः। नृवाहसा नॄन् वहतस्तौ। वहेरसुन्प्रत्ययः। सर्वत्र विभक्तेराकारः। नृणां वोढारौ। Mah.

RV.1.6.3=YV.29.37

इत उत्तरमश्वरक्षिणो योद्धारः युद्धोपकरणानि च स्तूयन्ते प्रागाग्नेय इति श्रुतेः। आग्नेयी गायत्री अनिरुक्ता। प्रज्ञानं कुर्वन्। न विद्यते केतु प्रज्ञानं यस्य तस्मै अकेतवे। पेशः सुवर्णं रूप्यं वा। मर्याः मययिति विभक्तिव्यत्ययः मनुष्याय। अपेशसे न विद्यते पेशः यस्य तस्मै अविद्यमानसुवर्णाय। अविद्यमानरूप्याय वा पेशः कुर्वन्। समुषद्भिरजायथाः हे अग्ने! उषद्भिः। 'उष दाहे' अग्निहोत्रादीनि कर्माणि कुर्वद्भिः। जायमानः सन् जन्मना जातेर्वा। वसतेर्वा कृतसम्प्रसारणस्यैतद्रूपम्। उषद्भिः अग्निं प्रति निवसद्भिः जायमानः सन् समजायथाः उत्पद्यसे। U.

अग्निदेवत्या गायत्री मधुच्छन्दोदृष्टा निरुक्ता। हे अग्ने! त्वमुपद्भिः कृत्वा अजायथाः उत्पन्नोऽसि। जनेर्लङि रूपम्। 'उप दाहे' उपन्ति हविर्दहन्ति ते उपन्तोऽग्निहोमकर्तारो यजमानाः। कीदृशस्त्वम्? अज्ञानाय मर्याय मनुष्याय ज्ञानं कुर्वन्। विभक्तिव्यत्ययः। नास्ति पेशः सुवर्णं यस्य स अपेशाः तस्मै अपेशसे मर्याय पेशः सुवर्णं कुर्वन्। Mah.

RV.1.9.1=YV.33.25

हे इन्द्र! आ इहि आगच्छ। एत्य च मत्सि, तृप्तिं कुरु, अध्यानीयस्य सोमलक्षणस्यान्नस्य स्वेनांशेन। ततोऽपि सर्वैः सोमयागकालैर्निमित्तभूतैः। आ इहि। यद्वा सर्वसवनगतैः सोमांशुभिः निमित्तभूतैः। कस्मात्पुनस्त्वमेवमस्माभिः प्रार्थ्यसे? इत्यत आह। यतो महानसि। अन्वेषणशीलश्च शत्रूणामभियष्टव्यो वा। ओजसा स्वकीयेन बलेन। U.

मधुच्छन्दोदृष्टा गायत्री वैश्वदेवपुरोरुक् ओमास इत्यस्याः (७।३३) स्थाने। इन्द्र आ इहि। 'ओमाङोश्च' (पा० ६।१।९५) इति पररूपम्। हे इन्द्र! आगच्छ। आगत्य अन्धसान्नेन हविर्लक्षणेन। विश्वैः सर्वैः सोमांशुभिश्च। त्वं मत्सि तृप्यस्व। 'मद तृप्तौ' शपो लुक्। कीदृशः त्वम्? तेजसा महान् श्रेष्ठः। अभिष्टिः अभीज्यत इत्यभिष्टिः अभियष्टव्यः। पृषोदरादिः। Mah.

[1]RV.1.10.3=YV.8.34

द्वितीयो ग्रहणमन्त्रः। युक्ष्वा हि। 'युजिर् योगे' युङ्ग्धि। हि यस्मात् प्रलम्बकेसरौ हरितवर्णावश्वौ वर्षितारौ सेक्तारौ तरुणौ। कक्ष्या अश्वस्य संनाहरज्जुः। 'प्रा पूरणे' कक्ष्यां यावापूरयतः तावेवमुच्येते। तौ युक्त्वा रथे तमास्थाय। अथ समनन्तरमेव अस्माकं हे इन्द्र! सोमपानशीलः। स्तुतिलक्षणां वाचमुपश्रुत्य आगच्छास्मद्गृहम्। U.

द्वितीयो ग्रहणमन्त्रः। इन्द्रदेवत्यानुष्टुब् मधुच्छन्दोदृष्टा। हे इन्द्र! हि निश्चितं हरितवर्णौ त्वदीयावश्वौ रथेन संयोजय। कीदृशौ हरी? प्रलम्बकेसरौ तथा वृषणौ 'वृष सेचने' वर्षितारौ सेक्तारौ तरुणौ। 'वा षपूर्वस्य निगमे'

---

[1] YV. adds उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने। at the end, to the stanza of the RV.

( पा० ६।४।६ ) इति दीर्घाभावः। तथा कक्षे भवः कक्ष्यः अश्वसन्नाहरज्जुः, कक्ष्यं मध्यबन्धनं प्रातः पूरयतस्तौ कक्ष्यप्रौ स्थूलावयवावित्यर्थः। अथानन्तरं रथारोहणानन्तरं हे इन्द्र ! सोमपानं कुर्वन् अस्मदीयानामृग्यजुःसामलक्षणानां वाचामुपश्रवणं गच्छ प्राप्नुहि। अस्मद्गिरः शृण्वित्यर्थः। वाचं श्रुत्वास्मद्गृहमागच्छेत्यर्थः। Mah.

RV.1.10.12=YV.5.29

परिश्रयति। परि त्वा अनुष्टुबैन्द्री अनिरुक्ता। परिगृह्णन्तु त्वां हे गिर्वणः ! 'इन्द्रो वै गिर्वा' इति श्रुतिः। वाचः इमा ऋग्यजुःसामलक्षणाः। सर्वतः। कथम्भूतं त्वां परिगृह्णन्तु ? वृद्धा आयवो मनुष्या ऊरुलक्षणा यस्य स तथोक्तः। यद्वा वृद्धायुरिति समानाधिकरणः। वृद्धश्चायुश्च महामनुष्य इत्यर्थः। सवनक्रमेणानुबद्धा वाचः। किञ्च जुष्टा भवन्तु त्वां परिगृह्णानाः त्वया परिसेविता भवन्तु। प्रीतिकरा जुष्टयः। U.

'परि त्वेति परिवार्येति' ( का० ८।६।१२ ) परितः कुड्यवदावरणं कृत्वेति सूत्रार्थः। ऐन्द्र्यनुष्टुबनिरुक्ता मधुच्छन्दोदृष्टा। गीर्भिः स्तुतिभिर्वननीयो भजनीयो गीर्वण इन्द्रः सदोऽभिमानी। हे इन्द्र ! स्तोत्रशस्त्ररूपा गिरः त्वां सर्वतः कटरूपेण परिगृह्णन्तु। किम्भूतं त्वाम् ? वृद्धायुं वृद्धा आयवो मनुष्या यजमानादयो मरुतो वा यस्य तम्। यद्वा वृद्धः श्रेष्ठश्चासावायुश्च तं महामनुष्यम्। किम्भूता गिरः ? अनु सवनक्रमेण वृद्धिर्यासां ताः शनैः प्रातःसवनं तत उच्चैर्माध्यन्दिनं सवनं तारस्वरेण तृतीयं सवनमिति क्रमः। किञ्च जुष्टयोऽस्मत्सेवास्तवजुष्टाः प्रियाः भवन्तु। 'जुषी प्रीतिसेवनयोः' जोषणं जुष्टिः। Mah.

RV.1.11.1=YV.12.56; 15.61

पुरीषं निवपति। इन्द्रं विश्वाः। ऐन्द्र्यनुष्टुप्। इन्द्रं सर्वाः स्तुतयः ऋग्यजुःसामलक्षणाः वर्धयन्ति। समुद्रमिव विविधायनं नानागतिम् अक्षोभ्यबलं वा। सर्वेषां रथिनां मध्ये युद्धलब्धातिशयम्। अश्वानां पतिं सतां च पतिम्। श्रुतिस्मृतिकर्मानुष्ठातारः सन्त उक्ताः। U.

'चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति' ( का० १७।१।१८ ) चात्वालस्थानात् मृदमानीय गार्हपत्यचितेरुपरि क्षिपति। इन्द्रदेवत्या मधुच्छन्दसुतजेतृदृष्टानुष्टुप्। सर्वाः स्तुतय ऋग्यजुःसामरूपा इन्द्रं वर्धयन्ति।

कीदृशमिन्द्रम् ? समुद्रवद् व्यचो व्याप्तिर्यस्य तं समुद्रवद्व्यापकम्। विविधाश्वनं नानागतिमित्यर्थः। अन्योन्यगतिं वा। रथयुक्तानां सर्वेषां मध्ये अत्यन्तं रथयुतं युद्धे लब्धातिशयमित्यर्थः। 'ईद्रथिनः' (पा० ८।२।१७) इति घे परे रथिन ईदादेशः। तथाऽन्नानां स्वामिनं स्वधर्मवर्त्तिनां च प्रतिपालकम्। Mah.

RV.1.11.1=YV.17.61

निधायैनमतिक्रामन्ति चतसृभिः। इन्द्रं विश्वा इति व्याख्यातम्। U.

'निधायैनमतिक्रामन्तीन्द्रं विश्वा इति' (का० १८।३।२१) एनं पृश्न्यश्मानं क्वचिद् गुप्ते देशे स्थापयित्वा सर्वे चयनं प्रति गच्छन्ति इन्द्रं विश्वा इत्याद्यृक्चतुष्टयेनेत्यर्थः। व्याख्याता (अ० १२। क० ५६)। Mah.

[1] RV.1.12.10=YV.17.9

यस्त्वमुक्ताधिकारः सोऽस्माकं हे पावयितः! दीप्तिमन्! अग्ने! देवान् इहावह। यज्ञस्य समीपम्। ततोऽनन्तरं हविश्च नः सम्बन्धि देवान् प्रापयेति शेषः। U.

गायत्र्याग्नेयी मेधातिथिदृष्टा। हे पावयितः! हे दीदिवः! दीदेवेति दीदिवान् तत्सम्बुद्धौ हे दीदिवः! दीप्तिमन्! 'दिवु क्रीडादिषु' क्वसुप्रत्ययः, द्वित्वम् 'तुजादीनाम्' (पा० ६।१।७) इत्यभ्यासदीर्घः। 'लोपो व्योर्वलि' (पा० ६।१।६६) इति वलोपः। हे अग्ने! देवानिह अस्माकं यज्ञे आनय। यज्ञसमीपे अस्माकं हविश्च देवान् प्रापय। Mah.

RV.1.14.3; 10.41.4=YV.33.45

तिस्रो गायत्र्यः। इन्द्रवायू बृहस्पतिम्। मित्रा मित्रमिति प्राप्ते आकारः। मित्रमग्निं पूषणं भगम्। आदित्यान् मारुतं च गणम् आह्वयामीति शेषः। U.

मेधातिथिदृष्टे द्वे गायत्र्यौ। आद्या ऐन्द्रवायवस्य पुनर्ग्रहणे, द्वितीया मैत्रावरुणग्रहणे। इन्द्रवायू बृहस्पतिं मित्रा। विभक्तेराकारः। अग्निं पूषणं भगम् आदित्यान् मरुत्सम्बन्धिनं गणम् एतानाह्वयामि। Mah.

---

[1] The words अग्ने देवाँ इहा वह of RV. 1.12.3, occur in YV. 17.9 :—स नः पावक दीदिवोऽग्ने देवाँ इहा वह। उप यज्ञं हविश्च नः॥

RV.1.14.10=YV.33.10

वैश्वदेवस्य । विश्वेभिः सोम्यम्, गायत्री । दैवैः सह सोमसम्बन्धि मधु हे अग्ने ! इन्द्रेण च सह वायुना च सह पिब । मित्रस्य नामभिः स्तुतः सन् । तदुक्तं 'त्वमग्ने वरुणो जायसे यस्त्वं मित्रो भवसि दक्ष ईड्यः इति । U.

गायत्री मेधातिथिदृष्टा वैश्वदेवग्रहपुरोरुक् ओमासश्चर्षणीत्यस्याः (७।३३) स्थाने । हे अग्ने ! विश्वैर्देवैः इन्द्रेण वायुना च सह सोममयं मधु पिब । कीदृशस्त्वम् ? मित्रस्य नामभिः स्तुत इति शेषः । 'त्वमग्ने वरुणो जायसे यस्त्वं मित्रो भवसि दक्ष ईड्यः' इति श्रुतेः । Mah.

RV.1.15.3=YV.26.21

द्वे गायत्र्यौ ऋतुग्रहाणां याज्ये । नेष्टा स्वकीयामधिष्ठात्रीं देवतां ब्रवीति । स्तुहि यज्ञमस्मत्सम्बन्धिनम् । हे ग्रावः ! ग्राः पत्न्यः ता विद्यन्तेऽस्य स ग्रावान् तत्सम्बोधनं हे ग्रावः ! 'मतुवसो रुःसम्बुद्धौ छन्दसि' (पा० ८।३।१) इति रुत्वम् । हे नेष्टः ! पिब च कालेन सह । कस्मात्त्वमेवमुच्यसे इति चेत्तत्राह । त्वं हि रत्नधा असि, यस्मात्त्वमेव रमणीयानां धनानां दातासि । U.

द्वे ऋतुदेवते गायत्र्यौ मेधातिथिदृष्टे ऋतुयागे नेष्टुर्याज्ये । ग्राः पत्न्योऽस्य सन्तीति ग्रावान् । 'तदस्यास्ति' (पा० ५।२।९४) इति मतुप् । 'मादुपधायाः'- (पा० ८।२।९) इति वत्वम् । तस्य सम्बोधनं हे ग्रावः ! पत्नीवन् ! हे नेष्टः ! अस्माकं यज्ञं स्तुहि । 'गॄ शब्दे' क्र्यादित्वात् श्ना, 'ई हल्यघोः' (पा० ६।४।११३) इति तस्येकारः । 'प्वादीनां ह्रस्वः' (पा० ७।३।८०) इति धातोर्ह्रस्वः । किञ्च देवेन सह पिब सोममिति शेषः । हि यस्मात् त्वं रत्नधा असि, रत्नानि दधाति ददाति रत्नधाः रमणीयधनानां दातासि । Mah.

[1]RV.1.15.9=YV.26.22

ऋत्विज उच्यन्ते । अयमग्निर्धनस्य बलस्य वा दाता । पिपीषति पातुमिच्छति । पिबतेः[2] सनीकारः । सोममिति शेषः । एवञ्चेदतो ब्रवीमि । हे

---

[1] The words अश्विना पिबतं (पिबतां YV.) मधु of RV. 1. 15. 11. occur in YV. 20. 90.

[2] नेदं पिबते रूपम् तस्य तु पिपासतीति युक्तत्वात् ।

ऋत्विजः ! जुहुत च प्रतिष्ठत च कर्मसु । किञ्च नेष्ट्रियात् धृष्ण्यात् कालैः सह सोमं पुनःपुनः पिबत । U.

द्रविणस्शब्दः सान्तो धनवाची । द्रविणो धनं ददातीति द्रविणोदाः धनदाताग्निः । पिपीषति पातुमिच्छति सोममिति शेषः । 'पीङ् पाने' अस्माद्दिवादिकात्सन् प्रत्ययः । अतो हे ऋत्विजः ! यूयं जुहुत च प्रतिष्ठत च । 'तप्तनप्—' ( पा० ७।१।४५ ) इति तबादेशः । कर्मसूद्युक्ता भवतेति शेषः । किञ्च नेष्टुरिदं नेष्ट्रम् । वृद्ध्यभाव आर्षः । नेष्टुधिष्ण्याद् देवैः सह सोमं प्रति गच्छत । 'इष् गतौ' दिवादित्वाच्छ्यन् लोट् । Mah.

RV.1.18.1=YV.3.28

अग्निमीक्षमाणो जपति । सोमानं स्वरणम् । ब्रह्मणस्पत्यो गायत्रस्तृचः बृहस्पतिरेव ब्रह्मणस्पतिः । हे ब्रह्मणस्पते ! सोमानम् । 'षूङ् अभिषवे' ( प्राणिप्रसवे ) ( षुञ् अभिषवे ) आतो मनिन्क्वनिप् वनिपः । 'अन्येभ्योपि दृश्यन्ते' ( पा० ३।२।७५ ) इति मनिन् । सोतारं पातारमिति पर्यायाः । केषां सोतारम् ? सामर्थ्यात्सोमानाम् । स्वरणम् । 'स्वृ शब्दोपतापयोः' । शब्दयितारं सोतारं च सोमानां स्तोतारञ्च देवानाम् । कुरु धनप्रदानैः । कमिव ? कक्षीवन्तम् लुप्तोपममेतत्, कक्षीवन्तमिव ऋषिं दीर्घतमसः पुत्रम् । यः उशिजः पुत्रः, उशिक् माता अस्यासीत् । U.

'सोमानमित्यनुदकं व्रतोपायनवत्' ( का० ४।१२।१० )। व्रतेत्यपरेणाहवनीयं प्राङ् तिष्ठन्नवर्चं जपतीति सूत्रार्थः। सोमानं स्वरणं तृचो गायत्रो ब्रह्मणस्पतिदेवत्यस्तेनैव दृष्टः। अग्निमीक्षमाणस्य यजमानस्य जपे विनियुक्तः। हे वेदस्य पालक ! सोमानामभिषोतारम्। स्वरणं 'स्वृ शब्दोपतापयोः' शब्दयितारम् । कुरु । मामिति शेषः । सुनोतीति सोमा तम् । 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३।२।७५ ) इति मनिन् । स्वरतीति स्वरणः नन्द्यादित्वात् ल्युः । सोमयागकर्तारं स्तुतिरूपशब्दयुक्तं च धनप्रदानैर्मां कुर्वित्यर्थः । तत्रोपमानमुच्यते । कक्षीवन्नामकमृषिं दीर्घतमःपुत्रं यथा सोमयागयुक्तं स्तुतियुक्तञ्च कृतवानसि तथा मां कुरु । उपमानद्योतक इवशब्दोऽत्र लुप्तो द्रष्टव्यः । कोऽसौ कक्षीवान् ? यः औशिजः उशिजः पुत्रः, उशिक् कक्षीवतो माता । Mah.

RV.1.18.2=YV.3.29

रै इति धननाम । यो ब्रह्मणस्पतिर्धनवान् । यश्च अमीवहा । अमीवा व्याधिः । व्याधेर्हन्ता । वसुनो धनस्य सारासारतां वेत्ति विदित्वा च यथा-योग्यं स्तोतृभ्यो ददाति । पुष्टिवर्द्धनः । 'पुष् पुष्टौ' पुष्टेः पोषस्य वर्धयिता । स नः सिषक्तु । 'सिषक्ति सचते इति सेवमानस्य' । सोऽस्मान् सेवताम् । यस्तुरणः अविलम्बकारी । यद्वा पुत्रः प्रार्थ्यते । हे ब्रह्मणस्पते ! यः पुत्रः धनवान् यश्च व्याधेर्हन्ता । ज्योतिःशास्त्राभिप्रायमेतत् । धनस्य च लब्धा पुष्टेश्च वर्धयिता । सोऽस्मान् पुत्रः सेवताम् । यः शीघ्रकारो । कालातिक्रमो हि प्रत्यग्रं कार्यरसं पिबतीत्याहुः । U.

यो ब्रह्मणस्पतिः धनवान् । यश्चामीवस्य रोगस्य हन्ता । 'अम रोगे' । 'अमेरीवः' । वसु धनं वेत्तीति वसुवित् । यश्च पोषणस्य वर्धयिता । यश्च तुरः 'तुर वेगे' 'इगुपधस्य' (पा० ३।१।१३५) इति कः । वेगवान् अविलम्बितकारी । स ब्रह्मणस्पतिर्नोऽस्मान् सिषक्तु सेवताम् । 'सिषक्ति सचते इति सेवमानस्य' ( निरु० ३।२१ ) अथवा अनयर्चा पुत्रः प्रार्थ्यते । यः पुत्रो धनवान् यश्च व्याधेर्हन्ता जपादिना यो धनस्य लब्धा पुष्टेश्च वर्धयिता यः शीघ्रकारी तादृशः पुत्रोऽग्नेः प्रसादान्नोऽस्मान् सेवताम् । Mah.

RV.1.18.3=YV.3.30

मा इत्यव्ययं प्रणगित्याख्यातेन सम्बध्यते । प्रपूर्वकस्य नशेर्व्याप्त्यर्थ-स्यैतद्रूपम् । मा व्याप्नोतु नः अस्मान् । शंसनं शंसोऽनिष्टचिन्तनम् । कस्य सम्बन्धि ? अररुषः । 'रा दाने' अस्य क्वसौ षष्ठ्यां ररुष इति भवति, तस्मात्प्रतिषिध्यते अररुषः अदातुः । अनुपभोग्यस्य शत्रोरित्यर्थः । धूर्तिः-हिंसा । ध्वरति धूर्वति इति वधकर्मसु पठितम्, मरणधर्मिणो मनुष्यस्य । मास्मान् व्याप्नोतु अररुषो मर्त्यस्य सम्बन्धि शंसनं धूर्त्तिश्चेति वाक्यार्थः । किञ्च रक्षा णः रक्ष नः गोपायास्मान् । हे ब्रह्मणस्पते ! U.

'रा दाने' इति धातोः क्वसुप्रत्ययान्तस्य षष्ठ्येकवचने ररुष इति रूपम् । ररौ इति ररिवाँस्तस्य ररुषः । दानं कृतवत इत्यर्थः । तस्य निषेधादररुष इति कदाचिदपि हविर्दानमकृतवत इत्यर्थः । तादृशस्य मनुष्यस्य शंसो धूर्तिश्च अस्मान् मा प्रणक् प्रकर्षेण व्याप्नोतु । नशिर्व्याप्त्यर्थः । यद्वा 'णश अदर्शने' मा प्रकर्षेण नाशयतु । शंसनं शंसोऽनिष्टचिन्तनम्' धूर्ति-

हिंसा। 'ध्वरति धूर्वति' ( निघ० २।१६ ) इति वधकर्मसु पठितत्वात्। शत्रुकृतमनिष्टचिन्तनं शत्रुकृता हिंसा चास्मान् मा व्याप्नोत्वित्यर्थः। किञ्च हे ब्रह्मणस्पते! वेदस्य पालकाग्ने! अस्मान् रक्ष। 'द्व्यचोऽतस्तिङः' ( पा० ६।३।१३५ ) इति संहितायां दीर्घः। णत्वं पूर्ववत्। Mah.

RV.1.18.6=YV.32.13

इत उत्तरं तिसृभिः कण्डिकाभिर्मेधा याच्यते श्रीश्च चतुर्थ्या। सदसस्पतिम् सदसस्पतिर्देवता सदो यज्ञगृहं, तस्य पतिः तम्। अद्भुतं महान्तं अचिन्त्यशक्तिम्। प्रियमिन्द्रस्य कामसम्पत्करं कमनीयं वा धनमेधार्थिभिः। सनिं धनं मेधाम् अयासिषं याचे। द्विकर्मा चायं धातुः। U.

इत उत्तरसूक्तत्रये मेधा याच्यते। चतुर्थ्या श्रीर्याच्यते। प्रथमा गायत्री लिङ्गोक्तदेवता। अग्निं द्रव्यदानं बुद्धिं च याचे। द्विकर्मकः। कीदृशमग्निम्? सदसो यज्ञगृहस्य पालकम् अचिन्त्यशक्तिम् इन्द्रस्य प्रियं मित्रं कमनीयं धनमेधार्थिभिः। Mah.

[1] RV.1.22.3=YV.7.11

आश्विनस्य पुरोरुक्। या वां कशा। गायत्री आश्विनी। हे आश्विनौ! या वां युवयोः कशा। कशेति वाङ्नाम। सा प्रकाशयति अर्थान्। मधुब्राह्मणोपनिषत् प्रशंसायुक्ता। सूनृतावती शोभना प्रिया ऋतावती सत्यवती च या वाक् सा सूनृतावती। तया यज्ञं मिमिक्षतम्। 'मिह सेचने' सिञ्चतम्। अश्विनौ हि यज्ञे अध्वर्यू अत एवमुच्यते। U.

'आश्विनं गृह्णात्यन्वारब्धे वा या वामिति' ( का० ९।७।८ ) यजमानेऽन्वारब्धे वाश्विनं ग्रहं गृह्णाति। आश्विनी गायत्री मेधातिथिदृष्टा यजुरन्ता। हे अश्विना! अश्विदेवौ! युवयोर्या कशा, कशेति वाङ्नामसु पठितम्। काशयति प्रकाशयति वाङ्मयमिति कशा वाक्। किम्भूता? मधुमती मधु ब्रह्म तद्वती मधुब्राह्मणोपनिषत्प्रशंसायुता। तथा सूनृतावती प्रियं सत्यं वचः सूनृतं तद्वती सत्यप्रियवचनोपेता। हे अश्विनौ! तया वाचास्मदीयं यज्ञं मिमिक्षतम्। 'मिह सेचने' सन्नन्तः। सेक्तुमिच्छतम्। निष्पादयतमित्यर्थः। Mah.

---

[1] YV. adds उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा at the end to the stanza of the RV.

RV.1.22.5=YV.22.10

हिरण्यपाणिमूतये हिरण्मयौ पाणी यस्य स हिरण्यपाणिः तम्। अवनाय। सवितारमाह्वयामि। किमिति? यतः स सविता सर्वार्थदृक्। महती च देवता स्थानं च ज्ञानकर्मसमुच्चयकारिणाम्। U.

मेधातिथिदृष्टा। अहं सवितारमाह्वयामि। किमर्थम्? अवनाय। कीदृशं सवितारम्? हिरण्यपाणिं हिरण्मयौ पाणी यस्य तम्। यतः स सविता चेतयिता सर्वज्ञः। देवता। स्थानं ज्ञानिनाम्। Mah.

RV.1.22.7=YV.30.4

कर्मानुरूपेण विभक्तारम्। आह्वयामः। वासयितुः। चायनीयस्य। धनस्य आयुषश्च। सवितारम्। नृणां द्रष्टारम्। ये नरो यथा द्रष्टव्यास्तांस्तथा पश्यति। U.

वयं सवितारमाह्वयामः। किम्भूतम्? वासयितुः नानाविधस्य धनस्य विभज्य दातारम्। नृणां द्रष्टारम् यथायोग्यम्। Mah.

RV.1.22.9=YV.26.20

इत उत्तरं पञ्च नेष्टुर्याज्याः। आद्या गायत्री। देवानां पत्न्यः त्वष्टा च देवता। हे अग्ने! देवानां पत्नीः इह अस्मिन् यज्ञे आगमय। कथम्भूताः? कामयमाना अस्मान्। त्वष्टारञ्च उपावह। किमर्थम्? सोमपानाय। U.

अग्निदेवत्या गायत्री मेधातिथिदृष्टा। इतः पञ्च ऋचोऽग्निष्टोमे नेष्टुर्याज्याः। आद्या प्रातःसवने नेष्टृचमसयागे याज्या। हे अग्ने! देवानां पत्नीः इह यज्ञे त्वमागमय। कीदृशीः पत्नीः? हविः कामयमानाः। वशेः शत्रन्तात् 'उगितश्च' (पा० ४।१।६) इति ङीप्। किञ्च सोमपानाय त्वष्टारं देवं चोपावह। Mah.

RV.1.22.13=YV.8.32; 13.32

अङ्गारैरभिसमूहति मही द्यौः द्यावापृथिव्यौ गायत्री। महती द्यौः पृथिवी च अस्माकमिमं यज्ञं मिमिक्षताम्। 'मिह सेचने'। सिञ्चतु स्वैः स्वैर्भागैः। बिभृताम् अस्मान्। भरणैः हिरण्यपशुधान्यादिभिः। U.

'मही द्यौरित्यङ्गारैरभ्यूहतीति' (का० २५।१०।१८) शामित्रे क्षिप्तं गर्भमङ्गारैश्छादयेत्। द्यावापृथिवीदेवत्या गायत्री मेधातिथिदृष्टा। मही

महती द्यौः द्युलोकः पृथिवी भूलोकश्च अस्माकमिमं यज्ञं मिमिक्षताम् 'मिह सेचने' सन्नन्तः। सेक्तुमिच्छताम्। स्वैः स्वैर्भागैः पूरयतामित्यर्थः। भरणैर्हिरण्यपशुधान्यादिभिः स्वैः स्वैर्भागैः अस्मदीयं गृहं पूरयताम्। Mah.

[1]RV.1.22.15=YV.35.21; 36.13

पार्थिवी गायत्री। सुखरूपा। हे पृथिवि! अस्माकं भव अनृक्षरा च ऋक्षरः कण्टकः। अनृक्षरा अकण्टका। निवेशनी च साधुप्रतिष्ठाना। किञ्च प्रयच्छ च अस्माकं शरणम्। सर्वतः पृथुः। U.

पृथिवीदेवत्या गायत्री मेधातिथिदृष्टा यजुरन्ता। अस्या अपि श्रौते विनियोगो नास्ति स्मार्ते स्रस्तरारोहणे शयने विनियोगः। तथाहि 'स्योना पृथिवि नो भवेति दक्षिणपार्श्वैः प्राक्शिरसः संविशन्तीति' ( पार० ३।२ ) हे पृथिवि! त्वम् अस्माकं सुखरूपा भव। किम्भूता त्वम्? ऋक्षरः कण्टकः। 'ऋच्छतेः कण्टकः कन्तपो वा कण्टतेर्वा कृन्ततेर्वा स्याद् गतिकर्मणः' ( निरु० ९।३२ ) इति यास्कः। तद्ग्रहणं चौरदायादादिदुःखनिवृत्त्यर्थम्। न सन्ति ऋक्षराः कण्टका दुःखदायिनो यस्यां सा अनृक्षरा। तथा निवेशनी। निविशन्ति जना यस्यां सा निवेशनी साधुप्रतिष्ठाना। 'करणाधिकरणयोश्च' ( पा० ३।३।११७ ) इति ल्युट्। तथा सप्रथाः प्रथनं प्रथः विस्तारः प्रथसा सह वर्त्तमाना सप्रथाः सर्वतः पृथुः। किञ्च अस्मभ्यं शर्म शरणं देहि। Mah.

RV.1.22.17=YV.5.15

दक्षिणे वर्त्मनि हिरण्यं निधाय जुहोति। इदं विष्णुः। गायत्री वैष्णवी। इदं जगत् विष्णुर्विचक्रमे विक्रान्तवान्। सर्वप्राणिनो हि भूतेन्द्रियमनोजीवभावेन आविशतीति विष्णुः। किञ्च त्रेधा निदधे पदम्, पद्यते ज्ञायतेऽनेनेति पदम्। भूम्यन्तरिक्षद्युलोकेषु अग्निवायुसूर्यरूपेण त्रिधा निहितवान् पदम्। किञ्च समूढमस्य पांसुरे। अस्यैव विष्णोरन्यत्पदान्तरं विज्ञानघनानन्दमजमद्वैतमक्षरमित्येवंलक्षणम्, समूढमन्तर्हितमविज्ञातमकृतात्मभिः। पांसुरे।

---

[1] YV. reads सप्रथाः for सप्रथः of the RV. and adds अप नः शोशुचदघम्, at the end, to the stanza of the RV.

लुप्तोपममेतत् । पांसुल इव प्रदेशे निहितं न दृश्यते तत्समूढमिति दृष्टव्यमिति वाक्यशेषः । तदुक्तम्-'तद् विष्णोः परमं पदᳫं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्' इति । U.

'दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाभिजुहोतीदं विष्णुरिति' ( का० ८।३।२१ ) दक्षिणशकटसम्बन्धिदक्षिणचक्रमार्गे हिरण्यं निधाय तत्रैव होमः । विष्णुदेवत्या गायत्री मेधातिथिदृष्टा । विष्णुः त्रिविक्रमावतारं कृत्वा इदं विश्वं विचक्रमे विभज्य क्रमते स्म । तदेवाह । त्रेधा पदं निदधे भूमावेकं पदमन्तरिक्षे द्वितीयं दिवि तृतीयमिति क्रमादग्निवायुसूर्यरूपेणेत्यर्थः । पांसवो भूम्यादिलोकरूपा विद्यन्ते यस्य तत्पांसुरं तस्मिन् पांसुरे अस्य विष्णोः पदे समूढं सम्यगन्तर्भूतं विश्वमिति शेषः । यद्वायमर्थः । अस्य विष्णोः पदं पद्यते ज्ञायत इति पदमद्वैताख्यं स्वरूपं समूढमन्तर्हितमज्ञातमकृतात्मभिः । कस्मिन्निव ? पांसुरे इव, लुप्तोपमानम् । पांसुले रजस्वले प्रदेशे निहितं यथा न ज्ञायते तद्वत् । तदुक्तम् 'तद्विष्णोः परमं पदᳫं सदा पश्यन्ति सूरयः' । ( अध्या० ६।५ ) इति' । Mah.

RV.1.22.18; 8.12.27=YV.34.43

वैष्णव्यौ गायत्र्यौ द्वाभ्यामेकवाक्यम् । यः विष्णुः यज्ञः त्रीणि पदानि, विचक्रमे क्रान्तवान्, अग्निवाय्वादित्याख्यानि । गोपाः गोपायिता समस्तस्य जगतः । अदाभ्यः अनुपहिंस्यः । अतः अस्मादेव पदत्रयात्, धर्माणि । धर्मशब्द उभयलिङ्गः अर्धर्चादौ गणे पठितः । धर्मान् धारयन् । कर्मपर्यायो वा । अतः एभ्यः पदेभ्यः कर्माणि धारयन् U.

वैष्णव्यौ गायत्र्यौ । द्वयोर्ऋचोरेकवाक्यम् । यो विष्णुः यज्ञः त्रीणि पदानि विचक्रमे विक्रान्तवान् । अग्निवाय्वादित्याख्यानि पदानि व्याप्तवान् । किम्भूतो विष्णुः ? गोपाः जगतो रक्षकः । अदाभ्यः अहिंस्यः । किं कुर्वन् ? अतः अस्मादेव पदत्रयात्, धर्माणि पुण्यानि कर्माणि धारयन् । धर्ममस्त्रियाम् । Mah.

RV.1.22.19=YV.6.4; 13.33

वाचयति । विष्णोः कर्माणि । द्वे गायत्र्यौ वैष्णव्यौ । हे ऋत्विजः !

---

[1] YV. adds the word स्वाहा to the stanza of the RV.

विष्णोः यज्ञस्य कर्माणि वीर्याणि पश्यत । यतः । तसिप्रकरणे आद्यादिभ्य उपसंख्यानं वक्तव्यम् । यतो यैर्वीर्यैः । व्रतानि । व्रतमिति कर्मनाम । आधानपशुसोमप्रभृतीनि कर्माणि । आत्मनि पस्पशे-'स्पश बन्धने' बद्धवान् । विष्णुर्हि अधिष्ठात्री देवता यज्ञानाम् । यद्वा विष्णोर्वीर्याणि पश्यत । यैर्वीर्यैस्तानि व्रतानि कर्माणि अग्निवायुसूर्याणां स्वानि स्वान्यप्रमत्ताः एतानि कुरुतेत्येवं पस्पशे निबद्धवान् । किञ्च यश्च विष्णुः इन्द्रस्य सखा वृत्रवधादिषु कर्मसु । कथम्भूतः ? युज्यः 'युजिर् योगे' । योगार्हः अनुरूप इत्यर्थः । U.

'विष्णोः कर्माणीति वाचयति यूपमन्वारब्धमिति' (का० ६।३।१२) यूपं स्पृष्टवन्तं यजमानं वाचयेदिति सूत्रार्थः । द्वे वैष्णव्यौ गायत्र्यौ मेधातिथिदृष्टे । हे ऋत्विजः ! विष्णोः यज्ञाधिष्ठातुः कर्माणि सृष्टिसंहारादिचरितानि यूयं पश्यत । यतो यैः कर्मभिः व्रतानि भवदीयानि लौकिकवैदिककर्माणि पस्पशे बद्धवान् निर्मितवानित्यर्थः । 'स्पश बन्धने' । स विष्णुरिन्द्रस्य युज्यः वृत्रवधादिकर्मसु योज्योऽनुरूपः सखा मित्रम् । यद्वा विष्णोः यज्ञस्य कर्माणि वीर्याणि पश्यत यैर्वीर्यैः व्रतानि आधानपशुसोमादीनि कर्माणि पस्पशे आत्मनि बद्धवान् । यद्वा यैर्वीर्यैर्व्रतानि कर्माणि अग्निवायुसूर्याणां स्वानि स्वानि एतान्यप्रमत्ताः कुरुतेत्येवं पस्पशे निबद्धवान् । शिष्टं समानम् । Mah.

RV.1.22.19=YV.13.33

उलूखलमुसले उपदधाति । विष्णोः कर्माणि । व्याख्यातम् । U.

'उलूखलमुसले स्वयमातृण्णामुत्तरेणारत्निमात्रे औदुम्बरं प्रादेशमात्रं चतुरस्रमुलूखलं मध्यसंगृहीतमूर्ध्वं वृत्तं दक्षिणमुलूखलाद्विष्णोः कर्माणीति' (का० १७।५।३) चतुष्कोणं सङ्कुचितं खातहीनमुदुम्बरतरुजमूर्ध्वमुलूखलं वृत्तं मुसलं ते उभे स्वयमातृण्णोत्तरे देशे तन्मध्याद्धस्तमात्रे तृतीये लोके विष्णोरिति मन्त्रेण-सहैवोपदधातीति सूत्रार्थः । व्याख्याता ( ६।४ ) ।

Mah.

RV.1.22.20=YV.6.5

चषालमुदीक्षते । तद्विष्णोः । तदः प्रतियोगिनात्र पूर्वं यद्वृत्तेन भवितव्यम् । यद्विज्ञानघनबहुलमानन्दस्वभावञ्च तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः पण्डिताः वेदान्तज्ञानरहस्यविवृतसम्पुटाः । कथम्भूतं पदं पश्यन्ति ? दिवीव द्युलोकमध्यगतमिव । चक्षुः आदित्यमण्डलम् । आततं

विततं विस्तारितम्। चक्षुःशब्देनान्यत्रापि मण्डलमुच्यते। 'चक्षुर्मित्रस्य वरुणस्याग्नेः' 'तच्चक्षुर्देवहितम्' इति च। यद्वा वृत्रसम्बन्धो द्वितीयोऽर्धर्चः प्रथमः क्रियते। परमपदशब्देनादित्य उच्यते। इवश्चानर्थकः। तद्दिवि चक्षुरादित्याख्यं विततं तद्विष्णोः परमं पदं तृतीयं सदा पश्यन्ति पण्डिताः अधियज्ञविदः। U.

'तद्विष्णोरिति चषालमोक्षमाणमिति' (का० ६।३।१३) यूपकटकं प्रेक्षमाणं यजमानं वाचयेदिति सूत्रार्थः। सूरयः विद्वांसो वेदान्तपारगा विष्णोः तत्परमं पदं स्वरूपं सदा पश्यन्ति। कीदृशम्? दिवि आकाशे निरावरणे चक्षुरिवाततं यद्वा यद् दिवि आकाशे चक्षुरादित्यमण्डलमाततं विस्तारितम्। इवोऽनर्थकः। चक्षुःशब्देनान्यत्रापि मण्डलमुच्यते 'चक्षुर्मित्रस्य वरुणस्य' (अ० ७ क० ४२) 'तच्चक्षुर्देवहितम्' (अ० ३६ क० २४)। Mah.

RV.1.22.21=YV.34.44

तद्विप्रासः तस्य विष्णोर्यज्ञस्य यत् परमं पदं ब्रह्मलक्षणम्। तद् विप्रासः ब्राह्मणाः विपन्यवो मेधाविनः। जागृवांसः असुप्ताः अप्रमत्ताः। ज्ञानकर्मसमुच्चयकारिणः। समिन्धते सन्दीपयन्ति। उपासनैर्निर्मलीकुर्वन्ति। U.

तस्य विष्णोः यज्ञस्य यत्परमं पदं ब्रह्मलक्षणं तद्विप्रासः विप्राः ब्राह्मणाः समिन्धते। णिचो लोपः। समिन्धयन्ति दीपयन्ति उपासते इत्यर्थः। किम्भूताः विप्राः? विपन्यवः विगतः पन्युः संसारव्यवहारो येभ्यः निष्कामाः। जागृवांसः जागरणशीलाः अप्रमत्ताः। ज्ञानकर्मसु समुच्चयकारिणः इत्यर्थः। Mah.

RV.1.23.6=YV.33.46

वरुणः प्राविता। वरुणः प्राविता प्रकर्षेण अविता रक्षकः भुवन् भवतु। मित्रश्च। विश्वाभिः सर्वाभिः ऊतिभिः अवनैः पालनैः। किञ्च करतां कुरुतां च नः अस्मान् सुराधसः शोभनधनान्। U.

वरुणः मित्रश्च सर्वाभिः ऊतिभिः अवनैः रक्षणप्रकारैः प्राविता प्रकर्षेण रक्षको भुवत् भवतु। भवतेर्व्यत्ययेन तुदादित्वात् शप्रत्ययः 'इतश्च लोपः' (पा० ३।४।९७) इति तिप इलोपः धातोरुवङ्। किञ्च मित्रावरुणौ नोऽस्मान् सुराधसः शोभनधनान् करतां कुरुताम्। शोभनं राधो येषाम्। Mah.

[1]RV.1.23.19=YV.9.6.

अश्वानङ्गिरप्स्वन्तः। अप्स्वन्तः। अनवसाना पुरउष्णिक् अश्वदेवत्या। अप्सु अन्तरवस्थितममृतम् अप्सु च भेषजम्। तत्र हे अश्वाः! यूयं भवत वाजिनः। वाज इत्यन्ननाम। तद्येषु विद्यते ते वाजिनः। अन्नवन्तो यूयं तत्र भवतेत्यर्थः। अपामुत प्रशस्तिषु। उत अपिच अपां प्रशस्तिषु प्रशस्तेषु पवित्रेषु भागेषु भवतेत्यनुषज्यते। U.

'अश्वान् प्रोक्षत्यपोऽवनीयमानान् स्नातान् वागतान् अप्स्वन्तरिति देवीराप इति वा समुच्चयो वेति' ( का० १४।२।३।५ ) स्नानार्थमपो नीयमानान् स्नात्वागतान्वाश्वानप्स्वन्तरिति देवीराप इति मन्त्रेण वोभाभ्यां वा प्रोक्षेत्। अश्वदेवत्यावसानरहिता पुरउष्णिक्। अस्याः पाद आद्यो द्वादशाक्षरो द्वावष्टाक्षरौ। अप्सु उदकेषु अन्तर्मध्ये अमृतमवस्थितमप्सु भेषजमारोग्यपुष्टिकरमौषधं चावस्थितम्। हे अश्वाः! यूयं तत्रामृतभेषजयुतास्वप्सु वाजिनोऽन्नवन्तो भवत। उतापिच अपां प्रशस्तिषु प्रशस्तेषु भागेषु यूयं भवत। Mah.

[2]RV.1.23.22; 10.9.8=YV.6.17.

चात्वाले मार्जयन्ते इदमापः। त्र्यवसाना महापङ्क्तिरब्देवत्या पावमानश्चान्त्यः पादः। हे आपः! इदं पशुसंज्ञपननिमित्तं पापं प्रवहत अपनयत। किञ्च अवद्यं च अवदनीयञ्च यद् अभिशापादि मलं च यत्। यच्च मलं शरीरसंलग्नं प्रसिद्धं तच्च प्रवहत। यच्चाभिदुद्रोहानृतम्। 'द्रुह जिघांसायाम्'। यदपि चाभिद्रुग्धवानस्मि असत्यमुच्चार्य। यच्च शेपे अभीरुणम्। आक्रोशेन यच्च शपितवानस्मि अभीरुणमनपराधिनम्। अनपराधी हि न बिभेति। यद्वा अभिलुनाति छिनत्ति कर्माणि यदुच्चरितं सत् तदभीरुणम्। आपो

---

[1] YV. reads प्रशस्तिष्वश्वाः for प्रशस्तये देवाः of the RV. and adds देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायं वाजं सेत्। at the end, to the stanza of the RV.

[2] YV. reads इदमापः प्रवहतावद्यं च मलं च यत्। यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम्। आपो मा तस्मादेनसः पवमानश्च मुञ्चतु। for इदमापः प्र वहत यत्किं च दुरितं मयि। यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम्। of the RV.

मां तस्मादेनसः पापात् पवमानश्च मुञ्चतु । पवमानः सोमो वायुर्वा मां मुञ्चतु पृथक्करोतु । U.

'चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहतेति' (का० ६।६।२६)। सर्वे ऋत्विजश्चात्वालसमीपेऽद्भिरात्मानमभ्युक्षन्तीति सूत्रार्थः। अब्देवत्या त्र्यवसाना महापङ्क्तिः पावमानश्चान्त्यः पादः । यस्याः षट् पादा अष्टाक्षराः सा महापङ्क्तिः। हे आपः ! इदं पशुसंज्ञपननिमित्तं पापं प्रवहत । किञ्च यच्चावद्यमवदनीयमभिशापादि यच्च मलं शरीरलग्नं प्रसिद्धं तच्च प्रवहत अपनयत । किञ्च यदहमनृतमसत्यमुक्त्वाभिदुद्रोह द्रुग्धवानस्मि। 'द्रुह जिघांसायाम्' । यच्चाहमभीरुणं बिभेतीति भीरुः न भीरुरभीरुस्तमभीरुणमनपराधिनम्। अपराधी हि बिभेति। एवंविधं शेपे शपितवानस्मि। अनपराधिनं प्रति यन्मयाभिशापो दत्तः । आपः तस्मादेनसः पापाद् मा मां मुञ्चतु ? (मुञ्चन्तु) पृथकुर्वन्तु पवमानश्च सोमो वायुर्वा तस्मात्पापान्मां मुञ्चतु। Mah.

[1]RV.1.24.8=YV.8.23.

आपोऽवक्रमयन् वाचयति । उरुᳬ हि । वारुणी त्रिष्टुप् । एकं तावद् उरुं विस्तीर्णं हि अतिशयेन राजा वरुणः चकार कृतवान् । सूर्याय । षष्ठ्यर्थे चतुर्थी। सूर्यस्य पन्थानम्। अन्वेतवा उ अन्वेतवान् अन्वहमागमनाय। अपरम्। अपदे पादा प्रतिधातवेऽकः । यत्र पदं दत्तं प्रतिमुद्रान्यायेन नोपलक्ष्यते तस्मिन् पदे पथि अन्तरिक्षलोके पादा पादानाम् । षष्ठी-बहुवचनस्थाने आकारः। प्रतिधातवे प्रतिनिधाय अकः कृतवान् आलम्बनमिति शेषः। सूर्यस्यैव । उतापवक्ता हृदयाविधश्चित् । उत अपिच । अपवक्ता अपवदिता आक्षेप्ता । हृदयाविधश्चित् । चिच्छब्दोऽप्यर्थे । हृदयं यो विध्यति मर्माण्युच्चार्योच्चार्य पिशुनः तस्याप्यपवदिता-किमुतान्येषामत्युक्तकारिणामिति । य इत्यम्भूतो वरुणः सोऽवभृथाय तीर्थं ददात्विति शेषः । U.

'उरुᳬ हीति वाचयतीति' (का० १०।८।१५) अवभृथाय जिगमिषुरध्वर्युश्चत्वालसमीपस्थं प्राङ्मुखं यजमानं वाचयेत् । वरुणदेवत्या त्रिष्टुप्

---

[1] In YV. the words माहिर्भूर्मा पृदाकुः are added at the beginning and the words नमो वरुणायाभिष्ठितो वरुणस्य पाशः at the end of the Ṛgvedic stanza.

शुनःशेपदृष्टा। उशब्दोऽवधारणे। वरुण एव राजा सूर्याय अन्वेतवै। षष्ठ्यर्थे चतुर्थी। सूर्यस्यान्वेतुमनुक्रमेणान्वहं गन्तुं हि यस्माद् उरुं विस्तीर्णं पन्थां पन्थानं मार्गं चकार। क? अपदे नास्ति पदं यस्मिन्, यत्र दत्तं पदं प्रतिमुद्रितं न भवति तस्मिन्नन्तरिक्षे मार्गं कृतवानित्यर्थः। तस्मादस्माकमपि अपदे अन्तरिक्षे पादा प्रतिधातवे पादौ निक्षेप्तुम्। विभक्तेराकारः। मार्गं कः करोतु, स्वर्गगमनाय मार्गं करोत्वित्यर्थः। करोतेरदादित्वेन लङि शपो लुक् अडभाव आर्षः। किञ्च यो वरुणः उतापिच हृदयाविधश्चिदप-वक्ता हृदयं विध्यति मर्मोच्चारणेन पीडयति हृदयविद् 'नहिवृतिवृषि-' (पा० ६।३।११६) इत्यादिना क्विबन्ते व्यधौ परे हृदयस्य दीर्घः। तस्य हृदयाविधः पिशुनस्यापि अपवदिता, चिच्छब्दोऽप्यर्थे। निन्दक-स्यापि तिरस्कर्ता किमुतान्येषां पापकारिणामित्यर्थः। ईदृशो वरुणोऽ-वभृथाय मार्गं ददात्वित्यर्थः। अन्वेतवै प्रतिधातवे। अनुपूर्वादिणः प्रतिपूर्वाद्धधातेश्च 'तुमर्थे सेसे-' (पा० ३।४।९) इत्यादिना क्रमात्तवैतवे-प्रत्ययौ। Mah.

RV.1.24.11=YV.18.49; 21.2.

वारुण्या त्रिष्टुभा जुहोति। तत्त्वा। तदाशास्त इति तदः श्रवणादिह यदः प्रयोगः। यत्प्रयोजनं त्वां यामि याचामि ब्रह्मणा त्रयीलक्षणेन वन्द-मानः स्तुवन्। तदीयं यजमान आशास्ते हविर्भिरभ्युद्यतैः। अतः अहेडमानः अक्रुध्यन् हे वरुण! इह कर्मणि वर्तमान! अस्माकं कं? (किं) प्रयोजनं यज्ञसमाप्तिलक्षणं बोधि बुध्यस्व। बुद्ध्वा च हे उरुशंस! बहुसंस्तव्यमान! आयुः मा प्रमोषीः मा अस्माकमायुः खण्डय। U.

वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा। अत्र द्वौ तच्छब्दौ वर्तेते तत्रैकस्य यच्छब्दपरिणामः कार्यः। हे वरुण! यजमानः हविर्भिः दत्तैः यद्धनपुत्रादिक-माशास्ते इच्छति, यत्कामस्तुभ्यं हविर्दत्ते तद् यजमानेष्टं त्वा त्वामहं यामि याचामि। तत्त्वया यजमानाय दीयतामित्यर्थः। यामीति याच्ञाकर्मसु पठितः। अथापि वर्णलोपो भवति। तत्त्वा यामीति (नि०२.१) यास्कोक्तेराकारलोपः। कीदृशोऽहम्? ब्रह्मणा त्रयीलक्षणेन वेदेन वन्दमानः त्वां स्तुवानः। किञ्च हे उरुशंस! शंसनं शंसः स्तुतिः 'शंसु स्तुतौ' उरुर्महान् शंसः स्तुतिर्यस्य स उरु-शंसः तत्सम्बुद्धौ हे बहुस्तुते! इहास्मिन् स्थाने अहेडमानः, हेडते क्रुध्यति हेड-मानः न हेडमानोऽहेडमानः अक्रुध्यन् सन् त्वं बोधि बुध्यस्व त्वम्। मत्प्रार्थनां

जानीहीत्यर्थः । 'हुझल्भ्यो हेर्धिः' ( वा छन्दसि ) ( पा० ३।४।८८ ) इति हेरपित्त्वाद्गुणः धलोपश्छान्दसः । किञ्च नोऽस्माकमायुर्जीवनं मा प्रमोषीः मा चोरय । 'मुष स्तेये' लुङ् 'न माङ्योगे' ( पा० ६।४।७४ ) इत्यडभावः । पूर्णमायुश्च देहीत्यर्थः । Mah.

RV.1.24.15=YV.12.12.

पाशान् विमुञ्चति । उदुत्तमं वारुणी त्रिष्टुप् । उदित्ययमुपसर्गः श्रथायेत्यनेन सम्बध्यते । हे वरुण ! उत्तमं पाशम् उच्छ्रथय । 'श्रथ शैथिल्ये' । श्लथीकृत्योर्ध्वं नय । अस्मत् अस्मत्तः अवाधमम् अधमं च पाशम् अवाचीनं श्लथय । विमध्यमं स्थानस्थितमेव विश्लथय मध्यमम् । अथैवं कृते सति वयं हे आदित्य ! अदितेः पुत्र ! व्रते तव कर्मणि वर्तमानाः अनागसः अनपराधाः अदितये अदीनतायै स्याम भवेम । U.

'पाश उन्मुच्योदुत्तममिति' ( का० १६।५।१७ ) । रुक्मपाशशिक्यपाशौ गलादूर्ध्वमार्गेण निष्कासयतीति सूत्रार्थः । वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा । उदित्युपसर्गोऽव वि एतावपि श्रथयेत्यनेन सम्बध्यन्ते । हे वरुण ! उत्तममुत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशमस्मत् अस्मत्तः सकाशात् उत् श्रथय उत्कृष्य विनाशय । अधममधमाङ्गे पादप्रदेशे स्थापितं त्वत्पाशमवश्रथय अवकृष्य अस्मत्तो विनाशय । मध्यमं मध्यमप्रदेशे स्थितं पाशं विश्रथय विच्छेदय । 'श्रथ बन्धे' मित्त्वाण्णिचि ह्रस्वः, लोटि मध्यमैकवचने रूपम् । श्रथायेति संहितायां दीर्घश्छान्दसः । यद्वा श्रथ क्र्यादिः लोटि मध्यमैकवचने 'छन्दसि शायजपि' ( पा० ३।१।८४ ) इति श्नाप्रत्ययस्य स्थाने शायजादेशे श्रथायेति रूपम् । अथ पाशत्रयविनाशानन्तरं हे आदित्य ! अदितिपुत्र ! वरुण ! अनागसः अनपराधा निष्पापास्तव व्रते कर्मणि वर्तमानाः सन्तो वयमदितये अदीनतायै स्याम अखण्डितत्वाय योग्या भवेम । अथा इत्यत्र 'निपातस्य च' ( पा० ६।३।१३६ ) इति दीर्घः । Mah.

RV.1.25.10=YV.10.27; 20.2.

यजमानस्य उरोऽभिमृश्य जपति । निषसाद धृतव्रतः । वारुणी गायत्री । अधियज्ञं यजमानो वरुणः निषसाद निषण्णः । धृतव्रतः धृतं व्रतं कर्म येन स तथोक्तः । 'धृतव्रतो वै राजा न वा एष सर्वस्मा इव वदनाय न सर्वस्मा इव कर्मणे यदेव साधु वदेद् यत्साधु कुर्यात् तस्यै वा एष श्रोत्रियश्च' इति श्रुतिः ।

पस्त्यासु प्रजासु आधिपत्येनेत्युपसर्गादर्थपरिपूर्तिः। साम्राज्याय 'सम्राड्भावाय राज्याय' इति श्रुतिः। सुक्रतुः सुकर्मा। शोभनप्रज्ञो वा। U.

'निषसादेत्युरोऽस्यालभत इति' (का० १७।४।७)। अध्वर्युर्यजमानहृदयं स्पृशति। वरुणदेवत्या गायत्री शुनःशेपदृष्टा अष्टषट्सप्तवर्णपादत्वाद्वर्धमाना गायत्री। असौ यजमानः पस्त्यासु विक्षु प्रजासु आ निषसाद। 'विशो वै पस्त्याः' (श० ५।४।४।५) इति श्रुतेः। आधिपत्येनोपविवेश। यदासन्द्यां निषण्णः स प्रजास्वेव निषण्ण इत्यर्थः। 'व्यवहिताश्च' (पा० १।४।८२) इति आङ उपसर्गस्य क्रियापदेन व्यवस्थानम्। किम्भूतो यजमानः? धृतव्रतो धृतं व्रतं यज्ञलक्षणं कर्म येन स्वीकृतयज्ञः। वरुणः वारयत्यनिष्टमिति वरुणः। तथा सुक्रतुः शोभनसंकल्पः शोभनप्रज्ञो वा। किमर्थं निषसाद? साम्राज्याय सम्राजो भावः साम्राज्यम् 'सम्राड्भावाय राज्याय' इति श्रुतेः। Mah.

[1]आसन्द्यामुपविशति। निषसादेति व्याख्यातम्। U.

'तस्मिन्नास्ते यजमानो निषसादेति' (का० १६।४।६)। यजमानः कृष्णाजिने उपविशेत्। व्याख्याता (अ० १०। क० २७) Mah.

RV. 1.25.19=YV.21.1.

इमं मे। इमं मेनानुवाकेनैष्टिकं हौत्रम्। वारुणी गायत्री वारुणस्य हविषो याज्या। हे वरुण! त्वं मे मम इममाह्वानं श्रुधि शृणु च। अपरम् अद्य मृडय सुखय कालविलम्बनं मा कृथाः। यतः अहम् अवस्युः आत्मनोऽवनं पालनमिच्छन् त्वाम् आचके। आचक इति कान्तिकर्मा। कामये। U.

'इमं मे तत्त्वेत्येककपालस्य' (का० १६।७।१३) अवभृथेष्टौ वारुणस्यैककपालस्य पुरोडाशस्य पुरोऽनुवाक्यमित्यर्थः। वरुणदेवत्या गायत्री शुनःशेपदृष्टा। हे वरुण! त्वं मम इममाह्वानं श्रुधि शृणु। 'श्रुशृणु' (पा० ६।४।१०२) इति हेर्धिः। संहितायां दीर्घः। च पुनः अद्य दिने मृडयास्मान् सुखय। यतोऽहं त्वां कामये। आचक इति कान्तिकर्मा। कीदृशोऽहम्? अवस्युः अवनमवः पालनम्। अवतेरसुन् तदिच्छति अवस्युः 'सुप आत्मनः

---

[1] In YV. 20. 2, the words मृत्योः पाहि विद्योत्पाहि are added at the end of the Ṛgvedic stanza.

क्यच्' ( पा० ३।१।८ ) 'क्याच्छन्दसि' ( पा० ३।२।१७० ) इत्युप्रत्ययः। आत्मनो रक्षणमिच्छन् त्वामिच्छामीत्यर्थः। Mah.

RV.1.27.7=YV.6.29.

गायत्र्याग्नेयी। हे अग्ने! यं मनुष्यं सङ्ग्रामेषु अवाः अवसि, अवते रक्षणार्थस्यैतद्रूपम्। रक्षसि। वाजेषु। वाज इत्यन्ननाम। हविर्लक्षणेष्वन्नेषु अभ्युद्यतेषु। यं च पुरुषं जुनाः। जुनातिर्गत्यर्थः। अभिगच्छसि। स पुरुषो यन्ता जिनात्यन्नम्। तृजन्तमेतत्, आद्युदात्तत्वात्। लब्धा सततं भवति। शाश्वतिकाः। अन्नानि। U.

'प्रचरणीस॒ स्त्रवमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं यमग्ने' ( का० ६।३।१६ ) इति अग्निष्टोमसंस्थे क्रतौ प्रचरणीपात्रलिप्तमाज्यशेषं जुहुयात् शेषाज्यस्य होमपर्याप्त्यभावे चतुर्गृहीतमादाय जुहोतीति सूत्रार्थः। आग्नेयी गायत्री। मधुच्छन्दोदृष्टा। हे अग्ने! संग्रामेषु यं मनुष्यं त्वमवसि रक्षसि। अवतेः 'इतश्च लोपः परस्मैपदेषु' ( पा० ३।४।९७ ) इति सिप इकारलोपे 'लेटोऽडाटौ' ( पा० ३।४।९४ ) इत्याडागमे वा इति रूपम्। किञ्च। वाज इत्यन्ननाम। हविर्लक्षणेष्वन्नेषु अन्ननिमित्तं यं पुरुषं त्वं जुनाः गच्छसि। हवींषि ग्रहीतुं यस्य सकाशं गच्छसीत्यर्थः। 'जु गतौ' श्नाप्रत्ययः 'इतश्च लोपः'-( पा० ३।४।९७ ) इतीकारलोपे रूपं जुना इति। स मर्त्यस्त्वदनुग्रहेण नित्यान्यन्नानि धनरूपाणि यन्ता नियस्यति प्राप्स्यतीत्यर्थः। लुट्। स्वाहा सुहुतमस्तु। उक्थसंस्थे यमग्ने इति मन्त्रेणाद्यं परिधिं स्पृशेत्। षोडशिसंस्थे रराटीं स्पृशेत्। अतिरात्रे छदिः स्पृशेत्। अन्यसंस्थासु हविर्धानं प्रविशेत्। Mah.

RV.1.30.7=YV.11.14.

अजमभिमन्त्रयते। गायत्री। योगेयोगे तवस्तरम्। तव इति बलनाम कर्मणि कर्मणि बलिनमुत्साहवन्तमेतमजम्। अन्ने अन्ने दातव्ये देवानां मनुष्याणाञ्चाह्वयामः। हे सखायः! ऋत्विग्यजमानाः! इन्द्रियवन्तं वीर्यवन्तम्। ऊतये अवनाय। आह्वयाम इति सम्बन्धः। U.

अजदेवत्या गायत्री शुनःशेपदृष्टा। अजं मन्त्रयते। सखायः परस्परसख्यं प्राप्ता ऋत्विग्यजमानाः, वयमिन्द्रियवन्तं वीर्यवन्तमिन्द्रियप्रदं वा अजमवनाय रक्षणाय आह्वयामः। ह्वः शपि सम्प्रसारणम्। क्व सति? तत्तदन्ने मनुष्याणां देवानां च दातव्ये सति तत्तदन्नप्राप्तिनिमित्तं वा। किम्भूतमजम्?

युज्यतेऽनुष्ठीयते इति योगः कर्म तस्मिन्। तत्तत्कर्मणि तवस्तरं बलवत्तरमुत्साहवन्तम्। तव इति बलनाम। तवो बलमस्यास्तीति तवस्वी। 'असाया'–(पा० ५।२।१२१) इत्यादिना विन्। अत्यन्तं तवस्वी तवस्तरस्तम्। अतिशये तरप् 'विन्मतोर्लुक्' (पा० ५।३।६५) इति तरपि विनो लुक्। Mah.

RV.1.31.1=YV.34.12.

आग्नेयी जगती। हे अग्ने! त्वमाद्यः अङ्गिरा ऋषिः अभवः। त्वञ्च प्रथमः देवः देवानामभवः। कल्याणः। समानख्यानः। किञ्च तव कर्मणि वर्तमानाः क्रान्तदर्शनाः। विद्मना अपसः। अप इति कर्मनाम। विदितकर्माणः। संवृत्ता मरुतः। भ्राजन्त्य ऋष्टयः खड्गा येषां ते भ्राजदृष्टयः। यो हि शत्रून् जयति भ्राजन्ते तस्यायुधानि। U.

आग्नेयी जगती। हे अग्ने! त्वं देवानां प्रथमः सखा अभवः भूतोऽसि। आद्यो मित्रभूतो देवानां त्वमेवेत्यर्थः। किम्भूतस्त्वम्? अङ्गिराः अङ्गानां रसः। यद्वा अङ्गिभ्य आत्मभ्यो यजमानेभ्यो राति सुखमित्यङ्गिराः। ऋषिर्द्रष्टा। द्योतमानः। कल्याणः। किञ्च तव व्रते कर्मणि वर्तमाने मरुतः ईदृशा अजायन्त। कीदृशाः? क्रान्तदर्शिनः। विद्मनापसः। अप इति कर्मनाम। विद्मना विदितानि अपांसि कर्माणि यैस्ते विदितकर्माणः। भ्राजदृष्टयः भ्राजन्त्यः शोभमानाः ऋष्टयः आयुधानि येषां ते तथा। शत्रुघातकत्वात्। विद्मनेति वेत्तेः कर्मणि मनिन्प्रत्ययः बहुलग्रहणात्ततो विभक्तेराकारः तस्य चालुक्। विद्मनापसः अजायन्त। जनेर्लङ् जादेशश्च श्यन्। Mah.

RV.1.31.12=YV.34.13.

आग्नेयी जगती। विषमोऽयं मन्त्रः साध्याहारः। त्वमस्माकम्, हे अग्ने! आश्रय इति शेषः। अथैवं सति तव हे देव! पालनैः धैर्यावलम्बिभिः पालिताः सन्तः आस्महे। किञ्च धनानि रक्ष। शरीराणि च रक्ष। हे वन्दितव्य! कस्मात्पुनस्त्वमेवमुच्यसे? यतः स्वभावत एव त्राता पुत्रस्य, तनयस्य पौत्रस्य च गवां च असि। कथम्? प्रमादमकुर्वन् रक्षमाणः। एवञ्चेन् मृदुहृदयतमोऽसि। तव कर्मणि वयं स्याम। अन्या देवताः परित्यज्य त्वामेव परिचराम इत्यभिप्रायः। U.

रक्षणार्थो मन्त्रः। हे अग्ने! हे देव! द्योतमान! हे स्तुत्य! तव कर्मणि वर्तमानान् धनवतो यजमानान् पालय। अस्माकं शरीराणि च रक्ष। कैः?

तव त्वदीयैः पालनैः । यतस्त्वं सावधानं पालयन् सन् पुत्रस्य तनये । विभक्तिव्यत्ययः । तनयस्य पौत्रस्य गवां च रक्षकोऽसि । Mah.

RV.1.34.11=YV. 34.47.

आश्विनी जगती । आगच्छतम्, हे अश्विनौ ! त्रयस्त्रिंशद्भिर्देवैः सहितौ भूत्वा । तदुक्तम् अष्टौ वसव इत्यादि । इह । मधुः सोमः । सोमपानं प्रति । एत्य च प्रतारिष्टं प्रवर्धयतम् आयुः । 'मृजूष् शुद्धौ' । रपः पापमुच्यते । निःशोधयतं नाशयतम् । पापानि । सेधतं द्वेषः । 'षिधु गत्याम्' । गमयतं दौर्भाग्यम् । भवतञ्च सहभुवौ सर्वकार्येषु संयुक्तौ । U.

जगती अश्विदेवत्या । हे नासत्यौ ! हे अश्विनौ ! त्रिगुणैरेकादशभिः त्रयस्त्रिंशत्संख्याकैः देवैः इह स्थाने सोमपानं प्रति आगच्छतम् । मधुः सोमस्तस्य पेयं पानम् । किञ्च । आयुः प्रतारिष्टम् । तरतिर्वृद्ध्यर्थः प्रवर्द्धयतम् । पापानि निःशेषं शोधयतम् । नाशयतमित्यर्थः । दौर्भाग्यं सेधतम् । 'षिधु गत्याम्' गमयतं नाशयतमित्यर्थः । सचा इत्यव्ययं सहार्थे । सचा सह भवतस्तौ सचाभुवौ क्विप् । कार्येषु संयुक्तौ भवतम् । अष्टौ वसव इत्यादिना त्रयस्त्रिंशद्देवता गणिताः । तारिष्टम् । तरतेर्लुङि मध्यमद्विवचनं 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा० ६।४।७५ ) इत्यडभावः । मृक्षतम् 'मृजूष् शुद्धौ' 'लेटोऽडाटौ' 'सिब्बहुलं लेटि' ( पा० ३।१।३४ ) इति सिप् 'तस्थस्थमिपाम्' ( पा० ३।४।१०१ ) इति व्यत्ययेन थसस्तमादेशः । Mah.

RV.1.35.2=YV.33.43; 34.31.

पुनः पुनर्भ्रमणं कुर्वन् । कृष्णेन रजसा रात्रिलक्षणेन सह । स्वेषु स्वेषु प्रदेशेषु स्थापयन् देवादिकं मनुष्यादिकञ्च । हिरण्मयेन सविता रथेन । आयाति दानादिगुणयुक्तः भूतजातानि पश्यन् । कानि कानि साधु कुर्वन्ति कानि कानि वा असाध्विति स्वरूपानुवादः । U.

हिरण्यस्तूपदृष्टा त्रिष्टुप् सावित्रपुरोरुक् । सविता देवः हिरण्मयेन रथेन आगच्छति । किं कुर्वन् ? कृष्णेन रजसा रात्रिलक्षणेन सह पुनर्भ्रमणं

---

[1] According to the rule of Amarakośa—'त्रिशत्याद्याः सदैकत्वे' sing. number should have been used. The reading in that case should be त्रयस्त्रिंशता

कुर्वन् देवादिकं मनुष्यादिकञ्च स्वस्वप्रदेशेषु स्थापयन् भुवनानि पश्यन्। कानि साधु कुर्वन्ति कान्यसाध्विति विचारयन्। Mah.

RV.1.35.8=YV.34.24.

चतस्रः सावित्र्यः द्वितीया जगती त्रिष्टुभोऽन्याः। यः अष्टौ प्रकाशितवान् दिशः। चतस्रो दिशः चतस्रोऽवान्तरदिशः। पृथिव्याः सम्बन्धिनीः। त्रीणि धन्वानीति शब्दसमाधिः। धन्व इत्यन्तरिक्षनाम तदुपलक्षितावितरावपि लोकौ गृह्येते छत्रिणो यान्तीति यथा। यश्च त्रीन् लोकान् व्यख्यत्। यश्च योजनान् योजनगव्यूतिक्रोशादीन् मानविशेषान् व्यख्यत्। यश्च सप्तसिन्धून् सप्तसमुद्रान् व्यख्यत्। सोऽयं हिरण्याक्षः हिरण्यसदृशाक्षः अमृतदृष्टिर्वा सविता देव आगच्छतु। किं कुर्वन्? इत्यत आह—स्थापयन् रत्नमयानि धनानि। हवींषि दत्तवते यजमानाय। वरणीयानि। U.

चतस्रः सावित्र्यः द्वितीया जगती त्रिष्टुभोऽन्याः हिरण्यस्तूपदृष्टाः। स सविता देव आगच्छतु। 'इणो गा लुङि' (पा० २।४।४५) इतीणो गादेशः। किं कुर्वन्? हवींषि दत्तवते यजमानाय वरणीयानि रत्नानि ददत् स्थापयन् वा। कीदृशः? हिरण्यमिव कान्तियुक्ते अक्षिणी यस्य स हिरण्याक्षः अमृतदृष्टिर्वा। स कः? यः सविता पृथिव्याः सम्बन्धिनीः अष्टौ दिशः व्यख्यत् प्रकाशितवान्। यश्च त्रीणि धन्वानि लोकान् व्यख्यत्। धन्वेत्यन्तरिक्षनाम। तेन तदुपलक्षितावितरावपि लोकौ लक्ष्येते। छत्रिणो गच्छन्तीतिवत्। यश्च योजनानि योजनगव्यूतिक्रोशादीनध्वपरिमाणविशेषान् व्यख्यत्। यश्च सप्त समुद्रान् क्षीरोदाद्यान् व्यख्यत्। उपलक्षणमेतत्। सर्वजगत्प्रकाशकः सविता रत्नानि ददान आयात्वित्यर्थः। अख्यत् 'ख्या प्रकथने' 'अस्यतिवक्तिख्यातिभ्योऽङ्' (पा० ३।१।५२) इति च्लेरङ् आलोपश्च धातूनामनेकार्थत्वादत्र प्रकाशनार्थो ग्राह्यः। त्री योजना 'सुपां सुलुक्' (पा० ७।१।३९) इत्यादिना पूर्वसवर्णदीर्घो विभक्तेः। धन्व सुपो लुक्। रत्ना सुप आकारः। दाशुषो 'दाश्वान्साह्वान्' (पा० ६।१।१२) इति निपातः। वार्याणि 'ऋहलोर्ण्यत्' (पा० ३।१।१२४) इति वृणोतेर्ण्यत्। Mah.

RV.1.35.9=YV.34.25.

सुवर्णपाणिः सविता। विविधं द्रष्टा कृताकृतप्रत्यवेक्षकः उभे द्यावा-पृथिवी अन्तः। अधिकरणश्रुतेर्योग्यक्रियाया अध्याहारः। मध्ये स्थितः ईयते एति यदा। अथ तदा अपामीवां बाधते। अमीवां व्याधिम्। वेति विगति-कर्मा। गच्छति सूर्यरूपमवस्थाय। ततोऽस्तमनकाले। अभिकृष्णेन रजसा द्यामृणोति। अभिमृणोति अभिव्याप्नोति। कृष्णेन रजसा तमोलक्षणेन। द्यां द्युलोकम्। U.

प्रसविता सूर्यं सूर्यः विभक्तिव्यत्ययः। उभयोः द्यावापृथिव्योः अन्तर्मध्ये आगच्छति यदा तदा व्याधिमपबाधते अन्धकारलक्षणं रोगं निवर्तयति। अथ यदा वेति अस्तमयसमये गच्छति तदा कृष्णेन रजसा अन्धकारलक्षणेन द्युलोकमभिव्याप्नोति। कीदृशः सूर्यः? हिरण्यपाणिः सुवर्णपाणिः। विविधं द्रष्टा कृताकृतप्रत्यवेक्षकः। उभे द्यावापृथिवी षष्ठ्यर्थे द्वितीया। अन्तर्योगे वा। ईयते 'ईङ् गतौ' दिवादिः। Mah.

RV.1.35.10=YV.34.26.

द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते सामर्थ्यात्। यः अपगमयन् रक्षसः यातुधानाँश्च असुखकारकान्। उदस्थात्। श्रुतिस्मृतिविहितधर्मपराङ्-मुखानां यावन्तो दोषास्तावतः स्तुवन् उच्चारयन् गणयन् उपभोगार्थ-मित्यभिप्रायः। सोऽयं सविता हिरण्यहस्तः। हिरण्यदानार्थं हस्तौ यस्य स तथोक्तः। रूपेण वा स्तुतिः। असुरः 'रा दाने' असून् प्राणान्ददातीत्य-सुरः। नीथा स्तुतिः। कल्याणस्तुतिः। साधु सुखयिता। स्ववान्। आत्मीयज्ञातिधनवचनः स्वशब्दः। यातु आयातु। अर्वागञ्चनः अस्मान-भिमुखः। U.

यो देवो रविः राक्षसान् असुखकराँश्च अपगमयन् सन् उदस्थात् तदेति स देवः अर्वागञ्चनः अस्मदभिमुखः आयात्वित्यर्थः। कीदृशो देवः? हिरण्यहस्तः हिरण्यं दानार्थं हस्ते यस्य स तथोक्तः। रूपेण वा स्तुतिः। असून् प्राणान् राति ददातीत्यसुरः। नीथा स्तुतिः कल्याणस्तुतिः। साधु सुखयिता। स्ववान्धवान्। प्रतिजनं यो दोषः प्रतिदोषः तम्। श्रुतिस्मृति-विहितधर्मपराङ्मुखानां यावन्तो दोषास्तावतः उच्चारयन् उपभोगार्थमित्यभि-प्रायः। स्ववान् यातु इत्यत्र 'दीर्घादटि समानपादे' (पा० ८।३।९) इति नस्य

त्वे भोभगोअघोअपूर्वस्य योऽशि (पा० ८।३।१७) तस्य रोर्यादेशे 'हलि सर्वेषाम्' (पा० ८।३।२२) तस्य लोपः। रक्षस्शब्दस्य व्यत्ययेनाक्लीबत्वम्। Mah.

RV.1.35.11=YV.34.27.

ये तव पन्थानः। वचनव्यत्ययः। हे सवितः! पूर्वेष्वपि कालेषु भवाः। अपांसुलाः साधुकृता धात्रा अन्तरिक्षे। तैः अस्मान् अद्य नयेति शेषः। पथिभिः साधुगमनैः अन्नपानप्रभृतैर्गच्छतः रक्ष च अस्मान्। अङ्गीकृत्य च ब्रूहि। यथा एते अस्मदीया इति। यद्वा यदस्माकं हितं पथ्यं तदुपदिश। हे दानादिगुणयुक्त! U.

हे सवितः! हे देव! पन्थानो मार्गा अन्तरिक्षे साधुकृता धात्रा वर्तन्ते। कीदृशास्ते? पूर्वेषु कालेषु भवाः पूर्व्याः। अरेणवः नास्ति रेणुर्यत्र अपांसुलाः। तैः पथिभिः मार्गैः अस्मान् अद्य नयेति शेषः। च पुनः गच्छतोऽस्मान् रक्ष पालय। अङ्गीकृत्य ब्रूहि एते मदीया इति। यद्वा उपदिशास्माकं यद्धितं पथ्यं तत्। यद्वा अधिकान् वद एते महायाज्ञिका दातार इत्यादि। किम्भूतैः पथिभिः? सुगैः सुखेन गम्यते येषु तैः अन्नपानप्रभृतैरित्यर्थः। अधिकरणे गच्छतेर्डप्रत्ययः। पूर्वैः कृताः पूर्व्यासः 'पूर्वैः कृतमिनियौ च' (पा० ४।४।१३३) इति यप्रत्ययः। Mah.

RV.1.36.9=YV.11.37.

हे अग्ने! सङ्गत्य सीदस्व। यतः त्वं महानसि। दीप्यस्व। यतस्त्वम् अतिशयेन देवानामाप्यायिता। विसृज च विधूमम् अरोचनम्। मियेध्य। यमेध्य इति प्राप्ते छान्दसोऽपकर्षः। हे प्रशस्तलक्षण! दर्शनीयमाहुतिपरिणामभूतम्। 'इतो वा अयमूर्ध्वं रेतः सिञ्चति धूमं सामुत्र वृष्टिर्भवति' इति श्रुतिः। U.

आग्नेयी बृहती प्रस्कण्वदृष्टा। तृतीयो द्वादशार्णोऽन्येऽष्टार्णाः। मेध्यशब्दस्य छान्दसो विप्रकर्षः। हे मियेध्य! हे मेध्य! यज्ञिय! यज्ञार्ह! हे प्रशस्त! उत्कृष्ट! अग्ने! त्वं संसीदस्व पुष्करपर्णे सम्यगुपविश। यस्त्वं महानसि अनेकक्रतुहेतुत्वात्। स त्वं शोचस्व 'शुच दीप्तौ' दीप्यस्व। कीदृशस्त्वम्? देवान् वेति तर्पयति देववीः 'वी कान्त्यादौ' क्विप्। अतिशयेन देववीः देववीतमः। किञ्च दर्शनीयमरोचनं धूमं विसृज। वीत्युपसर्गः सृजेत्यनेन सम्बध्यते। 'इतो वा अयमूर्ध्वꣳ रेतः सिञ्चति धूमꣳ सामुत्र वृष्टिर्भवति' इति श्रुतिः। Mah.

RV.1.36.13=YV.11.42.

अथैनमित ऊर्ध्वं प्राश्वं गृह्णाति । ऊर्ध्व ऊषुण बृहती आग्नेयी । ऊर्ध्वस्तिष्ठ । ऊषु पादपूरणे । अस्माकमवनाय । कथमूर्ध्वस्तिष्ठ ? देवो न सविता- नकार उपमार्थीयः । देव इव सविता ऊर्ध्वः स्थितः अन्नस्य सम्भक्ता । भविष्यसीति शेषः । यस्माद् व्यञ्जकैर्द्रव्याणां रश्मिभिः । हविषां वोढृभिः सहितं विविधमाह्वयामः । तदूर्ध्वस्तिष्ठेति सम्बन्धः । U.

'ऊर्ध्वबाहुः प्राश्वं प्रगृह्णात्यूर्ध्व ऊ षु ण इति' (का० १६।३।८) प्रसारितबाहुः प्राश्वं पिण्डं गृह्णाति । अग्निदेवत्योपरिष्टाद्बृहती कण्वदृष्टा । चतुर्थः पादो द्वादशार्णोऽन्ये त्रयोऽष्टार्णाः सोपरिष्टाद्बृहती । हे अग्ने ! अस्माकं रक्षणाय ऊर्ध्व एव सुतरामवस्थितो भव । 'द्व्यचोऽतस्तिङः' (पा० ६।३।१३५) इति दीर्घस्तिष्ठा इत्यत्र । 'नश्च धातुस्थोरुषुभ्यः' (पा० ८।४।२७) इति न इत्यत्र णत्वम् । क इव ? देवो न सविता । न इवार्थे । सविता देव इव । यथा सविता देव ऊर्ध्वः सन्नस्मानवति तद्वत् । स त्वमूर्ध्वः सन् देव ! अन्नस्य दाता भवेति शेषः । 'षणु दाने' । यद्यस्मात्कारणाद् मन्त्राभिव्यञ्जकैः हव्यवाहकैर्ऋत्विग्भिः सह त्वा विविधमाह्वयामः । तस्मादूर्ध्व एव तिष्ठेति पूर्वत्रान्वयः । अञ्जन्ति व्यक्तीकुर्वन्तीत्यञ्जिनस्तैः । यद्वा अञ्जिभिर्द्रव्याणां व्यञ्जकै रश्मिभिः सहितं त्वां विह्वयामहे । कीदृशैरञ्जिभिः ? वाघद्भिः हविषां वोढृभिः । Mah.

RV.1.40.1=YV.34.56.

ब्राह्मणस्पती बृहती । हे ब्रह्मणस्पते ! ऊर्ध्वो भव । आरब्धकार्यो भव । यस्माद् देवान् कामयमानाः यजमानाः त्वां भवन्तं याचामहे आगच्छेति । भवन्तमागच्छन्तमुपसङ्क्रम्य आगच्छन्तु । मरुतः कल्याणदानाः । त्वं च हे इन्द्र ! प्रकर्षेण शीघ्रो भव सहगमनाय । U.

ब्राह्मणस्पतिदेवत्या बृहती । हे ब्रह्मणो देवस्य ? (वेदस्य) पते ! पालक ! ऊर्ध्वः आरब्धकार्यो भव । यतो वयं देवान् कामयमानाः त्वां याचामहे, आगच्छेति । मरुतः भवन्तमागच्छन्तमुप समीपे आगच्छन्तु । किम्भूताः मरुतः ? शोभनं ददति ते सुदानवः । हे इन्द्र ! त्वमपि सहगमनाय प्रकर्षेण शीघ्रो भव । देवान् कामयन्ते देवयन्ति ततः शतृप्रत्ययः 'सुप आत्मनः क्यच्' (पा० ३।१।८) 'न छन्दस्यपुत्रस्य' (पा० ७।४।३५) इति निषेधात् 'क्यचि च'

(पा० ७।४।३३) इतीत्वाभावः, 'अश्वाघस्यात्' (पा० ७।४।३७) इत्यश्वाघयो-रेवाकारविधानात् 'अकृत्सार्वधातुकयोः' (पा० ७।४।२५) इति दीर्घोऽपि न स्यात्? ईमहे याचतिकर्मसु पठितः। 'ई गतौ' दिवादित्वादागतस्य श्यनश्छान्दसो लोपः। सुदानवः, 'दाभाभ्यां नुः' (उणा० ३।३२) आशुः आशुशब्दे दीर्घश्छान्दसः। भवा संहितायां 'द्व्यचोऽतस्तिङः' (पा०६।३।१३५) इति दीर्घः। Mah.

RV.1.40.3=YV.33.89.

अस्मदीयं यज्ञं प्रति आगच्छतु। बृहस्पतिः। प्रैतु च देवी वाक्। शोभना सत्यवती त्रयीलक्षणा। कं प्रत्यागच्छतु? इत्यत आह। अभि पुत्रं महावीरं वा। नृभ्यो हितमनुग्राहकम्। ब्रह्मपङ्क्तिसाधकम्। पङ्क्तिपावनमित्यर्थः। किञ्च देवा यज्ञं नयन्तु अस्माकम्। U.

कण्वदृष्टा वैश्वदेवी। ब्रह्मणो वेदस्य पतिः हिरण्यगर्भः अस्माकं यज्ञमच्छ यज्ञाभिमुखं प्रकर्षेणागच्छतु। ब्रह्मणस्पतिः 'ब्रह्मणः पाता पालयिता वा' (निरु० १०।१२) इति यास्कः। तथा देवी देवतात्मा प्रियसत्यस्वरूपा तस्यैव वाक् त्रयीरूपा यज्ञं प्रैतु। किञ्च देवा यष्टव्या अस्मान् यज्ञं नयन्तु प्रापयन्तु। यज्ञं कारयन्त्वित्यर्थः। कीदृशं यज्ञम्? विशेषेणेरयति वीरस्तं शत्रूणां विशेषोन्मूलयितारम्। 'वीरो वीरयत्यमित्रान्' (निरु० १।७) इति यास्कः। नर्यं नृभ्यो मनुष्येभ्यो हितम् 'उगवादिभ्यः' (पा० ५।१।२) इति यत्। इन्द्रस्य पुरोडाशः, हर्योर्धानाः, पूष्णः करम्भः, सरस्वत्यै दधि मित्रावरुणयोः पयस्या एषा हविःपङ्क्तिः। द्विनाराशंसं प्रातःसवनम् द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयं सवनम्, एषा नाराशंसपङ्क्तिः। त्रीणि सवनानि पशुरुपवसथ्यः पशुरनुबन्ध्यः एषा सवनपङ्क्तिः। एताभिः पङ्क्तिभी राधः समृद्धिर्यस्य पङ्क्तयो राध्यन्ते साध्यन्ते यत्रेति वा पङ्क्तिराधाः तम्। ब्रह्मणस्पत्यादयः ईदृशं यज्ञमस्माभिः कारयन्त्विति सर्वार्थः। Mah.

RV.1.40.5=YV.34.57.

नूनमिति पादपूरणः। प्रोच्चारयति। ब्रह्मणस्पतिर्मन्त्रमुक्थ्यम्। उक्थ्यमिति शस्त्रमुच्यते तत्र सम्भवन् मन्त्र उक्थ्यः। कथम्भूतोऽसौ मन्त्रः?

यस्मिन् मन्त्रे इन्द्रश्च वरुणश्च अर्यमा च अन्ये देवाश्च ओकांसि । ओक इति निवासनाम । निवासानि[1] चक्रिरे कृतवन्तः । U.

ब्रह्मणस्पतिः नूनं निश्चितमुक्थ्यं शस्त्रयोग्यं मन्त्रं प्रकर्षेणोच्चारयति । यस्मिन् मन्त्रे इन्द्रः, वरुणः, मित्रः, अर्यमा अन्ये च देवाः निवासान् कृतवन्तः । सर्वदेवाधारभूतं शस्त्रं पठनीयं मन्त्रवदित्यर्थः । Mah.

RV.1.44.13=YV.33.15.

हे अग्ने ! श्रुधि शृणु । 'श्रुशृणु' इत्यादिना धिभावः । सत्वरं यज्ञमाग्नेयम् । हे श्रुत्कर्ण ! शृणुतः कर्णावर्थिनां वचांसि यस्य स तथोक्त ! त्वयि श्रुतवति वोढृभिर्देवैः । सयावभिः । 'या प्रापणे' वनिप् । समानमाप्तिभिः सहिताः । आसीदन्तु बर्हिषि । मित्रः अर्यमा च अन्ये च । प्रातर्यावाणः प्रातरेव हविः प्राप्तिर्येषां ते तथोक्ताः । U.

शृणुतः इति श्रुतौ अर्थिवचः श्रोतारौ कर्णौ यस्य स श्रुत्कर्णः । हे श्रुत्कर्ण ! देवैः सह त्वं यज्ञं शृणु । कीदृशैर्देवैः ? हवींषि वहन्ति ते वह्नयस्तैः । सह यान्ति ते सयावानः तैः । किञ्च मित्रः अर्यमा प्रातर्यावाणश्च देवाः बर्हिषि आसीदन्तु उपविशन्तु । प्रातर्यान्ति हविः प्राप्नुवन्ति प्रातःसवने येषां हविःप्राप्तिस्ते । Mah.

RV.1.45.6=YV.15.31.

हे अग्ने ! चित्रश्रवस्तम ! चित्रं नानारूपं श्रवो धनमतिशयेन यस्य स चित्रश्रवस्तमः तस्य सम्बोधनं हे चित्रश्रवस्तम ! त्वाम् आह्वयन्ति मनुष्येषु मध्ये व्यवस्थितम्, मनुष्याः । कथम्भूतम् ? शोचिष्केशम्-शोचन्ति दीप्यन्ते ज्वालाः केशस्थानीयाः अस्येति शोचिष्केशः । हे पुरुप्रिय ! बहवो यजमानाः प्रिया अस्य । बहूनां यजमानानां वा प्रियः । बहु वा हविः प्रियमस्येति समासविशेषाः । तस्य सम्बोधनं हे पुरुप्रिय ! किमर्थमाह्वयन्ति ? हव्याय वोढवे हवींषि वोढुं परियामः[2] U.

---

[1] निवास is in the masculine gender and the reading should therefore be निवासान्

[2] परियामः does not give any sense. The reading in the original is हव्याय वोढवे. The commentator means to say that the accusative should have been used: हवींषि वोढुम् so I suggest विभक्तिविपरिणामः for परियामः ।

चित्रं नानाविधं श्रवो धनं कीर्तिर्वा यस्य स चित्रश्रवाः, अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमस्तत्सम्बुद्धिः। पुरुप्रिय! पुरूणां बहूनां यजमानानां प्रियः। यद्वा पुरवः प्रिया यस्य, पुरु बहु हविः प्रियं यस्येति वा हे पुरुप्रिय! हे अग्ने! प्रजासु ऋत्विग्यजमानाः त्वाम् आह्वयन्ति। 'ह्वेञ् आह्वाने' 'ह्वः सम्प्रसारणम्' (पा० ६।१।३२) इति शपि सम्प्रसारणं गुणश्च। किं कर्तुम्? हव्यं वोढुं प्राप्तुम्। विभक्तिव्यत्ययः। 'तुमर्थे सेसेन्' (पा० ३।४।९) इति तुमर्थे तवेप्रत्ययः। Mah.

RV.1.46.15=YV.34.28.

आश्विनी गायत्री। उभौ सोमं पिबतं हे अश्विनौ! पीत्वा च सोममुभावपि अस्मभ्यं शरणं दत्तम्। किञ्च अविद्रियाभिः 'दृ विदारणे' अविदीर्णाभिः अनवखण्डिताभिरूतिभिरवनैः रक्षतमिति शेषः। U.

आश्विनी गायत्री। हे अश्विनौ! उभौ द्वावपि युवां पिबतम्। सोममिति शेषः। द्वौ युवाम् अस्मभ्यं शरणं सुखं वा यच्छतम्। काभिः सह? अविदीर्णाभिः अखण्डिताभिरूतिभिः, अवनैः पालनैः सह। सुखं दत्तं पालयतं चेत्यर्थः। उभा अश्विना विभक्तेराकारः। विदीर्यन्ती?(न्त इ)ति विद्रियाः 'दृ विदारणे' औणादिक इयक् प्रत्ययः। Mah.

[1]RV.1.50.1=YV.7.41; 8.41; 33.31.

दाक्षिणानि जुहोति। सौरी गायत्री। उदित्ययमुपसर्गो वहन्तीत्यनेन सम्बध्यते। उद्वहन्ति। कम्? तं सूर्यम्। जातप्रज्ञानम्। दातारं द्युस्थानं वा। रश्मयः। किमर्थमुद्वहन्ति? दर्शनाय। विश्वाय षष्ठ्यर्थे चतुर्थी। विश्वस्य जगतः। U.

'शालाद्वार्ये दाक्षिणहोमो वासः प्रबद्ध्य हिरण्यं हवन्यामवधाय चतुर्गृहीतमुदुत्यमिति' (का० १०।२।४।५) वस्त्रबद्धं स्वर्णं जुह्वां निधाय शालाद्वार्येऽग्नौ चतुर्गृहीताज्येन दाक्षिणसंज्ञो होमः कार्यः। सौरी गायत्री प्रस्कण्वदृष्टा। तृतीयः पादः सप्ताक्षरः। उनिपातः पादपूरणः। त्यमिति

---

[1] In 7.41 and 33.31 YV. adds the word स्वाहा to the stanza of the RV. In 8.41 YV. adds उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय at the end, to the stanza of the RV.

त्यच्छब्दश्छान्दसः तच्छब्दार्थे । रश्मयः तं प्रसिद्धं सूर्यं देवमुद्वहन्ति । 'देवो दानाद् द्योतनाद्वा' ( निरु० ७।२० ) इति यास्कः। किम्भूतं सूर्यम् ? जातवेदसं जातं वेदो ज्ञानं धनं वा यस्मात्तम् । किमर्थमुद्वहन्ति ? विश्वाय दृशे। षष्ठ्यर्थे चतुर्थी। विश्वस्य दर्शनाय जगद् द्रष्टुम् इत्यर्थः। 'दृशे विख्ये च' ( पा० ३।४।११ ) इति तुमर्थे निपातः तस्मै स्वाहा सुहुतमस्तु । Mah.

YV.8.41

विषुवति ग्रहं गृह्णाति । उदुत्यं जातवेदसम् । व्याख्यातम् । देवार्षं तु । U.

'उदुत्यमिति ग्रहग्रहणमिति' ( का० १३।२।११ ) गवामयनाख्यस्य संवत्सरसत्रस्य विषुवन्नामके मध्यमेऽहनि सौर्यपशूपालम्भादूर्ध्वमतिग्राह्यग्रहणं कार्यम् । सौरी गायत्री । देवदृष्टा पुनर्व्याख्यायते ( अ ७। कं० ४१ ) तं प्रसिद्धं जातानां प्रजानां ज्ञातारं जातप्रज्ञं वा देवनशीलं सूर्यं केतवः प्रज्ञाहेतवः किरणा उ आशु उदयाचलादुद्गमयन्ति । किमर्थम् ? विश्वाय । षष्ठ्यर्थे चतुर्थी । विश्वस्य दर्शनाय सर्वं जगद्द्रष्टुमित्यर्थः । Mah.

[1] RV.1.50.3=YV.8.40.

'दृशिर् प्रेक्षणे' अस्य कर्मणि प्रथमपुरुषबहुवचनस्थाने छान्दसं रूपमदृश्रमिति । दृश्यन्ते अस्य सूर्यस्य प्रज्ञानकृतत्वात् केतवो रश्मयः । केतुरिति प्रज्ञानामसु पठितम् । वि इत्यनर्थको निपातः । अथवा व्यदृश्रमिति सम्बन्धः जनान् अनु अनुगताः। भ्राजन्तो देदीप्यमानाः। कथम्भूता दृश्यन्ते ? अग्नय इव । U.

अतिग्राह्यमन्त्रः । सूर्यदेवत्या गायत्री प्रस्कण्वदृष्टा यजुरन्ता । दृशेर्लुङि 'इरितो वा' ( पा० ३।१।५७ ) इति च्लेरङादेशे 'ऋदृशोऽङि गुणः' ( पा० ७।४।१६ ) इति उत्तमैकवचने अदर्शमिति प्राप्ते 'शीङो रुट्, वेत्तेर्विभाषा', 'बहुलं छन्दसि, ( पा० ७।१।६-७-८ ), इति दृशेरुत्तरस्य भिवादेश-

---

[1] YV. adds उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय । सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजिष्ठोऽहं मनुष्येषु भूयासम् at the end, to the stanza of the RV.

स्यामो रुडागमो धातोर्गुणाभावश्छान्दसः। अदृश्रमिति रूपम्। कर्मणि लुङि प्रथमपुरुषबहुवचनस्थाने द्रष्टव्यमदृश्यन्तेत्यर्थे। वीत्युपसर्गोऽदृश्रमित्यनेन सम्बध्यते। केतुरिति प्रज्ञानामसु पठितम्। अस्य सूर्यस्य केतवः प्रज्ञाहेतवः सर्वपदार्थज्ञानकृतो रश्मयः किरणाः। जनाननु सर्वप्राणिनोऽनुगताः। वि अदृश्रम् विशेषेणादृश्यन्त। सूर्यकराः सर्वजनानुगता व्यापका दृश्यन्त इत्यर्थः। तत्र दृष्टान्तः, भ्राजन्तो ज्वलन्तोऽग्नयो वह्नयो यथा जनानुगता दृश्यन्ते तद्वत्। Mah.

RV.1.50.4=YV.33.36.

यस्त्वं तरणिरसि। तूर्णं वर्तसे। सर्वदर्शनीयश्चासि। ज्योतिषश्च कर्तासि। हे सूर्य! तं त्वां प्रति तथा ब्रूमः त्वमेव विश्वं सर्वम् आभासि दीपयसि। रोचनं दीप्तम् अग्निविद्युद्ग्रहतारकारूपं त्वदीयमेवैकं ज्योतिः सर्वत्राभातीत्यर्थः। U.

प्रस्कण्वदृष्टा गायत्री वैश्वदेवपुरोरुक्। हे सूर्य! त्वं तेजसः कर्तासि। विश्वं प्रकाशयसि च। अग्निविद्युन्नक्षत्रचन्द्रग्रहतारकादिषु त्वदीयं तेज इत्यर्थः। कीदृशं विश्वम्? दीप्यमानं स्वप्रकाशेनेति भावः। कीदृशस्त्वम्? तरणिः तरत्यतिक्रामति नभोवर्त्मेति तरणिः। 'अर्त्तिसृधृधम्यश्यवितृभ्योऽनिः (उणा० २।१०२)' इति तरतेरनिप्रत्ययः। विश्वदर्शतः विश्वस्य दर्शनीयः। दृशेरतच्। Mah.

RV.1.50.6=YV.33.32.

गायत्री। सर्वमेधाग्निश्चीयते। तेन रूपेण आत्मानं सम्पाद्य क्षिप्रं यजमानो मोक्षं प्राप्नोति तदिह प्रार्थ्यते। येन हे पावक! पावयितः! येन दर्शनेन। भुरण्यन्तं जनान् अनु। शकुनिः क्षिप्रपाती भुरण्युरित्यभिधीयते। सर्वमेधयाजिनो जनान् अनुभुरण्यन्तं पक्षिरूपेणात्मानं सम्पाद्य क्षिप्रं गच्छन्तमित्यर्थः। त्वं हे वरुण! सूर्य! पश्यसि। तदोऽध्याहारेण वाक्यपरिपूर्तिः। येन जनान् अनुभुरण्यतः पश्येति। U.

प्रस्कण्वदृष्टा गायत्री मैत्रावरुणपुरोरुक्। सर्वमेधे पक्ष्याकारेणाग्निश्चीयते। तद्रूपमात्मानं सम्पाद्य मुक्तिमाप्नोति तदत्र प्रार्थ्यते। हे पावक! शोधक! येन दर्शनेन त्वं भुरण्यन्तमनुपश्यसि। क्षिप्रपाती पक्षी भुरण्युः। भुरण्युमात्मानं करोति भुरण्यति, भुरण्यतीति भुरण्यन् तम्। क्विबन्तात् शतृप्रत्ययः। सर्वमेधयाजिनं भुरण्युपक्षिरूपमात्मानं कृत्वा स्वर्गच्छन्तं येन

चक्षसानुपश्यसीत्यर्थः । तेन चक्षसा जनानस्मानपि भुरण्यतः हे वरुण ! त्वं पश्य । वरुणः सूर्यः । Mah.

RV.1.50.10=YV.20.21; 27.10; 35.14; 38.24.

उत्तरति । उद्वयमनुष्टुप् सौरी । उदः अगन्मेत्याख्यातेन सम्बन्धः । उद्गताः स्म वयं तमसोऽधि तमोबहुलादस्माल्लोकात् । स्वर्गं लोकं पश्यन्तः । उद्गततरमस्माल्लोकात् । ततोऽपि देवं सूर्यम् । देवेषु । उदगन्म । ज्योतिः उत्तमं सर्वेभ्यो ज्योतिर्भ्यः । U.

'सोमवदुत्क्रमणमागमनं च' ( का० १६।५।१७ ) सोमवदिति उद्वयमिति मन्त्रेण जलान्निष्क्रमणम् । 'अपाम सोममम्रुता अभूम' इति जपतां सर्वेषां त्रिपशुदेशमागमनमिति सूत्रार्थः । सूर्यदेवत्यानुष्टुप् प्रस्कण्वदृष्टा । वयं तमसः सकाशात्तमोबहुलादस्माल्लोकाद् उद्गताः निर्गताः । गमेर्लङि शपि लुप्ते मस्य नः । कीदृशा वयम् ? उत्कृष्टतरं स्वर्गम् ईक्षमाणाः । किञ्च देवलोके सूर्यं देवं पश्यन्तः सन्त उत्तमं ज्योतिर्ब्रह्मरूपं प्राप्ताः । Mah.

RV.1.62.1=YV.34.16.

ऐन्द्री त्रिष्टुप् । प्रजानीमः । बलमाविष्कुर्वते । बलम् । आघोषं स्तोमम् । देवाय । कथमिव ? अङ्गिरसा तुल्यप्रज्ञानाय च । सुवृक्ताभिः शोभनाभिः स्तुतिभिः । स्तुवते स्तुवन्तीति विभक्तिव्यत्ययः सामर्थ्यात् । ऋग्मयाय स्तुतिमयाय, अर्चनीयाय च । वयमुच्चारयामः । मन्त्रम् । नृरूपाय । शौर्यबलदानादिलब्धख्यातये । U.

ऐन्द्री त्रिष्टुप् । वयम् इन्द्राय इन्द्रार्थं स्तोमं त्रिवृदादिकं जानीमः । किम्भूतं स्तोमम् ? बलहेतुम् । मन्त्रञ्च । उच्चारयाम । धातूनामनेकार्थत्वादर्चतिरुच्चारणार्थः । अङ्गिरस इव । तैर्यथा स्तोमो ज्ञातो मन्त्रश्च पठितस्तस्मै तद्वत् । किम्भूतायेन्द्राय ? शवसानाय शवो बलमात्मन इच्छति शवस्यति शवस्यतीति शवसानः तस्मै । बलमभिलषमाणाय । 'सुप आत्मनः क्यच्' ( पा० ३।१।८ ) इति क्यच् तदन्ताच्छानच् शप् 'बहुलं छन्दसि' ( पा० २।४।२७ ) इति तस्य लुक् 'छन्दस्युभयथा' ( पा० ३।४।११७ ) इति तस्य शानचोऽप्यार्धधातुकत्वात् 'क्यस्य विभाषा' ( पा० ६।४।५० ) इति क्यचो लोपः शवसान इति सिध्यति । पुनः कीदृशाय ? गिर्वणसे गिरा स्तुत्या वनयति सम्भाजयति आत्मानमभिलषितदानात्स्तोतृभ्य इति

गिर्वणाः । गीःशब्दोपपदाद् वनोतेर्ण्यन्तादसुनि वनेर्घटादित्वेन मित्त्वसंज्ञत्वात् ह्रस्वत्वं णिचो लोपः । गीर्वणा इति प्राप्ते दीर्घाभावश्छान्दसः । यद्वा स्वार्थे णिच् । गीर्भिरेनं देवा भजन्तीति गिर्वणाः तस्मै । गीर्वाणशब्देन समानार्थो गिर्वणःशब्दः । पुनः किम्भूताय ? शोभनाभिः स्तुतिभिः । स्तुवते स्तौतीति स्तुवन् तस्मै । यजमानानिति शेषः । तदुक्तं 'त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यम्' ( YV. ६।३७ ) इति । पुनः कीदृशाय ? ऋङ्मयाय वेदमयाय । मयडर्थे छान्दसो मियट् । यद्वा 'ऋच् स्तुतौ' इत्यस्माद्भावे औणादिको मक् कुत्वं जश्त्वम् । ऋङ्मः स्तुतिः । तमर्हति ऋङ्मियः अर्हार्थे घच् । स्तुतियोग्याय । पुनः कीदृशाय ? नरे नररूपाय । नृशब्दस्य ङे परे छान्दसो गुणः । पुनः कीदृशाय ? शौर्यदानबलादिभिर्लब्धख्यातये । Mah.

RV.1.62.2=YV.34.17.

ऐन्द्री त्रिष्टुप् । सामर्थ्याद् द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते । येन साम्ना । अस्माकम् । पूर्वे । पितरः । आत्मसत्तत्त्ववेदिनः । स्तुवन्तः । अङ्गिरसः ऋषयः । आदित्यरश्मीन् । लब्धवन्तः । स हि साम्नां लोकः । तत्साम । प्रभरध्वमाहरध्वम् । वः यूयम्, प्रथमाबहुवचनस्य स्थाने व आदेशः । हे पुत्रपौत्रप्रपौत्राः ! महते इन्द्राय । महत्त्वम् । अन्नम् । आङ्गूष्यं स्तोमस्य च हितं साम । प्रभरध्वम् । बलमभिलषमाणाय । U.

महते । बलमभिलषमाणाय । इन्द्राय । महत् । अन्नम् । यूयम् । प्रहरत समर्पयत । यूयमित्यर्थे व इत्यव्ययम् । मुनीनां पुत्रादीन् प्रति वचः । अङ्गूषाय हितं साम । उच्चारयत । अस्माकम् । पूर्वे । पितरः अङ्गिरसः । येनान्नेन । साम्ना च । स्तुवन्तः सन्तः । सूर्यकिरणान् । लेभिरे । स हि साम्नां लोकः । तत्साम प्रभरध्वम् । कीदृशा अङ्गिरसः ? पदमात्मस्वरूपं जानन्तीति पदज्ञाः । Mah.

RV.1.71.8=YV.33.11.

मरुत्वतीया त्रिष्टुप् । व्यवहितपदप्रायः । आहुतिपरिणामवादिनी । आ उपसर्गः आनट् इत्यनेनाख्यातेन सम्बध्यते । यदा । अन्नाय । नितरां सिक्तं देवतोद्देशेन क्षिप्तम् । मन्त्रैः संस्कृतम् । जगदुत्पत्तिबीजम् । अग्निम् । आनट् अश्नोतेरिदं रूपम्, व्याप्नोति । ततोऽपि रेतो मध्य-

स्थानं व्याप्नोति विद्युल्लक्षणं तेजः। द्यौरपि-तस्याहुतिपरिणामभूतस्य रसस्य-निकट एव। वर्त्तते। तत्। अग्निः। बलं तस्य हेतुभूतम्। प्रशस्यम्। परिपक्वं रसम्। सुष्ठु ध्यानीयम्। सर्वोऽपि वृष्टिमभिलपति। जनयति अष्टभिर्मासैः। सूदयञ्च। 'षूद क्षरणे' निष्पन्नमुदकं चतुर्भिर्मासैः क्षरति च वृष्टिद्वारेण। U.

त्रिष्टुप् पराशरदृष्टा मरुत्वतीयग्रहपुरोरुक् इन्द्र मरुत्व इत्यस्याः (YV. ७।३५) स्थाने। आ उपसर्गः आनडित्यनेन सम्बध्यते। यदा। तेजसो हेतुभूतं हविः। नृपतिं नुर्यजमानस्य पालकमग्निम्। अश्नुते, व्याप्नोति। यदाग्नौ हविर्हूयत इत्यर्थः। तदाऽग्निः। जगद्बीजभूतं जलम्। द्यौरभीके। प्रथमा षष्ठ्यर्थे। दिवः समीपे। अन्तरिक्षे। जनयति। मेघरूपेण च पुरः सूदयति क्षरति वृष्टिद्वारेण। 'षूद क्षरणे'। कीदृशं तेजः ? वृष्ण्यं। देवतोद्देशेनाग्नौ सिक्तं हुतम्। मन्त्रसंस्कृतम्। कीदृशं रेतः ? बलहेतुभूतम्। निर्दोषम्। 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' (पा० ३।१।१०१) इति गर्ह्यार्थेऽवद्यमिति निपातः। न अवद्यमनवद्यमगर्ह्यं प्रशस्यम्। युवतुल्यं परिपक्वरसम् दृढमित्यर्थः। सुष्ठु आ समन्ताद् ध्यायते चिन्त्यत इति स्वाध्यं चिन्तनीयम्। सर्वो वृष्टिमिच्छति। हविषा तर्पितोऽग्निरष्टमासैर्जलं निष्पाद्य वर्षासु वर्षतीत्यर्थः। व्यवहितपदो मन्त्रः। Mah.

RV.1.74.1=YV.3.11.

अथ यजमानाग्न्युपस्थानम्। उपप्रयन्तो अध्वरं सुपोषः पोषैरित्यन्तं देवानामार्षम्। आग्नेयी गायत्री। उपगच्छन्तः। यज्ञम्। आर्षम्। ब्रूयाम। अग्नये। दूरेऽपि स्थिताय। अस्माकञ्च मन्त्रम्। शृण्वते। अस्मन्मन्त्रश्रवणादभिमुखायेत्यर्थः। U.

'सायमाहुत्याᳫं हुतायां यजमानोऽग्नी उपतिष्ठते वात्सप्रेण न वा तिस्रस्त्रिरुपप्रयन्तो ११ अस्य प्रत्नां १६ परिते ३६ चित्रावसवित्ति १८ चेति' (का० ४।१२।१-२) आहवनीयगार्हपत्यावग्नी उपप्रयन्तो अध्वरमित्यारभ्य सुपोषः पोषैरित्यन्तं २७ बृहदुपस्थानं देवदृष्टम्। आग्नेयी गायत्री गोतमेनापि दृष्टा। आहवनीयोपस्थानमन्त्रा आदौ। वयमनुष्ठातारोऽग्नयेऽग्न्यर्थं मन्त्रं मननेन त्राणकरं शब्दसमूहमुच्याम। किम्भूता वयम् ? यज्ञमुपगच्छन्तः। किम्भूतायाग्नये ? दूरे। अस्माकम्। समीपे इति शेषः। दूरे समीपे

चास्मदीयं वाक्यं श्रोतुमुद्युक्ताय। वोचेमेति वक्तेराशीर्लिङि परस्मैपदोत्त-मबहुवचने परे 'लिङ्याशिष्यङ्' ( पा० ३।१।८६ ) इत्यङ्। यासुट्। 'अतो येयः' ( पा० ७।२।८० ) 'वच उम्' ( पा० ७।४।२० ) 'छन्दस्युभयथा' (पा० ३।४।११७) इति सार्वधातुकत्वात् 'लिङः सलोपोऽनन्त्यस्य' ( पा० ७।२।७९ ) इति सलोपः। यलोपः। वोचेम। अस्मे 'सुपां सुलुक्' ( पा० ७।१।३९ ) इति शेआदेश आमः। Mah.

RV.1.75.5=YV.33.3.

मैत्रावरुणी गायत्री। यज। अस्माकम्। मित्रावरुणौ। यज च। देवान्। यज च। यज्ञम्। महान्तम्। हे अग्ने! यज च। स्वकीयं, गृहम्। U.

गायत्री गोतमदृष्टा मैत्रावरुणस्य पुरोरुक्। अयं वामित्यस्याः (YV.७।९) स्थाने। हे अग्ने! अस्माकम्। मित्रावरुणौ। यज। यज देवान्। यज महद् यज्ञम्। स्वं गृहं यज। Mah.

RV.1.79.4=YV.15.35.

उष्णिक्। हे अग्ने! यस्त्वम्। अन्नस्य। गोभिः संयुक्तस्य। ईश्वरः। हे बलस्य पुत्र! सह इति बलनाम। यहुरिति पुत्रस्य नाम। मथ्यमानो जायते तस्मादेवमाह सहसस्पुत्रमित्यादि। स त्वम्। अस्मभ्यम्। देहि। हे जात-वेदः! महत्। अन्नलक्षणं धनं गोभिः संयुक्तम्। U.

'अपरा गायत्रीभ्य उष्णिहोऽग्ने वाजस्येति' ( का० १७।१२।१३ ) गायत्रीभ्योऽपरास्तिस्रः उष्णिक्संज्ञा इष्टका अग्न इति ऋक्त्रयेणोपद-धातीति सूत्रार्थः। उष्णिहस्तिस्रः। हे अग्ने! बलस्य पुत्र! सह इति बल-नाम, यहुरिति पुत्रनाम। मन्थनाज्जायमानत्वाद्बलस्य पुत्रत्वम्। सहसस्पुत्र-मित्युक्तश्च। हे उत्पन्नज्ञान! अस्मभ्यम्। महत्। धनम्। देहि। कीदृशस्त्वम्? धेनुयुक्तस्य, अन्नस्य, ईश्वरः। अत एव धनं गाश्च देहीत्यर्थः। Mah.

RV.1.79.5=YV.15.36.

स उक्तगुणः। दीप्यमानः। उपकारभूतः वासयिता वा। मेधावी। अग्निः। स्तुत्यः। वाचा त्रयीलक्षणया। तत्रार्थवादः प्रत्यक्षकृतः ततो भिन्नं वाक्यं नेयम्। धनवत्। अस्मदर्थम्। हे बहुमुख! अनीकं मुखम्। पुरु बहु-नाम। 'यतो ह्येव कुतश्चाग्नावभ्यादधाति तत एव प्रदहति' इति श्रुतिः।

दीप्यस्व। एकं वाक्यं कृत्वा व्याख्यायते यत्तदोर्व्यत्ययेन। वसु धनं तापपाकप्रकाशोपकारकः। क्रान्तदर्शनः। अग्निः। स्तुत्यः ऋषिभिः। वाचा। तं त्वां ब्रवीमि। धनवत्। अस्मदर्थम्। पुर्वणीक! दीप्यस्व। U.

हे पुर्वणीक! पुरु बहु अनीकं मुखं यस्य तत्सम्बुद्धिः। सर्वदाहकत्वात्। 'यतो ह्येव कुतश्चाग्नावभ्यादधाति तत एव प्रदहति' इति श्रुतेः। हे बहुमुखाग्ने! अस्मदर्थे रयिवद् धनवद् यथा तथा स त्वं दीप्यस्व। दिवेः श्यपः श्लुः द्वित्वम् 'तुजादीनां दीर्घोऽभ्यासस्य' (पा० ६।१।७) इत्यभ्यासदीर्घः। 'लोपो व्योर्वलि' (पा० ६।१।६६) इति वलोपः। रयिर्विद्यते यत्र कर्मणि रेवत् 'रयेर्मतौ' (पा० ६।१।३७) इति सम्प्रसारणम्। तथा त्वया हविर्ग्रहणे यथास्माकं धनाप्तिर्भवतीत्यर्थः। स पूर्वोक्तः। कीदृशस्त्वम्? दीप्यमानः। निवासहेतुः। क्रान्तदर्शी। अग्निः अग्रे नयतीत्यग्रणीः। प्रथमं यज्ञप्रवर्तक इति भावः। त्रयीलक्षणया वाचा ईडितुं योग्यः स्तुत्यः। औणादिक एन्यः। Mah.

RV.1.79.6=YV.15.37.

यस्त्वं क्षपयिता। हे राजन्! रक्षसाम्। अप्यात्मनैव स्वभावत एव। हे अग्ने! वस्तोः सह सम्बन्धिनां रक्षसाम्। उत अपि। उषसः सम्बन्धिनां सः। हे वज्रदंष्ट्र! तिग्ममिति वज्रनाम। जम्भेति दंष्ट्रानाम। रक्षसः। दह। प्रत्येकम्। U.

हे दीप्यमान! हे तिग्मजम्भ! तिग्मा तीक्ष्णा जम्भा दंष्ट्रा यस्य। यद्वा तिग्ममिति वज्रनाम। हे वज्रदंष्ट्र! अग्ने! वस्तोः अयःसम्बन्धिनः उतापि उषःकालसम्बन्धिनो राक्षसान् स त्वं प्रतिदह प्रत्येकं भस्मीकुरु। लिङ्गव्यत्ययेन रक्षःशब्दस्य पुंस्त्वम्। 'छन्दसि परेऽपि' (पा० १।४।८१) इति प्रत्युपसर्गस्य क्रियापदात्परत्वम्। कीदृशस्त्वम्? आत्मनापि स्वभावतोऽपि। क्षपः क्षपयतीति क्षपः 'क्षप क्षेपे' चुरादिः पचाद्यच्। स्वभावतो रक्षसां क्षपयिता। 'मन्त्रेष्वाङ्यादेरात्मनः' (पा० ६।४।१४१) इत्यात्मन आकारलोपस्तृतीयैकवचने। Mah.

RV.1.82.2=YV.3.51.

आहवनीयमुपतिष्ठते। ऐन्द्री पङ्क्तिः। पितृयज्ञे पितर उच्यन्ते। अक्षन् अदेर्लुङि घस्लादेशः। अदितवन्तः भुक्तवन्तः पितरः। कथं ज्ञायत

इति चेत्? अमीमदन्त हि 'मद तृप्तौ' हिशब्दो यस्मादर्थे। यस्मात्तृप्तास्तस्माद् भुक्तवन्त इत्यनुमानम्। तृप्तिविशेषणान्युत्तराणि। अवाचीनमन्नविक्षिप्रियाः? अन्नभक्तीरुपस्मृत्य अधूषत। 'धूञ् कम्पने' धुनन्ति गात्राणि। किञ्च अस्तोषत स्वभानवः। प्रियाः अन्नभक्तीरुपस्मृत्य दातॄन् स्तुवन्ति। अहो दत्त-महो दत्तं स्वाद्वन्नं बहु इति। स्वभानवः स्वयंदीप्ताः अन्नविसयात्। प्राप्तप्रज्ञाः मेधाविनः। नवतमया अपूर्वया मत्या स्तुवन्तीत्यनुवर्तते। एवं पितॄनुपलभ्या-थेन्द्रमाह। योजयामि क्षिप्रम्। नु क्षिप्रनाम। हे इन्द्र! तव हरितवर्णौ अश्वौ स्वभूतौ। तवापि गमनकालः प्राप्तः। U.

ऐन्द्रीभ्यां पङ्क्तिभ्यां साकमेधगतपितृयज्ञाख्यकर्मणि आहवनीयोपस्थानम्। यस्या अष्टाक्षराः पञ्चपादाः सा पङ्क्तिः। 'यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽक्षन्नमीमदन्तेत्याहवनीयमुपतिष्ठन्ते द्वाभ्यामिति (का० ५।९।२१) पितृयज्ञाख्ये कर्मणि ये पितरः सन्ति तेऽस्माभिर्दत्तं हविःस्वरूपमन्नमक्षन् भक्षितवन्तः। कथमेतदवगम्यते? हि यस्माद् हर्षं प्राप्ताः। अस्मदीयां भक्तिमवगम्य प्रीतियुक्ताः सन्तः स्वकीयं शिरः कम्पितवन्तः। यद्वा प्रियास्तनूरवाधूषत। किञ्च स्वयंदीप्तियुक्ताः मेधाविनः सन्तः नवतमया मत्या बुद्ध्या युक्ताः स्तुतिं कृतवन्तः। अहो स्वाद्वन्नं बहु दत्तमहो भक्तिरित्याद्यभिधानं स्तुतिः। अतो हे इन्द्र! क्षिप्रं तव हरी एतन्नामकौ हरितवर्णावश्वौ गमनाय रथे योजय। तवाभीष्टायाः पितृतृप्तेः सम्पन्नत्वात्तैः पितृभिः सह त्वया गन्तव्यमित्यर्थः। अक्षन्-अदेर्लुङि 'लुङ्सनोर्घस्लृ' (पा० २।४।३७) इति घस्लादेशः। 'मन्त्रे घस—' (पा० २।४।८०) इत्यादिना च्लेर्लुक्। 'गमहन्—' (पा० ६।४।९८) इत्युपधालोपः। 'खरि च' (पा० ८।४।५५) इति चर्त्वम्। 'शासिवसि' (पा० ८।३।६०) इति षत्वम्। अडागमः। अमीमदन्त 'मद तृप्तियोगे' चुरादिरात्मनेपदी लुङि णिलोपादौ रूपम्। अधूषत 'धूञ् कम्पने' लुङि सिचि व्यत्ययेन गुणाभावः। मती 'सुपां सुलुक्' (पा० ७।१।३९) इति तृतीयाया पूर्वसवर्णदीर्घः। योज 'युजिर् योगे' ण्यन्ताल्लोटि 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' (पा० ६।४।५१) इति णिलोपः। 'द्व्यचोतस्तिङः' इति संहितायां दीर्घः। Mah.

RV.1.82.3;10.158.5=YV.3.52.

शोभनदर्शनम्। त्वाम्। वयम्। हे धनवन्! वन्दिषीमहि 'वदि अभि-

वादनस्तुत्योः' अभिवादयामः। अभिवादनमाह। प्रयासि। निश्चयेन। पूर्णरथनीडः सन्। बन्धुरशब्दो रथनीडवचनः। स्तुतश्च स्तोतृभिः। वशान् 'वश कान्तौ' कामान्। अनुप्रयासि। यत एवमतो योजयामि क्षिप्रम्। इन्द्र! ते हरी। U.

हे मघवन्! वयम्। त्वाम्। स्तुतिकर्तारो भूयास्मेत्याशास्यते। किम्भूतं त्वाम्? सुष्ठु सम्यक् पश्यति सुसंदृक् तं शोभनदर्शनम्। अनुग्रहदृष्ट्या सर्वस्य द्रष्टारम्। इत्थमस्माभिः स्तुतः त्वम्। कामयमानान् यजमानान्। लक्षीकृत्य। अवश्यम्। गच्छसि। किम्भूतः? पूर्णबन्धुरः। बन्धुरशब्दो रथनीडवाची। स्तोतृभ्यो देयैर्धनैः सम्पूर्णरथनीडोपेतो भूत्वा गच्छसि। हे इन्द्र! स त्वं ते हरी योजेति पूर्ववत्। Mah.

[1] RV.1.84.2=YV.8.35.

तृतीयो मन्त्रविकल्पः। इच्छब्द एवार्थे। इन्द्रमेव। हरितवर्णावश्वौ। प्रापयतः। अत्र 'ऋक्सामे वै हरी' इति श्रुतेः द्विवचनान्तहरिशब्दस्य ऋक्सामवाचकत्वाद्धरितवर्णावश्वाविन्द्रमेनं वहतमिति व्याख्यानं न घटते। हरितवर्णयोरश्वयोः सर्वत्र सुलभत्वात्। इन्द्राश्वयोर्हरितवर्णत्वमप्रसिद्धम् 'मयूररोमभिः पृषती अभूताम्' इत्यादिश्रुतेर्दर्शनात्। 'पशवो वै देवानां छन्दाꣳसि' इत्यादिश्रुतिपर्यालोचनया नानावर्णच्छन्दोमये ऋक्सामे एवेन्द्रं वहत इति युक्तं नतु हरितवर्णावश्वौ। कथम्भूतमिन्द्रम्? अप्रतिधृष्टशवसम्, न प्रतिधर्षयितुं शक्यते शवो बलं यस्य स अप्रतिधृष्टशवाः तमप्रतिधृष्टशवसम्। क वहत? इत्याह। ऋषीणाञ्च वसिष्ठप्रभृतीनां च स्तुतीः उप समीपे। यज्ञं च मनुष्याणां यजमानानां समीपे वहत इति वर्तते। U.

षोडशिग्रहे तृतीयो मन्त्रविकल्पः। 'आग्रयणाद्धेन्द्रमिद्धरी इति गृहीत्वेति' कठसूत्रोक्तेः। इन्द्रदेवत्यानुष्टुप् गोतमदृष्टा। इत् एवार्थे। हरितवर्णावश्वौ वसिष्ठादीनां मुनीनां स्तुतिसमीपे इन्द्रमेव प्रापयतः। पुनः मानुषाणां यजमानानां यज्ञसमीपे च हरी इन्द्रं वहतः। किम्भूतमिन्द्रम्? अप्रतिधृष्टशवसम्–प्रतिधर्षयितुं पराभवितुं शक्यं प्रतिधृष्टं न प्रतिधृष्टमप्रतिधृष्टं शवो बलं यस्य सोऽप्रतिधृष्टशवास्तम्। Mah.

---

[1] YV. adds उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने at the end, to the stanza of the RV.

[1] RV.1.84.3=YV.8.33.

अथ षोडशी अग्ने पवस्वेत्येतस्मात् प्राक् । ऐन्द्री अनुष्टुप् । अधितिष्ठ आरोह । हे वृत्रस्य हन्तः ! रथम् । युक्तौ । तव । ब्रह्मणा त्रयीलक्षणेन । इन्द्रागच्छेत्यादिना । हरितवर्णावश्वौ । तौ हि आह्वानानीन्द्रस्योपश्रुत्य, प्राप्त आवयोर्नियोजनकाल इति मन्यमानौ स्वयमेवात्मानं रथे युञ्जाते । अत एवमाह युक्ता ते ब्रह्मणा हरी इति । अथेदानीं रथारूढस्य । अस्मदभिमुखम् । साधु । तव । मनः । हे इन्द्र ! ग्रावा सोमाभिषवकारी करोतु वग्नुना वग्नुरिति ( निघ० १।११ ) वाङ्नामसु पठितम् । सोमाभिषवध्वनिना । U.

अथ षोडशी 'अग्ने पवस्व' ( क० ३७ ) इत्यस्मात्प्राक् 'प्रातःसवनेऽतिग्राह्यान् गृहीत्वा षोडशिनं खादिरेण चतुःस्रक्तिनातिष्ठ युक्ष्वा हीति वेति' ( का० १२।५।२ ) प्रातःसवने आग्रयणग्रहणानन्तरमाग्नेयमतिग्राह्यमादाय चतुःकोणेन खादिरोलूखलेनातिष्ठ युक्ष्वा हीति मन्त्रयोरन्यतरेण सोपयामेन षोडशिग्रहं गृह्णीयात् । इन्द्रदेवत्यानुष्टुप् गोतमदृष्टा । हे वृत्रहन्निन्द्र ! तव । हरितवर्णावश्वौ ब्रह्मणा त्रयीलक्षणेन इन्द्रागच्छेत्यादिमन्त्रेण । युक्ता रथे संयुक्तौ । अतस्त्वं रथमारोह । इन्द्राह्वानं श्रुत्वास्मन्नियोजनकालः प्राप्त इति मत्वाश्वौ स्वयमेव रथे युञ्जाते इति युक्ता इत्युक्तम् । किञ्च सोमाभिषवपाषाणः । तव रथारूढस्य । मनः । अस्मद्यज्ञाभिमुखं सुतरां करोतु । केन ? वग्नुना । वग्नुरिति ( निघ० १।११ ) वाङ्नामसु पठितम् । वाचा श्रवणीयेन सोमाभिषवशब्देन । Mah.

RV.1.84.19=YV.6.37.

हे इन्द्र ! यतः । त्वम् । अङ्गेति क्षिप्रनाम क्षिप्रम् । प्रशंससि । देवः सन् । हे बलिष्ठ ! मनुष्यं यजमानम् । अतः कारणात् । न । त्वत्तः । अन्यः । हे धनवन् ! विद्यते । मर्डिता 'मृड सुखने' सुखयिता यजमानानाम् । इन्द्र ! ब्रवीमि । अत्यद्भुतम् । तव सम्बन्धि । वचनमार्षम् । U.

इन्द्रदेवत्या पथ्या बृहती गोतमदृष्टा । अङ्गेति क्षिप्रनाम । हे अतिशयेन बलवन् ! इन्द्र ! दीप्यमानस्त्वं मनुष्यं यजमानं प्रशंससि स्तौषि । समीचीनोऽयं

---

[1] YV. adds उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने at the end, to the stanza of the RV.

यजमानो होता श्रद्धावानित्यादिस्तुतिं करोषीत्यर्थः। 'शंसु हिंसास्तुत्योः' लडर्थे लेट्, मध्यमैकवचने सिवादेशः 'सिब्बहुलं लेटि' (पा० ३।१।३४) सिप्प्रत्ययः। तस्य 'आर्धधातुकस्येड्वलादेः' (पा० ७।२।३५) इति इडागमः। 'लेटोऽडाटौ' (पा० ३।४।९४) इति सिपोऽडागमः। 'इतश्च लोपः परस्मैपदेषु' (पा० ३।४।९७) इति सिप इकारलोपः। तस्य रुत्वविसर्गौ षत्वम्। प्रशंसिष इति रूपम्। 'तिङ्ङतिङः' (पा० ८।१।२८) इति सर्वानुदात्तत्वम्। किञ्च हे मघवन्! धनवन्! इन्द्र! मर्डिता 'मृड सुखने' मृडतीति मर्डिता यजमानस्य सुखयिता त्वदन्यो नास्ति न विद्यते। अतो हे इन्द्र! तव वचः त्वमेव सुखयितेत्येवंरूपं त्वदीयं वचनमहं वदामि। Mah.

RV.1.86.1=YV.8.31.

जुहोति। मारुती गायत्री। मरुतः। यस्य। निवासगृहे। 'क्षयो निवास' इत्याद्युदात्तः। पाथ 'पा पाने' शपो लुप् ?(क्)। पिबथ पानादीन् कुरुथ। हे दिवोविमहसः! द्युलोकस्य महयितारः! पूजयितारः! स सुगुप्ततमो यजमानजनः। युष्मद्गुप्तानां न भयमस्तीत्यभिप्रायः। U

'शमिष्टयजुरन्ते शामित्र एव जुहुयात्तिष्ठन्मरुत इत्यस्वाहाकृत्येति (का० २५।१०।१८) शमिष्टयजुर्होमान्ते शामित्राग्नावेव स्वाहान्तेन मन्त्रेणोष्णीषवेष्टितं गर्भं जुहोति मन्त्रान्ते स्वाहाकारमनुच्चार्य जुहुयादित्यर्थः। मरुद्देवत्या गायत्री गोतमदृष्टा। हे दिवोविमहसः! विशिष्टं महो येषां ते द्युलोकसम्बन्धिना विशिष्टेन महसा तेजसा युक्ताः। यद्वा विशिष्टं महन्ति पूजयन्ति ते विमहसः द्युलोकस्य पूजयितारो हे मरुतः! यस्य यजमानस्य यज्ञगृहे यूयं सोमपानं कुरुथ। 'पा पाने' शपो लुक् पिबादेशाभावश्च छान्दसः। संहितायां दीर्घः 'द्व्यचोऽतस्तिङः' (पा० ६।३।१३५) इति सूत्रेण। हि निश्चितं स जनः यजमानाख्यः; सुगोपातमः, गोपायतीति गोपाः रक्षकः अत्यन्तं शोभनो गोपा यस्य स सुगोपातमः। युष्मद्गुप्तानां भयं नास्तीत्यर्थः। Mah.

RV.1.89.1=YV.25.14.

वैश्वदेवानां पशूनां याज्यानुवाक्या दश। पञ्चम्याः सप्तमी च जगत्यः त्रिष्टुभोऽन्याः। आगच्छन्तु। अस्माकम्। भन्दनीयाः स्तुत्याः।

यज्ञाः सङ्कल्पा वा। सर्वतः। अनुपहिंसिताः अपरिज्ञाताः केनचित्। उद्भेत्तारोऽन्येषां यज्ञक्रतूनां कल्पानां वा। किञ्च। देवाः। अस्माकम्। सदा। इच्छब्द एवार्थे। सदाकाल एव। वर्धनाय। स्युः भूयासुः। कथम्भूताः? अप्रमाद्यन्तः रक्षितारश्च। अहन्यहनि। तथा भूयादिति वाक्यशेषः। U.

वैश्वदेवपशुवपापुरोडाशपशूनां याज्यानुवाक्या दश ऋचो विश्वदेवदेवत्या गोतमदृष्टाः। तत्रादौ पञ्च जगत्यः। यज्ञाः सङ्कल्पा वा। अस्मान् प्रति आगच्छन्तु। यज्ञकर्तारो वयं भवेमेत्यर्थः। कीदृशाः क्रतवः? भन्दनीयाः 'भदि कल्याणे' कल्याणकारिणः। तथा सर्वतोऽनुपहिंसिताः। निर्विघ्ना इत्यर्थः। न परीता अपरीताः अपरिगता अज्ञाताः केनचित्। फलानुमेया इत्यर्थः। उद्भिदः उद्भिन्दन्ति प्रकटयन्ति उद्भिदः उद्भेत्तारः। यज्ञान्तराणां प्रकटीकर्तार इत्यर्थः। किञ्च। येन प्रकारेण। देवाः। अस्माकम्। सदैव। वृद्धयै। भवन्ति। तथा क्रतव आयान्त्वित्यर्थः। सदमिदित्यव्ययं सदार्थे। कीदृशा देवाः? प्रकर्षेणायुवन्ति प्रमाद्यन्ति ते प्रायुवः। यौतेः क्विप् तुगभाव आर्षः। न प्रायुवः अप्रायुवः अनलसाः अस्माकं वृद्ध्यै भवन्त्वित्यर्थः। तथा अहन्यहनि प्रत्यहं पालकाः। Mah.

RV.1.89.2=YV.25.15.

देवानाम्। भन्दनीया। कल्याणी मतिः। अभि नो निवर्ततामित्यनुषङ्गः। अस्मान् प्रत्यभिमुखीभवतु। कथम्भूतानां दवानाम्? ऋजुगामिनाम्। यद्वा ऋजुकामिनाम्। ऋजुं प्रगुणं यजमानं कर्तुं कामयन्ते ते तथोक्ताः। किञ्च देवानाम्। दानम्। अस्मान् प्रति निवर्तताम्। ततो लब्धदानाः सन्तः। देवानाम्। सखिभावं यजमानाः सन्तः। प्राप्नुयाम। वयम्। ततो देवाः। अस्माकं भक्तानाम्। आयुः। प्रवर्धयन्तु। किमर्थम्? चिरं जीवनाय। U.

कल्याणकारिणी। देवानाम्। शोभना बुद्धिः। अस्मदभिमुखीभवतु। कीदृशानां दवानाम्? ऋजु अवक्रं यन्ति गच्छन्ति ऋजुयन्तस्तेषाम्-इणः शतृप्रत्ययः। अवक्रगामिनाम्। यद्वा ऋजुमवक्रं साधुं यजमानं कामयन्ते ते ऋजूयन्ति 'सुप आत्मनः क्यच्' ऋजूयन्ति ते ऋजूयन्तस्तेषाम्। क्यजन्ताच्छतृ। साधुं यजमानं कामयमानानामित्यर्थः। किञ्च देवानाम्।

दानम्। अस्मानभिनिवर्ततताम्, देवा अस्मभ्यं ददत्वित्यर्थः। देवेभ्यो लब्धदाना वयम्। देवानाम्। मैत्रीम्। प्राप्नुयाम। सदेर्लिटि उत्तमबहुत्वे रूपम्। संहितायां दीर्घः। देवाः। अस्माकं सखीनाम्। आयुः। जीवितुम्। प्रवर्धयन्तु। Mah.

RV.1.89.3=YV.25.16.

तान् देवान्। अकृत्रिमया स्वयम्भुवा। निविदा·निविच्छब्दो वाग्वचनः। आह्वयामः। वयम्। तान् कान्? इत्यत आह-भगम्, मित्रम्, अदितिम्, दक्षम्, अस्रिधम्, अच्युतसद्भावम्, दक्षस्यैतद् विशेषणम्; अर्यमणम्, वरुणम्, सोमम्, अश्विनौ च। यैः सहिता। सरस्वती। सुभगा। अस्माकम्। सुखम्। करोत्विति। U.

प्राचीनया अकृत्रिमया स्वयम्भुवा। वाचा वेदरूपया। वयम्, तान् प्रसिद्धान् देवान्। आह्वयामः। निविच्छब्दो वाग्वाचकः। तान् कान्? तत्राह भगम्, मित्रम्, देवमातरम्, प्रजापतिम्, अर्यमणम्, वरुणम्, सोमम्, अश्विनौ। अस्रधमिति भगादीनां विशेषणम्। न स्रेधते च्योतते सोऽस्रित्। तमच्युतसद्भावम्। किञ्च शोभनं भगं भाग्यं यस्याः सा सुभगा भजनीया सरस्वती भगादिसहिता। अस्माकम्। सुखम्। करोतु। Mah.

RV.1.89.4=YV.25.17.

तद्। भेषजम्। सुखस्य भावयितृ। अस्माकम्। वातः। वातु अनुगृह्णातु। तच्च भेषजं माता पृथिवी अनुगृह्णातु। तच्च पिता द्यौः अनुगृह्णातु। तच्च ग्रावाणः। सोमसुतः सोमाभिषवकारिणः। सुखस्य भावयितारः। अनुगृह्णन्तु। तच्च हे अश्विनौ! धारयितारौ। युवामपि। शृणुतम्। श्रुत्वा च अनुगृह्णीतम्। U.

पवनः। अस्माकम्। औषधम्। हितं यथा तथा वातु, 'वा गतिगन्धनयोः' लोट् प्रवातु। अनुगृह्णात्वित्यर्थः। ददात्विति यावत्। कीदृशं हितम्? मयः सुखं भवति यस्मात्तन्मयोभु सुखोत्पादकं हितं ददातु। जगन्निर्मात्री पृथिवी। तत् हितम्। वातु। पालकः स्वर्गः। तत् हितं वातु। सोमं सुन्वन्ति सोमसुतः सोमाभिषवकारिणः। दृषदः। तत् भेषजम्। वान्तु ददतु। कीदृशा ग्रावाणः? मयः सुखं भावयन्ति ते मयोभुवः

सुखस्य दातारः। हे अश्विनौ ! युवाम् । तद् वातादिभ्यो भेषजप्रार्थनं शृणुतम् । युवामपि हितं दत्तमित्यर्थः । कीदृशौ युवाम् ? धृष्ण्यौ गृहवद्धारयितारौ । Mah.

RV.1.89.5=YV.25.18.

तम् । रुद्रम् । कथम्भूतम् ? जङ्गमस्य । स्थावरस्य । पतिमिव पतिम् । धिया बुद्ध्या सङ्कल्पमात्रेण जिन्वति प्रीणातीति तं धियंजिन्वम् । यद्वा धिया कर्मणा जिन्वति प्रीणातीति धियंजिन्वम् । अवनाय तर्पणाय । आह्वयामः । वयम् । किञ्च पूषा । अस्माकम् । धनानाम् । भूयात् । वर्धनाय । रक्षिता च । वायुः । पाता च । अनुपहिंसितश्चान्येन केनचित् । अविनाशाय । तथा हूमहे आह्वयामो वयमित्यनुषङ्गः । U.

वयम् । तं प्रसिद्धम् । रुद्रम् । आह्वयामः। कीदृशं तम् ? जङ्गमस्य । स्थावरस्य च । भूतजातस्य । पालकम् । धियं बुद्धिं जिन्वति प्रीणातीति धियंजिन्वस्तम् । अलुक् । बुद्धिसन्तोषकारकम् । जिन्वतिः प्रीणनार्थः । किमर्थं हूमहे ? अवितुं तर्पयितुम् । तुमर्थे असेप्रत्ययः । यथा येन प्रकारेण पूषा । अस्माकम् । वृद्धयै । कल्याणाय च । भवतु । तथा हूमहे इत्यर्थः । कीदृशः पूषा ? धनानां ज्ञानानां वा रक्षकः । पालकः पुत्रादीनाम् । अनुपहिंसितः । Mah.

RV.1.89.6=YV.25.19.

स्वस्त्ययनम् । अस्माकम् । इन्द्रः । स्थापयतु । कथम्भूतः ? प्रभूतधनः । महाशब्दो महाकीर्तिर्वा । स्वस्ति । अस्माकम् । पूषा । दधातु । कथम्भूतः ? विश्ववेदाः सर्वज्ञो वा । स्वस्ति नः तार्क्ष्यो दधातु । कथम्भूतः ? अनुपहिंसितासुः । स्वस्ति । अस्माकम् । बृहस्पतिश्च । दधातु । U.

विराट्स्थाना । आद्यौ पादौ नववर्णौ तृतीयो दशकः तुर्यो व्यूहेनैकादशकः । 'नवकौ वैराजस्त्रैष्टुभश्च' इति वचनात् । इन्द्रः । अस्मभ्यम् । अविनाशं शुभम् । ददातु । कीदृशः ? वृद्धश्रवाः वृद्धं महत् श्रवः कीर्तिर्यस्य सः । पूषा । नः । स्वस्ति । ददातु । कीदृशः ? विश्ववेदाः विश्वं सर्वं वेदो धनं यस्य विश्वं वेत्तीति वा विश्ववेदाः । रथो गरुडो वा । नः । स्वस्ति । ददातु । कीदृशः ? अरिष्टनेमिः अरिष्टा अनुपहिंसिता नेमिश्चक्रधारा पक्षो वा यस्य सः । गुरुः । अस्मभ्यम् । स्वस्ति। ददातु । Mah.

RV.1.89.7=YV.25.20.

पृषन्तः शबला अश्वा येषां ते पृषदश्वाः। पृश्निः द्यौर्माता येषां त एवमुच्यन्ते। शुभं कर्तुं जनान् प्रति ये यान्ति ते शुभंयावानः। 'आतो मनिन्क्वनिब्वनिपश्च' इति वनिप्। यज्ञेषु। गमनशीलाः। 'आदृगमहन' इति किः। य इत्थम्भूता मरुतस्ते। अग्नेन हविर्लक्षणेन आहूताः सन्तः। आगमन् आगच्छन्तु इहेत्यनुषङ्गः। ये च अग्निमुखाहुतादा इत्यर्थः। मनवः चतुर्दश। ते च अवसा गमन्निह। ये च आदित्यदर्शनाः विश्वदेवाः ते च। अस्माकम्। अवसा गमन्निह यज्ञे। U.

जगती। देवाः। अन्नेन हविर्लक्षणेन हेतुना। इह यज्ञे। आगच्छन्तु। कीदृशा मरुतः? पृषत्यः पृषतीसंज्ञा अश्वा वडवा वाहनं येषां ते पृषदश्वाः। पुंवद्भावः। 'पृषत्यो मरुताम्' इति(१.१५)निघण्टुवचनात्। यद्वा पृषन्तः शबलाः अश्वाः येषां ते। पृश्निः द्यौर्गौर्दितिर्वा जननी येषां ते पृश्निमातरः। शुभं कल्याणं यान्ति प्राप्नुवन्ति प्रापयन्ति वा शुभंयावानः 'आतो मनिन्-' ( पा० ३।२।७४ ) इति वनिप्प्रत्ययः। यज्ञगृहेषु। गमनशीलाः। 'आदृगमहन-' ( पा० ३।२।१७१ ) इति किः। अग्निजिह्वा भोजनसाधनं येषां ते 'अग्निमुखा वै देवाः' इति श्रुतेः। हुताद इत्यर्थः। मन्यन्ते जानन्ति मनवः सर्वज्ञाः। सूरः सूर्यश्चक्षुः चक्षुर्येषां ते, सूर्यं चक्षते पश्यन्ति वा सूरचक्षसः। किञ्च न केवलं मरुतः, विश्वे सर्वे देवाः च अस्माकं यज्ञे आगच्छन्तु। Mah.

[1] RV.1.89.8=YV.25.21.

अनुकूलम्। कर्णाभ्याम्। शृणुयाम हे देवाः! भद्रम्। पश्येम। अक्षिभ्याम्। हे यजनीयाः! किञ्च अशिथिलैः। अङ्गैः। देवान् स्तुतवन्तः। भार्यापुत्रपौत्रादिकाभिः तनूभिः सहिताः। व्यश्नुवीमहि। देवैर्यत् स्थापितम्। मनुष्याणामायुः। तद् व्यश्नुवीमहि। U.

तिस्रस्त्रिष्टुभः। हे देवाः! कर्णैः। कल्याणमनुकूलम्। वयं शृणुयाम। हे यजत्राः! यजन्तं त्रायन्ते रक्षन्ति यजत्राः! यजमानपालकाः! नेत्रैः भद्रम्। वयम्। पश्येम। 'बहुलं छन्दसि' ( पा० ७।१।७६ ) इति हलादौ अक्षिशब्दस्यानङादेशः। किञ्च देवैः स्थापितं, देवानां हितं, देवोपासनयोग्यं

---

[1] YV. reads व्यशेमहि for व्यशेम of the RV.

वा यदायुः जीवनम् । तद्वयम् । व्यश्नुवीमहि । प्राप्नुयाम । कीदृशा वयम् ? दृढैः । अवयवैः करचरणादिभिः शरीरैश्च पुत्रादिभिर्वा युताः । भवतः स्तुतवन्तः सन्तः । Mah.

RV.1.89.9=YV.25.22.

शतमपि । शरदः । अन्तिके समीपे भवथ । हे देवाः ! आकल्पकालमित्यभिप्रायः । ऋषिभिरुदितमेतत् । यस्मिन् शरदां शते । अस्माकम् । यूयं कृतवन्तः । जराम् । तन्लाम् । जरानिमित्तां शक्तिमित्यभिप्रायः । किञ्च पुत्रा अग्नयः । यत्र शरदां शते । यजमानस्य जनितारो भवन्ति । तदुक्तम् 'तत्र वै प्रजापतिः प्रजाः ससृजे' इत्युपक्रम्य 'तस्माज्जनयित्वा बिभृही' ति । यत्र पितरो भवन्ति । एतदप्युक्तमेव । 'स यत्र म्रियते यत्रैनमग्नावभ्यादधाति तदेषोऽग्नेरधिजायते स एष पुत्रः सन् पिता भवति अथवा पुत्रा एव पितृणामौर्ध्वदेहिकं कुर्वाणाः पितरो यत्र सम्पद्यन्ते तदपि शरदां शतमन्तिक एवेति' । यत एवमतो ब्रूमः । मा हिंसिष्ट । अस्माकम् । मध्ये, अकाल एव । आयुः । गन्तु गमनशीलम् । उक्तं च 'सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य । वर्षासु सिक्ता इव चर्मबन्धाः सर्वे प्रयत्नाः शिथिलीभवन्ति' इति । U.

हे देवाः ! शतम् । अपि । वर्षाणि । शतवर्षपर्यन्तं यूयम् । अन्तिके समीपे । भवतेति शेषः । यत्र शरच्छते । अस्माकम् । शरीराणाम् । यूयम् । जराम् । कुरुथ । करोतेर्लिटि मध्यमबहुवचनम् । 'द्व्यचोऽतस्तिङः' ( पा० ६।३।१३५ ) इति चक्रेत्यत्र संहितायां दीर्घः । 'निपातस्य च' ( पा० ६। ३।१३६ ) इति यत्रेत्यत्र दीर्घः । वार्धकावधि यूयं समीपे भवतेत्यर्थः । यत्रास्माकं जरायाम् । अस्मत्पुत्राः । पुत्रवन्तः । भवन्ति । यावदस्माकं पौत्रा भवन्तीत्यर्थः । तावद् मध्ये । अस्माकम् । आयुः । मा हिंसिष्ट । रिषतेर्हिंसार्थस्य णिजन्तस्य चङि रूपम् । कीदृशमायुः ? गमनशीलम् । तदुक्तम् 'सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य । वर्षासु सिक्ता इव चर्मदण्डाः सर्वे प्रयत्नाः शिथिलीभवन्ति' । Mah.

RV.1.89.10=Y.V.25.23.

सर्वात्मकत्वेनादितिं मन्त्रदृक् स्तौति । अदितिश्च द्यौः अदितिश्च अन्तरिक्षम् । अदितिश्च माता । स च पिता । स च पुत्रः । स इति छान्दसो

लिङ्गव्यत्ययः। विश्वे च देवाः, मनुष्याश्च अदितिः। किं बहुनोक्तेन, अदितिरेव भूतम्। अदितिरेव जनिष्यमाणम्। अथवा नैवादितिरनेनोच्यते किम्पुनः? एतान्येव द्यौःप्रभृतीनि अदीनानि महाभाग्ययुक्तानीति। U.

मन्त्रदृक् सर्वात्मकत्वेनादितिं स्तौति। स्वर्गोऽदितिः तदधिष्ठातृत्वात्। एवमग्रेऽपि अन्तरिक्षमदितिर्माता पुत्रश्च स सादितिरेव। लिङ्गव्यत्ययः। सर्वे देवा अदितिः। मनुष्या अप्यदितिः। किम्बहुना उत्पन्नं प्राणिजातं जनिष्यमाणञ्च सर्वमदितिरेव। यद्वादितिर्मन्त्रेण नोच्यते द्यौरित्यादीनि सर्वाणि जनित्वान्तानि अदितीनि अदीनानि महाभाग्ययुक्तानि सन्तु। Mah.

RV.1.90.6=YV.13.27.

कूर्मं दधिमधुघृतैरभ्यनक्ति। गायत्र्यस्तृचो वैश्वदेव्यः। मधुमन्तो वा रसवन्तः। वाताः। वान्त्विति शेषः। कस्मै? यज्ञमिच्छते। उदकम्। क्षरन्तु। स्यन्दमाना नद्यः। मधुमत्यः। अस्माकम्। भवन्तु। ओषधयः। U.

'कूर्मं दधिमधुघृतैरनक्ति मधु वाता इति' (का० १७।४।२७) मिश्रितैर्दधिमधुघृतैर्ऋक्त्रयेण कच्छपमनक्ति। गोतमदृष्टा विश्वदेवदेवत्यास्तिस्रो गायत्र्यः। ऋतं यज्ञमिच्छतीति ऋतयन् तस्मै ऋतयते यजमानाय। वायवः। मधुमन्तो रसवन्तो वान्त्विति शेषः। ऋतयतीत्यत्र 'क्यचि च' (पा० ७।४।३३) इति प्राप्तस्येत्वस्य 'न छन्दस्यपुत्रस्य' (पा० ७।४।३५) इत्यभावः। 'अश्वाघस्यात्' (पा० ७।४।३७) इत्यश्वाघयोरेव क्यच्यात्वविधानात् 'अकृत्सार्वधातुकयोः' (पा० ७।४।२५) इत्यात्वमपि न। संहितायां तु छान्दसो दीर्घः। मधु मधुमान् इत्यग्रे मतुप्प्रत्ययदर्शनात्सर्वत्र मधुशब्दाग्रे मतुप् ज्ञेयः। सिन्धवः स्यन्दमाना नद्यः समुद्रा वा। मधुमत् रसवत् उदकम्। स्रवन्त्वित्यर्थः। ओषधयः। अस्माकम्। मधुररसोपेताः सन्तु। Mah.

RV.1.90.7=YV.13.28.

मधुमत्। रात्रिः। अस्तु। अपि च। उषसः। मधुमत्यः। सन्तु। रसवत्। पार्थिवम्। लोकः। अस्तु। मातृभूतः। मधुमदित्ययं मतुप् सर्वेषां मधुशब्दानामनुषङ्गो द्रष्टव्यः साकाङ्क्षत्वात्। मधुमती। द्यौरस्तु। अस्माकं पितृभूता। U.

रात्रिः। अस्माकम्। मधुमत् मधुररसोपेतमानन्दकरमस्तु। अपि च। दिवसा अपि। मधुमन्तः सन्तु। पृथिवीलोको मातृभूतो मधुररसोपेतमस्तु। पितृभूतः। द्युलोकः। मधुमान् मधुररसोपेतोऽस्तु। Mah.

RV.1.90.8=YV.13.29.

रसमान्। अस्माकम्। वनस्पतिर्यज्ञस्य साधनभूतोऽस्तु। सोमो वा वनस्पतिः। मधुमान् अस्तु सूर्यः यज्ञसाधनभूतः। मधुमत्यो रसवत्यः। गावः यज्ञसाधनभूताः पशवो रश्मयो वा। भवन्तु। अस्माकम्। 'रसो वै मधु' इति श्रुतिः। वाय्वादीनि रसवन्त्यस्माकं भोग्यानि सन्त्विति समस्तार्थः। U.

वनस्पतिरश्वत्थादिः। अस्माकम्। रसवान् यज्ञसाधनभूतोऽस्तु। सूर्यो मधुमान् सन्तापराहित्यलक्षणमाधुर्यरसोपेतोऽस्तु। गावः यज्ञसाधनभूता रश्मयः नोऽस्माकं मधुमत्यो रसवत्यो भवन्तु। 'रसो वै मधु' (श० ७।५।१।४) इति श्रुतेः। वातादीनि रसवन्त्यस्माकं भोग्यानि भवन्त्विति सर्वोऽर्थः। Mah.

RV.1.90.9=YV.36.9.

अनुष्टुप्। महावीरप्रसादादादौ च। सुखरूपः। अस्माकम्। भवतु मित्रः। शञ्च। नः। वरुणः। भवतु। शञ्च। नः। भवतु। अर्यमा। शञ्च। नः। इन्द्रः। बृहस्पतिः। शञ्च। नः। विष्णुः। उरुर्विस्तीर्णः क्रमो यस्य स उरुक्रमः। शेषं दर्शितया (दिशा) व्याख्येयम्। U.

अनुष्टुप्। मित्रवरुणादयो देवताः। मित्रो देवोऽस्माकं सुखरूपो भवतु महावीरप्रसादात्। मेद्यति भक्तेषु स्निह्यतीति मित्रः। वरुणः सुखरूपो भवतु। वृणोत्यङ्गीकरोति भक्तमिति वरुणः। अर्यमास्माकं शम्भवतु। इयर्ति गच्छति भक्तं प्रतीत्यर्यमा। इन्द्रो देवेशोऽस्माकं शं भवतु। देवगुरुरस्माकं शं भवतु। बृहतां देवानां पतिः पालकः। उरुर्विस्तीर्णः क्रमः पादन्यासो यस्य स विष्णुः अस्माकं शं भवतु। वेवेष्टि व्याप्नोतीति विष्णुः। Mah.

RV.1.91.1=YV.19.52.

हे सोम! चिकित्वान् प्रकर्षेण चेतनावान् विशिष्टचैतन्ययुक्तस्त्वम्। मनीषा। मनस इच्छा विशिष्टतरा भवति यज्वनाम्। यद्वा हे सोम! त्वम्। प्रचिकितः। 'कित ज्ञाने' प्रकर्षेण ज्ञातासि। यावत् ज्ञातव्यम् मनीषया

स्वया प्रज्ञया । त्वं च । ऋजुतरम् देवयानाख्यम् । अनुनयसि । पन्थानम् । किञ्च । तव । प्रणयनेन, अभ्यनुज्ञानेन । पितरः । अस्माकम् । हे इन्दो ! देवेषु मध्ये । रमणीयं यज्ञफलम् । अभजन्त । धीमन्तः । U.

त्वं मनीषया स्वप्रज्ञया ऋजुतमं देवयानं पन्थानमनुनयसि प्रापयसि । मनीषा तृतीयैकवचने पूर्वसवर्णदीर्घः । अत्यन्तमृजुः रजिष्ठः । 'अतिशायने तमविष्ठनौ' ( पा० ५।३।५५ ) 'विभाषर्जोश्छन्दसि' ( पा० ६।४।१६२ ) इत्यृकारस्य र इष्ठादिषु । पन्थाम् 'अयस्मयादीनि छन्दसि' (पा० १।४।२०) इति सर्वनामस्थानेऽपि पदसंज्ञायां 'नलोपः प्रातिपदिकान्तस्य' ( पा० ८।२।७ ) नलोपे सवर्णदीर्घे पन्थामिति रूपम् । अनुनेषि—नयतेः शपि लुप्ते गुणे लटि रूपम् । कीदृशस्त्वम् ? प्रचिकितः 'कित ज्ञाने' प्रकर्षेण चिकितः चेतनावान् विशिष्टचैतन्ययुतः । किञ्च हे इन्दो ! सोम ! अस्माकम् । पितरः । तव । प्रणीत्या प्रणयनेनाभ्यनुज्ञानेन देवेषु विषये । रमणीयं यज्ञफलम् । सिषेविरे । सोमयागेनैव स्वर्गाप्तेः । कीदृशाः पितरः ? धीमन्तः, यज्ञज्ञानवन्तः । Mah.

RV.1.91.16; 9.31.4=YV.12.112.

सिकता अभिमृशति । तिस्रः सौम्याः 'गायत्रीत्रिष्टुबुष्णिहः वा गायत्र्यः द्वाभ्यां विनियोगः । आत्मानमभिवर्धय । कथं कृत्वा ? समागच्छतु । तव । सर्वतः । हे सोम ! वृष्ण्यं सर्वभूतबीजम् । ततस्त्वं सर्वभूतोत्पत्तिना वृष्ण्येन भव । अन्नस्य । सङ्गमने । अन्नभावं प्राप्नुहि अन्नं वा प्राप्नुहि । U.

'आप्यायस्वेति सिकतालम्भनमृग्भ्याम्' (का० १७।३।१६ ) आत्मनि विस्तारिताः सिकताः स्पृशति ऋग्द्वयेन । गोतमदृष्टाः सोमदेवत्यास्तिस्रो गायत्रीत्रिष्टुबुष्णिक्छन्दस्काः 'आप्यायस्व मदिन्तम' ( YV. १२. ११४ ) इति तृतीयस्या विनियोगः सूत्रे नास्ति । हे सोम ! सर्वस्मात् । वीर्यं सर्वभूतोत्पत्तिकृद्बीजम् । तव । समागच्छतु । तेन च वीर्येण त्वम् । सर्वतः । वर्धस्व । किञ्च । अन्नस्य । सङ्गमननिमित्तम् । भव । अन्नमस्मासु सङ्गमयेत्यर्थः । Mah.

---

* The metres of stanzas in the RV. are Gāyatri, Uṣṇik, and Triṣṭubh whereas in the YV. the metres are as stated by U. and Mah.

RV.1.91.17=YV.12.114.

हे सोम ! त्वम् । आत्मानमाप्यायस्व । मदिन्तम ! यद्वा मदोऽस्यास्तीति मदी अतिशयेन मदी मदिन्तमः । 'नाद्घस्य' इति नुट् । सर्वैः । अंशुभिः । ततः समर्थः सन् । भव । अस्माकम् । सर्वतः प्रथयितृतमः । सखा । वर्धनाय । U.

हे मदिन्तम ! मदयति तर्पयति मदी ग्रहादित्वाण्णिनिप्रत्ययः ( पा० ३।१।१३४ ) यद्वा मदस्तृप्तिरस्यास्तीति मदी 'अत इनिठनौ' ( पा० ५।२।११५ ) इतीनू, अतिशयेन मदी मदिन्तमः 'नाद्घस्य' ( पा० ८।२।१७ ) इति नान्तात्परस्य तमपो नुडागमः । ईदृश ! हे सोम ! विश्वैः सर्वैः । सूक्ष्मांशैः । प्रवृद्धो भव, वृद्धः सन् । अस्माकम् । वर्धनाय । सहायः । भव । 'द्व्यचोऽतस्तिङः' ( पा० ६।३।१३५ ) इति संहितायां दीर्घः । कीदृशस्त्वम् ? अत्यन्तं सप्रथाः सकीर्तिः सप्रथस्तमः । Mah.

RV.1.91.18=YV.12.113.

संयन्तु । तव । रसाः । सारभूताः । संयन्तु च । अन्नानि । संयन्तु च रेतांसि । पाप्मनोऽभिभवतु सोमस्य । ततस्तैः पयोऽन्नवृष्ण्यैः आप्यायमानः । अमृताय । भव । प्रजात्यै अमरणधर्मिण्यै भव । 'प्रजात्यां तदमृतं दधाति तस्मात्प्रजातिरमृता' इति श्रुतिः । हे सोम ! ततो द्युलोके । श्रवांसि चन्द्रपाणि । उत्तमानि आहुतिपरिणामजनितानि । धारयस्व । U.

हे सोम ! पातव्या रसाः । तव । सङ्गच्छन्ताम् । अपि च अन्नानि संयन्तु । रेतांसि ते संयन्तु । कीदृशस्य ते ? अभिमातिषाहः अभिमातिं पाप्मानं सहतेऽभिभवतीत्यभिमातिसाट् तस्याभिमातिसाहः । षत्वं छान्दसम् । हे सोम ! पयोऽमृतवृष्ण्यैः वर्धमानः सन् अमरणधर्मिण्यै प्रजात्यै पुत्रादिवृद्ध्यै यजमानस्य भवेति शेषः । अमृतशब्देन श्रुत्या प्रजातिर्व्याख्याता । तथा च श्रुतिः 'प्रजात्यां तदमृतं दधाति तस्मात्प्रजातिरमृतेति' (श. ७।३।१।४६ ) किञ्च । द्युलोके । उत्कृष्टानि । अन्नानि । आहुतिपरिणामजनितानि, धारय सम्पादय । लोकद्वयभोगं सम्पादयेत्यर्थः । 'धि धारणे' तुदादिः विकरणव्यत्ययः । आत्मनेपदञ्च छान्दसम् । 'बहुलं छन्दसि' ( पा० २।४।७३ ) इत्युक्ते 'सुधितवसुधित' ( पा० ७।४।४५ ) इति सूत्रेण दधातेर्निपातो वा धत्स्वेत्यर्थे । Mah.

RV.1.91.19=YV.4.37.

सोमं प्रवेशयन् वाचयति। सौमी त्रिष्टुप् हे सोम! या ते धामानि 'धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति'। यानि। तव सम्बन्धीनि। धामानि नामानि। हविषा। यजन्ति। यष्टारः। तानि। तव। सर्वाणि। परिभूः, नपुंसकबहुवचनस्थाने पुंल्लिङ्गैकवचनम्। परिभूणि सर्वतो भवितॄणि। अस्तु, एतदपि बहुवचनं वाच्यसंयोगात्। सन्तु। यज्ञं सर्वतः। गृह्णे भवन्त्वित्यर्थः। यद्वा यज्ञशब्देन प्रथमान्तानि च धामानि तव विश्वानि नामानि यज्ञः परिभूः भवतु। यज्ञः परिगृह्य वर्ततामित्यर्थः। त्वं च। गृहस्य पुत्रपशुभूहिरण्यादिभिर्वर्धयिता। प्रतरन्ति येनापदः स प्रतरणः। शोभनवीरः। अहन्ता वीराणाम्। इत्थम्भूतस्त्वं परिभ्रम। सोम! गृहानस्मदीयान्। U.

'या त इति वाचयतीति' (का० ७।६।२२) सोमदेवत्या त्रिष्टुप् गोतमदृष्टा। हे सोम! तव। यानि। प्रातःसवनादीनि स्थानानि। प्राप्येति शेषः। त्वदीयरसरूपेण यजन्ति ऋत्विजो यागङ्कुर्वन्ति। यज्ञमभिलक्ष्येति शेषः। तव। तानि। सर्वाणि। स्थानानि। परिभूः। अस्तु। परितो भवति प्राप्नोतीति परिभूः। 'भू प्राप्तौ'। भवान् परितः प्राप्तवान् भवतु। ऋत्विजो येषु स्थानेषु यजन्ति तानि त्वं प्राप्नुहीत्यर्थः। यद्वा ऋत्विजो यानि धामानि प्राप्य यजन्ति तानि सर्वाणि तव यज्ञं परिभूरस्तु यज्ञं परितो भवितॄणि यज्ञव्यापकानि सन्तु। नपुंसकबहुवचनस्थाने पुंल्लिङ्गैकवचनमार्षम्। किञ्च हे सोम! त्वं दुर्यान् गृहान् प्राप्नुहि। दुर्या इति गृहनाम। 'द्व्यचोऽतस्तिङः' (पा० ६।३।१३५) इति संहितायां प्रचरेति दीर्घः। किम्भूतस्त्वम्? गयस्फानः, गय इति गृहनाम। (निघ० ३।४।१) 'स्फायी वृद्धौ'। गयान् स्फाययतीति गयस्फानः गृहाभिवर्धकः। प्रकर्षेण तरन्त्यापदो येन स प्रतरणः। यद्वा प्रतारयति यज्ञपारं प्रापयतीति प्रतरणः। सुवीरः शोभनास्त्वत्प्रसादलब्धा वीरा अस्मत्पुत्रपौत्रा यस्य तव स त्वं सुवीरः। न वीरान् हन्तीति वीराणां परिपालक इत्यर्थः। Mah.

RV.1.91.20=YV.34.21.

सोमः। धेनुम्। ददाति। सोम एव। अश्वम्। शीघ्रगतिम्। ददाति। सोम एव। पुत्रम्। कर्मसु साधुम्। ददाति। तमेव विशिनष्टि–सदने साधुम्।

विदथे यज्ञे साधुम् । सभामर्हति सभेयस्तम् । पितुरनुशासने स्थितम्, विनीतमित्यर्थः । यः यजमानः । ददाशत् । सोमाय । हविः ! तस्मै सोमो धेन्वादीन् ददाति इति सम्बन्धः । U.

यो यजमानः । अस्मै सोमाय । ददाति हविः । तस्मै सोमः । धेनुम् । ददाति । शीघ्रम् । अश्वञ्च । सोमः । ददाति । सोमश्च तस्मै । पुत्रं ददाति कीदृशं वीरम् ? कर्मणि साधुम् । सदने गृहे साधुम् । विदथो यज्ञस्तत्र साधुम् । सभामर्हति सभेयस्तम् । पितरं शृणोति पितृश्रवणः पित्राज्ञाकारिणं विनीतमित्यर्थः । कर्मण्यमित्यादौ 'तत्र साधुः' ( पा० ४।४।९८ ) इति यत् । सभेयं 'ढश्छन्दसि' ( पा० ४।४।१०६ ) इति सभायाः साध्वर्थे ढप्रत्ययः । तस्येयादेशः 'आयनेयी-' ( पा० ७।१।२ ) ददाशत्-'दाशृ दाने' 'बहुलं छन्दसि' ( पा० २।४।७६ ) इति शपः श्लुः द्वित्वम् । 'इतश्च लोपः परस्मैपदेषु' ( पा० ३।४।९७ ) इति तिप इलोपः । 'लेटोऽडाटौ' ( पा० ३।४।९४ ) इत्यडागमः । Mah.

RV.1.91.21=YV.34.20.

असोढम् । युद्धेषु सैन्येषु । पप्रिम्-'पृ पालनपूरणयोः' इत्यस्यैतद्रूपम् नतु 'प्रा पूरणे' इत्यस्य । पालनशीलम् । स्वर्षां स्वर्दिवं सनोति स तथा तम् । अप्साम्-अपः सनोति सम्भजते स तथा तम् । बलस्य । गोप्तारम् । भरेषुजाम्, जयतेरेतद्रूपम् नतु जानातेः, संग्रामेषु जेतारम् । सुनिवासम् । कल्याणकर्मकारित्वेन प्रसिद्धम् । परसैन्यानि जयन्तम् । त्वां दृष्ट्वा । उत्साधन्ते तद् दृष्ट्वा । मदेर्मोदनार्थस्य ग्रहणम् । प्रहृष्टाः स्याम । हे सोम ! U.

सोमदेवत्या त्रिष्टुप् । हे सोम ! त्वाम् । उत्कर्षेण वर्तमानम् अनु । वयं मदेम हृष्टाः स्याम । किम्भूतं त्वाम् ? युद्धेषु । असहनमनभिभूतम् । पुनः कीदृशम् ? सेनासु । पालयितारम् । स्वर्दिवं सनोति सम्भजते स स्वर्षाः तम् । अपो जलानि सनोतीत्यप्साः तम् । बलस्य । रक्षकम् । संग्रामेषु जेतारम् । सुनिवासम् । शोभनं श्रवः कीर्तिर्यस्य स सुश्रवाः तम् । असाढम्-सहतेऽसौ साढः न साढः असाढस्तम् । सहेः क्तः ढत्वम् । 'हो ढः' ( पा० ८।२।३१ ) 'झषस्तथोः-' ( पा० ८।२।४० ) धत्वम् 'ष्टुना ष्टुः' ( पा० ८।४।४१ ) 'ढो ढे लोपः' ( पा० ८।३।१३ ) 'ढ्लोपे पूर्वस्य दीर्घोऽणः' ( पा० ६।३।१११ ) बाहुलकात् 'सहिवहोरोदवर्णस्य' ( पा० ६।३।११२ ) इत्यस्याप्रवृत्तिः ।

षत्वं छान्दसम्। पप्रिम्' पॄ पालनपूरणयोः' 'आदृगमहन-' (पा० ३।२।१७१) इति किः द्वित्वादिः। स्वर्षाम् स्वःपूर्वात्सनोतेर्विट् 'विड्वनोरनुनासिकस्यात्' (पा० ६।३।४१) एवमप्साम्। गोपायतीति गोपाः—क्विप् अतो लोपः। यलोपः। भरेषुजाम-भरेषु संग्रामेषु जयति शत्रूनिति भरेषुजाः 'हलदन्तात्सप्तम्या अलुक्' (पा० ६।३।६) इति अलुक्। जयतेरौणादिको डाप्रत्ययः। मदेम 'मदी हर्षे' लिङ् व्यत्ययेन शप्। Mah.

RV.1.91.22=YV.34.22.

हे सोम! त्वम् इमाः। ओषधीः। सर्वाः। जनितवानसि। त्वम्। अपः। अजनयः। त्वञ्च। गाः। अजनयः। त्वम्। आततवानसि। विस्तीर्णम्। अन्तरिक्षम्। त्वम्। ज्योतिषा। विवृणोषि। तमः। त्वमेवादित्यात्मना तमोऽपनयसि। सर्वात्मत्वेन स्तुतिः। U.

हे सोम! त्वम्। इमाः। सर्वाः। ओषधीः। जलानि। धेनूः। जनितवानसि। त्वम्। विस्तीर्णम्। अन्तरिक्षम्। विस्तारितवानसि। त्वञ्च। तेजसा। अन्धकारम्। विवृणोषि। आदित्यात्मना सर्वं तमोऽपनयसीति सर्वात्मत्वमित्यर्थः। 'बभूथाततन्थजगृम्भववर्थेति निगमे' (पा० ७।२।६४) इति निपातः। Mah.

RV.1.91.23=YV.34.23.

दैवेनेति प्राप्ते तद्धितलोपश्छान्दसः। दैवेन। मनसा सह। अस्मभ्यम्। धनस्य। भागम्। सहःशब्दो बलवचनः सान्तः। तत्र अकारागमश्छान्दसः। हे सहस्वन्! अभियुध्य। युध्यतिर्गत्यर्थानां मध्ये पठ्यते। अन्तर्भावितण्यर्थश्च गृह्यते। अभिगमय देहीत्यर्थः। एवं दानप्रवृत्तं त्वां कश्चित्प्रतिबध्नीयादित्यत आह। मा च। त्वाम्। आतनत्। तनोतिः प्रतिबन्धार्थः। प्रतिबध्नातु। कुतस्त्वमेवमुच्यसे? इति चेत्, ईशिषे वीर्यस्य यतस्त्वं स्वकीयस्य वीरकर्मणः ईशिषे ईश्वरो यस्त्वमित्यभिप्रायः। किञ्च उभयेभ्यः प्रचिकित्स उभयलोकप्राप्त्यर्थं व्याध्यपगमं कुर्वित्यभिप्रायः। गविष्टौ, गोशब्देनात्र द्युलोकोऽभिप्रेतः। स्वर्गैषणायाञ्च विषयभूतायाम् अस्मान् प्रचिकित्स। दैवं मनः प्राप्य लब्धधना अरोगाश्च यथा स्वर्गं यास्यामस्तथा कुर्विति वाक्यार्थः। U.

हे देव ! सोम ! हे सहसावन् ! बलवन् ! देवसम्बन्धिना मनसा सह। धनस्य। भागम् । अस्मभ्यम् । अभियुध्य । युध्यतिर्गतिकर्मा अन्तर्भावितण्यर्थश्च । अभिगमय देहीत्यर्थः । एवं दानप्रवृत्तं त्वां कश्चिन्मा आतनोतु प्रतिबध्नातु । तनोतिः प्रतिबन्धार्थः । कुतस्त्वमेवमुच्यसे ? इति चेत्, यतस्त्वं वीरकर्मण ईश्वरो भवसि । 'अधीगर्थ' ( पा० २।३।५२ ) इति कर्मणि षष्ठी । किञ्च गोः स्वर्गस्य इष्टौ इच्छायां स्वर्गैषणायां विषयभूतायां सत्याम् । उभयलोकप्राप्त्यर्थं चिकित्सां कुरु । व्याध्युपशमं कुरु । उभयलोकप्रतिबन्धकं विघ्नं निवर्तयेत्यर्थः । दैवं मनः प्राप्य लब्धधना अरोगाश्च सत्कर्म कुर्वाणाः यथा स्वर्गं यास्यामस्तथा कुर्विति वाक्यार्थः । दैवेन देवानामिदं दैवम्, तद्धितप्रत्ययलोपः । सहसावन्, प्रथमार्थे तृतीया । सहसा सहो बलमस्यास्तीति सहसावान् अलुक् । तनत्, तनोतेः परस्य लेटोऽडागम इलोपश्च । चिकित्सा 'गुप्तिज्किद्भ्यः सन्' ( पा० ३।१।५ ) 'अन्येषामपि दृश्यते' ( पा ६।३।१३७ ) इति दीर्घः । Mah.

RV.1.92.13=YV.34.33.

उषोदेवत्या पुरोष्णिक् ? पुरउष्णिक् । हे उषः ! तत् । चायनीयं महनीयं धनम् । आहर । अस्मभ्यम् । हे अश्ववति ! येन धनेन । पुत्रम् । पौत्रं च । दध्महे । U.

उषोदेवत्या पुरोष्णिक् ? पुरउष्णिक् । हे उषः ! हे अश्ववति ! अस्मभ्यम् । तत् प्रसिद्धम् । चायनीयमाश्चर्यकारि महनीयं धनम् । आहर देहि । येन धनेन । वयम् । पुत्रम् । पौत्रश्च । सर्वं सन्तानवर्गम् । दध्महे पुष्णीमः । धामहे दधातेः शपो लुकि रूपम् । Mah.

RV.1.95.1=YV.33.5.

त्रिष्टुप् शुक्रस्य । द्वे रात्र्यहनी । नानारूपे । कृष्णा रात्रिः शुक्लमहः चरतः आदित्येन सहाहश्चरति इतरत्र अग्निना तु रात्रिः । शोभनार्थे । अन्या एका रात्रिः एकमग्निरूपं वत्सम्, अन्या एकमहः एकमादित्यरूपं वत्सम् उपधापयेते, रात्रिरग्निदेवत्यमग्निहोत्रम्, अहः सूर्यदेवत्यमग्निहोत्रं वत्समित्याशयः । किञ्च हरितवर्णोऽग्निः । अन्यस्यां रात्रौ । अश्ववान्—उपभोग्यः । तापपाकप्रकाशैर्भवति । शुक्लवर्ण आदित्यः । अन्यस्यामहनि दृश्यते । सुतेजाः । यद्वा द्वे द्यावापृथिव्यौ नानारूपे परस्परापेक्षया चरतः ।

कल्याणप्रयोजने। अन्या पृथिवी अग्निं वत्सम् अन्या द्यौः आदित्यं वत्सम्। पोषयतः। किञ्च हरिरग्निः। अन्यस्याम्। पृथिव्याम्। स्वधावान्। भवति। शुक्र आदित्यश्च अन्यस्यां दिवि। दृश्यते। सुतेजाः। U.

शुक्रग्रहपुरोरुक् कुत्सदृष्टा त्रिष्टुप्। तं प्रत्नथेत्यस्याः स्थाने। द्वे रात्र्यहनी। निरन्तरं प्रवर्तेते। कीदृशे ? विरूपे विविधं रूपं ययोस्ते। कृष्णा रात्रिः शुक्लमहः। स्वर्थे शोभनोऽर्थो ययोस्ते कल्याणप्रयोजने। अन्या च अन्या च। वत्सं चीरं पाययतः। अन्या एका रात्रिः वत्समग्निमुपधापयते रात्रावग्निदेवत्यमग्निहोत्रम्। अन्या दिवसरूपा वत्समादित्यमुपधापयते अह्नि सूर्यदेवत्यमग्निहोत्रम्। किञ्च तदेवाह अन्यस्यां रात्रौ। हरितवर्णोऽग्निः अन्नवान् भवति अन्यस्यामहनि शुक्लः आदित्यः शोभनतेजा ददृशे दृश्यते। यद्वा द्यावापृथिव्यौ। अग्निर्भूमौ स्वधावान् रविर्दिवि सुवर्चाः दृश्यते। Mah.

[1] RV.1.98.1=YV.26.7.

द्वितीयः पादः पूर्वं व्याख्यायते। यः वैश्वानरः। दीप्तः। हिकमिति निपातसमाहारोऽनर्थकः। यश्च वैश्वानरः। भूतजातानाम्। अभ्याश्रयणीयः सर्वोपकारसामर्थ्यात्। यश्च। अरणितः कुतश्चिद्वा। उत्पन्नः सन्। सर्वमिदम्। अभिविपश्यति। यथा द्रष्टव्यं कर्मानुरूपेण। यश्च वैश्वानरः। स्पर्धते। सूर्येण सह स्वकीयदीप्त्या। तस्य वैश्वानरस्य। कल्याणमतौ। वयं स्यामेति प्रार्थना। U.

त्रिष्टुप् कुत्सदृष्टा। वैश्वानरस्य। शोभनबुद्धौ। वयं स्याम भवेम। कं निपातः पादपूरणः। हि यस्माद्धेतोः वैश्वानरः। अरणितः। उत्पन्नः सन्। इदं सर्वम्। कर्मानुरूपं पश्यति। सूर्येण सह स्पर्धते च। सूर्यसमतेजा इत्यर्थः। कीदृशोऽग्निः ? राजते दीप्यते राजा। भूतजातानाम्। आश्रयणीयः। अभि समन्तात् श्रीयते सेव्यतेऽभिश्रीः। कर्मणि क्विप्। Mah.

RV.1.98.2=YV.18.73.

योऽग्निर्वैश्वानरः पृष्टः कोऽयमिति ? दिवि आदित्यात्मना व्यवस्थितो

---

[1] YV. adds उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा at the end, to the stanza of the RV.

मुमुक्षुभिः। तत्र ह्येवं श्रूयते। 'यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिः स ब्रह्म' इति। यश्च वैश्वानरोऽग्निर्विद्युदात्मना प्रावृषि स्थितः पृथिव्याम् अन्तरिक्षे लोके। पृथिवीत्यन्तरिक्षनामसु पठितम्। उदकार्थिभिः कोऽयं नाम द्विपदचतुष्पदजीवनहेतुः? यश्चाग्निर्वैश्वानरोऽस्मिन् लोके व्यवस्थितः पृष्टोऽग्निहोतृभिर्होतृपर्यन्तैः कोऽयं तापपाकप्रकाशैरुपकृत्य विश्वा ओषधीः आविष्टः? यश्च वैश्वानरोऽग्निः बलेन मथ्यमानोऽध्वर्युणा 'कोऽयं निर्ममन्थ'? इति पृष्टो दिदृक्षुभिः सः। अस्मान्। अहनि। रक्षतु। स च। रात्रौ। पातु। विनाशात्। रिषतिर्हिंसाकर्मा। दिवा नक्तमिति सन्ततार्थं वचनम्। U.

वैश्वानरदेवत्या त्रिष्टुप् कुत्सदृष्टा। वैश्वानरः सर्वनरेभ्यो हितोऽग्निः। दिवसे। अस्मान्। रक्षतु। स च। रात्रौ नः पातु। सर्वदास्मान् रक्षत्वित्यर्थः। स कः? योऽग्निः। द्युलोके। कोऽयमादित्यात्मना तपतीति मुमुक्षुभिः पृष्टः। अन्तरिक्षे 'यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद् ब्रह्म' इति श्रुतेः। यश्चाग्निः पृथिव्यामन्तरिक्षलोके कोऽयं विद्युदात्मना स्थितः? इति जलार्थिभिः पृष्टः। अन्तरिक्षनामसु पृथिवीति पठितम्। यश्च। सर्वाः। व्रीह्याद्योषधीः प्रविष्टः सन् पृष्टः कोऽयं प्रजानां जीवनहेतुस्तापपाकप्रकाशैरुपकरोति? यश्च बलेनाध्वर्युणा मथ्यमानः सन् पृष्टः कोऽयं मथ्यत इति? सोऽयमग्निर्दिवानक्तं रिषो वधात् पातु। रिषतिर्हिंसाकर्मा। मास्मान्नाशयत्वित्यर्थः। Mah.

RV.1.102.1=YV.33.29.

हे इन्द्र! इमाम्। तव। स्तुतिम्। प्रहरामि शपयामि। कथम्भूतस्य ते? महतः। कथम्भूतां धियम्? महतीम्। अस्य यज्ञस्य। स्तोत्रे। वाक्। यस्मात्। तव। स्वभूतान् गुणान्। अभिव्यनक्ति। ऐन्द्रमेव यज्ञं प्रकाशयति। किञ्च तमेवेन्द्रम्। अभ्युदये च। अभ्यनुज्ञानाय। विषयभूतायाम्। शत्रूणामभिभवितारम्। देवा अपि। बलेन। अभिष्टुवन्ति। पूर्वोऽर्धर्चः प्रत्यक्षकृतः उत्तरस्तु परोक्षकृतः। अतो वाक्यभेदेन व्याख्यानम्। U.

कुत्सदृष्टा जगती सावित्रपुरोरुक् वाममद्येत्यस्याः (YV. ८।६) स्थाने। हे इन्द्र! इमां मामकीम्। बुद्धिं स्तुतिं वा कर्म वा तुभ्यं प्रहरे समर्पयामि। कीदृशस्य ते? महतः पूज्यस्य। कीदृशीं धियम्? महतीम्। यस्माद् यजमा-

नस्यास्य बुद्धिर्वाग्वा। स्तोत्रे क्रियमाणे। तव। त्वां व्यनक्ति। कर्मणि षष्ठी। अञ्जेर्लिटि नलोपश्छान्दसः। किञ्च देवाः। तमिन्द्रम्। अनुमदन्ति स्तुवन्ति। 'छन्दसि परेऽपि' (पा० १।४।८१) इत्यनोः परः प्रयोगः। क स्तुवन्ति? अभ्युदये। गुर्वाद्यनुज्ञायां सत्याम्। यद्वा प्रसवे पुत्राद्युत्पत्तिरूपे उत्सवे इन्द्रं स्तुवन्ति। कीदृशमिन्द्रम्? बलेन। सासहिं सहते सासहिः शत्रूणामभिभवितारम्। चौ समुच्चये। Mah.

RV.1.105.1=YV.33.90.

आहुतिपरिणामोऽत्रोच्यते। योऽसौ चन्द्रमाः स तथा सोमरूपापन्नः। अभिषुतः अप्सु। अन्तः मध्ये। रसरूपेण आस्थितः। अग्नौ हुतः सन्। सुपतनः। धावते। दिवि। तस्मात्पर्जन्यरूपमास्थाय उदकदानद्वारेण। धनम्। पीतवर्णम्। असंख्यातम्। बहवो यत्र स्पृहयन्ति। सोम एति। पर्जन्यरूपेणात्यर्थं स्तनितं कुर्वन्। U.

त्रितदृष्टाहुतिपरिणामवादिन्यैन्द्री। 'आहुतेर्होमद्रव्यस्य परिणामो द्युपर्जन्यपृथिवीपुरुषयोषात्मकपञ्चाग्निक्रमेण परिपाकः 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति श्रुत्योक्तः तं वदत्येषा ऋक् अधियज्ञं तावदर्थः। चन्द्रं देवानामाह्लादं मिमीते करोति चन्द्रमाः लतारूपः सोमोऽभिषुतः सन्। वसतीवरीनिग्राभ्यादिजलेषु अन्तर्मध्ये रसरूपेण स्थिताग्नौ हुतः सन् गरुडाकृतिः साधुपतनो भूत्वा दिवि शीघ्रं गच्छति। 'सृ गतौ' इत्यस्य शीघ्रगतौ धावादेशः। 'तृतीयस्यामितो दिवि सोम आसीत्' इति श्रुतेः। 'हरिः सोमो हरितवर्णः' (निरु० ४।१९) इति यास्कोक्तेर्हरिः पूर्वोक्तः सोम एव दिवि गतः पर्जन्यरूपमास्थायोदकदानद्वारेण रयिमेति। 'रयिरिति धननाम' (निरु० ४।१७) इति यास्कः। धान्यभावं प्राप्नोति व्रीहियवाद्यन्नरूपो भवतीत्यर्थः। कीदृशं रयिम्? पिशङ्गम् परिपाकेन व्रीहियवादिकं धान्यं पीतवर्णं भवति। असङ्ख्यातम्। चतुर्विधभूतग्रामजीवनपर्याप्तमित्यर्थः। पुरुस्पृहं पुरूणां बहूनामपि स्पृहा लिप्सा यत्र तम्। बहवोऽपि यद्धान्यमिच्छन्ति तद्रूपो भवतीत्यर्थः। कीदृशो हरिः? पर्जन्यरूपात्यर्थस्तनितं कुर्वन्। 'दाधर्ति (पा० ७।४।६३) इत्यादि निपातः। Mah.

RV.1.107.1=YV.8.4; 33.68.

दद्मा श्रीणाति। त्रिष्टुप् यजुरन्ता आदित्यदेवत्या। 'आदित्येभ्यस्त्वा'

इति यजुः। यस्माद्यज्ञो देवतानामादित्यानां सुखं कर्तुं प्रत्येति तस्माद्धेतोः हे आदित्याः! आदित्या एव आदित्यासः। आज्जसेरसुक्। भवता मृडयन्तः। 'मृड सुखने' तृचोऽर्थे शतृप्रत्ययोऽत्र छान्दसः। मृडयितारः सुखयितारो भवतास्माकम्। आववृता भवतु। युष्मत्सम्बन्धिनी। सुमतिः। अस्मदभिमुखा च। अंहुः पापकारी। चिच्छब्दोऽप्यर्थे। अंहोः पापकारिणोऽपि या सुमतिः। वरिवोवित्तराः। वरिव इति धननाम। अतिशयेन धनस्य लब्ध्री भवतु। सा सुमतिः अस्मदभिमुखी आववृत्यादिति सम्बन्धः। U.

'दध्ना श्रीणात्येनं पश्चिमेऽन्ते मध्ये वा यज्ञो देवानामिति, ( का० १०।४।६ ) एनमादित्यग्रहं दध्ना मिश्रीकुर्यात्। आदित्यदेवत्या यजुरन्ता त्रिष्टुप् कुत्सदृष्टा। 'आदित्येभ्यस्त्वा' इति यजुः। यज्ञो देवानामादित्यानां सुखं कर्तुं प्रत्यागच्छति। अतो हे आदित्याः! यूयं सुखयन्तः सुखकर्तारोऽस्माकं भवत। 'अन्येषामपि दृश्यते' (पा० ६।३।१३७) इति संहितायां दीर्घः। किञ्च युष्माकं या शोभनबुद्धिर्भक्तानुग्रहपरा सा अस्मदभिमुखी आवर्ततास्। 'बहुलं छन्दसि' (पा० २।४।७६ ) इति वर्ततेर्लिङि जुहोत्यादित्वाच्छपः श्लुर्द्वित्वञ्च। किञ्च अंहोश्चित् अंहुः पापकारी। चिदप्यर्थे। अंहोर्हननशीलस्य पापिनोऽपि या सुमतिर्वरिवोवित्तरा वरिवो धनं विन्दति लभत इति वरिवोवित्, अत्यन्तं वरिवोवित् वरिवोवित्तमः पापिनो या सुमतिर्धनलब्ध्री भवेत् सा सुमतिरस्मदभिमुखी आववृत्यादिति सम्बन्धः। हे सोम! आदित्येभ्यो देवेभ्यस्त्वां दध्ना मिश्रयामीति शेषः। Mah.

RV.1.112.24.=YV.34.29.

अप्न इति कर्मनाम। कर्मवतीम्। हे अश्विनौ! वाचम्। अस्माकम्। कुरुतम्। किञ्च अस्माकम्। हे दस्रौ! दर्शनीयौ! हे वर्षितारौ! युवानावित्यर्थः। मनसः सम्बन्धिनीमिच्छां च। अप्नस्वतीमेव कृतम्। कस्मात्पुनरहमेवं ब्रवीमि? यतः अद्यूत्ये अवसे द्यूते भवमवसमन्नं द्यूत्यं द्यूतादागतं कर्मण्यं न भवति अत एवमुच्यते। अद्यूते अन्ने निमित्तभूते। आह्वयामि युवाम्। आगत्य च। वर्धनाय च अस्माकम् भवतम्। वाजसम्भजननिमित्तभूते सङ्ग्रामे च यज्ञे वा वर्धनायैव भवतम्। U.

हे अश्विनौ! हे दर्शनीयौ! हे वर्षितारौ! सेक्तारौ! युवानौ! अस्माकं वाचं कर्मवतीं युवां कुरुतम्। तथा अस्माकं मनस इच्छामप्नस्वतीमेव कुरुतम्।

मनसा वचसा च यज्ञं कुर्मस्तथा कुरुतमित्यर्थः। यतोऽहं युवाम् आह्वयामि किन्निमित्तम्? अद्यूत्ये सन्मार्गागते अक्ने। अन्ननिमित्तम्। तद्दानार्थमित्यर्थः। द्यूतादागतं द्यूते भवं वा द्यूत्यम्, न द्यूत्यमद्यूत्यं तस्मिन्। द्यूतादागतं कर्मण्यं न भवतीत्येवमुच्यते। द्यूतमन्येषामप्यन्याय्यधनागमानामुपलक्षकम्। किञ्च वाजसातौ वाजानामन्नानां सातिः सम्भजनं यस्मिन् स वाजसातिः तस्मिन् यज्ञे अस्माकं वृद्धये भवतम्। अश्मे विभक्तेः शेआदेशः। कृतं करोतेः 'बहुलं छन्दसि' ( पा० २।४।७३ ) इति शपि लुप्ते लोण्मध्यमद्विवचने रूपम्। वृषणा वृषणौ 'वा सपूर्वस्य निगमे' ( पा० ६।४।९ ) इत्युपधादीर्घाभावः। वृधे, वर्धनं वृत् सम्पदादित्वाद्भावे क्विप्। Mah.

RV.1.112.25=YV.34.30.

अहोभिः करणभूतैः। अक्तुभिः अक्तू रात्रिः रात्रिभिश्च करणभूताभिः। अधिकरणविवक्षा वा। काले हि द्युषु रात्रिषु वा। परि सर्वतः पातं पालयतं युवाम्। अस्मान्। न केवलं द्युभिरक्तुभिः परिपातम्, किं तर्हि? अनुपहिंसितैः। हे अश्विनौ! सौभगेभिः, भग इति धननाम, शोभनैश्च धनैः। योजयतमित्यध्याहारः। तत्। अस्माकम्। मित्रः। वरुणश्च। पूजयन्ताम्। अदितिश्च, सिन्धुश्च पृथिवी च। अपि च। द्यौः। U.

हे अश्विनौ! दिवसैः। रात्रिभिः। सप्तम्यर्थे तृतीया। दिवसेषु रात्रिषु च अहोरात्रम्। अस्मान्। सर्वतो रक्षतम्। कैः? सौभगैः, भग इति धननाम। शोभनैः धनैः। किम्भूतैः? अनुपहिंसितैः, अखण्डितैर्धनैरस्मान् रक्षतमित्यर्थः। किञ्च मित्रः, वरुणः, अदितिः, समुद्रः, अपि च द्यौः, एते। अस्माकम्। तद् भवत्कृतं रक्षणं पूजयन्ताम्। अनुमन्यन्तामित्यर्थः। द्युरित्यह्नो नाम, अक्तुरिति रात्रेः। मामहन्ताम् 'मह पूजायाम्' 'बहुलं छन्दसि' ( पा० २।४।७६ ) शपः श्लुः 'श्लौ' ( पा० ६।१।१० ) द्वित्वं 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा० ६।१।७ ) इत्यभ्यासदीर्घः। Mah.

RV.1.114.1=YV.16.48.

जगती। इमाः। स्तुतीः, याभिः स्तूयते ताः। रुद्राय। महते, बलवते वा। उभयत्र हि तवःशब्दः पठ्यते। जटामुकुटधारिणे। क्षयद्वीराय, क्षयन्ति वसन्ति अस्मिन् वीरा इति क्षयद्वीरः तस्मै क्षयद्वीराय। प्रेरयामः।

तथा वयं प्रेरयामः । येन प्रकारेण । शं सुखम् । असद् भवति । द्विपदां चतुष्पदाञ्च । यथा । सर्वम् । समृद्धम् । ग्रामे । अस्मिन् । आपद्रहितं स्वस्थम् । भवति । U.

कृत्सदृष्टा जगती । वयमिमा अस्मदीयाः । बुद्धीः । शङ्कराय । प्रहरामहे समर्पयामः । रुद्रं स्मराम इत्यर्थः । 'हृग्रहोर्भः' । कीदृशे ? महते बलवते वा । उभयत्र तवःशब्दः पठितः । जटिलाय । क्षयन्तो निवसन्तो वीराः शूराः यत्र स क्षयद्वीरः तस्मै । शूरायेत्यर्थः । क्षयन्तः नश्यन्तो वीरा रिपवो यस्मात् इति वा । पुत्रादये । गवादिपशवे । सप्तमी वा द्विपद्चतुष्पद्विषये । येन प्रकारेण । शं सुखं भवति । अस्मिन् । वासस्थाने । सर्वं प्राणिजातम् । समृद्धम् । निरुपद्रवं स्वस्थञ्च । यथा असत् तथा मतिं हरे समर्पयाम इत्यर्थः । Mah.

RV.1.114.7=YV.16.15.

मा वधीः । अस्माकम् । वृद्धं वयःप्रभृतिभिः । अपिच । मा वधीः । अस्माकम् । अल्पम् । मा वधीः । अस्माकम् । उक्षन्तम्, 'उक्ष सेचने' सिञ्चन्तं तरुणमिति यावत् । अपिच । मा वधीः । अस्माकम् । सिक्तं गर्भस्थमित्यर्थः । मा वधीः । अस्माकम् । पितरम् । आदरार्थं पुनर्वचनम् । महान्तमिति सिद्धत्वात् । मा वधीः । अपिच । मातरम् । रिषतिर्हिंसार्थः । मा हिंसीः । अस्माकम् । प्रियाणि । शरीराणि । पुत्रपौत्रलक्षणानि । हे रुद्र ! U.

हे रुद्र ! अस्माकम् । वृद्धं गुरुपितृव्यादिकम् । मा हिंसीः । उतापि । अस्माकम् । बालम् । मा वधीः । अस्माकम् । सिञ्चन्तं तरुणम् । मा वधीः । उतापि । अस्माकम् । सिक्तम्, गर्भस्थञ्च मा वधीः । जनकम् । मा वधीः । उतापि । अस्माकम् । जननीम् । मा वधीः । महान्तमित्यनेन सिद्धयोर्मातापित्रोः पुनरादानमादरार्थम् । अस्माकम् । वल्लभाः । तनूः शरीराणि । पुत्रपौत्ररूपाणि । मा हिंसीः । रिषतिर्हिंसाकर्मा । Mah.

RV.1.114.8=YV.16.16.

मा रीरिषः, रिषतिर्हिंसाकर्मा । मा हिंसीः । अस्माकम् । पुत्रविषये । मा हिंसीः । पौत्रविषये । मा हिंसीः । अस्माकम् । आयुषि विषयभूते । मा हिंसीः । अस्माकम् । गोषु विषयभूतासु । मा हिंसीः । अस्माकम् । अश्वेषु

विषयभूतेषु। यद्वा विभक्तिव्यत्ययेन व्याख्यानम्। मा रीरिषः अस्माकं तोकं, तनयम्, आयुः, गाः, अश्वानिति। मा वधीः अस्माकं वीरान्। हे रुद्र! भामिनः। भाम क्रोधे। क्रोधसंयुक्तान्। कः प्रत्युपकार इति चेत्? हविषा संयुक्ताः। सदाकालम्। इच्छब्द एवार्थे। त्वामेव। आह्वयामः। यागार्थम्। अनन्यशरणा वयमित्यर्थः। U.

हे रुद्र! अस्माकम्। पुत्रे। पौत्रे। मा हिंसीः। नः। जीवने। मा हिंसीः। नः। धेनुषु मा रीरिषः। नः। तुरगेषु। मा रीरिषः। विभक्तिव्यत्ययो वा। तोकं तनयमायुर्गा अश्वान् मा हिंसीः। 'भाम क्रोधे' भामिनः क्रोधयुतानपि। अस्माकम्। भृत्यान्। मा वधीः। क उपकार इति चेत्? हविर्युक्ताः सदैव। त्वाम्। वयम्। यागायाह्वयामः। त्वदेकशरणा वयमिति भावः। Mah.

RV.1.115.1=YV.7.42; 13.46.

द्वितीयां जुहोति। सौरी त्रिष्टुप्। सूर्यश्चात्र परापररूपेणावस्थितः स्तूयते। उदयकालादारभ्य तावदपररूपेण स्तूयते। चित्रमिति क्रियाविशेषणम्। यः। चित्रम् आश्चर्यभूतम्। उदगमत्। आश्चर्यं हि यः स्वकीयेन ज्योतिषा शार्वरं तमोऽपहत्यान्येषां ज्योतिषां ज्योतिरादायोद्गच्छति। यद्वा चित्रं चायनीयं पूजनीयमुदगमत्। देवानामनीकमित्यनयोः पदयोः सम्बन्धः। देवानां रश्मीनाम्। अनीकं मुखम्। यच्च। चक्षुः। मित्रादिकस्य सदेवमनुष्यस्य जगतः। आदित्योदये हि रूपाण्यभिव्यज्यन्ते। यच्च उदयसमनन्तरमेव। आ अप्राः। 'प्रा पूरणे' आपूरितवत् स्वकीयेन प्रकाशेन। द्यावापृथिव्यौ। अन्तरिक्षञ्च। अधस्तनानि विशेषणानि मण्डलाभिप्रायाण्नपुंसकलिङ्गान्यनूद्य अथेदानीं पररूपेण स्तौति। सूर्यः। आत्मा। पुरुषाभिप्रायमेतत्। जङ्गमस्य स्थितिमतः स्थावरस्य चेत्यर्थः। तथा च श्रुतिः 'यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः प्रजापतिस्तद् ब्रह्म' इति। सूर्याद्वैतमनेन मन्त्रेण ख्याप्यते स सर्वात्मत्वेनोपास्यः। एवं तावदधियज्ञं गतोऽप्ययं मन्त्रोऽधिदैवमाचष्टे। अध्यात्मं तु वक्ष्यति। 'यो वासावादित्ये पुरुषः' इत्यादिना। U.

'चित्रं देवानामिति द्वितीयामिति' (का० १०।२।६) चतुर्गृहीतेन शालाद्वार्ये द्वितीयामाहुतिं जुहोति। सौरी त्रिष्टुप् कुत्सदृष्टा। परापररूपेण

स्थितः सूर्योऽत्र स्तूयते । सूर्यः । आश्चर्यं यथा तथा । उदयं प्राप्तः उद्गच्छति वा । लडर्थे लुङ् । उदयन्नेव स्वतेजसा नैशं तमो हन्ति अन्येषां ज्योतींषि आदत्त इत्याश्चर्यम् । किम्भूतः सूर्यः ? दीव्यन्ति द्योतन्ते इति देवाः किरणास्तेषाम् । मुखम् । आश्रय इत्यर्थः । यद्वानीकं समूहः । किरणपुञ्ज इत्यर्थः । तथा मित्रस्य, वरुणस्य, अग्नेः नेत्रवत्प्रकाशक इत्यर्थः । मित्रादय उपलक्षकाः सर्वस्य सदेवमनुष्यस्य विश्वस्य रूपाणि सूर्योदयेऽभिव्यज्यन्ते । अतो मित्रादीनां चक्षुः स सूर्य उद्गतः सन् दिवम् । भूमिम् । अन्तरिक्षञ्च । आपूरितवान् । आपूरयति वा स्वतेजसेति शेषः । एवमपररूपेण स्तुत्वा पररूपेण स्तौति । किम्भूतः सूर्यः ? जङ्गमस्य । स्थावरस्य च । जगत आत्मान्तर्यामी । 'यमेतमादित्यं पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद् ब्रह्म' इति श्रुतेः सूर्याद्वैतमनेनोच्यत इति भावः । तस्मै स्वाहा सुहुतमस्तु । Mah.

YV.13.46.

होमे व्याख्यातम् । U.

चित्रं देवानामित्यर्धर्चशः स्रुवाहुती मध्यमे' ( का० १७।५।१८ ) अर्धर्चद्वयेन पुरुषशिरस्याहुतिद्वयं जुहोतीत्यर्थः । व्याख्याता ( अ० ७। क० ४२ ) । Mah.

RV.1.115.4=YV.33.37.

द्वे त्रिष्टुभौ । तदेव । सूर्यस्य । देवत्वम् । तच्च महाभाग्यम् । तत्किम् ? इत्यत आह—मध्या मध्ये इत्यर्थः । कर्तोः कर्मणा इत्यर्थः । मध्ये यत्कर्मणां क्रियमाणानां देवासुरमनुष्यसम्बन्धिनाम् । विततम् । रश्मिजालम् अहर्लक्षणम् । सञ्जभार । अयमेव संहरति नान्य एतच्चानितुं शक्नोति न चोपसंहर्तुमित्यभिप्रायः । किञ्च यदा । प्रयुङ्क्ते आत्मनि । आत्मसंस्थान् करोति । हरितवर्णान् रश्मीन् । ते हि अस्तमनकाले लोहिततां यन्ति । सहस्थानाद् आहृत्य पृथिव्यादिलोकत्रयं तेषां सहस्थानम् । तत्र हि ते निपतन्ति । आद् अथानन्तरम् । रात्री । तमोमयं वासः । विस्तारयति । सर्वस्मै । जगति एकत्रादित्यसहितं ज्योतिरेकत्र तम आदित्यप्रभावात्प्रभवतीत्यभिप्रायः । U.

कुत्सदृष्टे द्वे त्रिष्टुभौ मरुत्वतीययोः पुरोरुचौ । सूर्यस्य तद् देवत्वं देवतानुभावः । तच्च महाभाग्यमैश्वर्यम् । तत् किम् ? कर्तोः 'ईश्वरे तोसुन्कसुनौ' ( पा० ३।४।१३ ) करोतेस्तोसुन्प्रत्ययः । कार्यश्रेष्ठस्य जगद्रूपस्य । मध्ये ।

विस्तारितम् अंशुजालम् । संजहार संहरते । न ह्यन्य एतादृशमंशुजालं प्रसारयितुं संहर्तुं वा शक्नोतीत्यर्थः । किञ्च । यदेव । हरितवर्णान् रश्मीन् । युङ्क्ते आत्मनि आरोपयति सह तिष्ठन्त्यंशवो यत्र तत्सधस्थं व्योममण्डलम् । 'सधमादस्थयोश्छन्दसि' ( पा० ६।३।९६ ) इति सहस्य सधादेशः । सन्ध्याकाले पीतवर्णानंशून् यदा व्योममण्डलात् स्वस्मिन् योजयति । अनन्तरमेव निशा । सिमस्मै । वासः । तनुते । सर्वं वस्तु तमसाच्छादयतीत्यर्थः । सूर्यास्तादनन्तरं रात्रिसद्भावात् । सिमशब्दः सर्वपर्यायः । Mah.

RV.1.115.5=YV.33.38

सूर्यः । तद्रूपं ज्योतिः । कुरुते । द्योर्लोकस्य । उत्सङ्गे । मित्रस्य । वरुणस्य । अदर्शनाय । मित्रो हि सुकृतिनो गृह्णाति, वरुणो दुष्कृतिनो गृह्णाति, एवमनेन प्रकारेण जगदनुगृह्णातीत्यभिप्रायः । किञ्च । अपर्यन्तं कालतः देशतश्च । अन्यद् एकम् । शुक्लं जरामरणादिभिर्वियुक्तम् । विज्ञानघनानन्दम् । अस्य सूर्यस्य पाजः । पाज इति बलनाम इह तु रूपमुच्यते । रूपमस्तीति शेषः । तच्चाद्वैतलक्षणम् । कृष्णं द्वैतलक्षणम् । अपरं रूपम् । हरिणा इन्द्रियवृत्तयः सम्भरन्ति निदानभूता भवन्ति । U.

सूर्यो द्युलोकस्य उत्सङ्गे मित्रस्य वरुणस्य च तद्रूपं कुरुते । येन रूपेण जनान् अभिचष्टे पश्यति । मित्ररूपेण सुकृतिनोऽनुगृह्णाति वरुणरूपेण दुष्कृतिनो निगृह्णातीत्यर्थः । अस्य सूर्यस्य । अन्यद् एकम् । रूपम् । कालतो देशतश्चापरिच्छेद्यम् । शुक्लं दीप्यमानं विज्ञानघनानन्दं ब्रह्मैव । अन्यत् । कृष्णं द्वैतलक्षणं रूपम् । दिश इन्द्रियवृत्तयो वा धारयन्ति । इन्द्रियग्राह्यं द्वैतरूपमेकम् । एकं शुद्धं चैतन्यमद्वैतमिति द्वे रूपे सूर्यस्य, सगुणनिर्गुणं ब्रह्म सूर्य एवेत्यर्थः । पाज इति बलनाम इह रूपमुच्यते । रोचत इति रुशत् । औणादिकेऽतिप्रत्यये चकारस्य[1] शकारो गुणाभावश्च निपात्यते । यद्वा 'रुश् हिंसायाम्' रुच्यर्थे वर्तमानादस्माल्लटः शतरि रुशदिति रूपम् । Mah.

---

[1] The reading in Pansikar's edition of Mahīdhara's commentary on the YV. is 'पौणादिकेऽतिप्रत्यये चकारो रस्य शकारो गुणाभावश्च निपात्यते'. पौणादिके is evidently wrong. चकारो रस्य should be चकारस्य.

RV.1.115.6=YV.33.42.

त्रिष्टुप्। अस्मिन्नहनि। हे देवाः ! रश्मयः उदयकाले सूर्यस्य । निरंहसः पिपृत निष्पिपृत निर्मुञ्चत अंहसः पापात्सकाशात्[1].........विपरीतात् निरवद्यात् निष्पिपृत च निर्मुञ्चत च अवद्याद् अवदनीयात् । येन दुर्यशो भवति तदवद्यम् । तदेतदुच्यमानम् । अस्माकम् । मित्रावरुणः पूजयतु । अदितिः सिन्धुः नदी, पृथिवी उतापि च द्यौः । U.

कुत्सदृष्टा त्रिष्टुप् । दभ्रादित्यग्रहश्रयणे विनियोगः। दीव्यन्ति दीप्यन्ते इति देवाः रश्मयः हे देवाः ! अस्मान् अंहसः पापात् निःपिपृत निर्मुञ्चत। अवद्याद् दुर्यशसोऽपि निःपिपृत पृथक् कुरुत। अस्माकं पापानि दुर्यशांसि च नाशयतेत्यर्थः। क ? अद्यास्मिन् दिने। सूर्यस्य उदिता उदिते उदये अद्य सूर्योदयेऽस्मान् शुद्धान् कुरुतेत्यर्थः। अद्येत्यत्र 'द्व्यचोऽतस्तिङः' 'निपातस्य च' (पा० ६।३।१३५,१३६) इति दीर्घः। 'अन्येषामपि दृश्यते' (पा० ६।३।१३७) इति दीर्घः पिपृतेत्यत्र। किञ्च मित्रादयः तद् अस्मद्वचनं पूजयन्तु। अङ्गीकुर्वन्त्वित्यर्थः। के ? मित्रः, वरुणः, अदितिः देवमाता, सिन्धुः समुद्रो नदी वा, पृथिवी उतापिच द्यौः स्वर्गः। Mah.

---

[1] The omitted passage contains doubtful reading.

## APPENDIX III

Extracts from the commentary of Dyā Dviveda on such stanzas of the first *maṇḍala* of the *Ṛgveda* as are quoted and explained by him in his *Nītimañjarī*.

अत्र मधुच्छन्दा अग्नेः प्राधान्यं दर्शयन् गायत्रेण छन्दसा अग्निं तुष्टाव। 'अग्निमीळे' मधुच्छन्दा अग्निर्गायत्री। 'यस्य वाक्यं स ऋषिः'[1]। 'ऋषिर्दर्शनात्' इति यास्कः (नि० २. ११.)। तेन वाक्येन या देवतोच्यते सा देवता[2]। 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति' इति (नि० ७.१.)। 'देवो दानात्' इति यास्कः (नि० ७. १५.)। 'यदक्षरपरिमाणं तच्छन्दः'[3]। 'छन्दांसि छादनात्' इति यास्कः (नि० ७. १२.)।

तथानुक्रमणी। 'अग्निं नव मधुच्छन्दा वैश्वामित्रः'[4] इति। 'मण्डलादिष्वाग्नेयमैन्द्रात्' इति। अग्निर्देवता। 'आदौ गायत्रं प्राग्घिरण्यस्तूपात्' इति गायत्रीछन्दः। 'अष्टाक्षरास्त्रयः पादाश्चतुर्विंशत्यक्षरा गायत्री' इति लक्षणम्। तर्हि पादे पादेऽवसानं कुतो न भवति। उच्यते। शौनकेन ऋग्लक्षणे 'द्वाभ्यामवस्येत्त्रिपदासु पूर्वं पादेन पश्चात्'[5], इत्युक्तत्वात्।

अथ विनियोगः। प्रातरनुवाके आग्नेये क्रतौ। 'आग्नेयं गायत्रं क्रतुम्'। 'उपप्रयन्तो अध्वरम्'[10]। 'अग्निमीळे पुरोहितम्'[11] इति सूक्तम्। तथा अग्निष्टुति—"अग्निमीळे पुरोहितमित्युञ्जीयमानेभ्यः" इति[12]। उपाकर्मणि होमे नाथ ह स्माह कौषीतकिः। अग्निमीळे पुरोहितमित्येकेतिगृह्ये(?)। शौनकेनोक्तमृग्विधाने—'आग्नेयं सूक्तमाद्यं तु मुख्यं ब्रह्मर्षिसम्मितम्'[13]।

तथा ऋष्यादिज्ञाने फलं सामगानाम्। ऋषीणां विषयेज्ञा यः(?) शरीरादिति। देवताफलं बृहद्देवतायाम् (१. २)—

वेदितव्यं दैवतं हि मन्त्रे मन्त्रे प्रयत्नतः।

दैवतज्ञो हि मन्त्राणां तदर्थमवगच्छति ॥ इति।

छन्दसां चैव सायुज्यं छन्दोज्ञानादवाप्नुयात् ॥ इति।

छन्दोज्ञाने फलम्। अज्ञाने प्रत्यवायः। 'अनेवंविदो यातयामानि छन्दांसि भवन्ति'[14] इत्यनुक्रमणीकारोक्तेः।

---

[1] का० स० ब्रा० का० २. ४. p.1. [2] या तेनोच्यते सा देवता। का० स० ब्रा० का० २. ५. p.1. [3] का० स० ब्रा० का० २. ६. p.1. [4] का० स० १. १. १. p.5. [5] का० स० ब्रा० का० १२. १२. p.5. [6] का० स० ब्रा० का० १२. १४. p.5. [7] RPR. 16.16. [8] ऋ० प्रा० १८. ४६. [9] शां० श्रौ० सू० ६. ३. ११. [10] शां० श्रौ० सू० ६. ४. १. [11] शां० श्रौ० सू० ६. ४. १. [12] शां० श्रौ० सू० १४. ५२. १. [13] Ṛgvidh, I.13.5. [14] का० स० ब्रा० का० १. p.1.

'अविदित्वा ऋषिं छन्दो दैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः' ॥ इति । बे० दी० १।२।

प्राग्यजुषामार्षं इति आर्षी गायत्री—एवं चतुर्भिश्चतुर्भिर्वर्धमाना आर्ष्युष्णिहादयः । तत्र प्रथमेऽनुवाके त्रीणि सूक्तानि । 'अग्निमीळे त्रिसूक्तस्तु सुरूपेन्द्रचतुःसूक्तौ' इत्यनुवाकानुक्रमणी[1] ॥ तत्र ऋक्—

ऋ० १. १. १.

अस्या ऋचोऽर्थः—अहमग्निं देवमीळे स्तौमि, याचामि । 'ईळिरध्येषणाकर्मा' इति यास्कः (नि०७.१५.) । यद्यप्यस्मच्छब्दोऽप्रयुक्तस्तथापि 'अस्मद्युत्तमः*' इत्युत्तमपुरुषप्रयोगाज्ज्ञेयः । 'उत्तमपुरुषयोगाद् अहमिति चैतेन सर्वनाम्ना[2]' इति यास्केन स्पष्टमुक्तम् । ईडि, स्तुत्यर्थो धातुः । डकारस्य ळत्वं वैदिकलक्षणे—शौनकेनोक्तम् 'द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकारः' इति (ऋ० प्रा० १. ५२) । अनयोः स्वरयोर्मध्यत्वाद् ळत्वम् । ईडय इत्यमध्यत्वान्न । कीदृशमग्निम् ? पुरोहितं देवानां पौरोहित्ये वर्तमानम् । यथा राज्ञः पुरोहितो राज्ञोऽभीष्टं साधयति तथा अग्निरपि देवानामभीष्टं होमं साधयति । पुनः किम्भूतम् ? यज्ञस्य देवं दीपकं द्योतकं वा । अग्निं विना यज्ञो न द्योतते । अतो यज्ञस्य देवम् । पुनः कीदृशम् ? होतारम् ऋत्विजं देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव । तथा श्रूयते—'अग्निर्वै देवानां होता' इति (तै० सं० २.५.६.५.)

तथा निगमाः—अग्निर्होता नो अध्वरे (ऋ० ४.१५.१) ।
अग्निर्होता पुरोहितः (ऋ० ३. ११. १.) ।
अग्निर्मे दैवो होता (शां० श्रौ० सू० ५.१.६.)

तथा ब्राह्मणे प्रतर्दनप्रश्ने कौषीतकिप्रकथने 'सर्वं तदग्निर्वै होताऽनुत्वणम्' इत्यादिभिरग्नेरेव होतृत्वं प्रसिद्धम् । पुनः किम्भूतम् ? रत्नधातमम्—रमणीयानां धनानां धारयितारं दातृतममिति वा ।

अथ सर्वाणि पदानि यास्केन व्याख्यातानि तदाह—'अग्निः कस्मात् ? अग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयते'[4] । 'ईळिरध्येषणाकर्मा पूजाकर्मा वा'[5] । 'पुरोहितः पुर एनं दधति'[6] इति । 'यज्ञः कस्मात् ? प्रख्यातं यजति'[7] इति । 'देवो दानाद्वा'[8] इति । 'ऋत्विक् कस्मात् ? ईरणः, ऋग्यष्टा भवति'[9] इति । 'होतारं ह्वातारं रत्नधातमं रमणीयानां धनानां दातृतमम्'[10]* इति च ।

नन्वग्नेः पुरोहितत्वम् आर्त्विज्यं रत्नदातृत्वं च कथं सम्भवति ? अविग्रहत्वात् । कर्माणि तु विग्रहवतां सम्भवन्ति । उच्यते । देवता विग्रहवत्यविग्रहवती च यास्केनोक्ता (Cf. नि० ७.६,७.) । विग्रहवतीपक्षे सर्वं सम्भवति पुरुषाङ्गवदथेन्द्रस्तुतिः—

ऋष्वात इन्द्र स्थविरस्य बाहू (ऋ० ६.४७.८),
इतीन्द्रस्य बाहुमत्त्वं यष्टिमत्त्वं च सञ्जातम्, इन्द्रस्य पुरुषद्रव्यवत्स्तुतिः ।
आ द्वाभ्यां हरिभ्यां० (ऋ० २.१८.४),
कल्याणीर्जाया सुरणं गृहे ते० (ऋ० ३. ५३. ६),

---

[1] Anu. १५ [2] N. 7.2. reads उत्तमपुरुषयोगाः [3] शां० ब्रा० २६.५. reads देवो for वै । [4] N. 7.14. [5] N.7.15. [6] N.2.12. [7] N.3.19. The Nirukta reads यजतिकर्मेति नैरुक्ताः । [8] N.7.15. [9] N.3.19. [10] N.7.15. * Pa.1.4.107.

इतीन्द्रस्यास्यजायावत्त्वं सञ्जातम् ।
अद्धीन्द्र पिब च (ऋ० १०. ११६. ७) इत्यदनं पानं च,
आश्रुत्कर्ण (ऋ० १. १०. ९) इति श्रोत्रवत्त्वम् ॥

एवमग्नेर्विग्रहवतः पुरोहितत्वादि युक्तम् । तत्राग्निमित्यत्र 'स्वरानुस्वारोपहितो द्विरुच्यते संयोगादिः'[1] इति गकारस्य द्वित्वम् । 'स्पर्शायमानाननुनासिकान् स्वरान् परेषु स्पर्शेष्वनुनासिकेषु'[2] इति नासिक्यान्नासिक्येति नकारस्य द्वित्वम् । रलघातमम् । तथोक्तं च—अनन्त्यश्च भवेत्पूर्वो ह्यन्त्यश्चेत्परतो यदि । तत्र मध्ये यमस्तिष्ठेदिति यमस्थानं सम्यगुक्तम् । ईळ इत्येतस्मिन् 'तिङ्ङतिङः' (पा० ८. १. २८.) इत्यनेन सर्वानुदात्ते परे अग्निशब्देन द्वितीयान्तेनान्तोदात्तेन सन्धौ क्रियमाणे "उदात्तपूर्वं नियतं विवृत्या व्यञ्जनेन वा" (ऋ० प्रा० ३. १७.) इति स्वरितत्वम्—ळे इत्यस्य प्रचयत्वं स्वरितादनुदात्तानामित्यैकारस्योदात्तश्रुतिः । 'अग्निमीळेऽग्निं याचामि' इति **निरुक्तं** (नि० ७. १५.) द्रष्टव्यम् ।

ऋ० १. १. ६.

मधुच्छन्दा गायत्र्याऽग्निं तुष्टाव । अङ्गेत्यभिमुखीकरणे । अङ्ग हे अग्ने ! त्वं दाशुषे हविःप्रदात्रे यजमानाय यद्भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तत्तवेत् तवैव सुखहेतुः । हे अङ्गिरः ! 'अङ्गारेष्वङ्गिरः'[3] (नि० ३.१७.) इति **यास्कोक्तेरङ्गिरःशब्दोऽग्निपर्यायः** । हे अग्ने ! एतच्च सत्यम् । नत्वत्र विसंवादोऽस्ति । अतः यजमानस्य वित्तादिसम्पत्तौ सत्याम् उत्तरत्र क्रत्वनुष्ठानेऽग्नेरेव सुखं भवति । भद्रशब्दार्थं **शाट्यायनिनः** समामनन्ति । "यद्वै पुरुषस्य वित्तं तद्भद्रं प्रजा भद्रं पशवो भद्रम्[4]" इति । करिष्यसीति 'तिङ्ङतिङः' (पा० ८.१.२८.) इत्यनुदात्तत्वे प्राप्ते यच्छब्दान्निघाताभावः ।

ऋ० १. १. ९.

पूर्ववत् सर्वम् । हे अग्ने ! सः त्वं नः अस्मभ्यम् अस्मदर्थं सूपायनः शोभनमुपायनं यस्य सः शोभनधनादिप्राप्तियुक्तो भव । क इव ? पिता सूनवे इव । यथा पिता पुत्राय सूपायनो भवति तद्वत्, नः अस्माकं स्वस्तये अविनाशाय सचस्व सेवस्व । 'सिषक्तु सचत इति सेवमानस्य' (नि० ३.२१) । 'सेवस्व नः स्वस्तये' इति **यास्कः** (नि० ३. २१.) । 'त्वं तमग्ने' (ऋ० १. ३१. ७.) इति निगमान्तरम् । अथ यत्स्वैरग्निभिर्यजमानं संस्थापयन्तीति यजमानस्याग्नेः सकाशादमृतत्वमुक्तम् । अग्ने इत्यामन्त्रितत्वेन सर्वानुदात्तत्वे प्राप्ते पादादित्वान्न (Cf. पा० ८.१.१९) । स न इति "एतत्तदोः" (पा० ६. १. १३२) इति सुलोपः । सूनवेऽग्ने इति पादादित्वात् "एकीभवति पादादिरकारः" (ऋ० प्रा० २.३४) इत्येकीभावः । सचस्वा नः स्वस्तय (ऋ० प्रा० ८.१४.) इति स्वस्तये ग्रहणाद्दीर्घः ।

ऋ० १. ४. ६.

इत्यनयर्चा वसु धनमयाचत । मधुच्छन्दा गायत्र्या इन्द्रं स्तौति । षष्ठेऽह्नि ब्राह्मणाच्छंसिनोऽनुरूपस्य तृतीया सूत्रिता । 'सुरूपकृत्नुमिति (ऋ० १.४.१) स्तोत्रियानुरूपौ'[5] इति ।

---

[1]RPR. 6.1. [2]RPR.(6.29) reads **'स्पर्शा यमाननुनासिकाः स्वान् परेषु स्पर्शेष्वनुनासिकेषु'** [3]N. reads **अङ्गिराः** [4]B. Ghosh, *Fragments of Lost Brāhmaṇās*, p.1. [5]**शां० श्रौ० सू० १२.४.१५**

अयमर्थः—हे दस्म ! शत्रूणामुपक्षपयितः ! इन्द्र ! दसु उपक्षये । त्वत्प्रसादात् अरिरुत—अरयोऽपि वचनव्यत्ययः । उतशब्दोऽप्यर्थे । अप्येक इति चेत् । नः अस्मान् सुभगान् शोभनधनोपेतान् वोचेयुः उच्यासुः । भग इति धननाम (निघण्टु २. १०.) । यद्यप्यरयोऽप्येवं वदन्ति तर्हि कृष्टयः अस्मिन् मित्रभूता मनुष्याः । कृष्टय इति मनुष्यनाम (निघण्टु २. ३) । अस्मान् ऋद्धान् इति वदन्ति तत्र किं वक्तव्यम् ? ततो धनसम्पन्ना वयम् इन्द्रस्य शर्मणि इन्द्रप्रसादलब्धे सुखे स्याम भवेम । धनं सर्वोऽपि याचते परन्त्वयमत्यन्तं विलपति । तस्मात्सीदन्निन्द्र इति सिद्धम् । नः इति 'युष्मदस्मदोः षष्ठी' (पा० ८. १. २०) इति निघातः । वोचेयुः स्यामेति पादादित्वान्निघाताभावः । 'तिङ्ङतिङः' (पा० ८.१.२८) इति सूत्रस्य प्राप्तिर्न । दस्मेत्यामन्त्रितत्वान्निघातः (Cf. पा० ८. १. १९) । सुभगाँ अरिः—'नकार आकारोपधः०' (ऋ० प्रा० ४. ६५) इति नलोपे कृते, 'नकारस्य लोपरेफोष्मभावे०' (ऋ० प्रा० ४. ८०) इत्युपधानुनासिकत्वम् ।

ऋ० १. १०. २.

इन्धनार्थमृषिः कश्चिन्निर्जगाम वनाद् बहिः ।
पर्वतभ्रमणं कुर्वन् सानोर्वै सानुमारुहत् ॥१॥
अचेतीदर्थमिन्द्रस्तं सोमार्थं भ्रमति ह्ययम् ।
इति सञ्चिन्त्य सुत्रामा देवयूथेन चाचलत् ॥२॥
मधुच्छन्दा इन्द्रो गायत्री महदुक्थे तृचं विनियुक्तम् ।
इन्द्रं वृत्राय हन्तवे (ऋ० ३.३७.५.)
गायन्ति त्वा गायत्रिणः (ऋ० १. १०. १.) ॥

ऋचोऽयमर्थः—यद् यदा सानोः सानुमारुहद् यजमानः समिदाद्याहरणाय एकस्मात् पर्वतशिखराद् अपरं पर्वतशिखरम् आरूढवान् तदा इन्द्रः अयं भूरि महत् प्रभूतं वा कर्त्वं ज्योतिष्टोमादिकं कर्म कर्तुं करिष्यतीत्यस्पष्टं स्पृष्टवान् उपक्रान्तवान् । ततदानीमिन्द्रोऽर्थं प्रयोजनम् एतदेव चेतति—अचेतीत् । ज्ञात्वा च यूथेन देवयूथेन सह वृष्णिः कामानां वर्षिता सन् एजति चकम्पे । एजृ कम्पने । स्वस्ववाहनादियुक्तो यज्ञभूमिमागन्तुं चलचित्तोऽभूदित्यर्थः । एवमर्थित्वं प्राप्य इन्द्रेणापि धैर्यं त्यक्तमिति तात्पर्यार्थः । आरुहत्—'निपातैर्यद्यदिहन्त' (पा० ८. १. ३०) इति निघाताभावः । चेतति—'तिङ्ङतिङः' (पा० ८. १. २८) इति निघातः । एजतीति तद्वत् ।

ऋ० १. ११. ५.

मधुच्छन्दा गायत्र्येन्द्रं तुष्टाव । स्वरसाम्नि निष्केवल्ये विनियुक्तम् । 'इन्द्रं विश्वा अवीवृधन् (ऋ० १. ११. १) इत्यानुष्टुभं निष्केवल्यम्[1] 'इत्युक्तम् ।

अयमर्थः—पुरा वलनामकः कश्चिदसुरः [2]परनिन्दापवादनिरतो[2] देवसम्बन्धिनीर्गा अपहृत्य कस्मिंश्चित्पर्वतबिले गोपितवान् । तदानीमिन्द्रस्तद् बिलं स्वसैन्येन समावृत्य बृहस्पतिना सह तस्माद् बिलान्निःसारयामास । 'इन्द्रो वलस्य बिलमपौर्णोत्' (तै. सं. २. १. ५. १.) इति ब्राह्मणे प्रसिद्धम् । अद्रिरस्यास्तीत्यद्रिवः । हे वज्रयुक्त ! इन्द्र ! त्वं वलस्य वलनामकस्यासुरस्य सम्बन्धि गोमतः गोभिर्युक्तस्य पर्वतस्य बिलम् अपावः स्वसैन्यमुखेनापावृतवानसि । तदानीं देवास्त्वामाविषुः

---

[1] Cf. शां० श्रौ० सू० १८. १८. १, ३.  [2] सायणभाष्ये विशेषणमिदं नास्ति ।

त्वां प्राप्तवन्तः। तुज्यमानासः बलेन हिंस्यमानाः। तुजिर्हिंसार्थः। पुनः कीदृशाः? अविम्युषः त्वया रक्षिता बलादभीताः। तथेन्द्रेषु बार्हस्पत्येषु निगमाः।

इन्द्रो यदभिनद्वलम् (ऋ० ८. १४. ७),
इन्द्रो वलं रक्षितारम् (ऋ० १०. ६७. ६),
यो गा उदाजत् (ऋ० २. १२. ३) इत्येवमादयः।

अत्र 'वरवरावः' (ऋ० प्रा० १. ६६) इति रेफः। अमुना प्रकारेण निन्दावादाद्वलो हत इति ॥

ऋ० १. १८. १.

कक्षीवत उशिक्पुत्रत्वं वदामः। अङ्गराजः कस्मिंश्चिद्दिवसे स्वकीयाभियोगिभिः सह गङ्गायां जलक्रीडां चक्रे। तस्मिन्दिवसे दीर्घतमा नाम ऋषिः स्वभार्यापुत्रभृत्यादिभिश्च दुर्बलत्वात् किमपि कुर्वन्न? (कर्तुं न) शक्नोतीति द्वेषेण गङ्गामध्ये प्रचिक्षिपे। स च ऋषिः केनचित्प्लवेन अङ्गराजस्य क्रीडादेशं प्रति समाजगाम। स च राजा सर्वज्ञं तमृषिमवगम्य प्लवादवतार्यैवमवोचत्। हे भगवन्! मम पुत्रो नास्तीति। एषा महिषी। अस्यां कञ्चित्पुत्रमुत्पादयेति। स तथेत्यब्रवीत्। सा महिषी राजानं प्रति तथेत्युक्त्वा अयं वृद्धतरः, जुगुप्सितो मम योग्यो न भवतीति बुद्ध्या स्वकीयाम् उशिक्संज्ञिकां दासीं प्राहैषीत्। तेन सर्वज्ञेन ऋषिणा मन्त्रपूतेन वारिणा अभ्युक्षिता सती सैव ऋषिपत्नी बभूव। तस्यामुत्पन्नः कक्षीवान् नाम ऋषिः स एव राज्ञः पुत्रोऽभूत्।

तथा च बृहद्देवता (४. २१—२५)—
जीर्णं तु दीर्घतमसं शिप्रास्तत्परिचारकाः[1]
दासा बद्ध्वा नदीतोये दृष्टिहीनमवादधुः ॥२१॥
तत्रैकस्त्रैतनो नाम शस्त्रेणैनमपाहनत्।
शिरश्चांसावुरश्चैव स्वयमेव न्यकृन्तत ॥२२॥
हत्वा दीर्घतमास्तं तु पापेन महता वृतम्।
[2]अङ्गराजसमीपे तु तं नद्यः समुदक्षिपन् ॥२३॥
आत्माङ्गान्यनुदन्वैव तत्रोदोन्मोहितो भृशम् ॥
अङ्गराजगृहे दासीमुशिजं पुत्रकाम्यया ॥२४॥
[3]राज्ञा च प्रहितां ज्ञात्वा शुद्धां कृत्वारमन्मुनिः।
सा च कक्षीवतं जज्ञे ॥२५॥ इति कथा।

इति कक्षीवत उशिक्पुत्रत्वमुक्तम्। मेधातिथिर्ब्रह्मणस्पतिं गायत्र्या स्तौति। 'सोमानमिति पञ्च ब्राह्मणस्पत्याः'[4] इत्यनुक्रमणी।

---

[1] Bṛhaddevatā reads परिचारिणः।
[2] Bṛhaddevatā reads this verse after आत्माङ्गान्यनुदन्वैवेत्यादि
[3] एवमयं श्लोको बृहद्देवतायां दृश्यते :—
राज्ञा च प्रहितां दासीं भक्तां मत्वा महातपाः।
जनयामास चोत्थाय कक्षीवत्प्रमुखानृषीन् ॥२५॥
[4] का० स० १ मण्डल १८. p. 6.

अयमर्थः—हे ब्रह्मणस्पते! एतन्नामक! देव! सोमानं सोमानामभिषवस्य कर्तारम् अनुष्ठातारं स्वरणं देवेषु प्रकाशनवन्तं कृणुहि कुरु। कमिव? औशिजः उशिक्पुत्रः कक्षीवान् सोमाभिषवकर्ता तमिव। लुप्तोपमानमेतत्। कक्षीवतोऽनुष्ठातृषु मुनिप्रसिद्धिः।

कक्षीवते वृचयामिन्द्र सुन्वते० (ऋ० १.५१.१३.) कक्षीवन्तं स्तोतारं (ऋ० १. ११२. ११) अहं कक्षीवाँ ऋषिः (ऋ०४.२६.१.) इत्यादि।

कक्षीवानुशिक्पुत्रोऽपि यदि सोमसुत् ज्यायान्। यः कुलीनोऽपि यदि सुन्वानः स द्विजपरिवृढो ज्ञेय इत्युक्तमनुदृष्टान्तेन। "सोमानां सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते! कक्षीवन्तमिव य औशिजः। कक्षीवान् कक्ष्यावान्। औशिज उशिजः पुत्रः। उशिग्वष्टेः कान्तिकर्मणः। अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्तं सोमानां सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते" इति यास्कः (नि० ६.१०)।

ब्रह्मणस्पते-'पतिशब्दे इयक्षरे०' (ऋ० प्रा० ४.४२) इत्युपाचरितसन्धिः। 'सुबामन्त्रिते...' (पा० २.१.२) इति पराङ्गवद्भावात् पदद्वयस्य निघातः।

ऋ० १.२०.४.

मेधातिथिः ऋभून् गायत्र्या स्तौति। द्वितीये छन्दोमे वैश्वदेवे विनियुक्तं तृचम्। 'मही द्यौः (ऋ० १.२२.१३) युवाना पितरा (ऋ०१.२०.४) इति तृचौ'[1] इति।

ऋभव एतन्नामका देवाः। पितरौ स्वकीयौ मातापितरौ। पूर्वं वृद्धावपि युवाना पुनः तरुणौ अक्रत कृतवन्तः। कीदृशाः? सत्यमन्त्राः। सत्या यथार्था मन्त्रा येषां ते तथोक्ताः तस्माज्जीर्णयोः पित्रोर्युवत्वं सम्पादयितुं समर्थाः। पुनः कीदृशाः? ऋजूयवः ऋजुत्वमात्मन इच्छन्ति तथोक्ताः। छलरहिता इत्यर्थः। पुनः कीदृशाः? विष्टी: विष्टयो व्याप्तियुक्ताः। विष्लृ व्याप्तौ। युवाना पितरेति—'सुपां सुलुक्' (पा० ७.१.३९) इत्यादिना द्विवचनस्याकारः। पुनः—'वारपुनःपुनः' (ऋ० प्रा० १.१०३) इति रेफः। ऋजूयवः 'पृथानाजिरजुं०' इति (ऋ० प्रा० ९.१६) यकारपरत्वाद्दीर्घः। तथा निगमाः—जिव्री यसन्ता पितरा (ऋ. ४. ३६.३)

पुनर्य चक्रुः पितरा (ऋ० ४. ३३.३),

तक्षन्पितृभ्यामृभवो (ऋ० १.१११. १) इत्येवमादयः।

ऋ० १.२०.६.

तत्र बृहद्देवता—(३. ८३–९०)—

सुधन्वन आङ्गिरसस्यासन् पुत्रास्त्रयः पुरा।
ऋभुर्विभ्वा च वाजश्च शिष्यास्त्वष्टुश्च तेऽभवन् ॥८३॥
शिक्षयामास तांस्त्वष्टा त्वाष्ट्रं यत्कर्म किञ्चन।
परिनिष्ठितकर्माणो विश्वे देवा उपाह्वयन् ॥८४॥
विश्वेषां ते ततश्चक्रुर्वाहनान्यायुधानि तु।
धेनुं सबर्दुघां चक्रुरमृतं सबरुच्यते ॥८५॥
बृहस्पतेरथाश्विभ्यां रथं दिव्यं त्रिबन्धुरम्।
इन्द्राय च हरी देवप्रहितेनाग्निनापि यत् ॥८६॥

---

[1] शां० श्रौ० सू० १०.१०.७.

एकं चमसमित्युक्ते[1] ज्येष्ठ आहेत्यचो[2] दिवि ।
उक्त्वा ततश्चतुरश्चमसान् यथोक्तं तेन हर्षिताः ॥८७॥
त्वष्टा च सविता चैव देवदेवः प्रजापतिः ।
सर्वान् देवान् समामन्त्र्य अमृतत्वं ददुश्च ते ॥८८॥
तेषामाद्यान्त्ययोर्नाम्ना दृश्यते बहुवत्स्तवः ।
तृतीयसवने तेषां तैस्तु भागः प्रकल्पितः ॥८९॥
अपिबत्सोममिन्द्रश्च तैस्तत्र सवने सह ।
तेषां स्तुतिरिदं सूक्तं त्वयमित्याष्टकं[3] परम् ॥९०॥ इति ।

**वेदभाष्येऽपि**—ऋभवो नाम सुधन्वन आङ्गिरसस्य[4] त्रयः पुत्रा ऋभुर्विभ्वा वाज इति । ते च मनुष्याः सन्तः (सुकर्मणा) देवत्वं प्राप्य कदाचित्कर्मकाले सोमपानाय प्रवृत्ताः । तान्प्रति देवैः प्रेरितोऽग्निः परस्परं समानरूपान्दृष्ट्वा स्वयमपि तदाकारं देहं धृत्वा तेषु मध्ये स्वयमपि चतुर्थः सन् पातुं प्रवृत्तः । ते च ऋभवः आगतं तं समानरूपमवलोक्य विवेक्तुमसमर्थाः परस्परमेवं सन्देहं[5] कृत्वा ज्येष्ठ आहेत्युक्तं (ऋ० १. १६१.१–५.) संवादं कृत्वा त्वष्ट्रा निर्मितम् एकं चमसं चतुर्धा कृत्वा तं सोममग्निना सह पपुः, इति (ऋ० १. १६१. १) ।

ऋष्यादि पूर्ववत् । अयमर्थः—उतापि च त्वष्टुरेतन्नामकस्य देवस्य सम्बन्धलक्षण-व्यापारः, त्यं तं नवं नूतनं चमसं सोमधारणक्षमं काष्ठपात्रविशेषं निष्कृतं निःशेषेण सम्पादितम् अकरोद् इति शेषः । लक्षणव्यापारकुशलस्य तस्य त्वष्टुः शिष्या ऋभवः, तेन निर्मितम् एकं चमसं सन्तं पुनरपि चतुरः कर्ता ज्येष्ठ आहेत्युक्तं संवादं कृत्वा चतुर्धा विभक्तान् चमसान् कृतवन्तः ।

तत्र **निरुक्तम्**—'ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः । तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन । तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दाशतयीषु सूक्तानि भवन्ति' (नि० ११. १६.) इति ।

तथा निगमाः—एकं चमसं चतुरस्कृणोतन (ऋ० १. १६१. २.),
यदा वाख्यच्चमसाञ्चतुरः कृतान् (ऋ० १.१६१.४),
एकं वि चक्र चमसं चतुर्वयम् (ऋ० ४. ३६. ४),
व्यकृणोत चमसं चतुर्धा (ऋ० ४. ३५. ३) ।

## ऋ० १. २४. १.

इमं षष्ठमनुवाकं यूपे बद्धः शुनःशेपो बन्धमोक्षार्थं ददर्श । तस्य 'कस्येति' प्रथमं सूक्तं वारुणं त्रैष्टुभं पञ्चदशर्चम् । आदौ काय्याग्नेय्यौ । तत्रानुक्रमणी—'कस्य पञ्चोनाजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातो वारुणं तु त्रैष्टुभमादौ काय्याग्नेय्यौ सावित्रस्तृचो गायत्रोऽस्यान्त्या भागी वा'[6] इति । ऋग्विधानोक्तविनियोगः—'शुनःशेपमृषि बद्धः स निरुद्धोऽथवा जपेत्' इति (१. १७. ६.)। तथा सूत्रम्—'शुनःशेपं प्रथमम् । यथा शुनःशेप आजीगर्तिर्यूपे नियुक्तो

---

[1] ऋ० १.१६१.२ [2] ऋ० ४.३३.५ [3] ऋ० १.२०. [4] सायणभाष्ये 'आङ्गिरसस्य' नास्ति । [5] सायणभाष्ये 'सन्निहते' इति पाठः, अत्रैव वाक्यानसमाप्तिः । [6] का० स० १ मण्डल २४ सूक्त, p.6.

मुमुचे। प्रथमे च सूक्ते निगदेत्'[1] इति। शुनःशेपः पित्रा यूपे बद्ध इत्यर्थं कथा 'हरिश्चन्द्रो ह वैधसः' (ऐ० ब्रा० ३३. १.) इत्यध्यायार्थोक्ता—**अनुक्रमणीभाष्यकारेणोक्ता**[2]—

तत्रेतिहासः श्रुत्युक्तः सम्यगेव प्रवर्ण्यते ।
हरिश्चन्द्रो ह वैधस इत्यादिब्राह्मणेरितः ।
राजसूये क्रतावेष शौनःशेप इति श्रुतः ॥१॥
शतभार्यो हरिश्चन्द्र ऐक्ष्वाकः पुत्रकाम्यया ।
नारदोक्तादि पुत्रार्थं वरुणात् सुतमाप्तवान् ॥२॥
जाते पुत्रे ह्यनेन त्वां यक्ष्येऽहमिति चोक्तवान् ।
वरुणस्तनये जाते निर्दशे जातदन्तके ॥३॥
च्युतदन्ते पुनर्जातदन्ते वर्मचरे[3] तथा ।
मेध्यस्थे तदवस्थोऽस्त्वाविति राज्ञा प्रतारितः ॥४॥
निर्बध्य स नृपं प्रोचे पुत्रेणाद्यैव मा यज ।
इत्युक्तो वरुणेनोचे स्वपुत्रं रोहितं नृपः ॥५॥
एनं यक्ष्ये त्वयाद्येति नेति सोऽभ्यद्रवद्वनम् ।
वनस्थो रोहितः श्रुत्वा नृपं जातमहोदरम् ॥६॥
दिदृक्षुः पञ्चवर्षेषु विप्ररूपेन्द्रवारितः ।
षष्ठेऽजीगर्तनामानं त्रिपुत्रं बाधितं क्षुधा ॥७॥
आसाद्यास्य शुनःशेपं मध्यमं जगृहे सुतम् ।
गवां शतेन पितरं पुरःस्थं दृष्टवान् सुतः ॥८॥
मया कार्यमनेन त्वं कुरु तातेति चाब्रवीत् ।
वरुणोपि नृपेणोक्तः शुनःशेपपशुं क्रतुम् ॥९॥
राजसूयं सोऽनुमेने तेनायष्ट च भूमिपः ।
तत्राभिषेचनीयेऽह्नि शुनःशेपनियोजने ॥१०॥
अन्यानावाद् गोशतार्थी त्वजीगर्तो युयोज तम् ।
पुनर्विशसनं कर्तुं पिता जग्राह गोशतम् ॥११॥
यूपे बद्धः शुनःशेपो जिघांसुं पितरं ततः ।
दृष्ट्वा चाहाहमेवान्या उपधावामि देवताः ॥१२॥
अस्तौत्कमादिमग्निं च सवितारं भगं तथा ।
वरुणं पुनरप्यग्निं विश्वान्देवानथो खलु ॥१३॥
इन्द्रं च पूर्वव्यापारसम्प्राप्तस्तुतिसुप्रियम् ।
हिरण्मयरथस्यापि स्वस्मै दातारमेव च ॥१४॥
अश्विना उषसं चापि तुष्टाभ्यामन्वितस्तदा ।
अतिप्रीतियुतैर्देवैस्तैर्यूपान्मोचितस्तदा ॥१५॥

---

[1] **शां० श्रौ० सू० १६. ११. १–३.** [2] **वेदार्थदीपिका** A.A. Macdonell's edition, p. 84. [3] **वर्मंहरे** is suggested for **वर्मचरे**

ऋत्विग्गणैः प्रार्थितोऽसावञ्जःसवमकारयत् ।
गतरोगो हरिश्चन्द्रो 'यत्र ग्रावेति सूक्ततः ॥१६॥
अञ्जःसवो राजसूये प्रयोगः पश्विष्टिदिव्यादिविहीन एकः ।
यतोऽञ्जसाभिष्टुवतेऽत्र साम्ना यच्चाञ्जसा देवतास्तं लभन्ते ॥१७॥
स पित्रा प्रार्थितस्त्यक्त्वा तातं गाधिसुतं गतः ।
पुत्रत्वेन गृहीतस्त्व विश्वामित्रेण धीमता ॥१८॥
देवरात इति प्रोक्तो देवैर्दत्तो यतः स्वयम् ।
दत्तपुत्रविधेर्योगाद्वैश्वामित्रः स कृत्रिमः ॥१९॥
आर्षानुक्रमेण चोक्तं कस्य नूनं शुनःशेपः ।
आजीगर्तिः कृत्रिमस्तु वैश्वामित्रो देवरातः ॥२०॥
इति कृत्रिमपुत्रत्वं देवरातत्वमेव च ।
अजीगर्तसुतत्वं च वैश्वामित्रत्वमेव च ॥२१॥
शुनःशेपमहर्षेस्तु सम्यगत्र प्रवर्णितम् ।
बन्धक्षयकरी पाशमोचनीया कथेरिता ॥२२॥

राजसूयेऽभिषेचनीयेऽहनि एषोऽनुवाक आख्यातव्यः । तथाहाश्वलायनसूत्रे 'संस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य' (आ० श्रौ० सू० उत्तरषट्के ३. ३.९.)। 'हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शौनःशेपमाचक्षीत' इति **ब्राह्मणम्**[1]। 'एवंतच्छौनःशेपमाख्यानं न हास्मिन्नल्पं च नैनः परिशिष्यते' इति (ऐ० ब्रा० ३३. ६.) । शुनःशेपो यूपे बद्धः प्रजापतिं त्रिष्टुभा स्तौति । तथाऽऽम्नातम्—'स प्रजापतिमेव प्रथमम्' इति (ऐ० ब्रा० ३३. ४.) ।

अयमर्थः-वयं शुनःशेपनामका अमृतानां देवानां मध्ये कतमस्य किञ्जातीयस्य देवस्य चारु मनोहरं नाम मनामहे उच्चारयामः ? को देवः नः अस्मान् मुमूर्षून् मह्यै महत्यै अदितये पृथिव्यै पुनर्दात् दद्यात् ? 'अदितिः इळा' इति तन्नामसु पाठात् (निघण्टु १. १)। तेन दानेनाहममृतः सन् पितरं मातरं च दृशेयं पश्येयम् । मनामहे इति पादादित्वान्निघाताभावः । दृशेयमिति मातरं चेत्यत्र 'च'शब्दाद् दृशेयमित्यनुषज्यते अतस्तदपेक्षया एषा तिङ्विभक्तिः प्रथमा 'चवायोगे प्रथमा' (पा० ८.१.५९.) इति न निहन्यते । पुनर्दादिति 'वारपुनःपुनर्' (ऋ० प्रा० १.१०३) इति रेफः ।

## ऋ० १. ३०. १६.

देवेन्द्रः परमैश्वर्यसम्पूर्णोऽपि शुनःशेपेन 'यच्चिद्धि,' (ऋ० १. २५; १.२८.५.) 'सत्ये च'[3] इति सूक्ताभ्यां अत्नेन स्तुतः स ईप्सितं सौवर्णं सुवर्णमयं रथं तस्मै शुनःशेपाय ददौ दत्तवान् । तथा सर्वोऽपि स्तुतिप्रियो भवतीत्यर्थः । शुन इव शेपो यस्येति समासे 'शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम्' (पा० वा० ६.३.२१) इति षष्ठ्या अलुक् ।

तथा बृहद्देवता ( ३. १०३)—
स्तूयमानः शश्वदिति प्रीतस्तु मनसा ददौ ।
शुनःशेपाय दिव्यं तु रथं सर्वं हिरण्मयम् ॥१०३॥

---

[1] ऋ० १. २८. [2] Cf. तदेतत्....शौनःशेपमाख्यानम्—तद्धोता राज्ञेऽभिषिक्तायाचष्टे, हिरण्यकशिपावासीन आचष्टे । AB. 33.6. [3] Cf. RV. I.29., BD. ३. १०२.

तत्प्रकारः यूपे बद्धः शुनःशेपः कस्येत्यनुवाकेन क्रमेण एकया प्रजापतिम् एकयाग्निं तृचेन सवितारम् एकत्रिंशता वरुणं पुनर्द्वाविंशत्या अग्निम् एकया विश्वान् देवान् द्वाविंशत्येन्द्रं च स्तुत्वा त्रयोविंशत्या 'शश्वदिन्द्र' इत्यनया तुष्टाव इन्द्रस्तस्मै सौवर्णं रथं प्रादादित्युच्यते ।

शुनःशेप इन्द्रं त्रिष्टुभा स्तौति । इन्द्रः शश्वत्निरन्तरम् एवं धनानि वैरिसम्बन्धीनि जिगाय जितवान् । कैः ? अश्वैरिति शेषः । कीदृशैः ? पोप्रुथद्भिः घासभक्षणानन्तरभाविनम् ओष्ठशब्दं कुर्वद्भिः । पुनः कीदृशैः ? नानदद्भिः नादम् आस्यगतं हेषादिशब्दं कुर्वद्भिः । पुनः कीदृशैः ? श्वाश्वसद्भिः पुनःपुनर्भृशं वा श्वसद्भिः । सनिता दाता । षणु दाने । स इन्द्रः नः अस्माकं सनये संभजनार्थं हिरण्यरथं सुवर्णेन निर्मितं रथमदात् दत्तवान् । किंलक्षणः ? दंसनावान् कर्मवान् । स नोऽदादिति 'अदादयर्णो०' (ऋ० प्रा० २. ४०) इत्यभिनिहितसन्धिः । स नो द्विरुक्तिरादरार्था । 'अभ्यासे भूयांसमर्थं मन्यन्ते' इति यास्कः (नि० १०. ४२) ।

## ऋ० १. ३२. ११.

हिरण्यस्तूप इन्द्रं स्तौति त्रिष्टुभा । 'अथापि स्तुतिरेव भवति नाशीर्वादः—इन्द्रस्य नु वीर्याणि प्र वोचम्' (नि० ७. ३) इति यास्केन स्तुतिरुक्ता । ज्योतिष्टोमे निष्केवल्ये विनियुक्तं महाव्रते च । 'इन्द्रस्य नु वीर्याणीति (ऋ० १. ३२) रथन्तरपृष्ठे'[1] इति सूत्रितम् ।

अयमर्थः-दासः विश्वोपक्षयहेतुः वृत्रः पतिः स्वामी यासां ताः । दसु उपक्षये । अहिगोपाः अहिर्गोपाः वृत्रो रक्षको यासां ताः । गोपनं नाम यथा स्वच्छन्देन न प्रविशन्ति तथा निरोधनम् । एवंविधा आपः निरुद्धा अतिष्ठन् स्थिताः । केनेव ? पणिना गाव इव । यथा पणिना असुरेण पूर्वं गा अपहृत्य बिले स्थापयित्वा बिलद्वारं निरुद्धं तथाऽनेनापां द्वारं निरुद्धमित्यर्थः । यद् यदा अपां यद् बिलं प्रवहणद्वारम् अपिहितं वृत्रेण निरुद्धम् आसीत् तदा इन्द्रः वृत्रं विधवधात् जघन्वान् । हत्वा अपववार अपवृतमकरोत् । वृत्रकृतमपां निरोधं परिहृतवान् ।

'विवृद्धया शरीरस्य स्रोतांसि निवारयाञ्चकार । तस्मिन्हते प्रसस्यन्दिर आपः' (नि० २. १६) इति । 'दासपत्नीर्दासाधिपत्न्यः' इति यास्कः (नि० २. १७) । जघन्वाँ—'नकार आकारोपध०' (ऋ० प्रा० ४. ६५) इति नलोपः । इन्द्रस्य वृत्रवधो बहुधा प्रपञ्चितः—

अहन्वृत्रं वृत्रतरं (ऋ० १. ३२. ५.),
वृत्रं जघानाशन्येव वृक्षम् (ऋ० २. १४. २.),
जघान वृत्रं स्वधितिर्वनेव (ऋ० १०. ८९. ७.) इत्येवमादयः ।

## ऋ० १. ३३. ५.

हिरण्यस्तूपस्त्रिष्टुभा इन्द्रं स्तौति । आभिप्लविके पञ्चमे विनियुक्तम् । 'एतायामोप गव्यन्त इन्द्रमिति (ऋ० १. ३३.) निष्केवल्यम्[2]' इति ।

हे हरिवः ! हरिनामकाश्वयुक्तेन्द्र ! हे स्थातः ! स्थितियुक्त ! युद्धे पलायनरहित ! उग्र ! शौर्ययुक्त ! यद् यदा दिवोऽन्तरिक्षाद् रोदस्योः द्यावापृथिव्योः सकाशाच्च अव्रतान् व्रतमिति ज्योतिष्टोमादिकं कर्म तद्रहितान् निः प्राधमः निःशेषेण धमनं वधं कृतवान् असि । 'धमति' इति वधकर्मा (निघण्टु २. १९) । तदानीं ते अयज्वानः स्वयं यागरहिताः प्रत्युत यज्वभिः सह

---

[1] शां० श्रौ० सू० ७.२०.८. [2] Cf. शां० श्रौ० सू० ११.८.५. अत्र सूत्रे 'उप गव्यन्त इन्द्रम्' इत्येतावानंशो नोपलभ्यते ।

यागानुष्ठानकर्तृभिः सह स्पर्धमानाः शीर्षा शीर्षाणि स्वकीयानि शिरांसि पराववृजुः तत्यजुः। वृजी वर्जने। 'असंयोगाल्लिट् कित्' (पा० १. २. ५) इति कित्त्वाद् गुणाभावः। त्वया हताः सन्तः शीर्षाणि त्यक्त्वा मृता इत्यर्थः। अतो यज्वनो निन्दां न कुर्यादिति प्रसिद्धम्। शीर्षा— बहुवचनस्य डादेशः (Cf. पा० ७. १. ३९)। ववृजुस्त इति विसर्जनीयस्य षत्वे प्राप्ते 'स्वा त इत्यनुदात्तयोः' (ऋ० प्रा० ५. ३२) इत्यनुदात्तत्वाभावान्न। स्वातः 'स्वातर्जरितर्' (ऋ० प्रा० १. १०१) इति रेफः।

ऋ० १. ३५. ६.

अत्राख्यानम्—देवकर्तृकत्वे यागे सविता ब्रह्मत्वेनावस्थितः। तदानीं कस्याञ्चि-दिष्टौ अध्वर्यवः तस्मै सवित्रे ब्रह्मणे प्राशित्रेण कर्मपुरोडाशभागं दत्तवन्तः। तच्च प्राशित्रं हस्ते सवित्रा अमन्त्रेण गृहीतं सत् तदीयं पाणिं प्रचिच्छेद। ततः प्राशित्रस्य दातारोऽध्वर्यवः सुवर्णमयं पाणिं निर्माय प्रक्षिप्तवन्तः। तद्भगाय दत्तवन्तः। तस्याक्षिणी निर्जघान। ईक्षणाभावाद्भगो-ऽन्धोऽभूत्। तत्पूष्णे दत्तवन्तः। तस्य दन्तलग्नाद् दन्तान्परोवाप। तस्मादाहुरदन्तकः पूषेति। तत्र कौषीतकिब्राह्मणम्—'अथ यत्र ह तद्देवा यज्ञमतन्वत तत्सवित्रे प्राशित्रं परिजह्रुस्तस्य पाणी प्रचिच्छेद तस्मै हिरण्मयौ प्रतिदधुस्तस्माद्धिरण्यपाणिरिति स्तुतः'[1]। इति। तथाह यास्कः—'अन्धो भग इत्याहुरनुत्सृप्त[2]' इति (नि० १२. १४) 'अदन्तकः पूषेति[3] च ब्राह्मण-मिति' (नि० ६. ३१)। अतो देवैः शुभाशुभानि कर्माणि भुक्तानीति वर्णितम्।

हिरण्यस्तूपः सवितारं जगत्या तुष्टाव। अयमर्थः—हिरण्यपाणिः सुवर्णमयहस्तः। यद्वा यजमानेभ्यो दातुं हिरण्यं हस्ते धृतवान्। सविता सर्वस्य प्रसविता देवः। विचर्षणिः विविध-दर्शनयुक्तः। 'विचर्षणिः' (निघण्टु ३. ११) इति तन्नामसु पाठात् सविता देवः पश्यतीत्यर्थः। उभे द्यावापृथिवी अन्तः उभयोर्लोकयोर्मध्ये ईयते गच्छति। अमीवां रोगादिबाधाम् अपबाधते सम्यङ् निराकरोति। तथा वेति सूर्यं सूर्यं गच्छति। वी गतौ। यद्यपि सवितृसूर्ययोरेकदेवतात्वं तथापि मूर्तिभेदेन गन्तृगन्तव्यभावः। कृष्णेन तमसः कर्षकेण निवर्तकेन रजसा। 'ज्योती रज उच्यते' (नि० ४. १९)। द्यामाकाशम् अभ्यृणोति। ऋणु गतौ। तनादित्वादुः। सर्वतो व्याप्नोति। द्यौश्च पृथिवी च द्यावापृथिवी। 'दिवसश्च पृथिव्याम्' (पा० ६. ३. ३०) इति चशब्दाद् द्यावादेशः। द्यावापृथिवी अन्तः—'षष्ठादयश्च द्विवचोऽन्तभाजः०' (ऋ० प्रा० १. ७१) इति प्रकृतिभावः। 'अन्तोदात्तमन्तः' इति (ऋ० प्रा० १. ७८.) अन्तःशब्दाद्विफितः। एवं सवितुर्भाग्यवत्त्वं सिद्धम्।

ऋ० १. ४५. ३.

तृतीयेऽह्नि आज्ये विनियुक्तम्। 'त्वमग्ने वसूनिति (ऋ० १. ४५) समूह्ळे'[4] इति सूत्रे। प्रस्कण्वोऽनुष्टुभाग्निं तुष्टाव। हे महिव्रत! प्रभूतकर्मन्! हे जातवेदः! अग्ने! प्रस्कण्वस्य कण्वपुत्रस्य मम हवम् आह्वानं श्रुधि शृणु। 'श्रुशृणुपॄकृवृभ्य०' (पा० ६. ४. १०२) इति हेर्धिः।

---

[1] A fragment of कौ० ब्रा० 6. 13.

[2] Nirukta reads अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते। प्राशित्रमस्याक्षिणी निर्जघान। इति च ब्राह्मणम्।

[3] कौ० ब्रा० ६.१३.    [4] शां० श्रौ० सू० १०. ४. ३.

तत्र चत्वारो दृष्टान्ताः। प्रियमेधात्रिविरूपाङ्गिरोनामका ब्रह्मपुत्रा एतेषामाह्वानं यथा शृणोषि। तद्वन्मम शृणु इत्यन्वयः। 'प्रियमेधः, प्रिया अस्य मेधा' इति यास्कः (नि० ३. १७)। श्रुधी हवं—"षष्ठं चाष्टाक्षरे०" (ऋ० प्रा० ८. ३६) इति दीर्घः।

ऋ० १. ५१. १.

सव्यो जगत्या इन्द्रं तुष्टाव। प्रथमे होतुः पर्याये विनियुक्तम्। 'अभि त्यं मेषमिति (ऋ० १. ५१) जागतम्[1]' इति सूत्रम्। ऋचोऽयमर्थः—त्यं तं प्रसिद्धम् इन्द्रम्। त्यच्छब्दश्छन्दसि तदर्थः। उद्वहन्ति तमितिवत्। हे ऋत्विजः! गीर्भिः स्तुतिभिः मदत हर्षं प्रापयत। मदी हर्षे। कीदृशम्-मेषम्? मेधातिथेर्मेषम्। कण्वपुत्रं मेधातिथिम् ऋषिम् इन्द्र आगत्य एवमवोचत् मह्यं देहीति सोमम्। त्वं मेषरूपं यदि करोषि तर्हि सोमं ददामिति। ततो मेषरूपमास्थाय इन्द्रस्तदीयं सोमं पपौ। स ऋषिस्तं मेष इत्यवोचत्। अत इदानीमपि मेष इन्द्रोऽभिधीयते। 'मेधातिथेर्मेष' इति[2] सुब्रह्मण्यायाम्। 'मेधातिथिं हि काण्वायनिं मेषो भूत्वा जहार'[3] इति मेषत्वं बहुभिः प्रतिपादितम्। पुनः कीदृशम्? पुरुहूतं बहुभिर्यजमानैराहूतम्। पुनः कीदृशम्? ऋग्मियम्। ऋग्भिर्मीयते शब्द्यत इति ऋग्मीः। 'अचिश्नुधातुभ्रुवां०' (पा० ६. ४. ७७.) इतीयङ्। पुनः कीदृशम्? वस्वो अर्णवम्। वस्वो धनस्य अर्णवं वासभूतम्। यस्य इन्द्रस्य कर्माणि मानुषा मनुष्याणां हितानि भुजे भोगाय विचरन्ति विशेषेण प्रवर्तन्ते। तत्र दृष्टान्तः। द्यावो न। अयं न उपमार्थीयः। 'उपमार्थीय उपरिष्टादुपचारस्तस्य' इति यास्कः (नि० १. ४.)। अश्वं न त्वेतिवत्। यथा द्यावः सूर्यस्य रश्मयः सर्वेषां हितकरा भवन्ति। तं मंहिष्ठम् अतिशयेन मंहिता मंहिष्ठस्तम्। 'तुश्छन्दसि' इति (पा० ५. ३. ५९.) इष्ठन् प्रत्ययः। विप्रं मेधाविनम्। 'विप्रो विप्रः' (निघण्टु ३. १५) इति तन्नाम। अर्चत पूजयत हे ऋत्विजः! अर्च पूजायाम्। मदत—'दधिम मदत०' (ऋ० प्रा० ८. १५.) इति दीर्घः।

ऋ० १. ५१. १३.

इन्द्रः वृचयां पुत्रीम् आत्मजां सोमाकाङ्क्षया सुन्वते सोमाभिषवं कुर्वते कक्षीवते ऋषये वृचयाख्यामर्भाम् अल्पाम्। दभ्रमर्भकमित्यल्पस्येति यास्कः (निघण्टु ३. २)। युवतिमित्यर्थः। एवंविधां पुत्रीमददा अदाः। तथा। सुक्रतो! सुकर्मन्! सुप्रज्ञ! वा। 'क्रतुः' कर्मनामसु पठितः (निघण्टु २. १), प्रज्ञानामसु वा (निघण्टु ३. ६)। त्वं वृषणश्वस्य राज्ञो मेनाऽभवः। मेना नाम कन्याऽभूः। तथा शाट्यायनिभिः सुब्रह्मण्यायां मन्त्रैकदेशे ब्राह्मणमेवमाम्नायते 'वृषणश्वस्य मेने[4]' इति। 'वृषणश्वस्य मेना भूत्वा मघवा कुलमुवासेति तां च प्राप्तयौवनां स्वयमेवेन्द्रश्चकमे'[5] इति। 'वृषणश्वस्य मेना दुहिताऽऽस तामिन्द्रश्चकम' इति ताण्ड्ये[6] स्पष्टमुक्तम्। अत उक्तानि कर्माणि ते त्वदीयानि तानि विश्वेत् सर्वाण्येव सवनेषु यज्ञेषु प्रवाच्या प्रकर्षेण वक्तव्यानि। स्तुतिभिर्वक्तव्यानीत्यर्थः।

---

[1] शां० श्रौ० सू० ६.७.४. [2] ṢVB.I.I. [3] ṢVB.I.I. reads मेधातिथि ह काण्वायनं मेषो भूत्वा जहार। [4] श० ब्रा० ३.३.४.१८; तै० ब्रा० १.१२.३; B. Ghosh, op.cit. p.6. [5] Quotation is untraced in the Tāṇḍya. Cf. ṢVB.I.I. 'वृषणश्वस्य मेन इति, वृषणश्वस्य ह मेनस्य मेनका नाम दुहिताऽऽस तां ह इन्द्रश्चकमे' इति।

ऋ० १.५३.१.

सव्यो जगत्या इन्द्रं तुष्टाव। ब्राह्मणाच्छंसिनः प्रथमे पर्याये विनियुक्तम्। 'वयमु त्वा तदिदर्थाः' इति खण्डे 'न्यू षु वाचमिति आगतम्' इति सूत्रितम् (शां० श्रौ० सू० ९.६.४)।

प्रथमं सव्यस्य इन्द्रतुल्यत्वं प्रतिपाद्यते। अङ्गिरा इन्द्रतुल्यं पुत्रमात्मनः कामयमानो देवता उपासाञ्चक्रे। तस्य सव्याख्य इन्द्रस्यः स्वयं जज्ञे, जगति मत्तुल्यो मा भूदिति बुद्ध्या। तथा चानुक्रमणी—"अङ्गिरा इन्द्रतुल्यं पुत्रमिच्छन्नभ्यध्यायत्[1]" इति। अयमर्थः—महे महते इन्द्राय सुवानं शोभनां स्तुतिं नि प्रभरामहे नितरां प्रयुञ्ज्महे। यतः विवस्वतः परिचरतो यजमानस्य सदने यज्ञगृहे इन्द्राय गिरः स्तुतयः क्रियन्त इति शेषः। हि यस्मात्स इन्द्रः नूचित् क्षिप्रमेव पुराणं नवं च। रत्नं रमणीयं धनम् असुराणामविदत् विन्दति। तत्र दृष्टान्तः। सस-तामिव यथा स्वपतां पुरुषाणां चोरः धनं लभते तद्वत्। अतोऽस्मभ्यं धनं दातुं शक्त इति भावः। द्रविणोदेषु धनदातृषु पुरुषेषु दुष्टुतिरसमीचीना स्तुतिः न शस्यते नाभिधीयते। अतः सुवानं प्रभरामहे। न्यू३षु इति। 'इकारयोश्च प्रश्लेषे' क्षैप्रातिश्लिष्टप्रसन्धित्वात् (ऋ० प्रा० ३. १३) स्वरितं कृत्वा 'जात्योऽभिनिहतः' (ऋ० प्रा० ३. ३४) इति कम्पः। उकारो वज्रस्य सुषा इति उकारस्य दीर्घे 'स्ववह्वक्षरेण' इति (ऋ० प्रा० ५. ५) षत्वम्। नूचिदिति अद्यादित्वात्पादादौ दीर्घः (Cf. ऋ० प्रा० ७. ३२)। 'नूचिदिति निपातः पुराणनवयोर्नूचेति च' इति यास्कः (नि० ४.१७)। न दुष्टुतिः—'अन्यपूर्वः' इति षत्वम् (ऋ० प्रा० ५. २१)।

ऋ० १.५४.६.

सव्यो जगत्या इन्द्रं तुष्टाव। अच्छावाकस्य प्रथमे पर्याये विनियुक्तम्। 'इन्द्राय मद्वने' इति खण्डे 'मा नो अस्मिन्निति (ऋ० १. ५४. १) जागतम्' इति सूत्रम् (शां० श्रौ० सू० ९.१०.३)।

अयमर्थः—हे इन्द्र! त्वं नर्यं नरहितं त्वं तुर्वशं, यदुं, वय्यकुलजं तुर्वीतिम् आविथ ररक्षिथ। तथा नर्यादीनां चतुर्णां राज्ञां रथम् एतशम् अश्वम्, एतग्व एतश इत्यश्वनाम (निघण्टु १.१४)। कृत्व्ये कर्तव्ये इति वर्णविकारः पृषोदरादित्वात् (Cf. पा० ६.३.१०९)। धने सङ्ग्रामे आविथ। हे शतक्रतो! बहुकर्मन्! तथा शम्बरस्य नवतिं नवोत्तरनवतिं नव पुरो नवतिं चेति उक्तसंख्याकाः पुरः पुराणि दम्भयः हिंसितवान्। 'दभ्नोति' इति वधकर्मसु पाठात् (निघण्टु २.१९)। एतेषां सर्वदेवस्तुतौ फलमुक्तम्—

अग्निना तुर्वशं यदुं (ऋ० १.३६.१८) इत्यग्निस्तुतौ।

याभिः कुत्सं श्रुतर्यं० (ऋ० १.११२.९)

याभिः कुत्समार्जुनेयं० (ऋ० १.११२.२३) इत्यश्विनोः स्तुतौ तुर्वीतिरक्षणमुक्तम्।

प्रेमन्वः स्यन्त्रिःश्रोणो भूत् (ऋ० ८.७९.२) इति सोमस्तुतौ वय्यश्रोणरक्षणमुक्तम्। सर्वदेवैरेते निर्मलाः पालिता इति, देवा रक्षन्तीत्युक्तम्।

ऋ० १.६१.१५.

नोधास्त्रिष्टुभा इन्द्रं तुष्टाव। उत्तमे छन्दोमे निष्केवल्ये विनियुक्तम्। 'अष्टाचत्वारिंशत्' इति खण्डे सूत्रितम्—'आ सत्यो यातु० (ऋ० ४. १६) अस्मा इदु' (ऋ० १. ६१) इति (शां० श्रौ० सू० १०.११.७.)। अथोत्तरार्धर्चस्येतिहासः—स्वश्वो नाम कश्चिद्राजा। स

---

[1] का० स० १ म० ५१ pp.7,8.

स पुत्रकामः सूर्यमुपासाञ्चक्रे। तस्य स सूर्यः पुत्ररूपी स्वयमेव तत्रोत्पन्नः सन् एतशेन महर्षिणा सार्द्धं युद्धं चकार। तदानीं स ऋषिः युद्धे जयार्थमिन्द्रं तुष्टाव। स इन्द्रस्तेन स्तूयमानः शश्वत् पुत्रस्य सूर्यसम्बन्धिनः सङ्ग्रामे एनम् एतशम् अपालयदिति।

अयमर्थः—यः इन्द्रः एक एव सन् भूरेर्बहुविधस्य धनस्येशानः स्वामी एषां स्तोतॄणां सम्बन्धि यत् स्तोत्रं वन्वे ययाचे। वनु याचने। इत्येतत् प्रसिद्धं स्तोत्रमस्मै इन्द्राय अस्माभिरनुवाचि अकारीत्यर्थः। 'बहुलं छन्दस्यमाङ्०' (पा० ६.४.७५.) इति अडभावः। अयमिन्द्रः सूर्ये पस्पृधाने स्पर्धायमाने सुष्वि सोमानामभिषोतारम्। षुञ् अभिषवे। क्विक्निप्रत्ययस्यं छन्दसि सदादिभ्यो दर्शनाद् इति वार्तिकेन क्विन् (Cf. पा० ३.२.१७१. वा०)। एतशम् ऋषिं प्रावत् प्यरक्षत्। कीदृशे सूर्ये? सौवश्व्ये स्वश्वपुत्रे। सुष्विम्—'युष्मान्तस्थादन्तमूलीयपूर्वः' (ऋ० प्रा० ५.२०) इति दन्तमूलीयपूर्वत्वात्षत्वम्॥

तत्रेतिहासः—सरमा नाम देवशुनी। पणिभिर्गोष्वपहृतासु तदन्वेषणाय तां सरमाम् इन्द्रः प्राहैषीत्। यथा लोके व्याधो वनान्तर्गतमृगान्वेषणाय श्वानं विसृजति तद्वत्। सा सरमा एवमवोचत्। हे इन्द्र! अस्मदीयाय शिशवे तद्गवां सम्बन्धि यदि क्षीराद्यन्नं प्रयच्छसि तर्हि गमिष्यामीति। स तथेत्यब्रवीत्। तथा शाट्यायने—'अन्नादां ते प्रजां करोमीति यदि नो गा अन्वविन्द इति। ततो गत्वा गवां स्थानमज्ञासीत्। ज्ञात्वा च तस्मै निवेदयति। अथ निवेदितासु गोषु तानसुरान्हत्वा गाः स इन्द्रोऽलभत इति—

तदर्थेयमृक् १.६२.३.

किमिच्छन्तीति सूक्ते (ऋ० १०. १०८.) प्रोक्तः सरमासम्बन्धीतिहासो बृहद्देवतायामेवं वर्णितोऽस्ति—

बृहद्देवता (८. २४–२६)—

असुराः पणयो नाम रसापारनिवासिनः।
गास्तेऽपजह्रुरिन्द्रस्य न्यगूहंश्च प्रयत्नतः॥२४॥

बृहस्पतिस्तथाऽपश्यद् दृष्ट्वेन्द्राय शशंस च।
प्राहिणोत्तत्र दूत्येऽथ सरमां पाकशासनः॥२५॥

किमित्यत्रायुआभिस्तां पप्रच्छुः पणयोऽसुराः।
कुतः कस्यासि कल्याणि! किं वा कार्यमिहास्ति ते?॥२६॥

अथाब्रवीत्तान्सरमा दूत्यैन्द्री विचराम्यहम्।
युष्मान्व्रजं चान्विष्यन्ती गावश्चैवेन्द्रस्य पृच्छतः॥२७॥

विदित्वेन्द्रस्य दूतीं तामसुराः पापचेतसः।
ऊचुर्मा सरमे! गास्त्वमिहास्माकं स्वसा भव॥२८॥

विभजामो गवां भागं माहिता ह्र ततः पुनः।
सूक्तस्यास्यान्त्वया चर्चा युष्माभिस्त्वेव सर्वशः॥२९॥

---

[1] Cf. B. Ghosh, op. cit. pp. 12-13.

साऽब्रवीन्नाहमिच्छामि स्वसृत्वं वा धनानि वा ।
पिबेयं तु पयस्तासां गवां यास्ता निगूहथ ॥३०॥

असुरास्तां तथेत्युक्त्वा तदाजह्रुः पयस्ततः ।
सा स्वभावाच्च लौल्याच्च पीत्वा तत्तत्र आसुरम् ॥३१॥

परं संवननं हृद्यं बलपुष्टिकरं ततः ।
शतयोजनविस्तारामतरत्तां रसां पुनः ॥३२॥

यस्याः पारे परे तेषां पुरमासीत्सुदुर्जयम् ।
पप्रच्छेन्द्रस्च सरमां कच्चिद् गा दृष्टवत्यसि ? ॥३३॥

सा नेति प्रत्युवाचेन्द्रं प्रभावादसुरस्य तु ।
तां जघान पदा क्रुद्ध उद्गिरन्तीं पयस्ततः ॥३४॥

जगाम सा भयोद्विग्ना पुनरेव पणीन्प्रति ।
पदानुसारिपद्धत्या रथेन हरिवाहनः ॥३५॥

गत्वा जघान च पणीन् गाश्च ताः पुनराहरत् ॥ इति ।

नोधा इन्द्रं तुष्टाव । याचस्तोमे विनियोगः ।

ऋचोऽयमर्थः—इन्द्रस्याङ्गिरसाम् ऋषीणां च इष्टौ प्रेषणे सति सरमा देवशुनी तनयाय स्वपुत्राय । 'तोकं तनयः' (निघण्टु २.२) अपत्यनामसु पाठात् । धासिम् 'अन्नं क्षुद् धासिः' (निघण्टु २.७) अन्ननामसु पाठात् । विदत् अविन्दत् । विदॢ लाभे–लृदित्त्वाल्लुङि अङ् (Cf. पा० ३.१.५५) 'बहुलं छन्दस्यमाङ्०' (पा० ६.४.७५) इत्यडभावः । बृहस्पतिः तया गासु निवेदितासु अद्रिं पर्वतं भिनत् अभिन्दत्—भित्त्वा गाः विदत् अविन्दत् । ततो नरो नेतारो देवाः उस्रियाभिः । 'उस्रिया' इति गोनामेति यास्कः (निघण्टु २.११.) । आभिः समं सह वावशन्त भृशं हर्षशब्दमकुर्वन् । वाशृ शब्दे । बृहस्पतिः–'तद्बृहतोः०' (पा० वा० ६.१.१५७.) इति सुट् । 'उभे वनस्पत्यादिषु युगपत्' (पा० ६.२.१४०) इति प्रकृतिस्वरत्वम् ।

ऋ० १.८४.१३.

तत्रेतिहासः—आथर्वणस्य दधीचो जीवतो दर्शनेनासुराः पराबभूवुः । अथ तस्मिन्स्वर्गते असुरैः परिपूर्णा पृथिव्यभवत् । अथेन्द्रस्तैरसुरैः सह योद्धुमशक्नुवंस्तमृषिमन्विच्छन् स्वर्गं गत इति शुश्राव । अथ तत्रत्यान् पप्रच्छ नेह किमस्य किञ्चित्परिशिष्टमङ्गमस्तीति । तस्मै अवोचद् अस्त्येतदाश्वं शीर्षं—येन शिरसा अश्विभ्यां मधुविद्यां प्राब्रवीत् । तत्तु न विद्मो यत्राभवदिति । पुनरिन्द्रोऽब्रवीत् तदन्विच्छतेति । तद्धान्वैषिषुः तच्छर्यणावत्यनुविद्याजह्रुः । शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यन्दते तस्य शिरसोऽस्थिभिरिन्द्रोऽसुराञ्जघानेतीममर्थमनयोत्तरया च ऋचाऽऽह । गोतमो गायत्र्येन्द्रं स्तौति । षोडश्यां विनियोगः । 'षोडशिनः' इति खण्डे 'इन्द्रो दधीच०' (शां० श्रौ० सू० ६.६.११) इति सूत्रितम् ।

अस्या ऋचोऽयमर्थः—अस्थभिः । 'छन्दस्यपि दृश्यते' (पा० ७.१.७६) इत्यनजादावप्यस्थिशब्दस्यानङादेशः । स चोदात्तः । दधीचोऽश्वशिरसः । इन्द्रः । अप्रतिष्कुतः परैरप्रतिशब्दितः प्रतिकूलशब्दरहितः । नवतीर्नव । नवसंख्याका नवतीः । दशोत्तराष्टशतसंख्याकाः ।

वृत्राण्यावरकाण्यसुरजातानि। जघान हतवान्। अप्रतिष्कुत इति 'अन्यपूर्वः' (ऋ० प्रा० ५.२१) इति षत्वम्।

एषाऽपरा—

ऋ० १. ८४. १५.

गायत्री छन्दः। दधीच ऋषिः। इन्द्रो देवता। पर्वतेषु पर्ववत्सु गिरिष्वपश्रितम-पगत्य स्थितम्। अश्वस्य अश्वसम्बन्धि यच्छिरः दधीच इच्छन् इन्द्रो वर्तते। इष इच्छायां तुदा-दित्वाच्छः (Cf. पा० ३.१.७७)। शर्यणावति एतत्संज्ञके सरसि तच्छिरोऽविदद् अविन्दत्। इत्यमुना मृतेनापि दधीचा इन्द्रः सुखीकृत इत्यर्थः। शर्यणावति—शर्यणा नाम देशास्तेषामदूरभवं सरः शर्यणावत्। मध्वादिषु शर्यणाशब्दस्य पाठात्। 'मध्वादिभ्यश्च' (पा० ४.२.८६) इति चातुरर्थिको मतुप्। 'संज्ञायाम्' (पा० ८.२.११) इति मतुपो वत्वम्। 'मतौ बह्वचोऽनजिरा-दीनाम्', (पा० ६.३.११९.) इति दीर्घः।

ऋ० १. ८५. १०.

गोतमस्त्रिष्टुभा मरुतं तुष्टाव। चतुर्थेऽहन्याग्निमारुते विनियुक्तम्। 'होताऽजनिष्टे-त्याज्यं'० इति खण्डे सूत्रितम्—'प्र ये शुम्भन्ते (ऋ० १.८५) जनस्य गोपा (ऋ० ५.११) इति' (शां० श्रौ० सू० ११.७.१२)। तत्रेतिहासः—गोतम ऋषिः पिपासया पीडितः सन् मरुतः उदकं ययाचे। तदनन्तरं मरुतो दूरस्थं कूपमुद्धृत्य यत्र स गोतम ऋषिस्तिष्ठति तां दिशं नीत्वा ऋषि-समीप (समीपे कूप) मवस्थाप्य तत्पार्श्वे आहावं च कृत्वा तस्मिन्नाहावे कूपमुत्सिच्य तमृषि तेनोदकेन तर्पयाञ्चक्रुः। अयमर्थोऽनया उत्तरया च प्रतिपाद्यते।

अयमर्थः—हे मरुतः! अवतं कूपम्। 'अवतः' इति कूपनाम (निघण्टु ३.२३)। ओजसा बलेन ऊर्ध्वम् उपरि नुनुद्रे प्रेरितवन्तः। 'णुद प्रेरणे'। 'इरयो रे' (पा० ६.४.७६) इति रेआदेशः। उत्खातवन्तः। एवं कूपमुत्खाय ऋषेराश्रमं प्रति नयन्तो मरुतः मार्गमध्ये दद्हाणं प्रवृद्धं प्रवृद्धगतिनिरोधकम्। 'दृह दृहि वृद्धौ'—'लिटः कानच्' (पा० ३.२.१०६.)। पर्वतं शिलोच्चयं चिद् अपि बिबिभिदुः। विशेषेण बभञ्जुः। 'छन्दसि परेऽपि' (पा० १.४.८१) इति परप्रयोगः। तथा सुदानवः शोभनदानास्ते मरुतः। वाणम्। वाणः पविः शब्दनाम (निघण्टु १.११)। शततन्त्रीभिर्युक्तं वीणाविशेषं धमन्तो वादयन्तः। सोमस्य मदे सोमपानेन हर्षे सति रण्यानि रमणीयानि स्तुत्यानि धनानि चक्रिरे स्तोतृभ्यः कुर्वन्ति। नुनुद्रेऽवतम्—'यकाराद्यक्षरं परं वकाराद्यपि वा' (ऋ० प्रा० २.३५) इत्यभिहितसन्धिः। दादृहाणम्—अाक्षयादित्वाद्दीर्घः (Cf. ऋ० प्रा० ६.३१,३२.)।

एषाऽपरा—

ऋ० १. ८५. ११.

ऋष्यादि पूर्ववत्। ऋचोऽयमर्थः—मरुतोऽवतमुद्धृत्य तं कूपं यस्यां दिशि ऋषिर्वसति तया दिशा जिह्मं वक्रं तिर्यञ्चं नुनुद्रे प्रेरितवन्तः। एवं कूपं नीत्वा ऋष्याश्रमेऽवस्थाप्य तृष्णजे तृषिताय गोतमाय ऋषये तदर्थम् उत्सं जलप्रवाहं कूपादुद्धृत्य असिञ्चन् आहावे सेच-नमकुर्वन्। एवं कृत्वा ईमेनं स्तोतारम् ऋषिं चित्रभानवः विचित्रदीप्तयः ते मरुतः अवसा ईदृशेन रक्षणेन सह आगच्छन्ति। तत्समीपं प्राप्नुवन्ति। प्राप्य च विप्रस्य मेधाविनो गोत-मस्य काममभिलाषं धामभिरायुधो धारकैः उदकैस्तर्पयन्त अतर्पयन्।

ऋ० १. ९७. १.

तत्रेतिहासः—दीर्घजिह्वी नाम राक्षसी सर्वान् यज्ञान् बबाधे। एतां हन्तुमिन्द्रोऽशक्तः सन् सर्वस्य मित्रभूतं कुत्समब्रवीत्। एषा हन्तव्येति। स चावधीत्। तं वागभ्यवदद् अनुचितं त्वयाऽऽचरितम्, यस्त्वं सर्वेषां मित्रभूतः सन् क्रूरमकार्षीरिति। स ऋषिः शोकं प्राप्नोत्। स ऋषिः 'अप नः' (ऋ० १. ९७.) इत्यनेन सूक्तेनाग्निं स्तुत्वा शोकमपागमयत्। 'सौमित्रं भवति, दीर्घजिह्वी वा इदं रक्षो यज्ञहा यज्ञियानवलिहत्यचरत्तामिन्द्रः कयाचन मायया हन्तुं नाशंसत' इत्यादि छान्दोग्यपञ्चविंशं ब्राह्मणम् (१३. ६. ८. ९.)। तथा ऋग्विधानम्—अनेन सूक्तेन मध्याह्ने स्नात्वा शुचिकामो घृतं प्रत्यृचं जुहुयात्। अथवा अष्टौ समिधः प्रत्यृचं जुहुयात्।

अप नः शोशुचदिति स्नात्वा मध्यन्दिने रवौ।
शुद्धिकामो यताहारः प्रत्यृचं जुहुयाद् घृतम् ॥ इति[1]

कुत्सो गायत्र्याऽग्निं तुष्टाव। आग्रायण्यां धूमशातने विनियुक्तं महाव्याहृतीः सावित्रीं चोदाहृत्याप नः शोशुचदघमित्येतेन सूक्तेनेति गृह्ये। ऋचोऽयमर्थः—

हे अग्ने। नोऽस्माकम् अघं पापम् अपशोशुचत् शोकग्रस्तं सद्विनश्यतु, यद्वाऽस्मदीयं शत्रुं शोचयतु। अपि चास्माकं रयिमासमन्ताच्छुशुग्धि प्रकाशितं कुरु। शुच दीप्तौ। द्विरुक्तिरादरातिशयद्योतनाय। इति कुत्सेन परार्थमकृत्यं कृतमिति दर्शितम्।

ऋ० १. १०१. ८.

कुत्सस्त्रिष्टुभा इन्द्रं तुष्टाव। उत्तमे छन्दोमे मरुत्वतीये विनियुक्तम्। अष्टाचत्वारिंशत्खण्डे 'गायत्साम (ऋ० १. १७३), प्रमन्दिने' (ऋ० १. १०१) इति सूत्रितम्[2]।

ऋचोऽयमर्थः—हे मरुत्वः! 'मतुवसो०' (पा० ८.३.१) इति सम्बुद्धौ नस्य रुत्वम्। मरुद्भिर्युक्तेन्द्र! परमे उत्कृष्टे सधस्थे सहस्थाने गृहे—'सधमादस्थयोः' (पा० ६.३.९६) इति सहस्य सधादेशः। यद्वा यदि वा अवमे अर्वाचीने नीचीने वृजने—वृज्यते रिक्तीक्रियते धनमस्मिन्निति वृजनं गृहम्। तस्मिन्मादयासे तृप्तो वर्तसे। 'मद तृप्तौ'। अतोऽस्मादुभयविधात्स्थानाद् नोऽस्माकमध्वरं हिंसारहितं यज्ञम्। तथा यास्कः—'अध्वर इति यज्ञनाम ध्वरतिहिंसाकर्मा। तत्प्रतिषेधः' (नि० १. ८) इति। तथा दीर्घतमास्त्व व्यर्थहिंसाया अभावात् 'न वा उ एतन्म्रियसे'० (ऋ० १.१६२.२१) इति जीवन्तमिव स्तौति। तस्मादध्वरं हिंसारहितं यज्ञम् अच्छ आभिमुख्येन आयाहि आगच्छ। 'अच्छाभेराप्तुमिति' शाकपूणेर्मतम्[3] (नि० ५. २८)। हे सत्यराधः! सत्यधन! त्वाया त्वत्कामनया वयं हविश्चकृम कृतवन्तः। चकृम-दधिम मदतादित्वाद् दीर्घः (Cf. ऋ० प्रा० ८.१५)। 'अथ[4] सर्वा ह वै देवताः पशुमालभ्यमानं समुपगच्छन्ते[5] मम नामेति' (कौ० ब्रा० १०.६)। 'अत्रैव पशवो हिंस्याः'[6] इत्यादि श्रुतिस्मृत्युदितं मारणमपि हिंसा नेति सिद्धम्।

---

[1] Ṛgvidh. I. 22. 2–3
[2] A fragment of the शां० श्रौ० सू० १०.११.६.
[3] Nirukta reads शाकपूणिः instead of शाकपूणेर्मतम्।
[4] 'अथ' नास्ति ब्राह्मणपाठे। [5] 'मुपसङ्गच्छन्ते' इति कौषीतकिब्राह्मणे।
[6] Manu. 5. 41.

तत्र ऋक्० १.१०३.८.

पिप्रुकुयवादीनां द्विषां दृष्टान्तेन द्रढयति। यथा पिप्रुकुयवशुष्णशम्बरादीन् इन्द्रोऽवधीत्—'हनो वध लिङि' (पा० २.४.४२.) 'लुङि च' (पा० २.४.४३.) इति वधादेशः। यत एतान् द्विषः, एतेषां केषाम्? इत्याह ऋजिश्वनः पिप्रुद्विट्—कुयवशुष्णौ कुत्सस्य द्विषौ। शम्बरो दिवोदासस्यातिथिग्वस्य। यो दिवोदासः सोऽतिथिग्वः।

त्वं पिप्रोर्नृमणः प्रारुजः पुरः (ऋ० १.५१.५)

त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने (ऋ० ४.१६.१३) इति पिप्रोर्द्विट्त्वे निगमौ।

त्वं ह त्यदिन्द्र कुत्समावः (ऋ० ७. १९. २)

स रन्धयत्सदिवः सारथये शुष्णमशुषं कुयवं कुत्साय (ऋ० २. १९. ६) इति शुष्णस्य कुयवस्य द्विट्त्वे निगमौ।

दिवोदासाय शम्बरम् (ऋ० ९. ६१. २.)

अरन्धयोऽतिथिग्वाय शम्बरम्। (ऋ० १.५१.६) इति शम्बरस्य द्विट्त्वे निगमौ।

अनुक्ता अन्ये बहवः। इन्द्र एतेभ्य ऋजिश्वादिभ्य एतान् पिप्र्वादीन् द्विषोऽवधीत्।

कुत्सस्त्रिष्टुभा इन्द्रं स्तौति। उत्तमे छन्दोमे विनियुक्तम्। तत्त इन्द्रियम् (ऋ० १.१०३) अहं भुवम् (ऋ० १०.४८) इति सूत्रम् (Cf. शां० श्रौ० सू० १०. ११. ७)

ऋचोऽयमर्थः—हे इन्द्र! त्वं शुष्णादीन् चतुरो द्विषः असुरान् यदाऽवधीः हतवानसि, तदानीं शम्बरस्यासुरस्य पुरः नगराणि विदारितवानसि। यदनेन सूक्तेन उक्तं प्रार्थितं तन्नोऽस्माकं मित्रादयो देवाः मामहन्तां पूजितं कुर्वन्तु। मामहन्ताम्—मह पूजायाम्। आवयादित्वाद्दीर्घः (Cf. ऋ० प्रा० ९.३१, ३२.)। इतीन्द्रेण द्विषो हतास्तस्माद्द्वेषो न कर्तव्य इत्युक्तम्।

ऋ० १. १०४. ५.

परस्मै सुखं दत्वा पुण्यवान्, परस्मै दुःखं दत्वा पापवान् इति यदुक्तं तदत्र विपरीतं भवति। उक्तत्वात्। यदुक्तमग्नीषोमीयं पशुमालभेत इत्यादिभिर्वाक्यैस्तद् दुःखरूपमपि स्वर्गसाधनं भवति। यच्चाप्रतिषिद्धं परस्त्रीसम्भोगजनितसुखादि तत्सुखरूपमपि नरकाय भवति—इत्येतदनयोक्तम्। कुत्सस्त्रिष्टुभा इन्द्रं तुष्टाव। ऋचोऽयमर्थः—हे मघवन्! धनवन्निन्द्र! यद् यदा नीथा नयनहेतुभूता स्या सा पदवी अस्माभिः प्रत्यदर्शि दृष्टाऽभूत्—सा च पदवी दस्योरपक्षपयितुः कुयवस्यासुरस्य सदनं गृहम् अच्छ आभिमुख्येन गात् गता प्राप्ता। तत्र दृष्टान्तः, जानती स्वकीयं वत्समभिजानती गौः ओको न। ओकः निवासस्थानं स्वकीयं गोष्ठम्। 'ओक इति निवासनाम...'(नि० ३.३) इति यास्कः। यथा प्राप्नोति तद्वन्मार्गोऽप्यसुरस्य गृहं प्राप्तः। प्रयाणान्तरमेव चर्कृतात् पुनः पुनस्तेनासुरेण कृताद् उपद्रवाद् नोऽस्मान् रक्षेति शेषः। इत् पूरणार्थः। 'मिताक्षरेष्वनर्थकाः कमीमिद्विति'इति (नि० १.९)। रक्षयित्वा नोऽस्मान्यं निष्षपी स्त्रीकामो भवति तस्य मघेव धनानीव परा दाः स निष्षपी अस्पृश्यो जारो भूत्वा धनानि विनाशयति। यथाऽस्थाने परित्यजति तद्वत्। मा परा दाः—डुदाञ् दाने—'गातिस्था'इति (पा० २.४.७७.) सिचो लुक्। 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा० ६.४.७५) इत्यडभावः। 'निष्षपी स्त्रीकामो भवति विनिर्गतसपः। सपः सपतेः स्पृशतिकर्मणः' इति यास्कः (नि० ५.१६)। अच्छेति 'सुता याहि' (ऋ० प्रा० ७.६) इति दीर्घः। स्म 'दधिमनदत०' (ऋ० प्रा० ८.१५) इति दीर्घः। अनुक्तं सुखरूपमपि न कार्यमिति निष्षपीदृष्टान्तेन दर्शितम्।

### तत्र ऋक्० १. १०५. १७.

अन्यो यः सुहृज्जनः प्रीतिकरः स एव भ्राता। सहोदरोऽपि समानोदरोऽपि यद्यप्रीतिकरः द्विट् स एव भ्राता शत्रुः। एतमर्थमुदाहरणतया दृडयति ?(द्रढयति) यथाश्विभ्यां सुहृद्भ्यां प्रीतिकराभ्यां भुज्युस्तौग्र्यस्तारितः समुद्रात्। भ्रातृत्वं कृतमित्यर्थः। तदग्रे 'तुग्रो ह भुज्युम्' (ऋ० १.११६.३) इति दर्शयिष्यते। अत्र तु भ्रातृभ्यां सहोदराभ्यां द्वितैकताभ्यां त्रितः कनीयान् कूपे निपातितः शत्रुत्वं कृतं तद्वदामः।

स यथा बृहद्देवता(३. १३२—१३७.)—
त्रितं गास्त्वनुगच्छन्तं शूराः[1] सालावृकीसुताः।
कूपे प्रक्षिप्य गाः सर्वास्तत एवापजह्रिरे ॥१३२॥
स तत्र सुषुवे सोमं मन्त्रविन्मन्त्रवित्तमः।
देवांश्चावाह्यत्सर्वांस्तच्छुश्राव बृहस्पतिः ॥१३३॥
आगच्छतोऽथ तान् दृष्ट्वा क्व वसत्यस्य तत्त्वतः।
सर्वंदृक्त्वञ्च वरुणस्यार्यम्णश्चेत्युपालभत् ॥१३४॥
कूपेष्टकाभिर्व्रणितान्यङ्गान्येवाभवन्मम।
दृष्ट्वा सर्वानहं स्तौमि यद्यप्येको न पश्यति ॥१३५॥
बृहस्पतिप्रचोदिता विश्वे देवगणास्त्रयः।
जग्मुस्त्रितस्य तं यज्ञं भागांश्च जगृहुः सह ॥१३६॥
बृहस्पतिस्त्रितस्यैतज्ज्ञानं विज्ञानमेव च।
तृचेनान्त्येन सूक्तस्य जगादपि रसा[2]विति ॥१३७॥

तत्रेतिहासः—एकतो द्वितस्त्रित इति पुरा त्रय ऋषयो भ्रातरो बभूवुः। ते कदाचिन्मरुभूमावरण्ये वर्तमानाः पिपासासन्तप्तगात्राः सन्त एकं कूपमविन्दन्। तत्र त्रिताख्य एको जलपानाय कूपं प्राविशत्। स्वयं पीत्वा इतरयोश्च पानाय कूपादु(दकम्)द्धृत्य प्रादात्। तौ तदुदकं पीत्वा त्रितं कूपे पातयित्वा तदीयं धनं सर्वमपहृत्य कूपकं (कूपञ्च) रथचक्रेण पिधाय प्रास्थिषाताम्। ततः कूपे पतितः सन् स त्रितः कूपादुत्तरीतुमशक्नुवन्, सर्वे देवा मामुद्धरन्त्विति मनसा सस्मार ततस्तेषां स्तावकमिदं सूक्तं ददर्श। तत्र रात्रौ कूपस्यान्तश्चन्द्रमसो रश्मीन् पश्यन् परिदेवयते। कुत्सः त्रितो वानेन सूक्तेन विश्वान्देवान् स्तौति। तथा चानुक्रमणी—"चन्द्रमा एकोनाप्त्यस्त्रितो वा वैश्वदेवं हि पाङ्क्तमन्त्या त्रिष्टुबष्टमी महाबृहती यवमध्या[3]" इति। ऋचोऽयमर्थः—कूपेऽवहितः पातितः त्रित एतत्संज्ञ ऋषिः ऊतये रक्षणाय देवान् हवते स्तुतिभिराकारयति। तदेतदाह्वानं बृहस्पतिर्देवः शुश्राव श्रुतवान्। किं कर्तुं शुश्राव ? अंहूरणात् पापरूपादस्मात् कूपात्। 'अंहुरोंऽहस्वानंहूरणमित्यप्येतस्य भवति' इति यास्कः (नि० ६.२७)। उरुणोति उरु विस्तीर्णं शोभनं कृण्वन् कुर्वन् रोदसी द्यावापृथिव्यौ मे मम अस्य कूपपतितस्य यद्दुःखं तद्वित्तं जानीतम्। कूपेऽवहितः—'यकाराद्यक्षरं परं वकाराद्यपि' (ऋ० प्रा० २. ३५.) इति वपरत्वात् पूर्वरूपम्। इति भ्रातृभ्यां शत्रुत्वं कृतमित्युक्तम्।

---

[1] Bṛhaddevatā reads क्रूराः।

[2] ऋ० १.१०५.१६-१८

[3] का० स० १ म० १०५. p.9.

### ऋ० १.११०.४.

कुत्सस्त्रिष्टुभा ऋभूंस्तुष्टाव । आभिप्लविके पञ्चमेऽहनि विनियुक्तम् । आयुः पञ्चममिति खण्डे 'ततं मे अपस्तदु तायते पुनः'[1] (ऋ० १. ११०. १) इत्यारम्भम्' (शां० श्रौ० सू० ११.५.४) । ऋचोऽयमर्थः—वाघतः ऋत्विग्रूपास्ते ऋभवः । तरणित्वेन क्षिप्रत्वेन विष्ट्वी–शमी (निघण्टु २.१) एते कर्मनामनी । विष्लृ व्याप्तौ–'स्नात्व्यादयश्च' (पा० ७.१.४९) इति क्त्वाप्रत्ययस्य ईकारान्तादेशः । ते सर्वकर्माणि व्याप्य मर्तासः मनुष्याः सन्तः अमृतत्वं देवत्वम् आनशुः । कृतैः कर्मभिर्देवत्वमानशिरे । देवत्वं प्राप्य सौधन्वनाः सुधन्वन आङ्गिरसस्य त्रयः पुत्राः ऋभुर्विभ्वा वाज इति । एतेन ऋभवः सूरचक्षसः सूर्यसमानप्रकाशाः संवत्सरे संवत्सरावयवभूते वसन्तादिकाले धीतिभिरनुष्ठेयैर्ज्योतिष्टोमादिभिः कर्मभिः समपृच्यन्त । सम्पृक्ता अभवन् । देवैः सह यज्ञभागार्हा बभूवुरित्यर्थः । अत्र निरुक्तम् "कृत्वा कर्माणि क्षिप्रत्वेन वोळ्हारो मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे । सौधन्वना ऋभवः सूरख्याना वा, सूरप्रज्ञा वा, संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः" (नि० ११.१६) इति ।

अथा देवेष्वमृतत्वमानश (ऋ० ४. ३६. ४.) इति निगमः ।
ते शोभनकर्मकरणेन सुहस्ता उक्तास्तद्यथा—

शं न ऋभवः सुकृतः सुहस्ताः (ऋ० ७. ३५. १२.),
गणं देवानामृभवः सुहस्ताः (ऋ० ४. ३५. ३.),
कर्मणा सुहस्ता निविशत्[2]—इत्येवमादयः ।

### ऋ० १.११०.८.

तत्रेतिहासः—पुरा कस्यचिदृषेर्धेनुर्मृता । स ऋषिस्तस्या धेनोर्वत्सं दीनं दृष्ट्वा ऋभूंस्तुष्टाव । ऋभवस्तादृशीमन्यां धेनुं कृत्वा तदीयेन चर्मणा संवार्य तेन वत्सेन समयोजयन्निति । ऋष्यादि पूर्ववत् । ऋचोऽयमर्थः—हे ऋभवः! यूयं चर्मणः । तृतीयार्थे षष्ठी । चर्मणा त्वचा गां धेनुं निरपिंशत । निःशेषेण संयुक्तामकुरुत तदनन्तरं मातरं गां पुनर्वत्सेन समसृजत । संश्लिष्टामकुरुत । अपि च—हे सौधन्वनासः! सुधन्वनः पुत्राः! नरः! नेतारः! स्वपस्यया शोभनं अपः कर्म स्वपः तदिच्छा स्वपस्या तया शोभनकर्मेच्छया । जिव्री जीर्णौ वृद्धौ पितरा मातापितरौ युवाना पुनः यौवनोपेतौ अकृणोतन । 'तप्तनप्त०' इति (पा० ७.१.४५.) तनबादेशः । यूयमकुरुध्वम् । पुनर्—'वाःपुनः पुनर्' इति (ऋ० प्रा० १.१०३) रेफः । 'असृजता मातरम्' (ऋ० प्रा० ८.३१) इति पूर्वपदान्तदीर्घः । इति ऋभुभिर्देवत्वेऽप्युपकारो न त्यक्त इत्युक्तम् । तथा निगमाः—

निश्चर्मणो गामरिणीत धीतिभिः (ऋ० १. १६१. ७),
यया धिया गामरिणीत चर्मणः (ऋ० ३. ६०. २) इत्येवमादयः ।

### ऋ० १.११४.६.

तत्र कथा—पुरा कदाचिदिन्द्रोऽसुराञ् जिगाय । तदानीं दितिरसुरमाता इन्द्रहननसमर्थं पुत्रं कामयमाना तपसा भर्तुः सकाशाद् गर्भं लेभे । इमं वृत्तान्तमवगच्छन्निन्द्रो वज्रहस्तः

---

[1] सूत्रे 'अपस्तदु तायते पुनः' इति नास्ति ।

[2] शां० श्रौ० सू० ८. २०. १. सूत्रे निविशदिति नास्ति ।

सन् सूक्ष्मरूपो भूत्वा तस्या उदरं प्रविश्य तं गर्भं सप्तधा बिभेद । पुनरप्येकैकं सप्तखण्डमकरोत् । ते सर्वे गर्भैकदेशा योनेर्निर्गत्यारुदन् । एतस्मिन्नन्तरे (अवसरे) लीलार्थं गच्छन्तौ पार्वतीपरमेश्वरौ इमान् ददृशतुः । महेश्वरं प्रति पार्वत्येवमवोचत्, इमे मांसखण्डा यथा प्रत्येकं तव पुत्राः सम्पद्यन्ताम् एवं त्वया कार्यं मयि चेत्प्रीतिरस्तीति । स च महेश्वरस्तान्समानरूपान् समानवयसः समानालङ्कारान् पुत्रान्कृत्वा गौर्यै प्रददौ, तवेमे पुत्राः सन्त्विति । अतः सर्वेषु मारुतेषु सूक्तेषु मरुतो रुद्रपुत्रा इति स्तूयन्ते, रौद्रेषु च मरुतां पिता रुद्र इति ।

केचित्[1] श्लोकैर्वर्णयन्ति—

कथं ह्यभून्मरुतां वै पितृत्वं जगद्गुरोर्देवदेवस्य शम्भोः ।
यथा रुद्रो मरुतां वै पिताऽऽसीत्तथेतिहासः प्रदर्श्यतेऽधुना ॥१॥

शतक्रतोरसुरारेर्वधार्थं दितिस्तु गर्भं लभते स्म भर्तुः ।
शुश्रूषमाणः किल तामथेन्द्रो मायाविदामग्रणी रन्ध्रदर्शी ॥२॥

प्रकीर्णकेशीं च दितिं प्रसुप्तामवेक्ष्य वज्री ह्यणुमात्ररूपः ।
प्रविश्य कुक्षिं प्रबिभेद गर्भं मा रोद रोदेति वदंस्तु गर्भम् ॥३॥

भित्त्वा गर्भं निर्गते वै महेन्द्रे प्रबुद्धा सा रोदिति स्मार्तरूपा ।
अत्रान्तरे त्वन्तरिक्षे तदासीज्जगज्जनित्री त्वखिलेशपत्नी ॥४॥

वृषेन्द्रमारुह्य गिरीन्द्रपुत्री सुरेन्द्रवृन्दैरभिवन्द्यमाना ।
नवाहृतैः पङ्कजकुण्डलाद्यै*र्हारेण सम्भूषितसर्वदेहा ॥५॥

---

[1] षड्गुरुशिष्यविरचितकात्यायनसर्वानुक्रमणीवृत्तौ (१०१ पृष्ठे) वेदार्थदीपिकायां ऋग्वेदीयद्वितीयमण्डलस्थत्रयस्त्रिंशसूक्तानुक्रमव्याख्यानावसरे विंशतिः श्लोकाः कुत्रत्याः सङ्गृहीता दृश्यन्ते । तेषामाद्यषट्कं विहायोत्तरचतुर्दश श्लोका अत्र नीतिमञ्जर्यामुद्धृताः । आद्याः षड् ये तत्र सन्ति ते यथा—

अस्तादिमोक्षान्तफलप्रसिद्ध्यै तुष्टो मुनिर्गृत्समदाभिधानः ।
त्रिष्टुप्छन्दः पञ्चदशर्चकेन भिषक्तमं रुद्रमस्तौन्महात्मा ॥१॥
आ ते पितीयं (ऋ०२. ३३) यदि रुद्रसूक्तं मरुद्गणः कीर्त्यते हि किमत्र ।
त्रयोदश्यामाद्यमन्त्रे च रुद्रः सर्वत्र वा मारुते स्तूयते किम् ॥२॥
निपातभाजो मरुतो न चात्र प्रायेणैन्द्रे मरुतः सूत्रदृष्टेः ।
नैतद्रुद्रो मरुतां यत्पिताऽऽसीन्निपातभाजो मरुतस्ततोऽत्र ॥३॥
निपातभाङ् मारुते न तु रुद्रः प्रायेणैन्द्रेत्यादि सूत्रं च तत्र ।
इन्द्रेण सख्यतिशयादनुक्तं तेषां च तस्यापि च सख्यमेतत् ॥४॥
हनिष्यन्तं वृत्रमन्ये पुरेन्द्रं हित्वा जहुर्मरुतोऽवर्धयंस्तम् ।
प्रायेणैन्द्रेत्यादिसूत्रेऽपि वाच्यं रौद्रे चेति खलु किं तत्र नोक्तम् ॥५॥
प्रायग्रहो बहुलार्थो यतोऽत्र तस्मादैन्द्रे बहुशो योग एषाम् ।
अनैन्द्रेषु त्वल्पशो योग एषामित्येषोऽर्थो वेदितव्यो हि तत्र ॥६॥

* 'कुड्मलाद्यैः' is suggested for कुण्डलाद्यैः ।

संसारवृक्षस्य कुठारकेण शशाङ्कचूडामणिमण्डितेन ।
देवेन सार्द्धं सुरसिद्धसङ्घैः स स्त्रीगणैश्चाप्यभिपूज्यमाना ॥६॥

गर्भस्य मातुश्च तदार्तनादं शुश्राव नाकाद्गता यदृच्छया ।
सुराङ्गनानामवलोक्य वृन्दं कृपापरा नाथ हरं ययाचे ॥७॥

वज्रेण रुग्णानि रुवान्तिदेव ! खण्डानि गर्भस्य तनूनि चापि ।
सप्तात्मके सप्तकभेदनेन बहूनि खण्डानि बहूनि चापि ॥८॥

एकैकमेषां लभतां शरीरं मदर्थमेतत् क्रियतां महेश !
स्युश्चैव सर्वे तरुणाः सदैव स्वलङ्कृतास्ते मरुतस्तथैव ॥९॥

मा रोद वादान्मृतियोगतो वा ख्यातास्तु लोके मरुतस्तु नाम्ना ।
सख्यं च तैरस्तु महेश्वरस्य सुरैश्च तुल्यं मरुतां महेश ! ॥१०॥

न ज्येष्ठता नापि कनिष्ठतैषां वेषो वयश्चैव समानमेषाम् ।
(घृणाब्धित्वं व्यक्तमेवं तव स्यान्मयि प्रीतिश्चातुला वै महेश ! ) ॥११॥

पादादिकेशान्तमलङ्कृताश्च भवन्त्वेते सर्वमेतन् ममास्तु ।
तथेति देवः प्रतिपन्नवाक्यो देव्या यथोक्तं प्रचकार सर्वम् ॥१२॥

इत्थन्तु सिद्धं मरुतां पितृत्वं जगद्गुरोर्देवदेवस्य शम्भोः ।
अथापरे वर्णयन्तीतिहासं यथा रुद्रो मरुतां वै पिताऽऽसीत् ॥१३॥

इमां हि गोरूपचरां तु पृश्निं वृषोऽथ भूत्वा रमयन् महेशः ।
अजीजनन्मरुतः पृश्निपुत्रा रुद्रस्य पुत्रा अपि ते बभूवुः ॥१४॥ इति ।

पुरा कदाचिद्देवासुरसङ्ग्रामेऽग्न्यात्मको रुद्रो देवैर्निक्षिप्तं धनमपहृत्य निरगात् । असुरान् जित्वा देवा एनमन्विष्य दृष्ट्वा धनं चापाहरन् । तदानीमरुदत् तस्माद्रुद्रस्य[1] रुद्रत्वम् । अत्र यास्कः (नि० १०.५)–'रुद्रो रौतीति सतः । रोरूयमाणो द्रवतीति वा रोदयतेर्वा । यदरुदत्तद्रुद्रस्य रुद्रत्वम् इति काठकम् । यदरोदीत्तद्रुद्रस्य रुद्रत्वम् इति हारिद्रविकम्' इति । कुत्सस्तादृशं रुद्रं जगत्या स्तौति । शूलगवे पशौ उपस्थाने विनियुक्तम्

---

[1] अत्र सायणभाष्ये रुद्रशब्दस्य व्याख्यानमेवमस्ति—(ऋ० १.११४.१) रोदयति सर्वमन्तकाले इति रुद्रः ।

यद्वा—रुत् संसाराख्यं दुःखं तद्द्रावयति अपगमयति विनाशयतीति रुद्रः ।

यद्वा—रुतः शब्दरूपा उपनिषदः ताभिर्द्रूयते गम्यते प्रतिपाद्यते इति रुद्रः ।

यद्वा—रुत् शब्दात्मिका वाणी तत्प्रतिपाद्याऽऽत्मविद्या वा । तामुपासकेभ्यो राति ददातीति रुद्रः ।

यद्वा—रुणद्धि आवृणोतीति रुद् अन्धकारादिः । तं दृणाति विदारयतीति रुद्रः ।

यद्वा—कदाचिद्देवासुरसङ्ग्रामेऽग्न्यात्मको रुद्रो देवैर्निक्षिप्तं धनमपहृत्य निरगात् । असुरान् जित्वा देवा एनमन्विष्य दृष्ट्वा धनमहरन् । तदानीमरुदत् । तस्माद्रुद्र इत्याख्यायते । तथा च तैत्तिरीयकम् (तै० सं० १. ५.१.१.)

'...सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्...' इति ।

इदं पित्र (ऋ० १.११४.६) इति। 'भूपते' इति खण्डे सूत्रितं 'कद्रुद्राय (ऋ० १.४३) इमा रुद्राय (ऋ० १.११४) इति' (शां० श्रौ० सू० ४.२०.२)।

ऋचोऽयमर्थः—इदम् एवं स्तुतिलक्षणं वचः मरुताम् एकोनपञ्चाशत्संख्याकानां देवविशेषाणां पित्रे जनकाय रुद्राय उच्यते उच्चार्यते। कीदृशम्? स्वादोः स्वादीयः रसवतो मधुघृतादेरपि स्वादुतरम्। अतिशयेन हर्षजनकमित्यर्थः। पुनः कीदृशम्? वर्धनं स्तुत्यस्य प्रवर्धकम्। स्तोत्रेण हि देवता हृष्टा सती प्रवर्धते। अमृतं मरणरहितं रुद्रं मर्तभोजनं—मर्त्यानां मनुष्याणां धनं यत्तन्नोऽस्मभ्यं रास्व प्रयच्छ। तथा त्मने आत्मने। 'मन्त्रेष्वाङ्यादे०' (पा० ६.४.१४१) इत्याल्लोपः। द्वितीयार्थे चतुर्थी। मां तोकाय तोकं पुत्रं तनयाय तनयं पौत्रं च मृळ सुखय। मृड सुखने। एतयोरपत्यनामसु (निघण्टु २.२)। पाठे सति 'मा नस्त्वं पुत्रेषु च पौत्रेषु च रीरिषः' (नि० १०.७) इति यास्केन विशेष उक्तः। रास्व—'रास्वा चोरु न शग्मी नः' (ऋ० प्रा० ७.५३) इति दीर्घः।

## ऋ० १.११५.१.

कुत्सस्त्रिष्टुभा सूर्यं स्तौति। विषुवति सूर्यषट्के तथा स्तोत्रियायाम्। एकविंशस्तोमं बृहत्पृष्ठमिति खण्डे 'चित्रं देवानामिति पुरोनुवाक्या०' इति (Cf. शां० श्रौ० सू० ११.१३.६)। 'चित्रं देवानामिति स्तोत्रियः' (Cf. शां० श्रौ० सू० १२.६.१३)। सौर्ये क्रतौ 'उदु त्यं जातवेदसं...' (ऋ० १.५०.१) 'चित्रं देवानाम्' (ऋ० १.११५.१) इति (शां० श्रौ० सू० ६.२०.२२,२३)। उत्सर्गे सूर्योपस्थाने, चित्रं देवानाम् (ऋ० १.११५.१) नमो मित्रस्य (ऋ० १०.३७.१) इति गृह्ये। तथा ऋग्विधानम्—चित्रमित्युपतिष्ठेत सूक्तेनानेन भास्करमिति[1]।

ऋचोऽयमर्थः—देवानां[2] देवजनानां मध्ये अनीकं तेजःसमूहरूपं चित्रं चायनीयं सूर्यमण्डलम् उदगात् उदयाचलं प्राप्तमासीत्। कीदृशम्? मित्रस्य वरुणस्याग्नेश्चोपलक्षणमेतत्। एतदुपलक्षितानां जगतां चक्षुः प्रकाशकम्। चक्षुरिन्द्रियस्थानीयं वा। उदयं प्राप्य द्यावापृथिवी। दिवं च पृथिवीं च अन्तरिक्षं च आप्राः। स्वकीयेन तेजसा आ समन्तादपूपुरत्। ईदृग्भूतमण्डलवर्ती सूर्यो जगतो जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा। इति सूर्यस्य जगदात्मत्वमुक्तम्। तत्र निरुक्तम्—"चायनीयं देवानामुदगमदनीकं ख्यानं मित्रस्य वरुणस्याग्नेश्चापूपुरद् द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन तेन सूर्य आत्मा जङ्गमस्य च स्थावरस्य च" (नि० १२.१६) इति। इति महतां विश्वप्रकाशकत्वं सूर्योपस्थानेनोक्तम्।

## ऋ० १.११६.१.

यः सत्यवान् तस्य या समृद्धिः तां समृद्धिं सूपकारेण शोभनो य उपकारस्तेन सार्थकीं नासत्ययत्कुर्यात्। यथा नासत्याऽनः नासत्ययोः अनः रथः वैमदाः विमदस्त्रियाः सकाशात् सार्थको जातः। जाहुषाच्च। हि यस्मात् नासत्यौ सत्यरूपौ। नासत्याभ्यां विमदीजाहुषयोः

---

[1] Ṛgvidh. 1.24.4. अयं पूर्णश्लोक ऋग्विधानस्य एवम्—

"तिष्ठन्नुद्यन्तमादित्यं समित्पाणिः शुचिः सदा।

चित्रमित्युपतिष्ठेत सूक्तेनानेन भास्करम्" ॥ इति।

[2] दीव्यन्तीति देवा रश्मयस्तेषाम्। देवजनानामेव वा। सा० भा०

वहनेन स्वरथः सार्थकः कृत इत्यर्थः। जाहुषवहनम् अग्रे परिविष्टमित्यस्यां (ऋ० १.११६.२०) दर्शयिष्यते। इदानीं नासत्याभ्यां बर्हिरिवेति (ऋ० १.११६.१) नासत्ययोः वैमदीवहनं वदामः। कक्षीवांस्त्रिष्टुभा अश्विनौ स्तौति। प्रातरनुवाके आश्विने क्रतौ 'नासत्याभ्यामिति त्रीणि[1]'।

ऋचोऽयमर्थः—अहं नासत्याभ्यां सत्यरूपाभ्याम् अश्विभ्यां स्तोमान् स्तुतीः प्रेर्यम्मि सम्पादयामि। तत्र दृष्टान्तः, बर्हिरिव। यथा कश्चिद्यजमानो यागार्थं बर्हिः प्रवृञ्जे प्रकर्षेण यागार्थं दर्भमन्यूनानतिरिक्तं वृङ्क्ते छिनत्ति सम्पादयति तद्वत्। अभ्रियेव—यथा अभ्रियाणि अभ्रेषु मेघेष्ववस्थितान्युदकानि वातो वायुर्बहुशः प्रेरणार्थं बहुशः प्रेरयति एवमहमश्विभ्यां स्तोत्राणीर्यामि बहुशः प्रेरयामि। यावश्विनौ अर्भगाय तरुणाय विमदाय ऋषये जायां स्वकीयेन रथेन न्यूहतुः तदीयं गृहं प्रापयामासतुः। कीदृशेन रथेन? सेनाजुवा शत्रुसेनायाः प्रेरकेण। एवं वैमदीवहनेन नासत्याभ्यां रथसमृद्धिः सार्थीकृतेत्याह। तथा निगमाः—

युवं शचीभिर्विमदाय जायां (ऋ० १.११७.२०),
युवं रथेन विमदाय शुन्ध्युवं न्यूहथुः (ऋ० १०.३९.७),
कमयुवं विमदायोहथुर्युवम् (ऋ० १०.६५.१२) इत्येवमादयः॥

अन्यः सुहृज्जनो भ्राता इति पूर्वमुक्तम्, तत्प्रदर्शनायेतिहासपूर्विका ऋक्—

ऋ० १. ११६. ३.

तुग्रो नाम कश्चिदश्विनोः प्रियो राजर्षिः। स च द्वीपान्तरवर्तिभिः शत्रुभिरत्यन्तमुपद्रुतः सन् तेषां जयाय स्वपुत्रं भुज्युं सेनया सह नावा प्राहैषीत्। सा च नौर्मध्येसमुद्रमतिदूरं गत्वा वायुवशेन भिन्नाऽऽसीत्। तदानीं स भुज्युः शीघ्रमश्विनौ तुष्टाव। स्तुतौ च तौ सेनया सहितमात्मीयासु चतसृषु नौष्वारोप्य त्रिभी रथैः षळश्वैः शतपद्भिः[2] सह पितुस्तुग्रस्य समीपं त्रिभिरहोरात्रैः प्रापयामासतुरिति। अयमर्थः इदमादिकेन तृचेन (ऋ० १. ११६. ३–५) प्रतिपाद्यते। 'ह' शब्दः प्रसिद्धौ। तुग्रः खलु पूर्वं शत्रुभिः पीडितः सन् तज्जयार्थमुदमेघे उदकैर्मिह्यते सिच्यत इत्युदमेघः समुद्रः तस्मिन् समुद्रे भुज्युमेतत्संज्ञं प्रियं पुत्रम् अवाहाः नावा गन्तुं पर्यत्याक्षीत्। तत्र दृष्टान्तः, ममृवान् म्रियमाणः सन् धनलोभी कश्चिन्मनुष्यो रयिं न यथा धनं परित्यजति तद्वत्। हे अश्विनौ! तं च भुज्युं मध्येसमुद्रं निमग्नं नौभिः पितृसमीपम् ऊहथुः युवां प्रापितवन्तौ। कीदृशीभिः? आत्मन्वतीभिः आत्मीयाभिः युवयोः स्वभूताभिरित्यर्थः। यद्वा धृतिरात्मा धारणवतीभिरित्यर्थः। अन्तरिक्षप्रुद्भिः अतिस्वच्छत्वादन्तरिक्षे जलस्योपरिष्टादेव गन्त्रीभिः अपोदकाभिः सुश्लिष्टत्वादपगतोदकाभिः अप्रविष्टोदकाभिरित्यर्थः। ममृवान्—'नकार आकारोपध०' (ऋ० प्रा० ४.६५) इति नलोपः। तथा निगमाः—

अव विद्धं तौग्र्यमप्स्व१ंन्तर (ऋ० १.१८२.६),
ता भुज्युं विभिरद्भ्यः समुद्रात् (ऋ० ६.६२.६),
निष्टौग्र्यं पारयथः समुद्रात् (ऋ० १.११८.६) इत्येवमादयः।

---

[1] A fragment of शां० श्रौ० सू० ६.६.६.

[2] शतेन पदातिभिः is suggested for शतपद्भिः

ऋ० १.११६.६.

पेदुर्नाम कश्चित्सोऽश्विनौ तुष्टाव। तस्मै प्रीतौ कञ्चित् श्वेत(वर्णं) मश्वं दत्तवन्तौ। स चाश्वः प्रौढं जयं चकारेत्येतदत्र प्रतिपाद्यते। अथाश्विनोरश्वादुत्पत्तिः। तत्र बृहद्देवता (६.१६२,१६३; ७.१–७.)—

अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रिशिराविह।
स वै सरण्यूं प्रायच्छत्स्वयमेव विवस्वते ॥१६२॥
ततः सरण्य्वां जज्ञाते यमयम्यौ विवस्वतः।
तौ चाप्युभौ यमावेव ज्यायांस्ताभ्यां तु वै यमः ॥१६३॥
[1]दृष्ट्वा भर्तुः परोक्षं तु सरण्यूः सदृशीं स्त्रियम्।
निक्षिप्य मिथुनौ तस्यामश्वा भूत्वाऽपचक्रमे ॥१॥
अविज्ञानाद्विवस्वान् हि तस्यामजनयन्मनुम्।
राजर्षिरासीत्स मनुर्विवस्वानिव तेजसा ॥२॥
स विज्ञाय त्वपक्रान्तां सरण्यूमश्वरूपिणीम्।
त्वाष्ट्रीं प्रतिजगामाशु वाजी भूत्वा सलक्षणः ॥३॥
सरण्यूस्तं विवस्वन्तं विज्ञाय हयरूपिणम्।
मिथुनायोपचक्राम तां च तत्रारुरोह सः ॥४॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद् भुवि।
उपाजिघ्रच्च सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥५॥
आघ्रातमात्राच्छुक्रात्तु कुमारौ सम्बभूवतुः।
नासत्यश्चैव दस्रश्च यौ सुतावश्विनाविति ॥६॥
इतिहासमिदं यास्कः सरण्यूदेवते ब्रूते।
विवस्वतश्च त्वष्टुश्च त्वष्टेति सह मन्यते ॥७॥

अथ यास्कः—"तत्रेतिहासमाचक्षते—त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयाञ्चकार। सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव, स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य सम्बभूव। ततोऽश्विनौ जज्ञाते सवर्णायां मनुः" (नि० १२.१०) इति। "अश्वैरश्विनावित्यौर्णवाभः" (नि० १२.१) इति च। इत्यश्विनोरश्वादुत्पत्तिः।

ऋचोऽयमर्थः—हे अश्विना अश्विनौ! युवाम् अघाश्वाय अहन्तव्याश्वाय पेदुनाम्ने राजर्षये यं श्वेतं श्वेतवर्णम् अश्वं ददथुः दत्तवन्तौ सोऽश्वस्तस्मै स्वस्तिजयलक्षणं मङ्गलं शश्वदित् नित्यमेव चकार। वां युवयोस्तद्दात्रं दानं महि महद् अतिगम्भीरम् अत एव कीर्तेन्यं सर्वैः कीर्तनीयं प्रशस्यं भूत् अभूत्। तस्मात् पैद्वः पेदोः सम्बन्धी पतनशीलः शीघ्रगामी वा। अर्यः शत्रूणां प्रेरयिता युद्धे प्रेरयितव्यो वा वाजी वेजनवान् सोऽश्वः सदमित् सदैव हव्यः अस्माभिराह्वातव्यः। तथा निगमाः—

'युवं श्वेतं पेदवेऽश्विनाश्वं (ऋ० १०.३९.१०),
युवं पेदवे पुरुवारमश्विना (ऋ० १.११९.१०),
नि पेदव ऊहथुराशुमश्वम्' (ऋ० १.११७.९) इत्यादयः।

---

[1] Bṛhaddevatā reads सृष्ट्वा।

### ऋक् १.११६.७.

विद्वत्त्वमिच्छता पुंसा विद्वज्जनानां गुणकीर्तनं कक्षीवत् कुर्यात् ? (क्रियेत), यथा कक्षीवान् ऋषिः तिरोहितज्ञानोऽश्विनोर्विदुषोः । अश्विनोर्विद्वत्त्वं मन्त्रान्तरे प्रतिपादितम्—

ता विद्वांसा हवामहे वां (ऋ० १.१२०.३),
विद्वांसाविद्दुरः पृच्छेद (ऋ० १.१२०.२),
यद्विद्वांसा निधिमिवापगूळ्ह (ऋ० १.११६.११) इत्यादयः ।

नासत्याभ्यामिति कीर्त्या (ऋ० १.११६) सुधीः शोभनबुद्धियुक्तोऽभवत् । कक्षीवान् पुरा तमसा तिरोहितज्ञानः सन् ज्ञानार्थमश्विनावाजुहाव, तस्मै अश्विनौ प्रभूतां धियं दत्तवन्तौ । तदाह—हे नरा ! नेतारावश्विनौ ! युवं युवां स्तुवते युवयोः स्तुतिं कुर्वते पज्रियाय पज्रा इत्याङ्गिरसामाख्या । तेषां कुले जाताय कक्षीवते कक्ष्या रज्जुरश्वस्य तद्वते एतत्संज्ञाय पुरन्धिं प्रभूतां धियं बुद्धिं 'पुरन्धिर्बहुधीः' इति यास्कः (नि० ६.१३) । अरदतं व्यलिखतम् । यथा सर्वार्थगोचरा भवति तथा कृतवन्तावित्यर्थः । अपि च कारोतरो नाम वैदलश्चर्मवेष्टितो भाजनविशेषः तस्मिन्सुरायाः स्रावणं क्रियते लुप्तोपमानमेतत् । सुरायाः स्रावकाः कारोतराद् यथा सुरां स्रावयन्ति एवमेव युवां वृष्णः सेचनसमर्थस्य युष्मदीयस्याश्वस्य शफात् खुरात् सुरायाः शतकुम्भान् असंख्यातान् सुराघटान् असिञ्चतम् अक्षारयतम् ।

तद्वां नरा शंस्यं पज्रियेण (ऋ० १.११७.६),
यया वाचा यजति पज्रियो वाम् (ऋ० १.१२०.५),
पज्रेषु स्तोमो दुर्यो न यूपः (ऋ० १.५१.१४) इति निगमान्तराणि ।

### ऋ० १.११६.८.

अत्राख्यानम्—अत्रिम् ऋषिम् असुराः शतद्वारपीडायन्त्रगृहे प्रवेश्य तुषाग्निना अबाधिषत । तदानीं तेन ऋषिणा स्तुतावश्विनौ अग्निमुदकेनोपशमय्य तस्मात्पीडायन्त्रगृहाद् अविकलेन्द्रियवर्गं सन्तं निरगमयतामिति ।

ऋचोऽयमर्थः—अश्विना ! हे अश्विनौ ! हिमेन हिमवच्छीतलेनोदकेन घ्रंसं दीप्यमानम् अत्रेर्दहनार्थमसुरैः प्रक्षिप्तं तुषाग्निमवारयेथां युवां निवारितवन्तौ । शीतीकृतवन्तावित्यर्थः । अपि चास्मै (असुरपीडाकार्श्यं प्राप्ताय) अत्रये पितुमतीम् । 'पितुः' इत्यन्ननाम (निघण्टु २.७) अन्नयुक्ताम् ऊर्जं बलप्रदं रसात्मकं क्षीरादिकमधत्तं पुष्ट्यर्थं प्रायच्छतम् । ऋबीसे अपगतप्रकाशे पीडायन्त्रगृहेऽवनीतम् अवाङ्मुखतया असुरैः प्रापितम् अत्रिं सर्वगणं (गणः समूहः सर्वेषाम् इन्द्रियाणां पुत्रादीनां वा गणेनोपेतं) पुत्रादिगणोपेतं स्वस्ति अविनाशो यथा भवति तथा उन्निन्यथुः तस्माद् गृहादुद्गमय्य युवां स्वगृहे प्रापितवन्तौ । यद्वा हिमेन शीतेन वृष्ट्युदकेन अग्निम् अग्निवत्तीक्ष्णम् । 'घ्रंसम्' अहर्नामैतत् (निघण्टु १.९) सामर्थ्यान्निदाघकालीनमहः अवारयेथां तस्याह्नस्तैक्ष्ण्यं निवारितवन्तौ । अपि चास्मै अग्नये पितुमती चरुपुरोडाशादिलक्षणान्नोपेतम् ऊर्जं बलकरं रसात्मकम् उपस्तरणाभिघारणात्मकं घृतमधत्तम् । वृष्ट्युत्पादनेनाग्नेर्यागार्थं हवींषि निष्पादितवन्तावित्यर्थः । ऋबीसे अपगततेजस्के पृथिवीद्रव्ये अवनीतम् ओषधीनामुत्पादनाय अधस्तान्नीतम् । पार्थिवाग्निना परिपक्वा उदकेन क्लिन्ना ह्योषधिवनस्पतयो विरोहन्ति । अत्रिं हविषामत्तारम् ओषधिवनस्पत्यादीनां वा एवंविधम् अग्निं सर्वगणं व्रीह्याद्योषधिगणोपेतं हे अश्विनौ ! युवां स्वस्ति अविनाशो

यथा भवति तथा उन्निन्यथुः ब्रीह्याद्योषधिवनस्पतिरूपेण भूमेरुपरिष्टान्नीतवन्तौ। कारणात्मना पार्थिवाग्नौ वर्तमानं सर्वमोषधिवनस्पत्यादिकम् अश्विनौ प्रवर्षणेन व्यक्तीकृतवन्तावित्यर्थः। अयं पक्षो यास्केन 'हिमेनोदकेन' इत्यादिनोक्तः (नि० ६.३६)। पितुमतीम्-'ह्रस्वनुड्भ्यां मतुप्' इति (पा० ६.१.१७६) मतुप उदात्तत्वम्। तथा निगमाः—

अग्निर्यद्वामवरोहन्नृबीसम् (ऋ० ५.७८.४),
युवमृबीसमुत तप्तमत्रये (ऋ० १०.३९.९),
ऋबीसादत्रिं मुञ्चथो गणेन (ऋ० १.११७.३) इत्येवमादयः।

ऋ० १.११६.९

कदाचिन्मरुभूमौ वर्तमानस्य स्तोतुर्गोतमस्य ऋषेः समीपं देशान्तरे वर्तमानं कूपमुत्खाय अश्विनौ प्रापयेतां प्रापय्य च कूपं स्नानपानादिसौकर्य्याय उपरिमूलमधोबिलमवास्थापयताम्।

ऋचोऽयमर्थः-हे नासत्यौ ! सत्यस्य नेतारौ ! अश्विनौ ! युवाम् अवतं कूपं गोतमस्य ऋषेः समीपं परानुदेथां प्रेरितवाम्। तदनन्तरं तं कूपम् उच्चाबुध्नम् उच्चैरुपरिष्टात् बुध्नं मूलं यस्य तम्। (तथा च) जिह्मबारं जिह्ममधस्ताद्वर्तमानं (तथा वक्रं) बारं द्वारं यस्य (तथोक्तः) तम् एवंविधं चक्रथुः युवामकृपाथाम्। तस्मात्कूपात् तृष्यते पिपासतो गोतमस्य पायनाय पानार्थम् आपो न आपः सम्प्रति तदानीमेव क्षरन् (प्रवाहरूपेण निरगमन्)। अयं नकारः सम्प्रत्यर्थः, 'अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोग' इति यास्कः (नि० ७.३१.)। कीदृशस्य ? राये षष्ठ्यर्थे चतुर्थी, हवींषि दत्तवतः। पुनः कीदृशस्य ? सहस्राय सहनशीलाय। षह मर्षणे। रा दाने। 'ऊडिदम्...' (पा० ६.१.१७१) इति विभक्तेरुदात्तत्वम्। यद्वा सहस्रसंख्याय राये धनाय एतत्संख्यधनलाभार्थं च क्षरन्।

ऋ० १.११६.१०

अत्रेदमाख्यानम्-वलीपलितादिभिरुपेतो जीर्णाङ्गः पुत्रादिभिः परित्यक्तश्च्यवनाख्य ऋषिः अश्विनौ तुष्टाव (स्तु)तावश्विनौ तस्मै ऋषये जरामपगमय्य पुनर्यौवनमकुरुतामिति।

तथा एतं भवति[1] (तां० ब्रा० १४.६.१०.)—"च्यवनो ह वै दाधीचोऽश्विनोः प्रिय आसीत् सोऽजरत्त.....पुनर्युवानमकुरुताम्" इति। ऋष्यादिपूर्ववत्। ऋचोऽयमर्थः—नासत्यौ अश्विनौ जुजुरुषः[2] जीर्णात्-ज्या वयोहानौ च्यवानात् च्यवनाख्यस्य[3] ऋषेः सकाशाद् वव्रिं—वृञ् वरणे, 'आदृगमहन०' (पा० ३.२.१७१.) इति किप्रत्ययः। 'वव्रिरिति रूपनाम वृणोतीति सतः' इति यास्कः (नि० २.९.)—कृत्स्नं शरीरमाश्रित्य (आवृत्य वा) स्थितां जरां

---

[1] ताण्ड्यब्राह्मणे वचनमिदमेवमस्ति—(तां० ब्रा० १४.६.१०) "च्यवनो वै दाधीचोऽश्विनोः प्रिय आसीत्। सोऽजीर्यत्तमेतेन साम्नाऽभ्यु व्यङ्कुयताम्। तं पुनर्युवानमकुरुतां तद्वाव तौ तर्ह्यकामयेताम्–" इति। (व्यङ्कुयताम्=व्यचलयताम्)

[2] जुजुरुषः—जृष् वयोहानौ। लिटः क्वसुः (पा० ३.२.१०७)। बहुलं छन्दसीत्युत्वम्। द्विर्भावः (पा० ६.१.८)। पञ्चम्येकवचने वसोः सम्प्रसारणम् (पा० ६.४.१३१) इति सम्प्रसारणम्। शासिवसिघसीनाञ्च (पा० ८.३.६०) इति षत्वम्।

[3] 'च्यवनाख्यादृषेः सकाशात्' इति वे० भा०।

प्रामुञ्चतम् प्रकर्षेण अमोचयतम्। तत्र दृष्टान्तः—द्रापिमिव। द्रापिरिति कवचस्याख्या यथा कश्चित् कवचं कृत्स्नशरीरव्यापकं धृत्वा पश्चात् शरीरात्पृथक्करोति तद्वत्। उत अपिच हे दस्रौ! दर्शनीयौ! 'अन्नं दुहन्तौ मनुष्याय दर्शनीयौ' इति यास्कः (नि० ६.२६)। जहितस्य पुत्रादिभिः परित्यक्तस्य ऋषेः। ओहाक् त्यागे। आयुर्जीवनं प्रातिरतं प्रावर्धयतम्। प्रपूर्वस्तिरतिर्वर्धनार्थः। 'प्रवर्धय च न आयु'इति (नि० १०.४०.) यास्कदर्शनात्। आदिद् अनन्तरमेव युवानं सन्तं कनीनां कन्यानां पतिं भर्तारम् अकृणुतम् अकुरुतम्। 'जारः कनीनां जरयिता कन्यानाम्'इति यास्कदर्शनात् (नि० १०.२१.) कनीशब्दः कन्यावाची। तथा निगमाः—

युवं च्यवानं सनयं यथा रथं (ऋ० १०.३६.४.),
युवं च्यवानमश्विना जरन्तं (ऋ० १.११७.१३.),
पुनश्च्यवानं चक्रथुर्युवानम् (ऋ० १.११८.६.)

### ऋ० १.११६.११.

अथेदमाख्यानम्—वन्दनो नाम कश्चिदृषिर्दैत्याश्रमं गत्वा कञ्चित्कालं स्थितः। कस्मिंश्चिद्दिवसे[1] तैः कूपे निपातित उत्तरीतुमशक्नुवन् अश्विनावस्तौत्। तमश्विनौ कूपादुन्निन्यतुरिति। ऋष्यादिकं पूर्ववत्—ऋचोऽयमर्थः—हे नरा! 'सुपां सुलुक्' (पा० ७.१.३९.) इत्यौकारस्याात्वम्, आरोग्यस्य नेतारौ! हे नासत्या! अश्विनौ! वां युवयोः तत्कर्म शंस्यमस्माभिः प्रशंसनीयं राध्यम् आराधनीयं च अभिष्टिमत् आभिमुख्येन प्राप्तव्यं वरूथ्यं वरणीयं कामयितव्यं यत्कर्म विद्वांसा जानन्तौ युवां निधिमिव निक्षिप्तधनमिव अपगूळ्हम् अरण्ये निर्जनदेशे कूपस्य मध्ये असुरैर्निगूढं वन्दनाय वन्दनमृषिम्, कर्मणः सम्प्रदानत्वाच्चतुर्थी। दर्शताद् अध्वगैः पिपासुभिर्द्रष्टव्यात्कूपाद् उदूपथुः उदहार्ष्टम् (एवं यदेतत्कूपादुद्धरणं तदित्यर्थः)। तथा निगमाः—शुभे रुक्मं न दर्शतं निखातम् (ऋ० १.११७.५),

युवं वन्दनं निरृतं जरण्यया (ऋ० १.११९.७),
युवं वन्दनमृश्यदादुदूपथुः (ऋ० १०.३९.८), इत्येवमादयः।

अपगूळ्हम्—'ळ्हकारतामेति स एव चास्य०' (ऋ० प्रा० १.५२) इति ढकारस्य ळ्हकारत्वम्।

### ऋ० १.११६.१२

ऋष्यादि पूर्ववत्। अत्राख्यानम्—"इन्द्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदीमामन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच। ततोऽश्विनावश्वस्य शिरश्छित्त्वा दधीचः शिरः प्रच्छिद्यान्यत्र निधाय तत्राश्व्यं शिरः प्रत्यधत्ताम्। तेन च दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास। तदिन्द्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत्। अथाश्विनौ (तस्य) स्वकीयं मानुषं शिरः प्रत्यधत्ताम्" इति।

---

[1] 'दैत्या......दिवसे' इयत्सायणभाष्ये नास्ति। 'निपातितः' इत्यस्य च स्थाने सायणभाष्ये 'निखातः' इत्यस्ति।

तथा च बृहद्देवता ( ३. १८–२४)—

प्रादादिन्द्रोऽपि[1] सुप्रीतः सुताय तदथर्वणः ।
स चाभवदृषिस्तेन ब्रह्मणा दीप्तिमत्तरः ॥१८॥
तमृषिं निषिषेधेन्द्रो मेदं वोचः क्वचिन्मधु ।
न हि प्रोक्ते मधुन्यस्मिन् जीवन्तं त्वोत्सृजाम्यहम् ॥१९॥
तमृषिं त्वश्विनौ देवौ विविक्ते मध्वयाचताम् ।
स च ताभ्यां तन्नाचष्टे[2] यदुवाच शचीपतिः ॥२०॥
तमब्रूतां तु नासत्यावाश्व्येन शिरसा भवान् ॥
मध्वावां प्राहयत्वावां मेन्द्रस्त्वावधीत्ततः ॥२१॥
आश्व्येन शिरसा तौ तु दध्यङ्ङाह यदश्विनौ ।
तदस्येन्द्रो[3] हरद्धन्यन्न्यधत्तामस्य यच्छिरः ॥२२॥
दधीचस्त्व शिरस्त्वाश्व्यं कृत्तं वज्रेण वज्रिणा ।
पपात सरसो मध्ये पर्वते शर्यणावति ॥२३॥
तदद्भ्यस्तु समुत्थाय भूतेभ्यो विविधान्वरान् ।
प्रादाय युगपर्यन्तं तास्वेवाप्सु निमज्जति ॥२४॥ इति

तथा शतपथे "इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्" इति (श० ब्रा० १४.५.५.१७)। ऋचोऽयमर्थः—नरा ! हे नरौ ! अश्विनौ ! वां युवयोः सम्बन्धि, 'युष्मदस्मदोः षष्ठीचतुर्थी०' (पा० ८.१.२०) इति द्विवचनस्यानुदात्तो वामादेशः। उग्रम् उद्गूर्णम् (अन्यैः दुःशकं) दंसः कर्म (कर्मनामैतत्, निघण्टु २.१) युवाभ्यां पुरा कृतं (तत् कर्म) सनये लाभाय (धनलाभार्थम्)आविष्कृणोमि प्रकटीकरोमि। तत्र दृष्टान्तः—तन्यतुर्न, यथा मेघस्थः शब्दो वृष्टिं (मेघान्तर्वर्तमानमुदकं प्रवर्षणेन) सर्वत्र प्रकटयति तद्वत् । किम् ? तत्कर्म आथर्वणः अथर्वणः पुत्रो दध्यङ्। एतत्संज्ञ ऋषिः। अश्वस्य शीर्ष्णा युष्मत्सामर्थ्येन प्रतिहितेन शिरसा वां युवाभ्याम् ईम् इमां मधुविद्यां यद्ध यदा खलु प्रोवाच प्रोक्तवान् तदानीम् अश्वस्य शिरसः सन्धानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसन्धानलक्षणं च यद्भवदीयं कर्म तदाविष्कृणोमीत्यर्थः। एतेन दध्यङ् मधुविद्याप्रदानार्थं शिरसो द्वयं तत्याजेति सिद्धम्। आविष्कृणोमि—'आविर्हुविर्ज्योतिर्'(ऋ० प्रा० ४.४७)इति षत्वम् । तथा निगमाः—

आथर्वणायाश्विना दधीचे (ऋ० १.११७.२२),
युवं दधीचो मन आ विवासथो (ऋ० १.११९.९.),
अहमिन्द्रो रोधो वक्षो अथर्वणः (ऋ० १०.४८.२.) इत्येवमादयः।

### ऋ० १.११६.१३.

अत्रेदमाख्यानम्—'वध्रिमती नाम कस्यचिद्राजर्षेः पुत्री सा नपुंसकभर्तृका पुत्रलाभायाश्विनावाजुहाव। तदाह्वानं श्रुत्वाऽश्विनावागत्य तस्यै हिरण्यहस्ताख्यं पुत्रं ददतुः'[4]इति ।

---

[1] Bṛhaddevatā reads ब्रह्मापि । [2] Bṛhaddevatā reads तद्वाचष्टे ।
[3] Bṛhaddevatā reads 'तदस्येन्द्रोऽहरत् स्वं तन्न्यधत्तामस्य यच्छिरः'
[4] The passage is borrowed from the commentary of Sāyaṇa with slight variation.

ऋष्यादि पूर्ववत्। ऋचोऽयमर्थः—हे नासत्यौ ! नरा ! नरौ ! अभिमतकर्तारौ ! करोतेः पचाद्यच् (Cf. पा० ३.१.१३४.)। पुरुभुजा बहुभुजौ महे महनीये पूजनीये यामन् यामनि-याति गच्छतीति याम स्तोत्रं तस्मिन्सति। 'आतो मनिन्' (पा० ३.२.७४) इति मनिन्। 'सुपां सुलुक्' (पा० ७.१.३९.) इति सप्तम्या लुक्। वां युवां पुरन्धिर्बहुधीः वध्रिमती (वध्रिः पुत्रोत्पादनाशक्तः षण्डकः तद्वती) एतत्संज्ञा राजपुत्री अजोहवीत् पुनः पुनः स्तुत्वा पुत्रलाभार्थम् आहूतवती। युवां वध्रिमत्यास्तदाह्वानं श्रुतम् आशृणुतम्। तत्र दृष्टान्तः—शासुरिव, यथा शासुराचार्यस्य वचनं शिष्योऽवहितः सन् ऐकाग्र्येण (एकाग्रमनाः) शृणोति तद्वत्। श्रुत्वा च हे अश्विनौ ! तस्यै हिरण्यहस्तं सुवर्णमयपाणि पुत्रम् अदत्तम् प्रायच्छतम्।

हिरण्यहस्तमश्विना रराणा (ऋ० १.११७.२४) इति निगमान्तरम्।

एवं वध्रिमत्यै पुत्रं दत्त्वाऽश्विभ्यां स्यादिसार्थं कृतमित्यर्थः।

## ऋ० १.११६.१४.

तत्राख्यानम्—'वर्तिका चटकसदृशस्य पक्षिणः स्त्री ताम् अरण्ये वर्तमानेन शुना ग्रस्ताम् अश्विनावमोचयताम्[1]' इति। ऋचोऽयमर्थः—हे नरा ! नरौ ! नासत्या ! अश्विनौ ! वृकस्य विकर्तकस्य शुनः आस्नः आस्यात् युवं युवाम् अभीके अभिगते वृकवर्तिकयोः सङ्ग्रामे वर्तिकां चटकसदृशीम् अमुमुक्तम् अमोचयतम्। उतो अपिच कविमृषिं हे पुरुभुजा ! बहुपालकौ ! (युवं ह युवामेव) युवं युवां कृपमाणं स्तुत्यं (कृपमाणं सन्तं) विचक्षे विविधं द्रष्टुम् अकृणुतम् अकुरुतम्। 'तुमर्थे०' (पा० ३.४.९.) इति सेन्। कृपमाणम्-कृपिः स्तुतिकर्मा तुदादिषु द्रष्टव्यः। कृपायतिकृपण्यती अर्चतिकर्माणौ (निघण्टु ३.१४)।

अजोहवीदश्विना वर्तिका वाम् (ऋ० १.११७.१६.),
वृकस्य चिद्वर्तिकामन्तरास्या (ऋ० १०.३९.१३.),
याभिर्वर्तिकां ग्रसिताममुञ्चतम् (ऋ० १.११२.८.) इत्येवमादयो निगमाः॥

## ऋ० १.११६.१५.

अत्राख्यानम्—'अगस्त्यपुरोहितः खेलो नाम राजा तस्य सम्बन्धिनी विश्पला नाम स्त्री सङ्ग्रामे शत्रुभिश्छिन्नपादाऽऽसीत्। पुरोहितेनागस्त्येन स्तुतावश्विनौ रात्रावागत्य तस्या अयोमयं पादं समधत्ताम्[1]' इति।

ऋष्यादि पूर्ववत्। ऋचोऽयमर्थः—आजा आजौ सङ्ग्रामे परितक्म्यायां रात्रौ अगस्त्यपुरोहितस्य खेलस्य राज्ञः सम्बन्धिन्याः विश्पलायाः चरित्रं चरणम्—'अर्तिलूधू(सू)खनसहचर इत्रः' (पा० ३.२.१८४) इति करणे इत्रः। वेः पक्षिणः पर्णं प(त)त्रमिव अच्छेदि हि पुरा छिन्नमभूत् (खलु)। हे अश्विनौ ! युवाम् (अगस्त्येन स्तुतौ सन्तौ) सद्यस्तदानीमेव हिते शत्रुषु निहिते धने जेतव्ये विषयभूते सति सर्तवे सर्तुं गन्तुं विश्पलायै आयसीम् अयोमयीं जङ्घां जङ्घोपलक्षितं पादं प्रत्यधत्तं सन्धानमेकीकरणं कृतवन्तावित्यर्थः। तथा निगमाः—अगस्त्ये ब्रह्मणा वावृधाना (ऋ० १.११७.११),

---

[1] The passage is borrowed from the commentary of Sāyaṇa with slight variation.

प्रति जङ्घां विश्पलाया अधत्तम् (ऋ० १.११८.८),
युवं सद्यो विश्पलामेतवे कृथः (ऋ० १०.३९.८),
याभिर्विश्पलां धनसामथर्व्यं (ऋ० १.११२.१०.) ।

ऋ० १.११६.१६.

तत्राख्यानम्—'वृषागिरः पुत्र ऋज्राश्वो (नाम) राजर्षिः। तस्य समीपेऽश्विनोर्वाहनभूतो रासभो वृकीभूत्वाऽचरत्स्वे। स च तस्या आहारार्थमेकोत्तरशतसंख्याकान् मेषान् शकलीकृत्य स्वभूतजनानां पौरजनानां प्रददौ। [ऋज्राश्वः शतमेकं च मेषान् (ऋ० १.११७.१८) इति मन्त्रान्तरे दर्शनात्] एवं पौराहिते (पौराणामहिते) प्रवृत्तं पिता शापेन नेत्रहीनमकरोत्। तेन स्तूयमानावश्विनौ अस्मद्वाहननिमित्तमस्यान्धता जातेति जानन्तौ तस्मै अक्षिणी प्रायच्छताम्'[1] इति। ऋचोऽयमर्थः—य ऋज्राश्वः वृक्यै आत्मना पोषितायै वृकस्त्रियै शतं शतसंख्याकान् मेषान् शकलीकृत्य प्रादात् तं चक्षदानं तदतिरत्र शकलीकरणार्थः। शकलीकृत्य दत्तवन्तम् ऋज्राश्वं पिता शापेनान्धं दृष्टिहीनं चकार कृतवान्। हे नासत्या! नासत्यौ! दस्रौ! भिषजौ! देववैद्यौ! 'सुपां सुलुक्' (पा० ७.१.३९.) इति सर्वत्राकारः। आमन्त्रितत्वात् सर्वानुदात्तत्वम् (Cf. पा० ८.१.१९.)। तस्मै ऋज्राश्वाय अक्षी चक्षुषी विचक्षे विविधं द्रष्टुम् आधत्तं व्यधत्तमकुरुतम्। कीदृशे अक्षिणी? अनर्वन् अनर्वणी (द्रष्टव्यं प्रति) पितृशापाद् गमनरहिते, ऋ गतौ—'अन्येभ्य०' (पा० ३.२.१७८.) इति भावे वनिप्। अर्वं गमनं विषयं प्रति अनयोर्नास्तीति अनर्वन्—'सुपां सुलुक्' (पा० ७.१.३९.) इति द्विवचनस्य लुक् नलोपाभावश्छान्दसः। बहुव्रीहौ 'नञ्सुभ्याम्' (पा० ६.२.१७२.) इति उत्तरपदान्तोदात्तत्वम्। शतं मेषान्वृक्ये मामहानम् (ऋ० १.११७.१७.) इति निगमान्तरम्।

ऋ० १.११६.१७.

'सविता स्वदुहितरं सूर्याख्यां सोमाय राज्ञे प्रदातुमैच्छत्। तां सूर्यां सर्वे देवा वरयामासुः। तेऽन्योऽन्यमूचुः। आदित्यमवधिं कृत्वाऽऽजिं धावाम योऽस्माकं मध्ये उज्जेष्यति तस्यैवं भविष्यतीति। तत्राश्विनावुदजयताम्। सा च सूर्या जितवतोस्तयो रथमारुरोह'[1]। "अथ यत्र ह तत्सविता सूर्यां प्रायच्छत्सोमाय राज्ञे" इत्यादि ब्राह्मणम् (कौ० ब्रा० १८.१)।

ऋचोऽयमर्थः—हे अश्विनौ! वां युवयोः रथम् अर्वता युष्मदीयेनाश्वेन जयन्ती जीयमाना सूर्यस्य सवितुः दुहिता अतिष्ठत् आरूढवती। तत्र दृष्टान्तः—कार्ष्मेव, कार्ष्मशब्दः काष्ठवाची यथा काष्ठमाजिधावनस्यावधितया निर्दिष्टं लक्ष्यम् आशुगामी कश्चित् सर्वेभ्यो धावद्भ्यः पूर्वं तिष्ठति पश्चाद्विश्वेदेवाः एतदारोहणस्थानं हृद्भिः हृदयैः। 'पद्दन्' (पा० ६.१.६३) इति हृदयस्य हृद्भावः। अन्वमन्यन्त अन्वजानन्। तदानीं हे नासत्यावश्विनौ! श्रिया ऋक्सहस्रलाभरूपया (सम्पदा) कान्त्या वा युवां संसचेथे सङ्गच्छेथे। 'षच समवाये' स्वरितेत्त्वादात्मनेपदम् (Cf. पा० १.३.७२) जयन्ती—व्यत्ययेन कर्मणि शतृप्रत्ययः।

युवो रथं दुहिता सूर्यस्य (ऋ० १.११७.१३) इति निगमान्तरम्।

---

[1] The passage is borrowed from the commentary of Sāyaṇa with a few slight changes.

ऋ० १. ११६. २०.

ऋचोऽयमर्थः—हे नासत्यावश्विनौ ! जाहुषो नाम कश्चिद् (राजा) तं विस्रतः सर्वतः परिविष्टं शत्रुभिः परिवृतं राजानं नक्तं रात्रौ सुगेभिः सुष्ठु गन्तुं शक्यैः रजोभिः रञ्जकैर्मार्गैः विभिन्दुना विशेषेण सर्वस्य भेदकेन आत्मीयेन रथेन ऊहथुः । तस्माच्छत्रुसमूहान्निरगमयतम् । 'सीमिति परिग्रहार्थीयो वा पदपूरणो वा' (नि० १.७) इति पादपूरणाय । हे अजरयू ! न जरा अजरा ताम् आत्मन इच्छतः । 'सुप आत्मनः क्यच्' (पा० ३.१.८) 'क्याच्छन्दसि' (पा० ३.२.१७०) इति । (जरारहितौ) नित्यतरुणौ ! (निर्गतेन) तेन सह पर्वतान् शत्रुभिरारोढुमशक्यान् शिलोच्चयान् व्ययातं विशेषेणागच्छतम् । एवं जाहुषान्नासत्ययो रथः सार्वो जात इत्युक्तम् । नासत्ययोर्गौतमजलदानं 'परावतम्' (ऋ० १.११६.६.) इत्यनयोक्तम् । शरजलदानमाह, 'शरस्य चित्' (ऋ० १. ११६. २२.) अनया ऋचा ।

'नि जाहुषं शिथिरे धातमन्तः' (ऋ० ७.७१.५.) इति निगमान्तरम् ।

ऋ० १. ११६. २२.

ऋचोऽयमर्थः—हे नासत्या ! नासत्यौ ! सत्यरूपौ ! नासिकाप्रभवौ ! वां युवाम् आर्चत्कस्य ऋचत्कपुत्रस्य शरस्य चिद् एतत्संज्ञस्यापि (स्तोतुः) पिपासितस्य पातवे पानाय, पा पाने—'तुमर्थे०' (पा० ३.४.९) इति तवेन् । नीचाद् नीचीनाद् अवतात् कूपाद् उच्चा उच्चैरुपरिष्टाद् वाः उदकम् आचक्रथुः (आभिमुख्येन) कृतवन्तौ । तथा शचीभिः युष्मदीयैः कर्मभिः परिचरणैः जसुरये श्रान्ताय, जसु हिंसायाम् । शयवे चित् शयुनाम्ने ऋषये । स्तर्यं निवृत्तप्रसवाम्, स्तीर्यते आच्छाद्यते प्रसवसामर्थ्याभावेनेति स्तरीः तां गां पिप्यथुः अग्निहोत्रार्थं पयसो दोग्ध्रीं पयसाऽऽपूरितवन्तौ । ओप्यायी वृद्धौ । 'लिड्यङोश्च' (पा० ६.१.२९.) इति पीभावः वाः—'वार्पुनर्' (ऋ० प्रा० १.१०३.) इति रेफः ।

'अधेनुं दस्रा स्तर्यं १ विषक्ताम्' (ऋ० १.११७.२०.) इति निगमः । एवं नासत्याभ्यां नासिकायोनिभ्यां विवस्वद्बीजाभ्यां शयौ पुरुषार्थमुक्त्वा पौरुषे कारणं बीजमित्युक्तम् ॥

विश्वके पुत्रदानाद्रूपादिपञ्चकं सार्वमभूदित्युक्तं पूर्वं तदाह—

ऋ० १. ११६. २३.

अवस्यते अवनं रक्षणमात्मन इच्छते, 'सुप आत्मनः०' (पा० ३.१.८.) इति क्यच् । स्तुवते स्तुतिं कुर्वते कृष्णियाय, कृष्णपुत्राय छान्दसोऽपत्यार्थे घः । ऋजूयते आर्जवमिच्छते विश्वकाय एतत्संज्ञकाय ऋषये हे नासत्यौ ! युवां शचीभिः आत्मीयैः कर्मभिः विष्णाप्वं विष्णाप्वनामानं पुत्रं दर्शनाय दर्शनार्थं ददथुः दत्तवन्तौ । तत्र दृष्टान्तः—पशुं न नष्टमिव यथा कश्चिद्विनष्टं पशुं स्वामिनो दृष्टिपथं प्रापयति तद्वत् । ऋजूयते—'पृक्षनार्जिरजुं' (ऋ० प्रा० ९.१६) इति दीर्घः ।

'युवं नरा स्तुवते कृष्णियाय....विष्णाप्वं ददथुर्विश्वकाय' (ऋ० १.११७.७) इति निगमः ॥ रेभकूपोद्धरणमश्विनोर्वदामः । तत्रर्चमाह—

ऋ० १. ११६. २४.

'पुरा खलु रेभमृषिं पाशैर्बद्ध्वा असुराः कूपे कस्यचिद्दिवसस्य सायङ्काले प्रचिक्षिपुः । स चाश्विनौ स्तुवन् दश रात्रीर्नवाहानि च कूपमध्ये तथैवावतस्थे । दशमेऽह्नि प्रातरश्विनौ तं

कूपादुदतारयताम्[1]' ऋचोऽयमर्थः—दशरात्रीः दशसंख्याका निशाः। नव द्यून् नव संख्याकान्यहानि, अत्यन्तसंयोगे द्वितीया (Cf. पा० २.३.५.)। एतावन्तं कालम् अशिवेन दुःखहेतुना दाम्ना अवनद्धं बद्धं—णह् बन्धने, श्नथितं शत्रुभिस्ताडितम्, 'श्नथ ताडने' श्नथतिर्वधकर्मा (निघण्टु २.१९)। अप्सु (कूपान्तर्वर्तमानासु) अन्तर्मध्ये असुरैः पातितम् अत एव उदनि उदके—'पद्दन्नोमा०' (पा०६.१.६३) इत्युदकस्योदादेशः। विप्रुतं विप्लुतं व्याक्षिप्तसर्वाङ्गं अवृक्णं लुप्तोपमानमेतत्, अवृक्णजनेन सन्तप्तं घर्ममिव व्यथया सन्तप्यमानम् एवम्भूतं रेभं हे अश्विनौ! युवाम् उन्निन्यथुः। तस्मात्कूपाद् उत्तीर्णं (उन्नीतं) कृतवन्तौ। तत्र दृष्टान्तः—यथा सोममिव यथा अग्निहोत्रहोमार्थम् अभिषुतं सोमरसं कूपसदृशे अग्निहोत्रस्थालीमध्ये वर्तमानं स्रुवेणाध्वर्युरुन्नयति तद्वत्। अशिवेनेति 'एकादशिद्वादशिनोर्लघावष्टममक्षरम्' (ऋ० प्रा० ८. ३६) इति दीर्घः।

'युवं रेभं परिषूतेरुरुष्यथो' (ऋ० १.११९.६) इति निगमान्तरम्।

कक्षीवानप्यश्विनोः कर्मान्ते आशिषमाशास्ते तथा वयमपि। तत्र ऋक्—

१.११६.२५.

ऋचोऽयमर्थः—हे अश्विनौ! वां युवयोः दंसांसि पुरा कृतानि कर्माणि दंसः वेशः (निघण्टु २.१) इति तन्नामानि प्रावोचं कक्षीवानहमुक्तवानस्मि। सुगवः शोभनगोयुक्तः सुवीरः शोभनवीरो भूत्वा अस्य धनादेः पतिः स्याम्। उतापि च पश्यन् अक्षिभ्यां पश्यन्। उपलक्षणमेतत्, सर्वैरिन्द्रियैः स्वस्वविषयदर्शनसमर्थैः दीर्घं वर्षशतरूपेणायतम् आयुर्जीवितञ्चाश्नुवन् प्राप्नुवन्नहम् अस्तमिवेत् यथा गृहं स्वामी निष्कण्टकं प्रविशति एवं निःशङ्केन जरिमाणं जरां जगम्यां (कष्टकराहित्येन प्राप्नुयाम्) वृद्धः सन् चिरकालं निवसेयमित्यर्थः। पतिः स्यामिति 'पदादयस्त स्यति०' (ऋ० प्रा० ५.६) इति षत्वे प्राप्ते, 'पतिः स्यां दित्ससि०' (ऋ० प्रा० ५.१९) इति निषेधान्न॥

'कक्षीवन्तं यदी पुनारथं न कृणुथो नवम्' (ऋ० १०.१४३.१) इत्यत्रिणोक्तम् (सांख्यपुत्रेण)। तस्य कक्षीवतो दुहिता घोषा स्वीया।

तदर्थमाख्यानपूर्विका ऋक्—

ऋ० १.११७.७.

अत्राख्यानम्—'घोषा नाम ब्रह्मवादिनी कक्षीवतो दुहिता। सा कुष्ठिनी सती कस्मैचिद्वरायादत्ता पितृगृहे निषण्णा जीर्णाऽऽसीत्। साऽश्विनोरनुग्रहान्नष्टकुष्ठा सती पतिं लेभे[1]'।

तथा बृहद्देवता (७. ४२-४८.)—

आसीत्काक्षीवती घोषा पापरोगेण दुर्भगा।
उवास षष्टिं वर्षाणि पितुरेव गृहे पुरा॥४२॥

---

[1] The passage is borrowed from the commentary of Sāyaṇa with slight variation.

आतस्त्वे महतीं चिन्तां न पुत्रो न पतिर्मम ।
जरां प्राप्ता मुधा तस्मात् प्रपद्येहं शुभस्पती ॥४३॥
गर्भतो मामकस्तात आराध्यावाप यौवनम् ।
आयुरारोग्यमैश्वर्यं सर्वभूतह्ने विषम् ॥४४॥
रूपवत्तां च सौभाग्यमहं तस्य सुता यदि ।
ममापि मन्त्राः सिद्धाः स्युर्यैस्तोष्येते मयाश्विनौ ॥४५॥
चिन्तयन्तीति सूक्ते द्वे 'यो वां परि'[1] ददर्श सा ।
स्तुतौ तावश्विनौ देवौ प्रीतौ तस्या भगान्तरम् ॥४६॥
प्रविश्य विजरारोगां सुभगां चक्रतुश्च तौ ।
भर्तारं ददतुस्तस्यै सुहस्त्यं च सुतं मुनेः ? (मुनिम्) ॥४७॥

ऋचोऽयमर्थः—हे नरा ! नेताराविश्विनौ ! युवं युवां स्तुवते स्तोत्रं कुर्वते कृष्णियाय कृष्णास्यस्य पुत्राय विश्वकाय विष्णाप्वं ददथुः । विष्णाप्वनामानं विनष्टं पुत्रं दत्तवन्तौ । हे अश्विनौ ! पितृषदे पित्रा सम्बद्धे दुरोणे स्वकीये जनकगृहे कुष्ठरोगेण भर्तारमप्राप्य पितृषदे पितृसमीपे निषण्णायै । जूर्यन्त्यै जरां प्राप्नुवत्यै घोषायै चिद् एतत्संज्ञायै ब्रह्मवादिन्यै अपि रोगोपशमनेन पतिं भर्तारम् अदत्तम् युवां दत्तवन्तौ । पितृषदे इति 'अन्यपूर्व०' (ऋ० प्रा० ५.२१) इति षत्वम् । एवमकार्यमपि कृत्वा स्वीयपीडाऽश्विभ्यां दूरीकृतेत्युक्तम् ।

ऋ० १. ११७. ८.

हे अश्विनौ ! युवं युवां कण्वाय श्यावाय कुष्ठरोगेण श्यामवर्णाय ऋषये रुशतीं दीप्तित्वम् ? (दीप्तत्वचम्) अदत्तं प्रायच्छतम् । अपि च तस्मै कण्वाय क्षोणस्य क्षोणाय—चतुर्थ्यर्थे षष्ठी । क्षि निवासे । पृषोदरादित्वात्क्षोणभावः । दृष्टिराहित्येन गन्तुमशक्तस्सन् एकस्मिन्नेव स्थाने निवसते निवासकायेत्यर्थः । (ऋषये) महः तेजः तैजसं चक्षुरिन्द्रियम् अदत्तमिति शेषः । (तथा) हे वृषणा ! कामानां वर्षितारौ ! वां युवयोः तत्कृतं कर्म अस्माभिः प्रवाच्यं (प्रकर्षेण) वाचनीयं शंसनीयम् । नार्षदाय नृषदपुत्राय कण्वाय ऋषये (बधिराय)—'ऋष्यन्धक०' (पा० ४.१.११४.) इत्यण् । 'उत कण्वं नृषदः पुत्रमाहु०' (ऋ० १०. ३१. ११) इति मन्त्रान्तरे उक्तम् । तस्मै श्रवः श्रवणेन्द्रियं यदध्यधत्तं दत्तवन्तौ स्थः (इति यत् तदित्यर्थः) । अपर आह—ब्राह्मणस्य परीक्षार्थम् असुराः कण्वमृषिं गूढे तमसि निदधुः अत्रैव स्थितः सन् व्युष्टामुषसं विजानीहि यदि त्वं ब्राह्मणोऽसीति । तमश्विनावागत्योचतुः व्युष्टायां हर्म्यस्योपरि वीणां वादयन्तावावामागमिष्यावः । तं शब्दं श्रुत्वा व्युष्टामुषसं ब्रूहि तदेतत्प्रतिपाद्यते । हे वृषणा ! कामानां वर्षितारौ ! अश्विनौ वां युवयोः तत्कृतं कर्म प्रवाच्यं प्रशंसनीयं यत् नार्षदाय नृषदपुत्राय कण्वाय क्षोणस्य क्षोणः शब्दकारी वीणाविशेषः महो महतः क्षोणस्य श्रवः शब्दम् अध्यधत्तम् उषसो विज्ञानार्थमधिकमकुरुतम् । इति । 'गोष्ठादिव गोषतमा०' (ऋ० प्रा० ५. ३०) इति निपातनान्नार्षदायेति षत्वम् । श्रवो अधि—'अयेऽयोऽव्ये०' (ऋ० प्रा० २.३७) इत्यभिहिते प्राप्ते 'श्रवो अधि सान्त्वंयो०' (ऋ० प्रा० २.५०) इति निषेधान्न ।

'युवं कण्वायापिरिप्ताय चक्षुः०' (ऋ० १. ११८. ७) इति निगमः ॥

---

[1] ऋ० १०.३९; ४०.

### ऋ० १.१२२.५.

'कक्षीवान् विराड्रूपया एकादशिनस्त्रयोऽष्टकश्चेत्येवंलक्ष(क्ष्य)लक्षणया' (का० स० ब्रा० का० ६.६ पृ० ४) ऋचा विश्वान् देवांस्तुष्टाव । कक्षीवानित्यन्वर्थसंज्ञा । 'कक्षीवान् कक्ष्यावान्'इति (नि० ६.१०) । 'कक्ष्या रज्जुरश्वस्य'इति यास्केनोक्ता (नि० २.२) । अत्राक्षेप., मन्वरबवन्धनं राज्ञ एवोचितम् । कक्षीवानिति राज्ञो नाम । अतोऽस्य राजत्वात् प्राता रत्नीयोक्तः (ऋ० १.१२५) प्रतिग्रहो नोपपद्यते, कुतः ? 'याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः'(मनु०१०.७६.) इत्युक्तम्, (तत्र) ब्राह्मणस्यैवाधिकारो न क्षत्रियस्येति । नैष दोषोऽस्य । यद्यप्यसौ कलिङ्गाख्यस्य राज्ञः पुत्रस्तत्कथं कलिङ्गजेन स्वयं वृद्धत्वादपत्योत्पादनाय सामर्थ्यमलभमानेन तदुत्पादनाय याचितो दीर्घतमा ऋषिरपत्योत्पादनाय प्रेषितया राजमहिष्याऽतिजरठेन महर्षिणा सह रन्तुं लज्जमानया स्ववस्त्राभरणैरलङ्कृत्य स्वप्रतिनिधित्वेन प्रेषितामुशिङ्नामिकां योषितं दासीमित्यवगत्य ऋषिणा स्वमन्त्रपूतेन जलेनाभिषिच्य ऋषिपुत्रीं कृत्वा तया सह रेमे । एतदुत्पन्नः कक्षीवान् राज्ञः पुत्रोऽभूत्[1], दासीपुत्र औशिजः कक्षीवान् कलिङ्गस्य पुत्रोऽभूदिति तात्पर्यार्थः ।

तथा बृहद्देवता (४.२४,२५)—
अङ्गराजगृहे दासीमुशिजं पुत्रकाम्यया ॥२४॥
राज्ञा च प्रहितां मत्वा शुद्धां कृत्वाऽरमन्मुनिः ॥इति॥
'व्याङ्परिभ्यो रमः' (पा० १.३.८३) इति रमतेराङ्पूर्वत्वात्परस्मैपदम् ।

ऋचोऽयमर्थः—हे अश्विनौ ! औशिजः उशिक्पुत्रः कक्षीवानहम् । आहुवध्यै युष्मदाह्वानाय वो युष्मत्सम्बन्धिनं श्रवस्युं श्रवणीयं शब्दनीयं शंसं स्तोत्रम् अच्छ आभिमुख्येनाप्तुं वोचेय ब्रवीमि । बहुवचनं पूजार्थम् । 'लिङ्याशिष्यङ्' (पा० ३.१.८६) इत्यङ् । 'वच उम्' (पा० ७.४.२०) इति वचेरुम् । कैव ? घोषेव, यथा घोषा अस्मत्पुत्री ब्रह्मवादिनी सा यथा अर्जुनस्य श्वेतवर्णस्य शरीरगतत्वग्रोगस्य नंशे नाशनाय युवयोः शंसं स्तोत्रमकार्षीत् तद्वदहमपीत्यर्थः । हे देवाः ! वो युष्मत्सम्बन्धिने दावनेऽभीष्टदात्रे पूष्णे पोषकाय एतन्नामकाय अच्छाभि प्राप्तुं शंसं वोचेय स्तौमि । किञ्च अग्नेर्वसुतातिं तत्सम्बन्धि वसुदानमपि वोचेय स्तौमि । दावन अग्नेरच्छेति 'एकारान्तं मित्रयोर्०' (ऋ० प्रा० २.६१) इति सचादित्वाद् (ऋ० प्रा० २.६७) प्रकृतिभावानुनासिकोपधात्वम् । 'आङोऽनुनासिकश्छन्दसि'इति (पा० ६.१.१२६) 'सुता याहि-'इत्यन्यत्वात् (ऋ० प्रा० ७.६.) अच्छेति सामवशसन्धिः ॥

### ऋ० १.१२५.७.

'स्वनयस्य दानस्तुत्युत्पत्तये इतिहासः—दीर्घतमसः पुत्रः कक्षीवान्नाम ऋषिः ब्रह्मचर्यं चरन् वेदाभ्यासाय गुरुकुले बहुतरकालं स्थित्वा वेदान्सम्यगधीत्य व्रतानि (च) चरित्वा तेनानुज्ञातः स्वगृहं प्रति (प्र) यास्यन् मध्येमार्गं रात्रौ विश्रान्तः (सुष्वाप) । प्रभाते भावयव्यस्य पुत्रः स्वनयो नाम राजा सानुचरः सङ्क्रीडमाणः अकस्मात् कक्षीवतोऽन्तिकमागतः । स च रभसात् प्रतिबुद्धः सहसोत्तस्थौ । तं च राजा पाणौ गृहीत्वा स्वकीय-

---

[1]The passage is borrowed from the commentary of Sāyaṇa with slight variation.

मासनमुपवेश्यास्य सौन्दर्यमवगत्य स्वकन्याप्रदानमना: पप्रच्छ । भगवन् ! कस्य पुत्र: किन्नामा त्वम् ? इति । स च पृष्टो मातरं पितरं स्ववृत्तान्तं च आचष्टे स्म । (स च) राजा सम्भाव्य इत्यवगत्य मुदितमना: स्वगृहं आपय्य तस्मै मधुपर्कमाचरिष्यन् वस्त्रमाल्यादिभि: पूजयित्वा सरथा दश कन्या निष्कशतमश्वशतं पुङ्गवानां शतं गवां षष्ट्युत्तरसहस्रं पुनरेकादश रथांश्च प्रादात् । स च सर्वमनुक्रमेण प्रतिगृह्य दीर्घतमसोऽन्तिकमागत्य तस्मै प्रादर्शयत्[1]। दर्शयित्वा परोक्षं प्राता रत्नमिति (ऋ० १.१२५) अनेन प्रशंसति राजानं स्वनयम् ।

तथा बृहद्देवता (३. १४०–१५०)—

ऋषिर्दानं तु भाव्यस्य [2]'प्रातरित्यत्र शंसति ॥१४०॥
काक्षीवतं 'कदित्थेति[3] यदैन्द्रमुपदिश्यते ।
परोक्षं वैश्वदेवं तत् प्रदिष्टं स्वरसामसु ॥१४१॥

अधिगम्य गुरोर्विद्यां गच्छन् स्वं निलयं प्रति ।
कक्षीवानध्वनि श्रान्त: सुष्वापारण्यगोचर: ॥१४२॥

तं राजा स्वनयो नाम भावयव्यसुतो व्रजन् ।
क्रीडार्थं सानुगोऽपश्यत् सभार्य: सपुरोहित: ॥१४३॥

अथैनं रूपसम्पन्नं दृष्ट्वा देवसुतोपमम् ।
कन्यादाने मतिं चक्रे वर्णगोत्राविरोधत: ॥१४४॥

सम्बोध्यैनं स पप्रच्छ वर्णगोत्रादिकं तथा ।
राजन्नाङ्गिरसोऽस्मीति कुमार: प्रत्युवाच तम् ॥१४५॥

पुत्रोऽहं दीर्घतमस औचथ्यस्य ऋषेर्नृप !
अथास्मै स ददौ कन्या दशाभरणभूषिता: ॥१४६॥

तावतश्च रथान् श्यावान् वीड्वङ्गान्वै चतुर्युज: ।
वधूनां वाहनार्थाय धनकुप्यमजाविकम् ॥१४७॥

निष्काणां वृषभाणां च शतं शतमदात्पुन: ।
एतत्तदुत्तरे सूक्ते [4]'शतमित्यादिपूच्यते ॥१४८॥

शतमश्वाञ्छतं निष्कान् रथान् दश वधूमत: ।
चतुर्युजो गवां चैव सहस्रं षष्टयधाधिकम् ॥१४९॥

स्वनयाद्भावयव्याद्य: कक्षीवान्प्रत्यपद्यत ।
प्रतिगृह्य च तुष्टाव तत: पित्रे शशंस च ॥१५०॥ इति ।

तथा सूत्रम्—"कक्षीवन्तं द्वितीयम्,[5] कक्षीवानौशिज: स्वनये भावयव्ये सनिं ससान, उत्तमे सूक्ते नाराशंसे निगदेत्" इति (शां० श्रौ० सू० १६.११.४–६.) । "येन[6] नरा: प्रशस्यन्ते

---

[1] The passage is borrowed from the commentary of Sāyaṇa.
[2] ऋ० १.१२५ [3] ऋ० १.१२१ [4] ऋ० १.१२६.२
[5] 'यथा' इति, उत्तमे 'च' इति वाधिकं सूत्रे, 'नाराशंसे' इति तु नास्ति ।
[6] इदं निरुक्ते नास्ति ।

तत्सूक्तं नाराशंसम् । येन नराः प्रशंसन्ते[1] स नाराशंसो मन्त्रः' इति यास्कः (नि० ९.९) । नाराशंसानि भवन्तीति सूक्तम् । कक्षीवांस्त्रिष्टुभा स्वनयं स्तौति—पृणन्तः (प्र) यच्छन्तः दातारो जनाः दुरितं दुःखम् एनः पापं (च) मारन् मा प्राप्नुवन् । ये सूरयः विद्वांसः सुव्रतासः देवानां याजकाः मा जारिषुः जरया जीर्णा मा भवेयुः । तर्हि एनोभाजनः[5] क उच्यते ? तेषां दातॄणां सूरीणां चान्यः तेभ्योऽदाताऽसूरिः कश्चित्परिधिः पापानां परितो धारकोऽस्तु । अपृणन्तमदातारम् । पृणक्षि पृणातीति दानकर्मसु पाठात् (निघण्टु ३.२०) देवादीनाम् अपृणन्तं शोका दुःखानि अभि आभिमुख्येन संयन्तु सम्यक् प्राप्नुवन्तु । इति दाता सुखी सूरिरजर इति सिद्धम् ॥

ऋ० १.१२६.६.

'भावयव्यरोमशयोर्दम्पत्योः संवादः' इत्यनुक्रमणी (का० स० १.१२६. पृ० १०) । तथा बृहद्देवता (३.१५५–५६; ४.१–३)—

पञ्चामन्दान्भावयव्यस्य गीता जायापत्योर्द्वे ऋचौ सम्प्रवादः[2] ॥
(सम्प्रवादं रोमशयेन्द्रराज्ञोरेते ऋचौ मन्यते शाकपूणिः ॥१५५॥

इन्द्रेण जायापत्योरस्वेतिहासं द्व्यृचेऽस्मिन्मन्यते शाकटायनः) ॥
[3]प्रादाच्च तां रोमशां नाम साम्ना बृहस्पतिर्भावयव्याय राज्ञे ॥१५६॥

ततस्तमर्थं हरिवान् विदित्वा प्रियं सखायं स्वनयं दिदृक्षुः ॥
अभ्याजगामाशु शचीसहायः प्रीत्याऽर्चयत्तं विधिनैव राजा ॥१॥

अभ्याजगामाङ्गिरसी च तत्र हृष्टा तयोः सा चरणौ ववन्दे ॥
इन्द्रः सखित्वादथ तामुवाच रोमाणि ते सन्ति न सन्ति राज्ञि ! ॥२॥

सा बालभावादथ तं जगाद उपोप मे शक्र ! परामृशेति ॥
(तां पूर्वया[4] सान्त्व्य नृपः प्रहृष्टो अन्वव्रजत्ताथ पतिं पतिव्रता) ॥३॥

सम्भोगाय प्रार्थितो भावयव्यः स्वभार्यां रोमशाम् अप्रौढां मत्वा परिहसन्ननुष्टुभाऽऽह—अयमर्थः—भोज्या भोगयोग्या एषा आगधिताऽऽसमन्ताद् गृहीता स्वीकृता तथा परिगधिता परितो गृहीता । आदरार्थं पुनर्वचनम् । 'गध्यं गृह्णातेः' इति यास्कः (नि० ५.१५.) । यद्वा आगधिता आ समन्ताद्भावेन मिश्रयन्ती आन्तरं प्रजननेन बाह्यं भुजादिभिरित्यर्थः । 'गध्यतिर्मिश्रीभावकर्मा' इति यास्कः (नि० ५.१५.) । पूर्वपक्षे पुरुषस्य प्राधान्यम् उत्तरपक्षे योषित इति भेदः । कीदृशी सा ? या जङ्गहे अत्यर्थं गृह्णाति कदापि न मुञ्चति । अत्रार्थे दृष्टान्तः—कशीकेव कशीका नाम सूतवत्सा नकुली सा यथा पत्या सह चिरकालं क्रीडति न कदाचिदपि मुञ्चति तथैवापि । किन्त्वेषा भोग्या यादुरी यादुरित्युदकम् । रेतोलक्षणमुदकं राति (आ) ददाति यादुरी, बहुरेतोयुक्तेत्यर्थः । तादृशी सती याशूनां सम्भोगानां, याशु (वे० भा० यश)

---

[1] Nirukta reads प्रशस्यन्ते ।

[2] Bṛhaddevatā reads जायापत्योः सम्प्रवादो द्व्यृचेन ।

[3] प्रादात्सुतां रोमशां नाम नाम्ना ।     [4] Bṛhaddevatā reads पूर्वया ।

[5] ० मावनं is suggested for ० भाजनः

इति प्रजननमाम । तत्सम्बन्धीनि कर्माणि याशूनि भोगाः । तेषां शता शतानि असंख्यातानि मह्यं ददातीति ॥

रोमशा नाम बृहस्पतेः पुत्री परिहसन्त स्वभर्तारं प्रत्याह—

ऋ० १. १२६. ७.

भोः पते ! मे मां द्वितीयार्थे चतुर्थी । उपोप उपेत्योपेत्य परामृश सम्यक् स्पृश भोगयोग्यामवगच्छेत्यर्थः । मे ममाङ्गानि दभ्राणि अल्परोमाणि । 'दभ्रमर्भकमित्यल्पस्य' इति यास्कः (नि० ३.२०) । मा मन्यथाः मा बुध्यस्व । अदभ्रत्वं विशदयति—अहं सर्वा रोमशा बहुरोमयुक्ताऽस्मि—यतोऽहमीदृशी अतः सम्पूर्णावयवाऽस्मि । रोमशत्वे दृष्टान्तः—गन्धारीणामविकेव । गन्धारा (ये) देशाः तेषां सम्बन्धिन्यविजातिरिव तद्देशस्था अवयो मेषाः यथा रोमशाः तथाहमस्मि । यद्वा यथा गन्धारीणां गर्भधारिणीनां स्त्रीणाम् अविका अत्यर्थं तर्पयन्ती योनिरिव तासाम् आप्रसवं रोमादिविकर्तनस्य शास्त्रनिषिद्धत्वात् योनिः रोमशा भवति । यतोऽहमीदृशी अतो माम् अप्रौढां मा बुध्यस्वेत्यर्थः । सामगृह्ये—'नाजातलोम्न्योपहासमिच्छेद्[1]' इति । तथा कर्मप्रदीपे—'अजातव्यञ्जनाऽलोम्नी न तया सह संविशेत्[2]' इति ।

ऋ० १. १४७. ३.

अत्रेतिहासः—'उचथ्यबृहस्पतिनामानौ द्वावृषी आस्ताम् । तत्रोचथ्यस्य ममता नाम भार्या सा च गर्भिणी । तां बृहस्पतिर्गृहीत्वाऽरमयत्, शुक्रनिर्गमनावसरे प्राप्ते गर्भस्थं रेतः प्रावादीत्, हे मुने ! रेतो मा त्याक्षीः । पूर्वमहं संवसामि रेतःसङ्करं मा कार्षीरिति । एवमुक्तो बृहस्पतिः बलात् प्रतिरुद्धरेतस्कः सन् शशाप । हे गर्भ ! त्वं यतो रेतोरोधमकरोः अतस्त्वं दीर्घं तमः प्राप्नुहि; जात्यन्धो भवेति । एवं शापतो (शप्तो) ममतायां दीर्घतमा अजायतेति । स चोत्पन्नस्तमोव्ययाय अग्निमस्तौषीत् । स च स्तुत्या प्रीतः आन्ध्यं पर्यहरत्[3]' इति ।

तथाऽनुक्रमणीवृत्तौ षड्गुरुशिष्यः (६. ५२. पृ० १२७)—

इतिहासो हेतुभूतो विस्पष्टार्थं प्रवर्ण्यते ॥१॥

प्रजापतेः पुत्र आसीदङ्गिरा नाम वै मुनिः ।
तस्य पुत्रास्त्रयस्त्वासंस्त्रेताग्निसमतेजसः ॥२॥

उचथ्यो ज्येष्ठ इत्येव मध्यमस्तु बृहस्पतिः ।
संवर्तस्तु कनिष्ठोऽस्य ज्येष्ठो गुणगणैर्विभुः ॥३॥

(यः संवर्तो मत इति प्रथितो भारते भृशम्) ।
उचथ्यभार्या ममता नाम्नाऽऽसीद् वरवर्णिनी ॥४॥

उचथ्याहितगर्भां तां चकमेऽस्य बृहस्पतिः ।
उचथ्यपुत्रो ममतागर्भस्थोऽब्रवीदुत्तरम् ॥५॥

---

[1] गो० गृ० सू० ३. ५. [2] गो० स्मृ० ३. १३६. [3] The passage is borrowed from the commentary of Sāyaṇa.

ज्येष्ठपत्नीं मातृकल्पां मैनां गन्तुं मनः कृथाः ।
(अहो कामस्य दौरात्म्यं यदि मां त्वमिहागतः ॥६॥

किन्त्वाहमत्र प्रविष्टः क्व ते गर्भो निधीयताम्) ।
अमोघरेतास्त्वं चासि न द्वयोरिह सम्भवः ॥७॥

(द्वितीयस्तात ! मा मैवमकार्यं च कृथा महत् ।
इति गर्भवचः श्रुत्वा शशापैवं (तं) बृहस्पतिः) ॥८॥

दीर्घं तमस्त्वं प्रविश मद्वाक्यादन्ध एव च ।
ततो दीर्घतमा नाम ह्युचथ्यतनयोऽभवद् ॥९॥ इति

तथा बृहद्देवता (४. ११–१५.)—

द्वावुचथ्यबृहस्पती ऋषिपुत्रौ बभूवतुः ।
आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥११॥

तां कनीयान् बृहस्पतिर्मैथुनायोपचक्रमे ।
शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यभाषत ॥१२॥

इहास्मि पूर्वसम्भूतो न कार्यः शुक्रसङ्करः ।
तं शुक्रप्रतिषेधं तु न ममर्ष बृहस्पतिः ॥१३॥

स व्याजहार गर्भं तं तमस्ते दीर्घमस्त्विति ।
स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥१४॥

स जातोऽभ्यपतद्देवानकस्मादन्धतां गतः ।
दद्रुर्देवास्तु तस्मै चक्षुस्ततोऽनन्धो बभूव सः ॥१५॥ इति ।

दीर्घतमास्त्रिष्टुभा अग्निं तुष्टाव। अग्निष्टुति आग्निः अग्निमारुते याम्यतृचस्थाने "कथा ते अग्ने शुचयन्त आयोरिति तिस्रो यामीनाम्" (शां० श्रौ० सू० १४.५७.१२) इति सूत्रे विनियोगः। ऋचोऽयमर्थः—हे अग्ने ! ते तव सम्बन्धिनो ये पायवः प्रसिद्धाः पालयितारो रश्मयः मामतेयं ममतायाः पुत्रं दीर्घतमसम् अन्धं पश्यन्तः रक्षणीयोऽस्माभिरित्यवगच्छन्तः दुरिताद् दुःखादन्धत्वादरक्षन्। तान् रश्मीन् सुकृतः सुखकर्तॄन् विश्ववेदाः विश्वप्रज्ञोऽग्निः ररक्ष रक्षति, अस्मत्पालनायेति भावः। तैरस्मान् रक्षतीत्यर्थः। एवं रक्षितानस्मान् दिप्सन्तः दम्भितुमिच्छन्तः रिपवः कामादयो नाह देभुः, 'अहेति विनिग्रहार्थीयः' (नि० १.५), न खलु दम्भितुं शक्नुवन्ति। तान्त्सुकृतः—'सकारोदययोः तकारम्' इति (ऋ० प्रा० ४. १७) नकारस्य पक्षे तकारागमः। एवं धीमद्भिरग्निराराध्य इति सिद्धम् ॥

उक्तं च—एकाहमपि कर्मस्थो योऽग्निशुश्रूषणः शुचिः ।
नयत्यत्र तदेवास्य शताहं दिवि जायते ॥ इति ॥

## ऋ० १.१५८.५.

अत्राख्यानम्—'जराजर्जरितगात्रं जात्यन्धं दीर्घतमसं मामतेयं वरीवसितुम् अशक्नुवानाः स्वगृहदासा अग्नौ दाहाय प्रचिक्षिपुः। स प्रक्षिप्तोऽग्नौ अश्विनावस्तावीत्। तौ चैनमरक्षताम्। ततोऽप्यम्रियमाणमुदकेषु प्रापातयन्। तत्र निमग्नः पुनरश्विनौ तुष्टाव। तुष्टौ सन्तौ तौ जलादु-

दहार्ष्टाम् । एवमवध्यं तं त्रैतनो नाम कश्चिद्दासोऽस्य शिरोंऽसौ वक्षश्चाविध्यत् । ततोऽप्यपालयताम्[1]' ।

तथा बृहद्देवता (४. २१–२४.)—

जीर्णं तु दीर्घतमसं विप्रास्तत्परिचारकाः[2] ।
दासा अग्नौ नदीतोये दृष्टिहीनमवावधुः ॥२१॥

तत्रैकस्त्रैतनो नाम शस्त्रेणैनमपाहनत् ।
शिरश्चांसावुरश्चैव स्वयमेव न्यकृन्तत ॥२२॥

हत्वा दीर्घतमास्तं तु पापेन महता वृतम् ।
आत्माङ्गान्यनुदश्चैव तत्रोदोन्मोहितो भृशम् ॥२३॥

अङ्गदेशसमीपे तु तं नद्यः समुदक्षिपन् ॥ इत्यादि ।

आततायिव्याघ्रभये ऋग्विधाने उक्तम्—

आततायिनमायान्तं दृष्ट्वा व्याघ्रमथो वृकम् ।
न मा गरन्निति जपंस्तेभ्य एव प्रमुच्यते ॥[3]

त्रिरात्रोपोषितो रात्रौ जपेदासूर्यदर्शनात् ।
आप्लुत्य प्रयतः सूर्यमुपतिष्ठेद्दिवाकरम् ॥[4]

पश्यन्ति तस्करा नैनं तथान्ये पापबुद्धयः ।
एकः शतानि त्रायेत तस्करेभ्यश्चरन् पथि ॥[5] इति ।

दीर्घतमा अश्विनौ त्रिष्टुभा तुष्टाव । नद्यो नदनशीला मातृतमा मातृवज्जगतां हितकारिण्य आपः मा मां दीर्घतमसं न गरन् न गिरेयुः । निमग्नं मा कुर्युः । 'गॄ निगरणे' लेटि व्यत्ययेन शप् । मरणप्राप्तिं दर्शयति—यद् यस्माद् दासा अस्मदुपक्षपयितारो मदीयगर्भदासा ईम् इमं दीर्घतमसं मां सुसमुब्धं सुष्ठु सङ्कुचितसर्वाङ्गम् । अवाधुः अवाङ्मुखमपातयन् । किञ्च अस्य मम शिरस्त्रैतन एतन्नामको दासोऽत्यन्तं निर्घृणः सन् यद् यदा वितक्षत् । न केवलं शिर एव अपि तु मदीयम् उरः वक्षःस्थलम् अंसौ च ग्व हतवान् । विदारितवानित्यर्थः । हन्तेर्लुङि छान्दसमेतद्रूपम् । ततः स्वकीयमुरः अंसावपि स्वशस्त्रेणैव तथा कृतवान् । तद्युवयोर्माहात्म्यमिति भावः । सुसमुब्धमिति 'घन्यपूर्वं०' (ऋ० प्रा० ५.२१) इति पदादित्वेन षत्वे प्राप्ते 'संस्पृक्स्वृसर०' (ऋ० प्रा० ५.२४) इति निषेधात्र ॥

ऋ० १.१५८.६.

दीर्घतमास्त्वात्मानमनुष्टुभाऽश्विनोर्महानुभावत्वं ब्रवीति । तथा ब्राह्मणम्—"[6]यद्वेतदृषिराह दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे इति तदेतदायुष्कामस्य शस्त्रमिति" (शां०

---

[1] The passage is borrowed from the commentary of Sāyaṇa with slight variation. [2] Bṛhaddevatā reads तत्परिचारिणः । दासा बद्ध्वा ।

[3] Ṛgvidh. 1.25.6. [4] Ṛgvidh. 1.25.7.

[5] Ṛgvidh. 1.26.1. [6] S. A. reads तदप्येतदृषि०

ब्रा० २.१७)। अयमर्थः—दीर्घतमा एतन्नामा ऋषिः स च मामतेयः ममतायाः पुत्रः। दशमे युगे दशयुगपर्यन्तं महानुभावयोरश्विनोः प्रसादात् पूर्वोक्ताद् दुःखाद्विमुक्तोऽत्यन्तं सुखी स्वपुत्रभार्यादिभिः सहितः जीवितवान्। दशमे युगेऽतीते सति जुजुर्वान् जीर्णः वलीपलितगात्रो बभूव। एवम्भूतः सन् अपाम् अपसां कर्मणाम् अर्थं प्रयोजनं यतीनां प्राप्नुवन्तीनां तासां प्रजानां (ब्रह्मा ब्रह्मसदृशः परिवृढो भवति) किञ्च सारथिस्तन्निर्वाहको भवति देवो भवतीत्यर्थः।

## ऋ० १.१६१.६.

दीर्घतमा जगत्या ऋभूंस्तुष्टाव। षष्ठेऽहन्याग्निमारुते विनियुक्तम्। 'अयं जायत' इति खण्डे 'कतरा पूर्वा (ऋ० १.१८५) किमु श्रेष्ठ०' (ऋ० १.१६१) इति सूत्रितम्[1]। ऋचोऽयमर्थः—इन्द्रो हरी एतन्नामकावश्वौ रथे युयुजे योजितवान्। 'हरी इन्द्रस्य' इति निघण्टुः (१.१५)। तथाऽश्विना अश्विनौ रथं योजितवन्तौ। तथा बृहस्पतिः एतन्नामको देवो विश्वरूपां नानारूपां गाम् उपाजत उपागमत्। स्वीकृतवानित्यर्थः। 'विश्वरूपा बृहस्पतेः' इति (निघण्टुः १.१५)। तत्र तस्माद् ऋभुर्विभ्वा वाजश्च यूयं देवानिन्द्रादीनगच्छत। गत्वा च हे स्वपसः! शोभनाश्वरथादिकर्मवन्तः यूयं यज्ञियं यज्ञार्हं भागं सोमरूपम् ऐतन प्राप्नुत। कर्मसामर्थ्येन हविर्भुजो भवतेत्यर्थः। ऋभूणाम् अश्वादिकरणे निगमाः—

> तक्षन् रथं सुवृतं विद्मनापसः (ऋ० १.१११.१),
> अश्वः कर्त्वो रथ उतेह कर्त्वः (ऋ० १.१६१.३),
> रथं ये चक्रुः सुवृतं नरेष्ठां (ऋ० ४.३३.८) इत्येवमादयः।

## ऋ. १.१६२.६.

त एव धन्या ये पशुना निरूढाग्नीषोमीयसवनीयशूलगवादिना देवान् द्योतमानान् इन्द्रादीन् यजन्ते तर्पयन्ति। कुतः? त्रिभिर्ऋणैर्ऋणवान् जायते देवेज्यया देवानामनृणा भवन्तीति धन्यत्वम्। ब्राह्मणे तथोक्तम्—'तद्यदुपवसथेऽग्नीषोमीयं पशुमालभत आत्मनिष्क्रयणो हैवास्यैष तेनात्मानं निष्क्रीयानृणो भूत्वाऽथ यजते' इत्यनृणत्वमुक्तम् (कौ० ब्रा० १०.३)। त एव वैष्णवा विष्णुरूपेऽग्नौ जुह्वतीति वैष्णवाः। विष्णुरग्निरित्युक्तत्वात्। अत एव वैष्णवाः देवाः पशुना कथं हृष्टा भवन्तीत्याह—'अथ मनोतामन्वाह सर्वा ह वै देवताः पशुमालभमानमुपगच्छन्ते[2] मम नाम ग्रहीष्यति' इति ब्राह्मणमुक्तम् (कौ० ब्रा० १०.६)। एवं सति यदि शमितुः विशसनकर्तुः नखस्थं हस्तस्थञ्च मक्षिकाभिराश्रितं यदामिषञ्च तद्देवेष्टं भवति। तर्हि सुसंस्कृतामिषस्य का कथा। अस्मिन्नर्थे दैर्घतमसी अश्वस्तुतौ त्रिष्टुब् ऋक्। अश्वमेधे 'अध्रिगो शमीध्वमिति परिशिष्य मा नो मित्र इति' (ऋ० १.१६२) विनियुक्तम् (शां० श्रौ० सू० १६.३.२२)। ऋचोऽयमर्थः—अश्वस्य तदवयवभूतस्य क्रविषः आममांसस्य यदङ्गं मक्षिका आश अभक्षयत्। 'अश भोजने'। यद्वा कर्मणि षष्ठी। अश्वस्य यन्मांसं भक्षयति वा। अथवा स्वरौ पश्वञ्जनकाले यद् रिप्तं लिप्तमस्ति। स्वरुणा पशुमनक्तीति

---

[1] A fragment of the शां० श्रौ० सू० 10.8.14.

[2] ०मालभमानमुपसङ्गच्छन्ते is the reading of the Brāhmaṇa.

श्रुतेः (Cf. तै० सं० ५.५.७.१), अथवा स्वधितौ छेदनकाले अवदानकाले यल्लिप्तमस्ति शमितुर्हस्तयोः यच्च विशसनकाले तस्य नखेषु लिप्तमस्ति ता सर्वा तानि सर्वाणि हे अश्व ! तव सम्बन्धीनि देवेष्वस्तु देवसन्तोषणार्थाय भवन्तु । अश्व इत्युपलक्षणम् । सर्वेषु पशुष्वेव सन्तोषाय भवन्त्वित्यर्थः ॥

ऋ० १. १७०. १.

इन्द्रदृष्टान्तेन द्रढयति—इन्द्रेण परमैश्वर्येणागस्त्यसंवादे सूक्ते न नूनमित्यस्मिन्नेष धर्म उदाहृतः । तत्रानुक्रमणी "न नूनं पञ्चागस्त्येनैन्द्रे हविषि मरुद्भ्य उद्यत इन्द्रागस्त्ययोः संवाद ऐन्द्रस्तत्राद्या" (KSA. १.१७० पृ० १२) इति । तथाह यास्कः—"अगस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः सम्प्रदित्सांचकार । स इन्द्र एत्य परिदेवयांचक्रे" (नि० १.५) इति परिदेवना नाम मन्युपूर्वको विलापः ।

तथा बृहद्देवता (४. ४६—५३)—

[1]निरुप्य यद्धविस्त्वैन्द्रं मरुद्भ्यो दातुमिच्छतः[1] ॥४६॥
विज्ञायावेक्ष्य तद्भावमिन्द्रो नेति तमब्रवीत् ।
न श्वो नाद्यतनं ह्यस्ति वेद कस्तद्यदद्भुतम् ॥५०॥
कस्यचित्त्वर्थसञ्चारे चित्तमेव विनश्यति ।
किं न[2] इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव ॥५१॥
मरुद्भिः सम्प्रकल्पस्व वधीर्मा नः शतक्रतो !
किं नो[3] भ्रातरिति त्वस्यामिन्द्रो मान्यमुपालभत् ॥५२॥
अगस्त्यस्त्वरमित्यस्यां[4] क्षुब्धमिन्द्रं प्रशामयत् ।
प्रादात्संवननं कृत्वा तेभ्य एव च तद्धविः ॥५३॥ इति ।

बृहत्या इन्द्रोऽगस्त्यं तुष्टाव । परिदेवनाप्रकारः प्रतिपाद्यते । (इन्द्र आह) अद्यतनं यदस्ति तन्नूनमद्य नास्ति । 'नूनमिति विचिकित्सार्थीयः' (नि० १.५.) विचिकित्सा नाम विवेकपूर्वोऽवधारणाभिप्रायः । अद्यतनेति यद्यपि नास्ति तथाप्युत्तरपदे श्वरिति निर्देशादद्येति गम्यते । तथा श्वोऽपि नूनं नो श्वस्तनमपि नैवास्ति । अद्य यथा अस्मभ्यं निरुप्तमस्मदर्थं नास्ति किल श्वः कथं लप्स्यते ? इति भावः । यदद्भुतम् अन्यस्मै निरुप्य अन्यस्मै दत्तमिति यदस्ति वैपरीत्यं तत् को वेद ? यद्वा यदद्भुतम् अभूतं भाविकार्यं यदस्ति तत् को वेद ? अनेन श्वो लप्स्यत इत्याशा न कार्येत्युक्तं भवति । तदेवाह—अभिसञ्चरेण्यं सर्वतः सञ्चारि अन्यस्य चित्तं मानसं को जानातीति शेषः । उतापि च आधीतम् आध्यातं चिरकालं चिन्तितमपि विनश्यति किमु सकृत्स्मृतं नश्यतीति धर्मे विलम्बो न कर्तव्य इत्युक्तं भवति । तथोक्तमन्यत्र—

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वा यदि वाऽकृतम् ॥
म० भा० शां० प० १७५.१५; ३२१.७३.

---

[1] निरुप्तं तद्....मिच्छति is the reading of BD.
[2] RV. I. 170. 2 [3] RV.I.170.3. [4] RV.I.170.4

इदमद्य त्विदं श्वोऽपि नैतन्मर्त्यस्य युज्यते ।
अवलम्भाविना श्वोऽपि (श्वो वा) नैतस्मिन्भविता भवान् ॥

यस्य स्यान्मृत्युना सख्यं येन पीतमुतामृतम् ।
तेनेदं युज्यते वक्तुमिदं मे श्वो भविष्यति ॥

आदानं च प्रदानं च कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ इत्यादि ।

### ऋ० १.१७९.१.

पूर्वीरहमित्यनेनानयोर्दम्पत्योः भोगार्थं संवादः । तथानुक्रमणी—"पूर्वीः षड् जायापत्योर्लोपामुद्राया अगस्त्यस्य च द्वाभ्यां रत्यर्थं संवादं०[1]" (KSA. १.१७९ पृ० १२) इति ।

तथा बृहद्देवता (४. ५७–६०.)—

[2]अगस्त्यस्य ऋषेर्भार्या लोपामुद्रा यशस्विनी ।
उपजल्पितुमारेभे रहःसम्भोगकाम्यया ॥५७॥

द्वाभ्यां सा त्वब्रवीदृग्भ्यां पूर्वीरिति चिकीर्षितम् ।
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ॥५८॥

विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः ।
[3]न त्वेनः कृतवानस्मि ब्रह्मचार्युत्तमे जगौ ॥५९॥

प्रणम्य तं परिष्वज्य गुरू मूर्ध्न्यवजिघ्रतुः[4] ।
स्मित्वैनमाहतुश्चोभावनागा असि पुत्रक ! ॥६०॥ इति ।

द्वाभ्यां पूर्वं लोपामुद्रा ततो द्वाभ्यामगस्त्यः । ततो द्वाभ्यां ब्रह्मचार्यन्तेवासी । एवं त्रय ऋषयः । सर्वत्र रतिर्देवता । त्रैष्टुभम् । उपान्त्या बृहती । लोपामुद्राऽऽह—हे अगस्त्य ! अहं लोपामुद्रा पूर्वीः शरदः पुरातनान् असंख्यातान् संवत्सरान् दोषाः रात्रीः वस्तोः अहानि उषसः उषःकालांश्च तथा देहं जरयन्तीः । सर्वत्रात्यन्तसंयोगे द्वितीया । अद्यतनकालपर्यन्तं बहुसंवत्सरं कार्त्स्न्येन त्वच्छुश्रूषया श्रमाणा श्रान्ताऽभूवम् । इदानीं तु जरिमा जरा तनूनामङ्गानां श्रियं सौन्दर्यं मिनाति हिनस्ति । एवमपि नानुगृह्णासीत्यर्थः । अप्यूनु । अपीति सम्भावनायाम् । उ इत्यवधारणे । नु इति वितर्के । इदानीमपि किं सम्भावनीयम् ? लोके हि पत्नीः स्वपत्नीः वृषणः सेक्तारः पुरुषाः जगम्युः गच्छेयुः सम्भोगं कुर्युः । अतो मां किमित्यवमन्यसे ? इदानीमपि वा सम्भावयेत्यर्थः । 'संरुद्धप्रजननस्य ब्रह्मचारिण इत्यृषिपुत्र्या विलपितं वेदयन्ते' इति(नि० ५.२) यास्कः । अप्यूनु—'नु चाप्नुतम्'[5]इति दीर्घः । एवं निर्लज्जा भोगतो हीना भवेदित्युक्तम् ।

---

[1] 'श्रुत्वान्तेवासी ब्रह्मचार्यन्त्ये बृहत्यादी अपश्यत्' इत्यस्यावशिष्टो भागः ।

[2] ऋतौ स्नातामृषिर्भार्यां लोपामुद्रां यशस्विनीम् । A. A. Macdonell's edition.

[3] श्रुत्वैनः is the reading of BD. [4] BD. reads अवजघ्रतुः

[5] RPR. 8.1

ऋ० १.१८२.३.

अस्या जगत्या अयमर्थः—हे दस्रा ! दर्शनीयावश्विनौ ! 'अस्रं दुहन्तौ मनुष्याय दर्शनीयौ' इति यास्कः (नि० ६.२६)। युवां यः कश्चिज्जनः अहविः यज्ञार्थं हविर्यस्य नास्ति सः। महीयते स्वात्मानं पूजयते 'मह पूजायां' (न युष्मान् पूजयति) स आत्मम्भरिः। ततः तं जनम् अतिक्रमिष्टम् अतिक्रम्य तिष्ठतम्। अत्रास्मिन्नहविष्के जने युवां किं कृणुथः ? किं कुरुथः ? हविषाम-भावात्तत्रैव किमासाथे किमुपविशथः ? तमतिक्रम्य तिष्ठतमिति। न केवलमतिक्रमणमात्रं किन्तु पणेर्वणिग्भूतस्य लुब्धकस्य अयष्टुरस्यासु प्राणं जुरतम् अहिंसिष्टम्। अनीनशतम्। मिनोति जूर्वति धमतीति पाठात् (निघण्टु २.१९.)। विप्राय मेधाविने। विप्रः विप्र इति (निघण्टु ३.१५) तन्नामसु पाठात्। वचस्यवे यः युष्मत्स्तुतिरूपं वच आत्मन इच्छति स वचस्युस्तस्मै मह्यं ज्योतिर्महत्तेजः कृणुतं कुरुतम्। महीयते 'निपातैर्यद्यदि' (पा० ८.१.३०) इति निषेधाद् महच्छब्दादनिघातः। जुरतमिति तिङ्परत्वाच्च न (Cf. पा० ८.१.२८)। तथा भगवतोक्तम्—

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ ! स जीवति। (भ० गी० ३.१५–१६)

## APPENDIX IV

Guṇaviṣṇu is supposed to be a pre-Sāyaṇa commentator. He has written a commentary on the *Chāndogyamantra*. It is edited by D. Bhattacharya and published by Sanskrit Sahitya Parishad, Calcutta, 1930.

The following passages are extracts from Guṇaviṣṇu's commentary on such stanzas of the first *Maṇḍala* of the RV. as occur in the *Chāndogyamantra*.

RV.1.1.1.=CHMB.6.45,p.116.

ऋग्वेदादिमन्त्रोऽयम्; गायत्री छन्दः, मधुच्छन्दा द्रष्टा, देवता अग्निः, विनियोगो ब्रह्मयज्ञे। अहम् 'अग्निम्' 'ईळे' स्तौमि। किम्भूतम्? 'पुरोहितं' प्रथमतः आहितम् अर्पितमिति यावत्। तथा 'देवं' स्तुत्यम्। तथा 'यज्ञस्य ऋत्विजम्' यजमानानुरोधेन यागकारी ऋत्विग् भवति, अग्निरपि यजमानाभ्युदयाय यागकारी ऋत्विगुच्यते। तथा 'होतारं' होमस्य प्रधानसाधकत्वेन कर्तृभूतम्। तथा 'रत्नधातमं' रत्नं सुवर्णादिकं तद् दधातीति रत्नधाः, अतिशयेन रत्नधाः रत्नधातमः। प्रथमं धनदातारम् अग्निं स्तौमि, ततः स्तुतः स मह्यं धनं ददात्विति वाक्यार्थः ॥

RV.1.3.7b=CHMB.8.13,p.131.

हे 'विश्वे देवासः'! विश्वे देवाः! यूयम् 'आगत' आगच्छत।

The second pāda only of the Ṛgvedic stanza 1.3.7. is identical with the first pāda of the stanza, quoted by the *Chāndogyamantra*. The quotation of the *Chāndogyamantra* is however identical with RV. II.41.13. and RV. VI.52.7. The commentary of Guṇaviṣṇu on the Ṛgvedic stanza in *toto* is given on RV. II.41.13.

RV.1.3.10.=CHMB.6.1,p.97.

गायत्रीयं सरस्वतीदेवताका भरद्वाजदृष्टा तीर्थनमस्कारे विनियुक्ता। 'पावका' पावयित्री, 'वाजिनीवती' वाजः अन्नं तत्कारणतया वाजिनी पृथिवी तद्वती। एवम्भूता 'सरस्वती' 'नः' अस्माकं 'यज्ञं' 'वष्टु' वहतु 'वाजेभिः' साधनैः, वाजः अन्नानि, अनेन च अन्नकारणभूताः मुद आपश्च लक्ष्यन्ते। 'धियावसुः' इति धीशब्दः कर्मवचनः सारस्वतमन्त्राख्येन कर्मणा सह वसतीति तथोच्यते। वसुः इति वसेरौणादिक उः। पावका इति "न यासयोः" (पा० ७.३.४५) इत्यत्र "पावकादीनां छन्दसि" (वा०) इति इत्वप्रतिषेधः। वाजेभिः इति "बहुलं छन्दसि"

(पा० ३.१.१०) इति भिसो नैस्। सप्तव्याहृतिपूर्विकया गायत्र्या करस्थमुदकं सप्तकृत्वः अनुमन्त्र्य यथाविधि सकृदाचम्य पुनरपि यथाविधि आचामेत् ॥

## RV.1.6.3.=CHMB.2.18,p.22.

हे 'केतो'! ध्वजरूप! त्वं 'समजायथाः' सञ्जातो भव। कैर्जन्यमानः? 'उषद्भिः' वसद्भिः गृहस्थैरित्यर्थः। किं कुर्वन्? 'मर्याः' मर्त्येभ्यः 'केतुं' ज्ञानं 'कृण्वन्' कुर्वन्। न केवलं ज्ञानम्, अपि तु 'पेशः' कुर्वन्, पेशःशब्देन सुवर्णं सौन्दर्यं वा अभिधीयते, तथा च शारीरब्राह्मणम् "पेशस्कारी पेशसो मात्रामुपादाय"[1] इत्यादि। किम्भूतेभ्यो मनुष्येभ्यः? 'अकेतवे' अज्ञानेभ्यः, 'अपेशसे' निर्धनेभ्यः कुरूपेभ्यो वा। 'केतुम्' इति "कित ज्ञाने" इत्यस्य रूपम्। अपेशसे इति व्यत्ययेन बहुवचनस्यैकवचनम्। मर्याः इति "निष्टर्क्य०" (पा० ३.१.१२३) आदिसूत्रेण निपातितः, व्यत्ययेन चतुर्थ्याः स्थाने प्रथमा। उषद्भिः इति व्यत्ययेन सम्प्रसारणम्। समजायथाः इति व्यवहितोपसर्गसम्बन्धः ॥

## RV.1.18.6.=CHMB.4.22,p.61.

गायत्रीयम् इन्द्रदेवताका सर्पिःप्राशने विनियुक्ता। 'सदसः' सभायाः 'पतिं' मुख्यम् 'अद्भुतम्' आश्चर्यरूपं 'प्रियम् इन्द्रस्य' इन्द्रस्य वल्लभं 'काम्यम्' अभीष्टार्थसम्पादकं 'मेधां सनिं' "धीर्धारणावती मेधा" तस्या दातारं सुराचार्यम् अहम् 'अयासिषं' शरणत्वेन प्राप्तवानस्मि; सः अस्मै कुमाराय मेधां ददातु इत्याशंसा वाक्यार्थः। सनिम् इति "छन्दसि वनसनरक्षिमथाम्" (पा० ३.२.२७) इति इन्। अयासिषम् इति यातेर्लुङि मिप्। मेधामिति व्यत्ययेन षष्ठ्यां द्वितीया ॥

## RV.1.22.16.=CHMB.6.10,pp.100,103.

यतः 'पृथिव्याः' 'अधिसानवि' सानुभवां भूमिमधिश्रित्य 'विष्णुः' 'विचक्रमे' पर्वतैकदेशभूमौ पादं दत्त्वा त्रैलोक्यम् आक्रम्य देवेभ्यो ददौ, 'अतः' भूचरान् 'नः' अस्मान् 'देवाः' 'अवन्तु' रक्षन्तु। अधिसानवि इति सानौ भवा सानवी ततो विभक्त्यर्थेऽव्ययीभावः। इत्थम्भूताया भूमेः सम्बन्धिनी मृत् पापापनोदनाय मया मृद्यत इति तात्पर्यम्।

## RV.1.22.18.=CHMB.1.5,pp.3,4;6.5,p.100;8.31,p.138.

गायत्रीयं, विष्णुदेवता, अयज्ञियवाग्वचननिमित्तजपे विनियुक्ता। 'विष्णुः' व्यापकः स भगवान् 'इदं जगत् विचक्रमे' आक्रान्तवान्। कथमाक्रान्तवान्? 'त्रेधा निदधे पदम्', पृथिव्याम् आकाशे स्वर्गे च पदत्रयम् अर्पितवान् इत्यर्थः। 'अस्य' [2]'पांशुले' पांशुयुक्तायां भूमौ पदं 'समूढं' सम्यङ्निविष्टम्। अयमर्थः—विष्णुर्भूम्याकाशस्वर्गात्मकं जगत् पादेनाक्रान्तवान्; तस्य पदं भूम्यां सम्यङ्निविष्टम्। एतेन विष्णुपदसम्बन्धेन भूमिरतीव शुद्धेति सा भूमिरस्मिन् सदने दुरुक्तादिकं समावास्यतीति।

---

[1] Bṛh. Up. 4.4.4.

[2] Guṇaviṣṇu reads 'पांशुले' instead of 'पांसुरे'।

षडिमा गायत्र्यो मधुच्छन्दोदृष्टाः वैष्णव्यः मृन्मर्दने विनियुक्ताः। आद्या व्याख्याता। (१.५) p. 100.

व्याख्यातम् (१.५) अत्र च विष्णवाक्रान्तत्वात् पृथिव्याः पावनत्वेन तद्विकारस्य अन्नस्य अतिपावनत्वम्॥ p. 138.

## RV.1.22.18.=CHMB.6.6,pp.100,101.

'त्रीणि पदा' त्रीन् पादविक्षेपान् 'विष्णुः' विचक्रमे। 'गोपाः' गोप्ता धर्माणाम्। 'अदाभ्यः' अहिंस्यः। अतः पृथिवीम् आरभ्य विराट्स्थानं यावत् 'धर्मान्' यागादीन् 'धारयन्' अहृच्छेण धारयति। ते हि धर्माः पृथिव्याम् अनुष्ठीयन्ते उत्तरेषु लोकेषु फलानि भुज्यन्ते इत्येवम्। पदा इति "शेश्छन्दसि बहुलम्" (पा० ६.१.७०) इति शेर्लोपः, नलोपः। गोपाः इति गुपेः आय-प्रत्ययान्तात् क्विप्, "अतो लोपः" (पा० ६.४.४८) यलि यलोपश्च (Cf. पा० ६.१.६६)। अदाभ्यः इति दन्भेर्हिंसार्थात् "कृत्यल्युटो बहुलम्" (पा० ३.३.११३) इति यद्विषये ण्यत्। धर्माणि इति तत्साधने नपुंसकम् इति नपुंसकत्वम्॥

## RV.1.22.19.=CHMB.6.7,pp.100,101,102.

हे धर्मानुष्ठातारः! तस्य 'विष्णोः' 'कर्माणि' 'पश्यत' निरूपयत। 'यतः' यः विष्णुः पृथिवीतः आरभ्य विराजः स्थानं यावत् 'व्रतानि' कर्माणि क्रियमाणानि भुज्यमानानि च 'पस्पशे' सम्यङ् निरूपयति। पस्पशे इति निर्णयार्थे लटस्तः, छान्दसः श्लुः, 'लोपस्त आत्मनेपदेषु' (पा० ७.१.४१) इति तलोपः। यश्च 'इन्द्रस्य सखा' 'युज्यः' योग्यः। बाहुलकात् क्यप्। यतः इति प्रथमान्तात् आद्यादित्वात् तसिः॥

## RV.1.22.20.=CHMB.6.8.pp.100,102.

तच्छब्दवाच्यं विराट्स्थानं 'विष्णोः' यत् 'परमम्' उत्कृष्टं 'पदं' तत् 'सूरयः' ज्ञानिनः 'सदा' 'पश्यन्ति' साक्षात्कुर्वन्ति, न ते कर्ममात्रपर्यवसायिनः। कथं पश्यन्ति? 'दिवीव चक्षुरात-तम्' यथा दिवि आकाशे आततं विस्फारितं चक्षुः दृश्यान्तरं पश्यति॥

## RV.1.22.21.=CHMB.6.9,pp.100,102.

'विष्णोः यत् परमं पदं' 'तत्' 'विप्रासः' मेधाविनः 'विपन्यवः' पनतिः अर्चनकर्मा, वर्णा-श्रमविहितैः धर्मैः विविधं वासुदेवम् अर्चयन्तः, 'जागृवांसः' जागरूकाः संसारभयोद्वेगेन प्रबुद्धाः 'समिन्धते' सन्दीपयन्ति अभेदं यावत् ध्यायन्तीत्यर्थः। विप्रासः इति "प्रा पूरणे" असुगन्तः धारणा-वतीमेधावचनः। विपन्यवः इति पनेर्विपूर्वाद् आयप्रत्ययाभावपक्षे भावे क्विप् विपन्, तस्मात् इच्छायां क्यच्, अयस्मयादिपाठेन भत्वात् नलोपाभावः "क्याच्छन्दसि" (पा० ३.२.१७०) इति उप्रत्ययः। जागृवांसः इति जागर्तेः लिटः क्वसुः। समिन्धते इति "ञिइन्धी दीप्तौ" रौधादिकः, लट् झः अदादेशः, "श्नान्नलोपः" (पा० ६.४.२३), "श्नसोरल्लोपः" (पा० ६.४.१११)॥

## RV.1.24.15.=CHMB.4.100,pp.81,82;6.12,p.104.

त्रिष्टुबियम्; शुनःशेप ऋषिः, वरुणो देवता, मेखलामोचने विनियोगः। अनया त्रिष्टुभा शुनःशेप ऋषिः त्रिभिः पाशैर्बद्धः तद्विमोक्षाय वरुणं प्रार्थयामास—हे 'वरुण'! 'अस्मत्'—सका-

धात् 'उत्तमम्' कण्ठावस्थितं 'पाशम्' बन्धनम् 'उच्छ्रथाय' ऊर्ध्वम् उत्तानय। 'अधमं' पादावस्थितम् 'अवश्रथाय' अधस्तात् अवतारय। मध्यमं कटिदेशावस्थितं 'विश्रथाय' तत्रस्थमेव शिथिलीकुरु। अथ पाशावमोक्षानन्तरं शुनःशेपेन वरुणः प्रार्थ्यते—हे 'आदित्य'! अदितिपुत्र! वरुण! 'अथ' पाशमोक्षानन्तरं 'तव' 'व्रते' परिचर्यालक्षणे 'वयम्' 'अनागसः' अनपराधाः सन्तः 'स्याम' भवेम। न केवलं तव, 'अदितये' अदितेश्च त्वन्मातुः। श्रथाय इति श्रथ्नातेर्लोट् सिप्, "छन्दसि शायजपि" (पा० ३.१.८४) इति शायच्। उत्, अव, वि, इत्येते व्यवहिताः। आदित्येति "दित्यदित्यादित्य०" (पा० ४.१.८५) इति ण्यः।

## RV.1.35.2.=CHMB.2.10,p.17.

'सविता' आदित्यः 'आयाति' आगच्छति। 'देवः' दानादिगुणयुक्तः। केन? 'रथेन'। किम्भूतेन? 'हिरण्ययेन' सुवर्णमयेन। किं कुर्वन्? 'भुवनानि पश्यन्' भुवनवर्तिनो मनुष्यान् प्रकाशाप्रकाशपापकर्तॄन् साक्षिवन्निरीक्षमाणः। तथा 'निवेशयन्' स्वेषु स्वेषु व्यापारेषु समावेशयन्। कम्? 'अमृतं मर्त्यञ्च' देवान् मनुष्यांश्च। सूर्योदये मनुष्याः स्वेषु कर्मसु वर्तमाना देवान् प्रीणयन्ति, प्रीताश्च देवा वृष्ट्यादिना मनुष्यानाप्याययन्ति, तेन देवमनुष्याणां परस्परोपसंश्लेषः। किम्भूतः सविता? 'रजसा' रात्रिकालेन सह 'कृष्णेन' मलिनेन 'आवर्तमानः' अनुदिनं परावर्तमानः। प्रायेण रात्रिकालस्य रागजनकत्वात् रजस्त्वम्, पुण्यकर्मणामवरोधाच्च कृष्णत्वम्। अयमर्थः—यः सविता देवमनुष्यव्यापारे व्यवस्थापकः, यश्च कर्मभूमिवर्तिनां पापपुण्यसाक्षी प्रत्यहं समायाति, तस्मै वयमर्चनां कुर्मः। आवर्तमानः, आयाति, इति व्यवहितोपसर्गसम्बन्धः। हिरण्ययेन इति "ऋत्व्यवास्त्व्य०" इत्यादिना (पा० ६.४.१७५) हिरण्ययशब्दः छन्दसि निपातितः॥

## RV.1.44.1.=CHMB.2.13,pp.18,19.

हे 'अग्ने'! 'जातवेदः'! स्मार्तश्रौताग्निसम्बोधनम्। 'त्वम्' 'उषर्बुधः' असि उषसि बुध्यसे प्रातराहुतिग्रहणाय जागर्षि, अत एव त्वं बुधरूपोऽसि, सोऽपि उषसि बुध्यते, आदित्यानुगतत्वात् तस्य। एतेन बुधरूपित्वं वह्नेरादर्शितम्। एवञ्च 'देवान्' प्रधानकर्मभूतान् 'मघाः' अघान् प्रातराहुतौ प्रयुज्यमानान् भक्ष्यगणान् 'आवह' प्रापय। किम्भूतस्त्वं बुधश्च? 'राधः' आराधनीयः, 'अमर्त्यः' देवस्वरूपः। किमर्थम् आवह? 'विवस्वत्' विवस्वते सूर्यार्थम्। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते" इति स्मरणात्। वह्निना सूर्यार्थम् ऊढाम् आहुतिं देवा अदन्ति। किम्भूताय विवस्वते? 'उषसः' उषसि 'चित्रं' रूपम् 'आदाशुषे' उपात्तवते। विवस्वदिति सुब्लुक्। उषसः इति "चतुर्थ्यर्थे बहुलं छन्दसि" (पा० २.३.६२) इति बहुलवचनात् सप्तम्यर्थे षष्ठी। राधः इति कर्मणि घञ्। आदाशुषे इति "दाशृ दाने" आङ्पूर्वः, लिटः क्वसुः, "दाश्वान् साह्वान् मीढ्वांश्च" (पा० ६.१.१२) इति अद्वित्वम् अनिट्त्वञ्च, चतुर्थ्येकवचने "वसोः सम्प्रसारणम्" (पा० ६.४.१३१) "शासिवसिघसीनाञ्च" (पा० ८.३.६०) इति षत्वम्। वहा इति "छन्दसि परेऽपि" (पा० १.४.८१) इत्याङः परप्रयोगः। अघा इति "कृत्यल्युटो बहुलम्" (पा० ३.३.११३) इति ण्यद्विषये यत्, व्यत्ययेन शसो जस्। देवा इति "दीर्घादटि समानपादे" (पा० ८.३.९) इति रुत्वम्, "आतोऽटि नित्यम्" (पा० ८.३.३) इत्यनुनासिकः, रेफस्य यत्वं यलोपश्च। उषर्बुध इति पृषोदरादित्वात् सकारस्य रेफः। बुधस्वरूपित्वमग्नेः प्रकटयन्ती बुधार्चने युज्यते ऋगियम्॥

## RV.1.50.1. =CHMB.5.13,pp.94,95;6.39,p.113.

'त्यं' तं 'देवं' 'केतवः' रश्मयः 'उद्वहन्ति'। किम्भूतम्? 'जातवेदसं' तेजोमयम्। किमर्थम् उद्वहन्ति? 'विश्वाय' विश्वस्य 'दृशे' दर्शनाय। अयमर्थः—तेजःस्वरूपं सूर्यं विश्वप्रकाशनाय रश्मयः उद्वहन्ति। उदु इत्युकारः सम्बोधने। दृशे इति "दृशे विख्ये च" (पा० ३.४.११) इति तुमर्थे केप्रत्ययः। विश्वाय इति षष्ठ्यर्थे चतुर्थी॥

## RV.1.50.2. =CHMB.6.42,p.114.

अकारो निषेधवाची। 'अक्ता' सारथिना 'त्यक्तुभिः,' अतिवेगात् प्राप्तदेशपरिहारशीलैः वाजिभिः 'अयं' सूर्यभक्तः 'सूराय' आदित्याय 'विश्वचक्षसे' जगदवलोकयित्रे न 'यत्येत' न नीयेत इति 'न' अपि तु नीयेत। अत्र दृष्टान्तः—'यथा' 'आयवः' प्राणिनां जीवितकालाः। ते यथा ज्योतिःपथादागत्य सूर्यसारथिना तद्वाहैः सूर्यसकाशं नीयन्ते। त्यक्तुभिः इति "सितनिगमि०" (उ० १.७०) इत्यादिना तुन् बहुलवचनात् त्यजेरपि भवति॥

## RV.1.50.4. =CHMB.6.43,pp.114,115.

हे 'सूर्य'! त्वं 'तरणिः' 'असिः' तारकः भवसि। तथा 'विश्वदर्शितः' असि अन्धकारे मग्नं विश्वं दर्शितं येन सः विश्वदर्शितः इति आहिताग्न्यादित्वाद् निष्ठायाः परनिपातः। तथा 'ज्योतिष्कृत्' असि आलोककारी भवसि। तथा 'विश्वम्' 'आभासि' दीपयसि, अन्तर्भावितण्यर्थो भातिः। किम्भूतं विश्वम्? 'रोचनं' सूर्यलोकसम्पर्काद् दीप्यमानम्। "अनुदात्तेतश्च हलादेः"। (पा० ३.२.१४९) इति युच्॥

## RV.1.50.7. =CHMB.6.44,pp.114,115.

हे 'सूर्य'! त्वं 'पृथ्वहाः' पृथुवासरः 'उदेषि'। किं कुर्वन्? 'द्यां' दिवं 'रजः' भूतलसन्निविष्टं 'मिमानः' परिच्छिन्दन्, तथा 'जन्मानि पश्यन्' उत्पत्तिभाजाम् उत्पत्तीः अवलोकयन्। कैः उदेषि? 'अक्तुभिः' कुटिलगमनैः हयैः इत्यर्थः। उदेषि इति व्यवहितोपसर्गसम्बन्धः। पृथ्वहाः इति पृथूनि अहानि यस्मात् पृथ्वहाः, मेषादिषट्के भारते वर्षे, तुलादिषट्के कुरुषु उत्तरेषु तेनायं सर्वकालं पृथ्वहाः सूर्यो भवति। सर्वमेतत् स्तुतिपरम्। अक्तुभिः इति "अक कुटिलायां गतौ" तस्मात् "सितनिगमि०" (उ० १.७०) इत्यादिना बहुवचनात् तुन्। एवम्भूतं भगवन्तम् उपतिष्ठ इति तात्पर्यम्॥

## RV.1.50.10.=CHMB.6.11,p.103.

त्रिष्टुबियं प्रस्कण्वदृष्टा सूर्यदेवता तदवेक्षणे विनियुक्ता। 'तमसस्परि' नैशात्तमस उपरि 'ज्योतिः' प्रकाशकं 'वयम्' 'उत्पश्यन्तः' 'सूर्यम्' 'अगन्म' इति सम्बन्धः। "आशंसायां भूतवच्च" (पा० ३.३.१३२) इति गच्छाम इत्यर्थः। कीदृशं ज्योतिः? 'उत्तरम्' उत्कृष्टम्। 'स्वः पश्यन्त उत्तरम्', स्वरिति सूर्यस्य नाम, ज्योतिर्मध्ये सूर्यं देवमुत्कृष्टम्। 'देवत्रा' 'देवं' पूजयितुं पश्यन्तः। ततः सूर्यस्य मण्डलं भित्त्वा 'उत्तमं' 'ज्योतिः' ब्रह्माख्यम् अगन्म इति वाक्यपरिस-

माप्तिः। देवत्रेति "देवमनुष्य०" (पा० ५.४.५६) इत्यादिना द्वितीयान्तात् त्राप्रत्ययः। अगन्मेति गमेः "मन्त्रे घसह्वर०" (पा० २.४.८०) इति च्लेर्लुक्, "मो नो धातोः" (पा० ८.२.६४) इत्यनुवृत्तौ "म्वोश्च" (पा० ८.२.६५) इति नकारः।

## RV.1.82.2.=CHMB.8.38,pp.141-143.

पितरः 'अक्षन्' अन्नादिषु हवींषि इति शेषः। 'हि' यस्मात् 'ते' 'अवप्रियाः' अवन्ति तर्पयन्ति यानि हवींषि तानि प्रियाणि येषां ते अवप्रियाः। अतः 'अमीमदन्त', स्वार्थे णिच्, अमादन् हर्षम् अलभन्त। तथा 'अधूषत' अकम्पिषत रोमाञ्चयुक्ताः इत्यर्थः। तथा 'अस्तोषत' श्राद्धकर्त्रा पृष्टाः सन्तो भक्ष्यद्रव्याणि अश्लाघिषत। किम्भूताः ते? 'स्वभानवः' स्वकीयाः भानवः दीप्तयः येषाम् तृप्तिविशेषेण दीप्तिविशेषसम्पन्नाः। तथा 'यः' ये पितरः 'विप्राः' पात्रब्राह्मणदेहस्थाः तात्स्थ्येन तच्छब्दप्रयोगः, विप्रशरीरसंस्थाः सर्वमेतच्चक्रुः इत्यर्थः। 'नविष्ठया' 'मती' अत्यन्ताभिनवया बुद्ध्या 'नु' हे 'इन्द्र'! परमैश्वर्ययुक्त! सूर्य! 'ते' तव 'हरी' हरीन् अश्वान् 'योजा' एकचित्तीभूय निरूपयति। अमावस्याशेषत्रिभागे चन्द्रमण्डलस्य सूर्यमण्डलादधस्तादवस्थितेः पितॄणां चन्द्रमण्डलाधारत्वात् सूर्याश्वनिरूपणं तेषां युज्यते। एतच्च विसर्जितानां विप्रदेहात् पुनश्चन्द्रमण्डलमुपगतानां तृप्त्या स्वस्थचित्तानां च इत्यूह्येयम्। यथा च ते हरीन् निरूपयन्ति तथा अहमपि पिण्डान् सुवर्तुलान् कर्तुं निरूपयामि इति तात्पर्यम्। अक्षन् इति अदेः लुङ् "मन्त्रे घसह्वर" इत्यादिना (पा० २.४.८०) च्लेर्लुक् "गमहन०" (पा० ६.४.९८) इत्युपधालोपः, चर्त्वम्, "शासिवसि०" (पा० ८.३.६०) इति षत्वम्। अधूषत इति "धूञ् कम्पने" गुणाभावः छान्दसः। नविष्ठया इति नवशब्दादातिशायनिक इष्ठन्। मती इति "सुपां सुलुक्" (पा० ७.१.३९) इत्यादिना पूर्वसवर्णः। योजेति समाधिवचनाद् युजेर्व्यत्ययेन शप्, झेर्लुक्, "द्व्यचोऽतस्तिङः" (पा० ६.३.१३५) इति दीर्घः। हरी इति "इयाडियाजीकाराणामुपसंख्यानम्" (वा०—पा० ७.१.३९) इति शस ईकारः॥

## RV.1.89.6.=CHMB.2.29,pp.25,26.

'नः' अस्मभ्यम् 'इन्द्रः' 'स्वस्ति' शान्ति 'दधातु'। किम्भूतः? 'वृद्धश्रवाः' वृद्धवाक्यकारी। तथा 'पूषा', 'विश्ववेदाः' सर्वज्ञः, तथा 'तार्क्ष्यः', 'अरिष्टनेमिः' अव्याहतगतिप्रसरः, तथा 'बृहस्पतिः'। स्वस्ति नः दधातु। "एतास्वतस्रो गातव्या वा" इति गृह्यम्।

## RV.1.90.6.=CHMB.8.32,pp,138,139.

'वाताः' वायवः 'मधु' 'ऋतायते' वहन्तीत्यर्थः। 'सिन्धवः' नद्यः 'मधु' 'क्षरन्ति'। 'ओषधीः' धान्यादयः 'माध्वीः' मधुयुक्ताः 'सन्तु'। 'नः' इति स्थानत्रयेऽपि योज्यम्॥

ऋतायते इति वचनव्यत्ययः। माध्वीः इति "ऋत्व्यवास्त्व्य" इत्यादिना (पा० ६.४.१७५) माध्वीशब्दो निपातितः, "वा छन्दसि" (पा० ६.१.१०६) इति पूर्वसवर्णः। एवम् ओषधीः इत्यत्र॥

## RV.1.90.7.=CHMB.8.33,pp.138,139.

तथा 'नक्तं' 'मधु' 'अस्तु' रात्रिः मधुमती भवतु। 'उत' अपि च 'उषसः' अपि मधुमत्यः

स्तु। 'पार्थिवम्' पृथिवीसम्बन्धि 'रजः' 'मधुमत्' अस्तु। 'द्यौः' स्वर्गः 'पिता' पितेव सर्वस्याधिगम्यत्वाद् 'मधु' 'अस्तु' मधुमयी भवतु ॥

## RV.1.90.8.=CHMB.8.34,p.139.

'वनस्पतिः' च 'मधुमान्' 'अस्तु'। 'नः' इति सर्वत्र योज्यम्। 'सूर्यः' च 'मधुमान्' अस्तु। 'गावः' च 'माध्वीः' मधुमत्यो 'भवन्तु'। 'नः' अस्माकम् ॥

मधुमाँ अस्तु इति पूर्ववत् रुत्वादि ॥

## RV.1.91.16.=CHMB.2.11,pp.17,18.

हे 'सोम' 'वृष्ण्यं' वृष्टिभवं जलं 'ते' तव 'समेतु' सङ्गच्छतां त्वत्सान्निध्यं यातु। अतस्त्व 'विश्वतः' विश्वम् 'आप्यायस्व'। अत एव 'वाजस्य' अन्नं 'सङ्गथे' सङ्गमे 'भवा' भव। "वृष्टेरन्नम्"[1] इति स्मृतेः। चन्द्रस्तुतिरेषा। आप्यायस्व इत्यन्तर्भावितण्यर्थः सकर्मकः। विश्वत इत्याद्यादित्वेन द्वितीयान्तात्तसिः। वृष्ण्यमिति वृष्णो वासवाद्भवतीति "भवे छन्दसि" (पा० ४.४.११०) इति यत्, छान्दस उपधालोपः। भवा इति "द्व्यचोऽतस्तिङः" (पा० ६.३.१३५) इति दीर्घः। सङ्गथशब्दः सङ्गमवाची ॥

## RV.1.94.1.=CHMB.1.7,pp.4,5.

जगतीत्रयमिदम्, कौत्स ऋषिः, अग्निर्देवता, पृष्ठयस्य षडहस्य षष्ठेऽहनि आग्निमारुते शस्त्रे परिसमूहने च विनियोगः। तथा च गृह्यम् (गो० ४.५.५) "इमं-भराम-शकेमेति तृचेन परिसमूहेत्"। 'इमं' 'स्तोमं' स्तवं 'वयं' 'सम्महेम', "मह पूजायाम्" सम्यक् पूजोपकरणयुक्तं कुर्याम। कस्मै? 'जातवेदसे' जातविद्यो वा जातधनो वा जातविज्ञानो वा जातवेदाः, तस्मै। किम्भूताय? 'अर्हते' स्तुतियोग्याय। कया? 'मनीषया' प्रज्ञया। 'रथमिव' सारथिरित्यध्याहार्य्यम्। 'हि' यस्मात् 'नः' अस्माकम् 'अस्य' अग्नेः सकाशात् 'भद्रा' कल्याणी मुख्या वा 'प्रमतिः' प्रकृष्टा बुद्धिः 'संसदि' जनसमाजे जायते, यथा वयमपि स्तोतुं जानीमः, तस्मात् हे 'अग्ने'! यस्त्वमेवम्भूतस्तस्य 'तव' 'सख्ये' मित्रत्वे स्थिताः 'वयं' केनचिद् दुरात्मना 'मा रिषाम' मा हिंसिष्महि तदाशास्यते। सम्महेमेति रिषामेति चात्र "अन्येषामपि दृश्यते" (पा० ६.३.१३७) इति दीर्घः ॥

## RV.1.94.3.=CHMB.1.9,pp.5,6,7.

हे 'अग्ने'! 'त्वम्' अस्माकं 'धियः' कर्माणि बुद्धीर्वा 'साधय' त्वदाराधनयोग्या निष्पादय, यथा 'वयं' 'त्वा' त्वां 'समिधं शकेम' परिचरितुं शक्नुयाम। 'ते' त्वयि 'आहुतं हविः' 'देवाः' इन्द्रादयः 'अदन्ति' भक्षयन्ति, त्वन्मुखत्वात् तेषाम्। अतस्त्वं 'तान्' 'आदित्यान्' अदितेः पुत्रान् आवाहय; 'हि' यस्मात् तान् आदित्यान् वयम् 'उश्मसि' कामयामहे उद्देश्यत्वेन इच्छामः। 'अग्ने, सख्ये, मा रिषाम वयं तव' इति सर्व्वत्र तुल्यम्। शकेम इति "लिङ्याशिष्यङ्" (पा० ३.१.८६)।

---

[1] Maitri. Up. 6.37

समिधमिति तुमर्थे "शकि णमुल्कमुलौ" (पा० ३.४.१२) इति कमुल्। साधया इति "अन्येषामपि" (पा० ६.३.१३७) इति दीर्घः। ते इति सप्तम्यर्थे षष्ठी। 'आदित्याँ' 'ताँ' इति "दीर्घादटि समानपादे" (पा० ८.३.९) इति रुत्वं, यलोपः, "आतोऽटि नित्यम्" (पा० ८.३.३) इत्यनुनासिकः। 'उश्मसि' इति वश कान्तौ, "ग्रहि" इत्यादि (पा० ६.१.१६) सूत्रेण सम्प्रसारणम्, "इदन्तो मसि" (पा० ७.१.४६) इति इकारान्तता ॥

## RV.1.94.4.=CHMB.1.8,pp.4,5,6.

हे 'अग्ने'! त्वदर्थम् 'इध्मं' यज्ञदारु 'भराम' आहराम। 'हवींषि' चरुप्रभृतीनि 'पर्वणा पर्वणा' पर्वणि पर्वणि 'चितयन्तः' उपपादयन्तः वयं 'कृणवाम' सम्पादयाम निर्वपामेति यावत्। तथा च श्रुतिः—"अमावास्यायाममावास्येन यजेत पौर्णमास्यां पौर्णमासेन" इति। किमर्थम्? 'प्रतराम्' अतिशयेन प्रकृष्टं सुदीर्घकालं 'जीवातवे' जीवनाय। किञ्च 'साधय धियः'—धीरिति कर्मणो नाम; तेनैतदुक्तं भवति,—अस्माभिः क्रियमाणानि कर्माणि साधय सफलानि कुरु इत्यर्थः। भरामेति—"हृग्रहोर्भश्छन्दसि" इति हकारस्य भकारः। पर्वणा पर्वणेति "सुपां सुलुक्"—(पा० ७.१.३९) इत्यादिना सप्तम्या आल्। कृणवामा इति साधया इति "अन्येषामपि दृश्यते" (पा० ६.३.१३७) इति दीर्घः॥

## RV.1.97.1.=CHMB.8.69,p.151.

हे तोय! 'नः' अस्मान् 'अपशोशुचत्' अत्यर्थमपगतशोकान् कुर्वत् 'अघम्' ज्ञातिमरणजनितं पापं शमयेति शेषः। अतोऽत्र जले स्नानं करवाम यथा पुरा ईदृशं दुःखमस्मान्नानुशोचयति। अपशोशुचदिति शुचेर्यङ्लुगन्ताच्छतृप्रत्ययः, आवहितोपसर्गसम्बन्धः॥

## RV.1.99.1.=CHMB.5.16,p.96.

त्रिष्टुबियम् आग्नेयी काश्यपदृष्टा आत्मरक्षायां विनियुक्ता। वयं 'जातवेदसे' अग्नये 'सोमं' यज्ञविशेषं 'सुनवाम' सन्दधीमहि। 'सः' जातवेदाः 'अरातीयतः' अरातिहितान् 'निदहाति' भस्मीकरोति। तथा 'वेदः' वेदं परिषदति राशीकरोति। 'नः' अस्माकम् इत्युभयत्र योज्यम्। तथा 'विश्वा' विश्वम् 'अग्निः' अग्निना 'दुर्गाणि' 'दुरितानि' अतिक्रामति 'नावा सिन्धुमिव' नौकया नदीमिव। सुनवाम इति लोट् उत्तमपुरुषबहुवचनं मस्, "नित्यं ङितः" (पा० ३.४.९९) इति सकारलोपः आट् गुणः। अरातीयतः इति अरातिशब्दात् हितार्थे "प्राक्क्रीताच्छः" (पा० ५.१.१) आद्यादित्वात् द्वितीयान्तात् तसिः। निदहाति इति लेट् आट्। वेदः इति द्वितीयार्थे प्रथमा। परिषदति इति लेट्, "सदिरप्रतेः" (पा० ८.३.६६) इति षत्वम्। विश्वा इति "सुपां सुलुक्" (पा० ७.१.३९) इत्यादिना सोः आत्वम्। दुरितानि इति दुःखेन इतः दुरितः, दुरित इवाचरति इत्याचारे क्विप् ततो लेट् आट्। अग्निः इति तृतीयैकवचनस्य सुः॥

## RV.1.115.1.=CHMB.5.14,p.95;6.40,p.113.

असौ सूर्यः 'उदगात्' उदितः अभवत्। किम्भूतः? 'मित्रस्य वरुणस्य अग्नेः' त्रयाणां देवानां 'चक्षुः'। पुनः किम्भूतः? 'देवानाम्' 'अनीकं' समूहरूपः। कथम् उदगात्? 'चित्रम्'

आश्चर्य्यं यथा भवति। उदयानन्तरं 'द्यावापृथिवी अन्तरिक्षं' च 'आप्रा:' पूरितवान् स्वेन रश्मिजालेन इत्यर्थः। पुनः किम्भूतः? 'जगतः' जङ्गमस्य 'तस्थुषः' स्थावरस्य च 'आत्मा', स्थावरजङ्गमात्मकसकलसंसारमयः अयमेव सूर्यः इत्यर्थः। [1]एतौ च मन्त्रौ सूर्योपस्थाने विनियुक्तौ सूर्यदैवतौ गायत्रीत्रिष्टुप्छन्दसौ प्रस्कण्व-कौत्सदृष्टौ यथाक्रमम्। आप्राः इति व्यत्ययेन तेः सिः ॥

---

[1] The dual number refers to the Mantras RV. 1.50.1. and RV. 1.115.1.

1. 122

प्र । वः । पान्तम् । रघुऽमन्यवः । अन्धः । यज्ञम् । रुद्राय । मीळ्हुषे । भरध्वम् । दिवः । अस्तोषि । असुरस्य । वीरैः । इषुध्याऽइव । मरुतः । रोदस्योः ॥ १ ॥ पत्नीऽइव । पूर्वऽहूतिम् । ववृधध्यै । उषसानक्ता । पुरुधा । विदाने इति । स्तरीः । न । अत्कम् । विऽउतम् । वसाना । सूर्यस्य । श्रिया । सुऽदृशी । हिरण्यैः ॥२॥ ममत्तु । नः । परिऽज्मा । वसर्हा । ममत्तु । वातः । अपाम् । वृषण्ऽवान् । शिशीतम् । इन्द्रापर्वता । युवम् । नः । तत् । नः । विश्वे । वरिवस्यन्तु । देवाः ॥३॥ उत । त्या । मे । यशसा । श्वेतनायै । व्यन्ता । पान्ता । औशिजः । हुवध्यै । प्र । वः । नपातम् । अपाम् । कृणुध्वम् । प्र । मातरा । रास्पिनस्य । आयोः ॥४॥ आ । वः । रुवण्युम् । औशिजः । हुवध्यै । घोषाऽइव । शंसम् । अर्जुनस्य । नंशे । प्र । वः । पूष्णे । दावने । आ । अच्छ । वोचेय । वसुऽतातिम् । अग्नेः ॥५॥ श्रुतम् । मे । मित्रावरुणा । हवा । इमा । उत । श्रुतम् । सदने । विश्वतः । सीम् । श्रोतु । नः । श्रोतुऽरातिः । सुऽश्रोतुः । सुऽक्षेत्रा । सिन्धुः । अत्ऽभिः ॥६॥ स्तुषे । सा । वाम् । वरुणा । मित्र । रातिः । गवाम् । शता । पृक्षऽयामेषु । पज्रे । श्रुतऽरथे । प्रियऽरथे । दधानाः । सद्यः । पुष्टिम् । निऽरुन्धानासः । अग्मन् ॥७॥ अस्य । स्तुषे । महिऽमघस्य । राधः । सचा । सनेम । नहुषः । सुऽवीराः । जनः । यः । पज्रेभ्यः । वाजिनीऽवान् । अश्वऽवतः । रथिनः । मह्यम् । सूरिः ॥८॥ जनः । यः । मित्रावरुणौ । अभिऽध्रुक् । अपः । न । वाम् । सुनोति । अक्ष्णयाऽध्रुक् । स्वयम् । सः । यक्ष्मम् । हृदये । नि । धत्ते । आप । यत् । ईम् । होत्राभिः । ऋतऽवा ॥९॥ सः । व्राधतः ।

नहुषः । दम्ऽसुजातः । शर्धःऽतरः । नराम् । गूर्तऽश्रवाः । विसृष्टऽरातिः ।
याति । बाळ्हऽसुत्वा । विश्वासु । पृत्ऽसु । सदम् । इत् । शूरः ॥१०॥
अध । ग्मन्त । नहुषः । हवम् । सूरेः । श्रोत । राजानः । अमृतस्य ।
मन्द्राः । नभःऽजुवः । यत् । निरवस्य । राधः । प्रऽशस्तये । महिना ।
रथऽवते ॥११॥ एतम् । शर्धम् । धाम । यस्य । सूरेः । इति । अवो-
चन् । दशऽतयस्य । नंशे । द्युम्नानि । येषु । वसुऽतातिः । ररन् ।
विश्वे । सन्वन्तु । प्रऽभृथेषु । वाजम् ॥१२॥ मन्दामहे । दशऽतयस्य ।
धासेः । द्विः । यत् । पञ्च । बिभ्रतः । यन्ति । अन्ना । किम् । इष्ट-
ऽअश्वः । इष्टऽरश्मिः । एते । ईशानासः । तरुषः । ऋञ्जते । नॄन्
॥१३॥ हिरण्यऽकर्णम् । मणिऽग्रीवम् । अर्णः । तत् । नः । विश्वे ।
वरिवस्यन्तु । देवाः । अर्यः । गिरः । सद्यः । आ । जग्मुषीः । आ ।
उस्राः । चाकन्तु । उभयेषु । अस्मे इति ॥१४॥ चत्वारः । मा ।
मशर्शारस्य । शिश्वः । त्रयः । राज्ञः । आयवसस्य । जिष्णोः । रथः ।
वाम् । मित्रावरुणा । दीर्घऽअप्साः । स्यूमऽगभस्तिः । सूरः । न ।
अद्यौत् ॥ १५ ॥

1. 123

पृथुः । रथः । दक्षिणायाः । अयोजि । आ । एनम् । देवासः ।
अमृतासः । अस्थुः । कृष्णात् । उत् । अस्थात् । अर्या । विऽहायाः ।
चिकित्सन्ती । मानुषाय । क्षयाय ॥१॥ पूर्वा । विश्वस्मात् । भुवनात् ।
अबोधि । जयन्ती । वाजम् । बृहती । सनुत्री । उच्चा । वि । अख्यत् ।
युवतिः । पुनःऽभूः । आ । उषाः । अगन् । प्रथमा । पूर्वऽहूतौ ॥२॥
यत् । अद्य । भागम् । विऽभजासि । नृऽभ्यः । उषः । देवि । मर्त्यऽत्रा ।

सुऽजाते । देवः । नः । अत्रं । सविता । दमूंनाः । अनागसः । वोचति ।
सूर्याय ॥३॥ गृहम्ऽगृहम् । अहना । याति । अच्छ । दिवेऽदिवे ।
अधि । नाम । दधाना । सिसासन्ती । द्योतना । शश्वत् । आ । अगात् ।
अग्रम्ऽअग्रम् । इत् । भजते । वसूनाम् ॥४॥ भगस्य । स्वसा । वरुं-
णस्य । जामिः । उषः । सुनृते । प्रथमा । जरस्व । पश्चा । सः ।
दध्याः । यः । अघस्यं । धाता । जयेम । तम् । दक्षिणया । रथेन
॥५॥ उत् । ईरताम् । सूनृताः । उत् । पुरम्ऽधीः । उत् । अग्नयः ।
शुशुचानासः । अस्थुः । स्पार्हा । वसूनि । तमसा । अपऽगूळ्हा ।
आविः । कृण्वन्ति । उषसः । विऽभातीः ॥६॥ अप । अन्यत् । एति ।
अभि । अन्यत् । एति । विषुरूपे इति विषुऽरूपे । अहनी इति । सम् ।
चरेते इति । परिऽक्षितोः । तमः । अन्या । गुहा । अकः । अद्यौत् ।
उषाः । शोशुचता । रथेन ॥७॥ सऽदृशीः । अद्य । सऽदृशीः । इत् ।
ऊँ इति । श्वः । दीर्घम् । सचन्ते । वरुणस्य । धाम । अनवद्याः ।
त्रिंशतम् । योजनानि । एकाऽएका । क्रतुम् । परि । यन्ति । सद्यः ॥८॥
जानती । अह्नः । प्रथमस्य । नाम । शुक्रा । कृष्णात् । अजनिष्ट ।
श्वितीची । ऋतस्य । योषा । न । मिनाति । धाम । अहःऽअहः । निः-
ऽकृतम् । आऽचरन्ती ॥९॥ कन्याऽइव । तन्वा । शाशदाना । एषि ।
देवि । देवम् । इयक्षमाणम् । सम्ऽस्मयमाना । युवतिः । पुरस्तात् ।
आविः । वक्षांसि । कृणुषे । विऽभाती ॥१०॥ सुऽसंकाशा । मातृमृष्टाऽ
ऽइव । योषा । आविः । तन्वम् । कृणुषे । दृशे । कम् । भद्रा । त्वम् ।
उषः । विऽतरम् । वि । उच्छ । न । तत् । ते । अन्याः । उषसः । नशन्त
॥११॥ अश्वऽवतीः । गोऽमतीः । विश्वऽवाराः । यतमानाः । रश्मिऽभिः ।

सूर्यस्य । परा । च । यन्ति । पुनः । आ । च । यन्ति । भद्रा । नाम ।
वहमानाः । उषसः ॥१२॥ ऋतस्य । रश्मिम् । अनुऽयच्छमाना । भद्रम्-
ऽभद्रम् । क्रतुम् । अस्मासु । धेहि । उषः । नः । अद्य । सुऽहवा ।
वि । उच्छ । अस्मासु । रायः । मघवत्ऽसु । च । स्युः इति स्युः ॥१३॥

I. 124

उषाः । उच्छन्ती । सम्ऽइधाने । अग्नौ । उत्ऽयन् । सूर्यः ।
उर्विया । ज्योतिः । अश्रेत् । देवः । नः । अत्र । सविता । नु ।
अर्थम् । प्र । असावीत् । द्विऽपत् । प्र । चतुःऽपत् । इत्यै ॥१॥ अमि-
नती । दैव्यानि । व्रतानि । प्रऽमिनती । मनुष्या । युगानि । ईयुषी-
णाम् । उपऽमा । शश्वतीनाम् । आऽयतीनाम् । प्रथमा । उषाः । वि ।
अद्यौत् ॥२॥ एषा । दिवः । दुहिता । प्रति । अदर्शि । ज्योतिः ।
वसाना । समना । पुरस्तात् । ऋतस्य । पन्थाम् । अनु । एति ।
साधु । प्रजानतीऽइव । न । दिशः । मिनाति ॥३॥ उपो इति । अद-
र्शि । शुन्ध्युवः । न । वक्षः । नोधाःऽइव । आविः । अकृत । प्रिया-
णि । अद्मऽसत् । न । ससतः । बोधयन्ती । शश्वत्ऽतमा । आ । अ-
गात् । पुनः । आऽईयुषीणाम् ॥४॥ पूर्वे । अर्धे । रजसः । अप्त्यस्य ।
गवाम् । जनित्री । अकृत । प्र । केतुम् । वि । ऊँ इति । प्रथते । वि-
ऽतरम् । वरीयः । आ । उभा । पृणन्ती । पित्रोः । उपऽस्था ॥५॥
एव । इत् । एषा । पुरुऽतमा । दृशे । कम् । न । अजामिम् । न ।
परि । वृणक्ति । जामिम् । अरेपसा । तन्वा । शाशदाना । न । अभीत् ।
ईषते । न । महः । विऽभाती ॥६॥ अभ्राताऽइव । पुंसः । एति ।
प्रतीची । गर्तऽआरुगिव । सनये । धनानाम् । जायाऽइव । पत्ये । उ-

शती । सुऽवासाः । उषाः । हस्राऽइव । नि । रिणीते । अप्सः ॥७॥
स्वसा । स्वस्रे । ज्यायस्यै । योनिम् । अरैक् । अप । एति । अस्याः ।
प्रतिचक्ष्यऽइव । विऽउच्छन्ती । रश्मिऽभिः । सूर्यस्य । अञ्जि । अङ्क्ते ।
समनगाःऽइव । व्राः ॥८॥ आसाम् । पूर्वासाम् । अहऽसु । स्वसृणाम् ।
अपरा । पूर्वाम् । अभि । एति । पश्चात् । ताः । प्रत्नऽवत् । नव्यसीः ।
नूनम् । अस्मे इति । रेवत् । उच्छन्तु । सुऽदिनाः । उषसः ॥९॥ प्र ।
बोधय । उषः । पृणतः । मघोनि । अबुध्यमानाः । पणयः । ससन्तु ।
रेवत् । उच्छ । मघवत्ऽभ्यः । मघोनि । रेवत् । स्तोत्रे । सूनृते । जर-
यन्ती ॥१०॥ अव । इयम् । अश्वैत् । युवतिः । पुरस्तात् । युङ्क्ते ।
गवाम् । अरुणानाम् । अनीकम् । वि । नूनम् । उच्छात् । असति ।
प्र । केतुः । गृहम्ऽगृहम् । उप । तिष्ठाते । अग्निः ॥११॥ उत् । ते ।
वयः । चित् । वसतेः । अपप्तन् । नरः । च । ये । पितुऽभाजः । वि-
उष्टौ । अमा । सते । वहसि । भूरि । वामम् । उषः । देवि । दाशुषे ।
मर्त्याय ॥१२॥ अस्तोढ्वम् । स्तोम्याः । ब्रह्मणा । मे । अवीवृधध्वम् ।
उशतीः । उषसः । युष्माकम् । देवीः । अवसा । सनेम । सहस्रिणम् ।
च । शतिनम् । च । वाजम् ॥१३॥

1. 125

प्रातरिति । रत्नम् । प्रातःऽइत्वा । दधाति । तम् । चिकित्वान् ।
प्रतिऽगृह्य । नि । धत्ते । तेन । प्रऽजाम् । वर्धयमानः । आयुः । रायः ।
पोषेण । सचते । सुऽवीरः ॥१॥ सुऽगुः । असत् । सुऽहिरण्यः । सुऽ-
अश्वः । बृहत् । अस्मै । वयः । इन्द्रः । दधाति । यः । त्वा । आऽय-
न्तम् । वसुना । प्रातःऽइत्वः । मुक्षीजयाऽइव । पदिम् । उत्ऽसिनाति

॥२॥ आयम् । अद्य । सुऽकृतम् । प्रातः । इच्छन् । इष्टेः । पुत्रम् ।
वसुऽमता । रथेन । अंशोः । सुतम् । पायय । मत्सरस्य । क्षयत्ऽवी-
रम् । वर्धय । सूनृताभिः ॥३॥ उप । क्षरन्ति । सिन्धवः । मयःऽभुवः ।
ईजानम् । च । यक्ष्यमाणम् । च । धेनवः । पृणन्तम् । च । पपुरिम् ।
च । श्रवस्यवः । घृतस्य । धाराः । उप । यन्ति । विश्वतः ॥४॥ ना-
कस्य । पृष्ठे । अधि । तिष्ठति । श्रितः । यः । पृणाति । सः । ह । देवेषु ।
गच्छति । तस्मै । आपः । घृतम् । अर्षन्ति । सिन्धवः । तस्मै । इयम् ।
दक्षिणा । पिन्वते । सदा ॥५॥ दक्षिणाऽवताम् । इत् । इमानि । चित्रा ।
दक्षिणाऽवताम् । दिवि । सूर्यासः । दक्षिणाऽवन्तः । अमृतम् । भजन्ते ।
दक्षिणाऽवन्तः । प्र । तिरन्ते । आयुः ॥६॥ मा । पृणन्तः । दुःऽइतम् ।
एनः । आ । अरन् । मा । जारिषुः । सूरयः । सुऽव्रतासः । अन्यः । ते-
षाम् । परिऽधिः । अस्तु । कः । चित् । अपृणन्तम् । अभि । सम् ।
यन्तु । शोकाः ॥७॥

1. 126

अमन्दान् । स्तोमान् । प्र । भरे । मनीषा । सिन्धौ । अधि । क्षियतः ।
भाव्यस्य । यः । मे । सहस्रम् । अमिमीत । सवान् । अतूर्तः । राजा ।
श्रवः । इच्छमानः ॥१॥ शतम् । राज्ञः । नाधमानस्य । निष्कान् । शतम् ।
अश्वान् । प्रऽयतान् । सद्यः । आदम् । शतम् । कक्षीवान् । असुरस्य ।
गोनाम् । दिवि । श्रवः । अजरम् । आ । ततान ॥२॥ उप । मा । श्यावाः ।
स्वनयेन । दत्ताः । वधूऽमन्तः । दश । रथासः । अस्थुः । षष्टिः । सह-
स्रम् । अनु । गव्यम् । आ । अगात् । सनत् । कक्षीवान् । अभिऽपित्वे ।
अह्नाम् ॥३॥ चत्वारिंशत् । दशऽरथस्य । शोणाः । सहस्रस्य । अग्रे । श्रे-

णिम् । नयन्ति । मदऽच्युतः । कृशनऽवतः । अत्यान् । कक्षीवन्तः । उत् ।
अमृक्षन्त । पज्राः ॥४॥ पूर्वाम् । अनु । प्रऽयतिम् । आ । ददे । वः ।
त्रीन् । युक्तान् । अष्टौ । अरिऽधायसः । गाः । सुऽबन्धवः । ये । विश्याः-
ऽइव । व्राः । अनस्वन्तः । श्रवः । ऐषन्त । पज्राः ॥५॥ आऽगधिता ।
परिऽगधिता । या । कशीकाऽइव । जङ्गहे । ददाति । मह्यम् । यादुरी ।
याशूनाम् । भोज्या । शता ॥६॥ उपऽउप । मे । परा । मृश । मा । मे । द-
भ्राणि । । मन्यथाः । सर्वा । अहम् । अस्मि । रोमशा । गन्धारीणाम्ऽइव ।
अविका ॥७॥

## 1. 127

अग्निम् । होतारम् । मन्ये । दास्वन्तम् । वसुम् । सूनुम् । सहसः ।
जातऽवेदसम् । विप्रम् । न । जातऽवेदसम् । यः । ऊर्ध्वया । सुऽअध्वरः ।
देवः । देवाच्या । कृपा । घृतस्य । विऽभ्राष्टिम् । अनु । वष्टि । शोचिषा ।
आऽजुह्वानस्य । सर्पिषः ॥१॥ यजिष्ठम् । त्वा । यजमानाः । हुवेम । ज्येष्ठम् ।
अङ्गिरसाम् । विप्र । मन्मऽभिः । विप्रेभिः । शुक्र । मन्मऽभिः । परिज्मानम्ऽइव ।
द्याम् । होतारम् । चर्षणीनाम् । शोचिःऽकेशम् । वृषणम् । यम् । इमाः । विशः ।
प्र । अवन्तु । जूतये । विशः ॥२॥ सः । हि । पुरु । चित् । ओजसा ।
विरुक्मता । दीद्यानः । भवति । द्रुहम्ऽतरः । परशुः । न । द्रुहम्ऽतरः ।
वीळु । चित् । यस्य । सम्ऽऋतौ । श्रुवत् । वनाऽइव । यत् । स्थिरम् ।
निःऽसहमानः । यमते । न । अयते । धन्वऽसहा । न । अयते ॥३॥
दृळ्हा । चित् । अस्मै । अनु । दुः । यथा । विदे । तेजिष्ठाभिः । अरणिऽभिः ।
दाष्टि । अवसे । अग्नये । दाष्टि । अवसे । प्र । यः । पुरूणि । गाहते । तक्षत् ।
वनाऽइव । शोचिषा । स्थिरा । चित् । अन्ना । नि । रिणाति । ओजसा ।

परुःऽपरुः । अनुऽघुष्य । वि । शस्त ॥१८॥ एकः । त्वष्टुः । अश्वस्य । विऽशस्ता । द्वा । यन्तारा । भवतः । तथा । ऋतुः । या । ते । गात्राणाम् । ऋतुऽथा । कृणोमि । ताऽता । पिण्डानाम् । प्र । जुहोमि । अग्नौ ॥१९॥ मा । त्वा । तपत् । प्रियः । आत्मा । अपिऽयन्तम् । मा । स्वऽधितिः । तन्वः । आ । तिस्थिपत् । ते । मा । ते । गृध्नुः । अविऽशस्ता । अतिऽहाय । छिद्रा । गात्राणि । असिना । मिथु । करिति कः ॥२०॥ न । वै । ऊँ इति । एतत् । म्रियसे । न । रिष्यसि । देवान् । इत् । एषि । पथिऽभिः । सुऽगेभिः । हरी इति । ते । युञ्जा । पृषती इति । अभूताम् । उप । अस्थात् । वाजी । धुरि । रासभस्य ॥२२॥ सुऽगव्यम् । नः । वाजी । सुऽअश्व्यम् । पुंसः । पुत्रान् । उत । विश्वऽपुषम् । रयिम् । अनागाःऽत्वम् । नः । अदितिः । कृणोतु । क्षत्रम् । नः । अश्वः । वनताम् । हविष्मान् ॥२२॥

1. 163

यत् । अक्रन्दः । प्रथमम् । जायमानः । उत्ऽयन् । समुद्रात् । उत । वा । पुरीषात् । श्येनस्य । पक्षा । हरिणस्य । बाहू इति । उपऽस्तुत्यम् । महि । जातम् । ते । अर्वन् ॥१॥ यमेन । दत्तम् । त्रितः । एनम् । अयुनक् । इन्द्रः । एनम् । प्रथमः । अधि । अतिष्ठत् । गन्धर्वः । अस्य । रशनाम् । अगृभ्णात् । सूरात् । अश्वम् । वसवः । निः । अतष्ट ॥२॥ असि । यमः । असि । आदित्यः । अर्वन् । असि । त्रितः । गुह्येन । व्रतेन । असि । सोमेन । समया । विऽपृक्तः । आहुः । ते । त्रीणि । दिवि । बन्धनानि ॥३॥ त्रीणि । ते । आहुः । दिवि । बन्धनानि । त्रीणि । अप्ऽसु । त्रीणि । अन्तरिति । समुद्रे । उतऽइव । मे ।

वरुणः । छन्त्सि । अर्वन् । यत्र । ते । आहुः । परमम् । जनित्रम् ॥४॥
इमा । ते । वाजिन् । अवऽमार्जनानि । इमा । शफानाम् । सनितुः । निऽ-
धाना । अत्र । ते । भद्राः । रशनाः । अपश्यम् । ऋतस्य । याः ।
अभिऽरक्षन्ति । गोपाः ॥५॥ आत्मानम् । ते । मनसा । आरात् ।
अजानाम् । अवः । दिवा । पतयन्तम् । पतङ्गम् । शिरः । अपश्यम् ।
पथिऽभिः । सुऽगेभिः । अरेणुऽभिः । जेहमानम् । पतत्रि ॥६॥ अत्र ।
ते । रूपम् । उत्ऽतमम् । अपश्यम् । जिगीषमाणम् । इषः । आ । पदे ।
गोः । यदा । ते । मर्तः । अनु । भोगम् । आनट् । आत् । इत् । ग्र-
सिष्ठः । ओषधीः । अजीगरिति ॥७॥ अनु । त्वा । रथः । अनु । मर्यः ।
अर्वन् । अनु । गावः । अनु । भगः । कनीनाम् । अनु । व्रातासः ।
तव । सख्यम् । ईयुः । अनु । देवाः । ममिरे । वीर्यम् । ते ॥८॥ हिर-
ण्यऽशृङ्गः । अयः । अस्य । पादाः । मनःऽजवाः । अवरः । इन्द्रः ।
आसीत् । देवाः । इत् । अस्य । हविःऽअद्यम् । आयन् । यः । अर्वन्तम् ।
प्रथमः । अधिऽअतिष्ठत् ॥९॥ ईर्मऽअन्तासः । सिलिकऽमध्यमासः ।
सम् । शूरणासः । दिव्यासः । अत्याः । हंसाःऽइव । श्रेणिऽशः । यत-
न्ते । यत् । आक्षिषुः । दिव्यम् । अज्मम् । अश्वाः ॥१०॥ तव । शरी-
रम् । पतयिष्णु । अर्वन् । तव । चित्तम् । वातःऽइव । ध्रजीमान् । तव ।
शृङ्गाणि । विऽस्थिता । पुरुऽत्रा । अरण्येषु । जर्भुराणा । चरन्ति ॥११॥
उप । प्र । अगात् । शसनम् । वाजी । अर्वा । देवद्रीचा । मनसा ।
दीध्यानः । अजः । पुरः । नीयते । नाभिः । अस्य । अनु । पश्चात् ।
कवयः । यन्ति । रेभाः ॥१२॥ उप । प्र । अगात् । परमम् । यत् ।
सधऽस्थम् । अर्वान् । अच्छ । पितरम् । मातरम् । च । अद्य । देवान् ।

जुष्टऽतमः । हि । गम्याः । अथ । आ । शास्ते । दाशुषे । वार्याणि ॥१२॥

1. 164.

अस्य । वामस्य । पलितस्य । होतुः । तस्य । भ्राता । मध्यमः ।
अस्ति । अश्नः । तृतीयः । भ्राता । घृतऽपृष्ठः । अस्य । अत्र । अप-
श्यम् । विश्पतिम् । सप्तऽपुत्रम् ॥१॥ सप्त । युञ्जन्ति । रथम् । एकऽच-
क्रम् । एकः । अश्वः । वहति । सप्तऽनामा । त्रिऽनाभि । चक्रम् ।
अजरम् । अनर्वम् । यत्र । इमा । विश्वा । भुवना । अधि । तस्थुः ॥२॥
इमम् । रथम् । अधि । ये । सप्त । तस्थुः । सप्तऽचक्रम् । सप्त । वहन्ति ।
अश्वाः । सप्त । स्वसारः । अभि । सम् । नवन्ते । यत्र । गवाम् । निऽ-
हिता । सप्त । नाम ॥३॥ कः । ददर्श । प्रथमम् । जायमानम् । अस्थन्-
ऽवन्तम् । यत् । अनस्था । बिभर्ति । भूम्याः । असुः । असृक् । आत्मा ।
क्व । स्वित् । कः । विद्वांसम् । उप । गात् । प्रष्टुम् । एतत् ॥४॥
पाकः । पृच्छामि । मनसा । अविऽजानन् । देवानाम् । एना । निऽहि-
ता । पदानि । वत्से । बष्कये । अधि । सप्त । तन्तून् । वि । तत्निरे ।
कवयः । ओतवै । ऊँ इति ॥५॥ अचिकित्वान् । चिकितुषः । चित् ।
अत्र । कवीन् । पृच्छामि । विद्मने । न । विद्वान् । वि । यः । तस्तम्भ ।
षट् । इमा । रजांसि । अजस्य । रूपे । किम् । अपि । स्वित् । एकम्
॥६॥ इह । ब्रवीतु । यः । ईम् । अङ्ग । वेद । अस्य । वामस्य । निऽहि-
तम् । पदम् । वेरिति वेः । शीर्ष्णः । क्षीरम् । दुह्रते । गावः । अस्य ।
वव्रिम् । वसानाः । उदकम् । पदा । अपुः ॥७॥ माता । पितरम् । ऋते ।
आ । बभाज । धीती । अग्रे । मनसा । सम् । हि । जग्मे । सा । बी-
भत्सुः । गर्भऽरसा । निऽविद्धा । नमस्वन्तः । इत् । उपऽवाकम् । ईयुः

॥८॥ युक्ता । माता । आसीत् । धुरि । दक्षिणायाः । अतिष्ठत् । गर्भः । वृजनीषु । अन्तः । इति । अमीमेत् । वत्सः । अनु । गाम् । अपश्यत् । विश्वऽरूप्यम् । त्रिषु । योजनेषु ॥९॥ तिस्रः । मातॄः । त्रीन् । पितॄन् । बिभ्रत् । एकः । ऊर्ध्वः । तस्थौ । न । ईम् । अव । ग्लपयन्ति । मन्त्रयन्ते । दिवः । अमुष्य । पृष्ठे । विश्वऽविदम् । वाचम् । अविश्वऽमिन्वाम् ॥१०॥ द्वादशऽअरम् । नहि । तत् । जराय । वर्वर्ति । चक्रम् । परि । द्याम् । ऋतस्य । आ । पुत्राः । अग्ने । मिथुनासः । अत्र । सप्त । शतानि । विंशतिः । च । तस्थुः ॥११॥ पञ्चऽपादम् । पितरम् । द्वादशऽआकृतिम् । दिवः । आहुः । परे । अर्धे । पुरीषिणम् । अथ । इमे । अन्ये । उपरे । विऽचक्षणम् । सप्तऽचक्रे । षट्ऽअरे । आहुः । अर्पितम् ॥१२॥ पञ्चऽअरे । चक्रे । परिऽवर्तमाने । तस्मिन् । आ । तस्थुः । भुवनानि । विश्वा । तस्य । न । अक्षः । तप्यते । भूरिऽभारः । सनात् । एव । न । शीर्यते । सऽनाभिः ॥१३॥ सऽनेमि । चक्रम् । अजरम् । वि । ववृते । उत्तानायाम् । दश । युक्ताः । वहन्ति । सूर्यस्य । चक्षुः । रजसा । एति । आऽवृतम् । तस्मिन् । आर्पिता । भुवनानि । विश्वा ॥१४॥ साकम्ऽजानाम् । सप्तथम् । आहुः । एकऽजम् । षट् । इत् । यमाः । ऋषयः । देवऽजाः । इति । तेषाम् । इष्टानि । विऽहितानि । धामऽशः । स्थात्रे । रेजन्ते । विऽकृतानि । रूपऽशः ॥१५॥ स्त्रियः । सतीः । तान् । ऊँ इति । मे । पुंसः । आहुः । पश्यत् । अक्षणऽवान् । न । वि । चेतत् । अन्धः । कविः । यः । पुत्रः । सः । ईम् । आ । चिकेत । यः । ता । विऽजानात् । सः । पितुः । पिता । असत् ॥१६॥ अवः । परेण । परः । एना । अवरेण । पदा । वत्सम् । बिभ्रती । गौः ।

उत् । अस्थात् । सा । कद्रीची । कम् । स्वित् । अर्धम् । परा । अगात् ।
क्व । स्वित् । सूते । नहि । यूथे । अन्तरिति ॥१७॥ अवः । परेण ।
पितरम् । यः । अस्य । अनुऽवेद । परः । एना । अवरेण । कविऽय-
मानः । कः । इह । प्र । वोचत् । देवम् । मनः । कुतः । अधि । प्रऽ-
जातम् ॥१८॥ ये । अर्वाञ्चः । तान् । ऊँ इति । पराचः । आहुः । ये ।
पराञ्चः । तान् । ऊँ इति । अर्वाचः । आहुः । इन्द्रः । च । या ।
चक्रथुः । सोम । तानि । धुरा । न । युक्ताः । रजसः । वहन्ति ॥१९॥
द्वा । सुऽपर्णा । सऽयुजा । सखाया । समानम् । वृक्षम् । परि । सस्व-
जाते इति । तयोः । अन्यः । पिप्पलम् । स्वादु । अत्ति । अनश्नन् ।
अन्यः । अभि । चाकशीति ॥२०॥ यत्र । सुऽपर्णाः । अमृतस्य ।
भागम् । अनिऽमेषम् । विदथा । अभिऽस्वरन्ति । इनः । विश्वस्य । भुव-
नस्य । गोपाः । सः । मा । धीरः । पाकम् । अत्र । आ । विवेश ॥२१॥
यस्मिन् । वृक्षे । मधुऽअदः । सुऽपर्णाः । निऽविशन्ते । सुवते । च ।
अधि । विश्वे । तस्य । इत् । आहुः । पिप्पलम् । स्वादु । अग्रे । तत् ।
न । उत् । नशत् । यः । पितरम् । न । वेद ॥२२॥ यत् । गायत्रे ।
अधि । गायत्रम् । आऽहितम् । त्रैस्तुभात् । वा । त्रैस्तुभम् । निःऽअत-
क्षत । यत् । वा । जगत् । जगति । आऽहितम् । पदम् । ये । इत् ।
तत् । विदुः । ते । अमृतऽत्वम् । आनशुः ॥२३॥ गायत्रेण । प्रति ।
मिमीते । अर्कम् । अर्केण । साम । त्रैस्तुभेन । वाकम् । वाकेन । वाकम् ।
द्विऽपदा । चतुःऽपदा । अक्षरेण । मिमते । सप्त । वाणीः ॥२४॥
जगता । सिन्धुम् । दिवि । अस्तभायत् । रथम्ऽतरे । सूर्यम् । परि ।
अपश्यत् । गायत्रस्य । सम्ऽइधः । तिस्रः । आहुः । ततः । मह्ना ।

प्र । रिरिचे । महिऽत्वा ॥२५॥ उप॑ । ह्वये । सुऽदुघा॑म् । धेनुम् ।
एताम् । सुऽहस्तः॑ । गोऽधुक् । उत । दोहत् । एनाम् । श्रेष्ठ॑म् । सवम् ।
सविता । साविषत् । नः । अभिऽइ॑द्धः । घर्मः॑ । तत् । ऊँ इति॑ । सु ।
प्र । वोचम् ॥२६॥ हिङ्ऽकृण्वती । वसुऽपत्नी॑ । वसू॑नाम् । वत्सम् ।
इच्छन्ती॑ । मन॑सा । अभि । आ । अगात् । दुहाम् । अश्विऽभ्या॑म् ।
पयः॑ । अघ्न्या । इयम् । सा । वर्ध॑ताम् । महते । सौभ॑गाय ॥२७॥
गौः । अमीमेत् । अनु॑ । वत्सम् । मिषन्त॑म् । मूर्धान॑म् । हिङ् । अकृ-
णोत् । मातवै॑ । ऊँ इति॑ । सृक्वा॑णम् । घर्मम् । अभि । वावशाना ।
मिमा॑ति । मायुम् । पय॑ते । पयः॑ऽभिः ॥२८॥ अयम् । सः । शिङ्क्ते ।
येन॑ । गौः । अभिऽवृ॑ता । मिमा॑ति । मायुम् । ध्वसनौ॑ । अधि॑ । श्रिता ।
सा । चित्तिऽभिः॑ । नि । हि । चकार॑ । मर्त्य॑म् । विऽद्युत् । भव॑न्ती ।
प्रति॑ । वव्रिम् । औहत ॥२९॥ अनत् । शये । तुरऽगा॑तु । जीवम् ।
एज॑त् । ध्रुवम् । मध्ये॑ । आ । पस्त्या॑नाम् । जीवः । मृतस्य॑ । चरति ।
स्वधाभिः॑ । अम॑र्त्यः । मर्त्ये॑न । सऽयो॑निः ॥३०॥ अप॑श्यम् । गोपाम् ।
अनि॑ऽपद्यमानम् । आ । च । परा॑ । च । पथिऽभिः॑ । चर॑न्तम् । सः ।
सध्रीचीः॑ । सः । विषू॑चीः । वसा॑नः । आ । वरीवर्ति । भुव॑नेषु । अन्त-
रिति॑ ॥३१॥ यः । ईम् । चकार॑ । न । सः । अस्य । वेद । यः । ईम् ।
ददर्श॑ । हिरु॑क् । इत् । नु । तस्मा॑त् । सः । मातुः । योना॑ । परि॑ऽ-
वीतः । अन्तः । बहुऽप्रजाः । निःऽऋ॑तिम् । आ । विवेश ॥३२॥ द्यौः ।
मे । पिता । जनिता । नाभिः॑ । अत्र॑ । बन्धुः॑ । मे । माता । पृथिवी ।
मही । इयम् । उत्तानयोः॑ । चम्वोः॑ । योनिः॑ । अन्तः । अत्र॑ । पिता ।
दुहितुः । गर्भ॑म् । आ । अधात् ॥३३॥ पृच्छामि॑ । त्वा । पर॑म् । अन्त॑म् ।

पृथिव्याः । पृच्छामि । यत्र । भुवनस्य । नाभिः । पृच्छामि । त्वा ।
वृष्णः । अश्वस्य । रेतः । पृच्छामि । वाचः । परमम् । विऽओम ॥३४॥
इयम् । वेदिः । परः । अन्तः । पृथिव्याः । अयम् । यज्ञः । भुवनस्य ।
नाभिः । अयम् । सोमः । वृष्णः । अश्वस्य । रेतः । ब्रह्मा । अयम् ।
वाचः । परमम् । विऽओम ॥३५॥ सप्त । अर्धऽगर्भाः । भुवनस्य । रेतः ।
विष्णोः । तिष्ठन्ति । प्रऽदिशा । विऽधर्मणि । ते । धीतिऽभिः । मनसा ।
ते । विपःऽचितः । परिऽभुवः । परि । भवन्ति । विश्वतः ॥३६॥ न । वि ।
जानामि । यत्ऽइव । इदम् । अस्मि । निण्यः । सम्ऽनद्धः । मनसा ।
चरामि । यदा । मा । आ । अगन् । प्रथमऽजाः । ऋतस्य । आत् ।
इत् । वाचः । अश्नुवे । भागम् । अस्याः ॥ ३७ ॥ अपाङ् । प्राङ् ।
एति । स्वधया । गृभीतः । अमर्त्यः । मर्त्येन । सऽयोनिः । ता । शश्वन्ता ।
विषूचीना । विऽयन्ता । नि । अन्यम् । चिक्युः । न । नि । चिक्युः ।
अन्यम् ॥ ३८ ॥ ऋचः । अक्षरे । परमे । विऽओमन् । यस्मिन् । देवाः ।
अधि । विश्वे । निऽसेदुः । यः । तत् । न । वेद । किम् । ऋचा ।
करिष्यति । ये । इत् । तत् । विदुः । ते । इमे । सम् । आसते ॥ ३९ ॥
सुयवसऽअत् । भगऽवती । हि । भूयाः । अथो इति । वयम् । भगऽवन्तः ।
स्याम । अद्धि । तृणम् । अघ्न्ये । विश्वऽदानीम् । पिब । शुद्धम् ।
उदकम् । आऽचरन्ती ॥ ४० ॥ गौरीः । मिमाय । सलिलानि । तक्षती ।
एकऽपदी । द्विऽपदी । सा । चतुःऽपदी । अष्टाऽपदी । नवऽपदी ।
बभूवुषी । सहस्रऽअक्षरा । परमे । विऽओमन् ॥ ४१ ॥ तस्याः ।
समुद्राः । अधि । वि । क्षरन्ति । तेन । जीवन्ति । प्रऽदिशः । चतस्रः ।
ततः । क्षरति । अक्षरम् । तत् । विश्वम् । उप । जीवति ॥ ४२ ॥ शक-

ऽमयम् । धूमम् । आरात् । अपश्यम् । विषुऽवता । परः । एना । अवरेण ।
उक्षाणम् । पृश्निम् । अपचन्त । वीराः । तानि । धर्माणि । प्रथमानि ।
आसन् ॥ ४३ ॥ त्रयः । केशिनः । ऋतुऽथा । वि । चक्षते । संवत्सरे ।
वपते । एकः । एषाम् । विश्वम् । एकः । अभि । चष्टे । शचीभिः । ध्राजिः
एकस्य । ददृशे । न । रूपम् ॥ ४४ ॥ चत्वारि । वाक् । परिऽमिता ।
पदानि । तानि । विदुः । ब्राह्मणाः । ये । मनीषिणः । गुहा । त्रीणि ।
निऽहिता । न । इङ्गयन्ति । तुरीयम् । वाचः । मनुष्याः । वदन्ति ॥४५॥
इन्द्रम् । मित्रम् । वरुणम् । अग्निम् । आहुः । अथो इति । दिव्यः । सः ।
सुऽपर्णः । गरुत्मान् । एकम् । सत् । विप्राः । बहुधा । वदन्ति । अग्निम् ।
यमम् । मातरिश्वानम् । आहुः ॥४६॥ कृष्णम् । निऽयानम् । हरयः ।
सुऽपर्णाः । अपः । वसानाः । दिवम् । उत् । पतन्ति । ते । आ ।
अववृत्रन् । सदनात् । ऋतस्य । आत् । इत् । घृतेन । पृथिवी । वि ।
उद्यते ॥ ४७ ॥ द्वादश । प्रऽधयः । चक्रम् । एकम् । त्रीणि । नभ्यानि ।
कः । ऊँ इति । तत् । चिकेत । तस्मिन् । साकम् । त्रिऽशताः । न ।
शङ्कवः । अर्पिताः । षष्टिः । न । चलाचलासः ॥ ४८ ॥ यः । ते ।
स्तनः । शशयः । यः । मयःऽभूः । येन । विश्वा । पुष्यसि । वार्याणि ।
यः । रत्नऽधाः । वसुऽवित् । यः । सुऽदत्रः । सरस्वति । तम् । इह ।
धातवे । करिति कः ॥ ४९ ॥ यज्ञेन । यज्ञम् । अयजन्त । देवाः ।
तानि । धर्माणि । प्रथमानि । आसन् । ते । ह । नाकम् । महिमानः ।
सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥ ५० ॥ समानम् ।
एतत् । उदकम् । उत् । च । एति । अव । च । अहऽभिः । भूमिम् ।
पर्जन्याः । जिन्वन्ति । दिवम् । जिन्वन्ति । अग्नयः ॥ ५१ ॥ दिव्यम् ।

सुऽपर्णम् । वायसम् । बृहन्तम् । अपाम् । गर्भम् । दर्शतम् । ओषधीनाम् ।
अभीपतः । वृष्टिऽभिः । तर्पयन्तम् । सरस्वन्तम् । अवसे । जोहवीमि ॥५२॥

1. 165

कया । शुभा । सऽवयसः । सऽनीळाः । समान्या । मरुतः । सम् ।
मिमिक्षुः । कया । मती । कुतः । आऽइतासः । एते । अर्चन्ति । शुष्मम् ।
वृषणः । वसुऽया ॥ १ ॥ कस्य । ब्रह्माणि । जुजुषुः । युवानः । कः ।
अध्वरे । मरुतः । आ । ववर्त । श्येनान्ऽइव । ध्रजतः । अन्तरिक्षे ।
केन । महा । मनसा । रीरमाम ॥ २ ॥ कुतः । त्वम् । इन्द्र । माहिनः ।
सन् । एकः । यासि । सत्ऽपते । किम् । ते । इत्था । सम् । पृच्छसे ।
सम्ऽअराणः । शुभानैः । वोचेः । तत् । नः । हरिऽवः । यत् । ते ।
अस्मे इति ॥ ३ ॥ ब्रह्माणि । मे । मतयः । शम् । सुतासः । शुष्मः ।
इयर्ति । प्रऽभृतः । मे । अद्रिः । आ । शासते । प्रति । हर्यन्ति । उक्था ।
इमा । हरी इति । वहतः । ता । नः । अच्छ ॥ ४ ॥ अतः । वयम् ।
अन्तमेभिः । युजानाः । स्वऽक्षत्रेभिः । तन्वः । शुम्भमानाः । महःऽभिः ।
एतान् । उप । युज्महे । नु । इन्द्र । स्वधाम् । अनु । हि । नः । बभूथ ॥५॥
क्व । स्या । वः । मरुतः । स्वधा । आसीत् । यत् । माम् । एकम् ।
सम्ऽअधत्त । अहिऽहत्ये । अहम् । हि । उग्रः । तविषः । तुविष्मान् ।
विश्वस्य । शत्रोः । अनमम् । वधऽस्नैः ॥ ६ ॥ भूरि । चकर्थ । युज्येभिः ।
अस्मे इति । समानेभिः । वृषभ । पौंस्येभिः । भूरीणि । हि । कृणवाम ।
शविष्ठ । इन्द्र । क्रत्वा । मरुतः । यत् । वशाम ॥ ७ ॥ वधीम् । वृत्रम् ।
मरुतः । इन्द्रियेण । स्वेन । भामेन । तविषः । बभूवान् । अहम् ।
एताः । मनवे । विश्वऽचन्द्राः । सुऽगाः । अपः । चकर । वज्रऽबाहुः ॥८॥

अनु॑त्तम् । आ । ते॒ । म॒घ॒ऽव॒न् । नकिः॑ । नु । न । त्वाऽवा॑न् । अ॒स्ति॒ । दे॒वता॑ । विदा॑नः । न । जाय॑मानः । नश॑ते । न । जा॒तः । यानि॑ । क॒रि॒ष्याः । कृ॒णु॒हि । प्र॒ऽवृ॒द्ध॒ ॥ ९ ॥ एक॑स्य । चि॒त् । मे॒ । वि॒ऽभु । अ॒स्तु । ओजः॑ । या । नु । द॒धृ॒ष्वान् । कृ॒णवै॑ । म॒नी॒षा । अ॒हम् । हि । उ॒ग्रः । म॒रु॒तः॒ । विदा॑नः । यानि॑ । च्यव॑म् । इन्द्रः॑ । इत् । ई॒शे॒ । ए॒षा॒म् ॥ १० ॥ अम॑न्दत् । मा॒ । म॒रु॒तः॒ । स्तोमः॑ । अत्र॑ । यत् । मे॒ । न॒रः॒ । श्रुत्य॑म् । ब्रह्म॑ । च॒क्र । इन्द्रा॑य । वृष्णे॑ । सुऽम॑खाय । मह्य॑म् । सख्ये॑ । सखा॑यः । त॒न्वे॑ । त॒नूभिः॑ ॥ ११ ॥ ए॒व । इत् । ए॒ते । प्रति॑ । मा॒ । रोच॑मानाः । अने॑द्यः । श्रवः॑ । आ । इषः॑ । दधा॑नाः । स॒म्ऽचक्ष्य॑ । म॒रु॒तः॒ । च॒न्द्रऽव॑र्णाः । अच्छा॑न्त । मे॒ । छ॒दया॑थ । च॒ । नू॒नम् ॥ १२ ॥ कः । नु । अत्र॑ । म॒रु॒तः॒ । म॒म॒हे॒ । वः॒ । प्र । या॒त॒न॒ । सखी॑न् । अच्छ॑ । स॒खा॒यः॒ । मन्मा॑नि । चि॒त्राः॒ । अ॒पि॒ऽवा॒तय॑न्तः । ए॒षा॒म् । भू॒त॒ । नवे॑दाः । मे॒ । ऋ॒ताना॑म् ॥ १३ ॥ आ । यत् । दु॒व॒स्यात् । दु॒वसे॑ । न । का॒रुः । अ॒स्मान् । च॒क्रे । मा॒न्यस्य॑ । मे॒धा । ओ इति॑ । सु । व॒र्त्त॒ । म॒रु॒तः॒ । विप्र॑म् । अच्छ॑ । इ॒मा । ब्रह्मा॑णि । ज॒रि॒ता । वः॒ । अ॒र्च॒त् ॥ १४ ॥ ए॒षः । वः॒ । स्तोमः॑ । म॒रु॒तः॒ । इ॒यम् । गीः । मा॒न्दा॒र्यस्य॑ । मा॒न्यस्य॑ । का॒रोः । आ । इ॒षा । या॒सी॒ष्ट॒ । त॒न्वे॑ । व॒याम् । वि॒द्याम॑ । इ॒षम् । वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥ १५ ॥

## 1. 166.

तत् । नु । वो॒चा॒म॒ । र॒भ॒साय॑ । जन्म॑ने । पूर्व॑म् । म॒हि॒ऽत्वम् । वृ॒ष॒भस्य॑ । के॒तवे॑ । ऐ॒धाऽइ॑व । याम॑न् । म॒रु॒तः॒ । तु॒वि॒ऽस्व॒नः॒ । यु॒धाऽइ॑व । शु॒क्राः॒ । त॒वि॒षाणि॑ । क॒र्त॒न॒ ॥१॥ नित्य॑म् । न । सू॒नुम् । मधु॑ । बिभ्र॑तः ।

उप । क्रीळन्ति । क्रीळाः । विदथेषु । घृष्वयः । नक्षन्ति । रुद्राः ।
अवसा । नमस्विनम् । न । मर्धन्ति । स्वऽतवसः । हविःऽकृतम् ॥२॥
यस्मै । ऊमासः । अमृताः । अरासत । रायः । पोषम् । च । हविषा ।
ददाशुषे । उक्षन्ति । अस्मै । मरुतः । हिताःऽइव । पुरु । रजांसि । पयसा ।
मयःऽभुवः ॥३॥ आ । ये । रजांसि । तविषीभिः । अव्यत । प्र । वः ।
एवासः । स्वऽयतासः । अध्रजन् । भयन्ते । विश्वा । भुवनानि । हर्म्या ।
चित्रः । वः । यामः । प्रऽयतासु । ऋष्टिषु ॥४॥ यत् । त्वेषऽयामाः ।
नदयन्त । पर्वतान् । दिवः । वा । पृष्ठम् । नर्याः । अचुच्यवुः । विश्वः ।
वः । अज्मन् । भयते । वनस्पतिः । रथियन्तीऽइव । प्र । जिहीते ।
ओषधिः ॥५॥ यूयम् । नः । उग्राः । मरुतः । सुऽचेतुना । अरिष्टऽ-
ग्रामाः । सुऽमतिम् । पिपर्तन । यत्र । वः । दिद्युत् । रदति । क्रिविःऽ-
दती । रिणाति । पश्वः । सुधिताऽइव । बर्हणा ॥६॥ प्र । स्कम्भऽ-
देष्णाः । अनवभ्रऽराधसः । अलातृणासः । विदथेषु । सुऽस्तुताः । अर्च-
न्ति । अर्कम् । मदिरस्य । पीतये । विदुः । वीरस्य । प्रथमानि । पौंस्या
॥७॥ शतभुजिऽभिः । तम् । अभिऽह्रुतेः । अघात् । पूःऽभिः । रक्षत ।
मरुतः । यम् । आवत । जनम् । यम् । उग्राः । तवसः । विऽरप्शिनः ।
पाथन । शंसात् । तनयस्य । पुष्टिषु ॥८॥ विश्वानि । भद्रा । मरुतः ।
रथेषु । वः । मिथस्पृध्याऽइव । तविषाणि । आऽहिता । अंसेषु । आ ।
वः । प्रऽपथेषु । खादयः । अक्षः । वः । चक्रा । समया । वि । ववृते
॥९॥ भूरीणि । भद्रा । नर्येषु । बाहुषु । वक्षःऽसु । रुक्माः । रभसासः ।
अञ्जयः । अंसेषु । एताः । पविषु । क्षुराः । अधि । वयः । न । पक्षान् ।
वि । अनु । श्रियः । धिरे ॥१०॥ महान्तः । मह्ना । विऽभ्वः । विऽ-

भूतयः । दूरेऽदृशः । ये । दिव्याःऽइव । स्तृऽभिः । मन्द्राः । सुऽजिह्वाः ।
स्वरितारः । आसऽभिः । सम्ऽमिश्लाः । इन्द्रे । मरुतः । परिऽस्तुभः
॥११॥ तत् । वः । सुऽजाताः । मरुतः । महिऽत्वनम् । दीर्घम् । वः ।
दात्रम् । अदितेःऽइव । व्रतम् । इन्द्रः । चन । त्यजसा । वि । हृणाति ।
तत् । जनाय । यस्मै । सुऽकृते । अराध्वम् ॥१२॥ तत् । वः । जामिऽ-
त्वम् । मरुतः । परे । युगे । पुरु । यत् । शंसम् । अमृतासः । आवत ।
अया । धिया । मनवे । श्रुष्टिम् । आव्य । साकम् । नरः । दंसनैः । आ ।
चिकित्रिरे ॥१३॥ येन । दीर्घम् । मरुतः । शूशवाम । युष्माकेन । परी-
णसा । तुरासः । आ । यत् । ततनन् । वृजने । जनासः । एभिः ।
यज्ञेभिः । तत् । अभि । इष्टिम् । अश्याम् ॥१४॥ एषः । वः । स्तोमः ।
मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः । आ । इषा ।
यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥१५॥

1. 167

सहस्रम् । ते । इन्द्र । ऊतयः । नः । सहस्रम् । इषः । हरिऽवः ।
गूर्तऽतमाः । सहस्रम् । रायः । मादयध्यै । सहस्रिणः । उप । नः ।
यन्तु । वाजाः ॥१॥ आ । नः । अवःऽभिः । मरुतः । यान्तु । अच्छ ।
ज्येष्ठेभिः । वा । बृहत्ऽदिवैः । सुऽमायाः । अध । यत् । एषाम् । नि-
ऽयुतः । परमाः । समुद्रस्य । चित् । धनयन्त । पारे ॥२॥ मिम्यक्ष ।
येषु । सुऽधिता । घृताची । हिरण्यऽनिर्निक् । उपरा । न । ऋष्टिः ।
गुहा । चरन्ती । मनुषः । न । योषा । सभाऽवती । विदथ्याऽइव । सम् ।
वाक् ॥३॥ परा । शुभ्राः । अयासः । यव्या । साधारण्याऽइव । मरुतः ।
मिमिक्षुः । न । रोदसी इति । अप । नुदन्त । घोराः । जुषन्त । वृधम् ।

सख्याय । देवाः ॥४॥ जोषत् । यत् । ईम् । असुर्या । सचध्यै । विसित-ऽस्तुका । रोदसी । नृऽमनाः । आ । सूर्याऽइव । विधतः । रथम् । गात् । त्वेषऽप्रतीका । नभसः । न । इत्या ॥५॥ आ । अस्थापयन्त । युवतिम् । युवानः । शुभे । निऽमिश्लाम् । विदथेषु । पज्राम् । अर्कः । यत् । वः । मरुतः । हविष्मान् । गायत् । गाथम् । सुतऽसोमः । दुवस्यन् ॥६॥ प्र । तम् । विवक्मि । वक्म्यः । यः । एषाम् । मरुताम् । महिमा । सत्यः । अस्ति । सचा । यत् । ईम् । वृषऽमनाः । अहम्ऽयुः । स्थिरा । चित् । जनीः । वहते । सुऽभागाः ॥७॥ पान्ति । मित्रावरुणौ । अवद्यात् । चयते । ईम् । अर्यमो इति । अप्रऽशस्तान् । उत । च्यवन्ते । अच्युता । ध्रुवाणि । ववृधे । ईम् । मरुतः । दातिऽवारः ॥८॥ नहि । नु । वः । मरुतः । अन्ति । अस्मे इति । आरात्तात् । चित् । शवसः । अन्तम् । आपुः । ते । धृष्णुना । शवसा । शूशुऽवांसः । अर्णः । न । द्वेषः । धृषता । परि । स्थुः ॥९॥ वयम् । अद्य । इन्द्रस्य । प्रेष्ठाः । वयम् । श्वः । वोचेमहि । सऽमर्ये । वयम् । पुरा । महि । च । नः । अनु । द्यून् । तत् । नः । ऋभुक्षाः । नराम् । अनु । स्यात् ॥१०॥ एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः । आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥११॥

1. 168.

यज्ञाऽयज्ञा । वः । समना । तुतुर्वणिः । धियम्ऽधियम् । वः । देव-ऽयाः । ऊँ इति । दधिध्वे । आ । वः । अर्वाचः । सुविताय । रोदस्योः । महे । ववृत्याम् । अवसे । सुवृक्तिऽभिः ॥१॥ वव्रासः । न । ये । स्वऽजाः । स्वऽतवसः । इषम् । स्वः । अभिऽजायन्त । धूतयः । सहस्रियासः ।

अपाम् । न । ऊर्मयः । आसा । गावः । वन्द्यासः । न । उक्षणः ॥२॥
सोमासः । न । ये । सुताः । तृप्तऽअंशवः । हृत्ऽसु । पीतासः । दुवसः ।
न । आसते । आ । एषाम् । अंसेषु । रम्भिणीऽइव । ररभे । हस्तेषु । खादिः ।
च । कृतिः । च । सम् । दधे ॥३॥ अव । स्वऽयुक्ताः । दिवः । आ ।
वृथा । ययुः । अमर्त्याः । कशया । चोदत । त्मना । अरेणवः । तुवि-
जाताः । अचुच्यवुः । दृळ्हानि । चित् । मरुतः । भ्राजत्ऽऋष्टयः ॥४॥
कः । वः । अन्तः । मरुतः । ऋष्टिऽविद्युतः । रेजति । त्मना । हन्वा-
ऽइव । जिह्वया । धन्वऽच्युतः । इषाम् । न । यामनि । पुरुऽप्रैषाः ।
अहन्यः । न । एतशः ॥५॥ क्व । स्वित् । अस्य । रजसः । महः । परम् ।
क्व । अवरम् । मरुतः । यस्मिन् । आऽयय । यत् । च्यवयथ । विथुराऽ-
इव । सम्ऽहितम् । वि । अद्रिणा । पतथ । त्वेषम् । अर्णवम् ॥६॥ सातिः ।
न । वः । अमऽवती । स्वःऽवती । त्वेषा । विऽपाका । मरुतः । पिपि-
ष्वती । भद्रा । वः । रातिः । पृणतः । न । दक्षिणा । पृथुऽजयी ।
असुर्याऽइव । जञ्जती ॥७॥ प्रति । स्तोभन्ति । सिन्धवः । पविऽभ्यः ।
यत् । अभ्रियाम् । वाचम् । उत्ऽईरयन्ति । अव । स्मयन्त । विऽद्युतः ।
पृथिव्याम् । यदि । घृतम् । मरुतः । प्रुष्णुवन्ति ॥८॥ असूत । पृश्निः ।
महते । रणाय । त्वेषम् । अयासाम् । मरुताम् । अनीकम् । ते । सप्सरासः ।
अजनयन्त । अभ्वम् । आत् । इत् । स्वधाम् । इषिराम् । परि । अपश्यन्
॥९॥ एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मा-
न्यस्य । कारोः । आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् ।
वृजनम् । जीरऽदानुम् ॥१०॥

## 1. 169.

महः । चित् । त्वम् । इन्द्र । यतः । एतान् । महः । चित् । असि । त्यजसः । वरूता । सः । नः । वेधः । मरुताम् । चिकित्वान् । सुम्ना । वनुष्व । तव । हि । प्रेष्ठा ॥१॥ अयुज्रन् । ते । इन्द्र । विश्वऽकृष्टीः । विदानासः । निःऽसिधः । मर्त्यऽत्रा । मरुताम् । पृत्सुतिः । हासमाना । स्वःऽमीळ्हस्य । प्रऽधनस्य । सातौ ॥२॥ अम्यक् । सा । ते । इन्द्र । ऋष्टिः । अस्मे इति । सनेमि । अभ्वम् । मरुतः । जुनन्ति । अग्निः । चित् । हि । स्म । अतसे । शुशुक्वान् । आपः । न । द्वीपम् । दधति । प्रयांसि ॥३॥ त्वम् । तु । नः । इन्द्र । तम् । रयिम् । दाः । ओजिष्ठया । दक्षिणयाऽइव । रातिम् । स्तुतः । च । याः । ते । चकनन्त । वायोः । स्तनम् । न । मध्वः । पीपयन्त । वाजैः ॥४॥ त्वे इति । रायः । इन्द्र । तोशऽतमाः । प्रऽनेतारः । कस्य । चित् । ऋतऽयोः । ते । सु । नः । मरुतः । मृळयन्तु । ये । स्म । पुरा । गातुयन्तिऽइव । देवाः ॥५॥ प्रति । प्र । याहि । इन्द्र । मीळ्हुषः । नॄन् । महः । पार्थिवे । सदने । यतस्व । अध । यत् । एषाम् । पृथुऽबुध्नासः । एताः । तीर्थे । न । अर्यः । पौंस्यानि । तस्थुः ॥६॥ प्रति । घोराणाम् । एतानाम् । अयासाम् । मरुताम् । शृण्वे । आऽयताम् । उपब्दिः । ये । मर्त्यम् । पृतनाऽयन्तम् । ऊमैः । ऋणऽवानम् । न । पतयन्त । सर्गैः ॥७॥ त्वम् । मानेभ्यः । इन्द्र । विश्वऽजन्या । रद । मरुत्ऽभिः । शुरुधः । गोऽअग्राः । स्तवानेभिः । स्तवसे । देव । देवैः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥८॥

## 1. 170

न । नूनम् । अस्ति । नो इति । श्वः । कः । तत् । वेद । यत् ।

अद्भुतम् । अन्यस्य । चित्तम् । अभि । सम्ऽचरेण्यम् । उत । आऽधीतम् । वि । नश्यति ॥१॥ किम् । नः । इन्द्र । जिघांससि । भ्रातरः । मरुतः । तेभिः । कल्पस्व । साधुऽया । मा । नः । सम्ऽअरणे । वधीः ॥२॥ किम् । नः । भ्रातः । अगस्त्य । सखा । सन् । अति । मन्यसे । विद्म । हि । ते । यथा । मनः । अस्मभ्यम् । इत् । न । दित्ससि ॥३॥ अरम् । कृण्वन्तु । वेदिम् । सम् । अग्निम् । इन्धताम् । पुरः । तत्र । अमृतस्य । चेतनम् । यज्ञम् । ते । तनवावहै ॥४॥ त्वम् । ईशिषे । वसुऽपते । वसूनाम् । त्वम् । मित्राणाम् । मित्रऽपते । धेष्ठः । इन्द्र । त्वम् । मरुत्ऽभिः । सम् । वदस्व । अध । प्र । अशान । ऋतुऽथा । हवींषि ॥५॥

1. 171

प्रति । वः । एना । नमसा । अहम् । एमि । सुऽउक्तेन । भिक्षे । सुऽमतिम् । तुराणाम् । रराणता । मरुतः । वेद्याभिः । नि । हेळः । धत्त । वि । मुचध्वम् । अश्वान् ॥१॥ एषः । वः । स्तोमः । मरुतः । नमस्वान् । हृदा । तष्टः । मनसा । धायि । देवाः । उप । ईम् । आ । यात । मनसा । जुषाणाः । यूयम् । हि । स्थ । नमसः । इत् । वृधासः ॥२॥ स्तुतासः । नः । मरुतः । मृळयन्तु । उत । स्तुतः । मघऽवा । शम्ऽभविष्ठः । ऊर्ध्वा । नः । सन्तु । कोम्या । वनानि । अहानि । विश्वा । मरुतः । जिगीषा ॥३॥ अस्मात् । अहम् । तविषात् । ईषमाणः । इन्द्रात् । भिया । मरुतः । रेजमानः । युष्मभ्यम् । हव्या । निऽशितानि । आसन् । तानि । आरे । चकृम । मृळत । नः ॥४॥ येन । मानासः । चितयन्ते । उस्राः । विऽउष्टिषु । शवसा । शश्वतीनाम् । सः ।

नः । मरुत्ऽभिः । वृषभ । श्रवः । धाः । उग्रः । उग्रेभिः । स्थिरः । सहःऽदाः ॥५॥ त्वम् । पाहि । इन्द्र । सहीयसः । नॄन् । भव । मरुत्ऽभिः । अवयातऽहेळाः । सुऽप्रकेतेभिः । ससहिः । दधानः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥६॥

1. 172.

चित्रः । वः । अस्तु । यामः । चित्रः । ऊती । सुऽदानवः । मरुतः । अहिऽभानवः ॥१॥ आरे । सा । वः । सुऽदानवः । मरुतः । ऋञ्जती । शरुः । आरे । अश्मा । यम् । अस्यथ ॥२॥ तृणऽस्कन्दस्य । नु । विशः । परि । वृङ्क्त । सुऽदानवः । ऊर्ध्वान् । नः । कर्त । जीवसे ॥३॥

1. 173

गायत् । साम । नभन्यम् । यथा । वेः । अर्चाम । तत् । ववृधानम् । स्वःऽवत् । गावः । धेनवः । बर्हिषि । अदब्धाः । आ । यत् । सद्मानम् । दिव्यम् । विवासान् ॥१॥ अर्चत् । वृषा । वृषऽभिः । स्वऽइदुहव्यैः । मृगः । न । अश्नः । अति । यत् । जुगुर्यात् । प्र । मन्दयुः । मनाम् । गूर्त । होता । भरते । मर्यः । मिथुना । यजत्रः ॥२॥ नक्षत् । होता । परि । सद्म । मिता । यन् । भरत् । गर्भम् । आ । शरदः । पृथिव्याः । क्रन्दत् । अश्वः । नयमानः । रुवत् । गौः । अन्तः । दूतः । न । रोदसी इति । चरत् । वाक् ॥३॥ ता । कर्म । अषऽतरा । अस्मै । प्र । च्यौत्नानि । देवऽयन्तः । भरन्ते । जुजोषत् । इन्द्रः । दस्मऽवर्चाः । नासत्याऽइव । सुग्म्यः । रथेऽस्थाः ॥४॥ तम् । ऊँ इति । स्तुहि । इन्द्रम् । यः । ह । सत्वा । यः । शूरः । मघऽवा । यः । रथेऽस्थाः । प्रतीचः । चित् । योधीयान् । वृषण्ऽवान् । ववव्रुषः । चित् । तमसः । विऽहन्ता ॥५॥ प्र । यत् । इत्था । महिना । नृऽभ्यः । अस्ति । अरम् ।

रोदसी इति । कृत्येः इति । न । अस्मै । सम् । विव्ये । इन्द्रः । वृजनम् । न । भूम । भर्ति । स्वधाऽवान् । ओपशम्ऽइव । द्याम् ॥६॥ समत्ऽसु । त्वा । शूर । सताम् । उराणम् । प्रपथिन्ऽतमम् । परिऽतंसयध्यै । सऽजोषसः । इन्द्रम् । मदे । क्षोणीः । सूरिम् । चित् । ये । अनुऽमदन्ति । वाजैः ॥७॥ एव । हि । ते । शम् । सवना । समुद्रे । आपः । यत् । ते । आसु । मदन्ति । देवीः । विश्वा । ते । अनु । जोष्या । भूत् । गौः । सूरीन् । चित् । यदि । धिषा । वेषि । जनान् ॥८॥ असाम । यथा । सुऽसखायः । एन । सुऽअभिष्टयः । नराम् । न । शंसैः । असत् । यथा । नः । इन्द्रः । वन्दनेऽस्थाः । तुरः । न । कर्म । नयमानः । उक्था ॥९॥ विऽस्पर्धसः । नराम् । न । शंसैः । अस्माक । असत् । इन्द्रः । वज्रऽहस्तः । मित्रऽयुवः । न । पूःऽपतिम् । सुऽशिष्टौ । मध्यऽयुवः । उप । शिक्षन्ति । यज्ञैः ॥१०॥ यज्ञः । हि । स्म । इन्द्रम् । कः । चित् । ऋन्धन् । जुहुराणः । चित् । मनसा । परिऽयन् । तीर्थे । न । अच्छ । ततृषाणम् । ओकः । दीर्घः । न । सिध्रम् । आ । कृणोति । अध्वा ॥११॥ मो इति । सु । नः । इन्द्र । अत्र । पृत्ऽसु । देवैः । अस्ति । हि । स्म । ते । शुष्मिन् । अवऽयाः । महः । चित् । यस्य । मीळ्हुषः । यव्या । हविष्मतः । मरुतः । वन्दते । गीः ॥१२॥ एषः । स्तोमः । इन्द्र । तुभ्यम् । अस्मे इति । एतेन । गातुम् । हरिऽवः । विदः । नः । आ । नः । ववृत्याः । सुविताय । देव । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥१३॥

1. 174.

त्वम् । राजा । इन्द्र । ये । च । देवाः । रक्ष । नॄन् । पाहि ।

असुर । त्वम् । अस्मान् । त्वम् । सत्ऽपतिः । मघऽवा । नः । तरुत्रः । त्वम् । सत्यः । वसवानः । सहःऽदाः ॥१॥ दनः । विशः । इन्द्र । मृध्रऽवाचः । सप्त । यत् । पुरः । शर्म । शारदीः । दर्त् । ऋणोः । अपः । अनवद्य । अर्णाः । यूने । वृत्रम् । पुरुऽकुत्साय । रन्धीः ॥२॥ अज । वृतः । इन्द्र । शूरऽपत्नीः । द्याम् । च । येभिः । पुरुऽहूत । नूनम् । रक्षो इति । अग्निम् । अशुषम् । तूर्वयाणम् । सिंहः । न । दमे । अपांसि । वस्तोः ॥३॥ शेषन् । नु । ते । इन्द्र । सस्मिन् । योनौ । प्रऽशस्तये । पवीरवस्य । मह्ना । सृजत् । अर्णांसि । अव । यत् । युधा । गाः । तिष्ठत् । हरी इति । धृषता । मृष्ट । वाजान् ॥४॥ वह । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । स्यूमन्यू इति । ऋज्रा । वातस्य । अश्वा । प्र । सूरः । चक्रम् । वृहतात् । अभीके । अभि । स्पृधः । यासिषत् । वज्रऽबाहुः ॥५॥ जघन्वान् । इन्द्र । मित्रेरून् । चोदऽप्रवृद्धः । हरिऽवः । अदाशून् । प्र । ये । पश्यन् । अर्यमणम् । सचा । आयोः । त्वया । शूर्ताः । वहमानाः । अपत्यम् ॥६॥ रपत् । कविः । इन्द्र । अर्कऽसातौ । क्षाम् । दासाय । उपऽवर्हणीम् । करिरिति कः । करत् । तिस्रः । मघऽवा । दानुऽचित्राः । नि । दुर्योणे । कुयवाचम् । मृधि । श्रेत् ॥७॥ सना । ता । ते । इन्द्र । नव्याः । आ । अगुः । सहः । नभः । अविऽरणाय । पूर्वीः । भिनत् । पुरः । न । भिदः । अदेवीः । ननमः । वधः । अदेवस्य । पीयोः ॥८॥ त्वम् । धुनिः । इन्द्र । धुनिऽमतीः । ऋणोः । अपः । सीराः । न । स्रवन्तीः । प्र । यत् । समुद्रम् । अति । शूर । पर्षि । पारय । तुर्वशम् । यदुम् । स्वस्ति ॥९॥ त्वम् । अस्माकम् । इन्द्र । विश्वध । स्याः । अवृकऽतमः । नराम् । नृऽपाता । सः । नः । विश्वासाम् । स्पृधाम् । सहःऽदाः । विद्याम । इषम् ।

वृजनम् । जीरऽदानुम् ॥ १० ॥

1. 175

मत्सि । अपायि । ते । महः । पात्रस्यऽइव । हरिऽवः । मत्सरः । मदः । वृषा । ते । वृष्णे । इन्दुः । वाजी । सहस्रऽसातमः ॥१॥ आ । नः । ते । गन्तु । मत्सरः । वृषा । मदः । वरेण्यः । सहऽवान् । इन्द्र । सानसिः । पृतनाषाट् । अमर्त्यः ॥२॥ त्वम् । हि । शूरः । सनिता । चोदयः । मनुषः । रथम् । सहऽवान् । दस्युम् । अव्रतम् । ओषः । पात्रम् । न । शोचिषा ॥३॥ मुषाय । सूर्यम् । कवे । चक्रम् । ईशानः । ओजसा । वह । शुष्णाय । वधम् । कुत्सम् । वातस्य । अश्वैः ॥४॥ शुष्मिन्ऽतमः । हि । ते । मदः । द्युम्निन्ऽतमः । उत । क्रतुः । वृत्रऽघ्ना । वरिवःऽविदा । मंसीष्ठाः । अश्वऽसातमः ॥५॥ यथा । पूर्वेभ्यः । जरितृऽभ्यः । इन्द्र । मयःऽइव । आपः । न । तृष्यते । बभूथ । ताम् । अनु । त्वा । निऽविदम् । जोहवीमि । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥६॥

1. 176

मत्सि । नः । वस्यःऽइष्टये । इन्द्रम् । इन्दो इति । वृषा । आ । विश । ऋघायमाणः । इन्वसि । शत्रुम् । अन्ति । न । विन्दसि ॥१॥ तस्मिन् । आ । वेशय । गिरः । यः । एकः । चर्षणीनाम् । अनु । स्वधा । यम् । उप्यते । यवम् । न । चर्कृषत् । वृषा ॥२॥ यस्य । विश्वानि । हस्तयोः । पञ्च । क्षितीनाम् । वसु । स्पाशयस्व । यः । अस्मऽध्रुक् । दिव्याऽइव । अशनिः । जहि ॥३॥ असुन्वन्तम् । । समम् । जहि । दुःऽनशम् । यः । न । ते । मयः । अस्मभ्यम् । अस्य । वेदनम् । दद्धि । सूरिः । चित् । ओहते ॥४॥ आवः । यस्य । द्विऽबर्हसः ।

अर्केषु । सानुषक् । असत् । आजौ । इन्द्रस्य । इन्दो इति । प्र । आवः ।
वाजेषु । वाजिनम् ॥५॥ यथा । पूर्वेभ्यः । जरितृऽभ्यः । इन्द्र । मयःऽ-
इव । आपः । न । तृप्यते । बभूथ । ताम् । अनु । त्वा । निऽविदम् ।
जोहवीमि । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥६॥

1. 177.

आ । चर्षणिऽप्राः । वृषभः । जनानाम् । राजा । कृष्टीनाम् । पुरु-
ऽहूतः । इन्द्रः । स्तुतः । श्रवस्यन् । अवसा । उप । मद्रिक् । युक्त्वा ।
हरी इति । वृषणा । आ । याहि । अर्वाङ् ॥१॥ ये । ते । वृषणः ।
वृषभासः । इन्द्र । ब्रह्मऽयुजः । वृषऽरथासः । अत्याः । तान् । आ ।
तिष्ठ । तेभिः । आ । याहि । अर्वाङ् । हवामहे । त्वा । सुते । इन्द्र ।
सोमे ॥२॥ आ । तिष्ठ । रथम् । वृषणम् । वृषा । ते । सुतः । सोमः ।
परिऽसिक्ता । मधूनि । युक्त्वा । वृषऽभ्याम् । वृषभ । क्षितीनाम् । हरि-
ऽभ्याम् । याहि । प्रऽवता । उप । मद्रिक् ॥३॥ अयम् । यज्ञः । देव-
ऽयाः । अयम् । मियेधः । इमा । ब्रह्माणि । अयम् । इन्द्र । सोमः ।
स्तीर्णम् । बर्हिः । आ । तु । शक्र । प्र । याहि । पिब । निऽसद्य । वि ।
मुच । हरी इति । इह ॥४॥ ओ इति । सुऽस्तुतः । इन्द्र । याहि ।
अर्वाङ् । उप । ब्रह्माणि । मान्यस्य । कारोः । विद्याम । वस्तोः ।
अवसा । गृणन्तः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥५॥

1. 178.

यत् । ह । स्या । ते । इन्द्र । श्रुष्टिः । अस्ति । यया । बभूथ । जरि-
तृऽभ्यः । ऊती । मा । नः । कामम् । महयन्तम् । आ । धक् । विश्वा ।
ते । अश्याम् । परि । आपः । आयोः ॥१॥ न । घ । राजा । इन्द्रः ।

आ । दभन् । नः । या । नु । स्वसारा । कृणवन्त । योनौ । आपः । चित् । अस्मै । सुऽतुकाः । अवेषन् । गमत् । नः । इन्द्रः । सख्या । वयः । च ॥२॥ जेता । नृऽभिः । इन्द्रः । पृत्ऽसु । शूरः । श्रोता । हवम् । नाधमानस्य । कारोः । प्रऽभर्ता । रथम् । दाशुषः । उपाके । उत्ऽयन्ता । गिरः । यदि । च । त्मना । भूत् ॥३॥ एव । नृऽभिः । इन्द्रः । सुऽश्रवस्या । प्रऽखादः । पृक्षः । अभि । मित्रिणः । भूत् । सऽमर्ये । इषः । स्तवते । विऽवाचि । सत्राऽकरः । यजमानस्य । शंसः ॥४॥ त्वया । वयम् । मघऽवन् । इन्द्र । शत्रून् । अभि । स्याम । महतः । मन्यमानान् । त्वम् । त्राता । त्वम् । ऊँ इति । नः । वृधे । भूः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥५॥

1. 179.

पूर्वीः । अहम् । शरदः । शश्रमाणा । दोषाः । वस्तोः । उषसः । जरयन्तीः । मिनाति । श्रियम् । जरिमा । तनूनाम् । अपि । ऊँ इति । नु । पत्नीः । वृषणः । जगम्युः ॥१॥ ये । चित् । हि । पूर्वे । ऋतऽसापः । आसन् । साकम् । देवेभिः । अवदन् । ऋतानि । ते । चित् । अव । असुः । नहि । अन्तम् । आपुः । सम् । ऊँ इति । नु । पत्नीः । वृषऽभिः । जगम्युः ॥२॥ न । मृषा । श्रान्तम् । यत् । अवन्ति । देवाः । विश्वाः । इत् । स्पृधः । अभि । अश्नवाव । जयाव । इत् । अत्र । शतऽनीथम् । आजिम् । यत् । सम्यञ्चा । मिथुनौ । अभि । अजाव ॥३॥ नदस्य । मा । रुधतः । कामः । आ । अगन् । इतः । आऽजातः । अमुतः । कुतः । चित् । लोपामुद्रा । वृषणम् । निः । रिणाति । धीरम् । अधीरा । धयति । श्वसन्तम् ॥४॥ इमम् । नु । सोमम् । अन्तितः । हृत्ऽसु ।

पीतम् । उप । ब्रुवे । यत् । सीम् । आगः । चकृम । तत् । सु । मृळतु ।
पुलुऽकामः । हि । मर्त्यः ॥५॥ अगस्त्यः । खनमानः । खनित्रैः । प्रऽ-
जाम् । अपत्यम् । बलम् । इच्छमानः । उभौ । वर्णौ । ऋषिः । उग्रः ।
पुपोष । सत्याः । देवेषु । आऽशिषः । जगाम ॥६॥

I. 180.

युवोः । रजांसि । सुऽयमासः । अश्वाः । रथः । यत् । वाम् ।
परि । अर्णांसि । दीयत् । हिरण्ययाः । वाम् । पवयः । प्रुषायन् । मध्वः ।
पिबन्तौ । उषसः । सचेथे इति ॥१॥ युवम् । अत्यस्य । अव । नक्षथः ।
यत् । विऽपत्मनः । नर्यस्य । प्रऽयज्योः । स्वसा । यत् । वाम् । विश्व-
गूर्ती इति विश्वऽगूर्ती । भराति । वाजाय । ईट्टे । मधुऽपौ । इषे । च
॥२॥ युवम् । पयः । उस्रियायाम् । अधत्तम् । पक्वम् । आमायाम् ।
अव । पूर्व्यम् । गोः । अन्तः । यत् । वनिनः । वाम् । ऋतप्सू इत्यृत-
ऽप्सू । ह्वारः । न । शुचिः । यजते । हविष्मान् । ॥३॥ युवम् । ह ।
घर्मम् । मधुऽमन्तम् । अत्रये । अपः । न । क्षोदः । अवृणीतम् । एषे ।
तत् । वाम् । नरौ । अश्विना । पश्वःऽइष्टिः । रथ्याऽइव । चक्रा । प्रति ।
यन्ति । मध्वः ॥४॥ आ । वाम् । दानाय । ववृतीय । दस्रा । गोः ।
ओहेन । तौग्र्यः । न । जिव्रिः । अपः । क्षोणी इति । सचते । माहिना ।
वाम् । जूर्णः । वाम् । अक्षुः । अंहसः । यजत्रा ॥५॥ नि । यत् । युवेथे
इति । निऽयुतः । सुदानू इति सुऽदानू । उप । स्वधाभिः । सृजथः ।
पुरम्ऽधिम् । प्रेषत् । वेषत् । वातः । न । सूरिः । आ । महे । ददे ।
सुऽव्रतः । न । वाजम् ॥६॥ वयम् । चित् । हि । वाम् । जरितारः ।
सत्याः । विपन्यामहे । वि । पणिः । हितऽवान् । अध । चित् । हि ।

स्म । अश्विनौ । अनिन्द्या । पाथः । हि । स्म । वृषणौ । अन्तिऽदेवम् ॥७॥ युवाम् । चित् । हि । स्म । अश्विनौ । अनु । द्यून् । विऽरुद्रस्य । प्रऽस्र-वणस्य । सातौ । अगस्त्यः । नराम् । नृषु । प्रऽशस्तः । काराधुनीऽइव । चितयत् । सहस्रैः ॥८॥ प्र । यत् । वहेथे इति । महिना । रथस्य । प्र । स्यन्द्रा । याथः । मनुषः । न । होता । धत्तम् । सूरिऽभ्यः । उत । वा । सुऽअश्व्यम् । नासत्या । रयिऽसाचः । स्याम ॥९॥ तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । स्तोमैः । अश्विना । सुविताय । नव्यम् । अरिष्ट-ऽनेमिम् । परि । द्याम् । इयानम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥१०॥

1. 181.

कत् । ऊँ इति । प्रेष्ठौ । इषाम् । रयीणाम् । अध्वर्यन्ता । यत् । उत्ऽनि-नीथः । अपाम् । अयम् । वाम् । यज्ञः । अकृत । प्रऽशस्तिम् । वसुधिती इति वसुऽधिती । अवितारा । जनानाम् ॥१॥ आ । वाम् । अश्वासः । शुचयः । पयःऽपाः । वातऽरंहसः । दिव्यासः । अत्याः । मनःऽजुवः । वृषणः । वीतऽपृष्ठाः । आ । इह । स्वऽराजः । अश्विना । वहन्तु ॥२॥ आ । वाम् । रथः । अवनिः । न । प्रवत्वान् । सृप्रऽवन्धुरः । सुविताय । गम्याः । वृष्णः । स्थातारा । मनसः । जवीयान् । अहम्ऽपूर्वः । यजतः । धिष्ण्या । यः ॥३॥ इहऽइह । जाता । सम् । अवावशीताम् । अरेपसा । तन्वा । नामऽभिः । स्वैः । जिष्णुः । वाम् । अन्यः । सुऽमखस्य । सूरिः । दिवः । अन्यः । सुऽभगः । पुत्रः । ऊहे ॥४॥ प्र । वाम् । निऽचेरुः । ककुहः । वशान् । अनु । पिशङ्गऽरूपः । सदनानि । गम्याः । हरी इति । अन्यस्य । पीपयन्त । वाजैः । मथ्ना । रजांसि । अश्विना । वि । घोषैः ॥५॥ प्र ।

वाम् । शरत्ऽवान् । वृषभः । न । निष्षाट् । पूर्वीः । इषः । चरति । मध्वः । इष्णन् । एवैः । अन्यस्य । पीपयन्त । वाजैः । वेषन्तीः । ऊर्ध्वाः । नद्यः । नः । आ । अगुः ॥६॥ असर्जि । वाम् । स्थविरा । वेधसा । गीः । बाळ्हे । अश्विना । त्रेधा । क्षरन्ती । उपऽस्तुतौ । अवतम् । नाधमानम् । यामन् । अयामन् । शृणुतम् । हवम् । मे ॥७॥ उत । स्या । वाम् । रुशतः । वप्ससः । गीः । त्रिऽबर्हिषि । सदसि । पिन्वते । नॄन् । वृषा । वाम् । मेघः । वृषणा । पीपाय । गोः । न । सेके । मनुषः । दशस्यन् ॥८॥ युवाम् । पूषाऽइव । अश्विना । पुरम्ऽधिः । अग्निम् । उषाम् । न । जरते । हविष्मान् । हुवे । यत् । वाम् । वरिवस्या । गृणानः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥९॥

1. 182.

अभूत् । इदम् । वयुनम् । ओ इति । सु । भूषत । रथः । वृषणऽवान् । मदत । मनीषिणः । धियम्ऽजिन्वा । धिष्ण्या । विश्पलावसू इति । दिवः । नपाता । सुऽकृते । शुचिऽव्रता ॥१॥ इन्द्रऽतमा । हि । धिष्ण्या । मरुत्ऽतमा । दस्रा । दंसिष्ठा । रथ्या । रथिऽतमा । पूर्णम् । रथम् । वहेथे इति । मध्वः । आऽचितम् । तेन । दाश्वांसम् । उप । याथः । अश्विना ॥२॥ किम् । अत्र । दस्रा । कृणुथः । किम् । आसाथे इति । जनः । यः । कः । चित् । अहविः । महीयते । अति । क्रमिष्टम् । जुरतम् । पणेः । असुम् । ज्योतिः । विप्राय । कृणुतम् । वचस्यवे ॥३॥ जम्भयतम् । अभितः । रायतः । शुनः । हतम् । मृधः । विदथुः । तानि । अश्विना । वाचम्ऽवाचम् । जरितुः । रत्निनीम् । कृतम् । उभा । शंसम् । नासत्या । अवतम् । मम ॥४॥ युवम् । एतम् । चक्रथुः । सिन्धुषु । प्लवम् । आत्मन्ऽवन्तम् ।

पक्षिणम् । तौग्र्याय । कम् । येन । देवऽत्रा । मनसा । निःऽऊहथुः ।
सुऽपप्तनि । पेतथुः । क्षोदसः । महः ॥५॥ अवऽविद्धम् । तौग्र्यम् ।
अप्ऽसु । अन्तः । अनारम्भणे । तमसि । प्रऽविद्धम् । चतस्रः । नावः ।
जठलस्य । जुष्टाः । उत् । अश्विऽभ्याम् । इषिताः । पारयन्ति ॥६॥ कः ।
स्वित् । वृक्षः । निःऽस्थितः । मध्ये । अर्णसः । यम् । तौग्र्यः । नाधितः ।
परिऽअसस्वजत् । पर्णा । मृगस्य । पतरोःऽइव । आऽरभे । उत् । अश्विना ।
ऊहथुः । श्रोमताय । कम् ॥७॥ तत् । वाम् । नरा । नासत्यौ । अनु ।
स्यात् । यत् । वाम् । मानासः । उचथम् । अवोचन् । अस्मात् । अद्य ।
सदसः । सोम्यात् । आ । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥८॥

1. 183.

तम् । युञ्जाथाम् । मनसः । यः । जवीयान् । त्रिऽवन्धुरः । वृषणा ।
यः । त्रिऽचक्रः । येन । उपऽयाथः । सुऽकृतः । दुरोणम् ।
त्रिऽधातुना । पतथः । विः । न । पर्णैः ॥१॥ सुऽवृत् । रथः ।
वर्तते । यन् । अभि । क्षाम् । यत् । तिष्ठथः । क्रतुऽमन्ता । अनु । पृक्षे ।
वपुः । वपुष्या । सचताम् । इयम् । गीः । दिवः । दुहित्रा । उषसा ।
सचेथे इति ॥२॥ आ । तिष्ठतम् । सुऽवृतम् । यः । रथः । वाम् । अनु ।
व्रतानि । वर्तते । हविष्मान् । येन । नरा । नासत्या । इषयध्यै । वर्तिः ।
याथः । तनयाय । त्मने । च ॥३॥ मा । वाम् । वृकः । मा । वृकीः ।
आ । दधर्षीत् । मा । परि । वर्क्तम् । उत । मा । अति । धक्तम् । अयम् ।
वाम् । भागः । निऽहितः । इयम् । गीः । दस्रौ । इमे । वाम् । निऽधयः ।
मधूनाम् ॥४॥ युवाम् । गोतमः । पुरुऽमीळ्हः । अत्रिः । दस्रा । हवते ।
अवसे । हविष्मान् । दिशम् । न । दिष्टाम् । ऋजुयाऽइव । यन्ता ।

आ । मे । हवम् । नासत्या । उप । यातम् ॥५॥ अतारिष्म । तमसः ।
पारम् । अस्य । प्रति । वाम् । स्तोमः । अश्विनौ । अधायि । आ ।
इह । यातम् । पथिऽभिः । देवऽयानैः । विद्याम । इषम् । वृजनम् ।
जीरऽदानुम् ॥६॥

1. 184.

ता । वाम् । अद्य । तौ । अपरम् । हुवेम । उच्छन्त्याम् । उषसि ।
वह्निः । उक्थैः । नासत्या । कुह । चित् । सन्तौ । अर्यः । दिवः ।
नपाता । सुदाःऽतराय ॥१॥ अस्मे इति । ऊँ इति । सु । वृषणा । माद-
येथाम् । उत् । पणीन् । हतम् । ऊर्म्या । मदन्ता । श्रुतम् । मे । अ-
च्छोक्तिऽभिः । मतीनाम् । एष्टा । नरा । निऽचेतारा । च । कर्णैः ॥२॥
श्रिये । पूषन् । इषुकृताऽइव । देवा । नासत्या । वहतुम् । सूर्यायाः ।
वच्यन्ते । वाम् । ककुहाः । अप्ऽसु । जाताः । युगा । जूर्णाऽइव । वरु-
णस्य । भूरेः ॥३॥ अस्मे इति । सा । वाम् । माध्वी इति । रातिः ।
अस्तु । स्तोमम् । हिनोतम् । मान्यस्य । कारोः । अनु । यत् । वाम् ।
श्रवस्या । सुदानू इति सुऽदानू । सुऽवीर्याय । चर्षणयः । मदन्ति ॥४॥
एषः । वाम् । स्तोमः । अश्विनौ । अकारि । मानेभिः । मघऽवाना ।
सुऽवृक्ति । यातम् । वर्तिः । तनयाय । त्मने । च । अगस्त्ये । नासत्या ।
मदन्ता ॥५॥ अतारिष्म । तमसः । पारम् । अस्य । प्रति । वाम् ।
स्तोमः । अश्विनौ । अधायि । आ । इह । यातम् । पथिऽभिः । देवऽ-
यानैः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥६॥

1. 185.

कतरा । पूर्वा । कतरा । अपरा । अयोः । कथा । जाते इति ।

कवयः । कः । वि । वेद । विश्वम् । त्मना । विभृतः । यत् । ह ।
नाम । वि । वर्तेते इति । अहनी इति । चक्रियाऽइव ॥१॥ भूरिम् । द्वे
इति । अचरन्ती इति । चरन्तम् । पत्ऽवन्तम् । गर्भम् । अपदी इति ।
दधाते इति । नित्यम् । नः । सूनुम् । पित्रोः । उपऽस्थे । द्यावा । रक्ष-
तम् । पृथिवी इति । नः । अभ्वात् ॥२॥ अनेहः । दात्रम् । अदितेः ।
अनर्वम् । हुवे । स्वःऽवत् । अवधम् । नमस्वत् । तत् । रोदसी इति ।
जनयतम् । जरित्रे । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥३॥
अतप्यमाने इति । अवसा । अवन्ती इति । अनु । स्याम । रोदसी इति ।
देवपुत्रे इति देवऽपुत्रे । उभे इति । देवानाम् । उभयेभिः । अह्नाम् । द्यावा ।
रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥४॥ संगच्छमाने इति सम्ऽगच्छ-
माने । युवती इति । समन्ते इति सम्ऽअन्ते । स्वसारा । जामी इति । पित्रोः ।
उपऽस्थे ॥ अभिजिघ्रन्ती इत्यभिऽजिघ्रन्ती । भुवनस्य । नाभिम् । द्यावा ।
रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥५॥ उर्वी इति । सद्मनी इति ।
बृहती इति । ऋतेन । हुवे । देवानाम् । अवसा । जनित्री इति । दधाते
इति । ये इति । अमृतम् । सुऽप्रतीके इति सुप्रतीके । द्यावा । रक्षतम् ।
पृथिवी इति । नः । अभ्वात् ॥६॥ उर्वी इति । पृथ्वी इति । बहुले इति ।
दूरेअन्ते इति दूरेऽअन्ते । उप । ब्रुवे । नमसा । यज्ञे । अस्मिन् । दधाते
इति । ये इति । सुभगे इति सुऽभगे । सुप्रतूर्ती इति सुऽप्रतूर्ती । द्यावा ।
रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥७॥ देवान् । वा । यत् । चकृम ।
कत् । चित् । आगः । सखायम् । वा । सदम् । इत् । जाःपतिम् । वा ।
इयम् । धीः । भूयाः । अवऽयानम् । एषाम् । द्यावा । रक्षतम् । पृथिवी
इति । नः । अभ्वात् ॥८॥ उभा । शंसा । नर्या । माम् । अविष्टाम् ।

उभे इति । माम् । ऊती इति । अवसा । सचेताम् । भूरि । चित् । अर्यः । सुदाःऽतराय । इषा । मदन्तः । इषयेम । देवाः ॥९॥ ऋतम् । दिवे । तत् । अवोचम् । पृथिव्यै । अभिऽश्रावाय । प्रथमम् । सुऽमेधाः । पाताम् । अवद्यात् । दुःऽइतात् । अभीके । पिता । माता । च । रक्षताम् । अवःऽभिः ॥१०॥ इदम् । द्यावापृथिवी इति । सत्यम् । अस्तु । पितः । मातः । यत् । इह । उपऽब्रुवे । वाम् । भूतम् । देवानाम् । अवमे इति । अवःऽभिः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥११॥

I. 186.

आ । नः । इळाभिः । विदथे । सुऽशस्ति । विश्वानरः । सविता । देवः । एतु । अपि । यथा । युवानः । मत्सथ । नः । विश्वम् । जगत् । अभिऽपित्वे । मनीषा ॥१॥ आ । नः । विश्वे । आस्क्राः । गमन्तु । देवाः । मित्रः । अर्यमा । वरुणः । सऽजोषाः । भुवन् । यथा । नः । विश्वे । वृधासः । करन् । सुऽसहा । विथुरम् । न । शवः ॥२॥ प्रेष्ठम् । वः । अतिथिम् । गृणीषे । अग्निम् । शस्तिऽभिः । तुर्वणिः । सऽजोषाः । असत् । यथा । नः । वरुणः । सुऽकीर्तिः । इषः । च । पर्षत् । अरिऽगूर्तः । सूरिः ॥३॥ उप । वः । आ । इषे । नमसा । जिगीषा । उषसानक्ता । सुदुघाऽइव । धेनुः । समाने । अहन् । विऽमिमानः । अर्कम् । विषुऽरूपे । पयसि । सस्मिन् । ऊधन् ॥४॥ उत । नः । अहिः । बुध्न्यः । मयः । करिति कः । शिशुम् । न । पिप्युषीऽइव । वेति । सिन्धुः । येन । नपातम् । अपाम् । जुनाम । मनःऽजुवः । वृषणः । यम् । वहन्ति ॥५॥ उत । नः । ईम् । त्वष्टा । आ । गन्तु । अच्छ । स्मत् । सूरिऽभिः । अभिऽपित्वे । सऽजोषाः । आ । वृत्रऽहा । इन्द्रः । चर्ष-

णिऽग्राः । तुविःऽतमः । नराम् । नः । इह । गम्याः ॥६॥ उत । नः । ईम् । मतयः । अश्वऽयोगाः । शिशुम् । न । गावः । तरुणम् । रिहन्ति । तम् । ईम् । गिरः । जनयः । न । पत्नीः । सुरभिःऽतमम् । नराम् । नसन्त ॥७॥ उत । नः । ईम् । मरुतः । वृद्धऽसेनाः । स्मत् । रोदसी इति । सऽमनसः । सदन्तु । पृषत्ऽअश्वासः । अवनयः । न । रथाः । रिशादसः । मित्रऽयुजः । न । देवाः ॥८॥ प्र । नु । यत् । एषाम् । महिना । चिकित्रे । प्र । युञ्जते । प्रऽयुजः । ते । सुऽवृक्ति । अध । यत् । एषाम् । सुऽदिने । न । शरुः । विश्वम् । आ । इरिणम् । प्रुषायन्त । सेनाः ॥९॥ प्रो इति । अश्विनौ । अवसे । कृणुध्वम् । प्र । पूषणम् । स्वऽतवसः । हि । सन्ति । अद्वेषः । विष्णुः । वातः । ऋभुक्षाः । अच्छ । सुम्नाय । ववृतीय । देवान् ॥१०॥ इयम् । सा । वः । अस्मे इति । दीधितिः । यजत्राः । अपिऽप्राणी । च । सदनी । च । भूयाः । नि । या । देवेषु । यतते । वसुऽयुः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥११॥

1. 187.

पितुम् । नु । स्तोषम् । महः । धर्माणम् । तविषीम् । यस्य । त्रितः । वि । ओजसा । वृत्रम् । विऽपर्वम् । अर्दयत् ॥१॥ स्वादो इति । पितो इति । मधो इति । पितो इति । वयम् । त्वा । ववृमहे । अस्माकम् । अविता । भव ॥२॥ उप । नः । पितो इति । आ । चर । शिवः । शिवाभिः । ऊतिऽभिः । मयःऽभुः । अद्विषेण्यः । सखा । सुऽशेवः । अद्वयाः ॥३॥ तव । त्ये । पितो इति । रसाः । रजांसि । अनु । विऽस्थिताः । दिवि । वाताःऽइव । श्रिताः ॥४॥ तव । त्ये । पितो इति ।

ददतः । तव । स्वादिष्ठ । ते । पितो इति । प्र । स्वाद्मानः । रसानाम् । तुविग्रीवाःऽइव । ईरते ॥५॥ त्वे इति । पितो इति । महानाम् । देवानाम् । मनः । हितम् । अकारि । चारु । केतुना । तव । अहिम् । अवसा । अवधीत् ॥६॥ यत् । अदः । पितो इति । अजगन् । विवस्व । पर्वतानाम् । अत्र । चित् । नः । मधो इति । पितो इति । अरम् । भक्षाय । गम्याः ॥७॥ यत् । अपाम् । ओषधीनाम् । परिंशम् । आऽरिशामहे । वातापे । पीवः । इत् । भव ॥८॥ यत् । ते । सोम । गोऽआशिरः । यवऽआशिरः । भजामहे । वातापे । पीवः । इत् । भव ॥९॥ करम्भः । ओषधे । भव । पीवः । वृक्कः । उदारथिः । वातापे । पीवः । इत् । भव ॥१०॥ तम् । त्वा । वयम् । पितो इति । वचःऽभिः । गावः । न । हव्या । सुसूदिम । देवेभ्यः । त्वा । सधऽमादम् । अस्मभ्यम् । त्वा । सधऽमादम् ॥११॥

I. 188.

सम्ऽइद्धः । अद्य । राजसि । देवः । देवैः । सहस्रऽजित् । दूतः । हव्या । कविः । वह ॥१॥ तनूऽनपात् । ऋतम् । यते । मध्वा । यज्ञः । सम् । अज्यते । दधत् । सहस्रिणीः । इषः ॥२॥ आऽजुह्वानः । नः । ईड्यः । देवान् । आ । वक्षि । यज्ञियान् । अग्ने । सहस्रऽसाः । असि ॥३॥ प्राचीनम् । बर्हिः । ओजसा । सहस्रऽवीरम् । अस्तृणन् । यत्र । आदित्याः । विऽराजथ ॥४॥ विऽराट् । सम्ऽराट् । विऽभ्वीः । प्रऽभ्वीः । बह्वीः । च । भूयसीः । च । याः । दुरः । घृतानि । अक्षरन् ॥५॥ सुरुक्मे इति सुऽरुक्मे । हि । सुऽपेशसा । अधि । श्रिया । विऽराजतः । उषसौ । आ । इह । सीदताम् ॥६॥ प्रथमा । हि । सुऽवा-

चसा । होतारा । दैव्या । कवी इति । यज्ञम् । नः । यक्षताम् । इमम् ॥७॥ भारति । इळे । सरस्वति । याः । वः । सर्वाः । उपऽब्रुवे । ताः । नः । चोदयत । श्रिये ॥८॥ त्वष्टा । रूपाणि । हि । प्रऽभुः । पशून् । विश्वान् । सम्ऽआनजे । तेषाम् । नः । स्फातिम् । आ । यज ॥९॥ उप । त्मन्या । वनस्पते । पाथः । देवेभ्यः । सृज । अग्निः । हव्यानि । सिस्वदत् ॥१०॥ पुरःऽगाः । अग्निः । देवानाम् । गायत्रेण । सम् । अज्यते । स्वाहाऽकृतीषु । रोचते ॥११॥

1. 189.

अग्ने । नय । सुऽपथा । राये । अस्मान् । विश्वानि । देव । वयुनानि । विद्वान् । युयोधि । अस्मत् । जुहुराणम् । एनः । भूयिष्ठाम् । ते । नमःऽउक्तिम् । विधेम ॥१॥ अग्ने । त्वम् । पारय । नव्यः । अस्मान् स्वस्तिऽभिः । अति । दुःऽगानि । विश्वा । पूः । च । पृथ्वी । बहुला । नः । उर्वी । भव । तोकाय । तनयाय । शम् । योः ॥२॥ अग्ने । त्वम् । अस्मत् । युयोधि । अमीवाः । अनग्निऽत्राः । अभि । अमन्त । कृष्टीः । पुनः । अस्मभ्यम् । सुविताय । देव । क्षाम् । विश्वेभिः । अमृतेभिः । यजत्र ॥३॥ पाहि । नः । अग्ने । पायुऽभिः । अजस्रैः । उत । प्रिये । सदने । आ । शुशुक्वान् । मा । ते । भयम् । जरितारम् । यविष्ठ । नूनम् । विदत् । मा । अपरम् । सहस्वः ॥४॥ मा । नः । अग्ने । अव । सृजः । अघाय । अविष्यवे । रिपवे । दुच्छुनायै । मा । दत्वते । दशते । मा । अदते । नः । मा । रिषते । सहसाऽवन् । परा । दाः ॥५॥ वि । घ । त्वाऽवान् । ऋतऽजात । यंसत् । गृणानः । अग्ने । तन्वे । वरूथम् । विश्वात् । रिरिक्षोः । उत । वा । निनित्सोः । अभिऽह्रुताम् । असि । हि ।

देव । विष्वद् ॥६॥ त्वम् । तान् । अग्ने । उभयान् । वि । विद्वान् ।
वेषि । प्रऽपित्वे । मनुषः । यजत्र । अभिऽपित्वे । मनवे । शास्यः । भूः ।
मर्मृजेन्यः । उशिक्ऽभिः । न । अक्रः ॥७॥ अवोचाम । निऽवचनानि ।
अस्मिन् । मानस्य । सूनुः । सहसाने । अग्नौ । वयम् । सहस्रम् । ऋषिऽ-
ऽभिः । सनेम । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥८॥

1. 190.

अनर्वाणम् । वृषभम् । मन्द्रऽजिह्वम् । बृहस्पतिम् । वर्धय । नव्यम् ।
अर्कैः । गाथान्यः । सुऽरुचः । यस्य । देवाः । आऽशृण्वन्ति । नवमा-
नस्य । मर्ताः ॥१॥ तम् । ऋत्वियाः । उप । वाचः । सचन्ते । सर्गः ।
न । यः । देवऽयताम् । असर्जि । बृहस्पतिः । सः । हि । अञ्जः । वरांसि ।
विऽभ्वा । अभवत् । सम् । ऋते । मातरिश्वा ॥२॥ उपऽस्तुतिम् । नमसः ।
उत्ऽयतिम् । च । श्लोकम् । यंसत् । सविताऽइव । प्र । बाहू इति ।
अस्य । क्रत्वा । अहन्यः । यः । अस्ति । मृगः । न । भीमः । अरक्षसः ।
तुविष्मान् ॥३॥ अस्य । श्लोकः । दिवि । ईयते । पृथिव्याम् । अत्यः ।
न । यंसत् । यक्षऽभृत् । विऽचेताः । मृगाणाम् । न । हेतयः । यन्ति ।
च । इमाः । बृहस्पतेः । अहिऽमायान् । अभि । द्यून् ॥४॥ ये । त्वा ।
देव । उस्रिकम् । मन्यमानाः । पापाः । भद्रम् । उपऽजीवन्ति । पज्राः ।
न । दुःऽध्ये । अनु । ददासि । वामम् । बृहस्पते । चयसे । इत् । पिया-
रुम् ॥५॥ सुऽप्रैतुः । सुऽयवसः । न । पन्थाः । दुःऽनियन्तुः । परि-
ऽप्रीतः । न । मित्रः । अनर्वाणः । अभि । ये । चक्षते । नः । अपि-
ऽवृताः । अपऽऊर्णुवन्तः । अस्थुः ॥६॥ सम् । यम् । स्तुभः । अवनयः ।
न । यन्ति । समुद्रम् । न । स्रवतः । रोधऽचक्राः । सः । विद्वान् ।

उभयम् । चष्टे । अन्तः । बृहस्पतिः । तरः । आपः । च । गृध्रः ॥७॥ एव । महः । तुविऽजातः । तुविष्मान् । बृहस्पतिः । वृषभः । धायि । देवः । सः । नः । स्तुतः । वीरऽवत् । धातु । गोऽमत् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥८॥

1. 191.

कङ्कतः । न । कङ्कतः । अथो इति । सतीनऽकङ्कतः । द्वौ । इति । प्लुषी इति । इति । नि । अदृष्टाः । अलिप्सत ॥१॥ अदृष्टान् । हन्ति । आऽयती । अथो इति । हन्ति । पराऽयती । अथो इति । अवऽघ्नती । हन्ति । अथो इति । पिनष्टि । पिंषती ॥२॥ शरासः । कुशरासः । दर्भासः । सैर्याः । उत । मौञ्जाः । अदृष्टाः । वैरिणाः । सर्वे । साकम् । नि । अलिप्सत ॥३॥ नि । गावः । गोऽस्थे । असदन् । नि । मृगासः । अविक्षत । नि । केतवः । जनानाम् । नि । अदृष्टाः । अलिप्सत ॥४॥ एते । ऊँ इति । त्ये । प्रति । अदृश्रन् । प्रऽदोषम् । तस्कराःऽइव । अदृष्टाः । विश्वऽदृष्टाः । प्रतिऽबुद्धाः । अभूतन ॥५॥ द्यौः । वः । पिता । पृथिवी । माता । सोमः । भ्राता । अदितिः । स्वसा । अदृष्टाः । विश्वऽदृष्टाः । तिष्ठत । इलयत । सु । कम् ॥६॥ ये । अंस्याः । ये । अङ्ग्याः । सूचीकाः । ये । प्रऽकङ्कताः । अदृष्टाः । किम् । चन । इह । वः । सर्वे । साकम् । नि । जस्यत ॥७॥ उत् । पुरस्तात् । सूर्यः । एति । विश्वऽदृष्टः । अदृष्टऽहा । अदृष्टान् । सर्वान् । जम्भयन् । सर्वाः । च । यातुऽधान्यः ॥८॥ उत् । अपप्तत् । असौ । सूर्यः । पुरु । विश्वानि । जूर्वन् । आदित्यः । पर्वतेभ्यः । विश्वऽदृष्टः । अदृष्टऽहा ॥९॥ सूर्ये । विषम् । आ । सजामि । दृतिम् । सुरावतः । गृहे । सः । चित् ।

नु । न । मराति । नो इति॑ । वयम् । मराम । आरे । अस्य । योज॑नम् । हरिऽस्थाः । मधु॑ । त्वा । मधुला । चकार ॥१०॥ इयत्तिका । शकुन्तिका । सका । जघास । ते । विषम् । सो इति॑ । चित् । नु । न । मराति । नो इति॑ । वयम् । मराम । आरे । अस्य । योज॑नम् । हरिऽस्थाः । मधु॑ । त्वा । मधुला । चकार ॥११॥ त्रिः । सप्त । विष्पुलिङ्गकाः । विषस्य॑ । पुष्य॑म् । अक्षन् । ताः । चित् । नु । न । मरन्ति । नो इति॑ । वयम् । मराम । आरे । अस्य । योज॑नम् । हरिऽस्थाः । मधु॑ । त्वा । मधुला । चकार ॥१२॥ नवानाम् । नवतीनाम् । विषस्य॑ । रोपु॑षीणाम् । सर्वा॑साम् । अग्रभम् । नाम॑ । आरे । अस्य । योज॑नम् । हरिऽस्थाः । मधु॑ । त्वा । मधुला । चकार ॥१३॥ त्रिः । सप्त । मयूर्यः॑ । सप्त । स्वसा॑रः । अग्रुवः॑ । ताः । ते । विषम् । वि । जभ्रिरे । उदकम् । कुम्भिनीःऽइव ॥१४॥ इयत्तकः । कुषुम्भकः । तकम् । भिनद्मि । अश्म॑ना । ततः॑ । विषम् । प्र । ववृते । परा॑चीः । अनु॑ । सम्ऽवतः॑ ॥१५॥ कुषुम्भकः । तत् । अब्रवीत् । गिरेः । प्रऽवर्त॑मानकः । वृश्चि॑कस्य । अरसम् । विषम् । अरसम् । वृश्चिक । ते । विषम् ॥१६॥



